# भाट्टचिन्तामणिः

[भाट्टदीपिकाव्याख्या]

श्रीवाञ्छेश्वरयज्वभिः प्रणीतः

महामहोपाध्याय-शास्त्ररत्नाकर-मीमांसारत्न-बिरुदालंकृतैः
मद्रपुरीसंस्कृतकलाशालाप्रधानाध्यक्षैश्च
ब्रह्मश्री वेङ्कटसुब्रह्मण्यशास्त्रिभिः
प्रकाशितः

मद्रास् ला जर्नल् मुद्राशालायां
मुद्रितः

१९३४

# उपोद्घातः

I

मीमांसादर्शनं द्वादशलक्षण्यात्मकं महाकारुणिकेन भगवता **जैमिन्यृषिणा** प्रावर्त्यत । तस्य विषयः साक्षात् परंपरया वा निखिलपुमर्थसाधनं धर्मः । इदं च "अथातो धर्मजिज्ञासा" इत्यनेन सूत्रेणासूचि । धर्मश्च वैदिकवाक्यार्थः । अत एव धर्मप्रतिपादकेऽस्मिन् शास्त्रे लोकवेदसाधारणवाक्यार्थनिर्णायका न्याया व्युत्पाद्यन्ते । तस्मादेव अस्य तन्त्रस्य निखिलविद्यास्थानोपकारकता उत्कर्षश्च । तदेतद्दर्शनं व्याख्याभेदेन भाट्टं प्राभाकरमिति द्विधा विभक्तं वरीवर्ति । तत्र भाट्टं दर्शनं भूयसा लब्धप्रचारं सर्वत्र प्रथते । यथा तन्त्रान्तरेषु नवीनमतान्यर्वाचीनकाले समुदभूवन्, तथा प्रायः सार्धचतुश्शतवत्सरेभ्यः प्राक् भाट्टदर्शनेऽपि नवीनं मतं प्रावर्तिष्ट । तस्य मतस्य युक्त्यागमाभ्यां व्यवस्थापयिता श्रीमदाचार्य**खण्डदेवः** तन्मतदीपिकां भाट्टदीपिकां प्रबबन्ध । सा च संक्षिप्ताक्षरा विना व्याख्यासाहाय्यं नातिसुग्रहार्था । अतस्तस्यास्तिस्रः व्याख्याः कृता ज्ञायन्ते । तत्र प्रथमा प्रभावल्याख्या श्रीमदाचार्यखण्डदेवशिष्येण **श्रीशम्भुभट्टेन** कृता मुम्बईनगर्यां निवीतान्तं प्रकाशिता च । द्वितीया भाट्टचन्द्रिका **श्रीभास्कररायेण** निर्मिता असमग्रा उपलभ्यते । अन्तिमा भाट्टचिन्तामण्याख्या प्रकृता व्याख्या **श्रीवाञ्छेश्वरयज्वना** विरचिता, येयमत्र प्रकाश्यते । इयं हि व्याख्या व्युत्पित्सूनां सुखेन मूलार्थव्युत्पादनाय प्रतिपदं सप्रपञ्चं व्याकुर्वाणा विद्यार्थिनामसंशयमुपकाराय कल्पेत इति विश्वसिमः ॥

इमां व्याख्यां भास्कररायकृतां व्याख्यां च तुलायामारोप्य साक्षाद्द्रष्टॄणामपरोक्षमेवैतत् यदियं व्याख्या क्वचित् क्वचित् भास्कररायकृतव्याख्यामनुसरन्त्यपि तत्राप्रतिपादितान् विषयान् बहून् बहुत्र संगृह्णन्ती क्वचित् भास्कररायव्याख्यां च विमृशन्ती ततो विशिष्यते । यथा भास्कररायः स्वव्याख्यायां 'प्राचा' इत्यादिनानूद्य शम्भुभट्टीयं मतं विमृशति, तथात्र वाञ्छेश्वरयज्वापि "यत्तु" "यत्तु कैश्चित्" इत्यादिनानूद्य तद्दूषयति । किञ्च पूर्वतन्त्रानुबन्धिनस्तत्तदधिकरणौपयिकान् प्रधानभूतान् विषयानधिकृत्य तत्र तत्र स्वतन्त्रान् विचारान् प्रवर्तयन्तीयं व्याख्या निस्संशयमर्हत्येव पूर्वतन्त्रग्रन्थेषु किञ्चन विशिष्टं प्रातिस्विकं स्थानमिति मतिरस्माकम् । तद्यथा—व्याकरणाधिकरणे (98—100 तमपुटेषु) देशभाषाणां साधुत्वं समर्थितम् । आकृत्यधिकरणे (108 तमपुटे)

आकृतिशक्तिवादमधिकृत्य विचारः, यत्र ग्रन्थकृद्रीत्या अधिकरणरचना न युक्तिसहा, किन्तु भाष्यवार्तिकोक्तरीत्या पार्थसारथिमिश्रकृतविचार एवादरणीय इति प्रत्यपादि । उद्भिदधिकरणे (118 तमपुटे) योगरूढिविषयको विचारः, यत्र योगरूढ्यनङ्गीकारे बहुतरपूर्वाचार्योक्तिविरोधः श्रीमद्गङ्गेशमिश्रोपाध्यायप्रतिपादितरीत्या तान्त्रिकविरोधश्च प्रदर्शितः । वाजपेयाधिकरणे (136—138 तमपुटेषु) वाजपेयमधिकृत्य विचारः, यत्र वाजपेये सुरासम्बन्धप्रयुक्तं कलावनधिकारं कमलाकरोक्तं बहुधा निरस्य कलावपि तत्राधिकारः समर्थितः ; इत्यादयः । अतः प्राक्तनव्याख्यानयोर्यथापेक्षं मूलवाक्य-विवरणेऽपर्याप्तिं वक्तव्यानामपेक्षितविषयाणां समग्रभावेनाप्रतिपादनं नव्यमताभिनिवेशेन प्राचीनमतदूषणपरायणतां चावबुद्ध्यैव व्याख्यामिमां प्राणैषीद्वाञ्छेश्वरयज्वा इति प्रतिभाति । अतोऽत्र बहुत्र प्राचीनमतं युक्तिसहं सप्रमाणं समर्थितमुपलभ्यते । सेयं व्याख्या निवीतान्तम् इदंप्रथमतयात्र प्रकाश्यमाना पूर्वतन्त्रदुरूहन्यायजिज्ञासूना-मत्यन्तमुपकाराय भवेदिति निवेदयतो नो नात्र मात्रयाप्यत्युक्तिगन्धः स्पृशति ॥

व्याख्यायामस्यां त्रिचतुरस्थलेषु कानिचन वाक्यानि पूर्वोत्तरानन्वितानीव मन्द-धियामस्माकं प्रतिभान्ति । तानि परिशोधयितुं मातृकापुस्तकान्तरालाभेन यथादृष्टं मुद्रितानि । तानि विविच्य विदाङ्कुर्वन्तु सुधियः ॥

II

सोऽयं व्याख्याता **वाञ्छेश्वरयज्वा** (प्रायः 1780-1850 A. D. कालीनः) बहूनां प्रबन्धानां निर्माता शहजीन्द्रपुरापराभिधं तिरुविशलूर् अग्रहारम् अलमकार्षीत् इति व्याख्यारम्भश्लोकेभ्योऽवगम्यते । विश्वविख्यातस्य श्रीमतो **गोविन्ददीक्षितेन्द्रस्य** दौहित्रीपुत्रो **वाञ्छेश्वरः** कुड्कविरिति यः सुप्रसिद्धः, तस्य नप्ता अयं **वाञ्छेश्वरयज्वा** इति सप्रमाणं जानीमः । अतोऽस्य यज्वनश्चरितं वृद्धमुखाच्छ्रुतं यथावत् सप्रपञ्चं वर्णयितुं प्रक्रममाणस्य मम प्रसङ्गात् तत्पूर्वपूरुषाणां महतामपि चरित्रवर्णने नासङ्गतिदोषः प्रसरति ॥

## 1. श्रीगोविन्ददीक्षितः

चतुर्णामपि वेदानां भाष्यनिर्माणेन उद्धर्तृभिः पूर्वोत्तरमीमांसयोः जीवातुभूतैः सर्वथाधमर्णीकृतपण्डितकुलैः स्वस्वश्रीमुखपीठिकावलीषु **शृङ्गगिरिपुष्पगिरिविरूपाक्षादि-पीठाधीश्वरैः कर्णाटकसिंहासनप्रतिष्ठापनाचार्या** इति जोघुष्यमाणैः विद्यानगरराजधानी-

निर्मातृभिः सुगृहीतनामधेयैः **विद्यारण्यचरणैः** अधुना बेल्लारीति प्रसिद्धमण्डल-विभागा(District)न्तर्वर्तिनि तुङ्गभद्रातीरविराजमाने हम्पीक्षेत्रे पुरा विराजितायां विजयनगरापराभिधायां श्रीविद्यानगर्यां प्रतिष्ठापितं तत्तादृशं श्रीविद्यानगरीकर्णाटक-सिंहासनं वंशपरंपरया समलंकृतवन्तो राजानो मार्कां चतुःशतवर्षाणि (1336-1674 A. D.) यावत् दक्षिणभारते सनातनवैदिकधर्मसंरक्षणसंवर्धनादिभिः आप्रळयमनश्वरीं सत्कीर्तिं समुपार्जयामासुरिति नाविदितमिदं विमर्शकानाम् । तत्र कर्नाटकसिंहासनमधिष्ठितवतां राज्ञां पङ्क्तौ ललामभूतः **श्रीकृष्णदेवरायो** नाम सार्वभौमः (1509-1529 A. D. कालीनः) राजर्षितुल्यः **श्रीविद्यारण्यचरणेभ्यः** शतकद्वयादर्वाक् भुवं बभार । तदनु तत्सोदरः **अच्युतदेवरायः** (1529-1542 A. D. कालीनः) तद्राज्यं अन्वशात् । तस्य राज्यभरणसमये **गोविन्ददीक्षितो** नाम कश्चित् युवा (प्रायः 1515-1605 A. D. कालीनः) वेदाद्यष्टादशविद्यास्वधीती ब्रह्मचारी अकिञ्चनोऽपि प्रजाभिः पूज्यस्तन्नगरे कृतवासोऽभूत् । तदानीं कदाचित् काचित् वृद्धा तस्य निकटमागत्य स्वकुमारस्य **चव्वनाम्नो** जन्मपत्रिकां प्रदर्श्य भावि फलं ज्ञातुकामा तं प्रार्थयते स्म । दीक्षितेन्द्रोऽपि जन्मपत्रिकायां राजयोगं पश्यन् तं कुमारं स्वाग्निहोत्रगोचारणे नियुज्य स्वगृह एव स्थापयामास ॥

ततो गच्छति काले दीक्षितेन्द्रो राज्ञा मानितः सन् अर्थशास्त्रधनुर्वेदाद्यभिज्ञतया क्रमेण अश्वसेनाधिपत्ये दत्ताधिकारो बभौ । गोचारणे नियुक्तः कुमारोऽपि दीक्षितावलम्बन-महिम्ना राजकुले ताम्बूलकरण्डकवाहकपदमनायि । तदा राज्ञ्याः सहोदरी काचित् अनतिक्रान्तशैशवावस्था तत्र राजकुले क्रीडन्ती शैशवोचितक्रीडार्थं तत्रत्यैः कं त्वं पतित्वेन वरिष्यसीति तदा तदा पृष्टा अमुं **चव्वमेव** वरिष्यामीति असकृल्लीलया ब्रुवन्ती स्वविवाहार्हवयःप्राप्त्यनन्तरमपि वरान्वेषणप्रक्रमे कृते सति क्रीडयाप्येतावत्कालं वाचा पतित्वेन वृतः **चव्व** एव मम नायको भवत्विति स्वज्यायस्या राज्ञ्याः पादयोः पतित्वा प्रार्थयते स्म । राज्ञ्या च तत्प्रार्थनां तथैवानुमन्य तया सह **चव्वस्य** विवाहमहोत्सवोऽकारि । तदनु राज्ञी आत्मेव स्वसापि कस्मिंश्चित् राज्ञीपदेऽभिषेक्तव्या इति मतिं चकार । तथैव तया स्वाशयं विज्ञापितो महाराजः स्वसेनाधिपतिं **गोविन्ददीक्षितेन्द्रं** आहूय अस्म-द्राज्यचक्रमध्ये यदुत्कृष्टतमं राज्यं तत्पर्यालोच्य **चव्वः** स्वजायया सह तत्र अभि-षिच्यतामिति आज्ञापयति स्म । दीक्षितेन्द्रोऽपि सर्वत्र पर्यटन् असंख्यपुण्यक्षेत्रनिधिभूतं सस्यपादपसंपत्समृद्धं सकलविद्यासंभारभासुरभूसुरमण्डितं कावेरीमातृकं चोलराज्यमेव समुचितमिति निर्णीय राज्ञे च निवेद्य गरुडव्यूहाकारदुर्गराजधानीं निर्माय (प्रायः

1540 तमखिस्ताब्दे) तौ दम्पती तत्र अभिषेक्तुमानिनाय । तौ च दम्पती नव्यराज्यसंरक्षणाय दीक्षितेन्द्रोऽपि सहायः कर्तव्य इति राज्ञः सविधे व्यजिज्ञपताम् ॥

दीक्षितेन्द्रविरहमसहमानोऽपि राजा कृच्छ्रेणान्वमन्यत । तञ्जापुर्यामभिषेकसमनन्तरं **चेव्वमहाराजः** आशैशवमात्मपोषके दीक्षितेन्द्रे सर्वं राज्यभारं निवेशयितुमैच्छत् । दीक्षितेन्द्रस्तु, अहं ब्राह्मणः न राज्यं वोढुमर्हामि ; अतो भवानेव राज्यं परिपालयतु । यावज्जीवं साह्यं तु करिष्यामीति प्रत्यश्रौषीत् ॥

तथा दीक्षितेन्द्रस्तं चोलदेशं गोविप्रकुलपरिपूर्णम् उद्धृतसकलजीर्णदेवालयं प्रतिष्ठापितासंख्याग्रहारं सकलविधक्रत्वाचरणसंकुलं विविधसस्यपोषणक्षमलहरीभरित-कुल्यागणाकीर्णमभिवर्धयामास । **चव्वप्पनायको**ऽपि इक्ष्वाकुवंशराजतुल्यः स्वपुत्रम् **अच्युतरायाभिधं** युवानं राज्ये प्रायः 1577 तमे खिस्ताब्दे अभिषिच्य स्वयमेकस्मिन् भगवद्दिव्यक्षेत्रे भगवदैकान्त्यमशिश्रियत् ॥

**अच्युतभूपो**ऽपि दीक्षितेन्द्रमर्धासनदानेन सभाजयति स्म । ययोः अच्युता-नन्तगोविन्द इति भगवतः त्रिषु प्रसिद्धेषु पुण्यनामसु आद्यन्तनामभूतयो राज्य-परिपालनश्रीः अधुनापि कावेरीतीरवासिभिः एतच्छ्लोकरूपेण संस्तूयते ।

त्रिनामाद्यन्तनामानौ महीक्षिद्दीक्षितावुभौ ।
शस्त्रे शास्त्रे च कुशलौ आहवेषु हवेषु च ॥ इति ।

**अच्युतोऽपि** स्वपितरमनुसरन् स्वपुत्र**रघुनाथनायके** प्राप्तयौवने राज्यभारमारोप्य प्रायः 1597 तमे खिस्ताब्दे श्रीरङ्गक्षेत्रमशिश्रियत् ॥

अस्य दीक्षितवरेण्यस्य तत्पालितराजवंशस्य च उदन्तः श्रीमद्दीक्षितेन्द्रसूनुना **यज्ञनारायण**यायजूकेन विरचिताभ्यां **साहित्यरत्नाकररघुनाथविलासनामभ्यां** काव्य-नाटकाभ्यां ज्ञायते । तत्र नाटके इमं **श्रीगोविन्ददीक्षितेन्द्रं** युवानं **रघुनाथमहाराजं** च एकसिंहासनस्थौ निर्दिश्य एवं उपश्लोक्यते—

अस्य **श्रीरघुनाथभूवलरिपो**रध्यासितार्धासनः
प्रज्ञावैभवखण्डितप्रतिवदत्पाषण्डषण्डस्मयः ।
कुर्वन् व्याक्रिययातिविश्रुततरं कौमारिलं दर्शनं
गोप्ता नित्यगवीरसौ विजयते **गोविन्दयज्वाग्रणीः** ॥

चत्वारः कृतसर्वतोमुखमहासत्रेण गाढं शिला-
यूपा येन निखानिताः प्रतिदिशं युक्तं चिरावस्थितेः ।
सौराज्यं **रघुनाथभूमिपतिना** संप्रापिते क्ष्मातले
पारेसह्यसुतं वृषेण वसता पादा इव स्थापिताः ॥ इति ॥

अयं दीक्षितेन्द्रः कौमारिलं दर्शनं व्याचख्याविति तत एव अवगम्यते । तथा अनेन रघुनाथनृपाङ्कितः **सङ्गीतसुधानिधि**रिति कश्चित् सङ्गीतशास्त्रग्रन्थोऽपि निरमायीति तत्पुत्र**वेङ्कटेश्वरमखि**कृतसङ्गीतशास्त्रग्रन्थात् अवगम्यते । अयं **सङ्गीत-सुधानिधिः श्रीमदप्पय्यदीक्षितेन्द्रैः** स्वकृतयादवाभ्युदयव्याख्यायां श्रीकृष्णवेणुगान-गतस्वरनिरूपणावसरे 'तथा च सङ्गीतसुधानिधिवचनानि' इति उद्धृतो वर्तते । किञ्च दीक्षितेन्द्रस्य षट्सु दर्शनेषु पाण्डित्यमनुपममिति संभावयामः । तथा च साहित्यरत्नाकरे—

अद्वैतविद्याविभवावलम्बान् **गोविन्दयज्वेन्द्रगुरू**नुपासे ।
निर्मथ्य षड्दर्शननीरधीन् ये धियैव सारान् ददते बुधेभ्यः ॥ इति ॥

अस्य दीक्षितेन्द्रस्य ज्यायान् पुत्रो **यज्ञनारायणदीक्षितः** । स पातञ्जलादि-दर्शनेषु कृतदृढपरिश्रमोऽपि स्वस्य कविताविद्यायां प्रेमातिशयमाविष्करोति । तथा हि—

पातञ्जलं भाट्टमतं च तर्कमद्वैतराद्धान्तमवैमि किं तैः ।
प्रबन्धसंदर्भभरैः कवित्वविद्यामिदानीं प्रकटीकरोमि ॥ इति ॥

श्रीमद्दीक्षितेन्द्रस्य कनीयान् पुत्रस्तु **वेङ्कटेश्वरमखी** ; यो **वार्तिकाभरणा-**भिधया भट्टवार्तिकटुप्टीकाव्याख्यया लोके प्रथते । तस्यैव शिष्यः सुप्रसिद्ध-**नीलकण्ठदीक्षितः** । अयं **नीलकण्ठदीक्षित**स्तमेवं स्वगुरुत्वेन स्तौति स्वकृत**गङ्गा-वतरणकाव्ये** । यथा —

**वार्तिकाभरण**ग्रन्थनिर्माणव्यक्तनैपुणः ।
**श्रीवेङ्कटेश्वरमखी** शिष्ये मय्यनुकम्पते ॥

कुर्वती श्रवणे वाणी कोमलां यस्य साहितीम् ।
कर्णपूरशिरीषेऽपि काठिन्यमिव पश्यति ॥

भान्ति शिष्याः पुरो यस्य पाणिविन्यस्तपुस्तकाः ।
तत्सूक्तिजाह्नवीपूरत्रासेनेव धृतप्लवाः ॥ इति । (गङ्गावतरण I, 51—53 काव्यमालाग्रन्थावलि 76)

सुप्रसिद्धरत्नखेटदीक्षितपुत्रो **राजचूडामणिदीक्षितो**ऽपि स्वकृते **तन्त्रशिखामण्याख्ये** पूर्वमीमांसाग्रन्थे अस्य **वेङ्कटेश्वरमखिनः** आश्रितं भक्तं च आत्मानमाचष्टे । स्वाचार्येणैव चोदितो निबबन्ध **तन्त्रशिखामणि**मिति राजचूडामणिदीक्षितो वदति । तत्र स्वगुरुकृतान् ग्रन्थांश्च परिगणयति । तथा हि—

अस्ति **गोविन्द**यज्वेन्द्रो **नागमाम्बा**तपःफलम् ।
**श्रीवेङ्कटेश्वरमखी** सर्वतन्त्रस्वतन्त्रधीः ॥
येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः ।
कृतं **साहित्यसाम्राज्यं** नाम काव्यमनुत्तमम् ॥
व्यतानि **शुल्बमीमांसा** तथा **कर्मान्तवार्तिकम्** ।
टुप्टीकायाः कृता टीका **वार्तिकाभरणाभिधा** ॥
प्रतिष्ठापितचोलक्ष्माजानेस्तस्य नियोगतः ।
**चूडामणि**र्वितनुते यज्वा **तन्त्रशिखामणिम्** ॥
**गोविन्ददीक्षित**चिरन्तनभाग्यराशेः
**श्रीवेङ्कटेश्वर**मखीशितुराज्ञया मे ।
तन्त्रार्णवं तरितुमाहितसाहसस्य
सांयात्रिकी भवतु तत्करुणाकटाक्षः ॥ इति ।

(Adyar Library Ms. No XXXVIII, B 8÷, pp. 1—2)

अत्र परिगणितेषु ग्रन्थेषु अनन्तर्भूतः चतुर्दण्डिप्रकाशिकाभिधः कश्चित् सङ्गीतशास्त्रग्रन्थोऽपि वेङ्कटेश्वरमखिना कृत इति ज्ञायते । अयं ग्रन्थः मुम्बइमण्डले (Bombay) विष्णुनारायणभट्कुण्डे B. A., L. L. B. अनेन महाशयेन मुद्रापितो दृश्यते ॥

## 2. गोविन्ददीक्षितवंशवाञ्छेश्वरयज्ववंशयोश्च सम्बन्धः

आस्तामिदं गोविन्ददीक्षितवंशचरितम् । तत्तादृशगोविन्ददीक्षितेन्द्रवंशेनास्मद्ग्रन्थकर्तृवंशः कथमनुबद्ध इति किञ्चिदिव प्रस्तूयते । ग्रन्थकर्तुः पुत्रः **कुट्टिनरसिंहशास्त्री** कदाचित् स्वपितृकृतग्रन्थेष्वन्यतमस्य ग्रन्थस्यान्ते "इति **श्रीगोविन्ददीक्षित**वंश्यस्य **वाञ्छेश्वरयज्वनः** कृतौ" इति लिखितं दृष्ट्वा समशयिष्ट यत् वयं कामकायनविश्वामित्रगोत्रीयाः, गोविन्ददीक्षितेन्द्रादयस्तु उपमन्युवसिष्ठगोत्रीयाः, कथमस्मत्तातपादस्य तद्वंश्यत्वं घटेत इति । तस्मात् अस्मत्पूर्वपूरुषाः गोविन्ददीक्षितेन्द्रदौहित्रीवंश्या एव स्युः इत्यतर्कि कुट्टिनरसिंहशास्त्रिणा । अयं तर्कः साधुरिति निश्चिनुमः **श्रीकाञ्चीकामकोटिपीठाधिपानां** मठीयपुस्तकालये समुपलब्धात् एकस्मात् पुस्तकात्, यत्रैवं स्पष्टं प्रत्यपादि । भाट्टचिन्तामणिकर्तुः **श्रीवाञ्छेश्वरयज्वनः** प्रपितामहः महिषशतककर्ता **वाञ्छेश्वरापरा**भिधः सुप्रसिद्धः **कुट्टिकविः श्रीगोविन्ददीक्षित**मन्त्रिणां दौहित्रीपुत्र इति ॥

अपरमपि विषयं तस्मात् कोशादवगच्छामः यत् शालिवाहनशके 1642 (=1720 A. D.) विकारिनामवत्सरे **श्रीकाञ्चीकामकोटिपीठस्य** कुम्भघोणानयनात् प्राक् श्रीकाञ्चीमेवाधिष्ठितवन्त अचार्या **अहोबलनामानं** कञ्चित् यज्वानं श्रीचन्द्रमौलीश्वराराधनोपयुक्ताचार्यप्रसंभावनासंग्रहार्थमविच्छेदेन तादृशधर्मप्रचारार्थं तत्तदग्रहारमहाजनसम्मतिपत्रिकाग्रहणार्थं च चोलदेशीयग्रामान् प्रति प्राहिण्वन् । तेन यज्वना प्रतिग्रामं स्वीकृताः सम्मतिपत्रिकास्तस्मिंस्तालपत्रपुस्तके संगृहीता उपलभ्यन्ते । तदा तिरुविशलूर् अग्रहारवासिनो महाजना बहवः पद्यात्मनैव सम्मतिं ददुः । तेषु सुप्रसिद्धा एते अत्राभिधानमर्हन्ति ।

1. बहुग्रन्थनिर्माता **अय्यावाल्** इति प्रसिद्धः **श्रीधरवेङ्कटेश्वरः**

2. सुप्रसिद्धस्य पण्डित**रामचन्द्रशास्त्रिवर्यस्य,** काशीस्थितद्रविड**लक्ष्मणशास्त्रिवर्यस्य** च पूर्वपुरुषो **वीरराघवदीक्षितः** ।

3. प्रकृतव्याख्याकर्तुः प्रपितामहः **कुट्टिकविः वाञ्छेश्वरः** ।

4. गोविन्ददीक्षितदौहित्रः **तिरुमलमखी** ।

5. अस्य तिरुमलमखिनो यो ज्यायान् सोदरः **अय्यवारुमखी,** तस्य पुत्रः **लक्ष्मीपतिः** ।

तत्र **कुट्टिकविः वाञ्छेश्वरः, तिरुमलमखी, लक्ष्मीपतिश्च** त्रयो मिलित्वा सम्मतिमावेदयन् द्वाभ्यां श्लोकाभ्याम् । तौ च श्लोकौ—

वृत्तिं शाश्वतिकीमशेषविदुषां पञ्चाग्रहारात्मना
यश्चक्रेऽनुकवेरकन्यमयजद्यो द्वादशाहादिभिः ।
पुत्रस्तस्य किलाय्य**वारुमखिनो लक्ष्मीपतिः** श्रीमहा-
**देवेन्द्रस्य** जगद्गुरोः प्रथमतः संमन्यते शासनम् ॥

**तिरुमलमखी** तस्य भ्राताय्य**वारु**मखीशितु-
र्दुहितृतनयस्य **श्रीगोविन्ददीक्षित**मन्त्रिणाम् ।
अपि च भगिनीपुत्रो **वाञ्छेश्वरोऽपि** तदाज्ञया
सविनयमिमामग्रे पूजां स्वयं बहुमन्यते ॥ इति ।

जानीमोऽस्मात् सम्मतिपत्रात् **अय्यवारुमखी तिरुमलमखी** च **गोविन्द-दीक्षित**मन्त्रिणां दौहित्रौ, **वाञ्छेश्वरस्तु** तेषां दौहित्रीपुत्र इति । तथा अयम**य्यवारुमखी** कवेरकन्यामनु समेषां विदुषां शाश्वतवृत्तिं कल्पयन् पञ्चाग्रहारान् ददौ, आजहार च स्वयं द्वादशाहादिक्रतून्, अरुरोह च स्वर्गमेतत्सम्मतिपत्रदानसमये इत्यपि प्रतीमः । तदेवमस्मद्ग्रन्थकृद्वंशः प्रख्यातमहनीयचरित**श्रीगोविन्ददीक्षितेन्द्र**वंशेनानुबद्ध इत्यभिहितं भवति ॥

## 3. **महिषशतककर्ता वाञ्छेश्वरः**

1675 तमे खिस्ताब्दे श्रीमहाराष्ट्रराज्यस्थापनधुरीण**श्रीशिवाजि**महाराजस्य सोदरः **वङ्काजिवीरः** तञ्जापुरीमाक्रम्य महाराष्ट्रराज्यं तत्र प्रावर्तयत् । तद्वंशोत्पन्नः **श्रीशहजि-**महाराजः 1687 तमे खिस्ताब्दे पट्टाभिषिक्तो राज्यमकार्षीत् (1711 तमखिस्ताब्दपर्य-न्तम्) । सः स्वयं महापण्डितः सरसकविश्चेति तत्कृतग्रन्थेभ्यः तद्विषयकग्रन्थेभ्यश्च ज्ञायते ये तञ्जापुर्यां सरस्वतीग्रन्थमहालये समुपलभ्यन्ते । तेनोदारचरितेन महाराजेन दत्ता बहवोऽग्रहारा विप्राणामधुनापि राजन्ते । तेषु ललामभूतः शहजीन्द्रपुरापराभिधः तिरुविशलूर् अग्रहारः, यः कुम्भघोणनगर्याः क्रोशद्वयदूरे कावेरीतटनिकटे तच्छीकर-शीतलः सुच्छायः सुतरामाभाति । यमुपवर्णयति प्रकृतभाट्टचिन्तामणिकारः स्वव्याख्यारम्भ एवम्—

'श्रीशहराजेन्द्रपुरे श्रीश, हर, अज, इन्द्रविष्टपैः सदृशे' इति ।

श्लोकेऽस्मिन् शहराजेन्द्रपुरं ब्रह्मविष्णुमहेश्वराणां लोकसदृशतया वर्ण्यते । तस्याग्रहारस्य प्रतिग्रहीतृषु अन्यतमः **कुट्टिकवेः वाञ्छेश्वरस्य** पितापीति तद्ग्रामशासनपट्टिकातो ज्ञायते । ततः प्राक् तद्वंशः श्रीवाञ्छीक्षेत्रे कृतवासोऽभूत् । यत् क्षेत्रम्—

'श्वेतारण्यं पञ्चनदं गौरीमायूरमर्जुनम् ।
छायावनं च श्रीवाञ्छयं काशीक्षेत्रसमानि षट् ॥'

इत्यभियुक्तैः काशीतुल्यतया गीयते । अत एव तद्वंश्यानां केषाञ्चित् वाञ्छेश्वर इति नाम तत्क्षेत्रस्मारकतयैवाकारि इति संभावयामः ॥

अयं हि वंशः **होसलकुलसमाख्यः** कर्णाटककुलेष्वन्तर्भूतः तञ्जापुर्यां **भोसलकुलीनानां वङ्काजि**प्रभृतीनां महाराष्ट्रभूपालानां पारम्पर्यक्रमेणामात्यपदमध्यतिष्ठदिति **कुट्टिकवि**कृतमहिषशतकात् (आद्यश्लोकद्वयात्) **वाञ्छेश्वरयज्व**कृतव्याख्यानाच्चावगम्यते ॥

तद्वंश्यानां महिषशतककर्तृवाञ्छेश्वरादीनाम् अद्ययावत् स्वासाधारणनामतो नामान्तरं व्यावहारिकं बालापरपर्यायकुट्टिपदोपपदं दृश्यते । इदंप्रथमतया तु **वाञ्छेश्वरस्य** महिषशतककर्तुः 'कुट्टिकविः' इति नाम **श्रीशहजि**महाराजेनादायीति कथा श्रूयते । तथा हि—महाराजः कदाचित् सपरिवारः समेत्य मथुरानगरीं तत्राम्बिकां श्रीमीनाक्षीं द्रष्टुकामो देवालयमाससाद । गत्वा च तत्राम्बिकादर्शनावसरे श्लोकेनानेनाभितुष्टाव श्रीमीनाक्षीम्—

'पुरि मधुरं गिरि मधुरं गरिमधुरन्धरनितम्बभाराढ्यम् ।
स्थूलकुचं नीलकचं बालकचन्द्राङ्कितं तेजः ॥' इति ।

श्रुत्वैतत् पद्यं महाराजस्यास्थानपण्डितेन स्वपित्रा सहानुयातो नातीतकौमारो **वाञ्छेश्वरो** राज्ञो भक्तिपारम्यमतिसरससरलकवितानैपुण्यं चानुविचिन्त्य तदुत्थमानन्दं स्वहृदये परिमातुमशक्नुवन् त्सन्नुद्गिरन्निवेदं पद्यमनुपदमेव जगौ—

'हृदि तरसा विदितरसा तदितरसाहित्यवाङ् न मे लगति ।
कविलोके न विलोके भुवि लोकेशस्य **शाहजे**रुपमाम् ॥' इति ।

एवमुत्तरक्षणे गीतमात्मश्लोकोपश्लोकनपरं मधुरं पद्यमाकर्ण्य महाराजः अतिमात्रविस्मयाविष्टः तस्य बालभावमनुरुध्य महता प्रेम्णा '**कुट्टिकविः**' इति तमाजुहाव, इति ॥

तस्य कुट्टिकवेः **श्लेषकविसार्वभौम** इति बिरुदमपि प्रथते । तस्य कृतिषु त्रीणि शतकानि उपलभ्यन्ते (१) महिषशतकम्, (२) धाटीशतकम्, (३) आशीर्वाद-शतकम् इति । महिषशतके तृतीये श्लोके स्वकालीनाः प्रभवः चत्वारः परिगणिताः । यथा—

'नानाजिप्रभु, चन्द्रभानु, शहजीन्द्र, आनन्दरायादयो
विद्वांसः प्रभवो गताः श्रितसुधीसन्दोहजीवातवः ।
विद्यायां विषबुद्धयो हि वृषलाः सभ्यास्त्विदानीन्तनाः
किं कुर्वेऽम्ब ! कृषे व्रजामि शरणं त्वामेव विश्वावनीम् ॥' इति ।

एषु प्रभुषु अन्तिमः **आनन्दरायः** (प्रायः 1655—1730 A. D.) आनन्द-रायाभ्युदयकाव्यात् प्रसिद्धः पण्डितलोकानाम् । तृतीयः **शहजिमहाराजस्तु** सुप्रसिद्ध एव । द्वितीयश्चन्द्रभानुः प्रथमो **नानाजिप्रभुश्च** न ज्ञायेत । एते चत्वारोऽपि महिषशतकनिर्माणकाले दिष्टं गता इत्युदाहृतश्लोकादवगम्यते ॥

1642 तमे शालीवाहनशके (=1720 तमे खिस्ताब्दे) विकारिवत्सरे यदा **वाञ्छेश्वरः कुट्टिकविः** स्वमातुलपुत्रेण **लक्ष्मीपतिना** स्वमातुलेन **तिरुमलमखिना** च समं सम्मतिपत्रं व्यतरत्, तदा कुम्भघोणे **नानाजिपण्डितः** **बाबाजिपण्डितपुत्रः** तञ्जापुरीशस्य **शरभमहाराजस्याज्ञावशंवदो** राजप्रतिनिध्यधिकारमध्यत्रहत् इति कुम्भघोणमहाजनैः **श्रीमठाय** समर्पिताया विज्ञापनपत्रिकायाः प्रतीयते । तथा हि—

श्रीचन्द्रमौलीश्वराय नमः

(पद्यम्)

विद्यामुद्राङ्कितो बोधं निजं भक्ते प्रसादयन् ।
देशिको दक्षिणामूर्तिश्चित्ते नित्यं प्रकाशताम् ॥

श्रीमदद्वैतसाम्राज्यसिंहासनमुपेयुषाम् ।
सर्ववैदिकसंरक्षादक्षसत्कीर्तिशालिनाम् ॥

उपन्यासनखन्यासैः वादिशुण्डालमण्डलम् ।
परिखण्डयितुं चण्डकेसरीन्द्रविलासिनाम् ॥

शान्तेः शरणभूतानां विद्यायाः केलिसद्मनाम् ।
आत्मध्यानेन सततमानन्दमधिजग्मुषाम् ॥
काञ्चीपुरमहाक्षेत्रस्वीयभू(धा?)म्नां महीयसाम् ।
शङ्कराचार्यपीठस्य ख्यातिं कर्तुं पटीयसाम् ॥
पुनानानां महादेवसरस्वत्याख्यया जगत् ।
महतां गुरुपादानां बह्वीः पादनमस्क्रियाः ॥
विदधानस्त्रिसन्ध्यं च विनयेनातिभूयसा ।
श्रीबाबाजिमहाविद्वत्प्रभुपुत्रोऽतिभक्तिमान् ॥
जीवाम्बानन्दनः प्राज्ञः श्रीमान् नानाजिपण्डितः ।
गुरुपूजाव्यवस्थायै समर्पयति शासनम् ॥
श्रीमद्भोसलभूषणस्य शरभक्ष्मापालचूडामणेः
एकक्ष्मापतिनन्दनस्य महतो दीपाम्बिकाजन्मनः ।
राज्ये रम्यतरेऽधिकारमधिकं श्रीकुम्भघोणे वहन्
कल्याणेषु गुरोस्तदग्रभजनं कुर्यां यथामत्यहम् ॥

(गद्यम्)

स्वामिभिः प्रेषितं विभूतिगन्धप्रसादमाज्ञापत्रं च अहोबलसोमयाजिदत्तं शिरसा धृत्वा कृतार्थोऽस्मि, त्रिकारिसंवत्सरे वैशाखशुक्लद्वितीयायां श्रीचन्द्रमौलीश्वरस्वामिनाम् अग्रसंभावनाप्रचाराय सर्ववैदिकमण्डलं द्राविडान्ध्रकर्णाटकघूर्जरमहाराष्ट्रमयं संमेल्य निर्णयः कृतः........................ ........................................... ।

शासनादस्मादेतदवगम्यते यत् महिषशतके प्रतिपादितः नानाजिप्रभुः कुम्भघोणे शरभोजिमहाराजस्य राज्ये नियुक्तो बभौ इति । अत एव महिषशतकं विकारिवत्सर-वैशाखशुक्लद्वितीयानन्तरमेवाकारि इति निश्चिनुमः ॥

आर्कोट्नवाप्युद्ध (1749—1752 A. D.) चरित्रे प्रसिद्धः छन्दासाहिब् अपरपर्यायः छन्दाखानो नाम (Died at Tanjore in 1752) म्लेच्छप्रभुरपि महिषशतके प्रत्यपादि । यथा—

ताम्रश्मश्रुमुखोऽसि नैव सहसे क्रीडाहतिं मानवैः
काामं बाडबवैरमाकलयसे रोषेण नैसर्गिकम् ।
संप्रीतिं तरसादनेऽपि तनुषे त्वामद्य पानोत्सुकं
छन्दाखानमवैमि यत्तव खुरानाश्चर्यमालोकये ॥ इति ।

अनेनास्य कवेश्छन्दाखानसमकालिकता ज्ञायते ॥

## 4. वाञ्छेश्वरयज्वा

अस्य महिषशतककर्तुर्वाञ्छेश्वरस्य पुत्रो **माधवो** नाम पण्डितः । तस्य पुत्रो **नरसिंहो** नाम पण्डितो वेदवेदाङ्गतत्त्ववित् । तस्य पुत्रोऽयं व्याख्याता **वाञ्छेश्वरयज्वा** । इयं वंशपरम्परा व्याख्यारम्भश्लोकेभ्योऽपि ज्ञायते । तथा हि—

चक्रे माहिषशतकं धाटीशतकं तथाशिषां शतकम् ।
श्लेषकविसार्वभौमः श्रीमान् **वाञ्छेश्वरः** स्वतन्त्रोऽसौ ॥
तस्य नप्ता **माधवार्यपौत्रः श्रीनरसिंहतः** ।
वेदवेदाङ्गतत्त्वज्ञात्सर्वशिष्टाग्रपूजितात् ॥ इत्यादि ।

अत्र 'सर्वशिष्टाग्रपूजितात्' इत्यनेन विशेषणेन अयं व्याख्याता स्वपितरं सर्वशिष्टाग्रेसरमुदीरयन् स्वपितृगतमनितरसाधारणं गुणविशेषमेव प्रकाशयति न तु तमयथार्थं स्तौति इत्ययं विषयस्तदातनाद्वृत्तविशेषान्निश्चीयते । अत्रायं वृत्तविशेषो वृद्धमुखादेवं श्रूयते । एकोनविंशतितमस्य खैस्तशतकस्यारम्भसमये यदा मद्रमण्डले नूत्नतयोत्तमा न्यायसभा (Suprime Court) प्रत्यस्थापि । तदा आस्तिकप्रजानां व्यवहारनिर्णये प्राड्विवाकानां साहाय्यं कर्तुं शास्त्रज्ञः कश्चित् पण्डितोद्योगपदव्यां नियमनीय इति राजकीयैर्निरणायि । तदानीं (साधारणवत्सरात् 1731 तमात् खिस्ताब्दादारभ्य) कुम्भघोणनगरमेव स्वधाम कृतवतां **श्रीकञ्चीकामकोटिपीठाधिपानामाचार्याणा**मन्तिके राजकीया आवेदयन् पण्डितोद्योगपदव्युचितः कश्चित् प्रेषणीय इति । ततः कदाचित् कुम्भघोणमागतः कुट्टिशास्त्रीति प्रसिद्धः वाञ्छेश्वरयज्वा तत्पाण्डितपदवीमङ्गीकर्तुं पृष्टः सन् स्वपितरं निवेदयामीत्युत्तरयन् स्वग्राममाजगाम । तथा विज्ञापितः पिता भृतकवृत्तिश्रवणमात्रेण तामनिराकुर्वन् तादृशपापादभीरुः तत्र लिप्सया कथं मय्येनां

निवेदयसि, अतस्त्वं ब्राह्मणकुटुम्बानर्ह इति तं स्वगृहान्निष्कासयामास । पुत्रोऽपि कवेरजातीर एव द्वित्रदिनान्युवास । दिनेष्वेषु तत्रागता जना अन्नपानादिना तमपोषयन् । ततः तद्ग्रामवासिभिर्जनैः कृच्छ्रेण सान्त्वितः पिता कारितप्रायश्चित्तस्य पुत्रस्य स्वगृहप्रवेशमन्वमन्यत इति ॥

तस्यास्यास्तिकवरेण्यस्य **नरसिंहशास्त्रिणः** पुत्रोऽयं व्याख्याता **वान्छेश्वरयज्वा** बाल्ये स्वपितुर्निकटे तथा स्वग्रामे प्रसिद्धस्य **ईश्वरशास्त्रिणश्च** सविधे वेदव्याकरणसाहित्य-पूर्वमीमांसादीनध्यैष्ट । ततः स तदा वङ्गदेशे नूत्नतया प्रचारितां गादाधरीं तदनुसारिणी-मनुगमरीतिं चाध्येतुं कृतमतिर्बभूव । समयेऽस्मिन् दिष्ट्या तिरुविशल्लूर् ग्रामात् क्रोशद्वयदूरे विद्यमानमणल्लूर् ग्रामे **श्रीनिवासार्यो** नाम पण्डितः कश्चित् वङ्गदेशे नवद्वीपं गत्वा कृत्स्ना-मपि चतुष्षष्टिवादात्मिकां मूलतत्त्वचिन्तामणिं सगादाधरदीधितिमधीत्य महता कृच्छ्रेण तदा-नीमेव स्वग्रामं प्रतिनिवृत्तोऽभूत् । ततः प्राक् चोलदेशे जगदीशभट्टाचार्यकृतव्याख्यानस्यै-वासीत् प्रचार इत्यभियुक्ता वदन्ति । अत एवेदंप्रथमतया समानीतां नव्यन्यायसरणि-मुत्साहेन महता अध्यगीष्ट वान्छेश्वरयज्वा तन्निकटे । एवमखिलं वेदशास्त्राध्ययनमष्टादश-वयसः प्रागेव समापि यज्वना ॥

समयेऽस्मिन् तिरुविशल्लूर् ग्रामनिकटवर्तिनि मध्यार्जुनक्षेत्रे भोसलवंश्यः **अमरसिंहो** नाम महाराष्ट्रराजः स्वयमवनिपोऽपि नैककलाकलापकुशलो विदितविद्वज्जनहृदयः तत्रत्ये विपुलराजगृहे वसन् बभौ (1799—1803 A. D.) । तदा तस्य सदसि वङ्गदेशात्कश्चिन्नैय्यायिकपण्डितः समागत्य दक्षिणदेशेऽतिमात्रमप्रचारितेषु अपूर्वेषु तत्त्व-चिन्तामणिगतवादविशेषेषु नव्यगादाधररीत्या पूर्वपक्षानुदभावयत् । ते वादा न ज्ञातपूर्वा-श्चोलदेश इत्यतः तत्रत्या नैय्यायिकवृद्धा उत्तरयितुमशक्नुवन्तः जोषमजुषन्त । राजापि भग्नमना बभूव । अस्मिन्नवसरे अष्टादशवर्षदेशीयः अन्वर्थनामायं कुट्टिशास्त्री तं पूर्वपक्षं निराकृत्य पुनस्तत्पण्डितासमाधेयं पूर्वपक्षान्तरमप्यवतारयति स्म । तदा सदसि पण्डिताः प्रभवो राजा च सानन्दं साधुवादं महान्तमुद्घोषं चाकार्षुः । ततो महाराजः **अमरसिंहः** तत्त्वचिन्तामणिग्रन्थे तन्नैपुण्यस्मारकं **मणिकुट्टिः** अथवा **चिन्तामणिकुट्टिः** इति बिरुदं तस्मै प्रादात् । तथा तन्नामोट्टङ्कितः कश्चित् जयस्तम्भोऽपि तस्मिन्नेव राजसदसि प्रतिष्ठापनीय इत्याज्ञां महाराजस्य पण्डितवृद्धाः सर्वेऽपि वर्धिष्णुरयं बालो न दृष्टिदोषविषयः कार्य इत्यत आक्षिप्य तमन्वगृह्णन्नाशीर्वचनेन महता । एवं तत्त्वचिन्तामणिग्रन्थसम्बन्धितया प्रवृत्त-

वृत्तान्तविशेषस्मारकतयैव अनन्तरं प्रौढे वयसि स्वकृतानां ग्रन्थानां चिन्तामणिशिरस्कं नाम व्यतानीत् वाञ्छेश्वरयज्वा इति सम्भाव्यते । यथा अस्या व्याख्याया भाट्टचिन्तामणिः इति, भगत्पादभाष्यार्थसंग्रहात्मकग्रन्थस्य ब्रह्मसूत्रार्थचिन्तामणिः इति, व्यवहारकाण्डप्रतिपादकस्य दत्तचिन्तामणिः इति, अन्यस्य च श्राद्धचिन्तामणिः इति च ॥

एवमयं यज्वा मध्यमे वयसि विद्यमानः तत्र तत्र सदसि शास्त्रवाक्यार्थविचारकौशलमाहिम्ना दिक्षु विदिक्षु महतीं प्रथां प्रथयन् पण्डितवरिष्ठो बभौ ॥

अत्रान्तरे तञ्जानगर्यां द्वितीयः **शरभोजिमहाराजः** 1798 तमे खिस्ताब्दे पट्टाभिषिक्तो राज्यं शासितुमारभत । स्वपट्टाभिषेकसमनन्तरमेव स राजा निजपुरनिकटवर्तिनि **ओरत्तनाडु**समाख्यग्रामे वेदशास्त्राध्ययनस्थानं किञ्चित् महत्सत्रं प्रत्यतिष्ठिपत् । यत्र बहून् चोलदेशीयान् विद्वन्मणीन् वंशपरम्परानुभवार्हवृत्तिकल्पनपूर्वकं संमेलयामास । तेषां विद्वन्मणीनां नप्तारो नप्तृपुत्रा वा तां वृत्तिं राजकीयेभ्यो लभमाना अधुनापि जीवन्ति । तेषु विद्वन्मणिष्वन्यतमत्वेन परिगणितोऽयं कुट्टिशास्त्री तत्र वसन् विद्यामध्यापयति स्म शिष्यान् ॥

तत्र तदातनसम्प्रदायोऽयमभूत् यत् सर्वेऽपि तत्रत्याः पण्डिताः प्रत्यहं महाराजं प्रति अशीर्वादपूर्वकमक्षतान् प्रेषयामासुः इति । संप्रदायमिममनुसृत्य सर्वेषु पण्डितेष्वनुष्ठितवत्सु अयं कुट्टिशास्त्री पुनः यथाविधि निर्वर्तितपञ्चमहायज्ञः प्रतिदिनं किञ्चिद्विलम्बेनैवाशीरक्षतान् प्रेषयेत् । कथमयं गतभयोऽक्षतानां प्रेषणे प्रत्यहं विलम्बते इति कैश्चिदसूयालुभिर्बोधितो महाराजः एकस्मिन् दिने शास्त्रिवर्यमाहूय विलम्बकारणमप्राक्षीत् । शास्त्रिमहाशयः राज्ञः पुरतः सविनयमस्य समाधानमुक्त्वा, मात्र परतन्त्रो भूवमिति मनसि निश्चित्य तस्मिन्नेव दिने तीर्थक्षेत्राटनव्याजेनोत्तरां दिशं प्रति प्रतस्थे । प्रस्थाय च तस्यामेव रात्रौ पञ्चनदक्षेत्रमागम्य तत्राम्बिकां धर्मसंवर्धनीममुना श्लोकेन व्यजिज्ञपत् । यः श्लोकः खण्डश एवाधुना स्मर्यते—

कतीन्द्रयामः कति चन्द्रयामश्चण्डं पुनः पूरयितुं पिचण्डम् । इति ।

ततः सपरिग्रहः क्रमेणायं पण्डितवर्यः पुनानगराख्यं पुण्यपत्तनमाससाद । तदा तत्र 'पेश्वे' उपनामा द्वितीयो **भाजिरायो** राज्यधुरं बभार । यस्य चास्थाने **चन्द्रनारयणभट्टाचार्यो** नाम नैय्यायिकः प्रधानपण्डित आसीत् । शास्त्रिवर्यः यदा भट्टाचार्यं द्रष्टुमैच्छत्, तदा भट्टाचार्यः दाक्षिणात्यपण्डिता न परिनिष्ठितन्यायविद इति मत्वा

दक्षिणदेशादागतममुं पण्डितं द्रष्टुमनिच्छन् न तद्दर्शनायानुमतिं व्यतरत् । तदनु मासद्वयं ततोऽधिकं वा यावदुपसर्पणेन प्रबलप्रभुवचनेन च भट्टाचार्यः शयान एव सन् तुच्छभावेनास्मै दर्शनमदात् । तं न्यग्भावमपि मर्षयन् यदा कानिचित् शास्त्रार्थविवरण-वाक्यानि प्रायुङ्क्त, तदा भट्टाचार्यः ससंभ्रममुत्थाय शयनादुदघोषयत् "शपे न त्वं दाक्षिणात्य" इति । अनन्तरं तयोः शास्त्रवाक्यार्थप्रयुक्तः स्नेहः क्रमेण समवर्धत । भट्टाचार्यस्नेहात् गुणपक्षपातिनो भाजिरायस्य राज्यभरणसमये कश्चित् कालमास्थानपण्डितो व्यराजत शास्त्रिवर्यः ॥

अस्मिन्नेव समये राज्ञा भाजिरायेण आपस्तम्बाश्वलायनादिश्रौतगृह्यसूत्राणामिव हिरण्यकेशिश्रौतसूत्रस्य भाष्यमद्ययावन्न केनापि कृतम्, अतस्तत्सूत्रिणामुपकाराय कार्यमिति प्रार्थितः शास्त्रिवर्यः विपुलं हिरण्यकेशिसूत्रं हिरण्यकेशिसामान्यसूत्रं च व्याचख्यौ इति श्रूयते ॥

एवमत्रातीव प्रभुणा भाजिरायेण संमानितः शास्त्रिवर्यः कतिपयकालमुषित्वा ततो वाराणसीं प्रापत् । अयं महापण्डितोऽपि तावद्वयःपर्यन्तमाध्यात्मिकशास्त्रे भगवत्पाद-भाष्ये शान्तिपाठं नाकार्षीत् । तदात्वे तु किल अयं संप्रदायः यत् सकलान्यपि सामान्य-शास्त्राण्यधीत्य विवेकपूर्वकमिन्द्रियोपरमक्षमवयःप्राप्त्यनन्तरं महतां सन्निधौ शान्ति-पाठपूर्वकं शारीरकभाष्यार्थौ ग्रहीतव्य इति ॥

अवसरेऽस्मिन् तत्र वाराणस्याम् **अहोबलपण्डितो** नाम कश्चित् महात्मा सन्यदधात् । स किल पूर्वं महीशूरकर्णाटकराज्यभारवोढ्रा **हैदराख्येन** (1766—1782 A. D.) प्रसिद्धम्लेच्छप्रभुणा परमं मानितस्तदास्थानीमलमकार्षीत् । ततः तत्पुत्रेण **टिप्पुनापि** मानितः स कदाचित् दुर्मनस्केन सता एवमवोचि—'कदा भो शास्त्रिवर्य ! भवानस्मदि-स्लाम् मार्गमवलम्बिष्यते ?' इति । पण्डितमहाशयस्तु यथाप्रभुचित्तमिति सविनय-मुत्तरयित्वा तदहन्येव तद्राज्यादपससार । प्रापच्च वाराणसीम् ॥

ततः कतिपयवासरानन्तरं **टिप्पुराजस्य** जननी **हैदर्प्रभोः** पत्नी **अहोबल-पण्डिते** परमया भक्त्या सनाथा तस्य स्वराज्यवासमेव स्वराज्ययोगक्षेमकारणं मन्यमाना तं कञ्चित्कालमपश्यन्ती स्वपुत्रमप्राक्षीत्—'कुत्र स पण्डितमहाशयः ?' इति । पुत्रस्तु स्वापराधं निगूहमानः 'द्रुततरमागमिष्यति' इत्यनृतमुत्तरयति स्म । किं तु जननी कालक्रमेण इङ्गितेभ्यः तदपराधं जानन्ती तस्य महात्मनः कृते कृतादपराधात् तस्यास्मद्राज्या-दपसरणाच्च नूनमचिरात्तव राज्यक्षयो भविष्यतीति शशाप ॥

तादृशात् **अहोबलपण्डितवर्यात्** गृहीताध्यात्मविद्यो वाञ्छेश्वरयज्वा वाराणसीं कञ्चित्कालमधिवसन् अध्यापयति स्म बहून् शिष्यान् शारीरकमीमांसादीनि सर्वाणि शास्त्राणि । तेष्वन्यतमः शिष्यः विदितचरोऽस्माकम् । यः बाल्ये वाराणस्यामस्य यज्वनः सविधेऽधीताध्यात्मविद्यः पश्चात् स्वविद्याशीलगरिम्णा **शृङ्गगिरिपीठमधिरूढः** अशीतिवयोवृद्धः **नरसिंहभारतीस्वामिन** इति नाम्ना (1817—1879 A. D.) अप्रथत ॥

यदा च वाञ्छेश्वरयज्वा वाराणस्यामवात्सीत् तदानेकान् ग्रन्थान् प्राणैषीत्, समग्रहीच्च नानाविधानि बहूनि पुस्तकानि । ततो गच्छति कस्मिंश्चित्काले प्रार्थितो बन्धुभिः स्वदेशागमनाय उष्ट्राश्वाद्यारोपितपुस्तकनिचयः चतुरन्तादिपरिवारपरिवृतः पुनर्महाराष्ट्रराज्यमार्गेणैव प्रत्याययौ । मध्येमार्गं पेश्वेमहाराजसामन्तभूतानां तत्तन्महाराष्ट्रप्रभूणामतिमात्रभक्तिभरितामर्हणामाददानः क्वचित् कैश्चिद्ब्राह्मणसामन्तराजैः भगवत्पादभाष्याध्यापनाय कृतामभ्यर्थनामनुसृत्य तत्र तत्र वसन् क्रमेणान्ते **कर्णाटकराज्य**मापत् । काशीत आगमनसमये तदातनईस्ट् **इण्डियाकम्पनी**राज्यनिर्वाहकैः निराबाधसञ्चारार्थं प्रदत्तेभ्यः अनुयायिपरिवारनिवेदकेभ्यो यात्रानुमतिपत्रेभ्यः (Pass-ports No. 1—3) अयं यज्वा पुनानगरे धार्वार्नगरे चिञ्चिनीग्रामे च तत्रत्यैः **माधवराव् परशुराम् पट्टवर्धना**दिभिः प्रभुभिरतिमात्रमादृतः 1818 तमखिस्ताब्दपर्यन्तमुषित्वा ततः महीशूरपुरीं प्रति प्रतस्थे इति विशिष्य ज्ञायते । एतानि यात्रानुमतिपत्राणि अन्ते परिशिष्टतया प्रकाश्यन्ते ॥

तत्र तदा टिप्पुराज्यानन्तरं सिंहासने विराजमानः **कृष्णराजओडैयार्** प्रभुः (1800—1868 A. D.) मिरज् जंखण्डिप्रभृति महाराष्ट्रराज्यमायान्तमेव यज्वानं विदित्वा तदागमनं प्रतीक्षमाणः स्वपुरागमनानुपदमेव स्वीयराज्ये धर्माधिकारपदमङ्गीकर्तुमभ्यर्थयते स्म । यज्वापि तदङ्गीकृत्य तत्र अनेकानि हायनान्यनैषीत् । ततस्तस्य तत्र द्वितीयोऽपि परिणयः समजनि । तदनु शास्त्रिवर्यः महता वित्तव्ययेन साङ्गं सपरिकरं ज्योतिष्टोमं नाम क्रतुमन्वतिष्ठद्यथाविधि । यत्र स्वशिष्याः स्वबन्धवश्च सुशिक्षिता आर्त्विज्यमकुर्वन् । यज्ञशालायामस्यां **कृष्णराजओडैयार्** महाराजः यज्वानं वाजपेयं क्रतुमनुष्ठापयितुमीहमान एवमवोचत्—"वाजपेयमहामखमनुतिष्ठतो भवतश्छत्रधारणकैङ्कर्येणात्मानं कृतार्थीकर्तुमभिलषामि" इति । यज्वा तु नित्यकर्मानुष्ठानैकमतिः बहुपशुसाध्यं वाजपेयमनुष्ठातुमव्यवस्यन् तद्वचनं ह्रदापि नान्वमन्यत । एवं कणार्टकराज्ये महीशूरपुरमलङ्कुर्वन्तं कुट्टिशास्त्रिवर्यं राजा 'वेदमूर्ति' इति विशेषणोपादानपुरस्सरं व्यवहरन् नानाविधेन शिबिकातुरगपदातिप्रभृतिना परिवारेण बहुधा सभा-

जयति स्म इति 1824 तमे खिस्ताब्दे रामेश्वरयात्राप्रस्थानसमये तेन दत्ताद्देशान्तरगमनानुमतिपत्रात् (Pass port) ज्ञायते । तत्पत्रमत्र अन्यैः सह परिशिष्टतयान्ते प्रकाश्यते ॥

अत्रान्तरे कदाचित् शास्त्रिवर्यः **शृङ्गगिरिपीठाधिपानां श्रीमदाचार्याणां** दर्शनेनात्मानं कृतार्थयितुकामः शृङ्गगिरिमठमाप । तदा यः काश्यां ब्रह्मचारी सन् शास्त्रिवर्यस्यान्तिके वेदान्तशास्त्रमध्यगीष्ट स एव तत्पीठमलमकार्षीत् । तत्पीठाधिपः दर्शनायागतं यज्वानमालक्ष्य विदित्वा च तमात्मनः पूर्वाश्रमे गुरुमप्राक्षीत्—'किं मां जानान्ति भवन्तः' इति । यज्वा पुनस्तस्य पूर्वाश्रममज्ञात्वा प्रत्यवदत्—'भवन्त एतत्पीठाधिपा आचार्या इति जानामि इति । नैतदाश्रमस्थं माम्, किन्तु पूर्वाश्रमस्थमिति पुनः पर्यपृच्छत् पीठाधिपः । नेत्यवादीत् शास्त्रिवर्यः । ततः पीठाधिपः स्वस्य पूर्वाश्रमं तच्छिष्यत्वं च प्राबोधयत् । यज्वापि परमया मुदान्वितः महतादरेण सम्मानितः सन् पीठाधिपैः प्रत्यावर्तत स्वगेहम् इति तत्रत्या वदन्ति ॥

प्रायः 1880 तमं खिस्ताब्दं यावत् महीशूरपुरीमधिवसन् वाञ्छेश्वरयज्वा मध्ये अवकाशे च लब्धे चतुःपञ्चकृत्वो वा स्वग्रामं तिरुविशलूर् अग्रहारमाजगामेति श्रूयते । यदा यज्वा तीर्थयात्रायै रामेश्वरमागात् तदैव प्रथमतः कर्णाटकराज्यात् स्वग्राममायासीत् दीर्घकालविरहितस्वबन्धुजनादिदृक्षया । समये च तस्मिन् तञ्जापुराधीशं पारम्पर्यवृत्तिकल्पनासंरक्षितपण्डितप्रकाण्डमण्डलं **शरभोजिमहाराजं** द्रष्टुमभिलषन् तन्नगरीमाससाद । बहुकालानन्तरमागतं पण्डितमणिमतिथिसत्कारादिना सत्कुर्वन् तस्य कृते पूर्वमात्मना कृतमपराधं परिमार्ष्टुकाम इव बहुधा बह्वमन्यत । ततस्तयोः प्रवृत्ते नवनववृत्तान्तश्रवणानन्दपीयूषस्यन्दिनि संलापे, अङ्कमारुह्य विहरन् राजपुत्रः बालः **शिवाजिः** पण्डितवर्यस्य कण्ठे ध्रियमाणं **कृष्णराज-ओडैयार्** प्रभुणा प्रीत्या समर्पितं मारकतमणिहारं तन्मनसा सहाचकर्ष । तदनुपदमेव पण्डितवर्यः तन्मणिहारमस्मै वात्सल्येन समर्प्य समतोषयदेनम् । यदा सल्लापान्ते यज्वा महाराजमापृच्छ्य गृहमगात् तदा महाराजस्तत्प्रतिनिधित्वेन बहुधननिचयमनुपदमेव तस्मै प्राहिणोत् इति वदन्ति प्राक्तनवृत्तान्तारामाः प्रामाणिकवृद्धाः ॥

एवमन्यदा वाञ्छेश्वरयज्वा यदा यदा स्वग्राममाययौ तदा तदा महीशूरपुरे राज्ञा संमाननतया दत्तमात्मने छत्रचामरादिकं सर्वं स्वग्रामवर्तिशिवविष्णवालययोः प्रत्यार्पयत् इति तद्ग्रामाभिजना वृद्धाः । ततः 1839 तमे खिस्ताब्दे श्रीकाञ्च्यां श्रीमत्कामाक्ष्या महाकुम्भाभिषेकः तथा 1849 तमे खिस्ताब्दे जम्बुकेश्वराख्यदिव्यक्षेत्रे श्रीमदखिलाण्डेश्वर्यास्ताटङ्कप्रतिष्ठा च व्यतानि श्रीका**ञ्चीकामकोटिपीठाधीश्वरैः श्रीशङ्कराचार्यैः** । तदापि शास्त्रिवर्यः एतयोरुभयोरपि समययोः सन्निहितः सन् तत्र कर्तव्यकार्यजातं निरवहदिति श्रूयते ॥

तस्यास्य यज्वनः परमेश्वरे भक्तिर्महती अतिमात्रा च, यतः प्रतिदिनमेकादशरुद्र-पूर्वकमीश्वरपूजामन्तरा न पातुमपि सलिलमध्यवस्येत् इति श्रूयते । किञ्च स विशेषतो मध्यार्जुनेश्वरस्य श्रीमहालिङ्गेश्वरस्य चरणकमलयोरतिमात्रामावहद्भक्तिमिति जानीमः । अत एव चरमे वयसि विद्यमानः स यदा यदा स्वजन्मभूमिमाययौ तदा तदा अहरह-र्मध्यार्जुने श्रीमहालिङ्गेशमनेकप्रणतिस्तुतिपूर्वकमदृष्ट्वा न स्वापमाप्नुयादिति वदन्ति । एवमन-वरतमीश्वरं भक्त्या भजमानः शास्त्रिवर्यः स्वभक्तिपारम्यपरिणतया **महालिङ्गशतकाख्यया** कयाचित् स्तोत्ररत्नावल्या सह भगवतः श्रीमहालिङ्गेश्वरस्य पदपङ्कजयुगले स्वात्मानं समर्प्यान्ते प्रायः अशीतितमे वयसि मानुषीं तनुमत्यजत् ॥

अस्य व्याख्यातुः पुत्रौ द्वावेका पुत्री चेति ज्ञायते । तत्र ज्येष्ठः **स्वामिशास्त्री** इति प्रसिद्धः महापण्डितः सन् अल्पायुष्को दिष्टमगमत् । कनीयान् पुत्रो **नरसिंहशास्त्री** महापण्डितो महीशूरपुरे स्वपित्र्यं पदमलङ्कुर्वन् कृष्णराजचामराजादिभिरतीव बहुमानितः 1913 तमे ख्रिस्ताब्दे स्वर्गमगात् । एका पुत्री तु **कामाक्षी** नाम । तस्या एव पुत्रः सुप्रसिद्धो महामहोपाध्याय**श्रीवेङ्कटसुब्बाशास्त्रिमहाशयः** ॥

अनेन व्याख्यात्रा कृताः ग्रन्थाः व्याख्यारम्भश्लोकेषु परिगणिता वर्तन्ते । तद्यथा— १ महिषशतकव्याख्या, २ हिरण्यकेशिसूत्रव्याख्या, ३ दत्तचिन्तामणिः, ४ श्राद्धचिन्तामणिः, ५ ब्रह्मसूत्रार्थचिन्तामणिः, ६ काकतालीयवादार्थ इति । अन्येऽप्यत्रा-परिगणिता ग्रन्था एतद्व्याख्यातृकर्तृका उपलभ्यन्ते । यथा ७ हिरण्यकेशिसामान्यसूत्र-व्याख्या, ८ धूर्गानचन्द्रिका, ९ श्लेषार्थचन्द्रिका, १० तर्कसंग्रहव्याख्या । इमान् ग्रन्थान् सर्वान् प्रणीय ततः चरमे वयसि विद्यमानेनैव यज्वना व्यरचीयं व्याख्येति भाति । अत एव प्रकृतव्याख्यारम्भश्लोकेषु प्रकृतव्याख्यायाश्च इतः प्रागेव स्वकृतानां ग्रन्थानां भूयसां निर्देशः सङ्गच्छते । व्याख्यायामस्यामनन्तरं यज्वपुत्रेण **स्वामिशास्त्रिणा** बहवो विषया विस्ता-रिता इति तद्वंश्या आहुः । प्रकृतव्याख्याया विशेषमधिकृत्य वक्तव्योऽशः पूर्वमेवाभ्यधायि ॥

III

व्याख्याया अस्याः प्रकाशनमधिकृत्य किञ्चिदिव वक्तव्यमस्ति । **श्रीवेङ्कटसुब्बा-शास्त्रिवर्याः** 1927 तमे ख्रिस्ताब्दे व्याख्यामिमां प्रकाशयितुमारभन्त । यदा ते 1928 तमे ख्रिस्ताब्दे स्वर्गमगमन् तदा कञ्चित्कालं ग्रन्थप्रकाशनकृत्यमुपारमत । ततः तत्प्रकाशनमचिरं समापयितुं कृतमतयः **श्रीकाञ्चीकामकोटिपीठाधिपतयो**

जगद्गुरुश्रीशङ्कराचार्या न्ययुञ्जत प्रूफ् (Proof) प्रेक्षणशोधनादिकृत्यजातनिर्वाहे वेङ्कटसुब्बाशास्त्रिवर्याणां ज्येष्ठसूनुं वेङ्कटरामशास्त्रिणं मां च। कतिपयकालानन्तरं वेङ्कटरामशास्त्र्यपि हन्त! दुर्नियतिवशात् लोकान्तरमगमत्। एवमनेकधा विघ्निते विलम्बिते च प्रकाशनकृत्ये सर्वथा अविलम्बेन प्ररिसमापयितुं त्वरमाणैः जगद्गुरुश्रीशङ्कराचार्यस्वामिभिः तत्स्थाने ब्रह्मश्रीसुब्रह्मण्यशास्त्रिबालसुब्रह्मण्यशास्त्रिणौ नियमितावभूताम्। एवं बहुधा विलम्बितं मुद्रणकृत्यं समाप्य सांप्रतमियं व्याख्या निवीतान्तं प्रकाशिता पण्डितमण्डल्याः पुरतो निक्षिप्यते॥

व्याख्याया अस्या मातृकापुस्तकं वेङ्कटसुब्बाशास्त्रिवर्यैः संरक्षितमेकं लिखितपुस्तकमेव। महीशूरपुर्यां या मुद्रिता भाट्टदीपिका सैव मूलस्यास्या भाट्टदीपिकाया मातृकापुस्तकत्वेन स्वीकृता। मुद्रितपुस्तकमूलस्य व्याख्याकाराभिमतमूलस्य च क्वचित् क्वचित् पाठभेद उपलभ्यते। व्याख्याकाराभिमतः पाठ एवात्र मूले मुद्र्यते। महीशूरपुरीयपुस्तकपाठस्तु टिप्पण्यां पाठान्तरत्वेन प्रदर्श्यते॥

इत्थम्
श्रीकाञ्चीकामकोटिपीठाधिपानां जगद्गुरूणां
तत्रभवतां श्रीशङ्कराचार्यवर्याणां
यथादिष्टमाज्ञानुचरः
**आर्यस्वामी**

बुग्गा,
आङ्गिरस श्रावण
कृष्णपञ्चमी

Bibliograpy

(जीवनचरितेऽत्र निर्दिष्टानां राज्ञामन्येषां च देशकालविज्ञाने प्रमाणभूता ग्रन्थाः)

1. Manual of the Tanjore District by Venkasami Rao (1883)
2. Aravidu dynasty of Vijaya Nagara, Vol. I., by H. Heras.
3. Encyclopaedia Britanica, 11 edn., Vols. VI, XVIII. XXVI,
4. Mysore Gazetteer Vol. I (New edition)
5. History of India (Medieval and Modern) by Prof. L. Mukharji, M. A.
6. Bombay Gazetteer Vol. XXIV.

---

*Note*: अत्र षष्ठे पुटे अष्टमपङ्क्तौ "अस्ति गोविन्दयज्वेन्द्रनागमाम्बातपःफलम्" इति पठनीयम्।

अस्य व्याख्याकर्तुर्वंशपरंपरा आमूलमधो निर्दिष्टरीत्या रेखाभिः प्रदर्श्यमाना सुबोधा भवति ।



# परिशिष्टम्

## No. I.

### RESIDENCY AT POONA.

No. 292.

Permit the bearer hereof to pass without molestation according to the tenor of this Pass port *viz.*

| Name. | Rank or Profession. | To what place. | Baggage & attendants. | Remarks, |
|---|---|---|---|---|
| Pootha Shastery | In the Service of Madhow Row Purrushram Putwurdhun. | Ramaishwur | 1 Dooly.<br>1 Camel.<br>6 Tuttoos.<br>5 Armed men.<br>5 followers. | |

*Date of this Pass port.*
26th November, 1816.

(Sd.) M. ELPHINSTONE
*Resident at Poona.*




(Round wase seal)

The Script is in Modi and the Language Marathi. Seal is in Nagari script and the signature in English. Fasli year 1228 corresponds to A. D. 1818.

The following is a translation of the above.

From William chaplain, circle, Katoral Palace Agent, Subha Dharwar etc.

To All Deval Darwari (Frontier) Desais, Jakardars, Chowkidars, Jagirdars, Killedars etc. and all officers in the service of the Hon. the English Company Government.

Vedasastra Putta Sastry is proceeding to Mysore with the following Retinue.

| | |
|---|---|
| Palki with Boyis. 1. | Pony horses 6 |
| Peons 8 | other Subordinates including Brahmins 10. |

Should be permitted to pass unmolested through Rivers, Canals, Roads etc. This passport will be cancelled after 30 days from this date. October 8th Fasli year 1228 camp Hubli.

Written by Munslu Bahadur. (Sd.) W M. CHAPLAIN.

Plm. & R. Agent.

No. III.

No. 9. Permit the bearer named Poot Shastree to proceed unmolested from chinchinee on a pilgrimage to Ramaishwur provided he is not accompanied by more than 1 Palankin, 5 Horses and 10 servants including armed peons. This passport to have effect for ten months from this date.

Poona, 25th September, 1822. (Sd.) WM. CHAPLAIN.




(Round wase seal.)

श्रीः

दस्तक् सर्कार् दौलत् मजार् कंपनी इंग्रज बाहदूर् आजतरफ उलीयम् म. चापलीन् साहेब वहदर ता फौजदारान् व कमाविस दारान् व बाजेलोकान् व जकापि महलानिहाय सुम्मासल्लास अषरीन मयातेन व अल्लार्फू. वेदमूर्ति पूट शास्त्रिबावा हे. चीचणीगावाहून रामेश्वरास जाताहेत्. समागमे म्यानाभोयी सुद्रा १. व घोडी तट्टे मिळून रास ५. व हत्यारबन्द व माणसें मिळून असामि १० एणेप्रमाणे हंराह आहेत. त्यास मार्गी मुर्जा नहोता जाऊं देणे. उदुमीदिनस असल्यास-जकात् शिरस्ते प्रमाणे घेणे. हे दस्तक् दहामहिन्याचे मुदतीचे दिल्हे असे. पुढे मंजूर न धरणे.

तारीख् २५ सप्टंबर् सन् १८२२ इसंवी मुसल्मानीचम्द ९ माहरम् मुकां पुने.

The second para is a mere translation of the first para. This is written in Modi script and the language is Marathi.

No. IV.

श्री

श्रीचामराज
वडेर तनूज
कृष्णराजवडेर

कृष्णराजवडेयरवरु

स्वभानूसंवत्सरद पुष्यबहुळ ९ स्थिरवारदल्लु श्रीमतु अरमने शीमे गडिगळ... माल किल्लेदारिगे सह बराशि कळुहिसिद निरूप अदागि समुखदविद्वांस वेदमूर्ति कुट्टि-शास्त्रिगळवरु मैसूरिंद रामेश्वरयात्रेहोगि बरुवदरिन्दा यिवर सङ्गड बाह्मणजन ४० शूद्रजन २० एत्तु ४ कुदुरे २ मेना १ गाडे १ सहा होगिबरुवमजलुगळ विवरा नंजनगूडु बदनगुप्पे हरतनहळ्ळि ईमूरुमजलुगळल्लि यिवरु बंदल्लि इयुवादके अनुवाद कैडुवाद स्तळा तार्सि कोडुवदु । इळ्द दिन १ के मात्र अळवक शेरु मुवत्तु तक्क लवाजमे

प्रकार सोबस्कर इरुळिंशिरु इत्तु यत्तुकुदरेगाळिगे मेविगे तक्कष्टु हुल्लु अडिग्गेतक्कष्टु अडिगब्बु कुम्बरननगसहा तोर्सिकोट्टु सामानुसंदबग्गे रशीतितेगेदुकोंडु क्रयविवरद पट्टि हजूरिगे कळुहिसुवदु. इळदबळि रात्रिवेळे कळ्ळकाकर उपद्रव तद्दन्ते खबर्-दार्-कोडिसुवदु. गडियिंद मुंदिनयडिवरिगे रहदारिबग्गे वन्दाळुकोडुवदु. सुंकदबग्गे अटकायिसदेबिदट-बिडुवदु. ईरहदारि तारणसंवस्तरद वैशाखब० ३० वरिगे मंजूरुमाडुवदु. तारीकु २४ ने माहे जनवरि सन् १८२४ ने इसवि. खत्तकोनेटैय्य. मुनषि. हजूरु.

श्रीकृष्ण.

The above passport is written in Kanarese script and the language is also Kanarese. Only the seal is in Nagari script.

The following is a translation of the above.

Krishna Raja Wodiaravaru.

Order issued to the Killedars of the Palace Territories on Saturday the Navami in the Krishna paksha in the Month of Pushya of the year Swabhanu.

Whereas Vedamurthi Kutti Sastry, Samukha Vidwan, is proceeding on a Pilgrimage to Rameshwara from Mysore with 40 Brahmins, 20 Sudras, 4 oxen, 2 horses, one mena and one Gade.

Comping places: Nanjangud, Badanaguppe and Haradanahalli.

In each of the above 3 places he must be accommodated in a convenient place and during his stay must be provided with 30 seers Lowajame, 10 seers horse gram, enough grass for the oxen and horses, firewood and pots for cooking each day and obtaining a receipt for the Samans supplied, should send the bill for payment to the Muzur.

During nights proper bandobust against thieves and daciots should be provided.

From one camp to another one Guide should be sent to show the route.

Should not molest for payment of tolls and allow to pass free of toll.

This passport is valid till the New moon day in the month of Vaisakha in the year Tharana.

Dated 24th January, 1824.

(Sd.) SRI KRISHNA.

No. V.

श्रीः




कृष्णराजवाडेहर यानीं

स्वभान् संवद्र पुष्यवदी अमावास्य स्थिरबारि श्रीमुडासुमुख विलास् वेदशास्त्र-संपन्न कुट्टिशास्त्रि याशीनिरू पीलेखनादन्य ऐसिए अर्जिपाठवीलोम जकूर् श्रुत दहलो-पुन्मी रामेश्वरदर्शन जानेबद्दल्...........बद्दल् चाल्तीतलबेसू....वोबिठेवणे सूदे-बराव् खबडीबदलया चोजे वनासु कुंहोवा. मणोन् लिहीं लोहोता. कोरितुंचा जामपि मतीतलब् बीदे. यिजस्....सर्वाधिकार् बेरु राजे अरस् पाशिनिरूप् हिव पिठार बीजस् बीऐ मोबोराकछेरि बक्षिराज् नानास् निरूप् वर्पांच् जमान देनेस् बर् दर् जबलिकिल्लेदारास् निरूप् ऐसेतीवी निरूप बल्धकरूत् पाठ् बिलो आहि. तोरि ऐसि एस् देबूनि .... जीवनासोहिरा बेवून् षभाकरून्. भिवुनदाद् इवुन् फडणो. जाणेयेमर्कुं तारीख् ३१ माहे जनवरि सन् १८२४ इस्पिखद् बो खब् राव् मुन्षि ह हुजूर् दबीर् रामनाथ पुर.

श्रीकृष्ण.

The above record is written in Modi script. The Seal is in Nagari script and the signature in Kanarese script. The language is persian. It is dated 31st January, 1824 corresponding to Pushya Bahula Amavasya, Saturday. Camp Ramanathapura written by Bukh Row, Munshi Huzur Durbar. The other contents are not known as it is in persian language.

No. VI.

श्रीः

कृष्णराजवडयरवरु.

सर्वजित् संवत्सरद माघबहुळ ११ सोमबारदल्लु श्रीमतु समुखदविद्वांस वेदमूर्ति कुट्टिशास्त्रिगळिगे बरसिकळुहिसिदनिरूप अदागि बरद अर्जिविवर श्रुतवायितु. कडूरिंदमैसूरिगे बरुवबग्गे तरीकेरेयल्लिरुव म्यानानिम्मबळिगे कळुहिसूवबग्गे वंदुरहदारि अप्पणेकोडिसिरुविषय तिळियबरुवदु. तारीखु ११ ने माहे पेब्रवरि सन् १८२४ ने इसवि खत्तगुरप्प मुनषिहजूरु.

(Sd·) श्रीकृष्ण.

माघबहुळ १३
बुधवारदल्लु.

The script and language are Kanarese.

This is a letter from Sri Krishna Raja Wodaiyar to Samulkha Vidwan Vedamurthi Kutti Sastry. Informing him that the petition was received and instructions are sent to send the Mena which is in Tarikere to be handed over to Mr. Kutti Sastry to enable him to come to Mysore from Kadur.

This is dated 11th February, 1828.

उपोद्घातेऽस्मिन् परिशिष्टतया प्रकाशितानि यानि शासनपत्राणि, तानि सर्वाणि प्रकृतव्याख्यातृवंश्यैः सादरं संरक्ष्य प्रकाशनाय नः समर्पितानि । अतस्तान् प्रति अत्र अस्मत्कार्तज्ञ्यमाविष्कुर्मः ।

ओं श्रीमहागणपतये नमः

# ॥ भाट्टचिन्तामणिसहितभाट्टदीपिकाया विषयानुक्रमणिका ॥

## प्रथमोऽध्यायः

### प्रथमः पादः

## द्वितीयः पादः

## चतुर्थः पादः

## द्वितीयोऽध्यायः

### प्रथमः पादः

## तृतीयः पादः

द्वितीयः पादः

## तृतीयः पादः

॥ समाप्तेयं विषयानुक्रमणिका ॥

॥ शुभं भवतु ॥

॥ शिवम् ॥

# निवीतान्तभाट्टदीपिकागताधिकरणानामकारादिक्रमेण सूचीपत्रम्
## ( अधिकरणानुक्रमणिका )

| | प्रथमः पादः | द्वितीयः पादः | तृतीयः पादः | तुरीयः पादः | समुदिता सङ्ख्या |
|---|---|---|---|---|---|
| प्रथमोऽध्यायः— | ७ | ४ | १० | २० | ४१ |
| द्वितीयोऽध्यायः— | १८ | १३ | १४ | २ | ४७ |
| तृतीयोऽध्यायः— | १५ | २० | १५ | | ५० |
| निवीतान्तभाट्टदीपिकागताधिकरणानामाहत्य समुदिता सङ्ख्या— | | | | | १३८ |

## ॥ सूत्रानुक्रमणिका ॥

# उद्धृतवाक्यानाम् आकरसूची

| उद्धृतवाक्यानि | भाट्टचिन्तामणिपृष्ठानि | आकरनामादि | | | | |
|---|---|---|---|---|---|---|
| अकर्तरि च कारके संज्ञायां | १२६ | पा. सू. | | ३ | ३ | १९ |
| अक्रियामेके | ९० | आश्व. श्रौ. सू. | | | | |
| अक्ताः शर्करा उपदधाति | २९५ | cf. तै. काठ. | | ३ | ५ | १२ |
| अक्षय्यं ह वै चातुर्मास्यं | १४४, २८३ | आप. श्रौ. सू. | | ८ | २ | २ |
| अक्षः कर्षे तुषे | ९२ | विश्वकोश (क्षान्ते) | | | | |
| अक्षैर्दीव्यति | १९४, ४४६ | | | | | |
| अगन्म सुवः | ५४, ३६८, ३७९, ३८० | तै. सं. | १ | ६ | १ | १ |
| अग्न आयाहि वीतये | १२३ | ऋ. सं. | | ६ | १६ | १० |
| अग्नये कृत्तिकाभ्यः | २०८ | तै. ब्रा. | ३ | १ | ४ | १ |
| अग्नये गृहपतयेऽग्नये संवेशपतये | १२९ | | | | | |
| अग्नये जुष्टं | ६६, १९७ | तै. सं. | १ | १ | ४ | २ |
| अग्नये दात्रे | १२३ | तै. सं. | २ | २ | ३ | ८ |
| अग्नये स्वाहा | २०८ | तै. ब्रा. | ३ | २ | ४ | १ |
| अग्ना ई पत्नी वा | ४१९ | | | | | |
| अग्नाविष्णू | २४४ | तै. सं. | ४ | ७ | १ | १ |
| अग्निं चित्वा | ७८ | तै. काठ. | | ३ | ५ | १२ |
| अग्निं चिनुते | ३०७ | | | | | |
| अग्निं मन्थति | ४७८ | तै. ब्रा. | १ | ६ | ३ | ३ |
| अग्निं स्विष्टकृतं यजति | २१४ | cf. श. ब्रा. | २ | २ | ३ | २४ |
| अग्निः प्रत्नेन | २१९ | तै. ब्रा. | ३ | ५ | ६ | १ |
| अग्निः पूर्वेभिः | १९९ | ऋ. सं. | | १ | १ | २ |
| अग्निमीळे पुरोहितं | १०२ | ऋ. सं. | | १ | १ | १ |
| अग्निमुखा वै देवाः | १५६ | | | | | |
| अग्निमुपनिधाय | १२२, ३०५, ४१० | | | | | |
| अग्निर्ज्योतिः | १२६, १२८, २३४ | तै. ब्रा. | २ | १ | ९ | २ |
| अग्निर्देवो होता | १९७ | आ. श्रौ. | | २ | १६ | ५ |
| अग्निर्मूर्धा | ६६ | तै. सं. | ४ | ४ | ४ | १ |
| अग्निर्यजुर्भिः | २०२ | तै. आ. | | ३ | ८ | १ |
| अग्निर्वृत्राणि | २१९ | तै. ब्रा. | ३ | ५ | ६ | १ |
| अग्निर्वै ब्राह्मणः | १५६ | | | | | |
| अग्निर्हिमस्य भेषजं | १३ | तै. सं. | ७ | ४ | १८ | २ |
| अग्निहोत्रहवण्या | ३८५ | | | | | |

| उद्धृतवाक्यानि | भाट्टचिन्तामणिपृष्ठानि | आकरनामादि | | | | |
|---|---|---|---|---|---|---|
| आग्नेयं चतुर्धा करोति | १६४, | | | | | |
| ,, ,, | २९७, ३६५, ४७९ | आप. श्रौ. | | ३ | ३ | २ |
| आग्नेयोऽष्टाकपालः | ३२१, ३२२ | तै. सं. | ७ | ५ | २१ | १ |
| आग्नेय्याग्नीध्रमुपतिष्ठते | ११८ | | | | | |
| आघारमाघारयति | २३४ | | | | | |
| आचान्तेन कर्म कर्तव्यम् | ७६ | | | | | |
| आचारश्चैव साधूनां | ८० | मनु. स्मृ. | | | | |
| आचार्योऽन्तेवासिनं | ४२ | तै. आ. | | | | |
| आज्जसेरसुक् | १०२ | | | | | |
| आज्यभागाभ्यां | २२२ | | | | | |
| आज्यभागौ | २३७, २४५ | | | | | |
| आज्यभागौ यजति | ७७,२९९,३२०,२१९,२२२ | तै. ब्रा. | १ | ६ | ९ | २ |
| आज्यमुत्पुनाति | ३४७ | | | | | |
| आज्यस्यैनमभिपूर्य | ८५ | | | | | |
| आज्येन पत्नीः | ४५९ | | | | | |
| आज्यैः स्तुवते | १२३ | | | | | |
| आत्मानं रथिनं | ४ | कठ. उप. | ३ | ३ | | |
| आत्मास्तित्वं शारीरे वक्ष्यामः | १७, १८५ | उपवर्षः | | | | |
| आत्मीयात् परकीयस्य | ७४ | वार्तिक. | | | | |
| आत्रेयाय हिरण्यं ददाति | ४१० | | | | | |
| आदित्यः प्रायणीयः | ८५, १६४ | | | | | |
| आदित्यो यूपः | १५७ | | | | | |
| आधृषाद्वा | १८८ | | | | | |
| आध्वर्यवमधीते | ४४० | | | | | |
| आनन्तर्यमचोदना | २०७, ३७१ | | | | | |
| आनर्थक्यप्रतिहतानां | १४४ | | | | | |
| आ नः प्राणः | ३०० | तै. सं. | ३ | ३ | ३ | ३ |
| आ नो मित्रावरुणा | १२३ | ऋ. सं. | | ३ | ६२ | १३ |
| आपो वा ऋत्वियमार्छन् | ९४ | | | | | |
| आमनमस्यामनमस्य | २४५ | तै. सं. | २ | ३ | ९ | १ |
| आम्नायस्य क्रियार्थ- | १११ | जै. सू. | | १ | २ | १ |
| आम्रान् पृष्टः | ४५८ | म. भाष्य. | | ४ | १ | १ |
| आयाहि सुषुमाहिते | १२४ | ऋ. सं. | | ८ | १७ | १ |
| आयाहीन्द्र पथिभिः | ८४ | ऋ. सं. | | ७ | ५५ | ८ |
| आयुर्घृतम् | २५२ | तै. सं. | २ | ३ | २ | २ |
| आयुर्यज्ञेन | २०४ | तै. सं. | १ | ७ | ९ | १ |

| उद्धृतवाक्यानि | भाट्टचिन्तामणिपृष्ठानि | आकरनामादि | | | | |
|---|---|---|---|---|---|---|
| आवृत्तिरसकृदुपदेशात् | २१४ | ब्र. सू. | | ४ | १ | १ |
| आशास्ते यं | १९७ | तै. सं. | २ | ६ | ९ | ७ |
| आश्ववालः प्रस्तरः | ८५ | तै. सं. | ६ | २ | १ | ५ |
| आश्विनं गृह्णाति | २३७ | | | | | |
| आश्विनं ग्रहं | | वार्तिक. | | | | |
| आहवनीयमन्वादधाति | ४४१ | | | | | |
| आहारस्त्वयि | १६ | भ. गी. | | | | |
| आहितोऽग्निराहवनीयः | २८७ | | | | | |
| इडो यजति | ३२१ | | | | | |
| इतरस्याप्येवमसंश्लेषः | ३२७ | ब्र. सू. | | | | |
| इत्थंभूतलक्षणे | ३९८, ३९९ | पा. सू. | | | | |
| इत्यश्वाभिधानीमादत्ते | २९, ५७, ५८, ६० | तै. सं. | ५ | १ | २ | ९ |
| इज्याचारदमा | १५ | | | | | |
| इध्माबर्हिरुपसादय | २०० | तै. ब्रा. | ३ | २ | १० | १४ |
| इन्द्र आगच्छ हरिव आगच्छ | २०१ | तै आ. | | १ | १२ | ३ |
| इन्द्र उक्थामदैः | २०२ | तै. आ. | | ३ | ८ | १ |
| इन्द्र ऊर्ध्वोऽध्वरः | २३४ | | | | | |
| इन्द्र त्वा वृषभं | ४१६ | ऋ. सं. | | ३ | १० | १ |
| इन्द्रवायुभ्यां त्वा | २४२ | तै. सं. | १ | ४ | ४ | १ |
| इन्द्राग्नी आगतं | १२४ | ऋ. सं | | ८ | ३८ | ४ |
| इन्द्राय वसुमते | १६४ | | | | | |
| इन्द्राय हरिवते | १४५ | आप. श्रौ. | | १३ | १७ | २ |
| इन्द्रियार्थसन्निकर्षः | २० | न्या. सू. | | | | |
| इन्द्रो न तस्थौ | ३९४ | न्यायसुधा. | | | | |
| | | ऋ. सं. | | १० | १३९ | ३ |
| इन्द्रो राजा जगतः | २८१ | तै. आ. | | ३ | ११ | ६ |
| इमामगृभ्णन् | ३८, ६० | तै. सं. | ५ | १ | २ | १ |
| इयं वै चित्रा | १२३ | तै. सं. | २ | ४ | ६ | १ |
| इषे त्वा | १९८, २०९ | तै. सं. | १ | १ | १ | १ |
| इषे त्वेति च्छिनत्ति | २०४ | आप. श्रौ. | | | | |
| इषे त्वोर्जे त्वा | २०४ | तै. सं. | १ | १ | १ | १ |
| इष्टकाभिरग्निं | १६२, ३०४, ३०५ | | | | | |
| इष्टियागेच्छयोः | १०३ | अमरको. | | ३ | ४ | ३९ |
| ईशानमिन्द्रः सुरशुषः | १९२ | तै. सं. | २ | ४ | १४ | २ |
| ईश्वरप्रेरितो | ४२ | | | | | |
| ईश्वरः सर्वभूतानां | १९ | भ. गी. | | | | |

0

---

# ॥ एतद्ग्रन्थोदाहृतन्याय-अधिकरणसूची ॥

श्रीः

श्रीशिवाय नमः ।

# भाट्टदीपिका

विश्वेश्वरं नमस्कृत्य खण्डदेवस्सतां मुदे ।
तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकाम् ॥

---

## ॥ भाट्टचिन्तामणिः ॥

वन्दे डुण्ढिं महालिङ्गं विश्वेशं मणिकर्णिकाम् ।
ईश्वरश्रीनिवासार्याहोबलाख्यगुरूत्तमान् ॥ १ ॥
श्रीमत्कवेरजातीरं विद्वद्वृन्दोपशोभितम् ।
अत्युत्तमशिवक्षेत्रविष्ण्वादिस्थानमस्ति हि ॥ २ ॥
श्रीशहराजेन्द्रपुरे श्रीशहराजेन्द्रविष्टपैः सदृशे ।
कृतवासो विमलमतिर्होशनि[1]कर्णाटकस्सुधीः श्रीमान् ॥ ३ ॥
चक्रे माहिषशतकं धाटीशतकं तथाऽऽशिषां शतकम् ।
श्लेषकविसार्वभौमः श्रीमान्वाञ्छेश्वरः स्वतन्त्रोऽसौ ॥ ४ ॥
तस्य नप्ता माधवार्यपौत्रः श्रीनरसिंहतः ।
वेदवेदाङ्गतत्त्वज्ञात्सर्वशिष्टाग्रपूजितात् ॥ ५ ॥
लब्धजन्माऽधीतशास्त्रो वेदार्थैकनिविष्टधीः ।
माहिषं शतकं येन प्रपितामहनिर्मितम् ॥ ६ ॥
व्याख्यातमतिगम्भीरं पितृप्रोक्तेन वर्त्मना ।
हिरण्यकेशिसूत्रं च व्याख्यातं कृत्स्नमेव हि ॥ ७ ॥

---

१ होसल इति पाठान्तरम् ।

दत्तचिन्तामणिं चैव श्राद्धचिन्तामणिं तथा ।
कृतवान्ब्रह्मसूत्रार्थचिन्तामणिमनुत्तमम् ॥ ८ ॥
काकताळीयवादार्थः कृतो येनाऽतिदुर्घटः ।
श्रीवाञ्छेश्वरनामाऽसौ तनुतेऽद्य यथामति ॥ ९ ॥
श्रीभाट्टदीपिकाव्याख्यां भाट्टचिन्तामणिं मुदा ।
दोषसत्त्वेऽपि कृपया गुणं गृह्णन्तु पण्डिताः ॥ १० ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्त्यर्थमनुष्ठितमिष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् चिकीर्षितं प्रतिजानीते—**विश्वेश्वरमिति** ॥ विश्वस्य प्रपञ्चस्य ईश्वरमन्तर्यामिरूपेण नियन्तारमित्यर्थः । 'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी च भगवान् तस्मात्सर्वगतः शिवः ॥' इत्यादिस्मृतेरिति भावः । अथवा विश्वस्य विष्णोरीश्वरो विश्वेश्वरः । पूज्यपूजकभावः षष्ठ्यर्थः । ततश्च विश्वेन विष्णुना पूज्य इत्यर्थः । तथाच महाभारते पारिजातापहरणे श्रीकृष्णं प्रतीश्वरवचनम्, 'पुरा मैनाकमाश्रित्य तपस्त्वमकरोर्यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥ अवध्यस्त्वमजय्यश्च मत्तश्शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥' इति । एवं स्कान्देऽपि वैकुण्ठचतुर्दश्यामर्धरात्रे ईश्वरेण विष्णुपूजा कृता, प्रभाते विष्णुना शिवपूजा कृतेत्युक्तत्वादप्ययमर्थः स्पष्टः । यद्वा विश्वं चासावीश्वरश्चेति विग्रहः । विश्वं जगद्विष्णुर्वा तदभिन्न ईश्वर इत्यर्थः । 'त्वमेवाहं जगच्चेदं सदेवासुरमानुषम्' इति विष्णुपुराणे ईश्वरं प्रति विष्णुवचनाद्विश्वाभेद ईश्वरस्य उपपन्न इति भावः । यद्यपि प्रथमव्याख्याने विश्वेश्वरपदेनैव स्वापेक्षयापि भगवतः उत्कर्षप्रतीतेर्नमस्कृत्येत्यस्य नातीव प्रयोजनं, तथापि कायिकादिनमस्कारप्रतीत्यर्थं तथोक्तमिति ध्येयम् । द्वितीयया कर्मत्वं बोध्यते । नच नमस्स्वस्तीत्यादिना चतुर्थी स्यादिति वाच्यम्; उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलीयस्त्वेन द्वितीयया चतुर्थीबाधात् । कर्मत्वं च धात्वर्थतावच्छेदकफलशालित्वम् । धात्वर्थतावच्छेदकत्वं च विशेषणतया धातुप्रतिपाद्यत्वम् । स्वापकर्षावधित्वप्रकारकबोधविषयता निपातार्थः । प्रयोजकव्यापारो धात्वर्थः । भावना उत्तरकालीनत्वं च क्त्वाप्रत्ययार्थः । तथा च विश्वेश्वरकर्मकस्वापकर्षावधित्वप्रकारकबोधविषयताप्रयोजकव्यापारकरणकभावनोत्तरकालीनेति क्त्वान्तार्थः । ततश्च धात्वर्थतावच्छेदकतादृशविषयताश्रयत्वेन विश्वेश्वरस्य कर्मत्वात् द्वितीयोपपत्तिः । स्वयंभुवे नमस्कृत्येत्यादौ त्वपकर्षावधित्वमात्रविवक्षया चतुर्थी । न चावधित्वस्यापादानतारूपतया पञ्चमीप्रसङ्ग इति वाच्यम्; क्रियान्वय्यवधित्वस्यैवापादानतारूपत्वेन पञ्चमीप्रयोजकतया प्रकृते तदभावात् । केचित्तु नारायणं नमस्कृत्येत्यादौ धातोरेव लक्षणया नमस्कारानुकूलव्यापारोऽर्थः । नमःपदं तात्पर्य-

**इह खलु निखिलपुमर्थानर्थसाधनौ धर्माधर्मौ साङ्गोपाङ्गवेदाध्ययनसमधिगम्यौ।**

ग्राहकम्। तेन सार्थकनमःपदयोगाभावान्न चतुर्थी। 'स्वयंभुवे नमस्कृत्य ब्रह्मणेऽमिततेजसे' इत्यादौ तु नमःपदस्य अर्थविवक्षया नमःपदयोगसत्त्वाच्चतुर्थ्येव न द्वितीयेत्याहुः। अन्ये तु स्वयंभुवे नमस्कृत्येत्यादौ स्वयंभुवं अनुकूलयितुं इत्यर्थविवक्षायां क्रियार्थोपपदस्येत्यादिना चतुर्थी। न च तर्हि नमःस्वस्तीत्यादिसूत्रे नमःपदवैयर्थ्यमिति वाच्यम्; हरये नम इत्यादौ हरिमनुकूलयितुमित्यर्थाविवक्षायां संबन्धसामान्ये षष्ठीप्राप्तौ तदपवादतया तस्य सार्थक्यादित्याहुः। यत्तु नारायणं नमस्कृत्येत्यादौ नमःपदं नतिकर्मपरं, तथाच नारायणं नतिकर्मीकृत्येत्यर्थविवक्षया घटं शुक्लं करोति घटं शुक्लीकरोति इत्यादौ घटादेरिव नारायणादेः कृतिकर्मत्वात् द्वितीयानिर्वाह इति तन्न। नमःपदस्य धर्मिबोधकत्वेन हरिराविर्भवतीत्यादिवत् नमो भवतीति प्रयोगप्रसंगादिति दिक्। **तत्प्रसादेन**—विश्वेश्वरप्रसादेन। भक्ताभीष्टप्रदानेच्छया पूर्ववाक्येऽप्राधान्येन निर्दिष्टस्यापि विश्वेश्वरस्य पूर्वोपस्थितिमात्रेण सर्वनाम्ना ग्रहणम्। 'दशैते राजमातङ्गास्तस्यैवामी तुरंगमाः' इत्यादौ तथा दर्शनात्। **सताम्**—महताम्। **मुदे**—सन्तोषाय। भाट्टानां सिद्धान्तानां दीपिकेव प्रकाशिका भाट्टदीपिका ताम्। **खण्डदेवः**—खण्डदेवनामा। **तनुते**—विस्तारेण करोतीत्यर्थः। ननु बहुषु आकरग्रन्थेषु सत्सु किमनयेत्यत आह—**संक्षिप्तामिति**। शब्दसंक्षेपयुक्तामित्यर्थः। ततश्च तेषां अतिविस्तृतत्वेन दुर्बोधत्वाल्लघूपायेन भट्टमतप्रक्रियाज्ञापनार्थमेतत्प्रबन्धारम्भ इति भावः। **निखिलेति**। निखिलाः सकलाः ये पुमर्थाः पुरुषार्थाः धर्मार्थकाममोक्षाः, अनर्थाः नरकादयः तेषां साधने इत्यर्थः। "धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते। ज्ञानं कर्म च संयुक्तं मुक्त्यर्थं कल्पितं तथा॥" इति वचनादुत्तरोत्तरधर्मानुष्ठानं प्रति पूर्वपूर्वजन्मार्जितस्य धर्मस्य हेतुत्वात्। 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥' इत्यादिवचनाच्चेति भावः। तथा श्रुतावप्यर्थो धर्मसाध्य इति स्पष्टं प्रतीयते। 'ऋद्धिकामाः सत्रमासीरन्' 'यं कामयेत वसीयान् स्यात्' इत्यादिवचनैः। तथा कामोऽपि पुत्रादिः वृष्ट्यादिश्च। 'पुत्रकामः पुत्रेष्ट्या यजेत' 'वृष्टिकामः कारीर्या यजेत' 'चित्रया यजेत पशुकामः' इत्यादिवचनैः। तथा मोक्षोऽपि 'ब्रह्मसायुज्यकामो विश्वसृजामयनेन यजेत' इत्यादिवचनैः। यद्यपि 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिभिः ज्ञानैकसाध्यो मोक्षः; तथापि विविदिषावाक्येन सर्वकर्मणां ज्ञानोत्पत्तौ विनियोगात् ज्ञानोत्पत्तिद्वारा मोक्षप्रयोजकत्वसत्त्वान्नानुपपत्तिः। 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इत्युत्तरमीमांसाधिकरणन्यायादिति भावः। **साङ्गेति**। चत्वारो वेदाः प्रधानानि। 'शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा। कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः॥' इति वचनोक्तानि षडङ्गानि। 'स्मृतयश्च पुराणानि मीमांसा न्याय एव च' इति चत्वार्युपाङ्गा-

**तच्च विचारमन्तरेण न भाव्यायालमिति तत्प्रदर्शनाय परमकारुणिको भगवान् जैमिनिराचार्यः सकलविद्योपकारिधर्ममीमांसां 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'विद्यते वाऽन्यकालत्वात् यथा याज्यासम्प्रैषः' इत्यन्तैस्सूत्रैः बह्वधिकरणगर्भितां षोडशलक्षणीं अभ्यर्हितां विद्यां प्रकटीचकार। अधिकरणं तु वेदवत् षडङ्गम्। यदाहुः—**

---

नीति चतुर्दशसंख्याकानि द्रष्टव्यानि। **वेदाध्ययनैकसमधिगम्याविति**— अधीतवेदैकसमधिगम्यावित्यर्थः। धर्माधर्मयोरतीन्द्रियतया चक्षुरादिलौकिकप्रमाणाप्रवृत्तेरिति भावः। **तच्च**—गुरूच्चारणानूच्चारणरूपमध्ययनं च। **विचारं**—मीमांसाशास्त्रसिद्धान्तज्ञानम्। **अन्तरेण**—विना। **न भाव्यायालं**—भाव्यं भावयितुं नालमसमर्थम्। धर्माधर्मरूपवेदार्थज्ञानजननासमर्थमिति यावत्। तत्प्रदर्शनाय प्रकटीचकारेत्यग्रेणान्वयः। वेदार्थज्ञानोत्पत्तिद्वारा धर्माधर्मज्ञानमुत्पद्यत इत्यभिप्रायेणेदम्। "चतुर्दशानां विद्यानां धारणं हि यथार्थतः। विज्ञानमिति तद्विद्धि तेन धर्मो विवर्धते" इति कूर्मवचनादयमर्थः स्पष्टं प्रतीयत इति भावः॥ **सकलेति**। सकलमखण्डं परिपूर्णं ब्रह्मेत्यर्थः। तस्य विद्या ब्रह्मज्ञानम्। **तदुपकारिधर्ममीमांसाम्**—तदुपजीव्यधर्ममीमांसामित्यर्थः। उत्तरमीमांसासूत्रेषु "औपसदवत्तदुक्तम्। प्रदानवदेव तदुक्तं" इत्यादिषु पूर्वतन्त्रोपजीवकतायाः स्पष्टत्वादिति भावः। एवं सकलविद्योपकारीत्यनेन साङ्ख्ययोगन्यायालङ्कारगान्धर्वधर्मशास्त्रादिसर्वशास्त्राणां वेदार्थविचाररूपमीमांसाशास्त्रमूलकत्वमपि ध्वनितम्। तथाहि—"अजामेकां लोहितशुक्लकृष्णाम्" इति प्रतिपादितप्रकृतिपुरुषविवेकस्य साङ्ख्यशास्त्रसिद्धतया वेदार्थविचारेण साङ्ख्यशास्त्रज्ञानसम्भवात्। तथा "शतं चैका च हृदयस्य नाड्यः।", "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति उक्तयोगस्य वेदार्थविचाररूपत्वात्। एवं षोडशपदार्थानां न्यायशास्त्रसिद्धानां प्रमाणप्रमेयेत्यादिसूत्रोक्तानां वेदार्थविचारेण प्रतीतिः स्फुटा। तत्र स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयमित्युक्त्या प्रमाणानां प्रतीतिः। स्मृतिः—अतिदेशवाक्यार्थस्मृतिः। तेनोपमानप्रमाणमुक्तं भवति। प्रत्यक्षं—प्रसिद्धम्। ऐतिह्यं—शब्दः। अनुमानः—अनुमानमित्यर्थः। लिङ्गव्यत्ययः छान्दसः। तथा च दशविधप्रमेयानामपि आत्मशरीरेन्द्रियादीनां 'आत्मानं रथिनं विद्धि शरीरं रथमेव च' इत्यादौ प्रतीतिः स्फुटा। एवं संशयादीनामपि 'होतव्यमग्निहोत्रं न होतव्यं' इत्यादिश्रुत्या प्रसिद्धिर्द्रष्टव्येत्यस्मत्कृततर्कसंग्रहव्याख्याने विस्तरः। एवमलङ्कारशास्त्रप्रतिपाद्यनवरसानां 'रसो वै सः, रसं ह्येवायं लब्ध्वानन्दीभवति' इत्यादिश्रुतिभिः, 'योषा जारमिव प्रियम्' इत्यादिभिश्चालङ्काराणां प्रतिपादनाद्वेदार्थज्ञानमूलकत्वं स्पष्टम्। एवं गान्धर्वशास्त्रप्रसिद्धषड्जादिस्वराणां "षड्जं मयूरो वदति" इत्यादिशिक्षोक्तरीत्या सामवेदार्थज्ञानपूर्वकत्वं प्रतीयते। एवमन्येषामपि धर्मशास्त्रप्रभृतीनां वेदमूलकत्वं द्रष्टव्यमिति संक्षेपः। **अभ्यर्हितामिति**। यद्यपि 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्यभि-

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः ॥ इति ॥

सङ्गतिस्तु प्रसङ्गादिभेदात् बहुविधा । तत्रेदमाद्यमधिकरणम्—

(१)—अथातो धर्मजिज्ञासा ॥ १ ॥

अत्र 'स्वाध्यायोऽध्येतव्यः' * इत्यध्ययनविधिवाक्यं विषयः । वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्यो वा न वेति सन्देहः ।

---

युक्तोक्त्या न्यायस्यापि सर्वशास्त्रोपकारकत्वं प्रतीयते ; तथापि 'सात्त्विकं तत्र वेदान्तं मीमांसा राजसं स्मृतम् । तामसं न्यायशास्त्रं तु हेतुवादाभियन्त्रितम् ॥ यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥' इति वचनादभ्यर्हितत्वमित्याशयः । **विषय इत्यादि** । विषयत्वं सिद्धान्तितार्थतात्पर्यकत्वं विषयवाक्यानां बोध्यम् । विशयः--संशयः। पूर्वपक्षः--सिद्धान्तानिरसनीयः प्रथमोपपादनीयः पक्षः। उत्तरं---सिद्धान्तः । प्रयोजनम्--अनुष्ठानभेदः । पञ्चाङ्गमिति प्रामादिकः पाठः । प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणमित्येव पाठः । तेन न षडङ्गमिति पूर्वग्रन्थविरोधः । **प्रसङ्गादीति** । आदिना आक्षेपादिसङ्ग्रहः। पूर्वसिद्धान्ताक्षेपेणोत्तरप्रवृत्तावाक्षेपिकी संगतिः । पूर्वन्यायपरित्यागे प्रत्युदाहरणसंगतिः । उपस्थितस्य उपेक्षानर्हत्वं प्रसंगसंगतिः । उपस्थितविषयनिष्ठोपेक्षानर्हतावच्छेदकधर्मवत्त्वं प्रसङ्ग इति यावत् । अधिकाशङ्कानिराकरणार्थं पूर्वन्यायातिदेशः आतिदेशिकी संगतिः । पूर्वसिद्धान्तं पूर्वपक्षीकृत्य यत्रोत्तरसिद्धान्तप्रवृत्तिः तत्रापवादिकी सङ्गतिः । प्रकृतसिद्ध्यर्थचिन्ता उपोद्घातसङ्गतिः। प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्ताववश्यवक्तव्यत्वमवसरः। पूर्वसिद्धान्तमुपजीव्योत्तरप्रवृत्तावुपजीव्योपजीवकभावसङ्गतिरिति पूर्वाचार्योक्तरीत्येत्यर्थः । एवमेककार्यकारित्वादयोऽपि तन्त्रान्तरप्रसिद्धा द्रष्टव्याः । उक्तसङ्गतयोऽनन्तरसंगतिभेदाः । सामान्यसंगतित्रयं सर्वत्रापेक्षितम् । तद्यथा---शास्त्रसंगतिः, अध्यायसंगतिः, पादसंगतिश्चेति । धर्मविचाररूपत्वे शास्त्रसंगतिः । अध्यायार्थनिरूपणरूपत्वेऽध्यायसंगतिः । पादार्थविचाररूपत्वे पादसंगतिरित्यग्रे व्यक्तम् । **तत्र**---वक्ष्यमाणशास्त्रे । घटकत्वं सप्तम्यर्थः । **आद्यमधिकरणमिति**---प्रथमविचार इत्यर्थः । **अथातो धर्मजिज्ञासा** । **अत्र**---अधिकरणे । **अध्ययनविधिवाक्यमिति** -स्वाध्यायोद्देशेनाध्ययनविधायकं वाक्यमित्यर्थः । विषयमुक्त्वा विशयं दर्शयति---**वेदाध्ययनानन्तरमिति** ॥ वेदार्थविचारः कर्तव्यो न वेति सन्देहोक्तेरेककोटिक एव सर्वत्राधिकरणार्थसंशय इति न भ्रमितव्यम्। बहुकोटिकानामपि संशयानां पूर्वोत्तरमीमांसयोर्दृश्यमानत्वादिति द्रष्टव्यम् । वेदाध्ययनानन्तरमित्यनेन सूत्रस्थाथशब्दार्थस्सूचितः । कर्तव्यो

---

* तैत्तिरीयारण्यकम् २. १५.

तत्र पूर्वः पक्षः—'अधीत्य स्नायात्' इति स्मृत्याऽध्ययनानन्तरमेव गुरुकुलात्परावर्तनविधानविरोधात् न कर्तव्यः। न चाध्ययनविधित एव अर्थज्ञानभाव्यकत्वावगमात् तत्सिद्धिः। अर्थज्ञानजनकत्वेन अध्ययनस्य लोकसिद्धत्वेन अविधेयत्वात्। तन्नियमस्य च अर्थज्ञाने अनुपयोगात्, अव्यभिचरितक्रतुसम्बन्धाभावेन क्रतुं यावदुपयोगकल्पनानुपपत्तेश्च न विधेयत्वम्। अतः स्वर्गाद्यर्थमेव अध्ययनं विधीयते। लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा। अध्ययनमेव वा भावनाभाव्यमस्तु।

---

न वेति सन्देहकरणात् जिज्ञासापदेन वाक्यलक्षणया विचारो लक्ष्यत इति सूचितम्॥ **पूर्वः पक्ष इति**॥ क्रियत इति शेषः। तमेवोपपादयति—**अधीत्येति**॥ नन्वधीत्य स्नायादित्यनेन विधीयमानं स्नानं वार्तिकरीत्या ब्रह्मचर्यनियमसमाप्तिर्वा, धर्मसूत्रोक्तरीत्या माणवकसंस्कारकर्मविशेषो वा, कर्कभाष्योक्तरीत्या गृहस्थाश्रमप्रतिपत्तिर्वा। सर्वथा तद्विचारेण विरुध्यत इत्यत आह—**गुरुकुलादिति**॥ तथाच स्नानशब्देन समावर्तनमेवोच्यते। तच्च गुरुकुलान्मा समावर्तिष्टेति ब्रह्मचारिधर्मविधानेन गुरुकुलापादानकपरावर्तनरूपमिति गुरुसापेक्षविचारविरोधीति भावः। ननु स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिनाऽधीतेन स्वाध्यायेन फलवदर्थज्ञानं सम्पादयेदित्यर्थपर्यवसितेन विचारस्यावश्यकत्वमिति शङ्कते—**नचेति**॥ न चाधीत्य स्नायादिति स्मृतिविरोध इति वाच्यं; प्रत्यक्षस्वाध्यायविधिविरोधेन स्मृतेः सर्ववेष्टनस्मृतिन्यायेन अप्रमाणत्वादिति भावः। **लोकसिद्धत्वेनेति**॥ अर्थवच्छब्दज्ञानमात्रस्य लोके स्वार्थशाब्दबोधं प्रति कारणतायाः क्लृप्तत्वेन तदंशे लोकप्राप्तानुवादमात्रत्वेन स्मृतिबाधकत्वासंभवात्; अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः। ननु वेदसमानार्थकलौकिकवाक्यस्यार्थज्ञाने पक्षप्राप्तत्वेन तन्निरासफलकत्वान्न विध्यानर्थक्यमित्यत आह—**तन्नियमस्य चेति**॥ वेदेनैवार्थज्ञानं संपादयेदिति नियमस्येत्यर्थः। **अनुपयोगादिति**॥ वेदवाक्यश्रवणेन लौकिकवाक्यश्रवणेन वा अर्थज्ञाने जायमाने नियमस्य प्रयोजनाभावादित्यर्थः। नन्वनारभ्याधीतत्वेनाध्ययनविधेः प्रकरणेन क्रतूपस्थित्यभावेऽपि पर्णतान्यायेन क्रतूपस्थित्या क्रतूपयोगोऽस्त्वित्यत आह—**अव्यभिचरितेति**॥ जुह्वादीनां क्रत्वैकान्त्यात् युक्तं पर्णतादीनां क्रत्वर्थत्वम्। अर्थज्ञानं तु अध्यापनद्वारा द्रव्यार्जनसाधनत्वेनापि दृष्टमिति क्रत्वैकान्त्याभावान्न क्रत्वपूर्वोपयोगीति भावः। नन्वर्थज्ञानजनकत्वस्य लोकसिद्धत्वेऽपि तन्नियमस्यादृष्टार्थत्वमस्तु दृष्टार्थभोजनाश्रितप्राङ्मुखत्वादिनियमवदित्यत आह—**अत इति**॥ आर्थिकनियमस्यादृष्टार्थत्वकल्पनापेक्षया श्रुताध्ययनस्यैवादृष्टार्थत्वस्योचितत्वात्स्वर्गाद्यर्थमेवाध्ययनं विधीयत इति युक्तं विश्वजिन्न्यायादिति भावः। ननु स्वर्गकामपदाध्याहारापत्तेर्न स्वर्गार्थत्वं युक्तम्। किंच दृष्टे संभवत्यदृष्टकल्पनासम्भवादपि न स्वर्गार्थत्वसम्भव इत्यत आह—**यथाश्रुतार्थज्ञानार्थमिति**॥ अध्ययनं विधीयत इति पूर्वेणान्वयः। लोकतः पूर्वं वेदप्रवृत्तेरिति तत्र

न चैवमिष्टभाव्यकत्वाभावात् प्रवृत्त्यनुपपत्तिः । 'अनधीयाना व्रात्या भवन्ति' इति वचनेन अकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः । तस्मान्नार्थविचारार्थं गुरुकुलेऽवस्थानमिति ॥

सिद्धान्तस्तु— न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते । दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् । नापि यथाश्रुतार्थज्ञानार्थम् । तथात्वे व्रात्यताबोधकवाक्येन अध्ययनस्यावश्यकत्वात् गृहीतपदपदार्थसङ्गतिकस्य

'स्थाणुरयं भारहारः किलाभूत्
अधीत्य वेदं न विजानाति योऽर्थम्'

इत्यादिवचनाच्च ज्ञानस्याप्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्य आनुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेन--अध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं तव्यप्रत्ययेन

---

हेतुः । अर्थज्ञानस्य कल्पितविधिगम्यत्वेन तदपेक्षयापि लाघवादाह——**अध्ययनमेव वेति** ॥ स्वाध्याय इति प्रथमया करणत्वं लक्षयित्वा सक्तुन्यायेन स्वाध्यायेनाध्ययनं भावयेदिति वाक्यार्थाङ्गीकारान्न विध्यन्तरकल्पनमिति लाघवमित्यर्थः । व्रात्यताबोधकवाक्येनाध्ययनस्य प्राप्तत्वान्न भावार्थाधिकरणन्यायेन विधेयत्वमिति भावः । नन्वेवमध्ययनस्य सुखदुःखनिवृत्त्यन्यतररूपत्वाभावेन पुरुषार्थरूपत्वाभावात्कस्यापि स्वाध्यायाध्ययने प्रवृत्तिर्न स्यादिति शङ्कते——**न चैवमिति** ॥ अनधीयाना इति अकरणे प्रत्यवायश्रवणेनैव प्रवृत्त्युपपत्तेर्नाध्ययने इष्टत्वज्ञानापेक्षेत्यर्थः । 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥' इति वचनाच्चेति भावः । पूर्वपक्षमुपसंहरति——**तस्मादिति** ॥ ततश्चार्थविचारस्यानावश्यकतया तदर्थं गुरुकुलावस्थानाप्रसक्तेर्वेदग्रहणानन्तरमेव समावर्तनमिति पूर्वपक्ष इत्यर्थः । तथा च वेदार्थस्य विचार्यत्वाभावाच्छास्त्रमनारम्भणीयमिति भावः ॥ **स्थाणुरिति** ॥ ज्ञानशून्य इत्यर्थः । 'यथा पशुर्भारवाही न तस्य लभते फलम्' 'यथा खरश्चन्दनभारवाही भारस्य वेत्ता नतु चन्दनस्य' इत्युपबृंहणात् । आदिपदेन, "वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चापि यत् । अजानतोऽर्थं तत्सर्वं तुषाणां खण्डनं यथा ॥ पाठमात्ररतान्नित्यं द्विजातींश्चार्थवर्जितान् । पशूनिव च तान् प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥" इत्यादिपरिग्रहः॥ **वैयर्थ्यप्रसङ्गादिति** ॥ स्वाध्यायग्रहणस्य यथाश्रुतार्थज्ञानस्य च प्रकारान्तरेणावश्यकर्तव्यत्वेन स्वाध्यायविधेस्तत्रोपयोगाभावादित्यर्थः । **एतेन**——स्वाध्यायाध्ययनार्थज्ञानयोः प्रकारान्तरेण सिद्धत्वेन । **प्रयोजनेति** ॥ क्वचिद्यथाश्रुतार्थज्ञानं, क्वचिल्लक्षणाध्याहारविपरिणामव्यवधारणादिलभ्यार्थज्ञानादि, साम्नामृगक्षराभिव्यक्तिः, स्तोभानां गीतिकालपरिपूरणं, मन्त्रब्राह्मणक्रमस्यानुष्ठा-

**लक्षणया विधीयते । प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमा-**

नक्रमः, विधिगतदेवतावाचिपदस्य त्यागवाक्यघटकत्वनियम इत्यादिप्रयोजनम् । तदुक्तं न्यायरत्नमालायाम्, 'न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम् । दृष्टं यच्छक्यते कर्तुं तत्सर्वं फलमिष्यते ॥' इति । न चैवमुद्देश्यानेकत्वाद्वाक्यभेद इति वाच्यम् । उद्देश्यानामश्रुतत्वेन सर्वानुगमकधर्मप्रवृत्तिनिमित्तकस्यैव पदस्याध्याहर्तव्यतया एकपदेनोद्देशेन सर्वेभ्यः कामेभ्य इतिवद्वाक्यभेदादिति भावः । **स्वाध्यायाध्ययनं**—स्वशाखाप्रापकोच्चारणकरणकभावना । **विधीयते**—तव्यप्रत्ययार्थैकदेशप्रवर्तनाविषयीक्रियते । "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति स्मृत्या तव्यप्रत्ययस्य कृत्यप्रत्ययत्वेन प्रैषे शक्तावपि प्राप्तार्थविषयकप्रवर्तनारूपप्रैषस्य प्रकृते अप्राप्तार्थे बाधात् प्रवर्तनाविषयप्रवृत्तिलक्षणया निर्वाह इत्याह—**लक्षणयेति** ॥ उक्तं चाचार्यैः 'प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते । अप्राप्ते प्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥' इति । उपपदार्थस्य स्वाध्यायस्य तु न भावनाकर्मत्वम् । अपितु धात्वर्थेन भावनाभाव्ये जननीये द्वारत्वेनापेक्षिततया धात्वर्थीयप्राप्यकर्मत्वम् । अत एव सक्तुन्यायेन धात्वर्थ एव गुणत्वेनान्वयः। "पार्वणौ होमौ जुहोति" इत्यत्र पर्वपदोक्तयागानां होमसंस्कार्यत्वेऽपि देवतात्वेन गुणत्वस्यापि सत्त्वेन पर्वदेवत्यहोमाभ्यामिष्टं भावयेदितिवत्स्वाध्यायवदध्ययनेन वेदसाध्यदृष्टफलजातं भावयेदिति वचनव्यक्त्याऽध्ययनस्य गुणकर्मत्वमुपादेयगतत्वात्स्वाध्यायैकत्वविवक्षापि वक्ष्यमाणोपपद्यत इति तान्त्रिकानुमतः पन्थाः । नन्वध्ययनस्यार्थज्ञानभाव्यकत्वे वाजपेयवाक्य इव विरुद्धत्रिकद्वयापत्तिः । अतः स्वाध्यायपदस्य वाजपेयन्यायेन नामधेयत्वं स्यात् । मध्यान्नीचादुच्चेत्यादिवाक्ये दकारनकारयोः इषे त्वोर्जे त्वेत्यादौ प्रथमत्वोपपदस्थानुदात्तस्वरस्य संहिताकाल एव लब्धस्वरूपाणामन्येषामप्येवंजातीयकानां बहूनां अर्थज्ञाने उपयोगाभावेनादृष्टार्थतया वैरूप्यं स्यात्; अतस्तत्परिहाराय धातोः पदाध्ययनमात्रपरत्वापत्त्या संहिताध्ययनोच्छेदापत्तिश्च इत्यत आह—**प्रयोजनवदिति** ॥ **स्वाध्यायोद्देशेनेति** ॥ अयमर्थः । अध्ययनेन स्वाध्यायं भावयेदित्येव प्रकृतविधेरर्थः । अर्थज्ञानार्थत्वं तु स्वाध्यायस्य वचनान्तरात् भवति । "षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति महाभाष्ये विध्यन्तरदर्शनात्, स्थाणुरयमित्यादिश्रुतेश्च । अत एव स्वाध्यायस्यार्थज्ञानार्थता तु लिङ्गकल्प्यश्रुतित एव भविष्यतीति केषांचित् उक्तिरनादरणीया क्लृप्तश्रुतेरेव सत्त्वात् । जपपारायणादिषु विनियोजकप्रत्यक्षविधिभिरेव विनियोगाकाङ्क्षाशान्त्या श्रुतिकल्पनानवकाशाच्च । अत एव "पुरोहितं वृणीत" इत्यत्र वृतेन पुरोहितेनेष्टं भावयेदितिवदधीतेन स्वाध्यायेनेत्यर्थवर्णनं संगतमपि विशेषणविधिकल्पकं सत् विधिद्वयपर्यवसाय्येवेति द्रष्टव्यम् । एवं च प्रकृतविधौ स्वाध्यायावाप्तेरेवोद्देश्यत्वान्न नामधेयत्वादिप्रसक्तिः। एवं अर्थज्ञानस्य कर्मसु विनियोजकवचनान्तरमपि दृश्यते । "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रवणात् । ततश्च स्वर्गादिजनककर्मोपयुक्तार्थज्ञानादिसाधनत्वस्य

त्रम् । तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च गुरूपसदनाध्ययना-

स्वाध्याये विशकलितैस्तैस्तैर्विधिभिरेव बोधनान्न कस्यापि विधेरपुरुषार्थभाव्यकत्वप्रसक्तिः । मूलेऽप्येतत्सूचनायैव प्रयोजनवदित्यादिविशेषणम् । एतेन स्वाध्यायपदस्य लक्षणामाश्रित्यार्थ-ज्ञानादीनां भाव्यतावच्छेदकादिकोटौ निवेशबोधनायैव तद्विशेषणमिति प्रत्युक्तम् । विधेः पुरुषार्थतदनुबन्ध्यन्यतरभाव्यकप्रवृत्तिविषयकत्वस्यैव नियतत्वात्तस्य स्वरूपसत एवोपयोगेन विधिवाक्यजन्यशाब्दबोधे तदन्यतरत्वस्य भाव्यतावच्छेदकतया विषयत्वनियमे प्रमाणाभावा-द्विधिस्वभावादेव तदाक्षेपादयोग्यतानिश्चयाभावेन शाब्दबोधे जाते अन्यलभ्यतत्प्रतीतये भाव्यवाचकपदे लक्षणाया अनुचितत्वाच्च । अनारभ्याधीतत्वेन प्रकरणाभावादव्यभिचरित-क्रतुसंबन्धाभावेन तत्प्रणाल्येतःपूर्वमनुपस्थितत्वाच्च । अत एव व्रीहीन् प्रोक्षतीत्यादौ इतः पूर्वमेव प्रकरणादिना तण्डुलनिष्पत्तिद्वारकापूर्वसाधनत्वस्योपस्थितत्वात् व्रीहिपदे लक्षणा । प्रत्युत क्रतूपकारार्थज्ञानजनकत्वस्य लक्षणया बोधे त्रयीसाध्यकर्मनिर्वाहाय वेदत्रयगतैकैकशाखाज्ञान-स्यावश्यकतया प्रोक्षणादिसंस्कार्यतायां यवसाधारण्यवदध्ययनप्राप्यतायाश्शाखान्तरसाधारण्या-पत्तिः । स्वशाखात्वविवक्षायां युगपद्वृत्तिद्वयविरोधापत्तिः । अतः स्वाध्यायत्वमात्रं भाव्यतावच्छे-दकमित्येव युक्तमिति दिक् ॥ **अध्ययनमात्रमिति** ॥ मात्रपदेन स्वाध्यायस्योपादेयकोटौ निवे-शव्यावृत्तिः । नन्वेवं तद्गतैकत्वविवक्षा न स्यादित्यत आह—**तव्येति** ॥ आख्यातजन्य-प्रतीतिविशेष्यव्यापाराश्रयपरिच्छेदद्वाराऽऽख्यातार्थसंख्यान्वयनियमात् कर्मार्थकतव्यप्रत्ययोक्तसं-ख्यायास्तदभिहितभावनाघटकप्रयोजकव्यापारोपसर्जनकप्रयोज्यव्यापारस्यैव विशेष्यत्वेन तदाश्र-यकर्मपरिच्छेदकत्वेन भावनान्वयाद्विवक्षोपपत्तिः। अत एव 'स्वर्गकामो यजेत' इति कर्त्रर्थकलकारे भावनाघटकप्रयोज्यव्यापारोपसर्जनकप्रयोजकव्यापारस्यैव विशेष्यतया भानात् तदाश्रयकर्तृ-परिच्छेदकत्वेन लकारोपात्तसंख्यायाः भावनान्वयादेकत्वविवक्षा । तेन स्वर्गकामपदेनाभि-धानकाल इव स्वाध्यायपदेनाभिधानवेलायां उद्देश्यविशेषणतया भानं एकत्वस्याऽप्रयोजकमेव । ननु स्वर्गकामविशेषणपुंस्त्वस्येव अध्ययनविशेषणस्वत्वस्याप्यविवक्षापत्तिरिति चेन्न ; स्वेति पदान्तरोपात्तात्मीयत्वस्य समासेन परस्परान्वयात् ; अश्वाभिधान्यामश्वीयत्वस्येव वैयर्थ्यपरिहा-राय विवक्षितत्वात् । ननु तद्विवक्षयैवेष्टसिद्धेरेकत्वविवक्षायाः प्रयोजनं नास्तीति चेन्न; ये कुलपरम्परयैव द्विवेदिनस्त्रिवेदिनो वा तेषामप्येकशाखाध्ययनं नित्यं, अन्यदभ्युदयार्थमैच्छिक-मिति द्योतनार्थत्वेन सार्थक्यात् । तेन वेदानधीत्य वेदौ वा वेदं वापि यथाक्रममिति स्मृते-रियमेव श्रुतिर्मूलमिति द्रष्टव्यम् ॥ **गुरूपसदनेति** ॥ 'अष्टवर्षं ब्राह्मणमुपनयीत' इति विधौ आचा-र्यकरणस्यात्मनेपदेन बोधनादष्टवर्षो ब्राह्मणो गुरुमुपगच्छेदित्यर्थः । तद्विज्ञानार्थं गुरुमभिग-च्छेदितिवत् प्रायेण बालानां प्रवृत्तेः अयमेवाध्ययनविधिः । स चाविशेषाच्चतुर्दशविद्यापर एव । 'स्वाध्यायोऽध्येतव्य' इत्यस्य त्वर्थवादवैचित्र्यार्थं पुनःपुनराम्नानादनन्यपरत्वाभावेनाभ्यासा-

क्षरावाप्तितदर्थज्ञानसाधनीभूतस्वाध्यायधर्मानुष्ठानपुत्रस्वर्गविविदिषासु उत्तरोत्तरस्य पूर्वपूर्वभाव्यतायाः श्रुत्यादिसिद्धत्वात् न यावदर्थज्ञानं गुरुकुलात्परावृत्तिः । अतः सिद्धोऽर्थविचारः । उक्तं च—"अतो नित्यः क्रतुविचारस्त्रैवर्णिकमात्रस्य" इति । स्मृतौ क्त्वाप्रत्ययस्तूत्तरकालमात्रपर इति ॥

उपोद्घातः सङ्गतिः । प्रयोजनं तु स्पष्टम् । वेदाध्ययनानन्तरं अर्थवि-

---

भावात्कर्मभेदाप्रसक्तेः; 'अथातः स्वाध्यायप्रशंसा' इत्युपक्रमाच्च स सर्वोऽपि ग्रन्थ एतस्यैव विधेरर्थवादः, यथासम्भवं फलाय पुनर्विधिः स्वस्वशाखोपसंहारकश्चेत्यपि बोध्यम् । पुत्रेत्यैहिकफलसामान्यस्योपलक्षणम्; स्वर्गेत्यामुष्मिकसामान्यस्य; विविदिषेति ब्रह्मज्ञानस्य अर्थभावनाभाव्यत्वेन सर्वेषामेकीकारः॥ **श्रुत्यादीति** ॥ **गुरूपसदनं**—उपनयनं, तेन **अध्ययनं**-गुरूच्चारणानूच्चारणरूपं, तेन **अक्षरावाप्तिः**—वेदाक्षरग्रहणं, तेन वेदार्थज्ञानं, तेन यागादिधर्मानुष्ठानं, तेन पुत्रादिदृष्टफलस्य स्वर्गाद्यामुष्मिकस्य विविदिषायाश्चोत्पत्तेः । पूर्वपूर्वस्योत्तरोत्तरं प्रति हेतुत्वं श्रुत्यादिप्रमाणसिद्धमित्यर्थः । आदिना सामर्थ्यात्मकलिङ्गपरिग्रहः । ननूत्तरोत्तरस्य पूर्वपूर्वभाव्यत्वे कथं तेषां करणत्वसम्भव इति चेन्न; विधिभेदेनोभयोपपत्तेः । 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति' इतिवत् । नच लिप्सासूत्रे फलेविधिर्नास्तीति आकरोक्तत्वात् एतेषां करणत्वेन विधाने तद्विरोध इति वाच्यम्; तस्यान्तिमभाव्यविविदिषापरत्वादितरेषां विधेयत्वे बाधकाभावात् । अत एव अर्थज्ञानस्य भाव्यत्वात् कृतिसाध्यात्वाभावाच्च न विधेयत्वसम्भव इति निरस्तम् । 'सूर्यं पश्येद्राहुं न पश्येत्' इति विधिनिषेधदर्शनाच्चेति भावः ॥ **उक्तं चेति** ॥ पुरुषार्थानुशासनप्रवृत्तसूत्रकारेणेति शेषः ॥ **अत इति** ॥ **अर्थविचारः**—स्वाध्यायार्थविचारः। स एव क्रतुविचारः त्रैवर्णिकानां नित्यः, तदभावे प्रत्यवायस्य श्रुतिसिद्धस्य पूर्वमेव उक्तत्वादित्यर्थः । नन्वध्ययनानन्तरमर्थविचारे क्रियमाणे 'अधीत्य स्नायात्' इति स्मृत्युक्ताध्ययनाव्यवहितोत्तरत्वं स्नाने विधीयमानं विरुध्येतेत्याशङ्कां परिहरति—**स्मृताविति** ॥ क्त्वाप्रत्ययस्योत्तरकालत्वमात्रमर्थः न त्वव्यवहितोत्तरकालत्वं, गौरवात् । भोजनानन्तरं निद्रां कृत्वा व्रजत्यपि पुरुषे भुक्त्वा व्रजतीति प्रयोगदर्शनाच्च । ततश्चाध्ययनानन्तरमर्थविचारं कृत्वा स्नाने कृतेऽपि न क्त्वाप्रत्ययविरोध इति मात्रचं प्रयुञ्जानस्याशयः। मुखं व्यादाय स्वपितीत्यादौ तु क्त्वाप्रत्ययो लाक्षणिक इति ध्येयम् । अस्य विचारस्य शास्त्रसङ्गतिमाह—**उपोद्घात इति** ॥ विचारकर्तव्यत्वे सिद्धे हि धर्मविचारात्मकशास्त्रप्रवृत्तिरिति प्रकृतशास्त्रसिद्ध्यर्थविचाररूपत्वात् । 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः' इति प्राचीनोक्तलक्षणसत्त्वादुपोद्घातसङ्गतिरित्यर्थः ॥ **प्रयोजनमिति** ॥ पूर्वपक्षे धर्मविचारो न कर्तव्यः; सिद्धान्ते कर्तव्य इति स्फुटमित्यर्थः । अनुबन्धचतुष्टयं सूत्र एव स्पष्टमित्यभिप्रायेण सूत्रार्थमाह—**वेदाध्ययनानन्तरमिति** ॥ सूत्रे अथशब्द आनन्तर्यार्थकः । मङ्गलमधिकारश्चार्थिकौ । अतश्शब्दो हेत्वर्थः । अध्ययनस्य

चारो धर्माधर्मज्ञानाय उपनीतैः कर्तव्यः सहकारित्वादिति सूत्रार्थवशादनुबन्धचतुष्कसिद्धिः। एवं प्रत्यधिकरणमङ्गान्युन्नेयानि ॥ १ ॥

## (२)—चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

विचिचारयिषितस्य धर्मस्यालौकिकत्वेन प्रत्यक्षविषयत्वायोगात् तन्मूलकस्यानुमानादेस्तत्र सुतरामप्रवृत्तेः अत एव[1] तल्लक्षणस्याप्यसम्भवान्न धर्मविचारो युक्त इति प्राप्ते—लौकिकप्रमाणानामप्रवृत्तावपि अलौकिकानामेकत्रिंशतस्तत्सहकृतविधेरेक-

वृत्तत्वाद्धेतोर्विचारस्य सहकारित्वाद्वा धर्मस्य वक्ष्यमाणलक्षणस्य जिज्ञासा विचारः कर्तव्य इति शेषः इति सूत्रार्थ इति भावः। पार्थसारथिस्तु अथातो धर्मजिज्ञासेति सूत्रस्य आवृत्तिमङ्गीकृत्याकारार्थप्रश्लेषेणाधर्मजिज्ञासेति च्छेदं कृत्वा परिहारायाऽधर्मोऽपि विचारयितव्य इति सूत्रार्थमाह। अत एव मूलेऽपि प्रथमफक्किकायां निखिलपुमर्थानर्थसाधनौ धर्माधर्मौ वेदाध्ययनसमधिगम्यावित्युक्तम्। धर्मशब्दश्च प्रमाणादीनामप्युपलक्षकः। अत एवार्थवादाधिकरणे पार्थसारथिः प्रमाणस्वरूपसाधनफलैस्साभासैर्धर्मो जिज्ञास्यत्वेन प्रतिज्ञात इति वक्ष्यति ॥ **अनुबन्धेति** ॥ अत्र शास्त्रे धर्मादिर्विषयः, तदवबोधः प्रयोजनं, त्रैवर्णिकोऽधिकारी, विषयविषयिभावादयः सम्बन्धा इति सूत्र एव सूचितमित्यर्थः। अत्र केचित् जिज्ञासासूत्रे नैव कश्चिन्न्यायो वर्ण्यते, नवमे साम्नामृगक्षराभिव्यक्तिद्वारा दृष्टार्थत्वस्य साधयिष्यमाणत्वेन तेनैव न्यायेनाध्ययनस्य दृष्टार्थत्वसिद्धेः। अतस्तत्र सिद्धस्यैवात्रोपोद्घातार्थमनुवाद इत्याहुः। वस्तुतस्तु अत्रैव दृष्टे सम्भवतीति न्यायो व्युत्पाद्यत इति मन्त्राधिकरणे वक्ष्यते इति शिवम् ॥

**चोदनालक्षणोऽर्थो धर्मः** ॥ प्रथमं तावत् को धर्मः, कथंलक्षणकः इत्येतद्द्वयमनेन श्रुत्यर्थाभ्यां सूत्रेण निरूप्यते। यो धर्मः स चोदनालक्षणः, चोदनैव तस्य लक्षणं प्रमाणं, चोदना च तस्य लक्षणमेवेति श्रुत्या प्रमाणविधौ अर्थात् चोदनागम्य एवाग्निहोत्रादिर्धर्मो नातल्लक्षणश्चेत्येवं दानादिर्धर्म इति स्वरूपमपि सिध्यति। तथा यः चोदनालक्षणः स धर्म इति स्वरूपविधावर्थात् प्रमाणसिद्धिरिति सूत्राशयः। धर्मो विचार्य इत्युक्तम्। तत्प्रकारमेवाह—**विचिचारयिषितस्येति** ॥ धर्माधर्मयोः प्रमाणमस्ति न वेति सन्दिह्य पूर्वपक्षमाह— **अलौकिकत्वेनेति** ॥ प्रत्यक्षप्रमाणागम्यत्वेनेत्यर्थः। धर्माधर्मयोरतीन्द्रियत्वादिति भावः। **तन्मूलकस्य**—व्याप्तिप्रत्यक्षादिमूलकस्य। **अत एव**—मेयसिद्धेर्मानाधीनत्वादेव। **तल्लक्षणस्येति** ॥ धर्मस्वरूपलक्षणस्येत्यर्थः। प्रमाणाभावेन धर्मस्वरूपासिद्धौ कस्य लक्षणं वक्तव्यमित्यर्थः। तथाच धर्माधर्मयोः प्रमाणाभावान्न विचार्यत्वमित्याक्षेपिकी सङ्गतिरिति द्रष्टव्यम्। धर्माधर्मयोरलौकिकत्वेनातीन्द्रियतया चक्षुरादिप्रमाणाप्रसक्तावपि वेद एव धर्माधर्मयोः प्रमाणमित्याशयेन सिद्धान्तमाह—**लौकिकेति** ॥ **एकत्रिंशत इति** ॥ प्रमाणत्वसम्भवादित्यग्रेणान्वयः। विध्यर्थवादमन्त्र-

[1] लक्षणस्य इति पाठान्तरम्।

**स्यैव वा प्रमाणत्वसम्भवात् अप्रामाण्यस्य परतस्त्वेऽपि प्रामाण्यस्य स्वतस्त्वात् सप्रमाणक एव धर्मः ।**

---

नामधेयस्मृतिशिष्टाचाराः शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तराणि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याः श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तयः षट् वचननामलिङ्गानि त्रीणि स्थानापत्तिरेका प्रत्याम्नानप्रतिषेधार्थलोपास्त्रय इति संख्यासंपत्तिर्द्रष्टव्या । नच श्रुतिनामादीनां पुनःपुनर्ग्रहणान्न संख्यासंपत्तिरिति वाच्यम्; प्रमेयभेदेन तत्प्रमेयविशिष्टश्रुत्यादेर्विशेषणभेदेन भेदोपपत्तेः। ननु चोदनालक्षणोऽर्थो धर्म इति सूत्रानुसारेण विधेरेव धर्मप्रमाणत्वस्य सूत्रकारानुमतत्वप्रतीतेः कथमेतेषां धर्मप्रमाणत्वम्? लिङ्गादीनां श्रुतिकल्पकतया प्रामाण्यस्य वक्ष्यमाणतया तस्या एव धर्माधर्मयोः प्रामाण्यं युक्तं, न त्वेकत्रिंशत इत्याह—**तत्सहकृतेति** ॥ उक्तश्रुत्यादिसहकृतेत्यर्थः । तथाचालोकसंयोगमहत्त्वोद्भूतरूपादीनां चक्षुस्सहकारित्वमिव श्रुत्यादीनां चोदनासहकारित्वात्तत्सहकृतविधिरेव धर्माधर्मयोः प्रमाणमित्यर्थः। ननु चोदनानां प्रामाण्यस्य तद्वति तत्प्रकारकज्ञानजनकत्वरूपस्य समर्थप्रवृत्तिजनकत्वरूपहेतुज्ञानाधीनतया हेतौ दोषसन्देहेनानुमितावप्रामाण्यसंशयसम्भवात्कथं चोदनया धर्मप्रमितिरित्यत आह—**अप्रामाण्यस्येति** ॥ अयमाशयः। शब्देन चक्षुरादिना वा जायमानं ज्ञानं प्रमात्मकमेव जायते। प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वाङ्गीकारात्। अप्रामाण्यं तु परत एवोत्पद्यते ज्ञायते च। भ्रमस्य दोषजन्यत्वाङ्गीकाराद्विसंवादिप्रवृत्तिजनकत्वरूपहेतुजन्यत्वाङ्गीकाराच्च। तस्माच्चोदनैव धर्माधर्मयोः प्रमाणमित्यर्थः। **अप्रामाण्यस्य** भ्रमत्वस्य **परतस्त्वेऽपि** ज्ञानसामान्यकारणभिन्नदोषादिरूपहेतुजन्यत्वेऽपि, ज्ञानकारणसामान्यसामग्रीभिन्नदोषजन्यज्ञाननिष्ठत्वेऽपीति यावत्। ज्ञप्तौ परतस्त्वं च ज्ञानग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वम्। तच्च विसंवादिप्रवृत्तिजनकत्वरूपलिङ्गजन्यत्वाद्युक्तमेव। प्रामाण्यस्य प्रमात्वस्य स्वतस्त्वात् ज्ञानसामान्यसामग्रीजन्यत्वात् ज्ञानकारणसामान्यसामग्रीजन्यज्ञाननिष्ठत्वात् ज्ञानग्राहकसामग्रीग्राह्यत्वाच्चोत्पत्तौ ज्ञप्तौ च स्वतस्त्वमित्यर्थः। अत्र केचित् प्रामाण्यस्य स्वतस्त्वे अनभ्यासदशायां प्रथमोत्पन्नजलादिज्ञाने प्रामाण्यसंशयो न स्यात्, तत्र प्रथमोत्पन्नज्ञानस्य ज्ञातत्वे प्रामाण्यस्यापि ज्ञातत्वात्संशयानुपपत्तिः। प्रथमज्ञानस्याज्ञातत्वे धर्मिज्ञानाभावात्संशयानुपपत्तिस्तदवस्थैवेति न प्रामाण्यस्य स्वतस्त्वं सम्भवतीत्याहुः। तच्चिन्त्यम्। प्रामाण्यस्य स्वतस्त्वेऽपि प्रथमोत्पन्नज्ञाने दुष्टकारणजन्यत्वसंशयेन प्रामाण्यसंशयोपपत्तेः। दृश्यते हि रजत एवेदं रजतमिति प्रयोगानन्तरं किमेवं वदसि? सम्यग्विमृश्य पश्येत्यादि विशेषदर्शिनां वाक्यम्। तस्मादवधारणात्मकज्ञानानन्तरमेव संशयानुत्पत्तिः। नहि वयं ज्ञानग्राहकसामग्र्या प्रामाण्यमवधार्यत इति ब्रूमः; किन्तु ज्ञायत इत्येव। ततश्चानवधारणात्मकज्ञानस्य संशयाविरोधितया न संशयानुपपत्तिः। अवधारणत्वं चावधारयामीत्यनुव्यवसायसिद्धविषयताविशेष इति न काचिदनुपपत्तिः। किंच प्रामाण्यस्य परतस्त्वमसं-

अत एव—वेदैकज्ञाप्येष्टानिष्टसाधनताकत्वे धर्माधर्मत्वे; तथात्वे सति बलव-

भवदुक्तिकमपि। तथाहि—समर्थप्रवृत्तिजनकत्वहेतुना प्रामाण्यमनुमीयत इति हि परे वदन्ति। नच तत्सम्भवति, प्रथमज्ञानप्रामाण्यानुमापकहेतुज्ञानादिप्रामाण्यस्यापि परतो ग्राह्यतया तत्रापि हेत्वन्तरापेक्षायामनवस्थापत्तेः। नहि सन्दिग्धप्रामाण्यकहेतुज्ञानादिना प्रथमज्ञानप्रामाण्यं सिद्ध्यति; अप्रामाण्यज्ञानानास्कन्दितहेत्वादिज्ञानस्यैवानुमितिजनकत्वात्, प्रामाण्यसंशयस्य प्रामाण्याप्रामाण्योभयप्रकारकत्वेनाप्रामाण्यज्ञानरूपत्वात्। नचाप्रामाण्यस्य तदभाववति तत्प्रकारकत्वरूपत्वेन प्रामाण्यसंशयस्य च तद्वतितत्प्रकारकत्वरूपप्रामाण्यतदभावोभयप्रकारकत्वेन पूर्वोक्ताप्रामाण्याप्रकारकत्वात्प्रामाण्यसंशयकालेऽपि अप्रामाण्यज्ञानानास्कन्दितहेतुज्ञानादिकं भवत्येवेति वाच्यं; अप्रामाण्यज्ञानानास्कन्दितेत्यत्र अप्रामाण्यपदेन प्रामाण्याभावस्याप्युपलक्षणीयत्वात्। अन्यथा हेतुज्ञानादौ प्रामाण्याभावज्ञानकालेऽप्यनुमित्यापत्तेः। एवं प्रामाण्यस्य अनुमेयत्वेऽनुमितिप्रामाण्यस्याप्यनुमेयत्वेन तत्रापि अनुमित्यन्तरापत्त्या पूर्ववदनुमित्यनवस्थापत्तिर्दुर्वारा। तस्मात् प्रामाण्यस्य स्वतस्त्वमेव युक्तम्। नचैवमप्रामाण्यस्यापि स्वतस्त्वं किं न स्यादिति वाच्यं; तथा सति सर्वेषां ज्ञानानामप्रामाण्यापत्त्या सर्वसिद्धान्तासिद्धिप्रसङ्गेन सर्वशास्त्रोल्लङ्घनापत्तेरिति प्रामाण्यस्यैव स्वतस्त्वसिद्धिः। ततश्च विधिजन्यज्ञानमेव धर्मे प्रमाणमिति धर्मः सप्रमाण एवेत्यर्थः। धर्माधर्मयोर्लक्षणमाह—वेदेति॥ एकशब्दः केवलार्थकः। ततश्च वेदमात्रजन्यज्ञानविषयीभूतेष्टसाधनताकत्वं धर्मत्वं, तज्जन्यज्ञानविषयीभूतानिष्टसाधनताकत्वमधर्मत्वमित्यर्थः। स्वर्गादिसाधनेऽग्निहोत्रादौ, इन्द्रियादिसाधने दध्यादौ, वृष्टिसाधने सदोमानगतनीचैस्त्वे, ब्रह्मवर्चसफलके उपनयनाश्रितपञ्चवर्षरूपे काले च वेदबोध्येष्टसाधनतासत्त्वाल्लक्षणसमन्वयः। "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिविधिभिस्तदिष्टसाधनताबोधनात्। ननु कलञ्जभक्षणादावनिष्टसाधनताबोधकश्रुत्यभावाद्वेदबोधितानिष्टसाधनताकत्वरूपाधर्मलक्षणस्याव्याप्तिरिति चेन्न; वेदप्रयोज्यानुमितिविषयानिष्टसाधनत्वस्य तत्रापि सत्त्वेन लक्षणसमन्वयसम्भवात्। अनुमानप्रकारो हिरण्यकेशिसूत्रव्याख्याने विस्तरेण प्रतिपादितोऽस्माभिः। वेदैकगम्यस्वर्गनरकयोरतिव्याप्तिवारणाय तादृशेष्टानिष्टसाधनताकत्व इति। अन्नविषभक्षणयोरतिव्याप्तिवारणाय वेदैकज्ञाप्येति। तत्त्वं च वेदेतराप्रमितत्वे सति वेदप्रमितत्वम्। अग्नौ समुद्रजलपाने चातिव्याप्तिवारणाय सत्यन्तम्। तयोः "अग्निर्हिमस्य भेषजं" "समुद्रस्य न पिबति" इति वचनाभ्यामिष्टानिष्टसाधनत्वबोधनेऽपि लोकेनापि प्रमितत्वात्। वेदेतरपदेन वेदानुपजीविप्रमाणग्रहणात्स्मार्तविधिनिषेधविषययोर्नाव्याप्तिः। वेदत्वं चापौरुषेयवाक्यत्वं, न तु मन्त्रब्राह्मणान्यतरत्वम्। अनाम्नातेष्वमन्त्रत्वमित्यत्र कल्पितविधेरुक्तान्यतरत्वाभावोक्तेः। अतो "धन्वन्निव प्रपा असि" इति मन्त्रलिङ्गकल्प्तेन "मरौ प्रपां दद्यात्" इति विधिना बोध्येष्टसाधनताके प्रपादाने नाव्याप्तिः। इष्टसाधनत्वं च तत्तदिष्टनिरूपितासाधारणका-

**दनिष्टाननुबन्धित्वं वा धर्मलक्षणम् । बलवदनिष्टाननुबन्धित्वे सति यददृष्टद्वारा फल-करणं अदृष्टभिन्नं च स धर्म इति यावत् । वस्तुतो निषिध्यमानत्वमधर्मत्वं, विधी-**

---

रणत्वं, तेन जगत्कारणे ब्रह्मणि नातिव्याप्तिः । तस्य साधारणकारणत्वात् । ननु "तरति शोकमात्मवित्" "अमूर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥" इत्यर्थवादकल्पितविधिनिषेधविषययोरात्मज्ञानद्वैतदर्शनयोरतिव्याप्तिरिति चेन्न ; तयोरपि लक्ष्यत्वात् । "अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" "किं तेन न कृतं पापं चोरेणात्मापहारिणा" इति पुराणादिव्यवहारदर्शनात् । नन्वस्य धर्म-लक्षणस्य वैरिमरणसाधनत्वेन विहिते श्येनादौ अतिव्याप्तिरित्यस्वरसादाह—**तथात्वे सतीति** ॥ वेदबोधितेष्टसाधनताकत्वे सतीत्यर्थः । तथा च वेदबोधितेष्टसाधनताकत्वे सति बलवदनि-ष्टाननुबन्धित्वं धर्मत्वमिति लक्षणार्थः । श्येनादौ वैरिहिंसाया वेदबोध्यत्वेऽपि तस्याः क्रत्वङ्गत्वा-भावेन 'न हिंस्यात्' इति निषेधप्रवृत्तेः तज्जन्यनरकानुबन्धित्वान्नातिव्याप्तिरिति भावः । नन्वे-वमपि अपूर्वेऽतिव्याप्तिः; तस्यापि वेदबोधितेष्टसाधनताकत्वात् । तस्य साक्षाद्वेदबोधितेष्टसाध-नताकत्वाभावेऽपि यागकरणत्वान्यथानुपपत्त्या कल्पितत्वेन वेदबोधितेष्टसाधनताकत्वसंभवात् बलवदनिष्टाननुबन्धित्वाच्चेत्यतो लक्षणनिष्कर्षमाह— **बलवदिति** ॥ तथा च बलवदनिष्टान-नुबन्धित्वे सति अदृष्टद्वारा फलकरणत्वे सति अपूर्वभिन्नत्वं धर्मलक्षणमिति पर्यवसितार्थः । अदृष्टस्यादृष्टभिन्नत्वाभावान्नातिव्याप्तिरिति भावः । भोजनादिनिरासायादृष्टद्वारेत्यादि । न चादृष्टस्यादृष्टद्वारा फलकरणत्वाभावादेव वारणसम्भवाददृष्टभिन्नत्वविशेषणवैयर्थ्यमिति वाच्यम् । उत्पत्त्यपूर्वे परमापूर्वद्वारा फलजनकेऽतिव्याप्तिवारकतया तत्सार्थक्यादिति भावः । ननु किमिदं अनिष्टे बलवत्त्वम्? न तावत्स्वप्रयोज्येष्टकालाधिककालवृत्तित्वं, यत्र बहुदेवब्राह्मणविरोधिचण्डा-लादिनीचजातीयवैरिमरणोद्देशेन श्येनप्रवृत्तिः तादृशश्येनव्यक्तावतिव्याप्तेः । नाप्युत्कटद्वेषवि-षयत्वं तत् । द्वेषोत्कटत्वस्य प्राचीनकर्माधीनत्वेन यस्य प्राचीनाशुभकर्मवशाद्बहुवित्तव्यया-यास एव उत्कटद्वेषः तादृशद्वेषविषयानिष्टानुबन्धिज्योतिष्टोमादावव्याप्तेः । यस्य श्येन-जन्यनरके नोत्कटद्वेषः तत्कृतश्येनेऽतिव्याप्तेश्च । किञ्चानिष्टानुबन्धित्वस्यानिष्टजनकत्वरूपत्वे श्येनेऽतिव्याप्तिः । अनिष्टप्रयोजकत्वरूपत्वे आधानेऽव्याप्तिरिति अस्वरसादाह—**वस्तुत इति** ॥ वेदेनेति शेषः । न च नित्यकर्माकरणस्य निषिध्यमानत्वाभावादधर्मत्वं न स्यादिति वाच्यम् । 'विहितस्याननुष्ठानात्' इति पूर्वोक्तनिषेधदर्शनात्, 'न त्याज्यमिति चापरे' इति नि-षिद्धत्वाच्च नाव्याप्तिरित्याशयात् । न च "सर्वधर्मान्परित्यज्य" इति निषेधदर्शनाद्धर्मेऽतिव्या-प्तिरिति वाच्यम् । तस्य नहिनिन्दान्यायेन "मामेकं शरणं व्रज" इति भक्तिविध्यर्थवादत्वात् काम्यकर्मानावश्यकत्वपरत्वाद्वा, सर्वकर्मसु फलानभिसन्धिपरत्वाद्वा, अशक्तस्य ज्योतिष्टोमाद्यकर-णाभ्यनुज्ञापरत्वाद्वा, "अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" इति वाक्यशेषे धर्मत्याग-

यमानत्वमात्रं धर्मत्वम् । तच्च कृतिव्याप्यकरणेतिकर्तव्यताप्रभृतिषूपादेयतापरपर्याय-प्रेरणारूपविधिविषयताविशेषः । स चास्त्येवाग्नेयप्रयाजद्रव्यदेवतानीचैस्त्वादिषु । नास्ति च फलनिमित्तकर्तृकालादिषु । 'पञ्चमे ब्रह्मवर्चसकामस्य' इत्यत्र फलाय विधीयमानस्य कालस्य धर्मत्वाभावेऽपि न क्षतिः, तदाश्रयस्योपनयनस्यैव धर्मत्वात् ।

जन्यपापनिरासकत्वेन भक्तेः कीर्तनात्तदकरणस्यानिष्टसाधनतानाक्षेपकत्वाद्वा अनिष्टसाध-नताक्षेपकविधिविषयत्वस्यैव निषिध्यमानरूपत्वादिति दिक् । विधीयमानत्वमात्रमिति मात्रचा-दृष्टद्वारकत्वादिविशेषणव्यवच्छेदः । यजेतेत्यादौ स्वर्गोद्देश्यकयागविधेयकप्रवृत्तेः विधिवि-षयता बुध्यते । तत्रार्थभावनांऽशत्रयेऽपि प्रवृत्तिनिरूपिता, प्रवर्तनानिरूपिता, शाब्दबोधनि-रूपिता च विषयतेति विषयतात्रयमस्ति । ताश्च करणेतिकर्तव्यतयोर्विधेयतोपादेयताप्रकार-तापदेन व्यवह्रियन्ते । तासु विषयतासु विधेयताप्रकारते फलविधिवाक्यादिषु फलकर्तृकाला-दिष्वपि बुध्यते । न पुनरुपादेयतेति सिद्धान्तस्थितिं सूचयन्नाह—**तच्चेति** ॥ विधीयमानत्वं चेत्यर्थः । व्याप्यशब्दो विषयपरः । 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते' इति व्यवहा-रात् । ततश्चैतादृशविषयतारूपं धर्मत्वमिति पर्यवसितार्थः ॥ **अस्त्येवेति** ॥ "यदाग्नेयोऽ-ष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" "समिधो यजति" "दध्ना जुहोति" "यदग्नये च प्रजापतये सायं जुहोति" "यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्" "मन्द्रं प्रायणीयायाम्" इत्यादिविधिविहितेष्वित्यर्थः । लक्ष्ये लक्षणमुपपा-द्यालक्ष्ये नास्तीत्याह—**नास्ति चेति** ॥ "अग्निहोत्रं जुहुयात्स्वर्गकामः" "यद्याहिताग्नेरग्नि-र्गृहान्दहेत् अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्" "राजा राजसूयेन यजेत" "सायं जुहोति" "प्राचीनप्रवणे वैश्वदेवेन यजेत" इत्यादिविध्युपात्तेष्वित्यर्थः । ननु "पञ्चमे ब्रह्म-वर्चसकामस्य" इत्यादिषु कालस्य धर्मत्वं न स्यात्, तस्य कृतिविषयत्वाभावादित्यत आह—**पञ्चम इति** ॥ **न क्षतिरिति** ॥ तथाचेष्टापत्तिरिति भावः । ननु तत्रोपनयीतेति विधि-र्व्यर्थः स्यादित्यत आह—**तदाश्रयेति** ॥ फलाय विधीयमानगुणाश्रयस्योपनयनस्य धर्मत्वाद्वि-धिसार्थक्यमिति भावः । अनेन इदमपि सूचितं; विहितक्रियात्वं धर्मत्वं, निषिद्धक्रियात्वं चाध-र्मत्वम् । सिद्धद्रव्यादौ क्रियात्वघटितं धर्मत्वं नास्त्येव । "तानि धर्माणि प्रथमान्यासन्" "धर्मं चर" "इज्याचारदमाहिंसादानस्वाध्यायकर्मणां" "अयं तु परमो धर्मः" इत्यादिषु क्रियास्वेव धर्मत्वव्यवहारात् । एवं निषेधेष्वपि द्रष्टव्यमिति । बर्हिषि दीयमानस्य रजतस्य नाधर्मत्वम् । क्रियानाविष्टद्रव्येषु धर्माधर्मव्यवहाराभावात् । विहिताकरणेष्वपि नित्यकर्माभाव-समनियततात्कालिकक्रियाया एव भावरूपाया अधर्मत्वमित्येव युक्तम् । यद्यप्येवं सति कालादि-विधीनां धर्मप्रमाजनकत्वं न सम्भवति, तथापि प्राशस्त्यबोधकार्थवादानामिव गुणवाक्यैकवा-क्यतापन्नप्रधानविधिबोध्यधर्मप्रमितिविषयार्थबोधकत्वेन तदुपपत्तिरिति । ननु श्येने उक्तधर्म-

**अभिचारार्थमुपादेयस्य श्येनादेस्तु धर्मत्वमिष्टमेव, तामसधर्मत्वेन पुराणादिषु तद्गणनात्। विवाहार्थानृतवदनस्य तु न विधिः । षोडशिग्रहणस्यातिरात्रे तु न निषेधः, तत्रत्यलिङो दोषाभावक्रतुवैगुण्यानापादकत्वलक्षकत्वेन प्रवर्तनानिवर्तनयोः अबोधात् । बोधे वा शुभाशुभफलाक्षेपकविधिनिषेधविषयत्वे धर्माधर्मत्वे। शुभपदं क्रतूपकारस्वर्गादिजनकादृष्टसाधारणम् । अशुभपदं दुःखजनकादृष्टक्रतुवैगुण्यसाधारणम् । अभ्यनुज्ञाविधिविषयस्तु न धर्मो नाप्यधर्मः ॥**

---

लक्षणसत्त्वादतिव्याप्तिरित्याशङ्क्येष्टापत्त्या समाधत्ते—**अभिचारेति** ॥ **तामसेति** ॥ "परस्योत्सादनार्थं यत्तत्तामसमुदाहृतम्" इति वचनादिति भावः। न च "प्रातः प्रातरनृतं ते वदन्ति" इति अनुदिते होमनिन्दावन्नहिनिन्दान्यायेनार्थवादमात्रमेतदिति युक्तम् । प्रकृते त्रिविधकर्मोपदेशोपक्रमविरोधेन स्तुत्यर्थत्वायोगात् । तथा श्येनस्याधर्मत्वमपि "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु" इति निषेधात् । अत एव तामसत्वकथनेनापि निषेधोन्नयनमस्तीति गीताभाष्ये "आहारस्त्वपि सर्वस्य" इत्यत्रोक्तम् । ननु विवाहार्थानृतवचने धर्मत्वं न स्यात्, "नानृतं वदेत्" इति निषेधादित्यत आह—**विवाहेति** ॥ **न विधिरिति** ॥ तथा चेष्टापत्तिरिति भावः। "पञ्चानृतान्याहुरपातकानि" इति श्रीमहाभारते अपातकानीत्युक्त्या दोषाभावप्रतिपादनेऽपि धर्मत्वाकथनादिति भावः । नन्वेवं "नातिरात्रे षोडशिनं गृह्णाति" इति निषेधेन षोडशिग्रहणस्याधर्मत्वं स्यादित्यत आह—**षोडशिग्रहणस्येति** ॥ **न निषेध इति** ॥ तथा च निषेधाविषयत्वाद्धर्मत्वमेवेति भावः ॥ **दोषाभावेति** ॥ "देवान्पितॄन् समभ्यर्च्य खादन्मांसं न दोषभाक्" इतिवद्विवाहार्थानृतवदने दोषाभावलक्षकत्वं षोडशिग्रहणाभावे क्रतुवैगुण्यानापादकत्वलक्षकत्वमेव तत्तद्वाक्ययोरिति भावः । ननु लक्षणैव दोष इत्यस्वरसादाह—**बोधे वेति** ॥ **शुभेति** ॥ शुभफलाक्षेपकविधिविषयत्वं धर्मत्वं, अशुभफलाक्षेपकनिषेधविषयत्वमधर्मत्वमित्यर्थः । शुभपदार्थं दर्शयति—**शुभपदमिति** ॥ **क्रतूपकारेति** ॥ प्रयाजादिसंग्रहाय ॥ **दुःखजनकेति** ॥ सर्वधर्मपरित्यागव्यावृत्तये ॥ **क्रतुवैगुण्येति** ॥ षोडशिग्रहणनिषेधनिरासाय ॥ **अभ्यनुज्ञाविधिविषयस्त्विति** । विवाहार्थानृतवदनादीत्यर्थः । **न धर्मो नाप्यधर्म इति** ॥ अत्र वदन्ति । विवाहार्थानृतवदनेऽपि नानृतं वदेदिति निषेधप्रवृत्त्या पापलेशोऽस्त्येव, लोकप्रवृत्तिस्तु विवाहार्थानृतजन्यपापापेक्षयाभ्युदयस्य विवाहजन्यस्याधिक्यं परिकल्प्योपपादनीया । अतः अपातकानीत्यादिनञोऽल्पार्थकत्वमेव । नन्वेवं यागीयपशुहिंसाया अप्यल्पपापजनकत्वापत्त्या सांख्यमतप्रवेशापत्तिरिति चेन्न । रागप्राप्तहिंसाया एव न हिंस्यादिति निषेधविषयत्वेन क्रत्वङ्गपश्वालम्भे निषेधाप्रवृत्तेः; तत्राल्पपापाङ्गीकारे मानाभावात् । अनृतवदनस्य विवाहाङ्गत्वाभावेन रागतः प्रवृत्तेरेव वक्तव्यतया निषेधप्रवृत्त्याल्पपापाङ्गीकारसम्भवात् । निरूपितं चैतदुत्तरमीमांसायां "अशुद्धमिति चेन्न शब्दात्" इति

अत एव पूर्वसूत्रे धर्मपदेन यावत्षोडशलक्षणीगतविचारविषयो लक्ष्यते । अपौरुषेयवाक्यतात्पर्यविषयीभूतवाक्यार्थान्वयित्वस्य लक्ष्यतावच्छेदकत्वात् । सगुण-निर्गुणोपासनाविधिशेषत्वादिना क्रतुविध्यपेक्षितसंसार्यात्मस्वरूपवदेव ब्रह्मणोऽपीह वि-चार्यत्वमिष्टमेव । लक्ष्यतावच्छेदककोटिनिविष्टवाक्यार्थे संसर्गात्मकत्वं वा विशेष-णीयम् ॥ २ ॥

---

केचित् । अन्ये त्वभ्यनुज्ञाविधिविषयो धर्म एव, नाधर्मः, तस्य पापजनकत्वाभावात् । न चाल्पपापजनकत्वमित्युक्तमिति वाच्यं; श्रीमहाभारते सत्यानृतव्यवस्थाप्रकरणे केषाञ्चित्सत्या-नामनृतत्वं, केषाञ्चिदनृतानां सत्यत्वमिति व्यवस्थादर्शनेन तत्प्रकरणपठितविवाहानृतवदनस्य सत्यत्वातिदेशेन अतिदेशस्य फलाकाङ्क्षायां स्वर्गादिफलकत्वस्यैव कल्पयितुं युक्तत्वेन पापज-नकत्वासम्भवात् । किञ्च शास्त्रे धर्माधर्मौ द्वावेव प्रतिपाद्यौ, न हि तदुभयविलक्षणं वेदप्र-सिद्धं किञ्चित्कर्मास्ति । तस्माद्वेदार्थे उभयविलक्षणं किञ्चिद्वक्तुमनुचितमिति न धर्मो नाप्य-धर्म इति प्रौढिवादमात्रमित्याहुः ॥ **अत एवेति** ॥ धर्माधर्मयोरिव साधनतदाभासादेरपि अत्रैव विचार्यत्वात्तत्सङ्ग्रहायावश्यं धर्मपदस्य लाक्षणिकत्वावश्यकतया उभयभिन्नस्यापि तत एव प्रतिज्ञासूत्रे सङ्ग्रह इत्यर्थः । तत्र सर्वसाधारणं लक्ष्यतावच्छेदकमाह—**अपौरुषेयेति** ॥ अपौरुषेयवाक्यस्य वेदवाक्यस्य तात्पर्यविषयभूतो यो वाक्यार्थः धर्मस्वरूपं तत्प्रमाणतदा-भासौ च तद्भिन्नं वेदान्तप्रतिपाद्यं ब्रह्म च तदन्वयित्वं सर्वेषामिति तत्सर्वं विचार्यमित्यर्थः ॥ **सगुणेति** ॥ उपकोसलादिविद्याः सगुणोपासनाः । 'अथ परा यया तदक्षरमधिगम्यते' इत्यादिना मुण्डके विहिता निर्गुणोपासनाः ॥ **संसारीति** ॥ 'अविनाशी वारेऽयमात्मा' इत्यादिना नित्यत्वादिधर्मकात्मसद्भावकथनस्य क्रतुविधिशेषत्वाद्विचार्यत्वमित्यर्थः ॥ **इष्टमेवेति** ॥ तथा च विंशातिलक्षणमेकं शास्त्रम् । अत एव भगवानुपवर्षः अस्मिन्नेव पादे 'आत्मास्तित्वं शारीरके वक्ष्यामः' इत्याह । 'एक आत्मनः शरीरे भावात्' इत्युत्तरमीमांसाधिकरणे भगवद्भाष्यकारै-रप्याशङ्कितं शास्त्रमुखत एव तर्कपादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्य आत्मनोऽस्ति-त्वमुक्तमिति । तदिदमैकतन्त्र्यं वृत्तिकारपक्षाभिप्रायेणोक्तम् । अनुबन्धचतुष्कभेदात् श्रीमद्भा-ष्यकारपक्षाभिप्रायेण भिन्नतन्त्रत्वपक्षे ब्रह्मविचारस्य नैतत्तन्त्रप्रतिपाद्यत्वमिति तद्व्यावर्तनाय लक्ष्यतावच्छेदकं विशिनष्टि—**लक्ष्यतावच्छेदकेति** ॥ **संसर्गेति** ॥ उक्तलक्ष्यतावच्छेदक-घटकवाक्यार्थः संसर्गरूपो विवक्षित इत्यर्थः । उपनिषत्तात्पर्यविषयवाक्यार्थस्याखण्डत्वात्सं-सर्गात्मकत्वं नास्तीति नात्र विचार्यत्वमित्यर्थः । 'संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ताखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥' इति पूर्वाचार्योक्तेरिति भावः । तथा च चोदना धर्मे प्रमाणमिति सिद्धम् । सूत्रं तु स्पष्टम् । अत्र 'को धर्मः, कथंलक्षणकः' इति भाष्यानु-साराद्धर्मप्रमाणनिरूपणमेवाध्यायार्थः । चोदनाप्रामाण्यनिरूपणं प्रथमपादार्थ इति बोध्यम् ॥

**(३)—तस्य निमित्तपरीष्टिः ॥ ३ ॥ सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥**

साङ्ख्यमते वृत्तिविशेषरूपौ धर्माधर्मौ । तार्किकमते तु अदृष्टरूपौ । अतस्तयोश्चाक्षुषाद्यविषयत्वेऽपि अस्मन्मते दध्यादिद्रव्यगुणक्रियारूपत्वेन अलौकिकत्वाभावेन सम्भवति प्रत्यक्षादिप्रमाणविषयत्वमिति प्राप्ते—न तावद्दध्यादीनां स्वरूपेण धर्मत्वम् ।

---

**तस्य निमित्तपरीष्टिः** ॥ तस्य—धर्मस्य, **निमित्तपरीष्टिः**—परीक्षा कर्तव्येत्यस्य मण्डूकप्लुत्या लिङ्गविपरिणामेनानुवृत्त्या धर्मप्रमाणविचारः कर्तव्य इति प्रतिज्ञान्तरपरं सूत्रम् । अस्याधिकरणान्तरत्वेन भाष्यादौ वर्णनेऽपि धर्मो न परीक्षणीय इति पूर्वपक्षस्योत्थाने युक्त्यभावान्नाधिकरणान्तरत्वमित्यभिप्रायेण उत्तराधिकरणसूत्रमाह—**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्** ॥ पूर्वत्र चोदनैव धर्मे प्रमाणं धर्मे चोदना प्रमाणमेवेति द्वौ नियमौ आकरोक्तौ । तयोराद्यः प्रदर्श्यते । नन्वाद्यनियमोऽनुपपन्नः, चोदनातिरिक्तप्रत्यक्षानुमानादेरपि धर्मप्रमाणत्वसम्भवादित्याक्षेप्तुं तन्त्रान्तरसिद्धं धर्मस्वरूपं दर्शयति—**साङ्ख्यमत इति** ॥ 'महत्तत्वांशभूताया बुद्धेरनेकविधवृत्तिशीलाया निश्चयात्मकवृत्तिमत्त्वमसाधारणलक्षणं अध्यवसायो बुद्धिः' इति साङ्ख्यसूत्रेण द्वितीयाध्यायस्थेनोक्त्वा 'तत्कार्यं धर्मादि' इति तदुत्तरसूत्रेण धर्मज्ञानवैराग्यैश्वर्याणि विहितकर्मानुष्ठानजन्यानि सत्त्वगुणोपरक्ताया बुद्धेर्वृत्तिविशेषा इत्युक्त्वा 'महदुपरागाद्विपरीतम्' इति तदुत्तरसूत्रे तमोगुणोपरागादधर्माज्ञानावैराग्यानैश्वर्याण्यपि तद्धर्मावित्युक्तमित्यभिप्रायः । 'धर्मः क्षरति कीर्तनात्' इत्यादिशास्त्रैर्धर्मस्य कीर्तनादिनाश्यत्वप्रतीतेः तदनुसारेणाह—**तार्किकेति** ॥ तयोर्मतयोर्वृत्तिविशेषादृष्टरूपयोर्धर्माधर्मरूपयोर्वा ॥ **चाक्षुषाद्यविषयत्वेऽपीति** ॥ मतद्वयेऽपि धर्माधर्मयोरतीन्द्रियतया चक्षुरादिप्रमाणाप्रवृत्तेरिति भावः ॥ **अस्मन्मते**—मीमांसकमते ॥ **दध्यादीति** ॥ आदिना व्रीह्याज्यपयःप्रभृतीनां परिग्रहः । **गुणः**—आरुण्यादिः । **अलौकिकत्वाभावेन**—लोकप्रसिद्धत्वेनेत्यर्थः । तथा च प्रत्यक्षादीनामपि धर्मप्रमाणत्वसम्भवाच्चोदनैव धर्मे प्रमाणमित्ययुक्तमिति पूर्वपक्ष इत्यर्थः । दध्यादीनां यदि लोकसिद्धदधित्वादिरूपेण धर्मत्वं स्यात्तदा तस्य प्रत्यक्षादिविषयत्वं स्यात् । न त्वेदस्ति । क्रयविक्रयभोजनाद्युपयुक्तदध्यादौ धर्मशब्दप्रयोगादर्शनात् । किन्तु स्वर्गेन्द्रियादिकारणतावच्छेदकाधेयशक्तिमत्त्वेन । सा च शक्तिर्दोहनातञ्चनप्रोक्षणादिसंस्कारैर्मन्त्रकरणकैरुत्पद्यत इति तादृशशक्तिविशिष्टत्वेनैव धर्मत्वं वक्तव्यम् । ततश्च तद्विशिष्टद्रव्यादेश्चक्षुराद्यगम्यत्वान्न चोदनातिरिक्तप्रमाणगम्यत्वं धर्मस्येत्यभिप्रायेण सिद्धान्तमाह—**न तावदिति** ॥ ननु शक्तिविशिष्टदध्यादेर्धर्मपदार्थत्वं न सम्भवति; आकृत्यधिकरणन्यायेन विशेषणीभूतशक्तिरूपादृष्ट एव शक्तिसिद्धेरिति चेन्न; आश्रयव्यक्तिभेदेन शक्तीनामानन्त्येन जातिन्यायेन लाघवाभावेन

**अपि तु फलजनकतावच्छेदकशक्तिमत्त्वेन। तादृशं च रूपं प्रत्यक्षाद्ययोग्यमेव, प्रत्यक्षस्येन्द्रियसन्निकृष्टवर्तमानार्थविषयकत्वनियमात्। अत एव—नानुमानादीनामपि तत्र प्रवृत्तिः; तेषां प्रत्यक्षपूर्वकत्वात्। नापि योगिनां प्रत्यक्षे तौ विषयौ, तेषामनङ्गीकारात्। एतेन ईश्वरप्रत्यक्षमपि व्याख्यातम्। इन्द्रियार्थसन्निकर्षाजन्यत्वेन भगवत्प्रमितेरलौ-**

---

क्रियासमर्थद्रव्यस्यैव फलकरणत्वस्य तृतीयादिश्रुत्युपात्तस्य युक्तत्वात्, विशिष्टस्य शब्दार्थत्वादिति भावः। न च सूत्रे धर्मपदस्य पुंलिङ्गनिर्देशेन अपूर्वपरत्वमेव, अर्धर्चगणपठितस्य तस्योभयलिङ्गत्वेऽपि अपूर्वे वाच्ये पुंस्त्वं, तत्साधने नपुंसकत्वमिति व्यवस्थायाः शाब्दिकोक्तत्वादिति वाच्यम्; 'धर्मः श्रुतो वा दृष्टो वा' 'अयं तु परमो धर्मः' 'छिन्द्यादसूनपि ततो विसृजेत्स धर्मः' इति बहुतरप्रयोगाणां अपूर्वसाधने दर्शनेन व्यवस्थाकथनस्य प्रौढिवादमात्रत्वादिति दिक्। तार्किकैः श्रुतित्वेन व्यवह्रियमाणं 'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना' इति वार्तिकमर्थतोऽनुवदति—**प्रत्यक्षस्येति**॥ **प्रत्यक्षस्य**—प्रत्यक्षप्रमितेः, **इन्द्रियसन्निकृष्टः**—इन्द्रियसंयोगादिमान्, **वर्तमानः**—वर्तमानकालसम्बन्धी, ज्ञानोत्पत्तिकालवृत्तिरिति यावत्। स विषयो यस्येति तादृशविषयग्राहकत्वनियमादित्यर्थः। तथा च प्रत्यक्षस्यादृष्टध्यादावप्रवृत्तेर्न धर्माधर्मयोः प्रत्यक्षग्राह्यत्वमिति भावः॥ **अत एव**—प्रत्यक्षाप्रवृत्तेरेव॥ **नानुमानादीनामिति**॥ अनुमानस्य व्याप्तिप्रत्यक्षादिसापेक्षतया प्रत्यक्षाप्रवृत्तौ तन्मूलकमनुमानमपि न प्रवर्तत इत्यर्थः। न चानुमानान्तरेण व्याप्तिग्रहसम्भव इति वाच्यम्; अनवस्थापत्तेरिति भावः। ननु लौकिकप्रत्यक्षाप्रवृत्तावपि अतीन्द्रियसकलपदार्थविषयकप्रत्यक्षजनकयोगजधर्मसहकृतमनसां योगिनां प्रत्यक्षं प्रमाणमस्त्वित्यत आह—**नापीति**॥ **तेषां**—योगिनाम्। तथा च तदपि न प्रमाणमित्यर्थः। न च पुराणादिप्रसिद्धानां योगिनां कथमनङ्गीकार इति वाच्यम्; तेषामर्थवादत्वेन विधेयार्थस्तुतिमात्रतात्पर्यकतया न तद्वशेन योगिसिद्धिरिति भावः। **एतेन**—योगिप्रत्यक्षनिराकरणेन। **व्याख्यातमिति**॥ धर्माधर्मयोः प्रमाणत्वेन वक्तुमशक्यमित्यर्थः। अत्रेदं बोध्यम्। पुराणानामर्थवादत्वेऽपि स्वशक्यार्थबोधकत्वस्यावर्जनीयतया योगिनां सिद्धिरव्याहतैव। तेषां स्वार्थप्रामाण्याभावे अगस्त्य-वसिष्ठ-विश्वामित्र-व्यासप्रभृतीनां समुद्रपान-ब्रह्मास्त्रग्रसन-त्रिशङ्कुस्वर्गसृष्टि-भारतयुद्धहतपुनरागमनाद्यलन्ताशक्यार्थानुष्ठानस्यासिद्धिप्रसङ्गात्। किञ्च, अर्थवादानां स्वार्थे प्रामाण्याभावे घृतेन शर्कराणामञ्जनं, उच्चैस्त्वादीनां वेदधर्मत्वं, अश्वप्रतिग्रहेष्टेः दातृकर्तृकत्वमित्याद्यनेकसिद्धान्तासिद्धिप्रसङ्गः। तस्माद्योगिनामङ्गीकार आवश्यकः। तत्सर्वज्ञत्वमवश्याभ्युपेयमेव। तस्यापि पुराणादिसिद्धत्वात्। एवं 'द्यावाभूमी जनयन्देव एकः' 'विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादिश्रुतिभिः, 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्यादिस्मृतिभिः, 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥' इत्यादिपुराणवचनैः, क्षित्यादिकं सकर्तृकमित्याद्यनुमानैश्च ईश्वराङ्गीकार आवश्यकः।

किकत्वाद्वा । तस्माच्चोदनैव धर्माधर्मयोः प्रमाणं, नान्यत् ॥ ३ ॥

**(४)—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥५॥**

देहान्तरैकभोग्यफलकानां अग्निहोत्रादीनां करणत्वोपपादकस्यापूर्वस्य कल्पनेऽपि

---

न चैतदनुमानस्य शरीराजन्यत्वादिप्रतिहेतुना सत्प्रतिपक्षितत्वं शङ्क्यम् । प्रतिहेतोरप्रयोजकत्वात्, कार्यत्वहेतोः कार्यकारणभावरूपानुकूलतर्कसाचिव्यस्य पूर्वनिबन्धनेषु स्पष्टत्वात् । तस्मान्मूलोक्तं प्रौढिवादमात्रमिति । वस्तुतस्तु मूलस्य प्रकारान्तरेण व्याख्यानान्नैतद्दोषावकाशः । तथा हि- तेषामित्यस्य प्रत्यक्षस्येति शेषः । अनङ्गीकारादित्यस्य धर्माधर्मप्रमाणस्येत्यादिः । तथा च योगिनां प्रत्यक्षस्य धर्माधर्मप्रामाण्यासम्भवादिति पर्यवसितार्थः । अयं भावः । योगिप्रत्यक्षेण न कोऽप्यर्थस्सिध्यति, प्रमाणान्तरसिद्धार्थदर्शित्वात्तेषाम् । इतरथा शशश्रृङ्गादीनामपि सिद्ध्यापत्तेः। किञ्च योगिप्रत्यक्षेणापूर्वपदार्थसिद्ध्यङ्गीकारे सर्वतन्त्रेषु सर्वप्रमाणसिद्धपदार्थानां तेनैव सिद्धिसम्भवादितरप्रमाणनिरूपणं श्रीमदक्षपादप्रभृतीनां निरर्थकमापद्येत । तस्मात् धर्माधर्मयोः न तत्प्रमाणमिति । **एतेन**—योगिप्रत्यक्षस्य धर्माधर्मप्रमाणत्वाभावेन ॥ **व्याख्यातमिति** ॥ उक्तयुक्त्येति भावः । ननु सूत्रे लौकिकप्रत्यक्षस्यैव धर्माधर्मप्रमाणत्वनिराकरणेन अलौकिकप्रत्यक्षनिराकरणं सूत्रकाराननुमतमित्यतस्तथैवाह—**इन्द्रियार्थेति** ॥ **भगवत्प्रमितेरिति** । योगिप्रत्यक्षस्याप्युपलक्षणम् । तथा च लौकिकप्रमाणगम्यत्वाभावोऽक्षत एवेति भावः। उपसंहरति—**तस्मादिति** ॥ अत्रोत्तरोत्तरसूत्राणां पूर्वपूर्वार्थसाधनपरत्वेन सङ्गतिसंशयादयः स्पष्टाः । सूत्रार्थस्तु इन्द्रियाणां सत्सम्प्रयोगे विषयसन्निकर्षे सति यत् पुरुषस्य बुद्धिजन्म प्रत्यक्षस्योत्पत्तिर्भवति, तत्प्रत्यक्षं धर्मस्यानिमित्तं स्वरूपनिश्चायकं न भवति । कुतः? विद्यमानमात्रग्राहित्वात् । अनुमानादेरप्युपलक्षणमेतत् । तथा गौतमोऽपि 'इन्द्रियार्थसन्निकर्षोत्पन्नम्' इत्यादिनेदमेव लक्षणमाह ॥

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्** ॥ अनेन सूत्रेण पूर्वप्रतिपादितद्वितीयनियमं साधयितुं चोदनाप्रामाण्यमाक्षिप्य समाधीयते । न तावच्चोदनानां प्रामाण्यं सम्भवति; अग्निहोत्रादीनां प्रत्यक्षतः स्वर्गजनकत्वादर्शनात् । न चाग्निहोत्रादीनामामुष्मिकफलकत्वमेव, कर्मणामाशुतरविनाशित्वेऽपि व्यापारस्यापूर्वस्य साधयिष्यमाणत्वेन करणत्वोपपत्तिरिति वाच्यम्; आमुष्मिकफलानां तत्सम्भवेऽपि चित्रेष्ट्यादीनां दृष्टफलानामपूर्वानङ्गीकारेण साक्षादेव कारणताया वक्तव्यतया, यत्र चित्रेष्ट्यनन्तरं पशुलाभो नास्ति तत्र व्यभिचारेण इष्टेः कारणत्वासम्भवादित्याह—**देहा-**

पश्वादिदृष्टैकफलकानां चित्रादीनां घटजनकदण्डादीनामिव व्यापारत्वेन अपूर्वकल्पनाभावाद्यत्र चित्रेष्टयव्यवहितोत्तरक्षणे पशवलाभः तत्र प्रबलप्रत्यक्षविसंवादेन चित्रेष्टिनिष्ठकारणतायाः व्यभिचारित्वेन तद्विधेरप्रामाण्यम् । न चौषधपानादेरिव कालान्तरभाविफलजनकत्वान्न दोष इति वाच्यम्; फले कालान्तरसम्बन्धस्य चित्राविधिप्रामाण्यसिद्ध्युत्तरकालिकत्वेन अन्योन्याश्रयात् । एवं 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इत्यनेन सशरीरस्वर्गप्राप्तिकथनमपि प्रत्यक्षविरोधादप्रमाणम् । ततश्च 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायेन सर्वासां चोदनानामप्रामाण्यमिति प्राप्ते—यज्ञायुधशब्दस्य यज्ञात्मकसाधनपरतया शरीरपरत्वाभावेन यज्ञरूपसाधनसद्भावात् स्वर्गं प्राप्नोतीत्यर्थकेन वाक्येनापूर्वसहितात्मनः परलोकप्राप्त्यनुवादान्नाप्रामाण्यम् । चित्रेष्ट्यादेस्तु उत्तराङ्गसाचिव्योपपत्तयेऽपूर्वकल्पनावश्यम्भावादव्यवहितकालकालान्त-

---

न्तरेति ॥ चित्रादीनामिति ॥ 'चित्रया यजेत पशुकामः' इत्यादिविधिविहितानामित्यर्थः । आदिना 'वृष्टिकामः कारीर्या यजेत' इत्यादिसङ्ग्रहः । न च तत्र फलमुत्पद्यत एवेति वाच्यम्; प्रत्यक्षप्रमाणेनेष्ट्यनन्तरं फलाभावस्य निश्चितत्वादिति भावः। प्रत्यक्षविसंवादेन-प्रत्यक्षविरोधेन । नन्वौषधपानेन कालान्तरारोग्यदर्शनात्तन्न्यायेन अत्रापि कालान्तरपशुलाभेऽपि न कारणत्वहानिरिति शङ्कते—न चेति ॥ परिहरति—फल इति ॥ चित्राविधेः प्रामाण्यसिद्धौ कालान्तरे फलसिद्धिः । फलसिद्धौ प्रामाण्यसिद्धिरित्यन्योन्याश्रयादित्यर्थः । नन्वग्निहोत्रादिस्थले श्रुतकरणत्वान्यथानुपपत्त्या अपूर्वकल्पनवदत्राप्यपूर्वकल्पनान्न व्यभिचार इत्यस्वरसादाह—एवमिति ॥ यज्ञायुधीति ॥ यज्ञायुधं यज्ञसाधनं शरीरमस्यास्तीति यज्ञायुधी—यजमानः॥ सशरीरेति ॥ तथा च अनेन वचनेन यजमानस्य सशरीरस्वर्गप्रतिपादनेन तस्य प्रत्यक्षविरुद्धत्वेनाप्रामाण्यमेवेत्यर्थः । ननु प्रत्यक्षविरोधस्थले प्रामाण्याभावेऽपि प्रत्यक्षाविरुद्धानां चोदनानां प्रामाण्यं किं न स्यादित्यत आह—तत्सामान्यादिति ॥ तत्र सामान्यतोदृष्टानुमानादित्यर्थः । अग्निहोत्रादिचोदना न प्रमाणं वेदत्वाच्चित्रादिवाक्यवदित्यनुमानादिति भावः । तथाचाशेषचोदनानामप्रामाण्यात् चोदनानामप्रामाण्यमेवेति पूर्वोक्तद्वितीयनियमोऽसिद्ध इति पूर्वपक्षः फलितः । यज्ञायुधवाक्ये प्रत्यक्षविरोधं परिहरति—यज्ञायुधशब्दस्येति ॥ यज्ञश्चासावायुधश्चेति कर्मधारय एव; न तत्पुरुषः । निषादस्थपतिन्यायात् । ततश्च यज्ञरूपसाधनवान्यजमानः अपूर्वद्वारा स्वर्गं प्राप्नोति इत्यर्थाङ्गीकारेण सशरीरपरत्वाभावान्न प्रत्यक्षविरोध इत्यर्थः । न च 'न कर्मधारयान्मत्वर्थीयः' इति निषेधान्न कर्मधारय इति वाच्यम्; तस्यानित्यत्वात् । अत एव 'कृष्णसर्पवान् वल्मीकः' इति महाभाष्यमपि तद्गमकमित्याशयात् । चित्रेष्ट्यादौ व्यभिचारं निरस्यति—चित्रेष्ट्यादेरिति ॥ तत्रापूर्वकल्पनावश्यकत्वमाह—उत्तराङ्गेति ॥ साङ्गप्रधानेनैव फलसिद्धेरुत्तराङ्गसाहित्यसिद्ध्यर्थं प्रधानापूर्वमावश्यकमिति तत्राप्यपूर्वद्वारा कालान्तरे

रयोरन्यतरस्यापि न कार्यतावच्छेदककोटिप्रवेश इति न दोषः । न चान्योन्याश्रयः । अप्रामाण्यकारणाभावादेव स्वतः प्रमाणत्वात् । न च पदपदार्थसम्बन्धस्य पुरुषाधीनत्वेन तज्ज्ञानसापेक्षस्य वेदवाक्यार्थज्ञानस्य प्रमात्वनियमो न सम्भवतीति वाच्यम् ; सम्बन्धस्याप्यनादित्वेन पौरुषेयत्वाभावात् । तस्य च स्वरूपसतो न वाक्यार्थज्ञानकारणता, अपि तु ज्ञातस्यैवेति तदवगमाय व्याकरणादेरिव क्वचिदाप्तपुरुषस्याप्युपयोग इति

---

फलसम्भवान्न व्यभिचार इत्यर्थः । नन्वव्यवहितोत्तरजायमानस्यैव कार्यत्वात् कथं कालान्तरीयफलमादाय व्यभिचारपरिहारः इत्यत आह—**अव्यवहितेति** ॥ न हि चित्रेष्ट्यादिदृष्टफलस्थले अव्यवहितफलं प्रति कारणत्वं श्रुत्या बोध्यते । किन्तु व्यवहिताव्यहितसाधारण्येन फलजनकत्वमात्रम् । ततश्च चित्रेष्ट्यादीनां अपूर्वद्वारा फलजनकत्वसम्भवान्नोक्तदोष इत्यर्थः । अन्योन्याश्रयं निरस्यति—**न चेति** ॥ **अप्रामाण्यकारणाभावादिति** ॥ वेदस्य पुरुषदोषसंस्पर्शाभावेन स्वतः प्रमाणतया तत्प्रामाण्यस्य फलसिद्ध्यनधीनत्वेन नान्योन्याश्रय इति भावः । अयमाशयः । अप्रामाण्यमधिगतार्थबोधकत्वेन वा, बाधितार्थबोधकत्वेन वा ? नाद्यः, धर्मे प्रत्यक्षादीनामप्रवृत्तेः। अर्थवादानामपि तात्पर्यविषयार्थस्यानधिगतत्वात् । नान्त्यः, स्वर्गादिजननस्यापूर्वद्वारा पश्वादेरैहिकामुष्मिकसाधारणतया कालान्तरेऽपि जननसम्भवात् । क्वचित् फलानुत्पत्तेः अङ्गवैगुण्येन कर्मानन्तरोत्पन्नप्रतिबन्धेन वा सम्भवादिति । ततश्चापौरुषेयवाक्ये पुरुषदोषाणां भ्रमप्रमादविप्रलिप्साकरणापाटवादीनां असम्भवेन प्रामाण्यसिद्धिरिति भावः । ननु पदपदार्थसम्बन्धस्य शक्तिलक्षणादेः पुरुषकल्पितत्वात्, पुरुषस्य च भ्रमप्रमादादिदोषसम्भवान्न चोदनाजन्यज्ञानस्य प्रमात्वसम्भव इति न चोदनाप्रामाण्यसिद्धिरिति शङ्कते—**न चेति**॥ **पुरुषाधीनत्वेन**—पुरुषकल्पितत्वेन । **तज्ज्ञानसापेक्षस्य**—पुरुषकल्पितसम्बन्धज्ञानापेक्षस्य । हेतुगर्भं विशेषणमिदम् । **प्रमात्वनियमः**—वेदजन्यं ज्ञानं सर्वं प्रमैवेति नियमः । पुरुषबुद्धिपूर्वकत्वेन भ्रमत्वस्यापि सम्भवादित्यर्थः ॥ **सम्बन्धस्यापीति** ॥ अपिशब्देन शब्दार्थयोर्नित्यत्वं सूचितम् । शब्दानां नित्यत्वेन अर्थानामपि गोत्वाद्याकृतीनां नित्यत्वात् सम्बन्धस्यापि नित्यत्वम् । तत्राभिधायाः सम्बन्धत्वपक्षे लाघवेन तस्याः धर्मिग्राहकप्रमाणेन नित्यत्वसिद्धिः। ईश्वरेच्छारूपत्वे सुतरां नित्यत्वसिद्धिरिति भावः । न च शब्दार्थसम्बन्धानां नित्यत्वेन पुरुषदोषसम्बन्धाभावेऽपि व्यवहारादिना शक्तिग्रहदशायां पुरुषदोषसम्बन्धप्रसक्तिरस्तीति वाच्यम् ; व्यवहारादिना शक्तिग्रहस्य शाब्दबोधोपयोगेन शक्तिज्ञानस्य शाब्दबोधस्य च स्वतः प्रामाण्यसिद्ध्यपवादाभावेनाप्रामाण्यस्य परतस्त्वेन च वेदार्थज्ञानस्य प्रामाण्योपपत्तेरिति भावः। उक्तमेव प्रामाण्यमुपपादयति—**तस्येति** ॥ सम्बन्धस्येत्यर्थः। **स्वरूपसतः**—ज्ञाननिरपेक्षस्य ॥ **न वाक्यार्थज्ञानकारणतेति** ॥ अगृहीतशक्तिकपदेन वाक्यार्थबोधाजननादित्यर्थः । ज्ञातस्यैव कारणतेत्यन्वयः । **तदवगमाय**—सम्बन्धज्ञानाय । व्याकरणादेरित्यादिना कोशादिपरिग्रहः ॥

**न तावन्मात्रेण सर्वत्रानाश्वासो युक्तः । तस्माच्चोदना प्रमाणमेव ।**

**एतत्साधनायैव हि मूले—निरालम्बनवादमाहायानिकवादयोर्निरासौ, अनुमानशब्दोपमानार्थापत्त्यभावप्रमाणानां सपरिकरं निरूपणम्, स्वरूपनिरूपणाय स्फोटनिरासः, नित्याकृतिसाधनम्, अपोहनिरासः, वनवादात्मवादौ चेत्यादिकं निरूपितम् ॥ ४॥**

---

**क्वचिदिति** ॥ आप्तपुरुषस्यापि सम्बन्धग्रहे कथकत्वेनैवोपयोगः न तु कल्पकत्वेनेत्यर्थः ॥ **न तावन्मात्रेणेति** ॥ क्वचिदाप्तपुरुषस्य शक्तिग्रहोपयोगमात्रेण **सर्वत्र**—वेदे **अनाश्वासः**—अप्रामाण्यनिश्चयो न युक्त इति । पदपदार्थसम्बन्धानां नित्यत्वेन तत्र पुरुषसम्बन्धाभावेन तज्ज्ञानप्रामाण्यस्य स्वतस्त्वेनाप्रामाण्यकारणाभावेन चोदना धर्मे प्रमाणमेवेत्यधिकरणसिद्धान्तमुपसंहरति—**चोदना प्रमाणमेवेति** ॥ अनेन द्वितीयनियमः सिद्ध इति द्रष्टव्यम् । **मूले**—भाष्यवार्तिकयोः॥ **निरालम्बनेति** ॥ आलम्बनं—विषयः । स नास्ति ज्ञानानामिति निरालम्बनानि ज्ञानानि तेषां वादः । तथा स्वप्नज्ञानान्यसद्विषयकाणि स्वशिरश्छेदनादीनामसत्त्वात् । दृष्टान्तेन जागरज्ञानान्यपि तथैवेति बाह्यः पदार्थः कोऽपि नास्तीति निरालम्बनवादः । माहायानिकवादस्तु, बाह्यपदार्थास्सन्त्येव, परं तु ते ज्ञानस्यैवाकारभेदाः विचित्राः, ज्ञानाकारातिरिक्ताया विषयताया दुर्वचत्वादिति । तदुभयमप्ययुक्तम् । अबाधितनियतघटनीलादिप्रतीतिविरोधात् । निरूपितं चेदं ब्रह्मसूत्रार्थचिन्तामणौ 'नाभाव उपलब्धेः' इत्यधिकरणेऽस्माभिः। व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः । तत्करणमनुमानम् । शब्दज्ञानजन्यं असन्निकृष्टार्थविषयकं यथार्थज्ञानं शाब्दप्रमा, तत्करणं शब्दः । अदृश्यमानगोनिरूपितसादृश्यप्रकारकगवयविशेष्यकप्रमितिरुपमितिः, तत्करणं सादृश्यविशिष्टगवयदर्शनमुपमानम् । प्रत्यक्षेण शब्देन वा प्रमितार्थस्योपपादकार्थान्तरकल्पनं अर्थापत्तिप्रमा, तत्करणं दिवाभोजनाभावपीनत्वयोस्सामानाधिकरण्यसम्बन्धानुपपत्तिज्ञानं अर्थापत्तिः । घटाभावप्रमितेः करणं योग्यानुपलब्धिः। **सपरिकरं**-व्याप्तिपक्षधर्मताकाङ्क्षायोग्यतानिरूपणसहितम् । कृष्णेहि इत्यादिवाक्ये, रामेणेत्यादिपदे, रामेत्यादिप्रातिपदिके च अवयवविभागे मानाभावान्न तत्तदंशेषु शक्तिः । अपि त्वन्वयिनामेव प्रतीयमानार्थे शक्तिः। त एव च वाक्यपदवर्णास्स्फोटाः। स्फुटत्यर्थोऽस्मादिति स्फोटो वाचक इत्यादिस्फोटवादः । सोऽप्ययुक्तः । पठ्यमानश्लोकाद्यर्थानवबोधे तदवयवपदसमासप्रकृतिप्रत्ययादिप्रदर्शनोत्तरं जायमानश्लोकाद्यर्थानुभवविरोधात् । तुल्ययुक्त्या वाक्यार्थादेरपि निर्भागत्वापत्त्याङ्गबाधादिलोपापत्तेश्च । **नित्याकृतिः**—गोत्वादिसामान्यम् । तच्चालीकं, व्यक्तिभिन्नत्वेनानुपलभ्यमानत्वात् । नापि तदभिन्नं, नित्यत्वानित्यत्वाभ्यां विरोधात् । अत एव न भेदाभेद इति चार्वाकाः । तन्न । इयं गौरिति पदयोर्भिन्नप्रवृत्तिनिमित्तकयोस्सामानाधिकरण्येनानुगतव्यावृत्ताकारबोधकत्वेन भेदाभेदसिद्धेः । खण्डमुण्डादिव्यक्तिष्वनुगतप्रतीत्या गोत्वादिसामान्यसिद्धेरित्याकृ-

(५)—कर्मैके तत्र दर्शनात् ॥ ६ ॥ अस्थानात् ॥ ७ ॥ करोतिशब्दात् ॥ ८ ॥ सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥ समं तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनं विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ ॥ वर्णान्तरमविकारः ॥ १६ ॥ नादवृद्धिपरा वा ॥ १७ ॥ नित्यस्तु स्याद्दर्शि-

---

तिसाधनम् । अतद्व्यावृत्तिरपोहः । राज्ञः पुरुष इत्यादिषु अराजसम्बन्धिभिन्न इत्यादिरूपोऽपोह एव वाक्यार्थ इति केचित् । प्राचुर्येण तस्य भानाभावात्क्वचिदपि अपोहस्याप्रसिद्धेश्च तदयुक्तमित्यपोहनिरासः । गुणसमुदाय एव पृथिव्यादिद्रव्यं नातिरिक्तं, अवयवसमुदाय एव अवयवि, वृक्षसमुदाय एव वनं न भिन्न इति गौतमाः । तन्न । पाकादिना पूर्वोत्तररूपयोः, पटस्य च नाशोत्पत्त्यानुभवविरोधादिति वनवादः। अहं गौतम इत्यादिवत् अहं जानामीत्यादिप्रत्ययस्य शरीरैकविषयत्वान्न देहातिरिक्त आत्मेति बाह्याः । तन्न । प्राणवायोरूर्ध्वाधोगमनानुकूलप्रयत्नस्य ज्ञानसुखादीनां चाश्रयतया तत्सिद्धेः । तेषामयावद्देहभावित्वेन देहधर्मत्वासम्भवात् । कार्यद्रव्यवृत्तिविशेषगुणानां पाकेन विरोधिगुणान्तरोत्पत्त्या वा द्रव्यनाशेन वा नाश इति नियमेन मृतावस्थायां नाशकाभावेन गुणानाशानुपपत्तेश्च, अवयविविशेषगुणानां अवयवगुणपूर्वकत्वनियमभङ्गापत्तेश्च । तस्मात् 'अविनाशी वारेऽयमात्मा' इत्यादिश्रुतिभिः शरीरातिरिक्तविभुनित्यात्मसिद्धिः । निरूपितश्चायमर्थः 'एक आत्मनः शरीरे भावात्' इत्युत्तरमीमांसायाम् । 'स मानसीन आत्मा जनानाम्' इति श्रुत्या च । स मानसप्रत्यक्षवेद्य इत्यात्मवादः । अधिकमपूर्वाधिकरणे वक्ष्यामः । वेदान्तिमतनिरासो मोक्षस्वरूपनिरूपणं चाकरे द्रष्टव्यम् । चित्राक्षेपतत्परिहारौ च पूर्वमेवोक्तावित्याकरोक्तषोडशवादसङ्ग्रहः । सूत्रार्थस्तु शब्दस्यार्थेन सम्बन्धः प्रत्याय्यप्रत्यायकभावलक्षण औत्पत्तिको नित्यः। जातेः शब्दार्थत्वस्य वक्ष्यमाणत्वाज्जातेर्नित्यत्वाच्छब्दस्य च नित्यत्वात्सम्बन्धस्यापि नित्यत्वम्। तस्य सम्बन्धस्य शक्तेः ज्ञानमुपदेशो वेदवाक्यं जनयति । प्रसिद्धपदसमभिव्याहारादिति शेषः । 'विकसितपद्मे मधूनि मधुकरः पिबति' इत्यादौ प्रसिद्धपद्मादिपदसमभिव्याहारेण मधुकरशब्दे शक्तिग्रहवत् 'चित्रया यजेत' इत्यादावपि प्रसिद्धपशुपदसमभिव्याहारात्पशुभाव्यकयागकरणकभावनायामलौकिक्यां शक्तिं जानतः यागः पशुसाधनमिति बोधस्सम्भवति । अनुपलब्धे प्रत्यक्षाद्यगृहीतेऽर्थे विधिजन्यज्ञानस्याव्यतिरेकश्च व्यभिचारोऽपि नास्ति। तत् तस्मादगृहीतार्थविषयकभ्रमसंशयान्यज्ञानजनकत्वाच्चोदना प्रमाणमेव । **अनपेक्षत्वात्**—पुरुषान्तरे प्रत्ययान्तरे चापेक्षाराहित्यात् । बादरायणग्रहणमादरार्थमिति ॥

**नस्य परार्थत्वात् ॥ १८ ॥ सर्वत्र यौगपद्यात् ॥ १९ ॥ सङ्ख्याभावात् ॥२०॥ अनपेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च योग्यस्य ॥ २२ ॥ लिङ्गदर्शनाच्च ॥ २३ ॥**

शब्दस्य नित्यत्वे तद्गतः प्रत्यायकत्वात्मा सम्बन्धोऽनादिः स्यात् । तदेव न सम्भवति, ताल्वादिव्यापारपूर्वापरकालयोर्गकारादेरश्रवणेनोत्पादविनाशयोरङ्गीकर्तव्यत्वात् 'स एवायं गकारः' इति प्रत्यभिज्ञायास्सादृश्यविषयकत्वेन गौणत्वात् । न च ताल्वादिव्यापारस्य अभिव्यञ्जकत्वमात्रं सम्भवति । तच्च श्रोत्रशब्दान्यतरनिष्ठग्रहणयोग्यताजनकसंस्कारोत्पादकत्वेन, तद्ग्रहणप्रतिबन्धकदोषनिरासेन वा स्यात् । उभयथाऽपि

---

**कर्मैके तत्र दर्शनात् ॥** आक्षेपिकीं सङ्गतिमभिप्रेत्याह--**शब्दस्येति ॥ तद्गत इति ॥** शब्दगत इत्यर्थः। **प्रत्यायकत्वात्मा**—प्रत्ययजननानुकूलशक्त्यादिसम्बन्धः। **तदेव**—नित्यत्वमेव। तदेवोपपादयति---**ताल्वादीति ॥** ताल्वादिव्यापारात्पूर्वकाले उत्तरकाले च शब्दप्रत्यक्षाभावेन ताल्वादिव्यापारकाले शब्दप्रत्यक्षेण चान्वयव्यतिरेकसहकृतप्रत्यक्षेण ताल्वादिव्यापारजन्यत्वावगमेन शब्दानां नित्यत्वासम्भवादित्यर्थः । अयमभिप्रायः । वर्णा अनित्याः यत्नानभिव्यङ्ग्यत्वे सति यत्नोत्तरमेवोपलभ्यमानत्वात् पटादिवत् इत्यनुमानेन उत्पन्नो गकार इत्यादिप्रतीत्या च अनित्यत्वसिद्धिरिति । तथा च पदपदार्थसम्बन्धस्य नित्यत्वमयुक्तं, पदानामनित्यत्वेन तदाश्रितसम्बन्धानामनित्यत्वस्यैव युक्तत्वात् । ततश्च पुरुषसम्बन्धात्पूर्वोक्तमप्रामाण्यं दुरुद्धरमिति भावः । सादृश्यं व्यक्तिद्वयानुगतो धर्मः । जातिरिति यावत् । अत एव तज्जातीयोऽयमिति कदाचित् प्रत्यभिज्ञा जायते । अन्यथा एकव्यक्तिकजात्यभावात् तादृशप्रत्यभिज्ञानुपपत्तेः । अत्रायं विशेषः । स्वरूपेण जात्युपस्थितौ सोऽयमिति प्रत्यभिज्ञा । जातित्वेनोपस्थितौ तज्जातीयोऽयमिति । अनभिव्यङ्ग्यत्वरूपविशेषणासिद्ध्या हेत्वसिद्धिमाशङ्क्य परिहरति---**न चेति ॥ तच्चेत्यादि ॥** ताल्वादिव्यापारस्याभिव्यञ्जकत्वं शब्दश्रोत्रयोः ग्राह्यत्वग्राहकत्वयोग्यताजनकसंस्कारोत्पादकतयेत्यर्थः । ताल्वादिव्यापाररूपोच्चारणे सति श्रोत्रे शब्दग्रहणयोग्यताजनकसामर्थ्यरूपसंस्कार उत्पद्यते । तेनैव उच्चारणेन शब्दे ज्ञानविषयत्वयोग्यताजनकसंस्कार उत्पद्यत इति भावः । पक्षान्तरमाह—**अन्यतरनिष्ठेति ॥** श्रोत्रशब्दान्यतरनिष्ठेत्यर्थः । श्रोत्रशब्दयोः नित्यत्वेऽपि श्रोत्रेण सर्वदा शब्दग्रहणवारणाय ग्रहणप्रतिबन्धकदोषविशेषः श्रोत्रशब्दयोरन्यतरत्रास्तीत्यङ्गीकर्तव्यम् । तादृशदोषनिरास उच्चारणेन भवतीत्यभ्युपगन्तव्यमित्यर्थः । पक्षद्वयमपि न सम्भवति इत्याह---**उभयथेति ॥** आकाशात्मकं श्रोत्रमिति नैयायिकाः ; पदार्थान्तरमिति नव्याः; अहङ्कारतत्त्वान्तरमिति साङ्ख्याः । 'दिशश्श्रोत्रम्' इति श्रुतेः दिगात्मकत्वमिति सि-

**दिगादिरूपश्रोत्रस्य नित्यव्यापकशब्दस्य वा संस्कृतत्वात्सर्वैर्ग्रहणापत्तिः। किञ्च—नित्यत्वपक्षे गकारादिव्यक्तेरेकैकत्वान्नानादेशेषूच्चारणेन देशभेदो नोपलभ्येत। तेन प्रतिदेशं भिन्ना एव शब्दा अनित्याश्चेति प्राप्ते—व्यक्तिबाहुल्यस्य तत्तत्प्रागभावध्वंसानां च कल्पने अतिगौरवापत्त्या उक्तप्रत्यभिज्ञायाः गौणत्वायोगेनावच्छेदककर्णशष्कुल्यामेव संस्कारोत्पत्त्यङ्गीकारेण चाभिव्यक्तेरपि निर्दोषतया गकारादिद्रव्यव्यक्तय एकैका नित्या विभ्व्यश्च। उत्पादविनाशप्रतीतिस्तु ध्वनिविषया। एकस्यैव नानादेशोपलम्भ आदि-**

---

द्भ्रान्तः। तदेवाह—**दिगादीति**॥ दिशो नित्यतया शब्दस्यापि तथात्वेन विभुत्वेन च एकत्र देशे शब्दोच्चारणे सति सर्वदेशस्थपुरुषैः ग्रहणापत्तिः। अभिव्यञ्जकोच्चारणस्य सत्त्वेन तत्प्रयोज्यसंस्कारस्य प्रतिबन्धकनिवृत्तेश्च सत्त्वादित्यर्थः। ननु दिशो विभुत्वेऽपि तदवच्छेदककर्णप्रदेशे संस्काराङ्गीकारान्न सर्वैर्ग्रहणापत्तिः। यथात्मनो विभुत्वेऽपि शरीरावच्छेदेनैव सुखाद्युपलब्धिः तद्वदित्यस्वरसादाह—**किञ्चेति**॥ **नित्यत्वपक्ष इति**॥ शब्दानामिति शेषः। शब्दस्य नित्यत्वपक्षे एकस्या एव व्यक्तेस्सर्वदेशसम्बन्धितया काशीस्थपुरुषेणोच्चारितो गकारः श्रुतः, प्रयागस्थपुरुषोच्चारितो गकारः श्रुत इति देशभेदेन गकारप्रतीतिर्न स्यादित्यर्थः॥ उपसंहरति-**तेनेति**॥ गकारादिवर्णानामनित्यत्वे एकस्मिन्नेव क्षणे अनेककोटिगकाराणां सर्वदेशोपलम्भानुसारेण सर्वदेशस्थगकाराणामुत्पत्तिविनाशाङ्गीकारात्तत्प्रागभावध्वंसानां तेषां कार्यकारणभावानां च कल्पनीयतया अत्यन्तगौरवापत्तेर्वर्णानां नित्यत्वमेव युक्तमिति सिद्धान्तमाह—**व्यक्तीति**॥ **अतिगौरवेति**॥अनेन ध्वनीनां मतद्वयेऽप्यनित्यत्वेन तत्प्रागभावादीनां सिद्धान्तेऽप्यावश्यकत्वेऽपि पूर्वपक्षे वर्णानामपि प्रागभावादिकल्पनमधिकमिति सूचितम्। प्रत्यभिज्ञाबलेनैकत्वसाधनाय पूर्वपक्षोक्तं गौणत्वं निरस्यति—**उक्तेति**॥ ननु गकारे सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकतया सिद्धाभिर्गत्वव्याप्यजातिभिःतारत्वमन्द्रत्वादिनानाजातिभिः शुकशारिकादिजन्यतावच्छेदकजातिभिश्च व्यक्तिभेदावश्यकत्वे प्रत्यभिज्ञाया जातिविषयकत्वमावश्यकमित्यत आह—**गौणत्वेति**॥ 'मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्' इति शिक्षावचनेन तासां जातीनां ध्वनिगतत्वात् न वर्णभेदकत्वमित्याशयः। ननु वर्णाः अनित्याः अव्याप्यवृत्तित्वे सति गुणत्वात् संयोगादिवत् इत्यनुमानेन अनित्यत्वसिद्धिः। ईश्वरज्ञानस्य शरीरानवच्छिन्नत्वेन व्याप्यवृत्तेर्वारणायाद्यम्। संयोगाभावनिरासाय गुणत्वमित्यत आह—**द्रव्येति**॥ द्रव्यत्वोपपादनाय **विभ्व्य इति**॥ सर्वत्रोपलम्भादिति भावः। ननु सामान्यवत्त्वे सति मनोभिन्नेन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वाद्गुणत्वं रूपादिवत्सिध्यतीति चेन्न; आकाशकालदिशां षडिन्द्रियवेद्यत्वेन गुणत्वाभावेन व्यभिचारात्। सम्भवति हि विशेषगुणसम्बन्धेनात्मन इव विषयसम्बन्धेनाकाशादेरपि प्रत्यक्षम्। इदानीमिह घटाकाशे ध्वनिरुत्पन्न इत्यनुभवात्। ततश्चानित्यत्वसाधकहेतुरसिद्ध इति भावः। ननु गकारस्यैकत्वे एकत्रैवोपलम्भः स्यात् नतु सर्वत्र। एकस्य देवदत्तस्य सर्वत्रो-

त्यस्येवाविरुद्धः । तस्मान्नित्यः शब्दो वर्णात्मकः । ध्वन्यात्मकोऽपि रथन्तरादिरूपो नित्य एव । अत एव 'सेयं गूर्जरी' इति प्रत्यभिज्ञाऽपि न गौणीत्यन्यत्र विस्तरः ॥ ५ ॥

(६)—उत्पत्तौ वाऽवचनास्स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात् प्रयोगसन्निकर्षस्स्यात् ॥ २६ ॥

पदपदार्थसम्बन्धानां नित्यत्वेऽपि वाक्यार्थानां वाक्यैस्सह सम्बन्धस्य सङ्केतितत्वेन तद्ग्रहसापेक्षतया वक्त्रिच्छाघटिततात्पर्यज्ञानसापेक्षतया च पुरुषसम्बन्धेन भ्रमप्रमादसम्भवान्न विधिवाक्यानामैकान्तिकं प्रामाण्यम्, अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषे सम्बन्धासम्भवाच्चेति प्राप्ते—पदैरभिहिता एव पदार्थाः स्वबो-

पलम्भाभावादित्यत आह—**एकस्यैवेति** ॥ देवदत्तस्यात्यन्तपरिच्छिन्नत्वेन सर्वत्रोपलम्भाभावेऽपि विभोर्वर्णस्यादित्यस्येव सर्वत्रोपलब्धिः सम्भवतीत्यर्थः ॥ **तस्मादिति** ॥ वर्णाः नित्याः स्वाभिव्यञ्जकध्वनिभिन्नत्वे सति श्रावणत्वात् शब्दत्वदिक्कालवदित्यनुमानमेव साधकमिति भावः । रथन्तरशब्दो गीतिसामान्यपरः। ततश्च गीत्यात्मकध्वनीनां नित्यत्वमिति द्रष्टव्यम्। **गूर्जरी**-रागविशेषः। तेन वर्णाभिव्यञ्जकध्वनीनामेवानित्यत्वमिति सिद्धम्। सूत्रार्थस्तु, क्रियत इति कर्म। कार्यं शब्दः। तत्सम्बन्धोऽप्यनित्य इति केचिन्मन्यन्ते। कुतः? तत्र दर्शनात्, तत्र प्रयत्नोत्तरकाले दर्शनात्प्रयत्नजन्यत्वनिश्चयादिति ॥

**उत्पत्तौ वाऽवचनाः स्युरर्थस्यातन्निमित्तत्वात्**॥ पदपदार्थसम्बन्धस्य नित्यत्वेन पुरुषसम्बन्धप्रयुक्ताप्रामाण्याभावेऽपि वाक्यार्थसम्बन्धस्य पुरुषसम्बन्धाधीनतयाऽप्रामाण्यमिति शङ्कानिराकरणायैतद्विचारारम्भः। वाक्यवाक्यार्थयोः सम्बन्धः पुरुषाधीनो न वेति सन्दिह्य पूर्वपक्षमाह--**पदपदार्थेत्यादि** ॥ **सम्बन्धस्येति** ॥ वैयाकरणाः वाक्यस्य वाक्यार्थे शक्तिरिति वदन्ति । अन्ये तु मुक्तशरन्यायेन एकयैवाभिधया पदार्थस्मृतिः वाक्यार्थबोधश्च भवतीति वदन्ति । परे तु वाक्यस्य वाक्यार्थे तात्पर्यरूपं वृत्त्यन्तरमिति स्वीकुर्वन्ति । सर्वथा पुरुषसम्बन्धापेक्षासत्त्वाच्चोदनानामप्रामाण्यमिति भावः ॥ **वक्त्रिच्छेति** ॥ तत्प्रतीतीच्छया वक्त्रोच्चार्यमाणत्वं तात्पर्यं; तज्ज्ञानं सर्वत्र शाब्दबोधे कारणं; नानार्थानुरोधात् यद्विशेषयोरिति व्याप्तेः । कथमन्यथा स्वाध्यायविधिस्तात्पर्यग्राहकः स्यात् ? अनुगतप्रकरणादिज्ञानानां हेतुत्वकल्पने गौरवादिति भावः । ननु वर्णानां नित्यत्वेन तत्समुदायरूपाणां पदानामपि नित्यतया वाक्यघटकपदानामेव सर्वत्र बोधजनकत्वसम्भवात् न पुरुषप्रयुक्ताप्रामाण्यमित्यत आह—**अनन्तवाक्यार्थेति** ॥ नानाविधवाक्यार्थबोधजनकनानावाक्यघटकीभूतानामित्यर्थः ॥ **सम्बन्धासम्भवादिति** ॥ सम्बन्धप्र-

ध्यसम्बन्धरूपया लक्षणया वाक्यार्थभूतां भावनां समभिव्याहारविशेषबलाद्विशिष्य बोधयन्ति । तथाच 'यजेत स्वर्गकामः' इत्यादौ स्वर्गकामनिष्ठा यागकरणिका स्वर्गभाव्यिका· प्रवर्तनाविषयो भावनेत्यादिरीत्या भावनाविशेष्यकबोधस्य सर्वविधिष्वैकरूप्येण न तदानन्त्यप्रयुक्तसम्बन्धाग्रहः । तात्पर्यं च शब्दगत एव धर्मविशेषः । तद्ग्राहकश्चाध्ययनविध्यादिरेवेति न पुरुषसम्बन्धप्रयुक्तं विधीनामप्रामाण्यम् ॥

हणासम्भवादित्यर्थः । अयं भावः । वाक्यघटकपदानां वाक्यार्थबोधकत्वं न सम्भवति । वाक्यार्थानामानन्त्येन कालान्तरीयदेशान्तरीयभिन्नाभिन्नवाक्यार्थैस्सह पदानां प्रत्येकं सम्बन्धस्य ग्रहीतुमशक्यत्वात् । ततश्च वाक्यानामेव बोधकत्वं वक्तव्यम् । तेषां चानुपूर्वीविशेषविशिष्टानामनित्यत्वेन पुरुषविशेषनियन्त्रिततया पूर्वोक्तरीत्याऽप्रामाण्यमिति भावः । शक्यादशक्योपस्थितिर्लक्षणेति मतेनाह—पदैरित्यादि ॥ लक्षणायाः शब्दवृत्तित्वात्पदानामेव लक्षणा युक्तेति नव्यमतेनाह—स्वबोध्येति ॥ पदानीत्यादिः। तथा च पदार्थाः वाक्यार्थं बोधयन्तीत्येकः पक्षः। पदान्येव वाक्यार्थं बोधयन्तीत्यपर इति पक्षद्वयाभिप्रायकमिदमिति केचित् । वस्तुतस्तु एक एव पक्षो मूलानुमतः । तथा हि—पदैरभिहितपदार्थानां स्वबोध्यवाक्यसम्बन्धस्य वाक्यार्थे सत्त्वाल्लक्षणयांऽशत्रयविशिष्टभावनाप्रतिपादनोपपत्तेर्न पुरुषसम्बन्धप्रयुक्तमप्रामाण्यमित्यर्थः । वाक्येन च वाक्यार्थे प्रतीयमाने न वृत्त्यपेक्षा । आकाङ्क्षायोग्यतादिरूपकारणवशादेव वाक्यार्थबोधोपपत्तेः ॥ **भावनामिति** ॥ 'भावनैव हि वाक्यार्थः स्वकारकविशेषिता' इति वार्तिकोक्तेरिति भावः ॥ **समभिव्याहारेति** ॥ तत्तद्धातुकारकादिसमभिव्याहारादित्यर्थः। ननु पदैरुपस्थितानां पदार्थानां परस्परसमभिव्याहारादेवान्वयबोधोपपत्तेः किं लक्षणयेत्यत आह—**विशिष्येति** ॥ यागादिकरणकभावनात्वरूपेणेत्यर्थः । ज्ञानेच्छाकृतीनां समानप्रकारकत्वेन कार्यकारणभावनिर्वाहाय उक्तरूपेण शाब्दबोधस्यावश्यकतया लक्षणाया आवश्यकत्वादिति भावः । तदेवोपपादयति—**तथाचेति** ॥ यागशब्दो धात्वर्थोपलक्षकः । स्वर्गकामशब्दस्तत्तत्फलकामरूपाधिकार्युपलक्षकः। स्वर्गभाव्यकेत्यत्र स्वर्गशब्दस्तत्तत्कार्यपर इति सर्वत्रैकरूपत्वाद्वाक्यार्थस्य न तदानन्त्यप्रयुक्तसम्बन्धाग्रह इति न पूर्वोक्तदोष इति भावः । ननु तथापि तत्तद्वाक्यार्थे तात्पर्यज्ञानस्य कारणतया तात्पर्यस्य पुरुषेच्छाधीनत्वेन पुरुषसम्बन्धो दुर्वार इत्यत आह—**तात्पर्यं चेति** ॥ **शब्दगत एव धर्म इति** ॥ तत्तदर्थप्रतीतिजनकत्वमेव तात्पर्यम् । न त्विच्छाघटितमिति नोक्तानुपपत्तिरिति भावः । ननु तात्पर्यग्रहणार्थं प्रकरणादीनामपेक्षासत्त्वात्प्रकरणस्य भोजनप्रयाणादिरूपस्य पुरुषसम्बन्धानुप्रवेशो दुर्वार इत्यत आह—**तद्ग्राहकश्चेति** ॥ तात्पर्यग्राहकश्चेत्यर्थः ॥ **अध्ययनविधिरिति** ॥ 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिनाधीतस्वाध्यायेन यद्यत्फलं सम्पादयितुं शक्यं तत्सर्वं सम्पादयेदिति बोधनात्सर्वेषां वेदानां फलवदर्थावबोधकत्वबोधनेन तत्तदर्थावबोधकतासिद्धे-

स च विधिस्त्रिविधः—परिसङ्ख्याविधिर्नियमविधिरपूर्वविधिश्चेति । शब्दतः फलतो वा यस्य शास्त्रस्यान्यनिवृत्तिर्विषयस्स परिसङ्ख्याविधिः । यथा—'नानृतं वदेत्'[1] 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते'[2] इत्यादौ । अत्रानृतवदननिवृत्तेर्गर्दभरशनारूपशेषितो मन्त्रनिवृत्तेश्च विधेयत्वात् । अत्र चैतद्विध्यभावे प्रायश औत्सर्गिकी तत्र चान्यत्र च प्राप्तिः । न तु सापि लक्षणघटिकेति ध्येयम् । अत एव एकस्मिन् कार्येऽनृतस्य सत्येन सह पाक्षिकप्राप्तावपि 'नानृतं वदेत्' इति परिसङ्ख्यैवेयं न तु नियमविधिः । अत एव—यस्य शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमश्शास्त्रविषयस्स नियमविधिः । यथा—"सत्यमेव वदेत्" 'व्रीहीनवहन्ति'

रित्यर्थः ॥ प्रसङ्गात् विधिं विभजते—**स चेति** ॥ उच्यत इति शेषः । 'परिसङ्ख्या' 'नियमार्था पुनः श्रुतिः' 'विधिर्वा स्यादपूर्वत्वात्' इति सूत्रैः विधित्रयस्य प्रतिपादनात्त्रिविधो विधिरिति भावः। ननु निषेधानां अविभजनात् न्यूनत्वमिति चेन्न; सर्वनिषेधानां परिसङ्ख्याविध्यन्तर्भाव इति राणकपक्षमाश्रित्य विभागकरणादिति भावः । 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति गीयते ॥' इति वार्तिकानुसारेण लक्षणान्याह—**शब्दत इति** ॥ शक्तिलक्षणान्यतरवृत्त्येत्यर्थः । निवृत्तिनियमतदितरप्रापकाः क्रमेण परिसङ्ख्यादय इति दीक्षितोक्तनिष्कर्षमनुसृत्येदं लक्षणमुक्तमिति द्रष्टव्यम् ॥ **फलत इति** ॥ श्रुतार्थे विधिवैयर्थ्यज्ञानेन निवृत्तौ अर्थान्तरे यस्य विधेः तात्पर्यमवगम्यते सोऽपि विधिः परिसङ्ख्यैवेत्यर्थः । क्रमेणोदाहरति—**यथेति** ॥ **अश्वाभिधानी**—अश्वबन्धनरज्जुः । तत्राद्ये नञ्पदादेव निवृत्तिर्बोध्यते । द्वितीये तात्पर्यगत्येत्याह—**अनृतेति** ॥ 'नानृतं वदेत्' इत्यादिना अनृतवदननिवृत्तिर्विधीयते । 'इत्यश्वाभिधानीमादत्ते' इत्यादौ गर्दभरशनारूपशेषितो मन्त्रनिवृत्तिर्विधीयते । एतद्विध्यभावे तर्किते सत्येन सह अनृतस्य एकस्मिन्कार्ये प्राप्तत्वात् । मन्त्रस्य गर्दभरशनायामपि लिङ्गप्राप्तत्वात् । एतद्विध्योः अनृतवदननिवृत्तेर्गर्दभरशनादानान्मन्त्रनिवृत्तेश्च तात्पर्यविषयत्वादित्यर्थः । ननु तत्र चान्यत्र चेति चकाराभ्यां उभयत्र समुच्चित्य प्राप्तिः प्रतिपादिता । सा च न सार्वत्रिकी । 'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ विधिप्रवृत्तेः प्राक् शशमार्जारभक्षणयोः नित्यं समुच्चित्य प्राप्त्यभावादिति चेन्न; एतदभिप्रायेणैव प्रायश इत्युक्तत्वात् । **न तु सापीति** ॥ तथा च निवृत्तिबोधकविधित्वमात्रं लक्षणमिति भावः । **अत एव**—प्राप्तेः लक्षणघटकत्वाभावादेव । नियमविधिं लक्षयति—**शब्दतः फलतो वेति** ॥ **पाक्षिकः**—कादाचित्कः । **अयोगः**—प्राप्त्यभावः । तस्य व्यावृत्तिः व्यवच्छेद इत्यर्थः । द्वयोरुदाहरणमाह—**सत्यमेवेति** ॥ अत्र वैयाकरणाः । अश्वाभिधानीनित्यत्रादानेऽश्वरशनेतराकर्मकत्वस्येवावहननेनैव वितुषीकुर्यादित्यादौ अवहननेतराकरणकत्वस्य विवरणवाक्यात्

१. तै. सं. २—५—५.  २. तै. सं. ५—१—२.

इत्यादौ । अत्र नियमस्यैवायोगव्यावृत्त्यर्थकेनैवकारेण विधेयत्वात्, आक्षेपतः पूर्वप्रवृत्तस्यावघातविधेर्नियमफलकत्वाच्च । नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तको विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तकश्चेत्यादिप्रकारेण बोध्यः । 'व्रीहीनवहन्ति' 'उत्तरेऽहन्द्विरात्रस्य गृह्यते' इत्यादौ आद्यः, एतद्विध्यभावे आक्षेपेणाति-

---

बोधोऽपि उभयोस्समानः । मन्त्रलिङ्गादाक्षेपतश्च पूर्वं प्रवृत्तयोरुभयोरत्यन्ताप्राप्तप्रापकत्वमप्यविशिष्टम् । गर्दभरशनाविदलनयोर्निवृत्तिरूपं फलमपि समानमेवेति न नियमपरिसङ्ख्ययोर्भेद इति वदन्ति । तन्निरासायाह—**नियमस्यैवेति ॥** अयमाशयः । नियमविधाववघाताप्राप्यव्रीह्यंशे तत्प्रापणं विना विदलनादेर्व्यावर्तयितुमशक्यत्वात् तन्निवृत्तिप्रयोजकत्वेन प्रथमोपस्थितत्वाद्विधेयगतत्वेन प्रत्यासन्नत्वाच्चावघाताभावरूपायोगव्यवच्छेद एव फलम् । उपायान्तरनिवृत्तिश्च चरमोपस्थितत्वादविधेयगतत्वेन विप्रकृष्टत्वाच्च तदनुनिष्पादिनी न फलम् । परिसङ्ख्याविधिषु तु अश्वगर्दभरशनयोः मन्त्रस्य नित्यप्राप्तत्वेन तदभावाभावस्य फलत्वायोगेनादाने तदन्यकर्मकान्यत्वरूपान्ययोगव्यवच्छेद एव फलमित्याश्रयणीयम् । ततश्च विवरणवाक्यगत एवकारोऽपि यथायोगमीदृशार्थपर एव । एवकारस्याभावत्वेनाभावद्वये पुष्पवन्तादिपदस्य ज्योतिर्द्वये शक्तिवदेका शक्तिः । तौ चाभावौ क्रियासङ्गतैवकारस्थले अत्यन्ताभावरूपौ । उपपदसङ्गते तु तस्मिन्नन्योन्याभावरूपौ । तत्राद्येऽभावस्याभावान्तरे तस्य च क्रियायां प्रतियोगितासम्बन्धेन अन्वयादभावप्रतियोग्यभावप्रतियोग्यवहननकरणिका भावनेति बोधः । समानसंवित्संवेद्यतयावघाताभावो नेति बोधः । निपातार्थस्य नामार्थ इव धात्वर्थेऽपि साक्षादन्वयस्य व्युत्पत्तिसिद्धत्वादवघाताभावाभाववती भावनेति वा प्राथमिको बोधोऽस्तु । अन्योपसर्जनत्वेनान्विताया अपि क्रियायाः स्वप्रतियोगिकत्वसम्बन्धेनाभावेऽन्वयात् । ससम्बन्धिकार्थकपदस्थले चैत्रादन्यस्माच्च गृहाणेत्यादौ तथा व्युत्पत्तेः । अन्त्ये तु यत्पदार्थान्वित एवकारः तत्पदगतप्रकृत्यर्थविभक्त्यर्थप्रतियोगिकावेवान्योन्याभावौ। धर्मिणोऽप्येकस्य निरूढलक्षणयात्राधिको बोधः। व्युत्पत्तिवैचित्र्याच्च यथायोगं तेषामन्वये अश्वाभिधान्यन्याकर्मकमश्वाभिधानीकर्मकं चादानमिति बोधः। 'अत्रह्येवावपन्ति' इत्यत्र गायत्र्याद्यन्यानधिकरणको गायत्र्यधिकरणकश्चावाप इति बोध इति । अधिकं मन्त्राधिकरणे वक्ष्यते ॥ **आक्षेपत इति ॥** 'व्रीहिभिर्यजेत' इति पुरोडाशसाधनतयावगतानां व्रीहीणां तुषविमोकाकाङ्क्षायां तत्साधनत्वेन विदलनादेः कल्पनमाक्षेपः । ततः पूर्वं प्रत्यक्षविधेः प्रवृत्तत्वेऽपि तद्वैयर्थ्यस्य नियमप्रापकत्वेनैव परिहरणीयत्वादिति भावः ॥ **नियम इति ॥** नियमशरीरघटक इत्यर्थः । पाक्षिकायोगद्वैविध्येन नियमविधिद्वैविध्यमाह—**तन्मात्रेति ॥** तद्विधिमात्राप्रवृत्तिनिमित्तक इत्यर्थः। मात्रचा विध्यन्तराप्रवृत्तिसाहित्यव्यवच्छेदः । तत्राद्यमुदाहरति—**व्रीहीनित्यादि ॥** 'व्रीहीनवहन्ति' इत्यादौ विधिमात्रप्रवृत्तौ आक्षेपेणावघातस्येव विदलनादेरपि प्रसक्तावघातायोगप्रसक्त्या तद्व्यवच्छेदेन नियमविधित्वमित्यर्थः ॥ **उत्तरेऽ**

देशेन वाऽवहननस्य षोडशिग्रहणस्य च पक्षप्राप्तत्वात् । 'व्रीहिभिर्यजेत' इत्यादौ द्वितीयः, यवविध्यभावसहितैतद्विध्यभावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात् । एवंविधभेदसत्त्वेऽप्ययोगव्यावृत्तिमात्रस्य लक्षणे प्रवेशान्न कोऽपि दोषः । यत्तु--दृष्टार्थत्वं नियमविधिलक्षणं कैश्चिदुक्तं--तत् 'उत्तरेऽहन्' इत्यादावव्याप्तत्वादुपेक्षितं, षोडशिग्रहणाभ्यासस्यादृष्टार्थत्वात् । अत एव---नियमपरिसङ्ख्यातिरिक्तफलको विधिरपूर्वविधिः । यथा---'व्रीहीन् प्रोक्षति' इत्यादौ । अत्र प्रोक्षणादिप्राप्तेरेव फलत्वात् । एतेषां चोपाधीनां क्वचिदुदाहरणे साङ्कर्येऽपि न दोष इति न विधिरसायनोक्ततत्तल्लक्षणदूषणावकाशः । विस्तरेण चैतदस्मन्मीमांसाकौस्तुभे द्रष्टव्यम् । उत्पत्तिविध्यादयस्तद्भेदास्तत्रतत्र विवेचयिष्यन्ते ॥ ६ ॥

---

**हन्निति** ॥ एतद्विध्यभावे षोडशिग्रहणस्य प्रकृतिनिश्चोदकेन विकल्पेन प्राप्ततया षोडशिग्रहणाभावपक्षे अयोगप्रसक्त्या तद्व्यवच्छेदेन षोडशिग्रहणनियमविधित्वमित्यर्थः । द्वितीयमुदाहरति---**व्रीहिभिरिति** ॥ यवविध्यभावसहितव्रीहिविध्यभावे व्रीहीणां यागविध्याक्षिप्तानां पक्षप्राप्त्या अयोगव्यावृत्तिसम्भवादित्यर्थः । अननुगमदोषं परिहरति---**एवंविधेति** ॥ **अयोगव्यावृत्तिमात्रस्येति** ॥ मात्रचाऽयोगे पाक्षिकत्वस्य तन्मात्रविध्यप्रवृत्तिनिमित्तकान्यतरत्वस्य च विशेषणस्य निरासः । तथा चायोगव्यावृत्तितात्पर्यकविधित्वस्यैव नियमविधिलक्षणत्वान्नोक्ताननुगम इति भावः । कस्यचिन्मतं दूषयितुमुपन्यस्यति -**यत्त्विति** ॥ **दृष्टार्थत्वमिति** ॥ 'व्रीहिभिर्यजेत' इत्यादौ यागनिर्वृत्त्यादिरूपदृष्टप्रयोजनसत्त्वादिति भावः । अव्याप्तिमुपपादयति--**षोडशीति** ॥ अपूर्वविधिं लक्षयति--**नियमेत्यादि** ॥ अभावत्वावच्छिन्नविषयताशून्यबोधतात्पर्यकविधिरित्यर्थः। नियमपरिसङ्ख्ययोः अभावविषयकबोधतात्पर्यकत्वान्नातिव्याप्तिः। अदृष्टार्थत्वमपूर्वविधित्वमित्यपि केचित्। ननु 'सृष्टीरुपदधाति'इत्यत्र मन्त्राणां प्राकरणिकत्वेऽपि पुनर्विधानं मध्यमाचितिसम्बन्धार्थम् इष्टकाग्रहणोपधानयोरङ्गत्वेन समुच्चित्य प्राप्तानां तेषां ग्रहणपरिसङ्ख्यार्थं च । इष्टकानामपि समुच्चयेन पार्थक्येन वा उपधानस्य पक्षतः प्राप्तेः सार्थक्यनियमार्थं चेत्यन्यतमविधिरूपत्वस्वीकारे इतरलक्षणयोरतिव्याप्तिरित्यत आह--**एतेषां चेति** ॥ उपधेयसङ्करेऽप्युपाधेरसङ्कर इति न्यायेन विधेरेकत्वेऽपि तन्निष्ठधर्माणां असङ्कीर्णत्वान्न दोष इति भावः। नन्वेवं 'दण्डी प्रैषानन्वाह'इत्यत्र एतद्विधिमात्राप्रवृत्तौ मैत्रावरुणाय दत्तस्य दीक्षादण्डस्य प्रैषानुवचनरात्रिप्रचारादिकार्याणां समुच्चित्य प्राप्तौ कार्यपरिसङ्ख्या स्यात्। 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' इति विध्यप्रवृत्तिसहितैतद्विध्यप्रवृत्तौ तु दीक्षादण्डस्य दाने मानाभावेन उक्तकार्याणामालम्बनसौकर्याय नियतोपायप्राप्तवुपायनियमश्च स्यात् । तेन दैक्षादन्योऽपि दण्डः प्रकृतौ धार्यः स्यादित्यत आह--**विस्तरेण चेति** ॥ 'तर्किते क्रीते सोमे' इति विधेरभावेऽपि वस्तुतस्तत्सत्त्वान्नानुष्ठानविरोधः । विध्यन्तराप्रवृत्तिसाहित्यस्य

**(७)—वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ अनित्यदर्शनाच्च ॥ २८ ॥ उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्या प्रवचनात् ॥ ३० ॥ परन्तु श्रुतिसामान्यम् ॥ ३१ ॥ कृते वा विनियोगस्स्यात्कर्मणस्सम्बन्धात् ॥ ३२ ॥**

वेदानां भारतादिवाक्यवत्पौरुषेयत्वमेव वाक्यत्वाद्युक्तं, कर्तुरस्मरणस्य चिरकालिककूपादाविवानादरेणोपपत्तेः; अन्यथा छन्दोगप्रसिद्धोहग्रन्थस्यापि तथात्वापत्तेः;

---

लक्षणे निवेशनाभावाद्वा 'दण्डी प्रैषान्' इति विधिविहितदण्डदानोत्तरकालमेव प्रवृत्तत्वेन तत्पूर्वकाले 'क्रीते सोमे' इति विधेः सत्त्वाच्चेति भावः ॥ **उत्पत्तिविध्यादय इति** ॥ आदिपदेन विनियोगविधिप्रयोगविध्यधिकारविधयो गृह्यन्ते । तत्र कर्मस्वरूपबोधको विधिरुत्पत्तिविधिः । अङ्गसम्बन्धबोधको विधिः विनियोगविधिः । कृतिसाध्यताबोधको विधिः प्रयोगविधिः । इष्टसाधनताबोधको विधिः अधिकारविधिरिति विधिभेदाः । एतेषां लक्षणान्युदाहरणानि च तत्र तत्र वक्ष्यन्त इत्यर्थः । सूत्रार्थस्तु, वाशब्दः प्रत्यवस्थाने । उत्पद्यते अधिगम्यत इत्युत्पत्तिः । वाक्यार्थो धर्मः ; अलौकिकश्रेयःसाधनयागादिभावनारूपः। तत्र विषये चोदना अवचनाः । करणे ल्युट् । अप्रमाणानि । कुतः? अर्थस्यातन्निमित्तत्वात् । धर्मावबोधकार्थस्य चोदनाहेतुकत्वाभावात् । चोदनावाक्यस्य धर्मावबोधे सामर्थ्याभावादिति ॥

**वेदांश्चैके सन्निकर्षं पुरुषाख्याः** ॥ वेदानां पौरुषेयत्वान्न चोदनानां धर्मप्रामाण्यमित्युत्थानात्सङ्गतिः । वेदानां पौरुषेयत्वमपौरुषेयत्वं वेति सन्देहे पूर्वपक्षमाह—**वेदानामिति** ॥ वेदः पौरुषेयः वाक्यत्वात् भारतादिवाक्यवत् इत्यनुमानेन वेदानां पौरुषेयत्वमित्यर्थः । प्रलयकाले अध्येतॄणामभावेन वेदोऽस्तीत्यत्र प्रमाणाभावात् सृष्ट्यादौ सम्प्रदायप्रवर्तनाय पुनर्वेदनिर्मातास्तीत्यङ्गीकर्तव्यम् । अत एव तेन यत्प्रतीत्युद्देशेन यद्वाक्यं प्रयुक्तं तद्वाक्यं तत्तात्पर्यकमिति तात्पर्यनिश्चयोऽपि लोकसिद्धवाक्य इव पौरुषेयत्वपक्षे युज्यत इति ॥ **युक्तमिति** ॥ प्रयुञ्जानस्येति भावः । न चैवं स्मृतीनां वेदतुल्यप्रामाण्यं स्यात् । पौरुषेयत्वाविशेषादिति वाच्यम् ; 'तद्विदां च स्मृतिशीले' इति वचनेनाग्न्यादिप्रणीतवेदाध्ययनशालिमन्वादिप्रणीतत्वेन वैषम्यादिति भावः । ननु कर्तृस्मरणाभावात्कथं पौरुषेयत्वमित्यत आह—**कर्तुरिति** ॥ चिरकालिककूपादौ कर्तृस्मरणाभावेऽपि यथा पौरुषेयत्वनिश्चयः तथाध्येतॄणां अनादरेण कर्तुरस्मरणोपपत्तेः न तद्वशेन अपौरुषेयत्वनिश्चय इत्यर्थः ॥ **अन्यथा**—कर्तृस्मरणाभावमात्रेणापौरुषेयत्वे ॥ **छन्दोगेति** ॥ सामवेदे ऊहाख्यग्रन्थविशेषो दृश्यते । स च पौरुषेय

"तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त" इति श्रुतावेवोत्पत्तिकथनाच्च काठकादिसमाख्यावशादपि पौरुषेयत्वमेवेति प्राप्ते—वाक्यत्वहेतुकानुमानस्याप्रयोजकत्वेन जन्यज्ञानमूलकत्वेन सोपाधिकत्वाच्च कर्तुरस्मरणाच्चापौरुषेयत्वम् । न चानादरात्कर्तुरस्मरणं; अक्षरशो विस्मरणाभावाय शिक्षाच्छलाक्षरादीन्रचितवतामृषीणां तदधीनप्रामाण्यकस्मृतिकर्तृसामान्यमप्यविस्मरतां सर्वज्ञानां वेदकर्त्रनादरोक्तेरतिसाहसत्वात् । ऊहग्रन्थस्य पौरुषेयत्वं तु नवमे वक्ष्यते । समाख्या तु प्रवचननिमित्तैव । "तेभ्यस्तेपानेभ्यः"

---

इति नवमे सिद्धान्तयिष्यते । कर्तृस्मरणाभावमात्रेणापौरुषेयत्वाङ्गीकारे तत्रापि तदापत्त्या तदधिकरणसिद्धान्तो विरुध्येतेत्यर्थः । कर्तृप्रतीतेः श्रुतिसिद्धत्वादपि पौरुषेयत्वमित्याह—**तेभ्य इति** ॥ अग्निवाय्वादित्येभ्य इत्यर्थः। तेपानेभ्यः तप्तवद्भ्यः । न चास्य 'उच्चैर्ऋचा क्रियते' इति विधित्रयार्थवादत्वेन स्तुत्यर्थत्वात् नैतद्वाक्येन वेदानामुत्पत्तिसिद्धिरिति वाच्यं; अर्थवादत्वेऽपि मानान्तरसिद्धिविरोधयोरभावेन 'यन्न दुःखेन सम्भिन्नम्' इत्यादिवत्स्वार्थे प्रामाण्यस्य अवर्जनीयतया यथाश्रुतार्थपरत्वादिति भावः ॥ **काठकादीत्यादि**पदेन शाकल-वाष्कल-तैत्तरीयादिसमाख्यापरिग्रहः ॥ **अप्रयोजकत्वेनेति** ॥ अनुकूलतर्काभावादिति भावः । नन्वनुकूलतर्काभावेऽपि 'जातिमान् सत्त्वात्' इत्यादिवद्दोषाभावमात्रेण अनुमानोपपत्तिरित्यत आह—**जन्यज्ञानेति** ॥ 'यत्र पुरुषकृतिजन्यत्वं तत्र जन्यज्ञानमूलकत्वं, यथा घटादौ' इति साध्यव्यापकतायाः पक्षे साधनाव्यापकतायाश्च सत्त्वादित्यर्थः । **शिक्षा**—पाणिन्यादिकृतग्रन्थविशेषः । **छलाक्षरं**—सामगेषु प्रसिद्धं, रावणकृतम् । आदिना प्रातिशाख्यसङ्ग्रहः । तथा च वेदाक्षराविस्मरणाय बहुतरग्रन्थविशेषरचनापूर्वकवेदसंरक्षणैकव्यापाराणां सर्वज्ञानां महर्षीणां वेदकर्तृविषयेऽनादरस्यायुक्तत्वात् अपौरुषेया एव वेदा इत्यर्थः । ऊहग्रन्थस्यापौरुषेयत्वं निरस्यति—**ऊहग्रन्थस्येति** ॥ **नवम इति** ॥ योनिसाम्नामुत्तरासूहग्रन्थपाठादेव प्राप्ततया 'यद्योन्यां तदुत्तरयोः गायति' इति प्रापकवचनवैयर्थ्यादिनेति भावः । समाख्यया पौरुषेयत्वमुक्तं निरस्यति—**समाख्या त्विति** ॥ **प्रवचनेति** ॥ 'तेन प्रोक्तम्' इत्यर्थेऽपि तद्धितविधानादिति भावः । न चैवं स्मृतिष्वपि समाख्यायाः प्रवचननिमित्तत्वेनोपपत्तिसम्भवात्तासामप्यपौरुषेयत्वापत्त्या वेदतुल्यं प्रामाण्यं स्यादिति वाच्यम्; तत्तत्कर्तृकत्वेन तास्वेव कथनात्, कर्तृस्मरणदार्ढ्याच्च मानवादिसमाख्यायाः प्रवचननिमित्तत्वासम्भवात् । किञ्च वेदाध्ययनार्थमेवोपनयनविधानाद्गायत्र्यादिवेदोपदेशेन ब्राह्मण्यप्राप्तेः स्मृत्यध्ययनादौ तदभावान्न वेदवत्स्मृतीनां प्रामाण्यम् । किन्तु तन्मूलकत्वमेवेति भावः। 'तेभ्यस्तेपानेभ्यः' इति श्रुत्युक्तं पौरुषेयत्वं निरस्यति—**तेभ्य इति** ॥ 'छन्दाँसि जज्ञिरे' इति श्रुत्या ईश्वरसकाशाद्वेदाविर्भावप्रतिपादनेनाग्न्यादिभ्यस्तदुत्पत्त्यङ्गीकारे तद्विरोधापत्त्या 'विरोधे गुणवादः स्यात्' इत्युक्तरीत्या 'केवलात्' इत्यादि प्रशंसार्थत्वमित्यर्थः । न च वैपरीत्यं किं न स्यादिति वाच्यम्; मन्त्राणां स्वार्थप्रतिपादनैकप्रयोजनकत्वेन

इति श्रुतिस्तु "छन्दाँसि जज्ञिरे तस्मात्"[1] इति मन्त्रवर्णविरोधादन्यार्थिकैव । अत एव--"अनादिनिधना वेदवागुत्सृष्टा स्वयम्भुवा" इत्यादिस्मृतय उपपद्यन्ते । सृष्टिप्रलयेश्वराद्यङ्गीकारे तु कल्पादौ प्रवचननिमित्ता श्रुतिस्सम्भवतीत्यपौरुषेया एव वेदा इति ॥ ७ ॥

इति खण्डदेवकृतायां भाट्टदीपिकायां प्रथमाध्यायस्य

प्रथमः पादः.

---

प्रयोजनान्तरसाधारणार्थवादापेक्षया प्राबल्यादिति भावः ॥ **अत एव**--नित्यत्वादेव । **इत्यादीति ॥** आदिपदेन 'शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इत्यादिसङ्ग्रहः । सृष्ट्यादौ सम्प्रदायप्रवर्तनार्थं पौरुषेयत्वमुक्तं निरस्यति---**सृष्टीति** ॥ ईश्वरस्यैव गतकल्पीयवेदप्रवचनकर्तृत्वोपपत्तेर्वेदानां नित्यत्वमिति भावः । सूत्रार्थस्तु, **एके**---तार्किकाः, **वेदान् सन्निकर्षं गमयन्ति**--सन्निकृष्टकालान् वदन्ति । यतः ते वेदाः पुरुषाख्याः पैप्पलादं कालापं काठकमित्याधुनिकपुरुषैस्समाख्यायमाना भवन्ति । अनया हि समाख्यया पुरुषविशेषसम्बन्धो वेदानामवगम्यत इति । अत्र केचित् अनेनाधिकरणेनापौरुषेयत्वमात्रं साधितम्, प्रामाण्यं त्वर्थवादाधिकरण एव साधनीयमित्याहुः । तदर्थवादाधिकरणे निराकरिष्यत इति ध्येयम् । अत्र पादे "आक्षेपेष्वपवादेषु प्राप्तौ लक्षणकर्मणि । प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते' इत्यभियुक्तोक्तेः प्रायेण प्रयोजनं नोक्तमिति द्रष्टव्यम् । इति शिवम् । हरिः ओम् ॥

इति श्रीमच्चोळदेशाग्रपूज्यविद्वत्समाजविराजमानशाहजीन्द्रपुरनिवासिकामकायन-
विश्वामित्रगोत्रजलधिकौस्तुभ श्रीमन्नृसिंहसूरिवरसून्वाश्वलायनसूत्र-
होशनिकर्नाटकजातीयवाञ्छेश्वरयज्वनः कृतिषु भाट्टदीपिका-
व्याख्याने भाट्टचिन्तामणौ प्रथमस्याध्यायस्य प्रथमः पादः॥
श्रीशिवार्पणमस्तु ॥ श्रीकृष्णार्पणमस्तु ॥
॥ शिवाय नमः ॥

---

१. तै. आ. ३-१२.

# ॥ अथ द्वितीयः पादः ॥

(१)—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधात् ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यं च साम्प्रदायिकम् ॥ ८ ॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधस्स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥ गुणवादस्तु ॥ १० ॥ रूपात्प्रायात् ॥ ११ ॥ दूरभूयस्त्वात् ॥ १२ ॥ स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषस्स्यात् ॥ १७ ॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥

"वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति"[1] इत्याद्यर्थवादानां विधिप्रतिषेधवदेव कर्तृस्मरणाभावादपौरुषेयत्वे पूर्वाधि-

---

## अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

### ॥ अथ द्वितीयः पादः ॥

**आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानां तस्मादनित्यमुच्यते** ॥ अत्र धर्माधर्मप्रमाणनिरूपणात् लक्षणसङ्गतिः । विध्यतिरिक्तवेदवाक्यप्रामाण्यनिरूपणात् पादसङ्गतिः । अनन्तरसङ्गतिस्तु अनुपदं स्फुटीभविष्यति । तथा पूर्वस्मिन् पादे चोदनाप्रामाण्यं प्राधान्येन निरूपितम् । अधुना विहितार्थस्तावकत्वस्मारकत्वाभ्यां विधिशेषभूतयोरर्थवादमन्त्रयोः प्रामाण्यं निरूप्यत इति पादान्तरत्वमानन्तर्यञ्च । तत्राप्यर्थवादानां विधिजन्यबोधोपयुक्तत्वेनान्तरङ्गत्वात् तद्विचारस्यैव प्राथम्यमित्यभिप्रेत्याह—**वायुर्वा इत्यादि** ॥ वायुरूपा देवता क्षेपिष्ठा वै क्षिप्रगामिनीति प्रसिद्धम् । यजमानस्तादृशं वायुमेव स्वेन भागधेयेन पशुरूपेण हविषोपधावति, तोषयति । अतस्स एव वायुरेवेतरानपेक्ष एनं यजमानं भूतिमैश्वर्यं

---

१. तै. सं. २-१-१.

**करणेन सिद्धे सम्प्रति तद्वदेव धर्माधर्मयोः प्रामाण्यमस्ति न वेति विचार्यते । तत्र विधिप्रतिषेधवाक्याभ्यां स्वशक्त्या साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविषयकवि-**

---

गमयति प्रापयतीत्यर्थः । आदिना निषेधार्थवादपरिग्रहः । ननु अर्थवादानां धर्माधर्मयोः प्रामाण्यमस्ति नवेति विचारोऽनुपपन्नः। तेषां पौरुषेयत्वशङ्कया पुरुषदोषसम्भवेनाप्रामाण्यशङ्कास्पदत्वात् । ततश्च सामान्यतः प्रामाण्यस्यैवासिद्धौ, कुतः तद्विशेषविचारसम्भव इत्यत आह—**विधिप्रतिषेधवदेवेति** ॥ 'वायव्यं श्वेतमालभेत' इति विधिः, 'बर्हिषि रजतं न देयम्' इति निषेधः । तथाच पूर्वाधिकरणे वेदे कर्तृस्मरणाभावेन कृत्स्नस्य वेदस्य अपौरुषेयत्वं सिद्धान्तितम् । ततश्च पुरुषदोषाभावाद्विधिप्रतिषेधवदेव अर्थवादानामपि अपौरुषेयत्वस्य सिद्धत्वात् सामान्यतोऽर्थवादानामपि प्रामाण्यसिद्ध्या तद्विशेषविचारो युज्यत इति भावः ॥ **अपौरुषेयत्वे पूर्वाधिकरणेन सिद्ध इति** ॥ अपौरुषेयत्वेन सामान्यतः प्रामाण्ये सिद्ध इत्यर्थः । ननु पूर्वाधिकरणे वेदानामपौरुषेयत्वमात्रस्य साधितत्वात् न प्रामाण्यं, तत्र सिद्धम् इतीहैव तस्य साधनीयतया प्रामाण्ये सिद्ध इत्यर्थकथनमयुक्तमिति चेन्न; अपौरुषेयत्वसाधनस्य प्रामाण्यसाधनपर्यन्तत्वात् । अन्यथा तन्मात्रसाधनस्य काकदन्तविचारत्वापत्तेः शास्त्रसङ्गत्यनापत्तेश्च । नहि चोदनामात्रप्रामाण्यसिद्ध्यर्थमपौरुषेयत्वसाधनमिति युक्तम् । 'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः' इत्यत्रत्येन वार्तिकेन सर्ववेदप्रामाण्यस्यैव सिद्धत्वोक्तेः अपौरुषेयत्वसाधनस्य सर्ववेदप्रामाण्यपर्यवसितत्वावश्यम्भावात् । नच तर्हि 'विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते' इत्युत्तरार्थविरोध इति वाच्यम्; 'उपयोग उच्यते' इत्यनेन वेदप्रामाण्यसिद्ध्यनन्तरं उपयोगस्यैव निरूपणीयत्वोक्त्या प्रामाण्यस्यानुक्तत्वात् । उपयोगश्च पुरुषप्रवृत्तिजननद्वारा । प्रवृत्तिश्च प्राशस्त्यादिज्ञानाधीना । प्राशस्त्यादिज्ञानञ्चार्थवादाद्यधीनमिति रीत्या भवतीति तात्पर्यात् । ततश्च सामान्यतः प्रामाण्यमपौरुषेयत्वहेतुना पूर्वमेव सिद्धमिति प्रामाण्ये सिद्ध इत्यर्थकथनं युक्तमेवेति द्रष्टव्यम् ॥ **तद्वदेव**—विधिप्रतिषेधवदेव । **प्रामाण्यमस्ति न वेति** ॥ सम्भवति न वेत्यर्थः । एतेन सिद्धमपि प्रामाण्यं द्वाराभावादाक्षिप्य समाधीयत इति आक्षेपिकी सङ्गतिरिति सूचितम् । ननु उक्तरीत्याऽपौरुषेयत्वेन विध्यादिवदेव धर्माधर्मप्रामाण्यमर्थवादानां सिद्धमिति न पृथग्विचारावकाश इत्यतो विधिवैषम्यमुपपादयति—**तत्रेत्यादिना** ॥ **स्वशक्त्या**—वाक्यसामर्थ्याभ्याम् । एतेन वाक्याभ्यां स्वशक्त्येत्यसङ्गतं, वाक्यशक्त्यभावात्, द्वयोर्वाक्ययोरेकशक्त्यभावाच्च, वाक्यपदस्य वाक्यघटकपदपरत्वे घटादिपदानां एकैकार्थप्रतिपादकत्वेनांशत्रयविशिष्टभावनाप्रतिपादकत्वाभावेन उत्तरग्रन्थासङ्गतेरिति निरस्तम् । शक्तिपदस्य विशिष्टबोधात्मककार्यानुकूलशक्तिरूपसामर्थ्यपरत्वात्, एकवचनस्य जात्यभिप्रायत्वात् । **साध्यं**—भूतिरूपम् । **साधनं**—श्वेतद्रव्यकयागः । द्रव्यदेवतासम्बन्धस्य यागं विनानुपपत्तेरालभतिना यागलक्षणात् । इतिकर्तव्यता च प्रकृति-

धिप्रतिषेधयोः प्रतिपादनात् अर्थाच्च विधिप्रतिषेधविषययागादेरिष्टानिष्टसाधनत्वाक्षेपाद्युक्तं तयोरिष्टानिष्टसाधनरूपधर्माधर्मप्रमाजनकत्वम्। अर्थवादानां तु शक्त्या सदसद्रूपसिद्धार्थबोधकत्वान्न धर्माधर्मयोः प्रामाण्यसम्भवः। न च शक्त्या तदसम्भवेऽपि लक्षणाध्याहारादिना तत्प्रतिपादनम्। यथाश्रुतार्थप्रतिपादनेनैव उपपत्तावन्वयानुपप-

---

तः प्राप्ता। प्रवृत्तिर्निवृत्तिश्चाख्यातार्थः। प्रवर्तना निवर्तना च लिङर्थः। तत्रायं क्रमः। प्रधानवाक्यस्याङ्गवाक्यैकवाक्यतया, साध्यसाधनेतिकर्तव्यताविशिष्टार्थभावनाविषयकशब्दभावनारूपविधिप्रतिपादनेन श्वेतद्रव्यकयागसाधनकभूतिभाव्यकप्राकृतेतिकर्तव्यताकभावना प्रवर्तनाविषय इति बोध उत्पद्यते। एवं निषेधेष्वपि साध्यादिविशिष्टा भावना निवर्तनाविषय इति बोधः। तत्र भावनाप्रकारीभूतयागादेरपि प्रवर्तनादिविषयत्वात् प्रवर्तनादिविषयत्वहेतुना यागादेरिष्टानिष्टसाधनत्वमनुमीयते। इष्टसाधनतादिज्ञानं विना पुरुषप्रवृत्त्याद्यसम्भवात्। ततश्च वेदबोधितेष्टानिष्टसाधनताकत्वरूपधर्मत्वाधर्मत्वप्रतीत्या चोदनासूत्रोक्तरीत्या धर्माधर्मप्रामाण्यं सिद्धम्। अर्थवादानां तु निरुक्तधर्मत्वाधर्मत्वानुमापकहेत्वभावान्न धर्माधर्मयोः प्रामाण्यसम्भव इत्यखण्डार्थः॥ **विधिप्रतिषेधयोः**—प्रवर्तनानिवर्तनयोः। अत्र पूर्वपक्षे प्रवर्तना नास्ति। अन्यथा प्रवर्तनांशत्रयान्तर्गतप्राशस्त्यप्रतिपादकत्वेनार्थवादप्रामाण्यस्यैव सिद्ध्यापत्त्या पूर्वपक्षानुन्मेषप्रसङ्गादिति कैश्चिदुक्तमयुक्तम्। शब्दभावनासत्त्वेऽप्यर्थवादानां सदसदर्थप्रतिपादकत्वेन प्राशस्त्याप्रतिपादकतया पूर्वपक्षसम्भवादित्यभिप्रायेण विधिप्रतिषेधयोरुक्तत्वात्॥**विधिप्रतिषेधविषययागादेरिति**॥ 'अयमत्र प्रवर्ततां, अयमस्मान्निवर्तताम्' इत्याज्ञात्मकेश्वरेच्छारूपप्रवर्तनानिवर्तनाविषयत्वविशिष्टयागरजतदानादेरित्यर्थः। **आक्षेपात्**—निरुक्तप्रवर्तनानिवर्तनाविषयत्वहेतुकानुमानात्। अत एव विधिवाक्ये लिङर्थप्रवर्तनायाः स्वज्ञानविशेषजन्यानुमितिप्रयोज्यत्वसम्बन्धेन भावनायामन्वयः। निषेधस्थले च स्वज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंसर्गेणान्वय इति हिरण्यकेशिसूत्रव्याख्याने विस्तरेण प्रतिपादितमस्माभिः। अर्थवादानां वेदबोधितेष्टानिष्टसाधनरूपधर्माधर्मप्रतिपादकत्वाभावात् न धर्माधर्मयोः प्रामाण्यमिति पूर्वपक्षमुपपादयति—**अर्थवादानान्त्विति**॥ धर्माधर्मप्रतिपादकत्वं शक्त्या वा, लक्षणया वा, अध्याहारादिना वेति विकल्प्याद्यं दूषयति—**सदसद्रूपेति**॥ **सत्**-मानान्तराधिगतं वायुक्षेपिष्ठत्वादि। **असत्**-मानान्तरबाधितमात्मवपोत्खननादि। **सिद्धः**-साद्ध्येतरः, 'यन्न दुःखेन' इत्यादिगम्यस्स्वर्गादिः। 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिगम्यं ब्रह्म च। द्वितीयतृतीयौ निराचष्टे—**लक्षणेत्यादि**॥ अध्याहारादीत्यादिना 'लक्षणा विपरिणामोऽनुषङ्गोऽध्याहृतिस्तथा। व्यवधारणमेतेषु पूर्वाभावे परंपरम्' इति श्लोकोक्तानां सङ्ग्रहः। तत्र 'जातपुत्रः' इत्यादौ लक्षणा, 'प्रतितिष्ठन्ति' इत्यादौ सन्नन्ततया विपरिणामः। 'क्षत्राय राजन्यम्' इत्यादौ पूर्वश्रुतलभतेरनुषङ्गः। 'विश्वजिता यजेत' इत्यादौ स्वर्गकामपदाध्याहारः। 'तमस्मै भक्षं प्रयच्छेत्' इत्यादौ 'तेन यजेत' इति व्यव-

स्यभावेन तदसम्भवात् । न च तात्पर्यानुपपत्त्या तत्कल्पनं, तात्पर्यग्राहकाभावेन तस्या अप्यसम्भवात् । न हि शब्दः प्रमाणमात्रं वा प्रयोजनवद्विषयमेवेत्येवन्नियमे प्रमाणमस्ति, येन स एव तात्पर्यग्राहकश्शङ्क्येत । निष्प्रयोजनानामपि बहुशो दर्शनेन व्यभिचारात् । न च "स्वाध्यायोऽध्येतव्यः"[1] इति स्वाध्यायविधिरेव अर्थज्ञानोद्देशेन अध्ययनं विदधत् निष्प्रयोजनस्यार्थज्ञानस्य भाव्यत्वानुपपत्तेरर्थस्य प्रयोजनवत्त्वमाक्षिपतीति वाच्यम् । अर्थज्ञानजनकत्वेनाध्ययनस्य लोकसिद्धत्वेनाविधेयत्वात् । तन्नि-

धारणमित्यग्रे व्यक्तीभविष्यतीति ध्येयम् । अन्वयानुपपत्तिर्लक्षणादौ बीजं, तात्पर्यानुपपत्तिर्वेति विकल्प्याद्यमाह—**यथाश्रुतेति** ॥ शक्यार्थविषयकविशिष्टवाक्यार्थबोधसम्भवेन 'गङ्गायां घोषः' इत्यादिवदन्वयानुपपत्त्यभावात् । न च 'ग्रावाणः प्लवन्ते' इत्यादावन्वयानुपपत्तिरस्तीति तत्र लक्षणादिकं सम्भवतीति वाच्यम्; अन्वयानुपपत्तिसत्वेऽपि तद्वाक्यस्य लक्षणादिना 'नौकाः प्लवन्ते' इत्यादिरीत्यार्थान्तरपरत्वस्यापि सम्भवेन धर्माधर्मप्रमितिजनकत्वनिर्बन्धाभावात् । क्वचित्तत्सत्त्वेऽपि सर्वत्र तदभावाच्च । द्वितीयं निरस्यति—**नचेति** ॥ **तात्पर्येति** ॥ तात्पर्यग्राहकप्रमाणाभावेन तात्पर्यज्ञानासिद्धौ तदनुपपत्त्या लक्षणादिकं दूरापास्तमित्यर्थः । ननु शब्दमात्रस्य सप्रयोजनार्थबोधकत्वनियमादर्थवादानां निष्प्रयोजनार्थबोधकत्वे तन्नियमभङ्गस्स्यात् । अतः स नियम एवार्थवादानां सप्रयोजनार्थबोधकत्वे तात्पर्यग्राहक इत्यत आह—**नहीति** ॥ **प्रमाणमात्रं वेति** ॥ सामान्यतो नियमेनापि न सप्रयोजनार्थबोधकत्वमिति दर्शयितुं इदं उक्तम् । तथाच तादृशनियमे प्रमाणाभावेन तात्पर्यग्रहासम्भवात् न तदनुपपत्त्या लक्षणादिसिद्धिरिति भावः । नियमासम्भवमेवोपपादयति—**निष्प्रयोजनानामिति** ॥ हरिश्चन्द्रोपाख्यानादीनां क्षेमेन्द्रादिनिर्मिताख्यायिकानां चेत्यर्थः । ननु उक्तनियमाभावेऽपि 'स्वाध्यायोऽध्येतव्यः' इति विधिरेव तात्पर्यग्राहक इति शङ्कते—**नचेति** ॥ **स्वाध्यायविधिरेवेति** ॥ अयमर्थः । 'स्वाध्यायोऽध्येतव्यः' इति विधिः स्वाध्यायोद्देशेनाध्ययनं विधत्ते । तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । ततश्च अध्ययनेन स्वाध्यायं भावयेदित्यर्थः । तेन च निष्प्रयोजनस्याध्ययनानुपपत्तेरधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेदिति विधिः कल्प्यते । तथाच स्वाध्यायविध्यध्यापितानां अर्थवादानामपि फलवदर्थावबोधकत्वपर्यवसानात् फलवदर्थलक्षकत्वमर्थवादानां सिद्ध्यतीति शङ्कार्थः ॥ **अर्थज्ञानजनकत्वेनेति** ॥ शब्दमात्रस्य ह्येष स्वभावो यदनधिगताबाधितार्थप्रतिपादकत्वं नाम । ततश्चार्थवादानामपि अर्थज्ञानजनकत्वस्य लोकसिद्धत्वेनाप्राप्तत्वाभावात् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेन न अर्थज्ञानोद्देशेन स्वाध्यायविधिकल्पनसम्भवः, सुतरां फलवदर्थज्ञानोद्देशेनेति भावः । ननु अर्थज्ञानजनकत्वस्य लोकसिद्धत्वेऽपि अधीतस्वाध्यायेनैवार्थज्ञानं सम्पादयेत् इति नियमसिद्ध्यर्थं तद्विधिस्सार्थक इत्यत आह—**तन्नियमस्येति** ॥ अध्ययनसं-

१. तै. आ. २. १५.

यमस्यार्थज्ञानेऽनुपयोगादव्यभिचरितक्रतुसम्बन्धाभावेन क्रतुं यावदुपयोगकल्पनानुपपत्तेश्च न विधेयत्वम् । अतः स्वाध्यायविधिना स्वर्गाद्यर्थमेवाध्ययनं विधीयते । लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा । अध्ययनमेव वा भावनायां भाव्यमस्तु । न चैवमिष्टभाव्यकत्वाभावात्प्रवृत्त्यनुपपत्तिः । 'अनधीयाना व्रात्या भवन्ति' इति वचनेनाकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः । अतस्तस्य वेदत्वावच्छेदेन प्रयोजनवद्विषयकत्वानाक्षेपकत्वान्नार्थवादेषु तद्बलेन लक्षणादिसिद्धिरित्यप्रमाणमर्थवादा धर्माधर्मयोरिति प्राप्ते—

---

स्कृतस्वाध्यायनियमस्येत्यर्थः ॥ **अनुपयोगादिति** ॥ शब्दैरर्थज्ञाने जायमाने नियमकृतविशेषाभावात् नियमेनोपायान्तरव्यावृत्तावपि ज्ञानविषयीभूतार्थस्य प्रयोजनवत्त्वं न सिद्ध्यतीत्याशयः। ननु अर्थवादाद्युक्तदेवतादीनां क्रतुसम्बन्धितया जुह्वादिवत् क्रत्वर्थतयार्थवत्त्वं सम्भवतीत्यत आह—**अव्याभिचरितेति** ॥ जुह्वादयो हि बहिःक्रतु अप्रसिद्धाः क्रत्वेकसम्बन्धिन इति युक्तं तेषां क्रत्वर्थत्वम् । अग्न्यादिदेवतास्तु लोकेऽपि प्रसिद्धा इति क्रतुव्यभिचरितत्वात् न क्रत्वर्थत्वमिति भावः ॥ **अत इति** ॥ स्वाध्यायविधेः फलवदर्थावबोधपर्यन्तत्वाभावात् स्वर्गाद्यर्थाध्ययनविधिपरत्वमेवेत्यर्थः । ननु दृष्टे सम्भवति अदृष्टकल्पनायोगात् स्वर्गार्थत्वमनुपपन्नमित्यत आह—**लोकत इति** ॥ लोकप्रसिद्धेर्नूतनतया लोकात् पूर्वमेवानादेर्वेदस्य प्रवृत्तत्वेन यथाश्रुतार्थज्ञानार्थमेवाधीतस्वाध्यायो विधीयत इत्यर्थः । तव्यप्रत्ययानुसारेणाह—**अध्ययनमेवेति** ॥ स्वाध्याय एवेत्यर्थः । बाहुलकात् कर्मणि ल्युट् । यद्वा सक्तुन्यायेन स्वाध्यायस्य करणत्वमिति राणकमतमाह—**अध्ययनमेव वेति** ॥ अत्र विधिकल्पनाभावात् लाघवमिति भावः । ननु यथाश्रुतार्थज्ञानस्य वा, स्वाध्यायस्य वा, अध्ययनस्य वा भाव्यत्वे इष्टसाधनत्वाभावात् प्रवृत्त्यनुपपत्तिरिति शङ्कते—**नचैवमिति** ॥ 'अनधीयानाः' इत्यकरणे प्रत्यवायभियैव स्वाध्याये प्रवृत्त्युपपत्तेरित्यर्थः । पूर्वपक्षमुपसंहरति—**अत इति** ॥ स्वाध्यायविधेस्तात्पर्यग्राहकत्वाभावात् न तद्बलेनार्थवादानां लक्षणादिसिद्धिरिति भावः । लक्षणादीत्यादिनाध्याहारादिसङ्ग्रहः । एतेनार्थवादानां विध्यपेक्षितस्तुत्यादिसमर्पकत्वेन विध्येकवाक्यतया प्रामाण्यमित्यपि निरस्तम् । अर्थवादैः स्तुतिबोधस्य लक्षणामूलकत्वेन तस्या निराकृतत्वात् । विध्यर्थवादयोः स्वस्वविशिष्टार्थबोधकतया निराकाङ्क्षत्वेनैकवाक्यत्वासम्भवाच्च । न च विधेः प्रवर्तकत्वानुरोधेन प्राशस्त्यापेक्षासत्वात् तदर्थमर्थवादापेक्षेति वाच्यं; 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति वार्तिकानुसारेण विधित एव प्राशस्त्यबोधस्यापि सम्भवेनार्थवादानपेक्षणादित्यन्यत्र विस्तरः ॥ **धर्माधर्मयोरिति** ॥ इदमुपलक्षणम् । स्वार्थेऽप्यप्रामाण्यसत्वात् । तथाहि—'स्तेनं मनः' 'अनृतवादिनी वाक्' इत्यत्र ताच्छील्ये णिनिप्रत्ययेन मनसः परद्रव्यापहरणरूपस्तेयस्य, वाचश्चानृतवदनस्य प्रतीयमानस्य बाधितत्वात्, लक्षणया 'मनसा स्तेयं

न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते, दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । नापि यथाश्रुतार्थज्ञानार्थम्, तथात्वे व्रात्यत्वबोधकवाक्येन अध्ययनस्यावश्यकत्वाद्गृहीतपदपदार्थसङ्गतिकस्य

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा ॥

इत्यादिवचनाच्च ज्ञानस्याप्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्यानुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेनाध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं विधीयते प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमात्रं ; तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च जिज्ञासाधिकरणोक्तरीत्या स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ

चिन्तयेत्' 'वाचानृतं वदेत्' इति विधिकल्पने 'न चोरयेत्' 'नानृतं वदेत्' इति शास्त्रविरोधात्। 'धूम एवाग्नेर्दिवा ददृशे नार्चिः' इत्यादौ प्रत्यक्षविरोधात्। 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा' इत्यादौ शास्त्रदृष्टकार्यकारणभावविरोधात्। 'शोभतेऽस्य मुखम्' इत्यादौ गर्गत्रिरात्रब्राह्मणविदो मुखशोभारूपफलाभावात् । 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इत्यादौ पूर्णाहुत्या सर्वफलसिद्धौ बह्वायाससाध्यज्योतिष्टोमाद्यानर्थक्यात्। 'नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इत्यादौ अप्रसक्तप्रतिषेधात् । 'बबरः प्रावाहणिः' इत्यादौ अनित्यसंयोगाच्च स्वार्थेऽप्यप्रामाण्यमित्याशयः । स्वाध्यायविधेस्तात्पर्यग्राहकत्वं वक्तुं पूर्वपक्षोक्तपक्षान् क्रमेण निराकरोति—**न स्वाध्यायविधिरिति** ॥ **दृष्ट इति** ॥ पुरुषाणां प्रायेण दृष्टार्थलोलुपत्वादिति भावः । विश्वजिदादौ दृष्टासम्भवाददृष्टकल्पनेत्याशयः ॥ **नापीति** ॥ यथाश्रुतार्थज्ञानार्थमध्ययनं विधत्ते इत्यन्वयः । तदुपपादयति—**तथात्व इति** ॥ **व्रात्यता**—कर्मानर्हता । तद्बोधकेन 'अनधीयाना व्रात्या भावन्ति' इति पूर्वोक्तवाक्येनावश्यकत्वात् व्रात्यतापरिहारायावश्यं वेदस्याध्येतव्यत्वात् ॥ **गृहीतेति** ॥ गृहीतशक्तिकस्येत्यर्थः। ननु व्रात्यतापरिहारायाध्ययनस्यावश्यकत्वेऽपि यथाश्रुतार्थज्ञानं कथं सिद्ध्यतीत्यत आह—**स्थाणुरिति** ॥ अर्थज्ञानं विना केवलाध्ययनमात्रकर्ता केवलकाष्ठप्राय इति भावः। ततश्च यथाश्रुतार्थज्ञानस्याप्यावश्यकतया न तदर्थमपि स्वाध्यायविधिः सम्भवतीत्याशयः । **एतेन**—स्वाध्यायतदर्थज्ञानयोः प्रकारान्तरेण सिद्धत्वेन ॥ **अत इति** ॥ स्वाध्यायविधिरेव स्ववैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानोद्देशेनाधीतस्वाध्यायविधिकल्पक इति भावः । विधिकल्पनाभावात् लाघवमित्यभिप्रायेणाह—**प्रयोजनवदिति** ॥ तथाच स्वाध्यायपदलक्षणयैव श्रुतविध्युपपत्तौ विधिकल्पनाभावात् लाघवमिति भावः । वस्तुतस्तु लक्षणापि नास्तीति पूर्वमेवोक्तम् ॥ **प्रयोजनवत्त्वसिद्धाविति**॥ ननु अर्थवादानां 'वायुभजनेन भूतिं सम्पादयेत्' इत्यादिविधिकल्पनेनापि प्रयोजनवदर्थबोधकत्वसम्भवेन न प्राशस्त्यलक्षणासिद्धिः । न च जातेष्टिस्थलवत् 'भूतिकामो भूतिं

तात्पर्यग्राहकवशेन लक्षणासिद्धिरर्थवादेषु ।

लक्षणीयश्चार्थस्सन्निहितविधिनिषेधापेक्षितत्वात् स्तुतिनिन्दास्वरूपः । तथाहि—लिङाद्यर्थो लोके पुरुषाशयः । वेदे च तदभावाल्लिङादिनिष्ठ एव कश्चिद्धर्मः ।

---

गमयति' इत्येकवाक्यानुसारेण प्राशस्त्यलक्षणेति वाच्यम्; एवमपि 'हिरण्यं हस्ते भवति' इति विधिशेषे 'स्तेनं मनः' इत्यर्थवादे कथञ्चिदप्येकवाक्यत्वाप्रतीत्या लक्षणाया असिद्धिप्रसङ्गात्। न च शक्यार्थस्य विध्यन्वयासम्भवेन विध्येकवाक्यत्वासम्भवात् लक्षणासिद्धिरिति वाच्यम्; लक्षणासिद्धावेकवाक्यत्वम्, एकवाक्यत्वे च लक्षणा इत्यन्योन्याश्रयापत्तेरित्यत आह—**तात्पर्येति** ॥ **तात्पर्यग्राहकवशेन**—स्वाध्यायविधिबलेन । तथाच स्तेयादीनां विध्यन्तरकल्पने शास्त्रान्तरविरोधाद्यापत्त्या तात्पर्यग्राहकाध्ययनविधिबलेनैव लक्षणासिद्ध्या नान्योन्याश्रय इति भावः । अर्थवादानां लक्षणया प्राशस्त्यपरत्वं सप्रपञ्चमुपपादयितुं उपक्रमते—**तथाहीत्यादिना** ॥ **लिङाद्यर्थ इति** ॥ आदिना लोट्-लेट्-तव्य-अनीयर्-अर्शआदीनां परिग्रहः । 'स्वर्गकामो यजेत' 'सत्यं वद' 'समिधो यजति' 'अन्तराऽनूच्यं हिरण्यं भार्यं' 'तानि सेवितव्यानि' इत्युदाहरणानि । उदयनाचार्यमतेनाह—**पुरुषाशय इति** ॥ पुरुषेच्छेत्यर्थः । व्यवहारेण, 'विधिनिमन्त्रण-'इत्याद्यनुशासनेन च तत्रैव शक्तिग्रहादिति भावः । अत्र लिङादिज्ञानमेव वेदे प्रवर्तनेति केचित् । तच्छक्तिज्ञानमित्यन्ये । शक्तिविशिष्टलिङादिज्ञानमित्यपरे । अर्थभावनाभिधानानुकूला शक्तिरिति मिश्राः । इष्टसाधनत्वमिति मण्डनः । अलौकिको धर्म इति न्यायसुधाकृतः । एवं विप्रतिपत्तौ स्वपक्षमाह—**वेदेचेति** ॥ चस्त्वर्थे । **तदभावात्**—निर्मातृपुरुषाभावात् ॥ **लिङादिनिष्ठ एवेति** ॥ आदिना लिङ्घटितवाक्यस्य तदुच्चारयितृपुरुषस्य च परिग्रहः । अभिधादिसम्बन्धेन लिङादिनिष्ठ एव; न तु समवायेन पुरुषनिष्ठोऽपीत्येवकारार्थः। लोके 'गुरुर्मां प्रवर्तयति' इति व्यवहारवत् 'गुरूच्चारितलिङ् मां प्रवर्तयति' इत्यादिव्यवहारात् । गुरौ, लिङि, वाक्ये, गुरुवाक्यावेदकपुरुषान्तरे चानुगतं प्रवर्तकत्वं प्रवर्तनावत्त्वमेव वाच्यम्; तत्र गुरोस्समवायेन प्रवर्तनावत्त्वं; इतरेषां तु क्रमेण तदभिधायकत्वतद्वाचकघटितत्वतद्वाचकोच्चारयितृत्वसम्बन्धैरिति सम्बन्धाननुगमो न दोषाय। एको घटः, एकं रूपम् इति व्यवहारयोःसमवायिसामानाधिकरण्याभ्यां निर्वाहस्य परैरप्यङ्गीकृतत्वात्'रूपे रसः'इत्यादिव्यवहारापादनस्य सामानाधिकरण्यविशेष एव वृत्तिनियामकताकल्पनेन परिहृतत्वात् । वेदे तु निर्मातुरभावात् समवायासम्भवेऽपि अभिधादिसम्बन्धान्तराणि उपपद्यन्त एव । 'य एव लौकिकाः शब्दाः त एव वैदिकाः, त एवामीषामर्थाः' इति लोकवेदाधिकरणन्यायात्। यदि तु सर्वत्र पुरुषस्यैव प्रवर्तकत्वं मुख्यमितीश्वर एव वेदे प्रवर्तकः, तदा समवाय एव प्रवर्तनेश्वरयोः सम्बन्धः । 'श्रुतिस्मृती ममैवाज्ञे' 'अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा' इत्यादिवचनेनेश्वरस्य प्रवक्तृतया निर्दोषत्वात् 'ईश्वरेच्छैव प्रवर्तना'इति सर्वसम्मतः पन्थाः। किंच वेदे 'आचार्यो-

6

**वाच्यतावच्छेदकं चोभयसाधारणं व्यापारत्वम् । न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि, तस्यान्यलभ्यत्वात् । तत्र नञोऽभावे आख्यातार्थप्रवृत्तिप्रयोजकत्वं तत्सत्त्वे तु तदर्थप्रवृत्त्यभावप्रयोजकत्वं संसर्ग इति विशेषः । प्रयोजकत्वं चात्र प्रवृत्तितदभावकारणीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । अभावकारणता च योगक्षेमसाधारणी ।**

---

ऽन्तेवासिनमनुशास्ति' इत्याज्ञारूपानुशासनं प्रकृतलोडादिघटितवाक्यैः प्रवर्तनानिवर्तनारूपतयानुशासनं व्याख्याय, एतदनुशासनमित्युपसंहारोऽपीश्वरेच्छायाः प्रवर्तनात्वं गमयति । तथा 'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' इति वचनमपि द्रष्टव्यम् । नन्वेवं लोके पुरुषाशयः, वेदे लिङादिधर्मो लिङा वाच्य इति नानार्थकत्वापत्तिरत आह—**वाच्यतावच्छेदकमिति** ॥ लोकवेदसाधारणं विषयिताविशेषरूपं व्यापारत्वमेव शक्यतावच्छेदकमिति न नानार्थत्वमिति भावः । वस्तुतस्तु इच्छात्वस्यैव शक्यतावच्छेदकत्वान्न दोषः। शक्ततावच्छेदकस्तु श्रूयमाणप्रत्ययनिष्ठानुपूर्वीविशेष एव, न तु लिङ्त्वादिकं, तेषां लुप्तत्वात् । स्थानिवद्भावेन लिङ्त्वं तु व्याकरणप्रक्रियामात्रोपयुक्तत्वात् न पदार्थोपस्थापकतावच्छेदकमित्यन्यदेतत् । ननु प्रवृत्तिनिवृत्तिप्रयोजकव्यापारप्रतीत्या प्रवृत्तिप्रयोजकत्वादिकमपि शक्यमिति गौरवं स्यादित्यत आह— **नत्विति** ॥ **अन्यलभ्यत्वादिति** ॥ समभिव्याहारलभ्यत्वादिति भावः । तदेवाह—**तत्रेत्यादिना** ॥ **नञो अभाव इति** ॥ **आख्यातार्थेति** ॥ आख्यातत्वं न जातिः । तिप्त्वादिना साङ्कर्यात् । किन्तु आदेशनिष्ठानुपूर्वीविशेष एव, अनुगमापेक्षायां त्वन्यतमत्वमेवेति ध्येयम् ॥ **प्रयोजकत्वमिति** ॥ संसर्ग इत्युत्तरेणान्वयः । **तत्सत्वे**—नञ्सत्वे । 'न कलञ्जं भक्षयेत्' इत्यादौ ॥ **तदर्थेति** ॥ नञर्थेत्यर्थः ॥ **संसर्ग इति** ॥ शब्दभावनार्थभावनयोः संसर्ग इत्यर्थः । प्रयोजकत्वमेवोपपादयति—**प्रवृत्तितदभावेत्यादि** ॥ प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य कारणत्वात् । तस्य च प्रवर्तनाज्ञानजन्यत्वात् प्रयोजकत्वं सम्भवतीत्यर्थः । तथा निवृत्तिं प्रति अनिष्टसाधनताज्ञानस्य निवर्तनाज्ञानजन्यत्वात् निवृत्तिप्रयोजकत्वं सुलभम् ॥ **योगक्षेमेति** ॥ योगे सत्यनिष्टसाधनत्वानुमितौ । क्षेमः प्रवृत्त्यभावस्य सत्वमित्यर्थः । विधिस्थले लिङादिज्ञानेन प्रवर्तनाज्ञाने जाते प्रवर्तनाविषयत्वहेतुना इष्टसाधनताज्ञाने यागादावुत्पन्ने यागादौ प्रवृत्तिः । निषेधस्थले तु नञ्समभिव्याहृतलिङादिना निवर्तनाज्ञानोत्पत्तौ निवर्तनाविषयत्वहेतुना कलञ्जभक्षणादावनिष्टसाधनत्वानुमित्या तत्र द्वेषोत्पत्तौ इच्छानुत्पादेन प्रवृत्त्यभावसत्त्वात् प्रवृत्तिसामग्रीविघटनेन प्रवृत्त्यभावः स्थिर इति योगक्षेमसाधारणकारणत्वं प्रवृत्तिसामग्रीविघटनमिति भावः । प्रवृत्त्यभावमादाय वाक्यार्थोपपत्तौ निवृत्त्याख्ययत्नान्तरं नास्तीति मूलाभिप्रायः । ननु निषेधस्थले निवर्नतामित्यात्मेच्छाविषयीभूतनिवृत्तेः सर्वानुभवसिद्धाया अपलापे निवृत्त्यभाव एव प्रवृत्तिरिति किं न स्यात्? न च प्रवर्तयामीत्यनुभवात् तत्तत्सिद्धिः, अत्रापि निवर्तयामीत्य-

**तत्त्वं च प्रवृत्तिसामग्रीविघटकत्वमित्यन्यत्र विस्तरः । स च लिङाद्यर्थो विधिवाक्ये प्रवर्तनाप्रेरणाविध्यपरपर्यायः । निषेधवाक्ये निवर्तनानिवारणानिषेधप्रतिषेधापरपर्यायः । इयं च द्विविधाऽपि शाब्दी भावना । तस्याश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती । शब्दभावनाज्ञानं करणम् । करणत्वं चात्र भावनाभाव्यनिष्पादकत्वम् । इतिकर्तव्यता च**

---

नुभवस्य तुल्यत्वादित्यत आह—**अन्यत्र विस्तर इति** ॥ पाकादाविष्टसाधनताज्ञानात् प्रवृत्तिस्सर्वानुभवसिद्धा । विषभक्षणादावनिष्टसाधनताज्ञानात् निवृत्तिरपि सर्वानुभवसिद्धा । तथापि प्रवृत्त्यभावस्यैव स्फुटं प्रतीयमानतया तमादायैव व्यवहारोपपत्तिः । न च विनिगमनाविरहः । प्रवृत्तिस्थले निवृत्त्यभावस्य कुत्राप्यप्रतीतेरित्याशयः ॥ **शाब्दी भावनेति** ॥ सम्बन्धार्थे तद्धितः । भावनाशब्दसम्बन्धात् भावनेत्युच्यत इत्यर्थः । माणवके सिंहशब्दवत् गौण इति यावत् । तत्र णिजन्तात् भवतेर्ल्युटि निष्पन्नस्य भावनाशब्दस्य प्रयोज्यनिष्ठभावनाख्यो व्यापारः प्रयोजककर्त्रादिनिष्ठा च व्यापारा मिळिता भावनापदवाच्या । व्यापारसमूहे च भावनात्वं अखण्डोपाधिः । सा च कारकान्विता वाक्यार्थः । तस्यां च साध्यत्वसिद्धत्वे द्वौ धर्मौ; तौ च कारकान्वयाकाङ्क्षोत्थापकतानुत्थापकतावच्छेदकौ प्रत्ययेन लुङन्तपदेन च क्रमेण बुध्येते । प्रवर्तनाविषयत्वमेव साध्यत्वं कारकान्वयप्रयोजकमिति प्राञ्चः । तत्र भावनापदोपस्थापिता, न कारकान्वययोग्या । लिङ्ङानन्वयिभावनाया एव कारकान्वययोग्यत्वादित्यादिकं भावार्थाधिकरणे व्यक्तम् । **तस्याः**--शब्दभावनायाः । **भाव्यं**--फलमित्यर्थः । **यथायोगं**—विधिनिषेधभेदेन । **प्रवृत्तिः**-विधिस्थले । **निवृत्तिः**-निषेधस्थले । **शब्दभावनाज्ञानं**—अभिधारूपाया ईश्वरेच्छारूपाया वा शब्दभावनाया ज्ञानं करणम् । लिङादेस्तत्र शक्तत्वात् । यद्वा शब्दभावनाया ज्ञानं यस्मादिति व्युत्पत्त्या शब्दभावनाज्ञानपदेन शक्तिज्ञानमभिधीयते । तदेव च करणम् । तथाचोक्तम्—'लिङाऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते' इति । अत्र सम्बन्धबोधशब्दस्य शक्तिज्ञानपरत्वात् । वस्तुतस्तु शब्देन भावनाज्ञानमिति व्युत्पत्त्या शब्दभावनाविषयकशाब्दबोध एव कारणम् । सम्बन्धबोधशब्दस्यापि शक्तिज्ञानजन्यशाब्दबोधपरत्वात् न वार्तिकविरोधोऽपि । युक्तं चैतत् । शाब्दबोधस्यैव भाव्यप्रत्यासन्नत्वात् । एतेन पदज्ञानशक्तिज्ञानपदार्थोपस्थितीनां मध्ये चरमस्यैव प्रत्यासन्नत्वात् कारणत्वं युक्तं इत्याशयेनाह—**शब्देति** ॥ एतेन पदज्ञानशक्तिग्रहयोः कारणत्ववादिनौ निरस्ताविति व्याख्यानमनादेयम् । शाब्दबोधस्य ततोऽपि प्रत्यासन्नत्वात् । ननु शब्दभावनाज्ञानस्य भावनाजनकत्वाभावात् कथं करणत्वमित्यत आह—**करणत्वं चेति** ॥ शब्दभावनाभाव्यार्थभावनानिष्पादकत्वं पारिभाषिकं करणत्वमित्यर्थः । एवं अर्थभावनाकरणत्वमपि । यागादेरर्थभावनाभाव्यस्वर्गादिजनकत्वरूपं बोध्यम् ॥ **इतिकर्तव्यतेति** ॥ इतिशब्दः प्रकारवचनः । कर्तव्यता-क्रिया, क्रियाप्रकार इति यावदिति पार्थसारथिः। आख्या-

यथायोगं स्तुतिनिन्दे । स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकसहकारित्वं रुच्यरुच्युत्पादनद्वारा लोकसिद्धम् । स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्वरूपे । ते च यथायोगं विधिनिषेधापेक्षितत्वात्तत्त्समभिव्याहृतार्थवादैर्लक्षणया प्रतिपाद्येते । तत्र 'वायुर्वै क्षेपिष्ठा'[1] इत्यादौ स्वशक्यक्षेपिष्ठत्वादिगुणैरेव लक्षणा । 'यजमानः प्रस्तरः'[2] इत्यादौ गौणीगम्यस्वकार्यकर-

---

तेन व्यापारसामान्यात्मना प्रतीताया भावनाया विशेषाकाङ्क्षायां प्रयाजादीनामन्वय इति तदर्थः । इतिकर्तव्यता सहकारिसमुदाय इत्यन्ये । **यथायोगमिति** ॥ विधिनिषेधयोरीरिति शेषः ॥ **स्तुतिनिन्दे इति** ॥ गुणिनिष्ठगुणाभिधानं स्तुतिः; निन्द्यनिष्ठदोषाभिधानं निन्देत्यर्थः। तयोरुपयोगमाह—**स्तुतिनिन्दाज्ञानस्येत्यादिना** ॥ प्रवृत्तिप्रयोजकप्रवर्तनासहकारित्वं रुच्युत्पादनद्वारा । रुचिरुत्कटेच्छा । तामुत्पाद्य तद्द्वारा प्रवर्तनया प्रवृत्तौ जननीयायां स्तुतिज्ञानमुपयुज्यते । एवं निषेधस्थले निन्दयोत्कटद्वेषे जाते कलञ्जभक्षणात् निवर्तत इति निवर्तनासहकारित्वं निन्दाज्ञानस्येति भावः। स्तुतिनिन्दास्वरूपमाह—**स्तुतिनिन्देति** ॥ **बलवदिति** ॥ बलवर्दनिष्टाननुबन्धित्वयोग्यत्वं प्राशस्त्यम्। बलवदनिष्टानुबन्धित्वयोग्यत्वं चाप्राशस्त्यमित्यर्थः।जन्मान्तरदुरितवशात् केषाञ्चिद्यागादौ बहुविधव्ययायासादिसाध्यत्वज्ञानात् बलवदनिष्टानुबन्धित्वभ्रान्तिसम्भवाद्यागादेः प्राशस्त्यं न स्यात् । अतो **योग्येति** ॥ तथाच भ्रान्त्या तत्र तज्ज्ञानेऽपि वस्तुतस्तस्य बलवदनिष्टाननुबन्धित्वान्न दोष इति भावः । ईदृशप्राशस्त्याप्राशस्त्यज्ञानयोः प्राचीनाशुभकर्मादिवशेन यागादिगतानिष्टसाधनत्वादिज्ञाने अप्रामाण्यज्ञापकतयोपयोगः । अप्रामाण्यज्ञानानास्कन्दितस्यैवानिष्टसाधनताज्ञानादेः प्रवृत्त्यादिप्रतिबन्धकत्वादिति तत्त्वम् । ननु विधिनिषेधवाक्ययोर्विशिष्टार्थबोधकत्वेन निराकाङ्क्षत्वात् कथं अर्थवादापेक्षेत्यत आह— **विधिनिषेधापेक्षितत्वादिति** ॥ विधिनिषेधवाक्याभ्यां प्रवृत्तिनिवृत्त्योर्जनयितव्ययोः स्वस्वसहकारित्वेनापेक्षितत्वादित्यर्थः । 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति वार्तिकं त्वगतिकस्थलाभिप्रायकमिति भावः । **तत्समभिव्याहृतार्थवादैः**—विधिनिषेधसमभिव्याहृतार्थवादैः । **लक्षणया प्रतिपाद्येते** ॥ **इत्यादाविति** ॥ इत्यादि वाक्ये चेयं लक्षणा । अर्थवादवाक्यघटकक्षेपिष्ठादिपदवाच्यक्षेपिष्ठत्वादिगुणविशिष्टवायुदेवताकत्वसामानाधिकरण्यसम्बन्धो लक्षणा । क्षिप्रफलकारित्वबोधोत्तरं तत्सम्बन्धिबलवदनिष्टाननुबन्धित्वरूपप्राशस्त्यबोध इति भावः ॥ **गौणीगम्येति** ॥ 'यजमानः प्रस्तरः' इत्यादौ यजमानप्रस्तरयोरभेदबाधेन यजमानपदेन स्वकार्यकारित्वसजातीयकार्यकारित्वसामानाधिकरण्यसम्बन्धेन प्रस्तरगतप्राशस्त्यलक्षणेति तत्सिद्धिपेटिकायां वक्ष्यत इत्यर्थः । तत्र च प्राशस्त्यस्य च स्वाश्रययागकरणत्वसम्बन्धेन

---

१. तै. सं. २. १. १. २. तै. सं. १. ७. ४.

त्वादिगुणैरिति वक्ष्यते। अतस्सिद्धं भावनान्वितस्तुतिनिन्दाविषयकप्रमाजनकत्वेन अर्थवादानां धर्माधर्मयोः प्रामाण्यमिति॥

प्रयोजनं—पूर्वपक्षे अर्थवादानुपस्थितप्राशस्त्यज्ञानादपि प्रवृत्तौ फलसिद्धिः।

भावनायामेवान्वयः। न त्वन्यत्रेति सूचयन्नाह—**भावनान्वितेति**॥ ततश्च भावनान्वितस्तुतिनिन्दाविषयकप्रमाजननद्वारा विध्येकवाक्यतया धर्माधर्मयोः प्रमाणमर्थवादा इति सिद्धमित्यर्थः। इदमुपलक्षणम्। विधिवाक्यानामिवार्थवादानामध्यनादिऋषिपरम्परयानध्यायवर्जनादिनियमसाम्यादपि प्रामाण्यं बोध्यम्। न च 'स्तेनं मनः' इत्यादौ स्वार्थेऽप्यप्रामाण्यमुक्तमिति वाच्यम्; तेषां स्वशक्यार्थस्याविवक्षितत्वेन 'हिरण्यं हस्ते भवति' इत्यादिविध्यपेक्षितप्राशस्त्यपरत्वेन प्रामाण्याविघातात्। एवं 'धूम एवाग्नेः' इत्यादेरसंसृष्टहोमस्तुतिपरत्वात्। 'नचैतद्विद्मः' इत्यादेः 'देवाः पितरः' इत्यादियाजमानमन्त्रविधिशेषतया स्तुतिपरत्वसम्भवात्। 'को हि तद्वेद'इत्यस्यातीकाशविधिशेषतया स्तुतिपरत्वात्। 'शोभतेऽस्य मुखम्' इत्यादेः गर्गत्रिरात्रानुष्ठानप्रशंसापरत्वात्। 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इत्यस्य तत्फलसाधनतत्क्रतुनिष्पादकाहवनीयाद्युत्पादकाग्न्याधेयकपूर्णाहुतिस्तुतिपरत्वात्। 'नान्तरिक्षे' इत्यादेर्हिरण्यान्तर्हितचयनविधिस्तुतितात्पर्यकत्वात्। 'बबरः प्रावाहणिः' इत्यादेः प्रवाहानादितया सूर्यचन्द्रादिप्रतिपादनवद्बबरादिप्रतिपादनस्यापि सर्वज्ञकल्पस्य वेदस्याप्रामाण्यानापादकत्वात्सर्वोऽप्यर्थवादः धर्माधर्मयोः प्रमाणम्। तस्य च लोकवेदविरोधाभावे स्वार्थेऽपि प्रामाण्यं, तद्विरोधे स्तावकत्वमेव। 'विरोधे गुणवादस्स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥' इत्याचार्यैरुक्तत्वात्। ततश्च 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतिप्रतिपाद्यसृष्ट्यादिकमपि सिद्धमिति अचिन्त्यशक्तिकपरमेश्वरकर्तृकप्रपञ्चप्रतिपादकः सर्वोऽपि वेदः प्रमाणमिति वार्तिकोक्तं सिद्धम्। 'यत्र च अर्थवादो नास्ति तत्रापि विधेरेव द्वे शक्ती' इत्यादिपूर्वोक्तवार्तिकानुसाराद्विधित एव लक्षणया प्राशस्त्यबोध इति द्रष्टव्यम्। ननु 'वायुर्वै क्षेपिष्ठा-' इत्यादीनां 'वायव्यं श्वेतमालभेत भूतिकामः' इति विध्येकवाक्यतया प्रामाण्यं न सम्भवति। 'सैनमीश्वराप्रदहे' इति निन्दितत्वेन तत्र कर्मविध्यसम्भवात्। 'एतमेव सन्तं वायवे नियुत्वत आलभेत' इति वाक्य एव तद्विधानात्। न च नियुत्वद्वाक्ये गुणमात्रविधानमस्त्विति वाच्यम्; तथा सति सगुणस्यैव देवतात्वेन निर्गुणस्य वायोर्देवतात्वाभावादसामर्थ्येन वायव्यमिति तद्धितानुत्पत्तिप्रसङ्गादिति चेन्न; 'सैनमीश्वराप्रदहे' इति निन्दाया नहिनिन्दान्यायेन नियुत्वद्वाक्यविहितनियुत्वद्गुणकवायुदेवताकयागस्तुतिमात्रतात्पर्यकतया वायव्यवाक्येऽपि कर्मविधिसम्भवेन तदेकवाक्यतया प्रामाण्योपपत्तेः। यत्त्वत्र कश्चिदाह तृतीयकाण्डे चतुर्थप्रपाठके श्रुतं 'वायव्यमालभेत' इति विधिसन्निहित 'वायुर्वै क्षेपिष्ठा' इत्यादिवाक्यमेव विषयः। तत्र निन्दाश्रवणाभावान्न काचिदनुपपत्तिरिति; तच्चिन्त्यम्। तृतीयकाण्डस्थस्यैव विषयत्वे तन्मात्रस्य प्रामा-

सिद्धान्ते तु मन्त्रवदर्थवादानामेव प्ररोचकत्वनियमात्तदुपस्थितप्राशस्त्यज्ञानादेव प्रवृत्तौ सेति द्रष्टव्यम् ॥ १ ॥

**(२)—विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥ उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणे सम्भवन्नपकर्षो न**

---

ण्यसिद्धयापत्त्या पूर्वोक्तवाक्यप्रामाण्यस्य एतदधिकरणसिद्धान्तविषयत्वाभावप्रसङ्गादित्यन्यत्र विस्तरः ॥ **मन्त्रवदिति** ॥ यथा 'मन्त्रैरेव तदर्थस्मरणं कर्तव्यम्' इति नियमः तथार्थवादानामेव प्ररोचकत्वनियम इत्यर्थः ॥ **तदुपस्थितेति** ॥ अर्थवादोपस्थितेत्यर्थः । **सा**—फलसिद्धिः। अत्रेदं वक्तव्यम् । मन्त्राणां हि स्वराक्षरविस्मरणविपर्यासादौ प्रायश्चित्तानि बहुशो विदधति महर्षयः; प्रयोगकालोच्चारणं च । ततश्चात्यन्तान्तरङ्गत्वान्मन्त्रजन्यस्मृतेरावश्यकतया तदभावे फलासिद्धिरिति युक्तम् । अर्थवादानां त्वनुष्ठानकाले उपयोगाभावात् पुरुषप्रवृत्तिजननमात्रोपक्षीणत्वादर्थवादजन्यप्राशस्त्यज्ञानाभावे प्रायश्चित्ताद्यविधानाच्च नात्यन्तावश्यकता । किंच निरर्थवादस्थले व्यभिचारादपि नार्थवादनियमः। न च 'विधेरेव द्वे शक्ती' इत्यादिवार्तिकानुसाराद्विधिरेव तत्रार्थवाद इति वाच्यम्; तद्वार्तिकस्य शब्दभावनांशप्रतिपादनमात्रपरत्वेन विधेरर्थवादत्वबोधनत्वाभावात्। अपि च बलवदनिष्टाननुबन्धित्वरूपं प्राशस्त्यमित्युक्तम् । तस्य च प्रवर्तनाविषयत्वहेतुनापि ज्ञानसम्भवायार्थवादानामावश्यकता । न च तर्हि तेषां धर्माधर्मप्रामाण्यं न स्यादिति वाच्यम्; न हि तस्योपयोग एव नास्ति इति वदामः । किन्तु मन्त्रवन्नियमो न कल्पनीय इति । एवं प्राचीनशुभकर्मवशाद्यस्य वित्तव्ययादौ द्वेषो नास्ति तस्य प्राशस्त्यज्ञानं विनापि प्रवृत्तिदर्शनेन फलसिद्धेरावश्यकतया नैतत्प्रयोजनं युक्तम् । किञ्च यस्य प्राचीनदुरितबाहुल्यं तस्यार्थवादसहस्रेणापि प्रवर्तयितुं अशक्यत्वाद्व्यर्थ एवार्थवादः स्यात् । तस्मात् पुरुषविशेषं प्रत्येवार्थवादानां सार्थक्यमिति उक्तप्रयोजनासम्भवः । अपि च फलसिद्ध्यसिद्ध्योरनुष्ठाने विशेषाभावेन नैतत्प्रयोजनमित्यन्यदेव प्रयोजनं वक्तव्यम् । तद्यथा- 'अश्वप्रतिग्रहेष्टिः' पूर्वपक्षे प्रतिगृहीतुः,सिद्धान्ते दातुरिति वाक्यशेषादिना निर्णयसिद्धान्तस्सर्वोऽपि द्रष्टव्यः। सूत्रार्थस्तु, **आम्नायस्य**--वेदस्य। **क्रियार्थत्वात्**—अंशत्रयविशिष्टभावनाप्रतिपादकत्वेन प्रामाण्यस्य व्यवस्थापितत्वात् । **अतदर्थानाम्**—अतत्प्रतिपादकानाम् । **आनर्थक्यम्**—प्रयोजनवदर्थराहित्यम् । तस्मात् **अनित्यं**--अप्रमाणम्, एवञ्जातीयकमर्थवादजातमिति ॥

**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्** ॥ अर्थवादानां स्तावकत्वेन प्रामाण्य-

कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ २४ ॥ विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै'[1] इत्याद्यर्थवादेषु न स्तुतिलक्षणा, शक्त्यैव पशुरूपफलसम्बन्धविधायकत्वेन प्रामाण्योपपत्तेः। पशूनिति द्वितीयया 'ऊर्जोऽवरुद्ध्यै' इति चतुर्थ्या वा पशूनां साध्यत्वेऽवगते साधनापेक्षत्वादौदुम्बरत्वं साधनं सन्निधानादूर्जेति तृतीयाश्रवणाच्च। भवतीत्याख्यातेन च लक्षणया शक्त्यैव वा भावनाभिधानात् भूधातोश्च

मुक्तं क्वचिदाक्षिप्य समाधीयत इत्याक्षेपिकी सङ्गतिरित्यभिप्रायेण सोमापौष्णपशुसन्निधौ श्रूयमाणवाक्यमुदाहरति—**औदुम्बरो यूपो भवतीत्यादि** ॥ ऊर्गित्यन्नमुच्यते। उदुम्बरो निश्चितमन्नम्। पशवोऽप्यन्नम्। अतोऽन्नेनैव उदुम्बरेणान्नरूपान्पशूनस्मै यजमानाय प्रापयत्यध्वर्युः। अत ऊर्गवरोधायौदुम्बरो यूपो भवतीत्यर्थः। आदिना 'न स पापं श्लोकं शृणोति' इत्यादिसङ्ग्रहः। ऊर्ग्वा इत्यादिः फलप्रतिपादकत्वेन प्रमाणं, प्राशस्त्यलक्षकत्वेन वेति सन्दिह्य पूर्वपक्षमुपपादयति—**न स्तुतिलक्षणेत्यादि** ॥ **फलसम्बन्धविधायकत्वेन**—फलसम्बन्धबोधकत्वेन। यथाश्रुते फलस्य विधेयत्वं नास्तीति सिद्धान्तविरोधात्। ततश्चौदुम्बरत्वेन पशून् भावयेदिति वाक्यार्थ इति भावः॥ **द्वितीययेति** ॥ द्वितीयाया ईप्सितकर्मवाचित्वेन कामोपबन्धाभावेऽपि प्रकृत्यर्थस्य भाव्यत्वानुगमः। अत एव भावार्थाधिकरणे वार्तिककृतः 'तच्च फलं प्रायेणैवञ्जातीयके कामशब्देनोच्यते' इति प्रायपदं प्रयुक्तवन्त इति भावः। ननु द्वितीयया न फलत्वप्रतीतिर्युक्ता। 'तथायुक्तञ्चानीप्सितम्' इत्यनीप्सितेऽपि तदनुशासनादित्यत आह—**चतुर्थ्या वेति** ॥ 'सर्वेभ्यो ज्योतिष्टोमः' 'रन्धनाय स्थाली' इत्यादौ चतुर्थ्या भाव्यत्वावगमादिति भावः। ज्योतिरादिपदोत्तरं तृतीयाद्यभावेऽपि साधनत्वेनान्वयदर्शनात्सिद्धसाध्यसमभिव्याहारन्यायेनौदुम्बरत्वं साधनत्वेनावगम्यत इत्याशयेनाह—**सन्निधानादिति** ॥ बुद्धिविपरिवृत्तेरित्यर्थः। ननु यूपपदसमभिव्याहृतेनौदुम्बर इति विकारार्थतद्धितेन जन्ययूपप्रतीतेस्सन्निधानादपि बलीयस्या पदश्रुत्या प्रकृत्यर्थान्वयेन उदुम्बरत्वयूपयोरेव साध्यसाधनभावसिद्धेरित्यत आह—**ऊर्जेति** ॥ **तृतीयाश्रवणाच्चेति** ॥ अर्थवादेन विवृतत्वादुदुम्बरेणेत्यर्थः। समानपदश्रुत्यपेक्षयापि बलीयस्या उदुम्बरत्वजातेः फलसाधनत्वे बोधिते तन्निर्वाहाय तदाक्षिप्तपरिच्छेद्यानुवादकतया तद्धितोऽप्युपपन्न इति भावः। साध्यसाधनभावघटकक्रियालाभं द्वेधोपपादयति—**भवतीति** ॥ ननु करोतीत्यत्रेव भवतीत्यादावाख्यातस्य साधुत्वार्थतया आख्यातेन भावनाप्रतीत्यभावात् कथं विधित्वमित्यत आह—**लक्षणयेति** ॥ करोतीत्यादौ साधुत्वेऽपि प्रकृते लक्षणया भावनाभिधायित्व-

१. तै सं. २. १. १.

यूपोत्पादकच्छेदनानुवादकत्वादप्राप्तार्थकत्वेन च लेट्त्वनिश्चयादुभयविशिष्टभावनाविधायकत्वोपपत्तिरित्याक्षेपे प्राप्ते--

यूपकर्तृकभवनाक्षिप्तायां भावनायां यूपस्यैव भाव्यत्वौचित्यात्सन्निधानाच्च यूपोद्देशेनैवौदुम्बरत्वविधिः; न तु फलोद्देशेन कामशब्दाद्यभावेन फलत्वस्य तथाऽनुपस्थितेः। किञ्च भवन्मते गुणफलसम्बन्धोऽयम्। न चासौ सम्भवति, आश्रयाभावात्।

---

मित्याशयः। यत्तु भवतीत्याख्यातेनेत्यस्य भूधातुनेत्यर्थ इति व्याख्यानं, तदसत्; भूधातोश्चेत्युत्तरग्रन्थविरोधात्। वस्तुतस्तु लक्षणापि नास्तीत्याह--**शक्त्यैव वेति**॥ सर्वाख्यातानामाख्यातत्वेन भावनावाचित्वात् जघन्यलक्षणाश्रयणं नेति भावः। तथाचोक्तं 'अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना' इति। भूधातोरुपपत्तिमाह--**भूधातोश्चेति**॥ **अनुवादकत्वादिति**॥ प्रत्ययसाधुत्वार्थमेव प्रयोग इति भावः। ननु तथापि विधायकलिङाद्यभावान्न विधिसम्भव इत्यत आह--**अप्राप्तेति**॥ भवतीत्यस्य लट्लेट्साधारण्येनाप्राप्तार्थत्वेन लेट्त्वनिश्चयाद्विधायकत्वं सम्भवतीत्यर्थः। अयं चार्थस्सिद्धान्तिनोऽपि सम्मत इति द्रष्टव्यम्। पूर्वपक्षमुपसंहरति--**उभयविशिष्टभावनेति**॥ तत औदुम्बरत्वकरणकपशुभाव्यकभावनाविधानोपपत्तिरित्यर्थः। पूर्वपक्षे भावनाक्षेपपक्षस्य स्वानुक्तत्वेऽपि प्राचीनोक्तत्वेन स्वारसिकत्वेन च प्रथमतस्तं निराकरोति--**यूपकर्तृकभवनाक्षिप्तायामिति**॥ **यूपस्यैवेति**॥ यद्भवनान्यथानुपपत्तिकल्पितभावनात्वं यत्र तत्र तद्भाव्यकत्वमिति व्युत्पत्तेर्लोकसिद्धत्वात्। यूपभवनाक्षिप्तभावनायां यूपस्यैव भाव्यत्वमुचितमित्यूर्गवरोधस्य भाव्यत्वं न सम्भवतीत्यर्थः। स्वसिद्धान्तमाह--**सन्निधानाच्चेति**॥ स्ववाक्योपस्थितत्वादित्यर्थः। **यूपोद्देशेनेति**॥ तथा च औदुम्बरत्वेन यूपं भावयेदिति वाक्यार्थ इति भावः॥ **कामशब्दादीति**॥ आदिना सनादिपरिग्रहः। उक्तवार्तिके प्रायपदमपि विवक्षितार्थकमिति राणके प्रतिपादितत्वात् न विरोधः। ननु कामशब्दाद्यभावेऽपि ब्राह्मणाय दुग्धमित्यादिवत् प्राधान्यप्रतीतेः फलत्वं स्यादिति चेन्न; प्राधान्यप्रतीतावपि भाव्यत्वाप्रतीतेः। सर्वेभ्य इत्यादौ तु एकस्मै कामायेति पूर्ववाक्यश्रुतकामशब्दस्य वचनविपरिणामेनानुषङ्गेण लक्षणया वा भाव्यत्वप्रतीतिः। अत्रापि लक्षणाङ्गीकारे सैव दोष इत्याशयः। किंच आप्नोतीति वर्तमाननिर्देशः फलपरत्वे बाधितः। फलस्य वर्तमानत्वाभावात्। स्तुतिपरत्वे त्वनुगुणः। 'न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने' इति न्यायादित्यभिप्रायेणाह--**तथाऽनुपस्थितेरिति**॥ गुणफलसम्बन्धं दूषयति--**किञ्चेति**॥ **आश्रयेति**॥ यत्रहि गुणः कारकतां प्रतिपद्यते स आश्रयः। यथा होमो दध्न इति पार्थसारथिः। फलाय विधीयमानो गुणो यां क्रियामपेक्षते स आश्रय इति तन्निष्कर्षः। कारकत्वं अविवक्षितम्। तेन 'ऐन्द्रवायवान् ग्रहान् गृह्णीयात्' 'यः कामयेत

'सोमापौष्णं त्रैतमालभेत पशुकामः'[1] इति प्रकृतस्य यागस्याश्रयत्वे हि यूपग्रहणानर्थक्यम् । यूपस्य त्वप्रकृतत्वादेवाश्रयत्वानुपपत्तिः । अतिदेशेन तस्योपस्थितिस्तु जुह्वादिपात्रान्तरसाधारणीति तेषामप्याश्रयत्वे तथैव यूपग्रहणानर्थक्यम् । वाक्येनाश्रयदाने च वाक्यभेदः । तस्मात् 'ऊर्वै'[1] इत्यादिरर्थवाद एवौदुम्बरत्वस्येति सिद्धम् ॥

प्रयोजनं यागफलात्फलान्तरकामनायामौदुम्बरो यूपः इतरथा खादिरः पूर्वपक्षे । सिद्धान्ते तु औदुम्बर एवेति ॥ २ ॥

---

यथापूर्वं प्रजाः कल्पेरन्' इत्यादौ ग्रहणमाश्रित्य प्रजारूपफलोद्देशेन विधीयमानस्यैन्द्रवायवाग्रत्वस्य ग्रहणं प्रति करणत्वाभावेऽपि न क्षतिः ॥ **त्रैतमिति** ॥ युगपदेकगर्भोत्पन्नतृतीयान्यतममित्यर्थः । 'द्वौ वा अजायै स्तनौ नानैव द्वावभिजायेते' 'ऊर्जं पुष्टिं तृतीय' इति वाक्यशेषानुसारेण वेदभाष्ये तथोक्तेः । त्रयाणां समूहस्त्रिता । 'गजसहायाभ्यां च' इति चकारेण त्रिशब्दसमुच्चयात् । तत्र भव इति व्युत्पत्तेः ॥ **यागस्येति** ॥ गुणस्य यागसम्बन्धस्साक्षाद्वा प्रदेयपरिच्छेदकत्वेन वा ? नाद्यः, जातेर्यागनिर्वर्तकत्वासम्भवात् । नचानर्थक्यतदङ्गन्यायेनाङ्गेष्ववतारः । क्रत्वनङ्गे फलाङ्गे काम्यगुणे तन्न्यायानवतारात् । प्रत्युत जुह्वादिष्वेवावतारात् यूपग्रहणानर्थक्यम् । नान्त्यः, जात्याक्षिप्तवृक्षस्य विलक्षणपशुकामनायां त्रैतपशुबाधकत्वेन विधानेऽपि यूपपदसार्थक्याय तद्धर्मातिदेशार्थं लक्षणापत्तेरित्यभिप्रायः । ननु यागस्याश्रयत्वाभावेऽपि दृष्टादृष्टक्रियासमुदायरूपस्य यूपस्याश्रयत्वमस्त्वित्यत आह—**यूपस्यत्विति** ॥ **अप्रकृतत्वादिति** ॥ विकृतौ यूपविधानाभावेनानुपस्थितत्वादित्यर्थः । अतिदेशेनोपस्थितिमाशङ्क्याह—**अतिदेशेनेति** ॥ प्राकृतेत्थम्भावस्य चातिदेशेन तस्य जुह्वादिपात्रान्तरसाधारण्येन तेषामप्याश्रयत्वापत्तेरित्यर्थः । ननु जुह्वादीनामप्याश्रयत्वमस्त्वित्यत आह—**तेषामिति** ॥ यूपपदवैयर्थ्यान्नैतदपि युक्तमित्यर्थः ॥ **वाक्येनेति** ॥ वाक्येन गुणफलसम्बन्धस्याश्रयसम्बन्धस्य च विधौ वाक्यभेदः स्यादित्यर्थः । नन्वतिदेशेन जुह्वादीनां प्राप्तावपि यूपपदानुवादबलेन जुह्वादिपरिसङ्ख्यासम्भवान्नोक्तदोषः । गिरापदद्वयनिषेधानुवादबलेनेरापदेऽभ्यासप्राप्तेः, स्थाननियमस्य च कल्पनवन्न्यायसाम्येन परिसङ्ख्याया अपि कल्पयितुं शक्यत्वादिति चेन्न ; अतिदेशप्रवृत्त्युत्तरं परिसङ्ख्यायां त्रैदोष्यापत्तेः । ततः पूर्वं तत्कल्पने तु प्रापकान्तरविरहाद्यूपपदसमभिव्याहारबलादेव यूपसम्बन्धकल्पनेन वाक्यभेदतादवस्थ्यमिति भावः ॥ **अर्थवाद एवेति** ॥ न फलसम्बन्धबोधक इत्यर्थः । ननु 'ऊर्ग्वा उदुम्बरः' इत्यदावौदुम्बरत्वेन पशून् भावयेदिति विधिकल्पनेन फलपरत्वमस्त्विति चेन्न; प्रकृते तत्सम्भवेऽपि 'अप्सु योनिर्वा अश्वः कर्तव्यः' इति विधेः कल्पयितुं अशक्यत्वेन स्तावकत्वस्यैवाङ्गीकरणीयतया तदवैरूप्याय प्रकृतेऽपि स्तावकत्वस्यैव युक्तत्वात् । न च तर्हि क्वाप्यर्थवादतो विधिकल्पनं न स्यादिति वाच्यम्; श्रुतवि-

---

१. तै. स. २. १. १.

**(३)—हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥ स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥ व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥ अर्थस्तु विधिशेषत्वाद्यथालोके ॥ २९ ॥ यदि च हेतुरवतिष्ठेत निर्देशात् ॥ ३० ॥ सामान्यादिति चेत् ॥ ३१ ॥ अव्यवस्था विधीनां स्यात् ॥ ३२ ॥**

चातुर्मास्ये 'शूर्पेण जुहोति'[1] इति शूर्पकरणकहोमं विधाय श्रुते 'तेन ह्यन्नं क्रियते' इत्यर्थवादे न स्तुतिलक्षणा । अपि तु होमसाधनत्वे साध्ये अन्नकरणत्वस्य हेतुत्वं विधीयते । न ह्यत्र पूर्ववत् भाव्यत्व इव किञ्चित्कल्पनीयमस्ति, हिशब्दश्रुत्यैव हेतुत्वाभिधानात् । हेतुश्च व्याप्तिमन्तरेणानुपपन्नः यद्यदन्नकरणं तेनतेन होतव्यमिति

ध्येकवाक्यत्वाभावस्थले स्वस्वविध्येकवाक्यत्वाय तत्कल्पनसम्भवात् । प्रकृते तु श्रुतविध्येकवाक्यत्वोपपत्त्या विधिकल्पनाया असम्भवात् । एतेन उदुम्बरत्वप्रकृतिकयूपस्य फलाकाङ्क्षाया-मूर्गवरोधः फलमस्त्विति निरस्तम् । तथा सति 'औदुम्बरत्वेन यूपं भावयेत्, उदुम्बरत्वविशिष्ट-यूपेनोर्गवरोधं भावयेत्' इति वाक्यभेदापत्तेरिति ध्येयम् । प्रयोजनं मूले स्पष्टम् । सूत्रार्थस्तु, **विधिर्वा स्यात्**—वाशब्दः प्रत्यवस्थाने । औदुम्बरो यूपो भवतीति फलाय विधिस्स्यात् । **अपूर्वत्वात्**—लोकतः प्राप्त्यभावात् । **हि**—यस्मात् । **वादमात्रम्**—अर्थवादम् । **अनर्थ-कम्**—अर्थवादाभावेऽपि विधिनैव स्तुतिसम्भवादिति भावः ॥

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ चातुर्मास्य इति** ॥ चतुर्षु चतुर्षु मासेषु कर्तव्या-नि चातुर्मास्यानि । वैश्वदेव-वरुणप्रघास-साकमेध-शुनाशीरीयाख्यानि । तेषां चतुर्णां पर्वणां चातुर्मास्यानीति नामधेयम् । द्वितीये पर्वणि वरुणप्रघासाख्ये द्वे वेदी द्वावाहवनीयौ । तत्र दक्षिणे आहवनीये यवपिष्टमयकरम्भपात्रहोमविधानानन्तरं 'शूर्पेण जुहोति' 'तेन ह्यन्नं क्रियते' इति श्रूयते । तत्र 'तेन ह्यन्नं क्रियते' इति किं हेतुविधिः, उत अर्थवाद इति संशये हेतुविधिरिति पूर्वपक्षनिरूपणाय सिद्धान्त्यभिमतमर्थवादत्वं निराकरोति—**न स्तुतिलक्षणेति** ॥ शक्यार्थ-विधिसम्भवे लक्षणाया अयुक्तत्वादिति भावः ॥ **होमसाधनत्व इति** ॥ 'शूर्पेण जुहोति' इत्यनेन प्राप्त इति शेषः ॥ **अन्नकरणत्वस्य हेतुत्वं विधीयते**—अन्नकरणत्वं हेतुरित्युच्यत इत्यर्थः ॥ **पूर्ववदिति** ॥ 'ऊर्जं पशूनाप्नोति' इत्यत्र फलत्वप्रतिपादनाय कामिपदादिकल्प-नवदिह न किञ्चित्कल्पनीयमित्यर्थः । अनेन प्रत्यवस्थानात्सङ्गतिरिति सूचितम् ॥ **हिशब्द-श्रुत्येति** ॥ 'हिर्हेतौ' इत्यभियुक्तोक्तेरिति भावः ॥ **हेतुश्चेत्यादि** ॥ हेतुत्वान्यथानुपपत्त्या

१. तै. ब्रा. १-६-५.

व्याप्तिवचनं कल्पयति । ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेर्होमसाधनत्वप्रतीतेः विधौ शूर्पपदमुपलक्षणम् । अवयुत्यानुवादो वा । यद्वा--तच्छब्देन शूर्पस्यैव परामर्शात् तद्गतमेवान्नकरणत्वं हेतुः । तेन च विशिष्यैव व्याप्तिकल्पनात् अन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिस्थं शूर्पपदमन्यथा नेयमिति पूर्वः पक्षः ।

सिद्धान्तस्तु--क्रियत इति लडन्तनिर्देशात् वर्तमानान्नककरणत्वस्य हेतुत्वं वाच्यम् । न च होमकाले अन्नकरणत्वं सम्भवति । अतो लटः भूतभविष्यत्कालान्त-

---

व्याप्तिरस्तीति ज्ञायत इत्यर्थः । व्याप्तिकल्पनप्रयोजनमाह—**शूर्पादन्यस्यापीति** ॥ अन्नसाधनस्य सर्वस्यापि होमसाधनत्वलाभात् हेतुविधिस्सार्थक इति भावः । **पिठरः**—स्थाली । ननु यद्यदन्नकरणमित्यनेनैव शूर्पस्यापि होमसाधनत्वसिद्धेः शूर्पेणेति व्यर्थं स्यादित्यत आह— **उपलक्षणमिति** ॥ तथा चान्नसाधनोपलक्षकत्वान्न वैयर्थ्यमित्यर्थः । नन्वेवं लक्षणाश्रयणं स्यादित्यत आह—**अवयुत्येति** ॥ पृथक्कृत्येत्यर्थः । ननु कल्पितवचनेन सर्वेषां होमसाधनत्वं विकल्पेन, समुच्चयेन वा ? नाद्यः, प्रत्यक्षश्रुतशूर्पस्य कल्पितवचनप्राप्तदर्व्यादिभिः विकल्पे विषमशिष्टविकल्पापत्तेः । नान्त्यः, प्रमाणाभावात् । सोमक्रये हि सर्वेषां हिरण्यरूप्यादीनां 'दशभिः क्रीणाति' इति वचनात् समुच्चय इति युक्तम् । अत्र तु प्रमाणाभावात् न तत्सम्भवः । किञ्च समुच्चयपक्षे शूर्पेणेति तृतीयानुपपत्तिः । 'समर्थः पदविधिः' इति सूत्रेण पदसम्बन्धविधिमात्रे सामर्थ्यापेक्षणात् । तृतीयाविधेरपि पदसम्बन्धिविधित्वेन सामर्थ्यस्यावश्यकतया दर्वीपिठराद्यपेक्षणे सामर्थ्यविघातात् । न चास्य समासप्रकरणस्थत्वेन समासे तदपेक्षायामपि सुब्विधौ न प्रवृत्तिरिति वाच्यम्; अस्य परिभाषारूपत्वेन सर्वत्र प्रवृत्तेरनिवार्यत्वात् । अन्यथा तद्धितविधौ तत्प्रवृत्तिर्न स्यात् । नच तत्र 'समर्थानां प्रथमाद्वा' इति सूत्रान्तरेण सामर्थ्यविधानान्नास्य सूत्रस्य तत्र प्रवृत्तिरिति वाच्यम्; समर्थानामित्यस्य परिनिष्ठितानामित्यर्थकत्वेन उक्तसामर्थ्याविधायकत्वात्, प्रथमाद्वा प्रत्ययोत्पत्तिरित्यर्थमात्रविधौ तात्पर्यात् । पदविधिशब्दार्थस्तु महाभाष्ये प्रसिद्ध इत्यत आह—**यद्वेति** ॥ **तच्छब्देन**—'तेन ह्यन्नम्' इति वाक्यस्थतच्छब्देन ॥ **शूर्पस्य परामर्शादिति** ॥ सर्वनाम्नां बुद्धिस्थपरामर्शित्वादिति भावः ॥ **तद्गतमेव**—शूर्पगतमेव ॥ **तेन**—शूर्पगतान्नकरणत्वहेतुना । अन्नकरणसमर्थशूर्पस्य होमसाधनत्वसिद्ध्या अन्नकरणासमर्थच्छिद्रादिशूर्पव्यावृत्तिः । प्रथमपूर्वपक्षे अस्वरसमाह—**न विधिस्थमिति** ॥ तथा च प्रथमपूर्वपक्षे विधिवाक्यस्थशूर्पपदस्य उपलक्षणत्वादिकं दोष इति भावः ॥ **लडन्तनिर्देशादिति** ॥ 'वर्तमाने लट्' इत्यनुशासनाद्वर्तमानान्नकरणत्वस्य हेतुत्वे तत्काले होमसाधनत्वासम्भव इत्यर्थः ॥ **अत इति** ॥ लटो भूतभविष्यत्काललक्षणा विधौ प्रसज्येत । सा च न युक्ता, 'न विधौ परः शब्दार्थः' इति न्यायादिति भावः । सिद्धान्तेऽपि लक्षणा-

रलक्षणा विधौ तवाप्यावश्यकी । यद्यपि चेयं प्राशस्त्यलक्षणोपयोगिगुणघटकतया ममाप्यावश्यकी तथाऽप्यनुवादस्थत्वात् प्राशस्त्योपपादकत्वाच्च न दोषः, वर्तमाननिर्देशं विना तदप्रतीतेः । किञ्च—अपेक्षितप्राशस्त्यपरत्वे सम्भवति नानपेक्षितहेतुपरत्वाङ्गीकारो युक्तः । अतस्सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रामाण्यम् ॥ ३ ॥

---

स्तीति शङ्कते—**यद्यपीति** ॥ **प्राशस्त्यलक्षणोपयोगीति** ॥ वर्तमानान्नकरणत्वेन प्राशस्त्यस्य लक्षणीयत्वादित्यर्थः । **अनुवादस्थत्वादिति** ॥ यथाप्राप्त्यनुवादार्थं लक्षणा न दुष्यतीति भावः । **प्राशस्त्योपपादकत्वादिति** ॥ 'न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्तमाने' इति न्यायेन वर्तमानत्वनिर्देशं विना बहुक्षीरादिवाक्येष्विव प्राशस्त्याप्रतीतेरित्याशयः । ननु लक्षणाभिया 'तेन ह्यन्नं क्रियते' इत्यस्य हेतुपरत्वं परित्यज्य केवलार्थवादत्वाङ्गीकारे 'न ह्यत्रानूयाजान् यक्ष्यन्भवति' इत्यत्रापि हेतुपरत्वं न स्यादित्यत आह—**किञ्चेति** ॥ **अपेक्षितेति** ॥ तथाच तत्र हेतुपरत्वस्याप्यपेक्षितत्वेन सम्भवेऽपि प्रकृते प्रवर्तनार्थं प्राशस्त्यमात्रापेक्षणादिति भावः । अनेन वेदविहितेऽर्थे हेत्वपेक्षा नास्तीति पार्थसारथिप्रतिपादितानपेक्षितत्वं हेतुवादस्येति सूचितम् । उक्तञ्च 'न हि वेदेनोच्यमानं हेतुमपेक्षते' इति । किञ्च हेतुत्वान्यथानुपपत्त्या व्याप्तिवचनं कल्प्यत इति पूर्वपक्षोक्तमप्यत्यन्तासङ्गतम् । न हि लोके धूमादेर्हेतुत्वसिद्ध्यनन्तरं व्याप्तिवचनं कल्पयन्ति तान्त्रिकाः । किन्तु व्याप्तिपक्षधर्मतात्वेन प्रमितस्यैव हेतुत्वं वर्णयन्ति । अतोऽपि न हेतुपरत्वम् । एवं हेतुत्वसिद्धौ व्याप्तिकल्पनं, व्याप्तिसिद्धौ हेतुत्वकल्पनमित्यन्योन्याश्रय इत्यपि द्रष्टव्यम् । उपसंहरति—**अतस्सिद्धमिति** ॥ सर्वेषां विधिसमभिव्याहृतार्थवादानां प्राशस्त्यलक्षकत्वमित्यर्थः । ननु सर्वेषां अर्थवादानां प्राशस्त्यलक्षकत्वमिति न युक्तम् ; 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इत्याद्यर्थवादानां प्राशस्त्यलक्षकत्वे निन्दाप्रतीत्यनापत्तेः । न हि तेन बलवदनिष्टाननुबन्धित्वरूपप्राशस्त्यं बोधयितुं शक्यम् । जर्तिलयवाग्वादेर्विधानापत्तेः । न चैवं सम्भवति पयसो विकल्पापत्त्याष्टदोषापत्तेरिति चेन्न; तत्र निन्दायां तात्पर्याभावात्पयोहोमस्तुत्यर्थत्वात् । 'न हि निन्दा निन्दितुं प्रवृत्ता; किन्तु स्तुत्यं स्तोतुं प्रवृत्ता' इति दशमे वक्ष्यमाणत्वान्न कोऽपि दोषः । अत्र भाष्योदाहृता ये अर्थवादभेदा आशीःप्रलापादयो राणके च सत्यज्ञानादिवाक्योपलक्षकत्वेन व्याख्याताः, ये च द्रव्यगुणनिमित्तकर्तृकालदेशविविधरूपास्तादृशाविधिनिषेधसरूपाश्च तेषामपि प्राशस्त्यलक्षकत्वेन प्रामाण्यं द्रष्टव्यम् । सूत्रार्थस्तु, वा शब्दः प्रत्यवस्थाने । 'ऊर्जोऽवरुध्यै' इत्यर्थवादोऽस्तु । अत्र त्वन्नकरणत्वं होमसाधनत्वे हेतुः प्रतिपाद्यःस्यात् । कुतः? अर्थवत्त्वोपपत्तिभ्याम् । अर्थशब्दात् भूम्नि मतुप् । ततश्च येन येनान्नं क्रियते तेन तेन होतव्यमिति व्याप्त्या दर्वीपिठरादीनामपि होमसाधनत्वसिद्ध्या प्रयोजनसत्त्वात् । हि शब्दो

(४)—तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम्[1] ॥ ३३ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ३४ ॥ गुणार्था वा पुनश्श्रुतिः ॥ ३५ ॥ परिसङ्ख्या ॥ ३६ ॥ अर्थवादो वा ॥ ३७ ॥ अविरुद्धं परम् ॥ ३८ ॥ संप्रैषे कर्मगर्हानुपालम्भस्संस्कारत्वात् ॥ ३९ ॥ अभिधानेऽर्थवादः ॥ ४० ॥ गुणादविप्रतिषेधः स्यात् ॥ ४१ ॥ विद्यावचनमसंयोगात् ॥ ४२ ॥ सतः परमविज्ञानम् ॥ ४३ ॥ उक्तश्चानित्यसंयोगः ॥ ४४ ॥ लिङ्गोपदेशश्च तदर्थवत् ॥ ४५ ॥ ऊहः ॥ ४६ ॥ विधिशब्दाश्च ॥ ४७ ॥

मन्त्राणां धर्माधर्मयोः प्रामाण्यमस्ति न वेति चिन्तायां न तावद्विधित्वेन प्रामाण्यं, तस्य द्वितीये निराकरिष्यमाणत्वात्। नापि स्तावकत्वेन अर्थवादवत्, तेषां हि सन्निहितेन विधिना पदैकवाक्यत्वात् युक्तं स्वसमर्पितप्राशस्त्यान्वितभावनाविषय-

---

हेत्वर्थे। 'काकेभ्यो दधि रक्ष्यताम्, ते हि दध्युपघातकाः,' इत्यादौ लोके, 'न ह्यत्रानूयाजान्' इत्यादौ वेदे च प्रसिद्धत्वादिति ॥

तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम्॥ पादाद्याधिकरणे 'वायुर्वै' इत्याद्यर्थवादानां प्रामाण्यं विचारितम्। द्वितीयाधिकरणे फलविधिसरूपाणां 'ऊर्जोऽवरुध्यै' इत्यादीनां स्तावकत्वमुक्तम्। तृतीये हेतुविधिसरूपाणां 'तेन ह्यन्नं क्रियते' इत्यादीनां अर्थवादत्वमुक्तमिति विधिसमभिव्याहृतानां अर्थवादानां प्रामाण्ये सिद्धे अधुना विध्यसमभिव्याहृतानां मन्त्राणां प्रामण्यमस्तीति प्रतिपाद्यत इत्यवसरसङ्गतिं प्रसङ्गसङ्गतिं चाभिसन्धायाह—**मन्त्राणामिति** ॥ किं मन्त्राणां विधायकत्वेन प्रामाण्यम्, उत स्तावकत्वेन, अथवा स्मारकत्वेनेति विकल्प्य नाद्य इत्याह—**न तावदिति** ॥ **द्वितीय इति** ॥ 'विधिशब्दस्य मन्त्रत्वे' इत्यत्रेत्यर्थः। 'वसन्ताय' इत्यत्र अप्राप्तार्थत्वेन विधित्वेऽपि सर्वत्राप्राप्तार्थत्वाभावादिति भावः। न द्वितीय इत्याह—**नापीति** ॥ **तेषां**—'वायुर्वै' इत्यादीनाम्। **सन्निहितेन विधिना**—'वायव्यं श्वेतमालभेत' इत्यादिविधिना। **पदैकवाक्यत्वात्**—प्राशस्त्यरूपपदार्थप्रतिपादनद्वारा एकवाक्यत्वात्। **स्वं**—अर्थवादः। तेन समर्पितं यत्प्राशस्त्यं लक्षणया

---

१. 'मन्त्रानर्थक्यमित्यन्तस्यैकसूत्रत्वेऽपि व्याख्यासौकर्यार्थं खण्डशः प्रत्येकं पञ्चम्यन्तसूत्रावयवोपन्यासः' इति कौस्तुभानुसारादेकसूत्रमेवेदमिह कृतम्।

कशाब्दज्ञानजनकत्वम् । मन्त्राणां तु दूरस्थत्वेन पदैकवाक्यत्वानुपपत्तेः न तद्विधया प्रामाण्यसम्भवः । नापि प्राशस्त्यं स्वातन्त्र्येण वाक्यार्थः, पदार्थविधयोपस्थितत्वात् । नाप्यर्थस्मारकत्वेन प्रामाण्यं, अनधिगतार्थबोधकत्वाभावेन तदसम्भवात् । साममन्त्राणामर्थाभावेन याथार्थ्यस्याप्यनुपपत्तेश्च । न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमात्राङ्गीकारः, ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धौ नियतमन्त्राम्नानवैयर्थ्यात् । प्रयोगासमवेतार्थस्मारकेषु स्मृतिवैयर्थ्याच्च । अतोऽधिकाराख्यप्रकरणादिनाऽव-

---

तदन्वितशब्दभावनाविषयकशाब्दप्रमाजनकत्वात् तत्र विशेषणीभूतप्राशस्त्यप्रतिपादकत्वात् प्रामाण्यं युक्तम् । मन्त्राणां दूरस्थत्वेन विधिवाक्यसन्निहितत्वाभावान्न पदैकवाक्यतेति न स्तावकत्वेन प्रामाण्यसम्भव इत्यर्थः । ननु पदैकवाक्यत्वाभावेऽपि वाक्यैकवाक्यतया विध्यन्वयोऽस्त्वित्यत आह—**नापीति** ॥ 'तण्डुलैर्जुहोति' इत्यादिविधिशेषे 'वसूनां वा एतद्रूपम्' इत्यादौ 'यत्तण्डुलैर्जुहोति' इति पुनरनुवादेन स्वातन्त्र्येण प्राशस्त्यं वाक्यार्थ इति युक्तम् । अक्ताधिकरणवार्तिके प्रतिपादितरीत्या विध्यर्थवादयोः स्वस्वविशिष्टार्थबोधपरिसमाप्तयोरपि पुनराकाङ्क्षोत्पादनेन वाक्यैकवाक्यत्वम् । मन्त्राणां तु प्रदेशान्तरपठितत्वेन विधिसान्निध्यनुवादयोरभावेन वाक्यार्थत्वासम्भवेन तदेकवाक्यता न सम्भवतीत्यर्थः ॥ **पदार्थविधयेति** ॥ प्राशस्त्यस्य बलवदनिष्टाननुबन्धित्वरूपतया पदार्थत्वेन वाक्यार्थत्वासम्भवादिति भावः । यद्यपि 'चत्वारि श्रृङ्गाः' इत्यादीनां यागस्तावकत्वं भाष्ये उक्तम् । देवतास्तावकत्वं वार्तिके प्रतिपादितम् । तथापि सर्वत्र न तद्भवतीत्याशयः । न तृतीय इत्याह—**नाप्यर्थस्मारकत्वेनेति** ॥ सम्भवदपि प्रामाण्यम् अनधिगतार्थगन्तृत्वं वा, अबाधितार्थकत्वं वा? नाद्य इत्याह—**अनधिगतेति** ॥ 'बर्हिर्देवसदनं दामि' इति मन्त्रप्रतिपाद्यलवनस्य 'बर्हिर्लुनाति' इति वचनेन प्राप्तत्वादिति भावः । न द्वितीय इत्याह—**साममन्त्राणामिति** ॥ 'गीतिषु सामाख्या' इति साम्नो गीतिरूपत्वेन गीतेर्ध्वनिरूपतया अर्थाभावादित्यर्थः । 'सृण्येव जर्भरी' इत्यादीनां निरुक्तादिवशेनार्थसम्भवात्सामपर्यन्तानुधावनम् । स्तोभानां स्तोभभाष्योक्तरीत्यार्थवत्त्वसम्भवेऽपि नावमिकाधिकरणविरोधापत्त्यार्थोपस्थापकत्वं नास्तीति भावः । नन्वनधिगतार्थगन्तृत्वादिरूपप्रामाण्याभावेऽपि अर्थस्मारकत्वसत्त्वेन प्रयोजनवत्त्वात् स्वाध्यायविधिपरिग्रहान्नानर्थक्यमित्याशङ्कते—**नचेति** ॥ स्मारकत्वादीत्यादिना प्रोत्साहनादिपरिग्रहः । स्मृतिः स्वार्थमात्रस्य वा, अनुष्ठेयार्थस्य वा, कर्मसमवेतस्य वा? नाद्यः, ऐशप्रलपाद्यर्थस्य स्मरणेनोपयोगाभावात् । न द्वितीय इत्याह—**ध्यानेति** ॥ अनुष्ठेयार्थस्मृतेर्ध्यानेनापि सिद्ध्या नियतमन्त्राम्नानमनर्थकमित्यर्थः । आदिनोपदेष्टृवचनादेः परिग्रहः । 'मन्त्रै रेवानुष्ठेयार्थस्स्मर्तव्यः' इति नियमकल्पने तु वाचकशब्दस्मरणस्यार्थस्मरणाधीनतयान्योन्याश्रयापत्तेरिति भावः । 'अगन्म सुवः' इत्यादिप्रोत्साहनमन्त्रेषूक्तनियमव्यभिचारं सूचयन्न तृतीय इत्याह—**प्रयोगासमवेतेति** ॥

गतक्रत्वङ्गभावानां मन्त्राणामुच्चारणमात्रमदृष्टार्थं विधीयते । स्वाध्यायविधिश्चोच्चारणोपयोगिप्रयोगप्राशुभावफलकतयैव अध्ययनं विधत्त इति न कश्चिद्दोषः । इति प्राप्ते-

अभिधीयते--दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः प्रयोगसमवेतार्थस्मृतिरेव सम्भवतां मन्त्राणां प्रयोजनम् । असम्भवतां तु कामं भवत्वदृष्टं प्रयोजनम् । शक्यते तु तत्रापि

---

प्रयोगमध्येऽननुष्ठेय इत्यर्थः ॥ **स्मृतिवैयर्थ्यादिति** ॥ स्वर्गादेः कर्मजन्यत्वेऽप्यनुष्ठेयत्वाभावेन स्मृतेरनुपयोगादिति भावः। प्रकरणाधीतानां मन्त्राणां सिद्धरूपत्वेन क्रियामात्रग्राह्युभयाकाङ्क्षालक्षणप्रकरणग्राह्यत्वाभावात् ॥ **अधिकारेति** ॥ **अधिकारः**—आरम्भः । आदिनानारभ्याधीतमन्त्रविनियोजकश्रुतिवाक्यादिसङ्ग्रहः । अङ्गत्वनिर्वाहाय प्रयोगमध्ये मन्त्राणामुपादानमुच्चारणमेव नान्यत्सम्भवतीत्याह — **उच्चारणमात्रमिति** ॥ मात्रशब्देन मन्त्रस्मरणस्य मन्त्रार्थस्मरणस्य च निरासः ॥ **अदृष्टार्थमिति** ॥ मन्त्राणामुच्चारणं दृष्टमेव प्रयोजनम् । उच्चारणस्य त्वदृष्टमेव । सिद्धान्तेऽपि मन्त्रनियमांशस्यादृष्टार्थत्वादिति भावः । 'उच्चैः ऋचा क्रियते' इत्यादिभिर्विधिभिः कर्माङ्गत्वेन विधीयमानोच्चैष्ट्वादीनामानर्थक्यतदङ्गन्यायेन योग्यतया च मन्त्रस्वरूपेष्वेव निवेश इत्याशयेनाह—**विधीयत इति** ॥ अध्ययनविधेरदृष्टार्थतां निरस्यति—**उच्चारणेति** ॥ उच्चारणं उपयोगि यस्येत्यर्थः । उच्चारणस्योपयोगीत्यध्ययनविशेषणं वा तत्पुरुषसमासेन ॥ **प्राशुभावेति** ॥ प्राशुभावोऽविच्छिन्नप्रयोगः । शीघ्रप्रयोग इत्यन्ये । स एव मन्त्रांशे अध्ययनविधेः प्रयोजनमिति भावः । सिद्धान्तमाह— **दृष्टेति** ॥ जिज्ञासाधिकरण एवायं न्यायः प्रपञ्चित इति भावः । स्मृतिरेव प्रयोजनमित्यन्वयः ॥ **सम्भवतामिति** ॥ सम्भवद्दृष्टप्रयोजनकानामित्यर्थः । 'बर्हिर्देव-' इति मन्त्रार्थलवनस्य 'बर्हिर्लुनाति' इति विधिप्राप्तत्वेऽपि संशयनिवृत्त्यर्थं पुनः स्मरणम् । 'इषे त्वा' इत्यादौ शाखाच्छेदनस्य स्पष्टप्रतीत्यभावेऽपि 'छिनद्मि' इत्यध्याहारेण च्छेदनप्रकाशकत्वम् । 'चतुर्होत्रा पौर्णमासीं' इत्यादौ ऐन्द्रीन्यायेन लक्षणयाभिमर्शप्रतीतिः । अभ्र्यादाने प्रथमेन सिद्धावपि द्वितीयादीनां स्मृतिदार्ढ्यार्थं प्रयोग इति द्वादशे वक्ष्यते । एवं क्रियमाणानुवादिनां 'युवा सुवासाः' इत्यादीनामपि द्रष्टव्यम् । प्रोत्साहनमन्त्राणां श्रद्धाजननार्थं प्रयोग इति कर्मफलप्रकाशकतया दृष्टार्थतैवेति नवमभाष्ये स्पष्टम् । उपस्थानमन्त्राणां देवताभिधानार्थत्वं सप्तमे वक्ष्यत इति भावः ॥ **असम्भवतामिति** ॥ जपस्तोत्रादिमन्त्राणामित्यर्थः । एवं क्रियोत्तरं प्रयुज्यमानानामेको ममेत्याद्यनुमन्त्रणमन्त्राणां अदृष्टार्थत्वमेव। कथञ्चिदपि तत्र कर्मस्मृत्यसम्भवादिति तन्त्रान्तरकृतः । यत्त्वत्रानुमन्त्रणमन्त्राणामकृतत्वशङ्कानिरासद्वारा स्मृतिदार्ढ्यार्थत्वमेव । अत एव, 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन शेषिणम् । संस्मरेत्तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥' इति लक्षणमपि सङ्गच्छत इति कश्चिदाह-तन्न; एको ममेत्यादिभिः कर्मणः तत्सम्बन्धिद्रव्यादेर्वा कथञ्चिदपि स्मर-

मन्त्रा अर्थप्रकाशनार्थाः प्रकाशनं परमदृष्टार्थमिति वक्तुम्। साम्नां तु—ऋगक्षराभिव्यक्तिरेव दृष्टं प्रयोजनमर्थाभावेऽप्यव्याहतम् । अनृक्साम्नां त्वदृष्टार्थत्वमेवेत्यन्यत्र विस्तरः । न त्वेतावता सर्वत्रैवादृष्टार्थत्वम् । न च मन्त्राणां नियमेन पाठवैयर्थ्यं, तद्बलेन मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनात् । तस्य चादृष्टफलकत्वेऽपि न दोषः । न चैवं सामर्थ्यादेव तत्र तत्र मन्त्राणां विनियोगसिद्धौ पुनस्तेषां क्वचिद्विनियोगकरणं

---

णासम्भवात्। लक्षणस्य 'अग्नेरहम्' इत्याद्यनुमन्त्रविषयत्वात्। ऐन्द्रीमनोतावदत्र लक्षणायां प्रमाणाभावाच्च । वस्तुतस्तु तेऽपि दृष्टार्था एव । 'वैष्णवीमृचमनूच्य' इति विधौ वचेरर्थाभिधानपरस्य स्तुत्यादिविधिषु गुणकीर्तनपरस्य धातोः प्रयोगात्तेषामप्यर्थाभिधानार्थत्वात् । अत एव 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह' इति लिङ्गदर्शनमप्युपपद्यत इत्यभिप्रेत्याह—**शक्यते त्विति ॥ तत्रापि**—जपस्तोत्रादिष्वपि । मन्त्राणामर्थप्रकाशकत्वे विवादाभावादिति भावः । ननु स्तोत्रादेरारादुपकारकत्वमिति द्वितीये, जपमन्त्राणामदृष्टार्थत्वमिति द्वादशे च सिद्धान्तितं विरुध्येतेत्यत आह—**प्रकाशनमिति ॥** अभिधानस्यैव स्तोत्रादिपदवाच्यत्वाज्जपमन्त्रार्थाभिधानस्यैव द्वादशे विचार्यत्वान्न तद्विरोध इति भावः । हुंफडादीनामपि 'हुं वितर्के परिप्रश्ने' इत्यादिकोशैरर्थवत्त्वनिश्चयात् ध्वनिष्वाशङ्कानिरासाय नावमिकाधिकरणं प्रवृत्तमित्याह—**साम्नान्त्विति ॥ अक्षराणां**-सन्ध्यक्षरादीनां, **अभिव्यक्तिः**-अवयवशो विभागः॥ **अनृक्साम्नान्त्विति ॥** प्रजापतये हृदयादीनामिळांदादीनां चेत्यर्थः। न्यूङ्खादीनां स्वातन्त्र्येण मन्त्रत्वाभावेऽपि निर्वापाद्यन्वितसवित्रादिपदानामिव दृष्टार्थतेत्याशयेनाह—**अन्यत्र विस्तर इति ॥ तद्बलेन**—पाठबलेन। उपदेष्टृवचनादीन् व्यावर्तयति—**मन्त्रैरेवेति ॥** उपदेष्टृवचनजन्यस्मृतेस्तददृष्टजनकत्वे मानाभावादिति भावः ॥ **नियमकल्पनादिति ॥** मन्त्रनिष्ठस्मारकतावच्छेदकधर्मविशेषो नियमः । एकस्मिन्कर्मणि बहुमन्त्रविनियोगस्थले च तत्तन्मन्त्राव्यवहितोत्तरार्थस्मृतित्वस्य कार्यतावच्छेदकत्वान्न व्यभिचार इति द्रष्टव्यम् ॥ **न दोष इति ॥** केवलदृष्टस्यादृष्टसंवलितदृष्टस्य वा सर्वत्र फलत्वसम्भवान्न केवलादृष्टार्थत्वमिति भावः । अत्र केचित् यागापूर्वं प्रति तत्तन्मन्त्रजन्यार्थस्मृतिपूर्वकतण्डुलनिष्पत्तिद्वारकपुरोडाशजन्ययागत्वेन कारणत्वं कल्पयित्वा सर्वेषां नियमानां तत्तत्कारणतावच्छेदककोटिनिवेशेनैव सार्थक्योपपत्तेर्नातिरिक्तनियमादृष्टं कल्पनीयमित्याहुः । यत्तु 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यादावुक्तरीत्यसम्भवादतिरिक्तनियमादृष्टकल्पनमावश्यकमिति तन्न ; यागसम्बन्धिनियमादृष्टस्यैवान्यथासिद्धेरुक्तत्वात्, भोजनादौ नियमादृष्टकल्पनेऽपि प्रकृते तत्साम्याभावेनान्यथासिद्धेर्दृढत्वात् । पूर्वपक्षसूत्रोक्ततदर्थशास्त्रादीनामुपपत्तिं वक्तुं शङ्कते—**नचेति ॥ सामर्थ्यादेवेति ॥** अर्थप्रकाशनसामर्थ्यरूपलिङ्गादेवेत्यर्थः॥ **क्वचिदिति ॥** 'तां चतुर्भिरभ्रि-

व्यर्थमिति वाच्यम् । गुणपरिसङ्ख्याद्यर्थकत्वेन सार्थक्यात् । तथा हि—अर्थप्राप्ते अभ्र्यादाने विकल्पेन चतुर्णां मन्त्राणां लिङ्गेन प्राप्स्यमानानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन 'तां चतुर्भिरभ्रिमादत्ते'[1] इति वचनेन मन्त्रसङ्ख्योभयविशिष्टादानभावनायां विहितायां एतद्वचनाभावेऽपि मन्त्राणां आदानस्य च प्राप्तिसम्भवे एतद्वचनप्रवृत्तिफल-जिज्ञासायां समुच्चयफलकचतुस्सङ्ख्यारूपगुणप्राप्तिरिति निश्चीयते । तथा लिङ्गादेवा-

मादत्ते इत्यश्वाभिधानीमादत्ते' इत्यादावित्यर्थः ॥ **गुणेति** ॥ क्वचित् गुणार्थत्वेन क्वचित्परिस-ङ्ख्यार्थत्वेनेत्यर्थः । ननु 'तां चतुर्भिः' इत्यत्र न तावदादानविधिः, तस्यार्थप्राप्तत्वात् । नापि सङ्ख्याविधिः, पाठादेव मन्त्रचतुष्टयसिद्धौ तद्विधिवैयर्थ्यात् । नाप्यादानोद्देशेन चतुः-सङ्ख्याविधिः, सकृदुपात्ताया अभ्रेः त्यागकल्पने मानाभावेन पुनरादानासम्भवात् । नापि मन्त्रादानयोरेकविशिष्टान्योद्देशेन तद्विधिः, वाक्यभेदापत्तेः । नापि सङ्ख्यामन्त्रोभयविशिष्टा-दानविधिः, त्रयाणामप्यन्यलभ्यत्वात् । नापि मन्त्राणां विकल्पनिरासफलकः समुच्चयविधिः, तद्वाचकशब्दाभावात् । अत एव 'इत्यश्वाभिधानीमादत्ते' इत्यत्र गर्दभरशनातो मन्त्रनिवृत्तेर्न विधिः । नाप्यादानविधिः, उखासम्भरणोपयोग्यश्वाद्यनपक्रमणाय तद्बन्धनरज्वादानस्यार्थप्राप्त-त्वात् । नाप्यश्वरशनोद्देशेन मन्त्रविशिष्टादानविधिः, विशिष्टोद्देशे वाक्यभेदात् । रशनायामश्वीयत्वस्य ग्रहैकत्ववदविवक्षया अश्वाभिधानीपदे अपूर्वसाधनत्वलक्षणया वा गर्दभ-रशनायामपि मन्त्रप्राप्तेरनिवार्यत्वाच्च । तस्माद्वचनवैयर्थ्यमित्यतः सार्थक्यं क्रमेणोपपादयति—**तथा हीत्यादिना** ॥ **अर्थप्राप्त इति** ॥ अग्निचयनप्रकरणे श्रूयते 'तां चतुर्भिरभ्रिमादत्ते' इति । **अभ्रिः**—खनित्रमिति कपर्दी । '**अभ्रिः**—स्त्री काष्ठकुदालः' इत्यमरः । ब्राह्मणानुसारा-द्वैणवी वा । तया मृदं खात्वा तया मृदोखा कार्या । तत्रादानं विना मृत्खननासम्भवादादानमर्थ-प्राप्तम् । तत्र च वचनं 'तां चतुर्भिः' इति । 'देवस्य त्वा' इत्यारभ्य 'अङ्गिरस्वत्' इत्यन्त एकः। 'अभ्रिरसि नारिरसि' इत्यारभ्य 'त्रैष्टुभेन त्वा छन्दसाददेऽङ्गिरस्वत्' इत्यन्तो द्वितीयः । 'बभ्रिरसि नारिरसि' इत्यारभ्य 'अङ्गिरस्वत्' इत्यन्तस्तृतीयः । 'हस्त आदाय' इत्यारभ्य 'अङ्गिर-स्वत्' इत्यन्तः चतुर्थः इति मन्त्रचतुष्टयेनेति तदर्थः॥ **विकल्पेनेति** ॥ 'एकार्थास्तु विकल्पेरन्' इति न्यायादिति भावः ॥ **पूर्वमेवेति** ॥ लिङ्गापेक्षया श्रुतेः पूर्वं प्रवृत्तेस्तृतीये वक्ष्यमाणत्वा-दिति भावः । एवमाक्षेपाद्यपेक्षयापि वचनस्य शीघ्रप्रवृत्तिर्द्रष्टव्या ॥ **मन्त्रसङ्ख्योभयविशि-ष्टेति** ॥ 'देवस्य त्वा' इत्यादिमन्त्राः, चतुष्ट्वसङ्ख्या । तदुभयविशिष्टादानभावनाया विधिरि-त्यर्थः ॥ **समुच्चयफलकेति** ॥ मन्त्रसङ्ख्योभयविशिष्टादानविधौ त्रयाणामन्यलभ्यत्वेऽपि मन्त्राणां विकल्पनिरासद्वारा समुच्चयरूपफलसिद्ध्यर्थं विधेरावश्यकत्वात्सार्थक्यमिति भावः । 'यदग्नये च प्रजापतये च' इत्यादाविव समुच्चयस्य वाक्यार्थत्वे वाचकापेक्षायामपि तत्फलकत्वे

१. तै. सं. ५. १. १.

ग्निचयनाङ्गभूताश्वरशनादाने प्राप्स्यमानस्य मन्त्रस्य ततः पूर्वप्रवृत्तेन 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते'[1] इत्यनेन वचनेन मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन

तदपेक्षाभावादित्याशयः। यत्तु मन्त्रसङ्ख्योभयमात्रविधानेऽपि समुच्चयसिद्धिरित्याशङ्क्य समाहितं, चतुःपदस्यारुणापदवत् गुणमात्रपरतया मन्त्रैरित्यध्याहृत्य द्वयोः कारकयोर्मिथोऽन्वयायोगेनादानभावनाविधानमावश्यकमिति तन्न; उभयविधानस्य शङ्कितुमयोग्यत्वादिति ध्येयम्। 'इत्यश्वाभिधानीमादत्ते' इति वचनसार्थक्यमुपपादयति—**तथेत्यादिना**॥ अस्ति महाग्निचयनप्रकरणे उख्याग्निः प्रत्यहं यजमानेन कर्तव्यविष्णुक्रमणाङ्गतया विहितः 'संवत्सरमुख्यं बिभर्ति' इति। उखायां भव उख्य इति व्युत्पत्तिः। सा चोखा मृण्मयी कार्या। तत्र मृदाहरणायारण्यं गच्छेदध्वर्युः। तत्र मृत्संस्कारार्थोऽश्वः, मृदाहरणार्थो गर्दभश्च नेतव्यः। तत्र अश्वबन्धनार्था रज्जुरश्वाभिधानीत्यभिधीयते। बध्यतेऽनयेति व्युत्पत्तेः। करणे ल्युट्। 'टिड्ढाणञ्' इत्यादिना ङीप्। एवं गर्दभरशना। तत्र वचनम् 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति। 'हृग्रहोर्भश्छन्दसि' इति शास्त्रादगृभ्णन्निति वस्तुस्थितिः॥ **ततः पूर्वप्रवृत्तेनेति**॥ लिङ्गस्य मन्थरप्रवृत्तिकत्वेन तदपेक्षया वचनस्य शीघ्रप्रवृत्तत्वादिति भावः॥ **अश्वरशनाङ्गत्वेनेति**॥ अश्वरशनोद्देशेनेत्यर्थः। न च विशिष्टोद्देशे वाक्यभेद इति वाच्यम्; समासघटकपदार्थयोः कारकत्वे हि तयोः क्रियान्वयनियमात् प्रत्येकं क्रियान्वये वाक्यभेदो विध्यावृत्तिलक्षणो भवेत्। समासस्थले 'समर्थः पदविधिः' इति परिभाषया एकार्थीभावलक्षणसामर्थ्यानुसारेण परस्परान्वयस्य व्युत्पन्नतया विशिष्टस्यैवान्वयोपपत्तेर्न विध्यपेक्षेति वाक्यभेदाप्रसक्तेः। उक्तश्चार्थोऽष्टमे भाष्यकारैः 'शताग्निष्टोममित्यपि समास उभयविशेषणविशिष्टं गणमाह—स एवैकार्थो विधीयते। यथा लोहितोष्णीषाः' इति। अत एव चित्राधिकरणे 'पञ्चदशान्याज्यानि' इत्यत्र समासाभावात् वैशिष्ट्यासिद्धया वाक्यभेद इति पार्थसारथिः। 'विष्णवे शिपिविष्टाय' इत्यत्र तु समासाभावेऽपि मन्त्रार्थवादादिप्रसिद्धं सम्बन्धमादाय विशिष्टैककारकविधानसम्भव इति 'विश्वेभ्यो देवेभ्यः सोमाय वनस्पतये' इत्यादिवन्न वाक्यभेद इत्युक्तं षष्ठे। प्रकृते वाक्यभेदाभावादेव च न विशेषणाविवक्षा। न च वाक्यभेदाभावेऽप्यश्वाभिधानीपदे अपूर्वसाधनलक्षणाया आवश्यकत्वात् गर्दभरशनायामपि मन्त्रप्राप्तिरनिवार्यैवेति वाच्यम्; अश्वाभिधानीपदे अश्वाभिधानीमात्रद्वारकापूर्वसाधनविशेषस्यैव लक्षणीयतया उक्तदोषाभावात्। अन्यथा वाक्यवैयर्थ्यापत्तेः। यत्त्वत्र कौस्तुभे 'युञ्जाथां रासभं युवम्' इति गर्दभमिति प्रतिनियतनिर्देशान्यथानुपपत्त्याश्वाभिधानीपद एव लक्षणेत्युक्तम्, तत् 'आम्रान् पृष्टः कोविदारान् ब्रूते' इति न्यायमनुकरोति। 'अश्वमभिदधाति' इति विधाय युञ्जाथामिति विधेः श्रवणेन बन्धनविधौ तत्सत्त्वेऽपि आदानविधौ तदभावात्। यत्तु कैश्चिन्मूलकारस्याश्वरशनाङ्गमन्त्र-

१. तै. सं. ५. १. २.

विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपशेषिपरिसङ्ख्या फलम्। न च फलतः परिसङ्ख्यायां स्वार्थहानिः परार्थकल्पनं प्राप्तबाध इति त्रैदोष्यम्। अश्वाभिधानीसम्बन्धरूपस्वार्थस्यैव विधेयत्वात्, अन्यनिवृत्तिरूपपरार्थस्यार्थसिद्धत्वेन अकल्पनीयत्वात्, प्रापकप्रमाणस्याप्रवृत्ततया प्राप्तबाधाभावाच्च। अत एव यत्र प्रापकप्रमाणप्रवृत्त्युत्तरमेव परिसङ्ख्याशास्त्रस्य प्रवृत्तिः यथा—'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ रागतः प्राप्तपञ्चनखभक्षणे पञ्चातिरिक्तपरिसङ्ख्याकरणं तत्रैव तत्। यत्रापि च श्रौती

---

विशिष्टादानविधेरेवाभिमतत्वात् नापूर्वसाधनलक्षणायाः प्रसक्तिरिति व्याख्यातम्, तत् मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन विहित इति मूलाननुगुणत्वादुपेक्ष्यमिति दिक्। **पूर्ववत्**—अभ्र्यादानमन्त्रविधिवत्। **फलजिज्ञासायां**—लिङ्गात्पूर्वं चयनप्रवृत्तिप्रयोजनाकाङ्क्षायाम्। **गर्दभरशनानिवृत्तिः**—गर्दभरशनातो मन्त्रनिवृत्तिः। 'गर्दभ आसादयति' इति वचनेन मृदो गर्दभोपर्यानयनस्य विहितत्वात् तद्रशनाया अपि रशनात्वेन मन्त्रप्रतिपाद्यत्वात्तत्र मन्त्रप्राप्तौ तन्निवृत्तिरूपपरिसङ्ख्यैव वचनप्रवृत्तेः फलमित्यर्थः। त्रैदोष्यमुपपादयति—**स्वार्थेति** ॥ **स्वार्थस्य**—स्वप्रतिपाद्यस्य। **हानिः**—त्यागः। **परार्थकल्पनं**—**परस्य**—निषेधवाक्यस्य, यो अर्थः तत्परत्वम्। **प्राप्तबाधः**—**प्राप्तस्य**—प्रापकप्रमाणेन प्राप्तस्य, **बाधः**—अननुष्ठानम्। **त्रैदोष्यमिति**—अर्थगत एको दोषः, द्वौ शब्दगताविति त्रयो दोषाः। चातुर्वर्ण्यादित्वात् ष्यञ् ॥ **अश्वाभिधानीति**—अश्वाभिधान्युद्देशेन मन्त्रविशिष्टादानस्यावश्यकत्वात्स्वार्थहानिर्नास्तीत्यर्थः॥ **अन्यनिवृत्तिरूपेति**—गर्दभरशनातो निवृत्तिरूपवाक्यान्तरार्थस्यार्थप्राप्तत्वेन एतद्वाक्यप्रतिपाद्यत्वाभावात्परार्थकल्पना नास्तीत्यर्थः ॥ **प्रापकप्रमाणस्येति**—लिङ्गरूपस्य तस्याप्रवृत्तत्वेन प्राप्तबाधोऽपि नास्तीत्यर्थः। परिसङ्ख्यायां त्रैदोष्योदाहरणमाह—**अत एवेति** ॥ **यत्र**—'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ। **प्रापकप्रमाणप्रवृत्त्युत्तरमेव**—पञ्चातिरिक्तपञ्चनखभक्षणप्रापकेष्टसाधनताज्ञानाद्युत्पत्त्यनन्तरमेव। **परिसङ्ख्याशास्त्रस्य**—'पञ्च पञ्चनखा भक्ष्याः' इति शास्त्रस्य ॥ **रागत इति** ॥ अनेन दोषास्त्रयोऽपि सूचिताः। **तत्रैव**—'पञ्च पञ्चनखा भक्ष्याः' इत्यादिष्वेव। **तत्**—त्रैदोष्यम्। अयं भावः। रागप्राप्तपञ्चातिरिक्तपञ्चनखनिषेधपरत्वाद्वाक्यस्य विधिरूपस्य निषेधपरत्वाच्च स्वार्थत्यागादयो दोषाः प्रसज्यन्त इति। 'शशकः शल्यको गोधा खड्गः कूर्मस्तु पञ्चमः' इति पञ्चनखा भक्ष्याः। 'सृगालः पुरुषो हस्ती मर्कटाश्वबिडालकाः' इत्यादिपञ्चनखा अभक्ष्या बोध्याः। अत्र सृगालादयः ऐहिकानिष्टाजनकत्वे सति क्षुण्णिवर्तकभक्षणयोग्या इति इष्टसाधनताज्ञानेन लोकानां प्रवृत्तिरनुभवसिद्धा। तत्र लोकतः पूर्वं वचनप्रवृत्तावपूर्वविधित्वेन फलकल्पनं स्यात्, अभक्ष्यमध्यपरिगणनविरोधश्च स्यात्। अत एव न नियमविधिः, पक्षप्राप्त्यभावात्। निषिद्धपरिग्राह्यपञ्चनखानां समुच्चयेन भक्षणान्वयसम्भवात्। अत एव नियमविधौ समुच्चयो न भवतीति वक्ष्यते। अतः परिसङ्ख्यैवेयम्। सा च रागप्राप्त्युत्तर-

**परिसङ्ख्या यथा—'नानृतं वदेत्'[1] इत्यादौ तत्रापि न तत् । अत एव शब्दतः फलतो वा यस्य शास्त्रस्यान्यनिवृत्तिर्विषयः स परिसङ्ख्याविधिः । अत्र चैतद्विध्यभावे प्रायश औत्सर्गिकी तत्र चान्यत्र च प्राप्तिर्न तु सापि लक्षणघटिकेति ध्येयम् ।**

मेवेति त्रैदोष्यमवर्जनीयमिति भावः । नन्वेवं 'पञ्च पञ्चनखा भक्ष्याः' इत्यादावपि 'इमामगृभ्णन्रशनामृतस्य' इत्यत्र लिङ्गात्पूर्वं वचनप्रवृत्तिवत् रागात्पूर्वं वचनप्रवृत्तिसम्भवेनाप्राप्तपरिसङ्ख्यापत्तेर्न त्रैदोष्यं युक्तमिति चेन्न; वैषम्यात् । तत्र हि लिङ्गवचनयोश्शास्त्रत्वेन शास्त्राधीनेष्टसाधनताज्ञानजन्यप्रवृत्तित्वाल्लिङ्गेन श्रुत्यनुमानद्वारा इष्टसाधनताज्ञानापेक्षया शीघ्रप्रवृत्तश्रुत्यधीनेष्टसाधनताज्ञानजन्यप्रवृत्तेः प्रबलत्वेन अश्वरशनादाने मन्त्रस्य विनियोगेन निराकाङ्क्षतया गर्दभरशनायां विनियोगाभावादप्राप्तपरिसङ्ख्यात्वं युक्तम् । प्रकृते तु पञ्चनखानां सर्वेषामेव रागप्राप्तप्रवृत्तिविषयत्वेन प्रवृत्तिकृतविलम्बाभावाद्रागस्यालौकिकप्रमाणापेक्षया शीघ्रप्रवृत्तिकत्वादिति ध्येयम् । एवं निषेधस्थलेष्वपि न त्रैदोष्यमित्याह—**नानृतमिति ॥** तत्रानृतवदननिषेधस्यैव शास्त्रतात्पर्यविषयत्वेन स्वार्थत्यागपरार्थस्वीकारयोरभावान्न त्रैदोष्यमिति भावः । शब्दतः परिसङ्ख्यायाः फलतः परिसङ्ख्यायाश्चानुगतं रूपमाह—**अत एवेति ॥** अन्यनिवृत्तितात्पर्यकविधित्वं परिसङ्ख्याविधित्वमिति लक्षणमिति भावः । अन्यनिवृत्तिर्द्विविधा । अन्यस्मान्निवृत्तिः, अन्यस्य निवृत्तिरिति च । 'इत्यश्वाभिधानीमादत्ते' इत्यादावाद्यः । अन्यस्मात् गर्दभरशनादानान्मन्त्रनिवृत्तेः । गृहमेधीये 'आज्यभागौ यजति' इत्यादौ द्वितीयः । अन्यस्य प्रयाजादेः निवृत्तेः । न च 'नानृतं वदेत्' इत्यादौ अन्यनिवृत्त्यप्रतीतेः कथं परिसङ्ख्यात्वमिति वाच्यम्; अन्यशब्दस्य स्पष्टार्थमुपादानान्निवृत्तितात्पर्यकविधित्वस्यैव लक्षणत्वोपपत्तेः । एवं 'तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या' इति वार्तिके तत्र चान्यत्र चेति स्पष्टार्थमेवोपात्तम् । न तु तस्य लक्षणघटकत्वमित्याह—**अत्र चेत्यादिना ॥ प्रायश इति ॥** सत्यवचनमात्रेण कार्यसिद्धिस्थले अनृताप्रसक्तेरिति भावः ॥ **सापि**—प्राप्तिरपि ॥ **लक्षणघटिकेति ॥** प्रयोजनाभावान्न लक्षणघटकत्वमिति भावः । एतेन तत्रान्यत्रेति पदाभ्यां शेषिणोः शेषयोरन्यतरयोर्वा निमित्तयोराश्रययोर्वा विवक्षायां तदितरपरिसङ्ख्यास्वव्याप्तिः । 'शंय्वन्ता प्रायणीया सन्तिष्ठते' इत्यत्र शंयूत्तराङ्गानां,'दण्डी प्रैषानन्वाह' इत्यत्र रात्रिप्रचारादिशेषिणां, 'सायं जुहोति' इत्यत्र यावज्जीववाक्यावगतकालान्तरावच्छिन्नजीवनरूपनिमित्तानां, 'यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते' इत्यत्र शुक्राग्रतादिकाम्यगुणाश्रयत्वेनाधाराग्रहाणां व्यावर्तनीयत्वात् । नापि विध्युपात्तत्वानुपात्तत्वाभ्यामनुगमः । 'यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यत्राव्याप्तेः, रथन्तरसामकानामरथन्तरसामकानां च विकृतीनामुभयासामपि प्रकृतविध्यनुपात्तत्वात् । नापि ग्राह्यत्वव्यावर्त्यत्वाभ्यां, 'अत्र ह्येवावपन्ति' इत्यत्राव्याप्तेः । अत्र गायत्री-बृहती-

१. तै. सं. २. ५. ५.

अत एवैकस्मिन् कार्येऽनृतस्य सत्येन सह पाक्षिकप्राप्तावपि नानृतं वदेदिति परिसङ्ख्यैवेयम् । न तु नियमविधिः । अत एव यस्य शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमः शास्त्रस्य विषयः स नियमविधिः । यथा सत्यमेव वदेत् व्रीहीनवहन्तीत्यादौ । अत्र नियमस्यैवायोगव्यावृत्त्यर्थकेन एवकारेण विधेयत्वात् । आक्षेपतः पूर्वप्रवृत्तस्यावघातविधेर्नियमफलकत्वाच्च । नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तको विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तकश्चेत्यादिप्रकारेण बोध्यः । व्रीहीनवहन्ति उत्तरेऽहन्द्विरात्रस्य गृह्यते इत्यादावाद्यः । एतद्विध्यभावे आक्षेपेणातिदेशेन चावघातस्य षोडशिग्रहणस्य च पक्षप्राप्तत्वात् । व्रीहिभिर्यजेतेत्यादौ द्वितीयः ।

---

अनुष्टुप्सु ग्राह्यास्वावापाप्रसक्तेः । विवृद्धस्तोमकेषु क्रतुषु ऋचामागमेनैव सङ्ख्यायाः पूर्यतया ऋचामृक्ष्वावापासम्भवात् । विकृतिसन्निधिपठितानां अप्राकृतसाम्नां तु योन्युत्तरर्चानामपाठेनर्क्ष्वावापप्रसक्तावपि 'अन्ते तु बादरायणः' इति न्यायेन माध्यन्दिनार्भवपवमानान्त्यतृचयोस्त्रैष्टुभजागतयोरेव तत्प्रसक्तेरिति निरस्तम् । निवृत्तिबोधकत्वमात्रस्य सर्वेष्वविशेषेणाव्यासेरभावादित्यभिप्रायः । **अत एव**—प्राप्तेर्लक्षणघटकत्वाभावादेव ॥ **परिसङ्ख्यैवेति** ॥ 'नानृतं वदेत्' इत्यादौ अनृतस्य सत्येन सह पाक्षिकप्राप्तावपि निवृत्तिफलकविधित्वसत्त्वेन परिसङ्ख्यात्वमेव । न तु पाक्षिकप्रवृत्तिमादाय नियमविधित्वमित्यर्थः । नियमविधिमाह—**अत एवेति** ॥ **शब्दतः फलतो वेति** ॥ नियमो नामायोगव्यवच्छेदः । यत्र शब्दत एवायोगव्यावृत्तिर्बोध्यते स एको नियमविधिः । यत्र च फलतोऽयोगव्यावृत्तिः सोऽपरो नियमविधिः । तत्राद्यमुदाहरति—**सत्यमेवेति** ॥ एवकारेणायोगव्यावृत्तिबोधनाद्विशेष्यसङ्गतैवकारस्यायोगाव्यवच्छेदार्थकतयानृतेन सहैकस्मिन् कार्ये सत्यस्य प्राप्तौ सत्यामयोगव्यवच्छेदे सति नियमविधित्वमित्यर्थः । द्वितीयमुदाहरति—**व्रीहीनिति** ॥ आक्षेपात्पूर्वमवघातविधेः प्रवृत्त्यङ्गीकारेण पूर्वप्रवृत्तेः फलजिज्ञासायामाक्षेपप्राप्तावघातायोगव्यावृत्तेर्नियमरूपायाः फलत्वाङ्गीकारादित्यर्थः । ततश्च पाक्षिकायोगतात्पर्यकविधित्वं नियमविधित्वमिति फलितार्थः । तत्र पाक्षिकायोगद्वैविध्येन नियमविधिद्वैविध्यमाह—**पाक्षिकायोगश्चेति** ॥ **तन्मात्रेति** ॥ तद्विधिमात्राप्रवृत्तिनिमित्तक इत्यर्थः । मात्रचा विध्यन्तराप्रवृत्तिसाहित्यव्यवच्छेदः । तत्राद्यमुदाहरति—**व्रीहीनवहन्तीति** ॥ 'व्रीहीनवहन्ति' इत्यादिविधिमात्राप्रवृत्तौ आक्षेपेणावघातस्य प्राप्तिवत् विदलनादीनामपि प्राप्तौ अवघातायोगप्रसक्त्या तद्व्यवच्छेदेन नियमविधित्वमित्यर्थः ॥ **उत्तरेऽहन्निति** ॥ एतद्विध्यभावे षोडशिग्रहणस्य प्रकृतितश्चोदकेन विकल्पेन प्राप्ततया षोडशिग्रहणाभावपक्षेऽयोगप्रसक्त्या तद्व्यवच्छेदेन षोडशिग्रहनियमविधित्वमित्यर्थः । द्वितीयमुदाहरति—**व्रीहिभिरिति** ॥ यवविध्यभावसहितव्रीहिविध्यभावे व्रीहीणां यागविध्याक्षिप्तानां पक्षप्राप्त्याऽयोगव्यावृत्तिसम्भवादित्यर्थः । विध्यन्तराप्रवृत्तिसाहित्यविशेषणादाने व्रीहिविध्यप्र-

यवविध्यभावसहितैतद्विध्यभावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात्। एवंविधभेदसत्त्वेऽपि चायोगव्यावृत्तिमात्रस्यैव लक्षणे प्रवेशान्न कोऽपि दोषः ॥

यत्तु दृष्टार्थत्वं नियमविधिलक्षणं कैश्चिदुक्तम्, तदुत्तरेऽहन्द्विरात्रस्य गृह्णत इत्यादावव्याप्तत्वादुपेक्षितम्। षोडशिग्रहयागाभ्यासस्यादृष्टार्थत्वात्। अत एव नियमपरिसङ्ख्यातिरिक्तफलकविधित्वमपूर्वविधित्वमिति तल्लक्षणमपि सुस्थम्। एतेषाञ्चो-

---

वृत्तावप्याक्षेपानवताराद्यवविधिनैवाग्नेयादीनां चरितार्थत्वान्नियमविधित्वं न स्यात्। अतस्तद्विशेषणमुपात्तम्। तत्राननुगमदोषं परिहरति— **एवंविधेति** ॥ उक्तरीत्या नियमविधेरेकरूपत्वाभावेऽपीत्यर्थः। **अयोगव्यावृत्तीति** ॥ अयोगव्यावृत्तितात्पर्यकविधित्वस्य नियमविधिलक्षणत्वात्तस्य चानुगतत्वादिति भावः। एतेन पाक्षिकत्वं नोद्देश्यविधेयान्यतरस्य विवक्षितम्। 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' इत्यपूर्वविधौ रथन्तरस्य बृहता सह ज्योतिष्टोमे पाक्षिकतया 'तमुक्थ्येन' इति वैकृताग्निविधौ च विधेयस्याग्नेरुत्तरवेद्या सह पाक्षिकतया अतिव्याप्तेः। यदि रथन्तरसामेति परिसङ्ख्याविधौ रथन्तरसामत्वैन्द्रवायवाग्रत्वयोः पाक्षिकत्वादतिव्याप्तिश्चेति निरस्तम्। पाक्षिकत्वस्य लक्षणाघटकत्वादयोगव्यावृत्तेरेव लक्षणघटकतया सम्मीलनादे रथन्तरायोगव्यवच्छेदकत्वाद्यभावेनातिव्याप्त्यसम्भवादित्याशयः। केषाञ्चिन्मतं दूषयितुं उपन्यस्यति—**यत्त्विति** ॥ **दृष्टार्थत्वमिति** ॥ 'व्रीहिभिर्यजेत' 'व्रीहीनवहन्ति' इत्यादौ यागनिर्वृत्तिवैतुष्यरूपदृष्टप्रयोजनसत्त्वादिति भावः ॥ **अदृष्टार्थत्वादिति** ॥ दृष्टार्थत्वाभावादित्यर्थः। अत्र केचित् उत्तरेऽहन्निति वाक्ये यागाभ्यासो न विधीयते। तस्य प्रकृतित एव प्राप्तत्वादश्रुतत्वाच्च। किन्तु ग्रहणमेव विधीयते। तस्य च यागनिर्वृत्तिरूपदृष्टप्रयोजनसत्त्वान्न दोषः। न च ग्रहणस्यापि प्राप्तत्वान्न विधेयत्वमिति वाच्यम्; विकल्पेन प्राप्तस्य नियमार्थं विधिसम्भवादित्याहुः। अपूर्वविधिमाह—**अत एवेति** ॥ **नियमपरिसङ्ख्यातिरिक्तेति** परिचायकमेव, नतु लक्षणघटकम्। अप्राप्तप्राप्तितात्पर्यकविधित्वमपूर्वविधित्वमित्येत्र लक्षणसम्भवात्। एतेन नियमपरिसङ्ख्यातिरिक्तत्वं यदि नियमपरिसङ्ख्योभयभिन्नत्वं तदा नियमविध्यादावतिव्याप्तिः, प्रत्येकमुभयभिन्नत्वसत्त्वात्। यद्यन्यतरप्रतियोगिकभेदवत्त्वं, तदा तथैवातिव्याप्तिः। यद्यन्यतरत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं तदातीव गौरवमिति निरस्तम्। नियमपरिसङ्ख्यातिरिक्तत्वस्य लक्षणाघटकत्वादत्र चापूर्वविधेरप्राप्तप्राप्तिरेव फलम्। यथा 'व्रीहीन् प्रोक्षति' इति विध्यभावे व्रीहिषु प्रोक्षणाप्राप्त्या तत्प्राप्तेर्नियमरूपत्वाभावात्परिसङ्ख्यारूपत्वाभावाच्च तद्विधिरपूर्वविधिरिति भावः। नन्वेवं 'व्रीहीनवहन्ति' इति नियमविधौ वैतुष्यकार्ये दलनादिनिवृत्तेः फलतः पर्यवसानात् परिसङ्ख्याविधिलक्षणस्यातिव्याप्तिरेव। 'व्रीहीन् प्रोक्षति' इत्यपूर्वविधावप्रोक्षणनिवृत्तेः फलतस्सत्त्वादपूर्वविधावपि तथेत्यत आह—**एतेषामिति** ॥ एतेषां—उक्तोपाधीनाम्। **क्वचित्**—उक्तनियमविध्यादिषु। **सङ्कार्येऽपि**-समावेशे-

पाधीनां क्वचिदुदाहरणे साङ्कर्येऽपि न दोष इति न विधिरसायनोक्तलक्षणदूषणावकाशः। विस्तरेण चैतदस्मत्कृते मीमांसाकौस्तुभे द्रष्टव्यम्। तदेवं मन्त्राणामर्थस्मा-

ऽपि ॥ न दोष इति ॥ तत्तत्तात्पर्यघटितलक्षणानामेवोक्तत्वादुक्तनियमविध्यादिषु निवृत्तेः फलतस्सत्त्वेऽपि विधितात्पर्यस्य तत्राभावान्नातिव्याप्तिरिति भावः ॥ विधिरसायनोक्तेति ॥ तद्विधिमात्राप्रवृत्तिनिमित्तकेत्यादिनोक्तद्वैविध्यप्रयुक्ताननुगमादिदोषाणामनवकाश इत्यर्थः। पूर्वोक्तरीत्या निवृत्तितात्पर्यकविधित्वस्य सर्वत्र सत्त्वादिति भावः। नन्वेवं 'व्रीहीन् प्रोक्षति' इत्यपूर्वविधौ व्रीहिप्रोक्षणस्य प्रोक्षणाभावाभावरूपस्य शास्त्रतात्पर्यविषयतयाऽयोगव्यवच्छेदसत्त्वान्नियमविधिलक्षणस्यातिव्याप्तिरिति चेन्न; द्वितीयाभावरूपस्य प्रतियोगिरूपत्वानङ्गीकारात्। न च तर्हि अनवस्था स्यादिति वाच्यम्; तृतीयाभावस्य प्रथमाभावरूपत्वाङ्गीकारेण तदभावात्। न च तथापि द्वितीयाभावस्यापि तात्पर्यविषयत्वादुक्तातिव्याप्तिरपरिहार्येति वाच्यम्; तस्य विधितात्पर्यविषयत्वाभावात्। न हि दण्डाभावाभावो घटकारणमिति लोके व्यवहारोऽस्ति। न च द्वितीयाभावस्य प्रतियोगिरूपत्वपक्षेऽतिव्याप्तितादवस्थ्यमिति वाच्यम्; तात्पर्यविषयतावच्छेदकविवक्षया तत्परिहारसम्भवात्। तथाहि-यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिताकाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकता पर्याप्त्यधिकरणं तस्य शास्त्रस्य तद्धर्मवन्नियमविधित्वम्। 'व्रीहीनवहन्ति' इत्यादाववघातत्वावच्छिन्नप्रतियोगिताकाभावाभावत्वस्य तात्पर्यविषयतावच्छेदकता पर्याप्त्यधिकरणत्वाल्लक्षणसमन्वयः। एवं च 'व्रीहीन् प्रोक्षति' इति शास्त्रस्य तात्पर्यविषयतावच्छेदकं प्रोक्षणत्वमेव, लाघवात्। न तु प्रोक्षणाभावाभावत्वं, गौरवात्, इत्यभिप्रायात्। पर्याप्तिनिवेशात् 'इत्यश्वाभिधानीम्' इत्यादौ मन्त्रत्वावच्छिन्नाभावाभावत्वस्य मन्त्रत्वस्य तात्पर्यविषयतावच्छेदककोटिनिविष्टतयावच्छेदकत्वेऽपि नातिव्याप्तिः। एतेन पर्याप्तिनिवेशो न कार्य इति कौस्तुभोक्तं निरस्तम्। एवं यद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वं यस्य शास्त्रस्य तात्पर्यविषयतावच्छेदकता पर्याप्त्यधिकरणं तस्य तद्धर्मवत्परिसङ्ख्यात्वमिति विवक्षणीयम्। 'इत्यश्वाभिधानीमादत्ते' इत्यादौ शेषित्वसम्बन्धेन 'इमाम्' इति मन्त्रत्वावच्छिन्नप्रतियोगिताकाभावत्वस्य तात्पर्यविषयतावच्छेदकत्वाल्लक्षणसमन्वयः। 'व्रीहीनवहन्ति' इति नियमविधौ अवघाताभावत्वस्याप्यवच्छेदकोटिप्रविष्टत्वेन तात्पर्यविषयतावच्छेदकत्वात् अतिव्याप्तिवारणाय पार्याप्तिनिवेशः। एवं अभावत्वावच्छिन्नविषयताशून्यतात्पर्यकविधित्वमपूर्वविधित्वमिति तल्लक्षणनिष्कर्षः। 'व्रीहीन् प्रोक्षति' इत्यपूर्वविधितात्पर्यस्याभावाविषयकत्वेन लक्षणसमन्वयः। नियमपरिसङ्ख्याविध्योः अभावतात्पर्यकत्वान्नातिव्याप्तिः। यत्त्वत्राभावत्वानवच्छिन्नविषयताकतात्पर्यकविधित्वमपूर्वविधित्वमिति तत् 'व्रीहीनवहन्ति' इत्यादौ अवघातादिविषयताया अभावत्वानवच्छिन्नत्वेनातिव्याप्तेरुपेक्षितमित्यादिकमभिसन्धायाह—विस्तरेण चेति ॥ प्राञ्चस्तु इतरनिवृत्तेरार्थिकत्वं यत्र तत्र नियमविधिः, 'व्रीहीनवहन्ति' इत्यादौ

**रकत्वेऽपि न क्वचिद्विनियोगवैयर्थ्यम् । न चैवमपि प्रामाण्यायोगः । याथार्थ्यलणस्य**

दलनादिनिवृत्तेरार्थिकत्वात् । यत्र चेतरनिवृत्तेः शाब्दत्वं तत्र परिसङ्ख्याविधिः। 'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ पञ्चनखपदस्य पञ्चातिरिक्तपञ्चनखपरतया भक्ष्या इत्यस्य विरोधिलक्षणया न भक्ष्या इत्यर्थकतया इतरनिवृत्तेः शाब्दत्वात् । तथा चेतरनिवृत्तेरार्थिकत्वशाब्दत्वाभ्यामनयोर्भेद इत्याहुः । मिश्रास्तु क्रियायां विकल्पेन कारकान्वये नियमविधिः । यथा 'व्रीहीनवहन्ति' इत्यादौ एकस्मिन्वितुषीकरणेऽवघातनखविदलनयोः विकल्पेनैवान्वयात् । समुच्चयेन कारकान्वयस्थले परिसङ्ख्याविधिः। यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ । तत्र शशादिमांसनिर्मितस्य पञ्चातिरिक्तपञ्चनखमांससहितस्य पिण्डस्य भक्षणक्रियायामन्वयसम्भवेन समुच्चयेनैवान्वयात् । तथाच कारकविकल्पसमुच्चयाभ्यामनयोर्भेद इत्याहुः । विस्तरेण चैतत्प्रतिपादितं हिरण्यकेशिसूत्रव्याख्यानेऽस्माभिः । अत्र विधित्रयलक्षणादिकं पूर्वमुक्तमपि शिष्यबुद्धिवैशद्यार्थं प्रसङ्गात्पुनरुपन्यस्तमिति द्रष्टव्यम् । स्मारितविनियोगविधिवैयर्थ्यपरिहारमुपसंहरति—**तदेवमिति ॥ अर्थस्मारकत्व इति ॥** न च 'सृण्येव जर्भरी' इत्यादौ कथमर्थप्रतीतिरिति वाच्यम् ; निरुक्तव्याकरणादिवशेनार्थज्ञानसम्भवात् । तथाहि—'उभा उनूनम्' इति सूक्तं आश्विनम्। 'अश्विनोः काममप्राः' इति सूक्तान्त उपसंहारात् । तत्रायं मन्त्रः आम्नायते—'सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरु ता मे जराय्वजरं मरायु ॥' इति । अयमर्थः । सृणिः—अङ्कुशः। तत्र साधुस्सृण्यौ गजौ । प्रथमाद्विवचनस्याकारश्छान्दसः । ताविव बलवन्तौ । जर्भरी-भर्तारौ । भृजो यदन्तात्पचाद्यच् । यदो लुक् छान्दसः । अभ्यासस्य जकारः । विभक्तेरिकारश्च । तुर्फरीतू-शत्रूणां हिंसितारौ। तुर्फरी हिंसायामौणादिकम् । नैतोशेव, तोशतिर्वधार्थः। ततःपचाद्यजन्तात् स्वार्थेऽण् । प्रथमाद्विवचनम् । योधाविव तुर्फरी-त्वरमाणौ । फर्फरीका-शोभमानौ । फर्फरौणादिकं रूपम् । उदन्यजा-उदन्या पिपासा, चातकस्य विवक्षिता, तया वर्षाकालो लक्ष्यते । जेमना-जेमानौ, उदकलाभेन पिपासाया जेतारौ । मदेरु-मत्तचातकाविव स्थितौ । ता-तौ, प्रसिद्धौ । युवां, मे-मम । जरायु—जराधर्मकम् । मरायु-मरणधर्मकं शरीरम् । अजरं- जरामरणरहितं कुरुतमित्यर्थसम्भवादर्थप्रतीत्युपपत्तिरिति ध्येयम् ॥ **न क्वचिदिति ॥** नन्वेवं 'उरुप्रथस्वेति पुरोडाशं प्रथयति' इत्यादौ लिङ्गादेव मन्त्रविनियोगसिद्धेर्वचनवैयर्थ्यं दुर्वारमिति चेन्न; अर्थवादार्थत्वेन सार्थक्यात् । यज्ञपतिमेव प्रजया पशुभिश्च प्रथयतीत्यर्थवादालम्बनाय विधानस्य भाष्योक्तत्वात्, अध्वर्युकर्तृकत्वसिद्ध्यर्थत्वाच्च तस्यापि न वैयर्थ्यमित्यभिप्रायात् । तथा च पार्थसारथिः, 'गुणार्थवादपरिसङ्ख्यार्थत्वात्' इति भावः । नन्वेवं मन्त्राणामर्थप्रकाशनार्थत्वे मन्त्रप्रतिपाद्यदेवतादीनां विधिवाक्यादेवावगततयाऽनधिगतार्थगन्तृत्वरूपं वेदस्य स्वभावसिद्धं प्रामाण्यं न स्यादित्याशङ्कते—**न चेति ॥ प्रामाण्यायोगः**—अनधिगतार्थबोधकत्वरूपप्रामाण्यायोगः ।

तस्याविघातात् । सामादिसर्वमन्त्रसाधारण्येन तु पदार्थविधया । यथा हि शाब्दबोधं प्रति कारणीभूतज्ञानविषयत्वाच्छब्दः प्रमाणमिति सर्वदर्शनसम्मतम्, तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि तथेति शक्यते वक्तुम् । अतश्च मन्त्रविनियोगविधौ मन्त्राणामपि पदार्थत्वाद्युक्तं प्रामाण्यमिति । अस्तु वा प्रामाण्याभावेऽपि प्रयोजनवत्त्वमात्रम् । तावतैवाध्ययनविधेरुपपत्तेः । प्रयोजनमर्थवादवदेव स्पष्टम् ॥ ४ ॥

इति श्रीखण्डदेवकृतायां भाट्टदीपिकायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

अनधिगतार्थगन्तृत्वं हि न प्रामाण्यशरीरप्रविष्टं, प्रयोजनाभावात् । किन्तु तद्वति तत्प्रकारकप्रमाजनकत्वमेव । तच्च मन्त्राणामप्यस्तीति परिहरति—**याथार्थ्यलक्षणस्येति** ॥ नन्वेवं सामादिमन्त्राणामर्थाभावेन याथार्थ्यलक्षणमपि प्रामाण्यं न सम्भवतीत्याशङ्क्य परिहरति—**सामादीति** ॥ **यथा हीत्यादि** ॥ 'पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगतास्सन्तो वाक्यार्थं बोधयन्ति' इति तद्भूताधिकरणे 'अर्थस्य तन्निमित्तत्वात्' इति सूत्रे भाष्योक्तेः, 'पदार्थमूलको ह्येषः न भ्रान्तिरिति गम्यते' इति वार्तिकोक्तेश्च, 'पदार्थमूलको हि वाक्यार्थबोधो न निर्मूलत्वेन भ्रान्तितया शङ्कितुं शक्यः' इति न्यायरत्नाकरे पार्थसारथिमिश्रैः व्याख्यातत्वाच्च, न्यायरत्नावल्यां गौडैरप्येवमुक्तत्वाच्च, पदार्थानामपि शाब्दबोधकारणत्वं युक्तमिति भावः । न चातीतानागतपदार्थानां कारणत्वासम्भव इति वाच्यम्; ज्ञानीयविषयताया इव कारणताया अप्यतीतादिपदार्थवृत्तित्वे बाधकाभावात्सत्कार्यवादस्यैव कर्मसंयोगादिति पञ्चदशाध्यायाधिकरणे भाष्यकारैः समर्थनात् । अतीतानागतयोरप्यतिक्रान्तदिवसादिगतसङ्ख्यावत् ज्ञाततायामपि कारणत्वोपपत्तेरिति राणकोक्तेश्चेति ध्येयम् । **तथा**—प्रमाणम् ॥ **मन्त्रविनियोगविधाविति** ॥ 'अनेन मन्त्रेणेदं कार्यं कुर्यात्' इति विधौ मन्त्राणां पदार्थत्वात्स्वज्ञानद्वारा करणत्वात् प्रामाण्यं सिद्धमित्यर्थः । ननु पदज्ञानस्य शाब्दप्रमाजनकत्वस्य सर्वमतसिद्धत्वाद्युक्तं शब्दप्रामाण्यम् । अर्थज्ञानस्य शाब्दबोधहेतुत्वे मानाभावान्नोक्तरीत्या प्रामाण्यसम्भव इत्यत आह—**अस्तु वेति** ॥ **प्रामाण्याभावेऽपि**—अनधिगतार्थगन्तृत्वरूपप्रामाण्याभावेऽपि । **प्रयोजनवत्त्वमात्रं**—स्मरणादिना सफलत्वमात्रम् । **तावतैव**—प्रयोजनवत्त्वमात्रेणैव । **अध्ययनविधेरुपपत्तेः**—स्वाध्यायविधिना मन्त्राणामपि ग्रहणोपपत्तेः । सप्रयोजनत्वमात्रेणाध्ययनविधिर्मन्त्रानपि गृह्णातीति भावः । नन्वेवं तानिद्वैधाधिकरणेनास्य गतार्थत्वम् । तथा हि—'तानि द्वैधं गुणप्रधानभूतानि' इत्यत्र 'व्रीहीनवहन्ति' इत्यादौ व्रीहिविशिष्टावघातः फलोद्देशेन विधीयते इति पूर्वपक्षे, दृष्टे सम्भवत्यदृष्टकल्पनायोगाद्वैतुष्यरूपदृष्टप्रयोजनार्थत्वमिति सिद्धान्तितम् । ततश्च तेन गतार्थमेतदधिकरण-

मिति चेत् अत्र केचित् तानिद्वैधाधिकरणसिद्धस्यैवास्य न्यायस्यात्राधिकाशङ्कानिराकरणार्थमनुवादः। मन्त्राणामर्थप्रकाशनार्थत्वे हि तदर्थशास्त्रादयोऽनुपपन्नाः स्युरित्यधिकाशङ्कायां तदर्थशास्त्रादीनां गुणाद्यर्थत्वान्मन्त्राणामर्थप्रकाशनरूपदृष्टार्थत्वं युज्यत इति न गतार्थतेत्याहुः। अन्ये तु अत्रैवायं न्यायो व्युत्पाद्यः; अत्रसिद्धस्यैव न्यायस्य जिज्ञासाधिकरणे तानिद्वैधाधिकरणादधिकाशङ्कानिराकरणार्थत्वेन स्मारणमित्याहुः। परे तु नावमिकाधिकरणे साम्नां दृष्टार्थत्वस्य साधयिष्यमाणत्वेन तत्र सिद्धस्यैव सर्वत्र शङ्कानिराकरणार्थत्वेन कथनमित्याहुः। वस्तुतस्तु जिज्ञासाधिकरण एवायं न्यायो व्युत्पाद्य इति युक्तम्। न च विनिगमनाविरहः। तस्य प्राथम्यात्। किञ्च तत्र 'स्वाध्यायोऽध्येतव्यः' इति विधिवाक्यमुदाहृत्य तस्य दृष्टार्थत्वं साधितम्। तेनैव दृष्टे सम्भवतीति न्यायेनार्थवादमन्त्रादीनां दृष्टार्थत्वं सिद्ध्यत्येव। विधिर्हि धर्मेऽभ्यर्हितं प्रमाणम्। अत एव तस्य प्रथमं विचारः कृतः। मन्त्रास्तु विहितार्थस्मरणार्थास्सन्तः तच्छेषभूताः। न हि प्रधानभूते अङ्गार्थविचारातिदेशस्सम्भवति। तस्मात्तत्रैवायं न्यायो व्युत्पाद्यः। न चैवं तेन गतार्थत्वं; पदोत्तरत्वेन समाहितत्वात् इत्यास्तां विस्तरः॥ **अर्थवादवदेवेति**॥ यथार्थवादोपस्थितप्राशस्त्यज्ञानादेव प्रवृत्तौ फलसिद्धिः, एवं मन्त्रस्मृतद्रव्यदेवताककर्मानुष्ठानादेव फलसिद्धिरित्यर्थः। वस्तुतस्तु अर्थवादमन्त्रयोर्वैषम्यस्य पूर्वमेवोक्तत्वान्नेदं प्रयोजनमित्यन्यदेव प्रयोजनं वक्तव्यम्। यथा, पूर्वपक्षे विकृतौ 'अग्नये जुष्टम्' इत्यादीनामविकृत एव प्रयोगः। सिद्धान्ते तूहसिद्धिरित्यादिकं द्रष्टव्यम्। सूत्रार्थस्तु, पञ्चम्यन्तानां मन्त्रानर्थक्यमित्यनेन सम्बन्धः। **तदर्थशास्त्रात्**—मन्त्रविनियोजकशास्त्रान्तरसत्त्वात्। तच्चोक्तमेव। **वाक्यनियमात्**—वाक्यानुपूर्वीनियमात्। मन्त्राणां दृष्टार्थत्वे 'अग्निर्मूर्धा' इत्यादौ पदानां व्युत्क्रमेण प्रयोगेऽप्यर्थप्रतीतिसम्भवेनानुपूर्वीनियमानर्थक्यात्तत्सार्थक्याय मन्त्राणां अदृष्टार्थत्वमिति। **बुद्धशास्त्रात्**—बुद्धेषु ज्ञातेषु शास्त्रं, तस्मादित्यर्थः। 'अग्नीदग्नीन्विहर' इति मन्त्रः अध्ययनकाले ज्ञाताग्निविहरणप्रकाशकस्सन् मन्त्राणामदृष्टार्थत्वं गमयतीति। **अचेतनेऽर्थबन्धनात्**—**अचेतनानाम्**—ओषधिग्रावादीनाम्, 'ओषधे त्रायस्वैनं' 'श्रृणोत ग्रावाणः' इत्यादौ सम्बोधनदर्शनेन तेषामाभिमुख्यासम्भवात् अदृष्टार्थत्वमिति। **अर्थविप्रतिषेधात्**—**अर्थस्य**—प्रतिपाद्यस्य, **विप्रतिषेधः**—प्रत्यक्षविरोधः, तस्मादिति। 'अदितिर्द्यौः' इत्यादौ देवतारूपाया अदितेर्द्युत्वं प्रत्यक्षविरुद्धमिति अदृष्टार्थत्वमिति। **स्वाध्यायवदवचनात्**-स्वाध्यायवदिति षष्ठ्यन्ताद्वतिः। अध्ययनस्येवावचनात् दृष्टार्थत्वे पुनर्वचनप्रयोजनाभावादिति। **अविज्ञेयात्**—सृण्येवेत्यादौ विज्ञेयाभावादिति। **अनित्यसंयोगात्**-**अनित्यानाम्**-आधुनिकानाम्, **संयोगात्**—प्रतिपादनात्।

## अथ प्रथमाध्यायस्य तृतीयः पादः ॥

**(१)—धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥ अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥**

शिष्टत्रैवर्णिकपरिगृहीतानां मन्वादिस्मृतीनां धर्माधर्मयोः प्रामाण्यमस्ति न वेति सन्देहे सन्मूलकत्वनिश्चायकाभावात् अप्रामाण्यम् । न ह्यत्र प्रत्यक्षादि मूलं; तेषां

---

'नमो वयं वैश्रवणाय कुर्महे' इत्यादावनित्यसंयोगात् । **मन्त्रानर्थक्यम्**—अर्थप्रकाशनरूपं दृष्टप्रयोजनराहित्यमिति शिवम् ॥

इति श्रीचोलदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायन-
विश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायन-
सूत्रहोशनिकर्नाटकजातीयवाञ्छेश्वरयज्वनः कृतिषु
भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

### अथ प्रथमाध्यायस्य तृतीयः पादः ॥

**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्** ॥ स्मृत्याचारकल्पसूत्रादिविचारस्य धर्मविचाररूपत्वात् शास्त्रसङ्गतिः । कथंलक्षणो धर्म इति भाष्यानुसारेण धर्मप्रमाणनि-निरूपणस्य अध्यायार्थत्वात् अध्यायसङ्गतिः । किं धर्मे प्रमाणं, कथं च तस्य प्रामाण्यमिति भाष्यार्थः। वेदातिरिक्तधर्मप्रमाणनिरूपणात् पादसङ्गतिः। अत एव पादान्तरत्वम् । विध्यर्थवाद-मन्त्रमूलकस्मृतिप्रामाण्यस्य विध्यादिप्रामाण्योपजीव्यत्वादुपजीव्योपजीवकभावोऽनन्तरसङ्गतिः । अत एव आनन्तर्यमपि । नामधेयमूलकस्मृतेरभावात्, नामधेयविचारस्य स्मार्तनामधेयसाधारणत्वाच्च तस्य स्मृतिविचारानन्तर्यमित्यभिसन्धायाह—**शिष्टेति** ॥ **शिष्टैः**—वेदा एव धर्मे प्रमाणमिति निश्चितधीभिः । **परिगृहीतानां**—धर्मप्रमाणत्वेन निश्चितानाम् । अनेन शाक्यादि-ग्रन्थानामत्र विषयत्वं नास्तीति सूचितम्। त्रैवर्णिका एव शिष्टा इति ज्ञापयितुं—**त्रैवर्णिकेति** ॥ **मन्वादीति** ॥ आदिना याज्ञवल्क्यादिपरिग्रहः । यत्त्वत्र कौस्तुभे आचाराणामपि विषयत्वमुक्तं, तदाचाराधिकरणवैयर्थ्यापत्तेः अर्थवादाधिकरणे मन्त्रादेर्विषयत्वे तत्तदधिकरणवैयर्थ्यस्य स्वेनैवोक्तत्वात्तद्रीत्या आचाराधिकरणवैयर्थ्यस्य जागरूकत्वेन स्वोक्तिविरोधापत्तेश्चोपेक्षणीयमिति सूचयन्नाह—**स्मृतीनामिति** ॥ पूर्वपक्षमुपपादयति—**सन्मूलकत्वेत्यादि** ॥ **सन्मूलकत्वनिश्चाय-काभावात्**—प्रमाणमूलकत्वनिश्चायकाभावात् । भ्रान्त्यादिमूलकत्वसम्भवादिति भावः । **अप्रा-**

धर्माधर्मयोः अप्रवृत्तेः । वेदस्य च प्रत्यक्षपठितस्यानुपलम्भात् । उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात् । इदानीमुच्छेदस्य च वैदिकैर्यथापरिगणनं शाखानां मात्रामात्रापरित्यागेन पाल्यमानतया कल्पयितुमशक्तेः । न च नित्यानुमेयो वेदो मूलम् । स्मृतेर्मूलसामान्यव्याप्तत्वेऽपि वेदव्याप्तत्वाभावेन अनुमानानुपपत्तेः । मनोरप्यनुमेयत्वकल्पने अन्धपरम्परापत्तेश्च । अतश्च सन्मूलत्वासम्भवात् भ्रान्त्यादिमूलत्वेन अप्रामाण्यमिति प्राप्ते—

शिष्टानामद्य यावदविगीतपरम्परया ज्योतिष्टोमादिष्विव अष्टकाकळञ्जभक्षणा-

---

**माण्यमिति**—धर्माधर्मयोरिति शेषः। ननु स्मृतिप्रतिपाद्याष्टकास्वर्गकार्यकारणभावस्य प्रत्यक्षमेव मूलमस्त्वित्यत आह—**न ह्येतेति** ॥ उक्तकार्यकारणभाव इत्यर्थः ॥ **तेषां**—प्रत्यक्षादीनाम् ॥ **अप्रवृत्तेरिति** ॥ अतीन्द्रियेऽर्थे प्रत्यक्षाप्रसरादित्यर्थः । अत एव व्याप्तिग्रहासम्भवान्नानुमानमपीति सूचयितुमादिपदम् । वेदमूलत्वं निराकरोति---**वेदस्येति** ॥ **वेदस्य**—स्मृतिमूलभूतवेदस्य । **प्रत्यक्षपठितस्येति** अनुपलम्भस्य योग्यतासूचनाय । तथा च योग्यानुपलब्ध्या मूलभूतवेदाभावनिश्चयान्न वेदमूलकत्वमिति भावः । ननु क्वचिदग्निहोत्रादिषु उपलम्भोऽस्त्येवेत्यत आह--**उपलम्भे वेति** ॥ **स्मृतिप्रणयनेति** ॥ तथा च स्मृतिमूलवेदस्य प्रत्यक्षत्वे तत एव लोकानां प्रवृत्तिसम्भवात् स्मृतिप्रणयनं व्यर्थं स्यादित्यर्थः । ननु स्मृतिमूलवेद इदानीमुच्छिन्न इति कल्पनेन स्मृतिप्रणयनसार्थक्यमित्यत आह--**इदानीमिति**॥ **शाखानामिति** ॥'एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः । सहस्राध्वा सामवेदो यजुरेकशताधिकम् ॥ नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम् ॥' इति रीत्या चरणव्यूहादिषु निर्णीतानामित्यर्थः ॥ **मात्रामात्रेति** ॥ मात्राक्षरादिपरिगणनेन शिष्टैः पाल्यमानत्वेन उच्छेदस्य वक्तुमयुक्तत्वादित्यर्थः । ननु प्रत्यक्षमूलाभावेऽपि अनुमितवेदो मूलमस्त्वित्याशङ्कते—**न चेति** ॥ अष्टकादिस्मृतिर्वेदमूला स्मृतित्वात् इत्यनुमानगम्य इत्यर्थः । परिहरति—**स्मृतेरिति** ॥ स्मृतेः पौरुषेयत्वेन आचारमूलकत्वं वा, स्मृत्यन्तरमूलकत्वं वा, भ्रान्त्यादिमूलकत्वं वेति सन्देहान्न वेदमूलकत्वनिश्चय इत्यर्थः । ननु अष्टकादीनां धर्मत्वाद्वेदस्यैव धर्मप्रमाणतयाष्टकास्मृतेर्वेदमूलकत्वनिश्चयोऽस्त्विति चेन्न; अन्योन्याश्रयात् अष्टकादीनां धर्मत्वे मूलवेदसिद्धिः, वेदसिद्धावष्टकादीनां धर्मत्वमिति । पूर्वपक्षेऽष्टकादीनां धर्मत्वानङ्गीकारात् । ननु मनुना वृद्धमनुस्मृतिं दृष्ट्वा तन्मूलवेदमनुमाय तदर्थो निबद्ध इति वेदमूलमस्त्वित्यत आह—**मनोरिति** ॥ **अनुमेयत्वकल्पने**—वृद्धमनुस्मृतिमूलवेदस्यानुमेयत्वकल्पने ॥ **अन्धपरम्परेति** ॥ वृद्धमनुस्मृतावपि प्रामाण्यसन्देहान्न वेदमूलत्वनिश्चय इत्यर्थः । पूर्वपक्षमुपसंहरति—**अत इति** ॥ सिद्धान्तमाह—**शिष्टेति** ॥ शिष्टानामेतावत्कालपर्यन्तमविरोधेन मन्वादिस्मृत्युक्ताष्टकादिषु धर्मत्वेन परिग्रहाद्वेदविहितज्योतिष्टोमादिवत् धर्मत्वनिश्चयाद्वेदनिषिद्धानृतवदनादिवत्कलञ्जभक्षणादिष्वधर्मत्वनिश्चयाच्च

दिष्वपि धर्मत्वेनाधर्मत्वेन च परिग्रहात् मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसम्भवाच्च तन्मूलकत्वमेव युक्तं, न तु भ्रान्त्यादिमूलकत्वम्। तत्कारणस्य अद्य यावत्तदज्ञानस्य च कल्पने गौरवाच्च। श्रुतिश्च प्रत्यक्षपठितैव मूलम्। न च स्मृतिप्रणयनवैयर्थ्यम्। शाखान्तरोपसंहारेण अर्थवादार्थोद्धारेण न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनसार्थ-

---

वेदमूलत्वमेव स्मृतीनामित्यर्थः। यदि मन्वादयो वेदमदृष्ट्वैव स्वोत्प्रेक्षया स्मृतिं कुर्युस्तर्हि मन्वादिभिस्समानप्रज्ञा महर्षयः किमिति तत्प्रणीतस्मृत्यर्थमनुतिष्ठेयुः? अतस्तत्परिग्रह-दार्ढ्याद्वेदमूलकत्वमेव स्मृतीनामित्याशयः। भ्रान्त्यादिमूलकत्वं निराकरोति—**मन्वा-दीनामिति** ॥ त्रैवर्णिकानां वेदाध्ययनस्य नित्यतया सर्वज्ञस्य मनोर्वेददर्शनं सम्भ-वतीत्यर्थः। 'यद्वै किञ्च मनुरवदत्तद्भेषजं' इति सर्वपुरुषप्रत्यक्षश्रुत्यैव मनुस्मृत्युक्तं सर्वं पुरुषाणामत्यन्तं हिततममिति प्रतिपादनादप्ययमर्थः स्पष्ट इति भावः। **तन्मूलकत्वमेव**—वेद-मूलकत्वमेव। तथा च स्मृतयो वेदमूलिकाः वेदप्रामाण्यवादिकर्तृकत्वात् यन्नैवं तन्नैवं यथा शाक्यग्रन्थः इत्यनेन वेदमूलकत्वे सिद्धे, स्मृतयो धर्मे प्रमाणं वेदमूलकत्वात् यन्नैवं तन्नैवं इत्य-नुमानेन स्मृतीनां धर्मप्रामाण्यसिद्धिः। यत्त्वर्थकामानुसारिस्मृतिषु प्रथमस्यानैकान्तिकत्वं, द्वि-तीयस्यापौरुषेयवाक्यत्वेन सोपाधिकत्वमिति कैश्चिदुक्तं तन्न; अर्थकामादिस्मृतिष्वपि 'ऋद्धि-कामाः सत्रमासीरन्, यं कामयेत वसीयान् स्यात्' इत्यादिश्रुतिमूलकत्वसत्त्वेन व्यभिचारानव-काशात् धर्मबोधकगुरुवाक्यादौ धर्मप्रमाणत्वसत्त्वेनापौरुषेयवाक्यत्वस्य तत्राभावेन साध्यव्याप-कत्वाभावादुपाधेरसम्भवाच्चेति ध्येयम्। गौरवादपि भ्रान्त्यादिमूलकत्वं न सम्भवतीत्याह—**त-त्कारणस्येति** ॥ **तत्कारणस्य**—भ्रान्त्यादिकारणस्य। दोषस्य इतरेषां पुरुषाणां तदज्ञानस्य दोषा-ज्ञानस्य कल्पने गौरवान्न भ्रान्तिमूलकत्वमित्यर्थः। योग्यानुपलब्ध्या श्रुत्यभावनिश्चय इति शङ्कां परिहरति—**श्रुतिश्चेति** ॥ **प्रत्यक्षपठितैवेति** ॥ एवकारेण उत्सन्नत्वव्यवच्छेदः। कात्यायनादयस्तु बहुशाखोत्सादनमङ्गीकुर्वन्ति। आपस्तम्बोऽपि 'तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते' इत्याह। स्मृतिप्रणयनवैयर्थ्यमुक्तं निरस्यति-**न चेति** ॥ **शाखान्तरेति** ॥ 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययन-विधौ 'अध्वर्युं वृणीते' इतिवदेकत्वस्य विवक्षितत्वादेकशाखाध्ययनस्य नित्यत्वेनेतरशाखागतार्थस्य तेनावगन्तुमशक्यत्वात्तं प्रति स्मृतिप्रणयनं सार्थकमिति भावः॥ **अर्थवादेति** मन्त्रस्याप्युपलक्ष-णम्। 'स्थलयोदकं परिगृह्णन्ति' इत्यर्थवादः तटाकस्मृतेर्मूलम्। स्थलया-कृत्रिमस्थलेन। अकृत्रि-मार्थे 'जानपद-' इत्यादिना ङीषो विधानात्, कृत्रिमार्थ एवापः प्राप्तत्वात्। एवं 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति स्मृतेः 'तद्यथैवादौ मनुष्यराजः' इत्याद्यर्थवादमूलकत्वम्। 'धन्वन्नि-व' इति मन्त्रः प्रपास्मृतेर्मूलम्। धन्वन्-मरौ। 'समानौ मरुधन्वानौ' इत्यमरः। 'सुपां सुलुक्' इति ङेर्लुक्। 'न ङिसम्बुद्ध्योः' इति नलोपाभावः। 'यां जनाः प्रतिनन्दन्ति' इति मन्त्रः, 'एषा वै संवत्सरस्य पत्नी यदेकाष्टका' इत्यर्थवादश्चाष्टकास्मृतेर्मूलम् ॥ **न्यायसिद्धेति** ॥ परप्रक-

क्यात् । अतो मूलश्रुत्युपस्थापकतयैव धर्माधर्मप्रमाप्रयोजकत्वं स्मृतीनामिति सिद्धम् ॥ १ ॥

## (२)—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥ हेतुदर्शनाच्च ॥ ४ ॥

श्रुतिविरुद्धानामपि 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनां श्रुति-

---

रणपठितस्य 'मलवद्वाससा न संवदेत' इत्यादेः क्रत्वर्थतायाः मीमांसान्यायेनैव साधनीयत्वादिति भावः। अत्र भाष्ये प्रपादिस्मृतीनां परोपकारादिरूपदृष्टार्थत्वेन प्रामाण्यमुक्तं, तदुपलक्षणपरमित्याशयेन वार्तिके निरस्तम् । उपसंहरति—**अत इति** ॥ **प्रयोजकत्वमिति** ॥ तथा च श्रुतिद्वारा लिङ्गस्येव धर्मप्रमित्युपयोग इति भावः । वस्तुतस्तु वेदवाक्यादिवत्स्मृतिवाक्यादपि जायमाने शाब्दबोधे वैलक्षण्याननुभवात्तद्विषयस्य च बाधाभावाद्धर्मप्रमाजनकत्वमेव युक्तम् । अनाश्वासस्तु केषाञ्चिदेव भवति । स च वेदेऽपि तुल्यः । तन्निरासो वेदाधिकरण इव स्मृत्यधिकरणेऽपि कृतस्तुल्यः । इयांस्तु विशेषः । वैदिकार्थो वेदमन्तरेण सर्वेषामनधिगतः । स्मृत्यर्थस्तु मूलवाक्यद्रष्टृणामधिगत इति । नन्वेवमप्यनधिगतार्थगन्तृत्वाभावादप्रामाण्यमिति चेन्न ; यत्पुरुषोद्देशेन स्मृतिप्रवृत्तिः तदनधिगतविषयकत्वस्य तत्तच्छाखागताग्निहोत्रादिवाक्येष्विवोपपत्तेः । कथमन्यथा स्मार्ताष्टकादिविधीनामत्यन्ताप्राप्तप्रापकत्वरूपापूर्वविधित्वमिति । प्रयोजनं स्पष्टम् । सूत्रार्थस्तु, **धर्मस्य शब्दमूलत्वात्**—'चोदनालक्षणोऽर्थो धर्मः' इति वेदैकप्रमाणगम्यत्वात् । **अशब्दं**—वेदेतरविहितमष्टकास्मृत्यादिकम् । **अनपेक्षं**—धर्मप्रमाणत्वेनानादर्तव्यमिति । '**अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्** इति सिद्धान्तसूत्रम् । **अपि वेति** पक्षव्यावृत्तौ । **कर्तृसामान्यात्**—वेदप्रमाणवादिमन्वादिकर्तृकत्वात् । **अनुमानं**—स्मृतिः । **प्रमाणं स्यात्**—धर्माधर्मयोः प्रमाणमित्यर्थः । यत्त्वत्रानुमानपदं केवलव्यतिरेक्यनुमानपरमिति केनचिदुक्तं तत्प्रामादिकमेवेति मन्तव्यम् ॥

**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्** ॥ पूर्वापवादेन प्रवृत्तेरापवादिकी सङ्गतिः । श्रुतिविरुद्धानां स्मृतीनां प्रामाण्यं न वेति संशयः । **श्रुतिविरुद्धानामिति** ॥ प्रत्यक्षश्रुतिविरुद्धानामित्यर्थः ॥ **औदुम्बरीति** ॥ यजमानसम्मित उदुम्बरवृक्षप्रकृतिकः सदसि मध्ये निखातः स्थूणाविशेषः । औदुम्बरी ताम्रमयी प्रतिमेति वेदशास्त्रानभिज्ञा गौडा आहुः । सा सर्वापि वाससा आच्छादयितव्येति स्मृत्यर्थः । 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुत्या स्पर्शनविधानेन सर्ववेष्टने सति स्पर्शनासम्भवात् श्रुतिस्मृत्योर्विरोधो बोध्यः । अत्र स्पर्शनं त्वक्संयोगमात्रं, नत्वौदुम्बरीगतस्पर्शविषयकत्वाच्चप्रत्यक्षम् । तथा सति 'कर्मनाशाजलस्पर्शात्' इत्यादौ रोगविशेषेण कर्मनाशागतशीतस्पर्शविषयकप्रत्यक्षानुत्पत्तौ पुनस्संस्कारानापत्तेः ।

मूलकत्वाविशेषात् प्रामाण्यम् । न च 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरोधात् तदनुपपत्तिः । परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशो दर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्; तद्वदेव विकल्पेन विरोधस्य परिहर्तुं शक्यत्वाच्च । न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षा निवर्तते, येन कल्पनामूलोच्छेदात् विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात् । न वा शैत्योष्णत्वयोरिवात्र विषययोरत्यन्तविरोधः, येनौष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणो बाधः स्यात् । न त्वेतदस्ति, विकल्पेन द्वयोस्सम्भवात् इति प्राप्ते---

---

एतेन 'त्वगिन्द्रियजन्यस्पर्शविषयकज्ञानं स्पृशिधात्वर्थः' इति कौस्तुभोक्तं निरस्तमिति बोध्यम् । आदिना 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति श्रुतिविरुद्धाया 'अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत्' इति स्मृतेः, 'अग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इति श्रुतिविरुद्धायाः 'क्रीतराजको भोज्यान्नः' इति स्मृतेश्च सङ्ग्रहः ॥ **श्रुतिमूलकत्वाविशेषादिति** ॥ पूर्वाधिकरणन्यायादिति भावः । पूर्वाधिकरणवैषम्यं शङ्कते—**न चेति** ॥ स्पर्शनश्रुतिविरोधेन वेष्टनस्मृतेर्मूलश्रुत्यनुमानासम्भवान्न प्रामाण्यसम्भव इत्यर्थः ॥ **अनुपपत्तिः**—स्मृतिमूलश्रुत्यनुमानानुपपत्तिः । परिहरति—**परस्परेति** ॥ 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इति विरुद्धार्थकश्रुतीनां बहुशो दर्शनेन प्रकृते तद्वद्विरुद्धार्थकश्रुतिद्वयसम्भवात् स्मृतिमूलश्रुतिकल्पनं युज्यत इत्यर्थः । स्पर्शनश्रुतिवेष्टनस्मृतिमूलश्रुत्योः परस्परविरहरूपत्वाभावाद्विरोध एव नास्तीत्यपिशब्दार्थः । वेष्टनस्पर्शनयोरेकदानुष्ठानासम्भवात् अनुष्ठानकृतविरोधस्फूर्तावपि ग्रहणाग्रहणश्रुतिवदुपपत्तिरित्याशयः ॥ **तत्कल्पने**—स्मृतिमूलश्रुतिकल्पने । कथं तर्हि विरोधप्रतीकार इत्यत आह—**विकल्पेनेति** ॥ प्रयोगभेदेन ग्रहणाग्रहणयोरिवानुष्ठानोपपत्तेः नानुष्ठानकृतोऽपि विरोध इत्यर्थः ॥ **शक्यत्वादिति** ॥ ननु ग्रहणाग्रहणयोर्द्वयोरपि प्रत्यक्षविधिविहितत्वेन तुल्यबलत्वात्प्रयोगभेदेन विरोधपरिहारसम्भवेऽपि स्पर्शनवेष्टनयोर्विषमशिष्टयोः कथं विकल्पेन विरोधपरिहार इति चेन्न; पशावतिदेशेन प्राप्तयोरानुमानिकत्वेऽपि 'न तौ पशौ करोति'इति प्रत्यक्षश्रुत्युक्ततदभावाभ्यां सह विकल्पस्य दृष्टत्वेन प्रकृतेऽपि तत्सम्भवादिति भावः । नन्वेवमपि 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र श्रुत्या लिङ्गस्य बाधदर्शनात्तन्न्यायेन प्रत्यक्षश्रुत्या स्मृतेर्बाधः किं न स्यादित्यत आह—**न ह्यत्रेति** ॥ तत्र हि श्रुत्या मन्त्रविनियोगेन मन्त्रस्य प्रयोजनाकाङ्क्षाशान्त्या आकाङ्क्षाभावात् न लिङ्गेन श्रुतिः कल्प्यत इति युक्तम् । प्रकृते तु प्रत्यक्षश्रुत्या स्मृतेर्मूलाकाङ्क्षानिवृत्त्यभावान्न स्मृतिमूलकल्पनानुपपत्तिरिति भावः। ननु कल्पनामूलोच्छेदात् बाधाभावेऽपि वह्नौ औष्ण्यप्रत्यक्षेण शैत्यानुमानस्येव प्रमेयापहारात् बाधस्स्यात् इत्यत आह---**न वेति** ॥ परस्परविरहरूपत्वविरोधः, परस्परविरहव्याप्यत्वरूपविरोधो वा नास्तीत्यर्थः । शैत्यानुमानस्थले औष्ण्यप्रत्यक्षस्य

भाष्यकारैरेवं सिद्धान्तितम्—सर्वत्रानुमाने अनुमेयजिज्ञासायाः कारणत्वात् प्रत्यक्षश्रुत्या च स्पर्शविधानेनावेष्टितत्वरूपेण औदुम्बर्याः परिच्छिन्नत्वात् जिज्ञासाभावेन नौदुम्बरीवेष्टनविषयकश्रुत्यनुमानसम्भवः । तथा प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्र लोभादिदर्शनं यथा 'वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णाति' इत्यादौ तत्रापि न श्रुतिकल्पनम्, क्लृप्तहेतोरेव मूलतोपपत्तेरिति ॥

---

प्रबलत्वेन वह्नौ शैत्यं नास्तीति निश्चयो भवति । प्रकृते तु स्पर्शनेन वेष्टनश्रुत्यभावादेरविषयीकरणान्न प्रमेयापहारात्मको बाध इत्यभिमानः। तदुपपादयति—**विकल्पेनेति** ॥ एवं पूर्वपक्षे प्राप्ते भाष्यकारसिद्धान्तमाह—**सर्वत्रेति** ॥ **अनुमाने**—अनुमितौ । भावे ल्युट् । **अनुमेयजिज्ञासाया इति** ॥ साध्यसन्देहस्येत्यर्थः । साध्यसन्देहः पक्षतेति प्राचीनमताभिप्रायेणेदं द्रष्टव्यम् । औदुम्बरी केनचिद्विशेषणेन परिच्छिन्ना न वेति सन्देहः। प्रकृते अनुमित्यङ्गमित्याशयः । प्रकृते जिज्ञासाभावमुपपादयति—**प्रत्यक्षश्रुत्येति** ॥ स्पर्शविधानेन वेष्टिताया स्पर्शनासम्भवादवेष्टितत्वेन निश्चितत्वात्सन्देहाभावान्न वेष्टनस्मृतिमूलश्रुत्यनुमानप्रसक्तिः। तथा च प्रमेयापहाराद्बाध इति भावः । यद्वा जिज्ञासायाः कल्पनामूलतया कल्पनामूलोच्छेदाद्बाध इति भावः। न च विकल्पेन विरोधपरिहार इति वाच्यम्; तस्याष्टदोषदुष्टत्वात् । उक्तं च प्राचीनैः 'प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनम् । प्रत्युज्जीवनहानाभ्यामेवं स्यादष्टदोषता॥'इति । विस्तरेण चैतत्सन्तर्दनाधिकरणे वक्ष्यामः। विकल्पे द्वयोरपि बाधप्रसङ्गेनातिजघन्यत्वाच्च । उक्तं चात्रैवाधिकरणे मुरारिमिश्रैः, 'विकल्पो ह्युभयैकदेशबाधात्मकः। न च बाधे विरोधादन्यो हेतुस्सम्भवति' इति । अतो न कालभेदाद्व्यवस्था । नापि देशभेदाद्व्यवस्था, सर्वपदवैयर्थ्यात् । नापि कर्तृभेदाद्व्यवस्था, 'वासिष्ठानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषाम्' इतिवदश्रुतत्वात् । तस्मादत्र श्रुत्या स्मृतेर्बाध एवेत्यभिप्रायः । एवं प्रत्यक्षश्रुतिविरोधादप्रामाण्यमुपन्यस्य तदभावेऽपि यत्र हेत्वन्तरदर्शनं तत्रापि स्मृतेरप्रामाण्यमुपपादयति—**तथेति** ॥ तदुदाहरति—**वैसर्जनीयमिति** ॥ अवान्तरदीक्षाविसर्जनार्था होमा वैसर्जनहोमाः 'त्वं सोम तनूकृद्भ्यः' इत्यादिभिर्मन्त्रैः कर्तव्यतया विहिताः । ते च यजमानपत्नीपुत्रभ्रातृषु समन्वारब्धेष्वहतेन वाससा सम्प्रच्छादितेषु वासोऽन्तेस्त्रुग्दण्डमुपसङ्गृह्य शालामुखीयादौ चतुर्गृहीतेनाज्येन प्रचरण्या कर्तव्याः तत्सम्प्रच्छादनवस्त्रमित्यर्थः। आदिना 'यूपहस्तिनो दानमाचरन्ति' इत्यादिसङ्ग्रहः । यूपो हस्त्यते वेष्ट्यतेऽनेनेति यूपहस्ती वस्त्रविशेषः । जातावेकवचनम् । वाजपेये 'सप्तदशभिर्वासोभिर्यूपं वेष्टयति' इति विधानात् ॥ **तत्रापि**—वैसर्जनादिस्थलेऽपि । **न श्रुतिकल्पनम्, क्लृप्तहेतोः**—लोभादेः। **मूलतोपपत्तेरिति** ॥ दृष्टलोभमूलसम्भवे अदृष्टश्रुतिकल्पनस्यान्याय्यत्वादिति भावः । एवं भाष्यकारीयमधिकरणमुपपाद्य वार्तिककारसिद्धान्तकथनाय तदीयमधि-

वार्तिककारस्तु--न जिज्ञासाया अनुमित्यङ्गत्वं अग्न्याद्यजिज्ञासायामपि तदुदयात् ; सत्यपि वा तस्याः कारणत्वे अनुमितिविषयश्रुतेर्जिज्ञासितत्वाच्च प्रत्यक्षश्रुति-विरोधाभावेऽपि लोभादिमूलकत्वाङ्गीकारे च अष्टकादिस्मृतेरपि तदापत्तेः । अतश्च प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलकत्वकल्पनोपपत्तेः युक्तमेव प्रामाण्यम् । परन्तु यावच्छ्रुतिदर्शनं वेष्टनं नानुष्ठेयं, अर्थवादाद्युन्नीतविधि-मूलकत्वस्यापि स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य सम्भावितत्वात् । तस्य चो-

---

करणभङ्गमुपपादयति--**वार्तिककारास्त्विति** ॥ प्रथमविचारं दूषयति--**न जिज्ञासाया इति** ॥ अग्न्याद्यनुमित्यङ्गत्वमिति क्वचित्पाठः । आदिना मेघादिपरिग्रहः ॥ **अजिज्ञासायामपीति** ॥ तथा च सन्देहाभावेऽपि सिषाधयिषया अनुमितिदर्शनात्, घनगर्जितेन मेघानुमितिदर्शनाच्च न सन्देहोऽनुमित्यङ्गमित्यर्थः। इदमुपलक्षणम् । श्रुत्यादिना देहादिव्यतिरिक्तात्मनिश्चयेऽपि मननादौ प्रवृत्तिदर्शनात्सन्देहो नानुमित्यङ्गमित्यपि बोध्यम् । ननूक्तस्थलेषु सन्देहं परिकल्प्यैवानु-मितिः स्वीक्रियत इति वदन्तं प्रत्याह--**सत्यपि वेति** ॥ **अनुमितिविषयेति** ॥ स्मृतिमूलश्रुते-रित्यर्थः । द्वितीयसिद्धान्तं दूषयति--**प्रत्यक्षश्रुतीति** ॥ यदि श्रुतिविरोधाभावेऽपि लोभमूलं कल्प्येत तदाष्टकादिस्मृतीनामपि लोभमूलकत्वसम्भवादप्रामाण्यं स्यादित्यर्थः । इदमुपलक्षणम् । दृष्टहेतुसम्भवमात्रेणाप्रामाण्योक्तौ ज्योतिष्टोमादौ दक्षिणादिश्रुतीनामपि लोभमूलकत्वसम्भवेन वेदस्याप्यप्रामाण्यं स्यादित्यपि बोध्यम् । आदिपदेन महादानादिसङ्ग्रहः । **स्मृतेः**--वेष्टनस्मृतेः । **शिष्टत्रैवर्णिकपरिग्रहाविशेषेण**--स्मृत्यधिकरणोक्तसर्वस्मृतिप्रामाण्यसाधकहेतोस्सत्त्वेन ॥ **युक्त-मेवेति** ॥ शाठ्यायनीयब्राह्मणे 'तामूर्ध्वदशेन वेष्टयति' इति प्रत्यक्षैव श्रुतिरुपलभ्यते । जैमिनिना छान्दोग्यानुपदग्रन्थे 'वैष्टुतं वै वासः' इत्यादिना 'तामूर्ध्वदशेनेत्युभयत्र वाससी दर्शयति' इत्यन्तेन चेयं श्रुतिरुदाहृता । क्रीतराजकस्मृतिमूलमपि गोपथब्राह्मणे श्रूयते, 'तस्माद्दीक्षितस्य विज्ञातस्य क्रीतराजकस्य भोज्यमन्नं भवति' इति । एवमन्यत्रापि । तस्मादस्मदादीनामप्रत्यक्षत्वेऽपि सर्व-शाखाद्रष्टृमन्वादीनां दर्शनसम्भवात् सर्वाः स्मृतयः श्रुतिमूला एवेति युक्तं वेष्टनादिस्मृतीनामपि प्रामाण्यमिति भावः । भाष्यविरोधं परिहरति--**परन्त्विति** ॥ **वेष्टनमिति** प्रत्यक्षश्रुति-विरुद्धादृष्टमूलस्मृतिविहितार्थोपलक्षणम् ॥ **नानुष्ठेयमिति** ॥ मूलश्रुतिदर्शनाभाववतेति शेषः । तथा च भाष्योक्तमप्रामाण्यमननुष्ठापकत्वरूपमेव, न तु धर्मप्रमाजनकत्वाभावरूपमिति न भाष्य-विरोध इति भावः । अननुष्ठाननिमित्तमाह--**अर्थवादेति** ॥ आदिना मन्त्रपरिग्रहः । लोके ह्यर्थवादोन्नीतविधिमूलिका बह्व्यः स्मृतय उपलभ्यन्ते । तत्र प्रत्यक्षश्रुतिविरोधाभावे यथाश्रुतमे-वानुष्ठानम्, तद्विरोधे तु तदुन्नयनं भ्रमप्रमादिमूलकं भवेदिति सम्भावनया न निष्कम्पप्रवृत्ति-

न्नयनस्य प्रत्यक्षश्रुतिविरोधे आभासत्वसम्भवात् । अतश्च यावच्छ्रुतिदर्शनं अननुष्ठानलक्षणमप्रामाण्यमित्यभिप्रायं सूत्रमिति प्राह ॥

यद्वा---शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेर्वेददर्शनसम्भवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वं, तन्मूलभूतवेदश्चेदानीं प्रलीन इति प्राप्ते--शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात्, प्रत्युताप्रमाणत्वेनैव तेषां स्मरणात् वेदा-

---

रिति भावः। उपसंहरति—**अतश्चेति**॥ तथा च मूलश्रुतिदर्शनपर्यन्तमननुष्ठानमिति सूत्राशयः। न तु सर्वथाऽप्रामाण्ये तात्पर्यमिति भावः। अथैवं नाननुष्ठानमप्यप्रामाण्यं वेष्टनस्मृतेर्युक्तं, स्पर्शनदेशं परित्यज्य वेष्टनेनोभयोरपि प्रामाण्योपपत्तेः। न च 'सर्वा वेष्टयितव्या' इत्युक्तेर्नायमर्थस्सम्भवतीति वाच्यम्; खातमूलप्रदेशे वेष्टनाभावेन सर्वशब्दसङ्कोचस्य त्वत्पक्षेऽप्यावश्यकतया स्पर्शनशास्त्रेणापि सङ्कोचस्य न्याय्यत्वात्। उक्तं हि जातेष्ट्यधिकरणे अन्यथानुपपत्तिबाधितस्य निमित्तानन्तरक्षणकर्तव्यताबोधकस्य 'पुत्रे जाते' इति विधेराशौचशास्त्रेणापि सङ्कोचादाशौचापगमानन्तरं शुद्धे पर्वण्यनुष्ठानमिति। तद्वत् प्रकृतेऽपि सर्वशब्दसङ्कोचोपपत्तेः। किञ्च 'सर्वा वेष्टयितव्या' इत्यत्र न सर्वावयवावच्छेदेन वेष्टनं बोध्यते। 'सर्वो ब्राह्मणः पूज्यः' इत्यादौ सर्वावयवावच्छेदेन ब्राह्मणः पूज्य इत्यर्थाप्रतीतेः। किन्तु ब्राह्मणत्वव्यापकं पूज्यत्वमित्येव प्रतीत्युदयात्। ततश्चौदुम्बरीत्वव्यापकं वेष्टनकर्मत्वमिति प्रतीत्या नानाप्रयोगगतौदुम्बरीवेष्टनमेव प्रतीयत इति यत्किञ्चित्प्रदेशपरित्यागेऽपि न सर्वशब्दविरोधः। अपि च वेष्टनस्मृतेरप्रामाण्ये भ्रान्त्यादिमूलकत्वं स्मृतेर्वक्तव्यम्। न हि सर्वज्ञानां परित्यक्तारिषड्वर्गाणां योगसिद्धैश्वर्याणां मन्वादीनां भ्रान्तिर्लोभादिकं वा सम्भवति। अन्यथा मन्वादिसमानमहर्षिभिः तत्परिग्रहानुपपत्तेः। तस्माच्छाखान्तरीयविधिं दृष्ट्वैव सा स्मृतिः प्रणीतेति स्मृतिमूलश्रुतेरस्मदादिभिरदृष्टत्वेऽपि मन्वादिप्रत्यक्षत्वात् प्रामाण्योपपत्तिः। उक्तं हि वार्तिक एव 'आत्मीयात्परकीयस्य दौर्बल्यं न हि किञ्चन। प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि तत्॥' इति ॥

एवमविच्छिन्नशिष्टपरम्परयानुष्ठीयमानस्य वेष्टनस्य निरर्थकत्वस्य तद्बोधकस्मृतेरप्रामाण्यस्य तन्मूलभ्रान्त्यादेर्लोभादेश्च कल्पनामपेक्ष्य एकस्य सर्वशब्दस्य सङ्कोच एव युक्ततरः। तस्मान्नोक्तरीत्या नानुष्ठापकत्वलक्षणाप्रामाण्यमित्यतो वार्तिककारीयवर्णकान्तरं दर्शयति—**यद्वेति**। **क्षत्रियत्वेति**। वेददर्शनसम्भवार्थं क्षत्रियत्वकीर्तनम्। ततश्च मनोरिव तस्यापि प्रवचनकर्तृत्वोपपत्तेस्साऽपि वेदमूलकत्वात्प्रमाणमिति भावः ॥ **वेदमूलकत्वमिति** ॥ तद्ग्रन्थेऽप्यहिंसासत्यास्तेयशमदमदानसर्वभूतदयादिविधायकवाक्यदृष्टान्तेन चैत्यवन्दनादिविधीनां वेदमूलकत्वसम्भवादित्यर्थः। तन्मूलश्रुतिवाक्यादर्शने हेतुमाह—**तन्मूलेति** ॥ शाक्यादिग्रन्थमूलेत्यर्थः। **धर्मत्वेन परिग्रहस्य**—धर्मबोधकत्वेन परिग्रहस्य ॥ **पूर्वाधिकरणेति** ॥

प्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकारात् वेदमूलकत्वकल्पनानुपपत्तेरप्रामाण्यमिति सूत्रार्थः ॥ २ ॥

**(३)–शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात् ॥ ५ ॥**
**अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ६ ॥**

स्मार्तानामाचमनादीनां श्रौतैः क्रमकालपरिमाणादिभिर्विरोधे श्रौतत्वात् क्रमादी-

---

स्मृत्यधिकरणमुख्यहेतोरित्यर्थः । **अभावात्**—शाक्यादिग्रन्थेष्वभावात्, अप्रमाणत्वेन शिष्टानां स्मरणात् ॥ **वेदाप्रामाण्येति** ॥ 'वेदं नाधीयीत, वेदोऽप्रमाणम्' इति तदीयग्रन्थेष्वेव दर्शनेन वेदमूलकत्वासम्भवात् भ्रान्त्यादिमूलकत्वेनेति न शाक्यादिस्मृतीनां धर्मप्रमाणत्वमिति भावः । यत्तु शाक्यग्रन्थे तटाकारामदानशमदमादिप्रतिपादनेन वेदार्थ-प्रतिपादनाद्वेदमूलत्वमिति, तन्न; वेदे हि शान्त्यादीनामात्मज्ञानसाधनत्वं 'शान्तो दान्त उपर-तस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्'इत्यादिभिः प्रतिपादितम्। तच्च नित्यकर्मानुष्ठा-नेन फलत्यागपूर्वकेण भवति 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुतितः । तच्च वेदार्थानुष्ठातॄणामेव सम्भवति । शाक्यग्रन्थप्रतिपादित-दानादिकं तु न वैदिकयज्ञादिसहितमिति न वेदार्थत्वसम्भवः । प्रत्युत निरर्थकचैत्यवन्दना-दिसहितमिति न वेदमूलत्वसम्भावनापि। ततश्च 'न हिंस्यात्सर्वा भूतानि' इति वेदोक्तमेव अहिं-सादिकं फलायालम्, न तु 'अहिंसा परमो धर्मः' इति शाक्योक्तमिति न शाक्यग्रन्थानां धर्म-प्रामाण्यमिति वार्तिकन्यायसुधादिषु स्पष्टम्। अत्राप्यग्रे स्पष्टम्। सूत्रार्थस्तु **विरोधे**- प्रत्यक्षश्रु-तिविरोधे । **अनपेक्षं**–प्रमाणत्वेन असङ्ग्राह्यम् **स्यात्, असति हि** विरोधे, **अनुमानं**- श्रुत्यनु-मानम्। **हेतुदर्शनाच्च**—लोभादिहेतुदर्शनाच्च न श्रुत्यनुमानमिति। वार्तिकपक्षे **अनपेक्षं**- यावच्छ्रु-तिदर्शनमननुष्ठापकमिति । एवं वर्णकान्तरेऽपि योज्यम् ॥

**शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात्** ॥ प्रत्यक्षश्रुतिविरुद्धानामप्रामाण्ये पूर्वाधिकरणे सिद्धे विरोधः क्वास्ति क्व नेति विचारात्प्रसङ्गसङ्गतिः । ननु शाखान्तराधि-करणे स्वशाखोक्तक्रमकालादिविरोधे शाखान्तरीयाङ्गोपसंहारो न कार्य इति 'अपि वा क्रमसंयोगात्' इति सूत्रेणाशङ्क्य तेषां पदार्थत्वात्क्रमादिबाधकत्वं युक्तमिति 'विरोधिनान्तु' इति-सूत्रेण सिद्धान्तितमिति तेन गतार्थमेतदधिकरणमिति चेन्न; श्रौतपदार्थानां श्रौतक्रमाद्बलव-त्त्वेऽपि स्मार्तपदार्थानां श्रौतक्रमाद्दुर्बलत्वेन न तद्बाधकत्वमिति शङ्कापरिहारार्थत्वात् । अथवा अत्रत्यस्यैव प्रमेयबलाबलीयस्त्वस्य तत्र युक्त्यन्तरैः सह समुच्चित्य स्मारणात् न गतार्थतेति ध्येयम् ॥ **स्मार्तानामिति** ॥ स्मृत्या क्रत्वङ्गत्वेन विहितानामित्यर्थः ॥ **आचमनादीनामिति** आदिना दक्षिणकर्णस्पर्शशिखाबन्धनोपवीतदक्षिणहस्तादीनां सङ्ग्रहः । अत्र भोजनादिनि-

मित्तकाचमनादेः पुरुषार्थस्य व्यावृत्त्यर्थं क्रत्वङ्गेति विशेषणम्। अतश्च 'आचान्तेन कर्म कर्तव्यम्' इति स्मृतिरुदाहरणमिति प्राञ्चः । नव्यास्तु अत्रापि कर्मसामान्योद्देशेनादावाचमनविधानात्क्रत्वङ्गत्वेऽपि पदार्थानां मध्ये तदविधानेन विरोधाभावात् 'क्षुते आचामेत्' इत्यादिकमेवोदाहरणं, तस्य मध्येऽपि प्रसक्तेरित्याहुः । वस्तुतस्तु 'क्षुते निष्ठीवने चैव परिधानेऽश्रुपातने । न तु कर्मस्थ आचामेद्दक्षिणं श्रवणं स्पृशेत् ॥' इति वचनेन कर्ममध्ये आचमनपरिहारपूर्वकं दक्षिणकर्णस्पर्शो विहित इत्युदाहरणम् । इदमपि वितत्यैकपदार्थमध्यप्रसक्तक्षुतादावेव । पदार्थद्वयसन्धौ त्वाचमनमेव । तत्र वितत्या सह विरोधाद्विचारो युज्यते। शिखाबन्धनमुपवीतं च पुरुषार्थं क्रत्वर्थं च । 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च । विशिखो व्युपवीतं च यत्करोति न तत्कृतम् ॥' इति वचनेन तथात्वसिद्धेः । अत्रत्यमुपवीतमैष्टिकपाशुकेतरकर्मस्वेव। तेषु तु प्रकृतावेव 'उपव्ययते' इति विधानादिति केचित्। तदयुक्तम्। श्रौतोपवीतस्य 'अजिनं वासो वा दक्षिणत उपवीय' इति वाक्यशेषानुसारेण वासोविन्यासरूपत्वात् 'यज्ञोपवीतिना कर्तव्यम्' इति स्मार्तस्य ब्रह्मसूत्ररूपत्वेन अत्यन्तभेदात्। ततश्च ईदृशोपवीतस्य स्रंसनादौ स्मार्तप्रायश्चित्ताद्यनुष्ठाने श्रौतक्रमादिविरोधादुदाहरणत्वम्। 'दक्षिणाचारेण कर्तव्यम्' इत्यत्र लोहितोष्णीषादिव दक्षिणपाणेरेवाप्राप्तत्वेन भोजनादौ पुरुषार्थस्यापि तस्य सर्वकर्माङ्गत्वेन विधिः। 'सव्यैः पाणिभिस्तृणानि निरस्यन्ति' इति छन्दोगसूत्रं त्वेतस्यापवादः। दक्षिणहस्तानां बहिष्पवमानीयसर्पणान्वारम्भे व्यापृतत्वेनासम्भवादेव दक्षिणपाणिपरिहारेण सव्यहस्तप्राप्तेरनुवादमात्रं वा। अत एव तत्कालक्रियमाणप्रवृत्तहोमोऽपि सव्यपाणिनैवेति छन्दोगानुष्ठानं सङ्गच्छत इति केचित्। वस्तुतस्तु 'सव्यैः' इत्यादिसूत्रस्य सव्यपाणिविधायकत्वमेव। न चान्वारम्भान्यथानुपपत्त्या सव्यप्राप्तिः। हस्तद्वयेनैवान्वारभ्य सर्पणे क्रियमाणे तृणनिरसने सामान्यपरिभाषया दक्षिणहस्तप्राप्तौ तन्निरासाय विधित्वसम्भवात् । अत एव प्रवृत्तहोमोऽपि सव्येनान्वारम्भे स्थित एव दक्षिणपाणिनैव कर्तुं युक्तः । न च हस्तद्वयेनान्वारम्भे प्रयोजनाभावः । अपच्छेदे गुरुतरप्रायश्चित्तविधानेन तद्भियान्वारम्भदार्ढ्यार्थं हस्तद्वयान्वारम्भसम्भवात् । न च तथापि होमार्थमेकहस्तविच्छेदेऽप्यपच्छेदशङ्का स्यादिति वाच्यम्; अपच्छेदशब्दस्य संयोगनाशकविभागरूपगुणपरतया एकहस्तान्वारम्भसत्त्वे संयोगनाशाभावेन तदप्रसक्तेः । न चैवमपि तद्धस्तविभागोत्पत्त्या तद्दोषतादवस्थ्यमिति वाच्यम्; तद्धस्तविभागमात्रस्यापच्छेदशास्त्रार्थत्वाभावात्। 'अध्वर्युं प्रस्तोतान्वारभते' इत्यादिष्वध्वर्युप्रस्तोत्रादिशरीरसम्बन्धस्यैवान्वारम्भशब्दार्थतया तच्छरीरद्वयविभागस्यैवापच्छेदशब्दार्थतया च एकहस्तसंयोगसत्त्वे कारणाकारणसंयोगजन्यकार्याकार्यसंयोगरूपशरीरद्वयसंयोगात्मकान्वारम्भस्यैव सत्त्वेनापच्छेदाप्रसक्तेः। न हि कश्चिदपि एकहस्तान्वारम्भकाले शरीरद्वयं विभक्तमिति प्रत्येति। किन्तु हस्तौ विभक्त इत्येवेति हिरण्यकेशिसूत्रव्याख्याने प्रतिपादितमस्माभिः । ततश्च हस्तद्वयेनापि प्रयोगकरणे

नामेव प्राबल्यात् तद्विषयस्मृतीनामप्रामाण्यम्। न हि 'क्षुते आचामेत्' इति विहितस्य स्मार्ताचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने 'वेदं कृत्वा वेदिं करोति' इति श्रुतिविहितः क्रमः अनुष्ठातुं शक्यते। स्मार्तपदार्थानां च बहुत्वात् पूर्वाह्णादिकालः प्रयोगविध्यवगतं च परिमाणं न शक्यते अनुगृहीतुम्। न च श्रौतत्वेऽपि क्रमादेः पदार्थधर्मत्वात् पदार्थभूतेभ्य आचमनादिभ्यो दौर्बल्यम्। प्रमाणपूर्वकत्वात् प्रमेयावगमस्य प्रथमावगतप्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य दौर्बल्यादिति प्राप्ते—

पदार्थप्राप्त्यपेक्षत्वात् क्रमादेरौत्तरकालिकस्य यावत्प्रमाणगम्यपदार्थाविरोधेनैव कल्पनीयत्वात् न तावत्पदार्थविरोधित्वम्। परिमाणं तु न कस्यचिच्छास्त्रस्यार्थ इति न तस्य श्रौतत्वम्। विरोधेऽप्याचमनादीनां पदार्थत्वात् प्राबल्यमेव। प्रमाणानां हि

---

प्रयोगप्राशुभावसिद्धिः। दक्षिणहस्तमात्रेण तत्करणे तदसिद्धिरिति विरोधादुदाहरणत्वम्॥ क्रमेत्यादि॥ क्रमः—पौर्वापर्यादिः। कालः—प्राशुभावादिः, पूर्वाह्णादिश्च। परिमाणं-पदार्थेयत्ता। आदिना वैतत्यपरिग्रहः। अत्र उक्तस्मृतीनामप्रामाण्यं प्रामाण्यं वेति संशयः। तदर्थं चेदं चिन्तनीयं श्रुतिविरोधोऽस्ति वा न वेत्यभिसन्धाय पूर्वपक्षमुपपादयति—**विरोध इति**॥ **श्रौतत्वादिति**॥ स्मृत्यपेक्षया श्रुतेः प्रबलत्वेन तत्प्रतिपादितक्रमस्यापि प्रबलतया तद्विरोधात् दुर्बलस्मृतिप्राप्ताचमनादिपदार्थबाधे तद्बोधकस्मृतीनामप्रामाण्यमित्यर्थः। विरोधमेवोपपादयति—**न हीति**॥ सङ्कल्पात्पूर्वं क्रियमाणमाचमनं नोदाहरणमिति दर्शयितुं प्रयोगमध्यप्रसक्तमाचमनमुदाहरति—**क्षुते आचामेदिति**। अनेन वचनेन विहितस्याचमनस्य क्षुतनिमित्तकाशुचित्वपरिहाराय मध्येऽनुष्ठाने 'वेदं कृत्वा वेदिं करोति' इति श्रुतिस्थक्त्वाप्रत्ययोक्तवेदकरणानन्तर्यरूपक्रमबाधस्स्यादित्यर्थः। **वेदो**—दर्भमुष्टिविशेषः। **वेदिः**—हविरासादनार्था। वैदिककालादिविरोधमुपपादयति—**स्मार्तेति**॥ प्रयोगविधिप्राप्तानां पदार्थानामनुष्ठाने मध्ये नैमित्तिकानेकाचमनादिपदार्थानुष्ठाने पूर्वाह्णादिकालविरोधः प्रयोगविध्यवगतपदार्थेयत्ताबाधश्च स्यादित्यर्थः॥ **पूर्वाह्णादीति**॥ आदिना प्रधानप्रत्यासत्त्यादेः परिग्रहः। श्रुतेः स्मृत्यपेक्षया प्राबल्याच्छ्रुत्युक्तक्रमस्य दुर्बलस्मृतिप्राप्ताचमनाद्यपेक्षया प्राबल्येऽपि क्रमादेः पदार्थधर्मत्वेन पदार्थरूपाचमनाद्यपेक्षया दौर्बल्यमेव युक्तम्। 'धर्मधर्मिविरोधे तु धर्मिणो बलवत्तराः' इति न्यायादित्याशङ्कते—**न चेति**॥ प्रमाणपूर्वकत्वात्प्रमेयावगमस्य प्रथमप्रवृत्तप्रबलप्रमाणेन क्रमस्यापि प्रथमप्रतीत्या तत्प्राबल्यस्य निश्चितत्वात् दुर्बलप्रमाणप्राप्तपदार्थानां बाधो युक्त इति परिहरति—**प्रमाणेति**॥ सिद्धान्तमाह—**पदार्थेति**॥ **औत्तरकालिकस्येति**॥ क्रमो ह्यानन्तर्यादिरूपः। स चैकपदार्थानुष्ठानोत्तरमपरपदार्थानुष्ठानेन भवतीति पदार्थप्राप्त्युत्तरमेवानुष्ठानाय क्रमापेक्षायां क्रमबोधकशास्त्राणां प्रवृत्त्या न विरोध इत्यभिप्रायः॥ **यावत्प्रमाणेति**॥ अनेन प्रबलदुर्बलप्रमाणकसर्वपदार्थप्राप्त्युत्तरमेव क्रमकल्पनेति दर्शितम्। क्रमस्य पदार्थधर्मत्वमुपपा

न स्वरूपतो विरोधः । अपि तु प्रमेयविरोधनिबन्धनः । तद्यदैव प्रमेयविरोध आलोच्यते तदैव तद्गतेन बलाबलेन निर्णीते शास्त्रार्थे न प्रमाणबलाबलस्य नियामकत्वमिति प्रमाणमेव [1]स्मृतिः ॥

यद्वा—यच्छाक्यग्रन्थेषु वेदाविरुद्धं दानादिवचनं तस्य भवतु प्रामाण्यमिति प्राप्ते—'स्वाध्यायोऽध्येतव्यः'[2] 'वेदोऽखिलो धर्ममूलम् । तद्विदां च स्मृतिशीले'[3]

---

परिमाणविरोधं परिहरति—**परिमाणन्त्विति** ॥ **तस्य**—परिमाणस्य ॥ **न श्रौतत्वमिति** ॥ परिमाणविधायकशास्त्रादर्शनादित्यभिमानः । ननु बहूनां पदार्थानामेकेन कर्त्रा युगपदनुष्ठानासम्भवात् क्रमापेक्षायां तत्तदानन्तर्यबोधकवाक्यैः अर्थात् पाठादेश्च क्रमोऽवगन्तव्य इति पञ्चमे वक्ष्यते । एवं पदार्थप्राप्त्यनन्तरं तत्परिमाणमपि ज्ञात्वैवानुष्ठाने प्रवृत्तिः । अन्यथा कृताकृतसन्देहेन यथोक्तानुष्ठानसन्देहात् फलसन्देहेऽनुष्ठानमेव न स्यात् । अत्र परिमाणे लिङ्गदर्शनमपि भवति । 'एकशतं प्रयाजानूयाजाः' 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते' 'त्रयोदशामावास्यायां' 'षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनम्' इत्यादि । तथा च प्रयोगविधिना तत्तन्निमित्तशास्त्रैकवाक्यतया नित्यनैमित्तिकपदार्थप्राप्त्यनन्तरमेव प्रयोगकल्पनेन क्रमस्येव परिमाणस्यापि शास्त्रार्थत्वात् तस्याशास्त्रार्थत्वोक्तिरसङ्गता । किञ्च कल्प्यप्रयोगविधिगम्यक्रमस्याविरोधेऽपि 'वेदं कृत्वा वेदिं' इति क्त्वाप्रत्ययोक्तक्रमविरोधो दुरुद्धर एवेत्यस्वरसादाह—**विरोधेऽपीति** ॥ पदार्थप्राबल्यमुपपादयति—**प्रमाणानां हीति** ॥ स्वरूपतो हि विरोधः परस्पराभावरूपतया, परस्पराभावव्याप्यतया वा स्यात् । न च प्रकृते तादृशविरोधोऽस्ति । तेन पदार्थानुष्ठानद्वारक एव विरोधो वाच्यः । स च पदार्थप्राप्त्यनन्तरं सम्भवतीति पदार्थप्राप्तिकाल एव पदार्थप्राबल्येन शास्त्रार्थस्य निर्णीतत्वान्न श्रौतक्रमादीनां पदार्थगुणज्ञातानां प्राबल्यमिति तेषां बाध एवेत्याशयः । ननु श्रुत्यर्थक्रमस्य बाधाङ्गीकारे श्रुतिरपि स्मृत्या बाधिता स्यात् । न चेदं युक्तम् । किञ्च 'अग्निं चित्वा सौत्रामण्या यजेत' इत्यादाविव व्यवहितोत्तरकालमादायापि क्त्वाप्रत्ययोपपत्तेर्न बाधो युक्तः । एवं परिमाणेऽपि लिङ्गदर्शनस्य सर्वप्रयोगसाधारणनित्यपदार्थविषयतयाप्युपपत्तेर्न तद्बाधोऽपि युक्तः ॥

एवं कालस्यापीत्यस्वरसाद्वार्तिककारीयवर्णकान्तरमाह—**यद्वेति** ॥ शाक्यादिग्रन्थेषु वेदविरुद्धांशस्याप्रामाण्येऽपि वेदाविरुद्धानामहिंसादिवचनानां प्रामाण्यमस्त्वित्याशङ्कापरिहारार्थमिदं सूत्रमित्याशयेनाह—**शाक्यग्रन्थेष्विति** ॥ सिद्धान्तमाह—**स्वाध्यायेति** ॥ अधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेदिति वाक्यार्थस्य पूर्वमुक्तत्वेन फलवदर्थस्य धर्मत्वात् । **वेदो, धर्ममूलं**-धर्मप्रमाणमित्यर्थः । **तद्विदां**—वेदविदाम् । **शीलं**-सदाचारः ।

---

१. तस्मृतिः इति पाठान्तरम् । २. तै. आ. २-१५. ३. गौतमधर्मसूत्रम्. १.

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'[1]

इत्यादिवचनैर्नियतप्रमाणप्रतिपाद्यानामेव धर्मत्वप्रतीतेः अन्यतः प्रमितस्य फलसाधनत्वाभावात् तेषामप्रामाण्यमिति ॥

---

**पुराणं**-प्रसिद्धम्। **न्यायो**-न्यायशास्त्रम्। तेन यागादेरपूर्वद्वारा स्वर्गादिसाधनत्वसाधनात्। **मीमांसा**--पूर्वोत्तरमीमांसाद्वयम् । उत्तरमीमांसायां देहादिव्यतिरिक्तयागादिकर्त्रात्मप्रतिपादनात् । **धर्मशास्त्राणि**--मन्वादिप्रणीतानि । **अङ्गानि**-शिक्षाव्याकरणादीनि । एतैस्सहिता वेदा धर्मे प्रमाणमित्यर्थः ॥ **नियतप्रमाणप्रतिपाद्यानामेवेति** ॥ अत एव 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण चोदनाबोधितश्रेयस्साधनताकत्वं धर्मत्वमिति भाष्ये स्पष्टम् । तत्रत्यचोदनाशब्दस्य चोदनामूलकस्मृतिपुराणाचारादिपरत्वान्न विरोधः । न च वेदोक्ताहिंसादेरेव शाक्यग्रन्थेऽपि प्रतिपादनात् तदंशे धर्मत्वं युक्तमिति वाच्यम्; तत्रत्याहिंसाशब्दस्य वेदस्थाहिंसाशब्दार्थभिन्नार्थकत्वात् । तथाहि-वेदे हि 'न हिंस्यात्सर्वा भूतानि' इति श्रूयते । सर्वाणि भूतानीत्यर्थः । छान्दसो लुक् । ततश्च तत्र हिंसाशब्दस्याग्नीषोमीयादिवेदविहितहिंसातिरिक्तहिंसापरतया सैव निषिध्यते । तथा च विहितातिरिक्तरागादिप्राप्तहिंसात्वं वेदस्थले निषेध्यतावच्छेदकम् । शाक्यादिग्रन्थस्थस्य 'अहिंसा परमो धर्मः' इति वाक्यस्थाहिंसापदस्य वैदिकावैदिकसाधारण्येन हिंसामात्रपरतया केवलहिंसात्वमेव तत्र निषेध्यतावच्छेदकमिति वाक्यार्थभेदेन वेदार्थविरुद्धार्थप्रतिपादकशाक्यादिग्रन्थस्य न प्रामाण्यमिति वार्तिककाराशय इत्यभिप्रायात् । ततश्च वेदादिनियतप्रमाणप्रतिपाद्यस्यैव फलसाधनत्वेन धर्मत्वात्तेषामेव धर्मप्रमाणत्वम् । शाक्यादिग्रन्थस्य च भ्रान्तिमूलकत्वेन नियतप्रमाणानन्तर्भावात्तत्प्रतिपाद्यस्य फलसाधनत्वाभावेन धर्मत्वासम्भवान्न शाक्यादिग्रन्थानां धर्मप्रामाण्यमित्युपसंहरति---**अन्यतः प्रमितस्येति** ॥ प्रयोजनं पूर्वपक्षे वेदकरणोत्तरं क्षुतनिमित्तकाशुचित्वप्राप्तौ नाचमनानुष्ठानम्। सिद्धान्ते तु आचमनं कृत्वैव वेदिकरणमिति द्रष्टव्यम् । सूत्रार्थस्तु, **शिष्टस्य**--श्रुतिविहितस्य। **अकोपे** -स्मार्तपदार्थैरनुष्ठीयमानैरबाधे सति । **अविरुद्धम्**---आचमनादिकं कार्यमिति सिद्धान्तेनोपक्रमः । एवं सिद्धान्ती मन्यते चेत्, तन्न; कुतः? **शास्त्रपरिमाणत्वात्** । परिमीयते इति परिमाणम् । कर्मणि ल्युट् । श्रुत्यवगतत्वादित्यर्थः । तथा च श्रुतेः प्राबल्यात्स्मृत्युक्तं नानुष्ठेयमिति । वार्तिकरीत्या तु **शिष्टानाम्**--अहिंसादिविधीनाम् । **अकोपे**--बाधाभावे सति, शाक्यवाक्यम् । **अविरुद्धं**---प्रमाणमिति चेन्न; **शास्त्राणां**---प्रमाणानाम् । **परिमाणत्वात्**--परिमितत्वात् । पुराणादिभिरेव धर्मः प्रमितव्य इति नियमनादिति ॥

---

१. याज्ञवल्क्यस्मृतिः. १. ३.

अनिबद्धानां वसन्तोत्सवाद्याचाराणां प्रामाण्यमप्रामाण्यं वेति सन्देहे एतेषां वेदमूलकत्वे अष्टकादिवत् मन्वादिभिर्निबन्धनापत्तेः सामान्यतः 'तद्विदां च स्मृतिशीले' इत्यादिना निबन्धनेऽपि विशेषतोऽनिबन्धनेन तेषां श्रुतिदर्शनाभावादप्रामाण्यमिति प्राप्ते—

धर्मबुद्धया वैदिकैरनुष्ठीयमानत्वात् स्मृतिवदेव वैदिकत्वम् । विशेषतोऽनिबन्धनं तु गौरवभीत्या न दोष इति । व्यतिक्रमसाहसदर्शनं तु धर्मबुद्धया वैदिकैरननुष्ठी-

---

अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ शाक्यादिग्रन्थानामप्रामाण्ये तद्वदेवाचाराणामपि अप्रामाण्यं स्यादिति उत्थानात्सङ्गतिरित्यभिप्रेत्याह—**अनिबद्धानामिति** ॥ प्रातिस्विकरूपेणाविहितानामित्यर्थः । अनेनाष्टकादिव्यावृत्तिः ॥ **वसन्तोत्सवादीति** ॥ वसन्तपञ्चम्यामौत्तरैः क्रियमाणोत्सवविशेषः वसन्तोत्सव इति केचित् । फाल्गुनकृष्णप्रतिपदि क्रियमाणपरस्परजलसेको वसन्तोत्सव इत्यन्ये । आदिना कार्तिकशुक्लप्रतिपदि क्रियमाणदीपोत्सवादेः ग्रहणम् । आदिशब्देनात्मतुष्टेः परिग्रह इति केचित् । तन्न; तस्याचाररूपत्वाभावेनाचारपदानन्वयप्रसङ्गात् । 'भोजनं विना जलं न पिबामि' इत्यादिरूपश्रुतिस्मृत्यविरुद्धसङ्कल्प आत्मतुष्टिशब्दार्थः ॥ **आचाराणामिति** ॥ सदाचाराणामित्यर्थः। अनेन शाक्याद्याचारव्यावृत्तिः ॥ **प्रामाण्यमप्रामाण्यं वेति** ॥ धर्माधर्मयोरिति शेषः । ननु आचाराणां वेदमूलकत्वेनाष्टकादिस्मृतिवत्प्रामाण्यं स्यादित्यत आह-**निबन्धनापत्तेरिति** ॥ ततश्च निबन्धनाभावान्न वेदमूलकत्वम्, किन्तु भ्रान्त्यादिमूलकत्वमेवेति अप्रामाण्यमेव तेषामित्यर्थः । ननु प्रातिस्विकरूपेण निबन्धनाभावेऽपि 'तद्विदां च स्मृतिशीले' इति सामान्यतो निबन्धनाद्वेदविदनुष्ठितत्वेन रूपेण स्मृतिप्रतिपाद्यत्वाद्वेदमूलत्वं सम्भवतीत्यत आह—**सामान्यत इति** ॥ आदिना 'आचारश्चैव साधूनाम्' इत्यादेर्ग्रहणम् । तदनुष्ठितत्वमात्रेण वेदमूलत्वे भोजननिद्रादीनामपि वेदमूलत्वापत्त्या सामान्यतो निबन्धनं न वेदमूलत्वनिश्चायकमिति भावः । न च तद्वचनं व्यर्थं स्यादिति वाच्यम्; श्रुतिस्मृत्युक्तानुष्ठानानुवादकत्वादनुवादस्य प्रामाण्यदार्ढ्यार्थकत्वात् । ततश्चाचारस्य वेदमूलत्वनिश्चयाभावादप्रामाण्यमित्यर्थः । आचाराणां प्रत्यक्षेण वेदमूलत्वनिश्चयाभावेऽपि अनुमानमेव तेषां वैदिकत्वे प्रमाणमिति सिद्धान्तमाह—**धर्मबुध्येति** ॥ वसन्तोत्सवाद्याचारा वेदमूलकाः धर्मबुद्धया वैदिकैरनुष्ठीयमानत्वात् अष्टकादिवत् इत्यनुमानेन तेषां वेदमूलत्वसिद्धिरित्यर्थः । **स्मृतिवदेव**—स्मृत्युक्ताष्टकादिवदेव । विशेषतो निबन्धनाभावान्न वेदमूलकत्वमिति पूर्वपक्षोक्तं निरस्यति—**विशेषत इति** ॥ **गौरवभीत्या**—ग्रन्थगौरवभिया । **न दोषः**—न वेदमूलकत्वाभावनिश्चायकः । अयमाशयः । देशभेदेन कुलभेदेन ग्रामजनपदादिभेदेनाचाराणां बहुविधत्वात् तेषां सर्वज्ञमन्वादिवेद्यत्वेऽपि प्रातिस्विकरूपेण निबन्धे ग्रन्थगौरवं स्यात् । अतो नानिबन्धनकृतमवैदिकत्वमित्यर्थः । तदाह आश्वलायनः, 'अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च, तान् विवाहे प्रतीयात्, यत्तु समानं तद्वक्ष्यामः' इति । अत्र जनपदग्रामधर्माणां

यमानत्वान्न वैदिकम् । न चैतावता सर्वस्याप्यवैदिकत्वम् । अत आचाराणामपि धर्माधर्मयोः प्रामाण्यमिति ॥ ३ ॥

(४)—तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात् ॥ ७ ॥

शास्त्रस्था वा तन्निमित्तत्वात् ॥ ८ ॥

शब्दप्रयोगरूपाचारस्य यत्रार्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः यथा पीलुशब्दस्य वृक्षविशेषे आर्याणां अन्येषां हस्तिनि तत्र तुल्यबलत्वम्, व्यवहारे आर्याणामिव म्लेच्छानामप्यभियुक्तत्वाविशेषात् । अवध्यस्मरणस्योभयत्रापि समानत्वादिति

---

तत्तद्देशीयजनैरेव व्यवस्थयानुष्ठेयानामनेकत्वात् ते धर्मा आचारादेवावगन्तव्या इत्यभिप्रायेण तानपेक्ष्यैव सर्वदेशीयजनानुष्ठेयमेव विहितवान् भगवानाचार्यः । धर्मबुद्ध्या वैदिकैरनुष्ठीयमानत्वाभावान्न भोजनादौ पूर्वोक्तदोष इति भावः । धर्मबुद्ध्येत्यस्य प्रयोजनमाह—**व्यतिक्रमेति** ॥ तदनुपादाने वसिष्ठस्य पुत्रशोकनिमित्तभृगुपतनेन प्राणत्यागोद्योगस्य, विश्वामित्रस्य चण्डालयाजनादेश्च वेदमूलकत्वं स्यात् । धर्मबुद्ध्येत्यस्य हेतौ प्रवेशे तु व्यतिक्रमादीनां रागद्वेषशोकादिमूलकप्रवृत्तिविषयत्वेन धर्मबुद्ध्यानुष्ठीयमानत्वाभावान्न व्यभिचार इत्यर्थः । **व्यतिक्रमः**—धर्मविरुद्धानुष्ठानम् । **साहसं**—दुष्करानुष्ठानम् । उपसंहरति—**अत इति** ॥ प्रयोजनं स्पष्टम् । सूत्रार्थस्तु, **अपि वेति** पक्षव्यावृत्तौ । **कारणस्य**—कामक्रोधादिरूपस्य । **अग्रहणे**—अभावनिश्चये सति । **प्रयुक्तानि**—निबन्धनमन्तरेणानुष्ठितान्यपि । **प्रतीयेरन्**—धर्मं प्रत्याययेयुरिति ॥

**तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात्** ॥ पूर्वाधिकरणेन प्रासङ्गिकीं सङ्गतिं सूचयन्नाह—**शब्दप्रयोगरूपाचारस्येति** ॥ **आर्यम्लेच्छयोरिति** ॥ वैदिकभाषैकनिरता अर्यावर्तनिवासिनस्त्रैवर्णिका **आर्याः**। कुमारिकाखण्डबहिर्वासिनोऽपभ्रंशभाषाप्रवीणा **म्लेच्छाः** । 'म्लेच्छ अव्यक्ते शब्दे' इति धातुपाठे अव्यक्तशब्दस्यापभ्रंशपरत्वात् । पीलुशब्दमुपलक्षणम् । देहशब्दस्य आर्याणां शरीरे प्रयोगः; ग्रामे म्लेच्छानामित्यपि द्रष्टव्यम् । एतेन पीलुशब्दस्यार्याणामेव 'पीलुर्गजे द्रुमे काण्डे परमाणुप्रसूनयोः' इति कोशादावुभयत्र प्रयोगेऽपि नं क्षतिरिति ध्येयम् । यस्मिन् शब्दे आर्यम्लेच्छयोरर्थविप्रतिपत्तिः तत्र प्रयोगानुसारेणोभावप्यर्थौ ग्राह्यौ, उत आर्यप्रसिद्धार्थो ग्राह्य इति संशये पूर्वपक्षमाह—**तत्रेत्यादिना** ॥ **तुल्यबलत्वमिति** ॥ आर्यम्लेच्छप्रयोगयोस्तुल्यबलत्वमेव । अर्थप्रत्यायनार्थशब्दप्रयोगे उभयोरपि समानत्वेन उभयत्र शक्तेर्युक्तत्वात् । ततश्चोभावप्यर्थौ ग्राह्यावित्यर्थः । ननु आर्येषु प्रयोगस्यानादितया म्लेच्छेष्विदानींतनैः कल्पिततया आर्यप्रसिद्धार्थ एव शक्तिरिति स एव ग्राह्यः न तु म्लेच्छप्रसिद्ध इत्यत आह—**अवध्यस्मरणस्येति** ॥ किञ्चित्पुरुषप्रभृत्ये-

**प्राप्ते—अभिधीयते—शक्यतावच्छेदकभेदेनानेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिः नोभयत्र। न च विनिगमनाविरहः; आर्यप्रसिद्धेरेव नियामकत्वात्। आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति न म्लेच्छाः। दृष्टार्थव्यवहारस्य यथाकथञ्चिदपि सिद्धेः। अतस्तत्प्रसिद्ध्या वृक्षविशेष एव शक्तिः। गजप्रतीतिस्तु लक्षणया शक्तिभ्रमाद्वा यत्र तु नियामकाभावः तत्रागत्या अक्षादिशब्देषु उभयत्रापि शक्तिः, आर्याणामेवोभयत्रापि प्रयोगात्। तत्रापि [१]क्वचिद्वाक्यशेषस्य नियामकता। 'यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवो-**

---

तत्प्रयोग इति प्रयोगावधिपुरुषाप्रतीतेरित्यर्थः। तदुक्तं हरिणा—'अनिदंप्रथमाश्शब्दाः साधवः परिकीर्तिताः' इति। ततश्च ईदृशावध्यस्मरणस्य म्लेच्छेष्वप्यविशेषेण तत्प्रयोगस्याप्यनादित्वात्समबलत्वमिति भावः। सिद्धान्तमाह—**शक्यतेति**॥ अर्थद्वये शक्त्यङ्गीकारे शक्यतावच्छेदकत्वस्य अनेकधर्मेषु कल्पनीयतया गौरवं स्यात्। तत्तच्छक्तिज्ञानस्य शाब्दबुद्धिप्रयोजकत्वकल्पनादपि गौरवम्। तथा 'अन्याय्यश्चानेकार्थत्वम्' इति न्यायविरोधश्च स्यादित्यर्थः। विकल्पश्चाष्टदोषदुष्ट इति भावः। ननु एकत्रैव यदि शक्तिः तदा म्लेच्छप्रसिद्धार्थे शक्तिर्वा, आर्यप्रसिद्धार्थे वेति विनिगनाविरह इत्याशङ्क्य निराकरोति—**न चेति**॥ आर्यप्रसिद्धेराधिक्यमुपपादयति—**आर्या हीति**॥ तेषां धर्मलोपभीरुत्वाच्छब्दार्थतत्त्वं सम्यग्विविच्य शब्दान् प्रयुञ्जते। म्लेच्छानां शब्दप्रयोगस्यार्थज्ञानैकप्रयोजनत्वात् धर्मविप्लुतिभयाभावात्स्वेच्छया शब्दप्रयोगं कुर्वन्तीत्यर्थः। **तत्प्रसिद्ध्या**—आर्यप्रसिद्ध्या॥ **वृक्षविशेष एव शक्तिरिति**॥ ततश्च स एवार्थो ग्राह्य इति भावः॥ **लक्षणयेति**॥ ननु लक्षणाङ्गीकारे आर्याणामपि क्वचिद्गङ्गादिपादानां लाक्षणिकप्रयोगदर्शनेन समबलत्वं स्यादित्यत आह—**शक्तिभ्रमाद्वेति**॥ ननु एवं सति अक्षादिशब्दानां नानार्थकत्वं न स्यादित्यत आह—**यत्र त्विति**॥ 'अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः' इत्यादिरीत्या अनेकार्थेषु आर्याणामेव प्रयोगाद्विनिगमनाविरहादनेकशक्तिकल्पनमावश्यकमित्यर्थः॥ **अक्षादीति**॥ आदिना हर्यादिपरिग्रहः। अत्र भाष्ये 'यवमयश्चरुर्भवति' इत्यादौ यवशब्देन दीर्घशूकविशेषाणां वा ग्रहणं, प्रियङ्गूणां वेति सन्देहे वाक्यशेषान्निर्णय इति सिद्धान्तितं तदक्ताधिकरणेन गतार्थमिति ध्वनयन्नाह—**तत्रापीत्यादिना**॥ आर्यप्रयोगेत्यर्थः। **क्वचित्**—यवशब्दादौ। **नियामकता**—शक्तिव्यवस्थापकता। वाक्यशेषं दर्शयति—**यत्रान्या इति**॥ वसन्ते अन्या ग्लानिं प्राप्नुवन्ति एते यवा मोदन्त इवेत्यर्थः। इदमुपलक्षणम्। 'वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥' इत्यपि बोध्यम्। ततश्च वसन्ते दीर्घशूकानामेव मोदमानत्वा-

---

१. कदाचिदिति पठान्तरम्।

त्तिष्ठन्ति' इत्यनेनैव यवशब्दस्य दीर्घशूकविशिष्टे शक्तिः, प्रियङ्गुषु तु लक्षणया प्रयोगः ॥

एवं वा—यत्र मातुलकन्यापरिणयनादौ स्मृत्याचारयोर्विरोधः तत्रोभयोरपि श्रुतिकल्पकत्वात् तुल्यबलत्वमिति प्राप्ते—स्मृतीनां सप्रत्ययप्रणीतत्वात् स्मृतिषु कर्तव्यता-

---

त्तत्रैव शक्तिरित्यर्थः । ननु प्रियङ्गौ कथमार्याणां प्रयोग इत्यत आह—**प्रियङ्गुष्विति** ॥ वार्तिके तु गोधूमानामपि वसन्ते मोदमानत्वाविशेषत्वात् प्रियङ्गौ केषामपि यवपदप्रयोगाभावाच्च सन्देहस्यैवाभावान्नैतद्युक्तमित्युक्तम् । अत्र केचित् 'पैलवौदुम्बरौ दण्डौ वैश्यस्य' इति स्मृतौ पैलवपदेन गजदन्तमयो दण्डः पूर्वपक्षे, सिद्धान्ते तु वार्क्ष इति प्रयोजनमाहुः, तच्चिन्त्यम्; पालाशाश्वत्थादिप्रायपाठवशेनैव औदुम्बरपदस्य ताम्रमयत्वनिरासपूर्वकं वार्क्षार्थकत्वस्य निर्णेतव्यतया तेनैव पैलवपदस्यापि वार्क्षार्थकत्वसिद्धेः । वस्तुतस्तु पीलुशब्दस्य पूर्वोक्तरीत्या उदाहरणत्वासम्भवात् देहशब्दादिकमेव उदाहरणमिति तत्रैव प्रयोजनं वक्तव्यम् । तद्यथा देहशब्दस्य ग्रामे प्रयोगकरणे पूर्वपक्षे न सारस्वतीष्टिः, सिद्धान्ते तु सेति द्रष्टव्यम् । सूत्रार्थस्तु, ये शब्दा आर्यैरेकस्मिन्नर्थे प्रयुक्ताः तेषु, **विप्रतिपत्तिः**—अर्थाभिधायिता । **समा**—तुल्यबला । **स्यात्**, **विरोधस्य अदर्शनादिति** ॥

'स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये । समा विप्रतिपत्तिस्स्यान्मूलसाम्यात् द्वयोरपि ॥' इति वार्तिकेन प्रपञ्चितं वर्णकान्तरं दर्शयति—**एवं वेति** ॥ **मातुलकन्येति** ॥ पैतृष्वस्रया अप्युपलक्षणम् । सोऽयमाचारः आन्ध्र-कर्णाटक-महाराष्ट्रदेशीयशिष्टपरिगृहीतोऽपि स्मृतिविरुद्धः। 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥' इति शातातपस्मृतेः, 'पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च । मातुश्च भ्रातुराप्तस्य गत्वा चान्द्रायणं चरेत् ॥' इति मनूक्तेश्च । आदिना पर्युषितभोजन-अनुपनीतसहभोजनादिसङ्ग्रहः। अत्र स्मृत्याचारयोः श्रुतिकल्पकत्वाविशेषात् तुल्यबलत्वमिति पूर्वपक्षमाह—**उभयोरपीति** ॥ अत्रेदमनुमानं भवति । मातुलकन्यापरिणयः श्रुतिविहितः शिष्टत्रैवर्णिकाचारपरम्पराप्राप्तत्वात् वसन्तोत्सवादिवदिति । न चोक्तपरिणयः श्रुतिविहितो न भवति स्मृतिनिषिद्धत्वात् कलञ्जभक्षणादिवत् इति सत्प्रतिपक्ष इति वाच्यम्; षोडशिग्रहणादौ विहितत्वनिषिद्धत्वयोर्दर्शनेना प्रयोजकत्वात् । तत्र प्रयोगभेदेनेवात्रापि पूर्वोक्तशिष्टव्यतिरिक्ताशिष्टविषयत्वेन निषिद्धस्मृतेरुक्तशिष्टविषयत्वेनाचारस्य च प्रामाण्योपपत्तेः। अत एव एकस्यैव धर्मत्वमधर्मत्वं च कथमुपपद्यते वस्तुनि विकल्पासम्भवादिति निरस्तम् । देशभेदेन परिणयव्यक्तीनामनेकत्वेन व्यक्तिभेदेन तयोस्सम्भवात् । 'विन्ध्यस्य दक्षिणे देशे मांसभुक् पतितो भवेत् । विन्ध्यस्योत्तरदेशे तु मांसभुङ्नैव दुष्यति ॥' इति वचनेन व्यवस्थापि न, मांसभक्षणे तथाऽदर्शनात् । ततश्चोभयोरपि प्रामाण्यमित्याशयेनाह—**तुल्यबलत्वमिति** ॥ **सप्रत्ययाः**—विश्वासविषयाः । तैः **प्रणीतत्वात्**—उक्तत्वाद्बलीयस्त्वमित्यन्वयः । ननु आचारेऽपि सप्रत्ययप्रणीतत्वमस्तीति कथं स्मृतेर्बलवत्त्वमित्यत

**वाचिविधिप्रत्ययश्रवणाच्च बलीयस्त्वम् । आचारेषु तु आचरितॄणां जनानां मन्वाद्यपेक्षया तथा प्रत्ययितृतरत्वाभावात् इतस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्यवगमस्याशक्यत्वात् परकीयाचारमात्रदर्शनेन कर्तव्यतावाचिविधिप्रत्ययस्यावश्यकल्पनीयत्वाच्च दौर्बल्यम् । अत एवेदानींतनाचारदर्शनेन श्रुतिद्रष्टुः स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा श्रुतिकल्पनं; स्मृतीनां तु साक्षादेवेति विशेषः । अतश्च स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शनं स्मृतिदर्शनं वा अननुष्ठानम् ॥**

---

आह—**कर्तव्यतावाचीति** ॥ स्मृतिषु प्रवर्तनावाचकलिङादिश्रवणेन झटिति कर्तव्यताबोधाद्बलवत्त्वमित्यर्थः । आचारेषु दुर्बलत्वमुपपादयति—**आचारेष्विति** ॥ आचरितॄणां प्रत्ययविषयत्वेऽपि मन्वादिवत्प्रत्ययिततरत्वाभावाद्दौर्बल्यमित्यन्वयः । तदेवोपपादयति—**इतस्तत इति** ॥ **अशक्यत्वादिति** ॥ ततश्चाचरितॄणां न प्रत्ययिततरत्वमिति भावः ॥ ननु कल्पादावाचरितुस्सर्वज्ञत्वसम्भवेन परप्रकरणादिगतश्रुत्यवगमस्सम्भवतीत्यत आह—**परकीयेति** ॥ शिष्टाचारमात्रस्य प्रत्यक्षत्वेन तस्य क्रियारूपतया कर्तव्यताबोधानुदयात्तदर्थं कर्तव्यतावाचिलिङादेः कल्पनीयतया दौर्बल्यमित्यर्थः । आचारेषु व्यतिक्रमादिदर्शनेन विहितत्वानुमापकहेतोः सन्दिग्धव्यभिचारकत्वेन न निर्दोषस्मृतिसाम्यं युज्यत इत्याशयः । आचारस्य दौर्बल्यं साधयितुं आचारेण श्रुतिकल्पनप्रकारमाह—**अत एवेति** ॥ आचारं दृष्ट्वा श्रुतिं साक्षात्पश्यतः स्मृतिप्रणेतुः स्मृतिः स्मृत्युपदेशो वास्तीति कल्पयित्वा कल्पितया स्मृत्या श्रुतिः कल्पनीयेति द्व्यन्तरितप्रामाण्यादाचारो दुर्बलः । स्मृतीनां साक्षादेव श्रुतिकल्पकत्वमित्येकान्तरितप्रामाण्यात् प्राबल्यमित्यर्थः । प्रयोजनं दर्शयन्नुपसंहरति—**अत इति** ॥ अत्र राणककारादयः, मातुलकन्यापरिणयोऽत्र नोदाहरणं प्रत्यक्षश्रुतिविरोधेन स्मृतिमूलश्रुतेर्दौर्बल्यात्। वक्ष्यति हि बलाबलाधिकरणे वार्तिककारः।भवति च प्रत्यक्षश्रुतिविरुद्धा मातुलकन्यापरिणयनिषेधस्मृतिः। दृश्यते च 'गर्भे नु नौ जनिता दाम्पतीकः' इति यमं प्रति यमुनावाक्यमिदम् । आवयोर्गर्भे जातौ स्त्रीपुंसौ दम्पती भवतः इति ब्रह्मा विधास्यतीति । तथा 'आयाहीन्द्र पथिभिरीळितेभिः' इत्यपि प्रत्यक्षश्रुतिर्भवति । तत्र च 'तृप्तां जहुर्मातुलस्येव योषा भागः ते पैतृष्वस्रेयीवपामिव' इति पठ्यते । तच्च इन्द्रं प्रति वपायागकर्तृवाक्यम् । जहुरित्यपत्यवाचकम् । यथा मातुलस्य स्त्र्यपत्यं यथा तद्भागिनेयस्य भागरूपा योषा पैतृष्वस्रेयी च । तद्भ्रातृजस्य भागः योषा तथा वपापि तव भाग इति तां त्वं जुषस्वेति । भागात्मकयोषा च पत्न्येव । श्रूयते हि 'अर्धो वा एष आत्मनो यत्पत्नी' इति । किञ्च 'तृतीये सङ्गच्छावहै' 'चतुर्थे सङ्गच्छावहै' इति च श्रूयते । एकस्मादेव पुरुषाज्जायमानौ तृतीयौ वा चतुर्थौ वा स्त्रीपुंसौ भोग्यभोक्ताराविति । एवं बहुभिर्मन्त्रार्थवादैः भ्रात्रोः पुत्रयोर्नित्यवदनूद्यमानं दाम्पत्यं वैधप्राप्तिमन्तरेणानुपपद्यमानं तयोर्दाम्पत्यावेदकविधिमनुमापयतीति । दृश्यते हि विधिर्नित्यवदनुवादेन कल्पितः 'उपरि

एवं वा—त्रिवृच्चर्वश्ववालादिशब्देषु यत्र लोकवाक्यशेषयोरर्थविप्रतिपत्तिः तत्र

हि देवेभ्यो धारयति' इति । ततश्च श्रुतिविरोधात्स्मार्तनिषेधः सङ्कोचमर्हति । निर्णीतश्च 'न हिंस्यात्' इति निषधोऽग्नीषोमीयविधिना । न च तर्हि 'न ब्राह्मणं हन्यान्नात्रेयं हन्यात्' इत्यत्रापि न निषेधसङ्कोचापत्तिर्दोषाय । निषेधेन निषेधसङ्कोचायोगात्प्रकृतेऽपि विधिनैव निषेधसङ्कोचात् । न च तर्हि निषेधस्मृतिर्व्यर्था स्यात् । तस्यास्सपिण्डेषु सावकाशत्वात् । तथाहि-द्विविधे हि मातुलकन्ये, सपिण्डे असपिण्डे च । यत्र मातुः पितुस्स्वसुर्वा ब्राह्मादित्रिविधान्यतमविवाहः तत्र दुहितुर्दानविधानेन स्वत्वस्येव गोत्रसापिण्ड्ययोरपि दानेन निवृत्तेरसपिण्डे । आसुरादिविवाहेषु दुहितुर्दानाभावेन सापिण्ड्यगोत्रयोरनिवृत्तेः ते सपिण्डे । ततश्चासुरादिपरिणयेषु पुत्रिकाकरणे च सापिण्ड्यनिवृत्तिभ्रमेण मातुलादिकन्यया विवाहप्रसक्तौ स्मार्तनिषेधस्सावकाश इति भवति शिष्टत्रैवर्णिकानां मातुलादिविवाहश्शास्त्रीय इति । अत एव बोधायनः, दाक्षिणात्यानाचारेषु पर्युषितभोजनमातुलकन्यापरिणयादीन् गणयित्वा 'अन्यत्र देशे तत्कुर्वाणः प्रत्यवैति' इति वदन् तत्रत्यानां दोषाभावमभ्यनुजानाति । अत एव वधूवरयोर्नाडीकूटादिविचाराधिकारे मातुलदुहितुः पैतृष्वस्रेय्याश्च परिणये च न विचारः । एते हि 'जामात्रे पत्नीत्वेनोदिते ऋषिणा' इति ज्योतिर्विदामुक्तिरसङ्गच्छते । एवं च चन्द्रिका-निर्णयसिन्धु-पराशर माधवीयादावप्ययमर्थः स्पष्टं प्रतिपादित इति दिक् ॥

'त्रिवृच्चर्वश्ववालादेर्लोके योऽर्थः प्रतीयते । वेदे तदभियुक्तैश्च तस्मादन्यो विलक्षणः ॥' इति वार्तिकप्रपञ्चितवर्णकान्तरं परिष्कृत्य दर्शयति--**एवं वेति** ॥ **अश्ववालादीति** ॥ आदिना श्येनाग्निविमोकादिपदपरिग्रहः । 'यथा वै श्येनो निपत्यादत्ते' 'एष वा अग्नेर्विमोकः' इति वाक्यशेषाभ्यां यागविशेषे तयोश्शक्तत्वावधारणात् । ऐक्षवीस्तोमपदयोः परिग्रह इति केचित् । तत्र शक्तिग्राहकवाक्यशेषस्य मृग्यत्वादुपेक्ष्यम् । **विप्रतिपत्तिः** । 'त्रिवृद्रज्जुस्त्रिवृद्ग्रन्थिः' इत्यादौ त्रिवृच्छब्दो लोके त्रैगुण्यवाची, वेदे तु 'त्रिवृद्बहिष्पवमानम्' इत्यादौ स्तोत्रीयानवकवाची । 'उपदवीपव' इति तृचत्रयमनुक्रम्य 'नवभिस्तुवन्ति' इति वाक्यशेषात् 'उप' इत्यनेन 'उपास्मै गायता नरः' इति तृचस्य, 'दवी' इत्यनेन 'दविद्युतत्या रुचा' इति तृचस्य, 'पव' इत्यनेन 'पवमानस्य ते कवे' इति तृचस्य च सङ्ग्रहात् स्तोत्रीयानवकयुक्तं बहिष्पवमानाख्यस्तोत्रमिति तदर्थः । 'चरौ सूपं पचति' इति लोके चरुशब्दः स्थालीवचनः । वेदे त्वोदनवचनः । 'आदित्यः प्रायणीयः पयसि चरुः' इति विधौ 'आदित्य-'इति ण्यप्रत्ययान्तः । किं अदितिशब्दात्, उत आदित्यशब्दादिति सन्देहे 'आज्यस्यैनमभिपूर्य' इत्यारभ्य 'अदितिमोदनेन' इत्यन्तेन क्रमविधिपरेण वाक्यशेषेण निर्णयवदसन्दिग्धस्यापि चरुशब्दस्य तेनैव वाक्यशेषेणैकवाक्यतया अदनीयौदनपरत्वनिर्णयात् । अश्ववालशब्दो लोके यौगिकवृत्त्या अश्वकेशपरः । वेदे तु 'आश्ववालः प्रस्तरः' इति विधौ काशपरः । 'यज्ञो वै देवेभ्योऽश्वो

पदपदार्थसम्बन्धे लोकाद्वेदस्याधिक्ये प्रमाणाभावात् तुल्यबलत्वमिति प्राप्ते—विषयैक्याभावे विधिस्तुत्योरेकवाक्यताऽनुपपत्तेः विधिर्वाक्यशेषस्यैव शक्तिग्राहकत्वमनुमन्यते। अतश्च लौकिकप्रमाणावगतेऽर्थे अनेकशक्तिकल्पनाभिया न शक्तिः, अपि तु लक्षणादिनैव बोधः। अत एव यत्र वाक्यशेषो नास्ति तत्रापि त्रिवृदादिपदार्थो वैदिक एव ग्रहीतव्य इति वक्ष्यते। अतश्च त्रिवृच्छब्दस्य स्तोत्रगतऋङ्नवकं शक्यं, न तु त्रैगुण्यम्। चरुशब्दस्यौदनः, न तु स्थाली। अश्ववालशब्दस्य काशाः, नाश्वकेशाः। वाक्यशेषास्तु कौस्तुभे द्रष्टव्याः॥ ४॥

---

भूत्वापक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतः, स वालान् मुक्त्वा विवेश, ते वालाः काशतां प्राप्ताः' इति वाक्यशेषात्। अतः कतरोऽर्थो ग्राह्य इति भवति विचार इति भावः। अत्र लोकवाक्यशेषयोः परस्परमर्थविरोधे तयोस्समबलत्वं वा, उत वाक्यशेषस्य प्राबल्यं वेति सन्देहे पूर्वपक्षमाह—**पदपदार्थेति**॥ धर्मस्वरूपनिश्चये हि लोकाद्वेदस्याधिक्यं, शब्दार्थसम्बन्धे तु उभयोरपि साम्यमिति तुल्यबलत्वमेव लोकवेदयोरित्यर्थः। विधिर्हि स्तुत्यर्थमर्थवादमाकाङ्क्षन् वाक्यशेषेणैकवाक्यमिति निर्णीतं 'विधिनात्वेकवाक्यत्वात्' इत्यत्र। ततश्च विध्यर्थवादयोरेकार्थपरत्वमेव युक्तमिति त्रिवृदादिशब्दानां वाक्यशेषप्रसिद्धस्तोत्रीयानवकादिपरत्वमेव युक्तमिति सिद्धान्तमाह—**विषयैक्याभाव इति**॥ **विधिस्तुत्योरिति**॥ विध्यर्थवादयोरित्यर्थः॥ **अतश्चेति**॥ वाक्यशेषेण शब्दार्थस्य निर्णीतत्वादित्यर्थः॥ **अनेकेति**॥ 'अन्याय्यश्चानेकार्थत्वम्' इति न्यायादिति भावः। कथं तर्हि लोकप्रसिद्धार्थस्य त्रिवृदादिशब्दैर्बोध इत्यत आह—**लक्षणादिनेति**॥ ननु वाक्यशेषशून्यस्थले कथं निर्णय इत्यत आह—**यत्रेति**॥ त्रिवृदग्निष्टुद्यागादावित्यर्थः। तत्र वाक्यशेषाभावेऽपि एकत्र विधौ वाक्यशेषेणार्थे निर्णीते अन्यत्रापि वैदिकत्वसामान्यात् स एवार्थो गृहीतव्यः। श्रौतसौर्यादिविकृतिषु श्रौतदार्शपूर्णमासिकविध्यन्त एव प्रवर्तते, न तु स्मार्तस्थालीपाकादिविध्यन्त इति सिद्धान्तदर्शनेन प्रकृतेऽपि वाक्यशेषसिद्धार्थ एव ग्राह्य इति भावः॥ **वक्ष्यत इति**॥ दशम इति शेषः। उपसंहरति—**अत इति**॥ अत्रेदं बोध्यम्। त्रिवृच्छब्दस्य त्रैगुण्ये शक्तिग्राहककोशदर्शनात्त्रैगुण्यवाचकत्वमावश्यकम्। कथमन्यथा 'त्रिवृद्दर्भमयी रशना भवति' इत्यत्र वैदिकनिर्देशस्सङ्गच्छते। नापि बहिष्पवमाने तदनुपपत्तिः, तत्रापि तृचत्रैगुण्यमादायोपपत्तेः। मनुरपि 'कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्' इति तन्तुत्रैगुण्याभिप्रायेण त्रिवृत्पदं प्रायुङ्क्त। चरुशब्दो हि 'चरुमुपदधाति' इति वेदे स्थालीवचनो दृश्यते, स्थाल्या एवोपधानात्। लोके तु हविर्वचनो दृश्यते। कोशोऽप्युभयत्र शक्तिग्राहकः। 'चरुर्भाण्डे च हव्यान्ने' इति विश्वाद्युक्तेः। केवलवाक्यशेषेण निर्णये स्थूलभाण्डे पक्त्वा अवस्रावितौदनेऽपि शक्त्यापत्तेः। याज्ञिकप्रसिद्ध्यानवस्रावितान्तरूष्मपक्वौदनपरत्वे किं वाक्यशेषेण, किन्तरामधिकरणेन? अश्ववालशब्दोऽपि वाजिदन्तसिंहास्यव्याघ्रनखादिशब्दानां वृक्ष-

## (५)—चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥ ९ ॥

यत्र पिकनेमसततामरसादिशब्दानां नार्याणामर्थविशेषे प्रसिद्धिः, म्लेच्छेषु तु पिकः कोकिलः, नेम अर्धं, सतं बृहत् परिमण्डलं शतच्छिद्रं दारुपात्रं, तामरसं कमलमित्येवं प्रसिद्धिः तत्र तत्प्रसिद्धार्थस्यैव ग्रहणं; न तु निगमनिरुक्तादिना तत्कल्पनम् । न च म्लेच्छेषु शब्दार्थयोर्विप्लुतिदर्शनात् तत्प्रसिद्धेरविस्रम्भणीयता ; पिकादिशब्दानां वेद एव दृश्यमानत्वेन अविप्लुतत्वात् । अतश्च तेषां वाच्याकाङ्क्षायां तत्प्रसिद्धेरपि क्लृप्ततया शक्तिग्राहकत्वम् । अत एव निगमादिप्रसिद्धेरप्यार्यप्रसिद्धित्वेन प्राबल्येऽपि कल्प्यत्वेन दौर्बल्यम् , म्लेच्छप्रसिद्धेश्च म्लेच्छप्रसिद्धित्वेन दौर्बल्येऽपि क्लृप्तत्वेन प्राबल्यं; प्रमाणबलाबलापेक्षया प्रमेयबलाबलबलीयस्त्वस्य स्थापितत्वात् । अत एव नात्र विशेषेण पूर्वः पक्षः कथितः ॥ ५ ॥

---

विशेषेष्ववयवसादृश्येन गौणीवत् काशेष्वपि याज्ञिकप्रसिद्ध्यैव गौण्या वर्तते । वाक्यशेषोऽप्यत्रैव तात्पर्यग्राहक इति । परन्तु शास्त्रे कण्ठरवेण परिभाषितानामपि शाब्दिकप्रसिद्धानां कतिपयानां एकदेशज्ञापकेन सर्वप्रामाण्यावधारणवत् वाक्यशेषाणां कतिपययाज्ञिकव्यवहारानुगुणानां दर्शनादितरांशेऽपि तत्सम्मतोऽर्थः प्रमाणमिति बोधयितुमिदमधिकरणम् । वैदिकलौकिकप्रतिपत्त्योस्साम्यमाशङ्क्य 'शास्त्रस्था वा तन्निमित्तत्वात्' इति सूत्रेण वैदिकप्रसिद्धेरेव ग्राह्यतोच्यते । वेदार्थनिर्णये तद्व्यवहारस्य निमित्तत्वादित्युक्तत्वात् वाक्यशेषादेव चेन्निर्णयः, तदाक्ताधिकरणेन गतार्थत्वं स्यादिति दिक् । सूत्रं तूक्तार्थम् ॥

**चोदितं तु प्रतीयेताविरोधात्प्रमाणेन** ॥ म्लेच्छप्रसिद्धेरग्राह्यत्वे पिकादिष्वपि तदग्राह्यत्वं स्यादित्युत्थितेस्सङ्गतिरित्यभिप्रेत्याह—**यत्रेति** ॥ **तामरसादीति** ॥ आदिना पश्ववयवविशेषार्थकक्लोमपदादेस्सङ्ग्रहः। पिकादिशब्देषु म्लेच्छप्रसिद्धिर्ग्राह्या न वेति संशये पूर्वपक्षं स्पष्टत्वादुपेक्ष्य सिद्धान्तमाह—**तत्प्रसिद्धार्थस्यैवेति** ॥ म्लेच्छप्रसिद्धार्थस्यैवेत्यर्थः । एवकारव्यावर्त्यमाह—**न त्विति** ॥ **निगमनिरुक्तादीति** ॥ नितरां गम्यतेऽर्थोऽनेनेति निगमः । व्युत्पत्तिपक्षे सर्वेषां शब्दानामर्थनिर्णयसम्भवादिति भावः । ततश्च कल्प्यत्वात्तस्याग्राह्यत्वमित्याशयः । ननु म्लेच्छप्रसिद्धेः विप्लुतिदर्शनेनाग्राह्यत्वस्य पूर्वमुक्तत्वात् तद्विरोध इति शङ्कते—**न चेति** ॥ परिहरति—**पिकादिशब्दानामिति** ॥ **वेद एवेति** ॥ 'पिकमालभेत, सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः, सत्ते हिरण्यं निधाय' इत्यादौ वेदे प्रयोगादित्यर्थः । **तेषां**—पिकादिशब्दानाम् । **तत्प्रसिद्धेः**—म्लेच्छप्रसिद्धेः । **अत एव**—म्लेच्छप्रसिद्धेः क्लृप्तत्वादेव । **अत एव**—प्रमेयबलाबलबलीयस्त्वस्य पूर्वं सिद्धत्वादेव । शिष्टाकोपाधिकरणेन गतार्थत्वादेवेति यावत् । नन्विदमनुपपन्नं ; पिकादिशब्दानां शिष्टत्रैवर्णिकरचितकोशादिभिश्शक्तिनिर्णयसम्भवात् । न च कोशानां त्रैवर्णिकरचितत्वेऽपि धर्मप्रमितेः पुराणादिप्रामाण्यजनयितव्यत्वेन तद्बहिर्भूत-

(६)—प्रयोगशास्त्रमिति चेत् ॥ १० ॥ नासन्नियमात् ॥ ११ ॥ अवाक्यशेषाच्च ॥ १२ ॥ सर्वत्र प्रयोगात्सन्निधानशास्त्राच्च ॥ १३ ॥

[1]सर्वस्मृतीनां कल्पसूत्राणां वा षडङ्गानामेव वा शाक्यादिग्रन्थानां वा वेदत्वं वेद-

---

कोशप्रतिपाद्यानां न धर्मत्वं युक्तमिति वाच्यम् ; तेषामपि प्रामाण्यहेतोः वैदिकस्स्मर्यमाणस्य तत्परिग्रहदार्ढ्यस्य स्मृतिवद्धर्मप्रमाणत्वाविरोधात् । न च कोशानामेतदधिकरणसिद्धार्थसङ्ग्रहेणापि प्रवृत्तिसम्भवात् न स्मृतिसाम्यमिति वाच्यं ; तथापि प्रत्यन्तवासिवेदविद्विषि म्लेच्छप्रसिद्धया वैदिकार्थनिर्णयमपेक्ष्य वेदवत् त्रैवर्णिकरचितकोशेनार्थनिर्णयस्योचितत्वात् । किञ्च अमरस्याग्निपुराणमूलकत्वेन चतुर्दशान्तर्गतत्वान्नेमशब्दस्य सर्वनामगणपाठाच्च वैदिकत्वमेव । आर्थिकसंवादाविरोधोऽपि न प्रामाण्यप्रयोजकः । 'अहिंसा परमो धर्मः' इति शाक्यग्रन्थस्यापि तदापत्तेः । तस्मान्नायं सिद्धान्तो युक्त इति चेत्, अत्र केचित् अत्रत्यम्लेच्छशब्दो न प्रत्यन्तवासियवनहूणादिपरः, किन्तु केवलकाव्यमात्रज्ञवेदार्थानभिज्ञपरः इति न विरोध इत्याहुः । प्रयोजनं स्पष्टम् । सूत्रार्थस्तु, **चोदितं**—शिष्टैरर्थविशेषे प्रयुक्तं, शब्दजातम् । **प्रतीयेत**—म्लेच्छप्रसिद्धार्थकं स्यात् । **प्रमाणेनाविरोधात्**—आर्यप्रसिद्धिविरोधाभावादिति ॥

**प्रयोगशास्त्रमिति चेत्** ॥ **नासन्नियमात्** ॥ अत्र कल्पसूत्रादीनां स्मृत्यधिकरणन्यायेन वेदमूलकत्वेन प्रामाण्ये सिद्धेऽप्यधुना तेषां वेदत्वेनैव प्रामाण्यमस्त्वित्युत्थानात्सङ्गतिः ॥ **सर्वस्मृतीनामिति** ॥ अस्य विचारस्य तास्वपि सम्भवादिति भावः । एकशाखास्थवाक्यानामीषदानुपूर्वीभेदाभेदाभ्यां शाखान्तरेषूपलम्भवत् स्मृतिषु तानि नोपलभ्यन्त इत्यत आह— **कल्पसूत्राणामिति** ॥ कल्पश्च सूत्राणि च तेषामित्यर्थः । ततश्च पदार्थतावच्छेदकभेदात् द्वन्द्व एवायं न कर्मधारयः, अन्यतरपदवैयर्थ्यापत्तेः । तदुक्तं 'सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते । ते कल्पा लक्षणार्थानि सूत्राणीति प्रचक्षते ॥' इति । ततश्च प्रयोगं कल्पयन्तीति कल्पाः, बौधायनीयादयः। संज्ञापरिभाषाभ्यां प्रयोगं सूचयन्तीति सूत्राणि, आश्वलायनीयादीनि । 'एतत्तीर्थमित्याचक्षते ऋचं पादग्रहणे' इति परिभाषया प्रयोगसूचनात् । 'स्वर्गकामो ज्योतिष्टोमेन यजेत' इति वेदवाक्यमात्रदृश्यमानत्वाद्वेदत्वं सम्भवतीत्याशयः । ननु गौतमव्यवहारस्याङ्गान्तरेष्वपि समानत्वान्न कल्पादीनामेव वेदत्वमित्यत आह—**षडङ्गानामिति** ॥ नन्वङ्गानामपि वेदत्वे शाखान्तराणामिवाध्येतृपुरुषभेदाभावादभ्यासात् ज्योतिष्टोमादिकर्मभेदस्स्यादित्यत आह—**शाक्यादीति** ॥ सर्वेषामत्रोदाहरणत्वात् शब्दत्रयमनास्थायामित्यप्याहुः । ऐतषां वेदत्वेन धर्माधर्मयोः प्रामाण्यमस्ति न वेति सन्देहे पूर्वपक्षमाह—**वेदत्वमिति** ॥

---

१. स्मृतीनामिति पाठान्तरम् ।

तुल्यत्वं वा भवतु । न श्रुत्यादिमूलकत्वं गौरवात्, नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तेश्च । अङ्गानां तु 'षडङ्गमेके' इति स्मृतेरपि वेदत्वम् । बुद्धबौधायनशाक्यादिसमाख्या तु काठकादिवत् प्रवचननिमित्तत्वेनाप्युपपद्यत इति प्राप्ते—

दृढकर्तृस्मरणात् काठकादिवत् प्रवचननिमित्तत्वानुपपत्तेः नैषां वेदत्वं वेदतुल्यत्वं वा । प्रतिमन्वन्तरं च एवंविधानां ग्रन्थानां सत्त्वान्नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिः । 'षडङ्गमेके' इति तु परमतोपन्यासः, एकपदश्रवणात् । तस्मादेतेषां स्मृत्यधिकरणन्यायेन वेदमूलकत्वमेव । शाक्यादिग्रन्थानां तु तदसम्भवादाभासत्वमेव ॥

प्रयोजनं—पूर्वपक्षे कल्पसूत्रादीनां वेदत्वे वेदतुल्यत्वे वा यत्र प्रत्यक्षश्रुति विरोधः तत्र विकल्पः, यत्र वा प्रत्यक्षश्रुतिविरोधाभावेऽपि न्यायाभासोपन्यासपूर्वकं

---

ननु शाक्यादिग्रन्थानां वेदत्वेन प्रामाण्यं न सम्भवति तेषां वेदविद्वेषिप्रणीतत्वात्, वेदत्वेन व्यवहाराभावाच्चेत्यत आह—**वेदतुल्यत्वं वेति** ॥ **गौरवादिति** ॥ श्रुत्यर्थं पर्यालोच्य रचितानीति कल्पने श्रुतिज्ञानतदर्थोपस्थितितज्जन्यजनकभावादीनां कल्पनीयतया गौरवादित्यर्थः ॥ **नित्येति** ॥ 'अहरहस्स्वाध्यायमधीयीत' इति विहितब्रह्मयज्ञे वेदवत् कल्पादीनामपि पाठविधानेन वेदत्वमेवैतेषामिति भावः । वेदाङ्गेषु विशेषमाह—**अङ्गनामिति** ॥ शिक्षादिषडङ्गानामित्यर्थः । ननु वेदत्वाङ्गीकारे अपौरुषेयत्वमप्यङ्गीकार्यमिति सामाख्यानुपपत्तिरित्यत आह—**बुद्धेति** ॥ वेदे काठकादिसमाख्याया इव तेषां प्रवचननिमित्तकत्वादुपपत्तिरित्यर्थः । तस्मादेतेषां वेदत्वादिनैव धर्माधर्मयोः प्रामाण्यमिति पूर्वपक्षाशयः ॥ **दृढेति** ॥ वेदे हि कर्तृस्मरणाभावादपौरुषेयत्वं साधितमिति युक्तं समाख्यायाः प्रवचननिमित्तत्वम्, कल्पादौ तु दृढकर्तृस्मरणात्पौरुषेयत्वनिश्चयेन न प्रवचननिमित्तत्वं तस्या इति वेदत्वं वेदतुल्यत्वं वा न सम्भवतीत्यर्थः । ततश्च कल्पादयो न वेदाः बोधायनादिकर्तृकत्वादित्यनुमानाद्वेदभिन्नत्वं सिध्यतीति भावः । ननु वेदत्वानङ्गीकारे नित्यब्रह्मयज्ञविधिविषयत्वं न स्यादित्यत आह—**प्रतिमन्वन्तरमिति** ॥ ननु 'षडङ्गमेके' इति स्मरणात् तेषां वेदत्वमित्यत आह—**षडङ्गमिति** ॥ षडवयवकमङ्गमित्यर्थः । तेन 'द्विगोः' इति न ङीपः प्रसक्तिः ॥ **परमतेति** ॥ तेन एकशब्दोऽन्यपरः, न मुख्यपर इति भावः । उपसंहरति—**तस्मादिति** ॥ वार्तिकरीत्याह—**शाक्यादीति** ॥ वेदविरुद्धहिंसादिप्रतिपादनादप्रामाण्यमिति पूर्वमेवोक्तत्वादिति भावः । विचारप्रयोजनमाह—**पूर्वपक्ष इति** ॥ **प्रत्यक्षश्रुतीति** ॥ 'सर्वाणि हवींषि पर्यग्निकरोति' इति सूत्रस्य 'पुरोडाशं पर्यग्निकरोति' इति प्रत्यक्षश्रुतिविरोधेऽपि तुल्यबलत्वात्तदर्थयोर्विकल्प इत्यर्थः । यद्वा सर्ववेष्टनस्मृतेः स्पर्शनश्रुतेश्च समबलत्वाद्वेष्टनस्पर्शनयोर्विकल्प इत्यर्थः ॥ **न्यायाभासेति** ॥ प्रकृतावग्नीषोमीये पशौ क्रियमाणः अग्नीषोमीयः पुरोडाशः छिद्रापिधानार्थः; 'सुषिरो वा एतर्हि पशुर्यर्हि वपामुत्खिदति, यत् व्रीहिमयः पुरोडाशो भवति अपिधानाय' इति श्रुतेः ।

वचनं तत्रापि वचनत्वादेव तदनुष्ठानम्। न्यायोपन्यासस्तु हेत्वधिकरणन्यायेनार्थवादः। सिद्धान्ते तु—प्रत्यक्षश्रुतिविरोधे [1]सन्यायविरोधे च यावन्मूलश्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यम्। श्रुतिदर्शनोत्तरं तु विकल्पादि। यत्र तु न्यायोपन्यासरहितं मीमांसान्यायविरुद्धं च स्मृतिवचनं तत्र श्रुतिमूलत्वसम्भवेन वचनविरोधे न्यायस्यैव आभासत्वात् तदर्थ एवानुष्ठेय इति। अत्र सर्वत्रोदाहरणानि मूलोक्तोदाहरणदूषणानि चास्मत्कृतकौस्तुभे द्रष्टव्यानि ॥ ६ ॥

**(७)—अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १४ ॥ अपि वा सर्वधर्मस्स्यात्तन्न्यायत्वाद्विधानस्य ॥ १५ ॥ दर्शनाद्विनियोगस्स्यात् ॥ १६ ॥ लिङ्गाभावाच्च नित्यस्य ॥ १७ ॥ आख्या हि**

---

स च सवनीये पशौ चोदकप्राप्तोऽपि न कर्तव्यः। 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते अपिहित्या अच्छिद्रतायै' इति प्रत्यक्षविहितपुरोडाशान्तरैरेव तत्कार्यसिद्धेरिति न्यायाभासरूपः। पशुपुरोडाशस्य देवतासंस्कारार्थताया दशमे वक्ष्यमाणत्वात्। च्छिद्रापिधानस्य प्रत्यक्षविरुद्धस्य कथनं पर्णतान्यायेनार्थवादमात्रमिति दशमे द्वादशे च साधनात्। **उपन्यास इति** ॥ 'अक्रियामेके, अन्यत्र तदर्थवाददर्शनात्' इत्याश्वलायनसूत्रमित्यर्थः। **तदनुष्ठानं**—क्रियानुष्ठानम् ॥ **प्रत्यक्षश्रुतिविरोध इति** ॥ यावन्मूलश्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यमित्यन्वयः। वेष्टनादिस्मृतेः मूलश्रुतिदर्शनपर्यन्तं अननुष्ठानमित्यर्थः। एवं 'आकालाद्धोमकालः' इत्यादिसूत्रकारवचनानि 'सायं जुहोति, पौर्णमास्यां पौर्णमास्या यजेत' इति श्रुतिविरोधाद्यावन्मूलश्रुतिदर्शनमननुष्ठापकानि ॥ **सन्यायेति** ॥ दाशमिकन्यायविरोधात् पशुपुरोडाशक्रियावचनं यावच्छ्रुतिदर्शनमननुष्ठापकमित्यर्थः। एवं 'यावद्यूपं वेदिमुद्धन्ति' इत्यापस्तम्बवचनं 'तथा यूपस्य वेदिः' इति तार्तीयाधिकरणसिद्धान्तविरुद्धम्; 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्यत्र अन्तर्वेदिबहिर्वेदिशब्दाभ्यां देशविशिष्टलक्षणायाः सिद्धान्तितत्वात् ॥ **मीमांसान्यायेति** ॥ 'जाघनीभिः पत्नीस्संयाजयन्ति' इति वचनं द्वादशाध्यायीयजाघन्यधिकरणविरुद्धमित्यर्थः ॥ **श्रुतिमूलत्वसम्भवेनेति** ॥ यदि श्रुतिर्मूलं सम्भवति तदेत्यर्थः। प्रकृते तु श्रुतेरनुमातुमशक्यत्वान्न स्मृत्यर्थानुष्ठानमिति कश्चित्। तत् मूलानारूढत्वादुपेक्ष्यम्। सूत्रार्थस्तु, **प्रयोगशास्त्रम्**—कल्पादिकं, स्वतः प्रमाणमिति **चेन्नासन्नियमात्**—पूर्वमसद्भिरविद्यमानैर्जनिमद्भिः बोधायनादिभिः नियमात् निबन्धनात्, पौरुषेयत्वादिति ॥

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्** ॥ इह विषयपरिशोधनेनोक्तप्रामाण्यस्य

---

१. वा न्यायविरोधे वा यावच्छ्रुति-इति पाठान्तरम्।

**देशसंयोगात् ॥ १८ ॥ न स्याद्देशान्तरेष्विति चेत् ॥ १९ ॥ स्याद्योगाख्या हि माधुरवत् ॥ २० ॥ कर्म धर्मो वा प्रवणवत् ॥ २१ ॥ तुल्यं तु कर्तृधर्मेण ॥ २२ ॥**

अथ यत्र स्मृतिषु पाठव्यवस्था यथा गौतमीयाः छन्दोगैरेव तथा आचारेषु कर्तृव्यवस्था यथा होळाकादि प्राच्याद्यभिमानिभिरेव तत्र तदनुमेयश्रुतिरप्यनुमापकस्य नियतविषयत्वात् नियताधिकारिकैवेति नान्यैस्तदनुष्ठेयमिति प्राप्ते—

यद्यप्यनुमापकं नियतविषयकं तथाऽपि नानुमेयश्रुतौ विशेषणं प्राच्यत्वादि दातुं शक्यम् । न हि प्राच्यत्वं नाम सर्वाचरित्रनुगतं जातिव्यक्तिगुणसंस्थानादिभि-

---

स्थिरीकरणात् सङ्गतिः । **स्मृतिषु**—गौतमादिधर्मेषु । **पाठव्यवस्था**—'गौतमधर्मश्छन्दोगैरेव पठ्यते नेतरैः' इति व्यवस्था दृश्यत इति शेषः ॥ **छन्दोगैरेवेति** ॥ पठ्यत इति शेषः । तत्र गौतमस्मृतिश्छन्दोगैरेवाध्येतव्या, उत सर्वैरिति संशयः ॥ **कर्तृव्यवस्थेति** ॥ दृश्यत इति शेषः । **प्राच्याद्यभिमानिभिरेवेति** ॥ अनुष्ठीयत इति शेषः । तत्रापि किं होळाकादिः प्राच्याद्यभिमानिभिरेवानुष्ठेयः, उत सर्वैरिति संशयः । होळाका नाम राक्षसी, तस्याः पूजनपूर्वकं तत् मन्मथस्य दाहोत्सवः फाल्गुनपौर्णमास्यां प्राच्यैर्महाराष्ट्रैः क्रियते । पूर्वपक्षमाह—**तत्रेति** ॥ **तदनुमेयश्रुतिः**-गौतमधर्माद्यनुमेयश्रुतिः । **अनुमापकस्य**-लिङ्गस्य । **नियतविषयत्वात्**—व्यवस्थितविषयत्वात् ॥ **नियताधिकारिकैवेति** ॥ तथा च गौतमधर्ममूलकश्रुतिश्छन्दोगमात्रविषया च्छन्दोगमात्रपठ्यमानस्मृतिमूलत्वादित्यनुमानेन व्यवस्थेत्यर्थः । तथा होळाकाद्याचारमूलश्रुतिः प्राच्यादिमात्रविषया प्राच्यादिमात्रानुष्ठीयमानाचारमूलत्वादित्यनुमानेन तन्मात्रविषयत्वमित्यर्थः । सिद्धान्तमाह—**यद्यपीति** ॥ **अनुमापकं**-लिङ्गम् । **नियतविषयकं**-पुरुषविशेषैरेवाधीयमानमनुष्ठीयमानमिति व्यवस्थितविषयकम् । **तथापि** -अनुमापकस्य व्यवस्थितविषयकत्वे, अनुमेयश्रुतौ प्राच्यत्वादिविशेषणं न दातुं शक्यमित्यन्वयः । प्राच्यादिमात्रविषयत्वकल्पनं न सम्भवतीत्यर्थः । तदेवोपपादयति—**न हीति** ॥ प्राच्यशब्दो रूढो वा यौगिको वेति विकल्प्य आद्यं दूषयति—**सर्वेति** ॥ जात्यादिचतुष्टयप्रवृत्तिनिमित्ताभावान्न रूढत्वमित्यर्थः । 'ब्राह्मणा ऋत्विजः' इति हि ब्राह्मणत्वजातिः, 'भार्गवो होता' इति व्यक्तिः, 'शुक्लो होता' इति गुणः, 'अविकलाङ्गाः' इति संस्थानविशेषः । प्रकृते तादृशं किञ्चिदपि नास्तीति न रूढत्वं, 'चतुष्टयी शब्दानां प्रवृत्तिः' इत्यभियुक्तोक्तेरिति भावः । तदुपपादयति—**जातीति** ॥ घटत्वादिवत्प्राच्यत्वस्य जातित्वाभावादित्यर्थः ॥ **व्यक्तीति** ॥ सास्नादिव्यक्तिनिमित्तकगोशब्दवद्व्यक्तिलक्षकावयवविशेषाभावादित्यर्थः ॥ **गुणेति** ॥ नीलादिशब्दवद्गुणनिमित्तकत्वाभावादित्यर्थः ॥ **संस्थानेति** ॥ कम्बुग्रीवादिवदाकृतिनिमित्तकत्वाभावादित्यर्थः । तथा च न रूढत्वमिति भावः । द्वितीयेऽपि किं

निर्वक्तुं शक्यम् । तत्र तत्तद्देशगतानामप्यनाचरणात् चिरनिर्गतपुत्रपौत्राणामप्याचरणाच्च । अतो विशेषणाभावात्सर्वविषयत्वम् । गौतमीयादिस्मृतेस्तु न छन्दोगाधिकारस्मरणं, येन श्रुतावपि तत्सम्भाव्येत । पाठमात्रं तु तेषां स्मृतिकर्तुस्तच्छाखीयत्वादुपपन्नम् । कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वग्रन्थमध्यापयामास । तेऽप्यन्यानित्येवं पाठः तन्मात्रे व्यवस्थित इति तत्रापि सर्वविषयत्वमेव ॥ ७ ॥

**(८)—प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥२३॥ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २४ ॥ अन्यायश्चानेकशब्दत्वम् ॥ २५ ॥ तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २६ ॥ तदशक्तिश्च तदनुरूपत्वात् ॥ २७ ॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २८ ॥**

स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणप्रामाण्यमाक्षिप्यते । नियमद्वयार्थं हि

---

प्राग्देशसत्त्वं वा प्राच्यत्वं, प्राग्देशोत्पन्नत्वं वेति विकल्प्य आद्यं निराकरोति—**तत्तद्देशेति** ॥ देशान्तरादागत्य तद्देशे वासं कुर्वतामनाचरणात् न तद्देशवासित्वं प्राच्यत्वमित्यर्थः । द्वितीयं निरस्यति—**चिरेति** ॥ प्राग्देशान्निर्गत्य देशान्तरेषु वासं कुर्वतां पुत्रपौत्रादीनां प्राग्देशोत्पन्नत्वाभावेन तेषां प्राच्यत्वानापत्तेः तेषामनुष्ठानं न स्यादित्यर्थः । उपसंहरति—**अत इति** ॥ **विशेषणाभावादिति** ॥ ततश्च साध्याप्रसिद्धेः पूर्वोक्तानुमानं न सम्भवतीति भावः । गौतमस्मृतेरपि छन्दोगमात्रविषयत्वं निराकरोति—**गौतमीयेति** ॥ छन्दोगमात्रपाठस्यान्यथासिद्धिमाह—**पाठमात्रं त्विति** ॥ **तत्स्मृतिकर्तुः**—गौतमस्य, तच्छाखीयत्वात्स्वशिष्यान् स्वग्रन्थमध्यापयामासेत्येवं पाठव्यवस्थाया अन्यथासिद्धत्वात् न तन्मात्रेण व्यवस्था युक्ता । तस्मात्सर्वाधिकारिकैव गौतमस्मृतिरिति न तन्मूलश्रुतिः तन्मात्रविषया । अतः सर्वाधिकारिकैव सेति भावः । सूत्रार्थस्तु, **अनुमानस्य**-हेतोः । करणे ल्युट् । **व्यवस्थानात्**-व्यवस्थितविषयत्वात् । **तत्संयुक्तमेव** श्रुतिरूपं **प्रमाणं** अनुमेयं **स्यादिति** ॥

**प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्** ॥ स्मृत्यधिकरणेन अस्याक्षेपिकीं सङ्गतिमभिसन्धायाह—**स्मृत्यधिकरणेति** ॥ वैदिकपरिग्रहदार्ढ्यादितः तत्र श्रुतिमूलत्वेन प्रामाण्यसिद्धावपि इह मूलासम्भवान्न प्रामाण्यमित्याक्षिप्यत इत्यर्थः । व्याकरणस्य प्रयोगसङ्ग्रहैकफलकत्वेन प्रयोगरूपाचारानुमानद्वारा स्मृतिकल्पकतया द्वयन्तारितप्रामाण्येन मन्वादिस्मृतिवैलक्षण्यादाक्षेपावसर इति भावः ॥ **नियमद्वयेति** ॥ प्रयोगनियमः साधुस्वरूपनियमश्चेत्यर्थः । तदुभयमपि व्याकरणैकसाध्यम् । तत्राद्यस्य क्रत्वर्थपुरुषार्थोभयरूपत्वस्य व्याकरणेनैवानुमेयत्वात् साधुस्वरूपस्यालौकिकत्वेन व्यूढद्वादशाहादेरिव शास्त्रैकसमधिगम्यत्वात् । वस्तुतस्तु, प्राथमिको नियमविधिः । द्वितीयस्तु तदपेक्षितार्थसमर्पकः । 'यन्नदुःखेन सम्भिन्नम्'

तत्। साधूनेव प्रयुञ्जीत नासाधूनित्येकः। गवादय एव साधवः न गाव्यादय इत्यपरः। न च नियमद्वयस्य मूलं सम्भवति; प्रतिगवादिशब्दमनेकश्रुतिवाक्यपाठासम्भवात्, साधुत्वस्य पूर्ववन्निर्वचनासम्भवेन अनुगतैकश्रुतिकल्पनानुपपत्तेश्च। न हि साधुत्वं नाम अर्थप्रत्यायकत्वं, अनादित्वे सति वाचकत्वं वा। गाव्यादिष्वपशब्देष्वपि सत्त्वात्। अपशब्दानां क्वचित् वाचकत्वाभावे गाव्यादिषु गौणत्वस्याप्यसम्भवाच्च। अतो वाचक-

---

इत्यादिवत्पूर्ववाक्यशेषो न नियमविध्यन्तरमिति भ्रमितव्यमित्याह—तदिति ॥ व्याकरण-मित्यर्थः। नियमविधिफलमाह—साधूनिति ॥ यद्वा एकस्मिन्नर्थे द्वयोः पक्षप्राप्तत्वेऽपि एकस्मिन्वाक्ये सुशब्दापशब्दयोः समुच्चित्यापि प्राप्तिसम्भवेनास्य विधेः 'पञ्च पञ्चनखा भक्ष्याः' इत्यस्येव परिसङ्ख्याविधित्वावश्यकत्वेन तत्र स्वार्थहान्यादिकल्पनामपेक्ष्य परार्थवाचकपदघटित-विधिरेव कल्पयितुं युक्त इति निषेधवाक्यमुदाहरति—नासाधूनिति ॥ मूलमिति ॥ उपपत्ति-रित्यर्थः। सा च नियमस्वरूपे कार्ये वोपयोगाद्वक्तव्या। कार्यं च दृष्टमदृष्टं वा। अदृष्टमपि क्रतुसम्बन्धि स्वतन्त्रं वा। नाद्यः, असाधूनामपि प्रयोगसम्भवात्स्वरूपासिद्धेः। न द्वितीयः, तैरर्थाभिधानसम्भवात्। न तृतीयः, व्याकरणस्य क्रतुप्रकरणपाठाभावेनानारभ्याधीतत्वाभावेन च तत्कल्पितविधेः क्रतुविशेषगामितायाः प्रकृतिगामिताया वाष्टकादिविधेरिवासम्भवात्। न चतुर्थः, आचारानुमापकत्वेन ततोऽप्यधस्तनीं कक्ष्यामारूढाद्व्याकरणात्कल्पितस्य वाक्यस्य स्मृतिकल्पितभोजनाश्रितदिङ्नियमविधितुल्यत्वायोगेन तद्वत् स्वतन्त्रापूर्वजनकत्वे मानाभावा-दिति भावः। नन्वाचारस्मृतिद्वारा आत्मतुष्ट्यानुमितश्रुतिरिव व्याकरणेनाप्यनुमितश्रुतिः किं न स्यादित्यत आह--प्रतिगवेति ॥ 'गोशब्दं प्रयुञ्जीत' 'घटशब्दं प्रयुञ्जीत' इति रीत्या अनन्त-श्रुतिकल्पने गौरवापत्तेः, प्रतिपदार्थमसाधुशब्दानामत्यन्तानन्त्येन प्रतिपदार्थं निषेधकल्पनेऽ-त्यन्तगौरवापत्तेश्चेत्यर्थः। ननु 'साधुशब्दान् प्रयुञ्जीत नासाधुशब्दान्' इत्येकश्रुतिकल्पने न तदानन्त्यप्रयुक्तं गौरवमित्यत आह—साधुत्वस्येति ॥ पूर्ववदिति ॥ प्राच्यत्वादिवदित्यर्थः। अनेनानुगतप्राच्यत्वाद्यभावेन यथा होलाकादीनां न व्यवस्था तथा गवादिशब्दानां प्रयोगेऽपि न व्यवस्थेति प्रत्यवस्थानात्सङ्गतिरित्यपि सूचितम्। एवमसाधुत्वस्यापि साधुत्ववदेव निर्वचनासम्भ-वेन निषेधकल्पनं न सम्भवतीति भावः। करचेष्टास्वधुनातनसङ्केतेषु चातिव्याप्तेराह—अनादीति ॥ वाचकत्वं नाम शक्तिः। सा च सङ्केतत्वाविशेषादिदानीन्तनसङ्केतेष्वपीत्यतिव्याप्तेः सत्यन्तम् ॥ गाव्यादिष्विति ॥ तत्राप्यनादिवाचकत्वसत्त्वादतिव्याप्तिरिति भावः। ननु शक्तत्व-रूपवाचकत्वानङ्गीकारान्न गाव्यादिशब्देष्वतिव्याप्तिः। न च तर्हि गाव्यादिशब्दप्रयोगः, ततः अर्थप्रत्ययश्च कथं स्यादिति वाच्यम्; गौणत्वेन तदुभयोपपत्तेरित्यत आह—वाचकत्वाभाव इति ॥ गौणत्वस्येति ॥ स्ववाच्यनिष्ठगुणसदृशगुणवद्बोधकत्वरूपस्य गौणत्वस्य वाचकत्वघटित-त्वादिति भावः। स्वोक्तं निर्मूलत्वं पूर्वपक्षबीजमुपसंहरति-अत इति ॥ अत्र पार्थसारथिः, 'निर्मूल-

त्वाविशेषात् न व्याकरणेन नियमस्सम्भवतीति प्राप्ते—

त्वाद्विगीतत्वात् नैष्फल्याद्वेदबाधनात् । पूर्वापरविरोधाच्च नास्य प्रामाण्यसम्भवः ॥ तस्मादेतेन शब्दानां प्रयोगो न नियम्यते । तैरर्थप्रत्ययात्सर्वे प्रयोज्या न व्यवस्थया ॥' इति । अयमभिप्रायः। निर्मूलत्वमुपपादितम् । विगीतत्वादित्यस्य विरोधादित्यर्थः । सूत्रकारो हि सुशब्दनिष्पत्तिरेव व्याकरणस्य प्रयोजनं मनुते । वार्तिककारस्तु व्याकरणसंस्कृतपदज्ञानपूर्वकप्रयोगात्पारलौकिकफलसिद्धिं ब्रूते । भाष्यकारस्तु व्याकरणसंस्कृतपदज्ञानात्स्वर्गमाचष्ट इति त्रयाणां व्याकरणप्रवर्तकानां परस्परविरोधान्न व्याकरणं प्रमाणम् । उपलक्षणमिदम् । भाष्ये बहुशो वार्तिकनिराकरणेन विरोधस्य स्पष्टत्वात् । तथा निष्फलत्वादपि न व्याकरणं प्रमाणम् । अथ 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति वैयाकरणोक्तप्रयोजनसम्भवान्न दोषः । तथा हि 'उद्ग्राभं च निग्राभञ्च' इत्यादौ भाषायामविद्यमानाक्षराणि पठ्यन्ते । तत्र दृश्यन्ते च लोपागमविकाराः । तान् वैयाकरणो निश्चित्य वेदं रक्षति । ततो वेदरक्षा एकं प्रयोजनम् । तथा सौर्यादौ 'सूर्याय जुष्टं निर्वपामि' इत्यूहः । अत एव 'ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यः' इत्यागमोऽपि व्याकरणस्य प्रयोजनम् । प्रयोजनशब्दः प्रयोजकपरः । लघ्वित्यस्य, लाघवमित्यर्थः । प्रतिपदसंस्कारापेक्षया संज्ञापरिभाषाभ्यां लघूपायेन बहुशब्दस्वरूपज्ञानात् व्याकरणस्य लाघवमपि प्रयोजनम् । एवमसन्देहोऽपि । 'स्थूलपृषतीमनड्वाहीमालभेत' इत्यादौ कर्मधारयबहुव्रीहिसन्देहे पूर्वपदप्रकृतिस्वरेण बहुव्रीहिनिश्चयो व्याकरणाद्भवतीत्यादिरीत्या व्याकरणं सार्थकमिति चेन्न; तेषामन्यथासिद्धत्वात् । तथा हि-वेदतदर्थाभिज्ञतदर्थानुष्ठाननिरताशिष्टत्रैवर्णिकपरम्परोपदिष्टस्य एकाक्षरविपर्यासेऽपि प्रत्यवायभीतगुरुपरम्परोपदिष्टपदाक्षरगणनापूर्वकं धार्यमाणस्य वेदस्य व्याकरणेन रक्षापेक्षाभावात् । सौर्यादौ 'सूर्याय' इत्याद्यूहस्यापि न व्याकरणापेक्षा । पण्डितस्याध्वर्योः प्रकृतिविकृतियागकुशलस्यातिदेशप्राप्त 'अग्नये' इति मन्त्रस्य, विकृतिसमवेतार्थत्वाय सूर्यपदप्रक्षेपरूपोहस्य स्वतस्सिद्धत्वात् । उदाहृतागमस्य स्मृतित्वेन तत्रत्यषडङ्गशब्दस्य श्रुतिलिङ्गादिषट्प्रमाणपरत्वेन व्याकरणादिषडङ्गपरत्वाभावात् । अनेकोत्सर्गापवादजटिलस्य व्याकरणस्य लघूपायत्वं कुतस्त्यम्; 'स्थूलपृषतीं' इत्यत्रापि पूर्वपदप्रकृतिस्वररूपत्वमध्यापकसम्प्रदायसिद्धमिति तत्रैकार्थविशेषस्याप्यवगन्तुं शक्यत्वान्न व्याकरणस्योपयोगं पश्यामः। एवं वेदबाधादपि न व्याकरणं प्रमाणम् । व्याकरणे हि 'दृष्टं साम' इत्यधिकृत्य 'कलेर्ढक्' इति कलिना दृष्टमित्यर्थे कालेयशब्दो व्युत्पादितः । तथा वामदेवेन दृष्टं साम इत्यर्थे 'वामदेवाड्ड्यड्ड्यौ' इति वामदेव्यादिशब्दो निष्पादितः। वेदे तु 'यदकालयत्, तत्कालेयस्य कालेयत्वं' इति कालनक्रियां निमित्तीकृत्य कालेयशब्दो व्युत्पादितः । तथा 'आपो वा ऋत्वियमार्छंस्तासां वायुपृष्ठे व्यावर्तत, ततो वामं वसु समभवत्तस्माद्वामदेव्यम्' इति रजो धर्मं प्राप्ताभिरद्भिः वायोस्सङ्गमे सति उत्तमं वसुजातम्। तच्च देवतासम्बन्धि जातमिति वामदेवाख्यं सामेति व्युत्पादितम् । ततश्च वेदविरोधाद-

प्रयोगप्रत्यययोस्साधुशब्दापभ्रंशजानां गाव्यादिशब्दानां साधुशब्दोपस्थापनद्वारा उपपत्तेः न वाचकत्वकल्पकता, अनेकशक्तिकल्पनापत्तेः । इदानींतनानां च शक्तिभ्रमात्तौ प्रयोगप्रत्ययौ । न च घटकलशादिपदवद्विनिगमनाविरहः; पाणिन्यादिप्रणीतव्याकरणस्यैव नियामकत्वात् । न चामूलत्वम् ; प्रयोगनियमे साधूनेव प्रयुञ्जीतेत्येवंविधाया एकस्या एव श्रुतेर्मूलत्वात् । साधुत्वं चानादिवाचकत्वम् , अनप-

---

प्रमाणम् । एवं पूर्वापरविरोधादप्यप्रमाणं व्याकरणम् । अर्थप्रतीत्यर्थत्वात् वाक्यप्रयोगस्य अर्थप्रतीतेश्च वाक्येनैव जायमानतया वाक्यमेव व्याकरणेन संस्कर्तव्यतया प्रतिज्ञातम् । 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके तथा प्रतिज्ञानात् । ततश्च यथाप्रतिज्ञं वाक्याव्याकरणात् पदव्याकरणाच्च पूर्वापरविरोधः स्पष्टः । न चार्थप्रयुक्तशब्दव्याकरणस्यैव प्रतिज्ञाततया वाक्यघटकीभूतशब्दानामप्यर्थवत्त्वात्पदव्याकरणमपि प्रतिज्ञातमेवेति वाच्यम् ;वाक्यघटकीभूतशब्दानामनर्थकत्वात् । तदुक्तं हरिणा 'ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥' इति । न च तथापि पदानां वाक्यावयवत्वात्पदसंस्कारद्वारा वाक्ये संस्कारो युज्यत इति वाच्यम् ; न पदसमुदायो वाक्यं, किं तु अखण्डमन्यदेव स्फोटरूपमिति वाक्येषु पदाभावेन तत्संस्कारद्वारा वाक्यसंस्कारासम्भवात् । तस्मान्न व्याकरणं प्रमाणमिति । अधिकं वार्तिक एव प्रपञ्चितमिति पूर्वः पक्षः । यदुक्तं पूर्वपक्षे साधुशब्दवदसाधुशब्दस्यापि लोके प्रयोगात्तज्जन्यशाब्दबोधस्यापि सर्वानुभवसिद्धत्वाच्च तेषामपि वाचकत्वाविशेषान्न व्याकरणेन नियमः सम्भवतीति तत्परिहरति—**प्रयोगप्रत्यययोरिति** ॥ **साधुशब्दापभ्रंशजानां**—साधुशब्दोच्चारणाशक्तिजानाम् । **तच्छब्दोपस्थापनद्वारा**-साधुशब्दोपस्थापनद्वारा । तथा चापशब्दैस्साधुशब्दोपस्थितौ सत्यामुपस्थितसाधुशब्दैरेवार्थोपस्थितिद्वारा शाब्दबोधोपपत्तेः नापशब्दस्य बोधजनकत्वं, सुतरां वाचकत्वं नास्तीत्यर्थः । तत्र हेतुमाह—**अनेकेति** ॥ 'अन्यायश्चानेकार्थत्वम्' इति न्यायादिति भावः । साधुशब्दज्ञानाभाववतः कथं प्रयोगप्रत्ययावित्यत आह—**इदानींतनानामिति** ॥ आधुनिकानामित्यर्थः । **तौमप्रयोगप्रत्ययौ** । विनिगमनाविरहं निरस्यति—**न चेति** ॥ **पाणिन्यादीति** ॥ आदिना पतञ्जलि-कात्यायनयोः परिग्रहः, न तु चाक्रवर्मणादीनाम् । तेषां शिष्टैस्त्रैवर्णिकैर्ब्रह्मयज्ञादिष्वनध्ययनेन वेदाङ्गत्वाभावनिश्चयात् । तेन द्वयशब्दस्य व्याकरणान्तरेण सर्वनामसंज्ञासिद्धावपि पाणिनीयव्याकरणविरोधात् द्वयेषामित्यस्यापशब्दत्वेनाहिताग्नेस्तदुच्चारणे भवेदेव सारस्वतीष्टिः । पूर्वोक्तं निर्मूलत्वं निरस्यति—**न चेति** ॥ **प्रयोगनियमे**-'साधूनेव प्रयुञ्जीत' इति नियमे । साधुत्वस्य अपभ्रंशसाधारण्यनिरासायाह—**साधुत्वं चेति** ॥ **अनादिवाचकत्वमिति** ॥ अनादीति भावप्रधानो निर्देशः । गगनादावतिव्याप्तिवारणाय शब्दत्वमपि निवेश्यम् । अपभ्रंशेष्वतिव्याप्तिवारणायानादित्वनिवेशः । तेषां सादित्वान्न दोषः । तथा च हरदत्तः 'अनिदंप्रथमाश्शब्दाः साधवः परिकीर्तिताः' इति । हरिरपि 'अनपभ्रष्टताऽनादि यद्वाभ्यु-

**भ्रष्टत्वं वा, व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्या जातिर्वा, प्रमितवृत्त्या अर्थप्रत्याय-**

दययोग्यता। व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता॥' इति। ननु नामकरणसङ्केतितडित्थादिपदेष्वव्याप्तिः, तेषामनादित्वाभावात्। किञ्च रथन्तरादिगीतिषु स्तोभेषु चातिव्याप्तिः, तत्राप्युक्तलक्षणसत्त्वादित्यत आह—**वाचकत्वं वेति**॥ पुत्रादिनामकरणे गृह्येषु नियमश्रुतेः अनादिशब्दता संज्ञास्वपि नैव विरुध्यत इति हरिकारिकोक्तरीत्याधुनिकनाम्नामपि वाचकत्वान्नाव्याप्तिः। न वा गीत्यादिष्वतिव्याप्तिः। तेषामर्थशून्यत्वेन वाचकत्वाभावात्। तथा च अनादित्वे सति शब्दत्वमेकं लक्षणं, वाचकत्वमित्यपरमिति लक्षणद्वये तात्पर्यं बोध्यम्। वस्तुतस्तु अनादिवाचकत्वमित्येकमेवेदं लक्षणं मूलानुगुणम्। न चानादिपदवैयर्थ्यं, आधुनिकसङ्केतितानां साधुत्वं नास्तीति पक्षे तत्रातिव्याप्तिवारकतया तत्सार्थक्यात्। तत्साधुत्वे तु उक्तरीत्या लक्षण द्वयमेवेति ध्येयम्। नन्वेवं स्तोभानां वाचकत्वरूपसाधुत्वाभावेनासाधुत्वमेव स्यात्। न चेष्टापत्तिः, स्तोत्रकारिणां स्तोभप्रयोगे सारस्वतीष्टिप्रसङ्गादिति चेन्न; 'यद्येकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयात्' इति विहितस्य प्रायश्चित्तस्य क्रत्वर्थयूपोच्छ्रयणादिप्रयुक्तस्पर्शादावप्रवृत्तिवत् प्रकृतेऽपि क्रत्वर्थविधिना तदुच्चारणे असाधुशब्दप्रयोगनिषेधाप्रवृत्तेः। यद्वा, न केवलं साधुत्वाभाव एवासाधुत्वं, घटादावतिव्याप्तेः। नापि शब्दत्वविशेषितः, सामस्वतिव्याप्तेः। नापि वर्णत्वविशेषितः, 'जबगडदश्' इत्यादावतिव्याप्तेः। नाप्यर्थप्रत्यायकत्वविशेषितः, टिघुभादिष्वतिव्याप्तेः। तेषां साध्वसाधुबहिर्भूतत्वात्। तदाह हरदत्तः 'यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः। कथं नु तासां साधुत्वं नैव तास्साधवो मताः॥ अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता। हस्तचेष्टा यथा लोके तथा सङ्केतिता इमाः॥ नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत्।' इति। ततश्चापभ्रष्टत्वमेवासाधुत्वमिति न स्तोभानामपशब्दत्वम्। अतो न सारस्वतीष्टिः। नन्वेवमपि 'देवाद्याः संस्कृतं ब्रूयुः प्राकृतं किन्नरादयः। पैशाच्यादि पिशाचाद्याः मागधं हीनजातयः॥' इति स्मरणेन किन्नरादिव्यवह्रियमाणभाषाणामपि कात्यायनादिव्याकरणसंस्कृतत्वेन तेषामपि वाचकत्वस्वीकारात् तत्रातिव्याप्तिरित्यत आह—**अनपभ्रष्टत्वं वेति**॥ 'हरिद्रादीनां रो लः' इत्यादिसूत्रैः कात्यायनेनैव तेषां संस्कृतापभ्रंशजत्वप्रदर्शनान्नातिव्याप्तिरिति भावः। डुमाद्यनर्थकवर्णेष्वव्याप्तेराहेति केचित्; तन्न, तेषामपि तर्जनादिवाचकत्वस्य कोशप्रसिद्धत्वादनर्थकत्वव्यवहारस्य तद्घटितवाक्यार्थानन्वयितामात्रेणोपपत्तेः। नन्वस्य लक्षणस्य स्तोभेष्वतिव्याप्तिः, अर्थप्रत्यायकत्वविशेषणे टिघुभादिसंज्ञास्वतिव्याप्तिः। तासां लक्ष्यत्वस्वीकारेऽपि पचन्तीत्यादावतिव्याप्तिः, तेषामसाधुताया वैयाकरणसम्मतत्वादत आह—**व्याकरणेति**॥ वज्रत्वमाणिक्यत्वादिरत्नत्वव्याप्यजातीनां, षड्जत्वऋषभत्वादिध्वनित्वव्याप्यजातीनां च चक्षुश्श्रोत्रसन्निकर्षमात्रेणाग्रहणेऽपि तत्तदभ्यासजनितसंस्कारसाचिव्येन ग्रहणदर्शनात्, प्रकृतेऽपि साधुत्वजातेश्शास्त्राभ्यासजनितदृढसंस्कारसध्रीचीनश्रोत्रग्राह्यत्वात्।

क्रत्वं वेति कौस्तुभ एवातिक्षुण्णम् । तदभावश्चासाधुत्वम् । प्रत्यक्षैव श्रुतिः 'न म्लेच्छित वै नापभाषित वै म्लेच्छो ह वा एष यदपशब्दः' इत्यादिर्मूलम्। अयं च निषेधः प्रकरणात् ज्योतिष्टोमाङ्गम् । यज्ञमात्रेऽपि च निषेधः, 'याज्ञे कर्माणि नियमोऽन्यत्रानि-

---

'न हि वचिरन्तिपरः प्रयुज्यते' इति कात्यायनवचनान्न वचन्त्यादावतिव्याप्तिरिति भावः । नन्वेवमपि न गोणीशब्दनिरासः; 'जानपदकुण्डगोण-' इत्यादिना गोणशब्दात् ङीषो विधानेन तादृशजातिमत्त्वावश्यम्भावादित्यत आह—**प्रमितेति** ॥ यत्पदार्थोपस्थितिजनकवृत्तिजातीय-विषयताविशेषो यस्मिन् शब्दे तस्मिन्नर्थे तस्य साधुत्वमित्यर्थः । आवपने शक्तो गोणीशब्द इत्याकारकवृत्तिज्ञानस्य आवपनपदार्थोपास्थितिं प्रत्येव कारणत्वादावपने साधुरेव गोणीशब्दः, न गवादाविति भावः । वर्णशब्दः ककारादौ शक्त इति ज्ञांनीयविषयताशालिनां ककारादि-शब्दानां खकारादिषु साधुत्ववारणाय विषयताविशेष इति । शक्तत्वनिष्ठप्रकारतानिरूपित-विशेष्यतारूप इत्यर्थः ॥ **कौस्तुभ इति** ॥ शब्दकौस्तुभ इत्यर्थः । 'अनपभ्रष्टतानादिः यद्वाभ्युदययोग्यता । व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता ॥' इति वाक्यपदीय-कारिकाव्याख्यानावसरे सर्वेषां पक्षाणां शब्दकौस्तुभे पस्पशाह्निके प्रतिपादनात् ॥ **तदभावः**—अनपभ्रष्टत्वाभावः, अपभ्रष्टत्वमिति यावत् ॥ **प्रत्यक्षैवेति** ॥ एवकारेण पूर्वोक्तप्रयोगनियमो न व्याकरणेनानुमेय इति सूचितम् । **न म्लेच्छित वै**—म्लेच्छशब्दं न प्रयुञ्ज्यात् । **नापभाषित वै**—**अपभाषितं**-अपशब्दं, न प्रयुञ्जयादित्यर्थः। म्लेच्छशब्दार्थं श्रुतिरेवाह—**म्लेच्छो ह वा इति** ॥ **प्रकरणादिति** ॥ अनेन क्रत्वर्थत्वं न सम्भवतीति पूर्वोक्तं निरस्तम् ॥ **ज्योतिष्टो-माङ्गमिति** ॥ दर्शपूर्णमासयोस्तु 'नानृतं वदेत्' इति प्राकरणिकवचनादपशब्दवर्जनस्य क्रत्वर्थत्वसिद्धिः । ततश्च तद्विकृतावपि चोदकेन तत्प्राप्तिरिति भावः । अयमाशयः । अनृतं द्विविधं; शब्दानृतं अर्थानृतं चेति; तथा वार्तिके प्रतिपादनात् । 'तत्र वाक्यमिदं सत्यम्, असत्यं त्वद्वचः' इत्यादौ शब्दे, 'सत्यं ज्ञानमनन्तं ब्रह्म' 'यत्र विसर्गो मृषा' इत्यादावर्थे च सत्या-नृतशब्दप्रयोगात् । तदुभयानुगतमबाधितत्वं सत्यत्वं, बाधितत्वमनृतत्वम् । व्याकरणेन गाव्यादि-शब्दबाधनात्तेषामनृतत्वं, गवादेरबाधितत्वं च । अतो न सकृदुच्चारितव्युत्पत्तिविरोधः । शिलोञ्छवाणिज्यादिवृत्तिषु 'सत्यानृताभ्यां जीवेत' इति प्रयोगो मन्वादीनां गौणो वा, पारिभाषिको वेति द्रष्टव्यम् । नन्वेवमग्निहोत्रे गृहमेधीयादौ चानृतवर्जनं न स्यादित्यत आह—**यज्ञमात्र इति** ॥ तत्र महाभाष्यसम्मतिमाह—**याज्ञे कर्मणीति** ॥ 'स एष यज्ञः पञ्चविधः, अग्निहोत्रं दर्शपूर्णमासौ' इत्यादिवचनादग्निहोत्रस्यापि यज्ञत्वात् 'यज्ञानां जपयज्ञोऽस्मि' इति वचनेन जपस्यापि तथात्वात् गृहमेधीयादेरपि यज्ञसम्बन्ध्यङ्गघटितत्वेन 'याज्ञे' इत्यणन्त-यज्ञशब्देन सङ्ग्रहाच्च सर्वत्र प्रतिषेधो भवतीति भावः । न चैवं तत्तत्प्रकरणपठितवचन-वैयर्थ्यम् । प्रत्युत मित्रविन्दादिसाप्तदश्यन्यायेनोपसंहारेऽग्निहोत्रादौ निषेधाप्रवृत्तितादवस्थ्यमिति

यमः'इति महाभाष्याद्यनुसारात् । साधुप्रयोगनियमात् परं फलोदय इत्यपि 'एकश्शब्दस्सम्यग्ज्ञातस्सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति' इति वचनात् । अत्र हि प्रयोगाश्रितः साधुनियमः फलोद्देशेन विधीयते । रागप्राप्तस्यापि साधुप्रयोगस्य 'तस्मादियं व्याकृता वागुद्यते'[1] इति वचनादाश्रयत्वसिद्धिरिति स्पष्टं कौस्तुभे । गवादय एव साधवः न गाव्यादय इति साधुस्वरूपनियमस्य तु अनादिप्रयोगपरम्परैव मूलम् । अतः प्रमाणं व्याकरणम् । यत्तु--न्यायमूलकं स्फोटादि तत्रोच्यते श्रुतिविरुद्धं च तन्न्यायश्रुतिविरोधे कामं भवत्वप्रमाणम् ॥ ८ ॥

---

वाच्यम्; 'याज्ञे कर्मणि' इति स्मृतिसार्थक्यायाग्निहोत्रादिप्रकरणपठितत्वेनैव कतिपयवाक्यानां मूलत्वेनानुमानात् । स्मृत्या श्रुतिवैयर्थ्यस्य श्रुत्या स्मृत्युपसंहारस्य चान्याय्यत्वात् ॥ **अन्यत्र**—यज्ञाद्बहिः। **अनियमः**--'नासाधून् प्रयुञ्जीत'इति प्राकरणिकनिषेधस्याभावः। म्लेच्छभाषानिषेधः स्मार्तस्तु प्रवर्तत एव । देशभाषानिषेधोऽपि प्रवर्तत इति कैश्चिदुक्तं निरस्यति—**महाभाष्यादीति** ॥ आदिना शिष्टाचारपरिग्रहः । 'नानृतं वदेत्' इति पुरुषार्थनिषेधस्तूक्तमहाभाष्यानुसारात् अर्थानृतैकपरः । अत एव 'न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नापार्थकं वदेत् । सङ्कीर्णानभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥' इति नियमविधिरुपपद्यते । तस्माद्यज्ञाद्बहिरपि भाषानिषेधो न प्रवर्तत एव । महाभाष्यशिष्टाचारविरोधादिति भावः । म्लेच्छभाषादिकं तु 'नोच्चरेद्यावनीं भाषां प्राणैः कण्ठगतैरपि' 'म्लेच्छभाषां न शिक्षेत' इत्यादिवचनाद्यावज्जीवं नानुमतमेवेति सर्वशास्त्रसम्मतः पन्थाः । संयोगपृथक्त्वन्यायेन पुरुषार्थत्वमपीत्याह--**साधुप्रयोगेति** ॥ तत्र प्रमाणमाह—**एकश्शब्द इति** ॥ **एकः**--एकोऽपि । **शब्दः, सम्यग्ज्ञातः**--प्रकृतिप्रत्ययादिविभागज्ञानद्वारा ज्ञातः । **सुष्ठु प्रयुक्तः**--क्रियाकारकादियोजनया प्रयुक्तः, स्वर्गे लोके कामधेनुरिव फलानि ददातीत्यर्थः । **अत्र**—वाक्ये । **प्रयोगाश्रित इति** ॥ ज्ञानपूर्वकप्रयोगाश्रित इत्यर्थः । तथा चानेन वचनेन ज्ञानपूर्वकप्रयोगमाश्रित्य फलोद्देशेन साधुनियमो विधीयते । प्रयोगस्य ज्ञानमन्तरेणासम्भवात् । 'सम्यक् ज्ञातः' इत्यनुवादः । ज्ञानादेव फलमिति तु भाष्याशयः; 'य एवं वेद' इति प्रायेण सर्वत्र श्रवणात् । कर्मणां ज्ञानादनुष्ठानाच्च फलमिति तु श्रुतिस्वरसः । आश्रयत्वमुपपादयति--**तस्मादिति** ॥ **परम्परैवेति** ॥ एवकारेण स्वरूपनियमोऽपि न व्याकरणाधीन इति ध्वनितम् । तर्हि कथं व्याकरणप्रामाण्यम्; अत आह--**अत इति** ॥ परम्परानुमापकतयेत्यर्थः । **स्फोटादीति** ॥ आदिना व्यक्तिवादपरिग्रहः ॥ **श्रुतिविरुद्धं चेति** ॥ 'यदकालयत्तत्कालेयस्य कालेयत्वम्' इति श्रुतिविरुद्धम् 'कलेर्ढक्' इत्यादिकमित्यर्थः । स्फोटनिरासः चोदनापादे आकरे द्रष्टव्यः । यत्तु पूर्वपक्षे विगानादप्रामाण्यमुक्तं, तन्न; पाणिनिना सर्वज्ञेन शब्दापशब्दनिरूपणेन लोको-

---

१. तै. सं. ६. ४. ७.

पकारार्थं शास्त्रं प्रणयता फलस्यानुक्तत्वेऽपि विश्वजिन्न्यायेन स्वर्गार्थत्वं सम्भवतीत्यभिप्रायेण भाष्योक्तरीत्या स्वर्गार्थत्वसम्भवेन विरोधाभावात्। वार्तिककारेणापि तमेवार्थमभिप्रेत्य व्याकरणस्य उपयोगाय ज्ञानपूर्वकसुशब्दप्रयोगात् फलसिद्धिरित्युक्तावपि सर्वेषां स्वर्गार्थित्वे एकवाक्यत्वस्य स्पष्टत्वात्। अत एव न नैष्फल्यमपि, साधुनियमस्य स्वर्गार्थत्वात्। तत्र च प्रमाणमुक्तमेव 'एकःशब्दः' इत्यादि। एवं रक्षोहादिकमपि प्रयोजनं सम्भवत्येव। न चाध्येतृपरम्परया रक्षादिसिद्धिः। अध्यापकानां प्रायेणार्थानभिज्ञतया क्वचित् 'अहोरात्राणि विदधत्' इत्यत्र निदधदिति पाठस्यैव दर्शनेन 'यथाभागमावृषा ईषते' इत्यत्र ईषते इत्यपपाठ इति सूत्रव्याख्यानेषु स्पष्टमुक्तत्वेन च पाठस्याविश्वसनीयतया पाठवशेन रक्षादिनिर्णयासम्भवात्। पण्डितानामध्येतॄणां सन्देहनिवर्तकत्वसम्भवेऽपि तैर्व्याख्याकरणानुसारेणैव निर्णयकरणान्न दोषः। एतेन कुशलाध्वर्युकर्तृकत्वेन यागे ऊहाद्युपपत्तेर्न व्याकरणापेक्षा इति निरस्तम्। कुशलत्वस्य व्याकरणाभिज्ञत्वरूपत्वात्। एवं 'स्थूलपृषतीम्' इत्यत्र पूर्वपदप्रकृतिस्वरस्य सम्प्रदायसिद्धत्वेऽपि बहुव्रीहिनिर्णयस्य व्याकरणैकसाध्यत्वात् व्याकरणस्यावश्यकता। यदपि लाघवं नास्तीत्युक्तं, तदपि न; सुप्तिङाद्येकजातीयप्रत्ययकल्पनेन कोटिशब्दानुगमदर्शनेन लाघवानपायात्। यदपि सूत्रवार्तिकयोर्भाष्ये प्रत्याख्यानेन विरोध उक्तः, सोऽपि नाप्रामाण्यमापादयति; प्रकारान्तरेण तत्प्रयोजनसम्भवेन सूत्रवार्तिकयोर्नातीव प्रयोजनमित्यत्रैव भाष्यतात्पर्यात्। यदपि पूर्वापरविरोधादप्रामाण्यमुक्तं, तदपि न; वाक्यस्य पदसमूहरूपत्वाङ्गीकारेण पदद्वारा वाक्यस्यैव संस्कृतत्वेन विरोधाभावात्। अन्यथा अगृहीतशक्तिकपदघटितवाक्यादपि शाब्दबोधापत्तेः। एवं 'बभूव' इति रूपस्य प्रथममध्यमोत्तमेषु रूपेषु त्रिष्वपि साधुत्वेन व्याकरणं विना पाण्डित्यं व्यर्थमेव। एवं पङ्कजशब्दात् पद्मं बुध्यन्ति जनाः। कथं पङ्कजत्वमिति विचारे व्याकरणमेव शरणम्। तस्मात् व्याकरणं विना जगदान्ध्यमेव। तत्र श्रुतिरपि 'उत त्वः पश्यन्न ददर्श वाचं उत त्वः शृण्वन्न शृणोत्येनाम्। उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥' इति। अयमर्थः। त्वः-कश्चित्, वाचं, पश्यन्नपि न ददर्श। उत-अपि तु, शृण्वन्नपि न शृणोति एनां वाचम्। त्वस्मै—कस्मैचित्। तन्वं-तनूम्। उशती कामयमाना जाया। सुवासाः—शोभनवस्त्रवती। वस्त्रशब्दोऽलङ्कारसामान्यपरः, छत्रिन्यायात्। पत्य इव, विसस्रे प्रकाशयतीत्यर्थः। 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥' अयमर्थः। तितउना-चालिन्या। 'चालिनी तितउः पुमान्' इत्यमरः। पुनन्तः—संस्कुर्वन्तः, ये पुरुषाः। धीराः—पण्डिताः। वाचं, अक्रत--कृतवन्तः। अत्र—तेषु पुरुषेषु। सखायः—सर्वप्राणिहितकराः, देवाः। सख्यानि - प्रीतिविशेषान्। जानते--प्रीतिं कुर्वन्तीत्यर्थः। भद्रा—शोभना। लक्ष्मीः, अधिवाचि---तेषां वाचि, तैर्देवैर्निहितेत्यर्थः। एतौ मन्त्रौ ऋग्वेदाष्टमाष्टके

(९-१०)—प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात् ॥ २९ ॥ अद्रव्यशब्दत्वात् ॥ ३० ॥ अन्यदर्शनाच्च ॥ ३१ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३२ ॥ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३३ ॥ तदर्थत्वात्प्रयोगस्याविभागः ॥ ३४ ॥

---

द्वितीयाध्याये पठ्येते । तत्र प्रथममन्त्रे साधुशब्दाभिज्ञप्रशंसयापशब्दप्रयोक्तृनिन्दया च साधूनेव प्रयुञ्जीत नासाधूनिति नियमः स्पष्टं प्रतीयते । द्वितीयमन्त्रेण व्याकरणाभिज्ञस्यैव देवताप्रीतिशुभवाक्यादिप्रतिपादनात् व्याकरणज्ञानावश्यकता प्रतीयते । एवं स्मृतिरपि 'यस्तु व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥' इति । ततश्च बहुश्रुतिस्मृतिभिः व्याकरणस्यावश्यकता द्रष्टव्या । किञ्च 'षडङ्गो वेदोऽध्येयः' इति विधिना वेदवत् अङ्गानामप्यध्येतव्यत्वप्रतिपादनात् नित्यत्वं व्याकरणाध्ययनस्य । न च श्रुतिलिङ्गादिषट्प्रमाणपरत्वं, विनिगमनाविरहेण शब्दान्तरादिप्रमाणपरत्वापत्तेः, पाञ्चमिक-श्रुत्यर्थादिपरत्वापत्तेश्च, 'शिक्षा व्याकरणं छन्दः' इत्यादिकोशविरोधापत्तेश्च । तस्मात् व्याकरणं धर्माधर्मयोः प्रमाणमिति सिद्धम् । अधिकमाकरे द्रष्टव्यम् । अत्रायं निष्कर्षः । भाषाशब्दानामपि प्रमितवृत्त्या अर्थप्रमापकत्वात्साधुत्वमेव, नासाधुत्वम् । अत एव सर्वदेश-स्थशिष्टैस्तत्तद्देशीयभाषया श्रुतिस्मृतिपुराणाद्यर्थप्रतिपादनं सङ्गच्छते । अत एव च सर्व-भाषास्वपि भाषामन्त्रा भगवतागस्त्येन दृष्टाः सर्वलोकप्रसिद्धा दृश्यन्ते । यद्यपि प्रत्यन्तदेशीय-भाषायामपि भाषामन्त्रा दृश्यन्ते, तद्भाषायां प्रमितवृत्त्या अर्थप्रमापकत्वमप्यस्ति । तथापि 'नोच्चरेद्यावनीम्' इति, 'म्लेच्छभाषां न शिक्षेत' इति, 'यदङ्गं यवनस्पृष्टं तदङ्गं परिवर्जयेत्' इति च श्रुतिस्मृतिपुराणादिषु बहुशो निन्दितत्वात् शिष्टापरिग्रहाच्चासाधुत्वमेव । ततश्च भाषा-शब्देषु प्रत्यन्तदेशीयभाषोच्चारण एव सारस्वतीष्टिः, नान्यत्र । अत एव संस्कृतभाषानभिज्ञास्त्रै-वर्णिका बहुशः श्रौतस्मार्तकर्मानुष्ठाननिरताः साधवः सर्वदेशेषूपलभ्यन्ते । तस्माद्देशभाषो-च्चारणे न कोऽपि दोषः । यवनभाषानिषेधः शिष्टत्रैवर्णिकापरिगृहीतहूणकिरातादिभाषास्वपि द्रष्टव्य इत्यलमधिकेन । सूत्रार्थस्तु, **प्रयोगस्य**—साधुशब्दप्रयोगस्य । **उत्पत्तेः, अशास्त्रत्वात्**—शास्त्रविहितत्वाभावात् । **शब्देषु व्यवस्था न स्यात्**—साधुशब्द एव प्रयोक्तव्यो नापशब्द इति व्यवस्था न स्यात् ॥

**प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात्** ॥ व्याकरणाधिकरणेन लोकवेदा-धिकरणस्य न सङ्गतिः, किन्तु आकृत्यधिकरणस्यैव । अत एव व्याकरणाधिकरणानन्तरं तत्सङ्गतत्वादाकृत्यधिकरणाङ्गसन्देहमुपन्यस्य पश्चात् लोकवेदाधिकरणं भाष्यादौ प्रवर्तित-

वाचकशब्दप्रसङ्गाद्वाच्यं किं घटत्वादिजातिः उत व्यक्तिरिति चिन्ता । तदर्थं च लोकवेदयोश्शब्दानामन्यत्वं उत नेति चिन्तनीयम् । अन्यत्वे ह्युपायाभावेन वैदिकशब्दशक्तिग्रहस्यासम्भवात् नाद्या चिन्ता आरम्भणीया । एकत्वे तु लोके वृद्धव्यवहारानुसारेण गृहीता शक्तिर्वेदेऽपि फलिष्यतीति युक्ता आद्या चिन्ता । तत्र वर्णभेदेऽपि स्वरच्छान्दसवर्णागमलोपविकारानध्यायादिधर्मभेदात् सरो रस इत्यादिपदयोरिव लोक-

---

मित्याशयेन आकृत्यधिकरणस्यैव सङ्गतिमाह—**वाचकशब्दप्रसङ्गादिति** ।। शब्दनिरूपितप्रसङ्गसङ्गतेरित्यर्थः ।। **वाच्यमिति** ।। घटादिशब्दवाच्यमित्यर्थः । अत्र जातिगुणक्रियायदृच्छाद्रव्यसर्वनामनिपातोपसर्गाख्यातभेदात् नवविधाः शब्दाः । तत्र जातिशब्दा एवोदाहरणमिति प्राञ्चः । शुक्लादिव्यक्तीनामेकत्वेऽपि शुक्लशुक्लतरशुक्लतमादिव्यक्तीनां भेदात्तत्रापि शुक्लत्वजातेः स्वीकर्तुं शक्यत्वात्, तुल्ययुक्त्या क्रियाख्यातवाच्ययोरपि जातिमत्त्वाच्चतुष्टयी शब्दानामुदाहरणमिति नव्याः । अन्ये शब्दा गुणारुणाधिकरणादिषु विचारयिष्यन्त इत्याशयेनाह—**घटत्वादीति** ।। आदिना शुक्लत्वज्योतिष्टोमत्वादिपरिग्रहः । अत्र यद्यपि वार्तिके 'नियोगेन विकल्पेन द्वे वा सह समुच्चिते । सम्बन्धः समुदायो वा विशिष्टा वैकयेतरा ।।' इति पूर्वपक्षमुपक्षिप्य 'गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः । जातिर्व्यक्तिश्च सम्बन्धः समूहो लिङ्गकारके । सङ्ख्या च सप्तमी तेषामष्टौ पक्षा द्वयोर्द्वयोः ।।' इत्यादिना बहवः पक्षा उक्ताः । अत्र वस्तुशब्देन जात्यादीनां सप्तानां ग्रहणम् ; अनुक्तसमुच्चायकेन चकारेण शब्दस्यापि ग्रहणं इति जातिव्यक्तिलिङ्गसङ्ख्याकारकसम्बन्धाः समूहः शब्दश्चेति अष्टानां गोशब्देन प्रतीयमानानां मध्ये एकमेव वाच्यं, द्वौ वाच्यौ, जातिर्व्यक्तिर्वा विकल्पेन वाच्यौ, द्वौ समुच्चितौ वाच्यौ,त्रयः समचिता वाच्याः,द्वयोः सम्बन्धो वाच्यः, द्वयोः समुदायो वाच्यः,त्रयणां वा सम्बन्धः समुदायो वा वाच्यः, एकविशिष्टमन्यद्वाच्यमित्यादिरीत्या सप्तविंशतिसहस्राणि षट्छतानि चतुःषष्टिश्च पक्षाः कल्पिताः । तथापि तेषां प्रस्तारज्ञानसाध्यत्वादनुपयोगाच्च द्वावेव पक्षौ भाष्यसम्मतौ इत्याशयेनाह—**उत व्यक्तिरिति** ।। पदशक्तिविचारस्य धर्मविचाररूपत्वाभावात् कथं शास्त्रसङ्गतिरित्यतः शास्त्रसङ्गतिं दर्शयितुं तदर्थसंशयमाह—**तदर्थं चेति** ।। **शब्दानामिति** ।। यद्यपि सूत्रे अर्थैकत्वमेवोक्तम् । तथापि तस्योपलक्षणतया शब्दैकत्वमपि विचार्यमित्यभिप्रायेण शब्दानामित्युक्तम् । फलफलिभावमुपपादयति—**अन्यत्व इत्यादिना** ।। ततश्च लोकवेदयोश्शब्दैकत्वे वैदिकशब्दार्थविचाररूपत्वाच्छास्त्रसङ्गतिरिति भावः । तदर्थसंशयकथनेन लोकवेदाधिकरणस्योपाद्धातसङ्गतिरिति सूचितम् । ननु लोकवेदयोश्शब्दैक्यस्य दृढतरप्रत्यभिज्ञानान्न भेदसम्भव इत्याशङ्क्य विरुद्धधर्मसमवायात् घटपटादिवत् भेदो युक्त इति पूर्वपक्षमुपपादयति—**तत्रेत्यादिना** ।। **स्वरेति** ।। नियतस्वरेत्यर्थः । यद्यपि चोदात्तादयो लोकेऽपि स्वरास्सम्भवन्ति, तथापि नियतस्वरत्वं लोके नास्ति, वेदे तु नियतस्वरसत्त्वात् पदभेद इत्याशयः ।

वेदयोः पदानामन्यत्वमिति प्राप्ते—

यत्रार्थभेदप्रतीत्यनुकूलो[1] धर्मभेदस्तत्र पदभेदः; यथा सरो रस इत्यादौ क्रमात् । ब्रह्मब्राह्मणेति न्यूनातिरिक्तत्वात् । स्थूलपृषतीमित्यत्र कर्मधारयबहुव्रीह्योस्स्वरात् अन्तोदात्ताद्युदात्तत्वरूपात् । पचते दक्षिणां देहि, भोजनार्थं पचत इत्यत्र व्यधिकरणपदसन्निधिरूपात् वाक्यात् । यातः पुनरायाति यातौ देवदत्तयज्ञदत्तावित्यत्र समानाधिकरणपदसन्निधिरूपया श्रुत्या । अश्व इत्यगम इत्यर्थे व्याकरणस्मृत्या, तदभिज्ञस्य पद-

---

छान्दसवर्णागमाः—छन्दसि साधवो वर्णागमाः, 'देवासः पूषरातयः' इत्यादौ 'आज्जसेरसुक्' इत्यसुगागमादयः । लोपाः—'त्मना देवेषु प्रोवाच' इत्यादौ । अत्र मन्त्रेषु 'अद्यादेरात्मन्' इत्याकारलोप इत्यादयः । विकाराः—'उद्ग्राभं च निग्राभं च' इत्यादौ 'ग्रहेर्भश्छन्दसि' इति हकारस्य भकारादेशः । 'अग्निमीळे पुरोहितम्' इत्यादौ 'द्वयोश्चास्य स्वरयोः मध्यमेत्य सम्पद्यत सडकारो ळकारः' इति शौनकसूत्रेण डकारस्य ळकारादेशः । 'अवरुद्रा यशसो हन्त नावधः' इत्यत्र 'दशमं चैतयोरेवम्' इति नञो दीर्घ इत्यादयः । अनध्यायाः प्रसिद्धाः । आदिना त्रिणाचिकेतमन्त्राध्ययनधर्मा गृह्यन्ते ॥ धर्मभेदादिति ॥ वाक्याधिकरणवार्तिकरीत्या स्वरादीनां पदभेदकत्वसम्भवादित्यर्थः ॥ सरो रस इत्यादीति ॥ आदिना कारा-राका, रमण-मरणादेः परिग्रहः । न्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीनां पदभेदकत्वमिति वार्तिकोक्ताः षडपि हेतवो भिन्नार्थकत्वविशेषिता एव भेदं साधयन्तीत्यभिप्रायेण सिद्धान्तमाह—यत्रेति ॥ अर्थभेदप्रत्यायकधर्मभेद एव पदभेदसाधकः, न तु केवलधर्मभेद इत्यर्थः । सर इति । सरोरसयोरर्थयोर्भेदस्य स्पष्टत्वादित्याशयः । क्रमात्-क्रमभेदात्, पदभेद इत्यनुषङ्गः ॥ ब्रह्मब्राह्मणेति ॥ अत्राप्यर्थभेदः स्पष्टः । न्यूनातिरिक्तत्वात्-न्यूनातिरिक्तवर्णकत्वात्, पदभेद इति पूर्ववत् ॥ स्थूलेति ॥ अत्र अन्तोदात्तत्वाद्युदात्तत्वरूपस्वरभेदात् भेद इत्यर्थः । अयमाशयः । 'स्थूलपृषतीमनड्वाहीमालभेत' इत्यत्र स्थूला च सा पृषती चेति विग्रहे पृषतीपदस्य हरिण्यां रूढस्यापि अनड्वाहीपदसामानाधिकरण्येन मत्वर्थलक्षणया 'पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ।' इत्यभिधानानुसारेण बिन्दुमतीपरत्वमेव वक्तव्यमिति स्थूलता गव्येवान्वेति । तत्र 'समासस्य' इत्यन्तोदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इति पूर्वनिघातः । स्थूलानि पृषन्ति यस्यास्सेति विग्रहे बिन्दुष्वेव स्थौल्यमन्वेति । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्याद्युदात्तत्वे शेषनिघाते 'उदात्तादनुदात्तस्य स्वरितः' इति लकारस्य स्वरितः, शेषाणां प्रचय इति । मिश्रोक्तश्रुतिवाक्यपदव्याख्यानमनुसृत्याह—पचत इति ॥ शत्रन्तस्य चतुर्थीयम् । स्वरितेत्त्वात् पचतेरात्मनेपदं कर्तृगामिनि क्रियाफले भवतीत्याशयेनाह—भोजनेति ॥ स्वयं भोक्तुमित्यर्थः । यात इति ॥ एको निष्ठान्तः । अन्यः तिङन्तः ॥ अश्व इति ॥

---

१. प्रतीत्यनुगुण इति पाठान्तरम् ।

भेदानुभवात् । यत्र तु नार्थभेदप्रतीतिः तत्र सत्यपि धर्मभेदे दृढतरप्रत्यभिज्ञाबलेन एकत्वावधारणात् न पदान्यत्वं लोकवेदयोरिति युक्ता आद्या चिन्ता ॥ ९ ॥

तत्रावघातादिक्रियाणां लिङ्गकारकसङ्ख्यादीनां च जातावयोग्यत्वात् गौः शुक्ले-[1]

गत्यर्थकात् श्वयतेर्लुङि सिपि च्लेरङि 'श्वयतेरः' इत्यकारादेशे अडागमे च रूपमेकं अन्यद्वाजिनि प्रसिद्धम् । उपलक्षणमिदम् अघानीत्यादेः । तत्र हन्तेश्चिणि रूपमेकं, पापवाचकमपरमिति भेदसत्त्वात् । अस्मिन् पक्षे 'इष्टिर्यागेच्छयोः' इत्यमरोक्तमिष्टिपदस्य नानार्थकत्वं चिन्त्यम् । तत्र यजतेः क्तिनि सम्प्रसारणे 'व्रश्च-' इति षत्वे रूपमेकम् । अपरं इषिधातोरिति पदभेदात् । अर्थभेदप्रतीत्यनुकूलत्वरूपविशेषणव्यावर्त्यमाह--**यत्र त्विति** ॥ कर्णेभिः-कर्णैः; निर्जरा निर्जरस इत्यादावित्यर्थः । अत्र सुषिसुषिरपदयोः रन्ध्रवाचकयोरभेद एवाभिमतः । विशेष्यांशव्यावर्त्यं तु स्वर्गेषुपशुवाग्वज्राद्यनेकार्थकं गवादिपदमेवेति स्पष्टत्वान्नोक्तम् । उपसंहरति--**न पदान्यत्वमिति** ॥ अर्थभेदप्रतीत्यभावे शब्दैक्यस्य सिद्धत्वात् लोके प्रयुज्यमानानामेव गवादिपदानां वेदे प्रयुज्यमानत्वाद्वेदमूलकमेव लोकोच्चारणमिति निर्णेतुं शक्यत्वाल्लोके क्रियमाणशक्तिनिरूपणस्य वेदार्थविचाररूपत्वान्नासङ्गतिरिति भावः । सूत्रार्थस्तु, **प्रयोगचोदनानां**--विधिवाक्यानाम् । **अभावात्**--अप्रामाण्यापत्तेः । **अर्थैकत्वं**--लोकवेदयोरर्थैक्यम् । **अविभागात्**--वैलक्षण्याभावात्, शब्दैकत्वमिति । एवं लोकवेदयोश्शब्दार्थाभेदे सिद्धे लोके गृहीतशक्तिकानां वेदे अर्थज्ञानस्य सुलभत्वात्तत्र विचारो युज्यत इत्याशयेनाह--**युक्तेति** ॥ **आद्या चिन्तेति** ॥ गवादिपदानां व्यक्तौ शक्तिः, उत जाताविति चिन्तेत्यर्थः ॥

पूर्वपक्षमाह---**तत्रेति** ॥ आदिना पेषणसंयवनपिण्डीकरणादिपरिग्रहः ॥ **लिङ्गेति** ॥ लिङ्गं च सर्ववस्तुसाधारणं गुणत्रयोपचयापचयसाम्यरूपम् । तत्र सत्वरजस्तमोगुणानां तत्परिणामशब्दस्पर्शरूपरसगन्धानां चाविर्भावः पुँल्लिङ्गम्, तेषां तिरोभावः स्त्रीलिङ्गम्, तेषां साम्यं नपुंसकमिति इदमेव लिङ्गं केवलान्वयि । अत एव अयमर्थः, इयं व्यक्तिः, इदं वस्त्विति सर्वत्र व्यवहारो दृश्यते । तथा 'तटं त्रिषु' इति तटादिषु लिङ्गत्रयव्यवहारोऽपि । महाभाष्येऽप्येवमेव 'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः' इत्यादिना निर्णीतम् । 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः' इत्याद्युक्तं तु लिङ्गं 'हस्तिन्यां वडबायां च स्त्रीति बुद्धेस्समन्वयः । अतस्तां जातिमिच्छन्ति' इत्यभियुक्तवचनानुसारेण स्तनकेशाद्यभिव्यक्तजातिविशेषरूपं प्राणिविशेषनिष्ठम् । ततश्चोभयविधस्त्रीत्वसत्त्व एवाजादिपदेभ्यष्टाबादयो विधीयन्त इति सिद्धान्तः । एवं च 'पशुना यजेत' इत्यत्र 'छागस्य वपायाः' इति मन्त्रवर्णात्पशुपदस्य छागत्वजातिपरतायां पुंस्त्वस्यानन्वयः । 'सारस्वतीं मेषीं' इत्यत्र जातेः गुणत्रयतिरोभावस्यान्वयसम्भवेऽपि उभयविधलिङ्गस्यैव ङीबर्थतया तदन्वयासम्भव इत्याशयः।

१. गौश्शुक्ल इति पाठान्तरम् ।

त्यादिसामानाधिकरण्यनिर्देशाच्च व्यक्तिवाचित्वमेव । न चैवं जातिबोधानापत्तिः; लक्षणादिना तद्बोधोपपत्तेः । व्यक्तिशक्तिग्रहस्यैव वा कार्यतावच्छेदकं जातिविशिष्टशाब्दबोधत्वम् । अतो न दोषः । न च विनिगमनाविरहः । लाघवस्यैव नियामकत्वात् । तथा हि—न शक्तिग्रहस्य स्वातन्त्र्येण कारणत्वं; अपि तु, लाघवात् शक्यत्वादिसम्बन्धेन घटपदवत्ताज्ञानस्यैव । अतश्चास्मन्मते घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्व-

---

स्तनकेशादिलिङ्गस्य जाताविव व्यक्तावप्यसम्भवस्तुल्य इति लिङ्गानुपपत्तिरभ्युच्चयमात्रमिति केचित् ॥ **कारकेति** ॥ गोत्वादिजातेर्द्रव्यपरिच्छेदद्वारा आरुण्यस्येव करणत्वसम्भवेऽपि विकार्यत्वादिरूपविशसनकर्मत्वासम्भव इति भावः ॥ **सङ्ख्यादीनामिति** ॥ पश्वेकत्वविवक्षाफलस्य अनेकपशुकरणकत्वनिरासस्यासम्भवादित्यर्थः । अनेकपशुकरणकैकयागकरणेऽपि क्रतुवैगुण्याप्रसक्तेरिति भावः । यद्वा, 'कपिञ्जलानालभेत' 'सप्तदश प्राजापत्यान्' इत्यादौ वेदे, 'षड्गावो देयाः' इत्यादौ लोके च कपिञ्जलत्वादिजातिषु त्रित्वाद्यन्वयासम्भवादित्यर्थः । आदिना 'घटो नष्टः' इत्यादौ प्रतीयमाननाशप्रतियोगित्वादेः परिग्रहः । एवं 'घटे द्रव्यत्वं, घटपटौ संयुक्तौ' इत्यादिवाक्यानामप्रामाण्यापत्तिः; घटत्वे द्रव्यत्वाधारतायाः, घटत्वपटत्वयोः संयोगस्य च बाधितत्वादित्यपि बोध्यम् ॥ **शुक्लेत्यादीति** ॥ आदिना चलतीत्यादेः सङ्ग्रहः ॥ **सामानाधिकरण्येति** ॥ व्यक्तिशक्तौ 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वार्तिकेन शुक्लपदस्य गुणिपरत्वेनाभिन्नार्थत्वात्सामानाधिकरण्यमुपपद्यते । जातिशक्तौ तु तदनुपपत्तिरित्यर्थः । इदमुपलक्षणम् । 'यदि पशुरुपाकृतः पलायेतान्य तद्वर्णं तद्वयसमालभेत' इत्यादावन्यशब्दनिर्देशाद्व्यक्तिवाचित्वमेव, जातेरन्यत्वासम्भवादित्यपि द्रष्टव्यम् । ननु व्यक्तौ शक्त्यङ्गीकारे जातिबोधो न स्यात्, अशक्यत्वात्, अन्यथा घटपदात्पटादेरपि बोधापत्तेरित्याशङ्कते—**न चेति** ॥ परिहरति—**लक्षणादिनेति** ॥ आदिना अर्थापत्तिपरिग्रहः । ननु जातौ लक्षणाङ्गीकारे युगपद्वृत्तिद्वयविरोध इत्यत आह—**व्यक्तिशक्तिग्रहस्येति** ॥ घटत्वप्रकारकघटविशेष्यकशाब्दत्वावच्छिन्नं प्रति घटशक्तिज्ञानस्य हेतुतया घटशक्तिज्ञानादेव घटत्वबोधोपपत्तेर्नोक्तदोषः । घटशक्तिज्ञानस्य पटबोधं प्रत्यकारणत्वान्नानुपपत्तिरिति भावः ॥ **विनिगमनाविरह इति** ॥ जातिशक्तिग्रहस्य जातिविशिष्टव्यक्तिविषयकशाब्दकारणत्वमादाय विनिगमनाविरह इत्यर्थः ॥ **स्वातन्त्र्येण**—पदज्ञानकारणत्वातिरेकेण ॥ **शक्यत्वादीति** ॥ आदिना स्वज्ञानजन्यज्ञानविषयत्वसङ्ग्रहः ॥ **शक्यत्वसम्बन्धेनेति** ॥ ईश्वरेच्छायाः शक्तित्वे तस्या एतत्पदज्ञानादेतदर्थज्ञानं भवत्वित्याकारकत्वेन स्वविषयकविषयत्वेनेत्यर्थः । सम्बन्धगौरवस्यादोषत्वादिति भावः । शक्तेः पदार्थान्तरत्वे तु तस्यास्समवायवत् अखण्डाया एकस्या एव सम्बन्धत्वान्न गौरवमित्याशयः । वस्तुतस्तु, अत्र वैयाकरणानां पूर्वपक्षित्वात् तद्रीत्या शब्दार्थयोस्तादात्म्यमेव शक्तिरिति महाभाष्यपक्षस्यैव मञ्जूषादौ समर्थितत्वा-

सम्बन्धेन घटपदप्रकारकस्य घटो घटपदवानित्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबुद्धित्वावच्छिन्नं प्रति कारणत्वम्। भवन्मते तु, घटत्वत्वं धर्मितावच्छेदकीकृत्य तत् वाच्यम्। अतश्च घटत्वत्वस्य घटेतरावृत्तित्वादिरूपस्यानेकपदार्थघटितस्य प्रवेशात् तव कार्यकारणभावे गौरवम्; न मम। न च शक्त्यानन्त्यादिदोषः; तस्य फलमुखत्वात्। अतश्च लाघवात् व्यक्तावेव शक्तिः, जातिविशिष्टव्यक्तौ वा; न तु जातावेवेति प्राप्ते—

घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्य कारणत्वं, पदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्ताज्ञानस्य वा घटपदं घटवदित्याकारकस्य कारणत्वमित्यत्र विनिगमनाविरहेण अनन्तकार्यकारणभावप्रसङ्गात्। अस्मन्मते तु, घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटत्ववत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनाल्लाघवम्। न च ममापि विपरीतमापादयितुं शक्यम्। तथा सति घटत्वस्य धर्मित्वे स्वरूपेण तस्य धर्मित्वायोगात् घटत्वत्वेन तस्य प्रवेशे गौरवस्य त्वयैवोक्तत्वात्। अतो न घटत्वत्वावच्छिन्नं घटत्वं शक्यत्वसम्बन्धेन घटपदवदित्याकारकं ज्ञानं कारणं, अपि तु घटपदं शक्तत्वसम्बन्धेन घटत्व-

---

त्तादात्म्येनेत्येवार्थः॥ **विशेष्यतासम्बन्धेनेति**॥ इदं च काकाक्षिवदुभयत्रान्वेति। तथा च विशेष्यतासम्बन्धेन घटत्वविशिष्टविषयकशाब्दत्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन घटत्वधर्मितावच्छेदककशक्यत्वसंसर्गकघटपदप्रकारकज्ञानस्य कारणत्वमित्यर्थः॥ **तत् वाच्यं**—घटपदप्रकारकज्ञानस्य कारणत्वं वाच्यम्॥ **घटेतरावृत्तित्वादीति**॥ आदिना सकलघटवृत्तित्वरूपविशेष्यांशपरिग्रहः॥ **शक्त्यानन्त्यादीति**॥ व्यक्तीनां बहुत्वाच्छक्तिबहुत्वं स्यादित्यर्थः। व्यक्त्यानन्त्येऽपि शक्त्येकत्वस्वीकारे तत्सम्बन्ध्यानन्त्यमवर्जनीयमित्यभिप्रायेणादिपदम्। **तस्य**—शक्त्यानन्त्यस्य॥ **फलमुखत्वादिति**॥ तथा च फलमुखगौरवं न दोषाय। अन्यथा निषादस्थपत्यधिकरणविरोधापत्तेरिति भावः। **लाघवात्**—कार्यकारणभावलाघवात्। 'य एवमाकृतिकः स गौः' इति भाष्यस्वारस्यात् आकृतिविशिष्टव्यक्तावेव शक्तिर्युक्तेत्याशयेनाह—**जातिविशिष्टेति**॥ एतेन अननुगमदोषोऽपि निरस्तो बोध्यः। सिद्धान्तमाह—**घटत्वमित्यादिना**॥ शक्यत्वसम्बन्धेन घटपदप्रकारकघटविशेष्यकज्ञानस्य कारणत्वं, शक्तत्वसम्बन्धेन घटप्रकारकपदविशेष्यकनिश्चयस्य वा कारणत्वमिति विनिगमनाविरहात् कार्यकारणभावद्वयं व्यक्तिशक्तौ कल्पनीयम्। जातिशक्तौ तु पदविशेष्यकार्थप्रकारकनिश्चयस्यैव कारणत्वं, न त्वर्थविशेष्यकपदप्रकारकज्ञानस्य; घटत्वत्वादेर्धर्मितावच्छेदकत्वे गौरवस्योक्तत्वादित्यर्थः। न च निर्धर्मितावच्छेदककज्ञानस्य कारणत्वान्नोक्तदोष इति वाच्यम्; तस्य विपरीतज्ञानाप्रतिबध्यत्वेन घटो न घटपदवान् इति ज्ञानकालेऽपि शाब्दबोधापत्तेरिति भावः। ननु घटपदं घटत्ववदिति ज्ञाने-

वदित्याकारकमेव; जातेस्स्वरूपेणैव प्रकारत्वोपपत्तौ घटत्वत्वस्याप्रवेशात्। न च समवायेनान्यप्रकारत्व एव जातेः स्वरूपेण प्रकारता, न सम्बन्धान्तरेणेत्यत्र प्रमाणमस्ति । परैरपि तथाऽनभ्युपगमाच्च । अतश्च कार्यकारणभावेऽपि लाघवात् घटत्व एव शक्तिः । शक्त्यानन्त्यादि च नास्त्यस्मन्मते । अतः प्रथमोपस्थितत्वात् जातावेव शक्तिः । एवं अरुणादिशब्दानामपि गुण एव, गुणत्वे वा; न तद्विशिष्टद्रव्ये । कथं तर्हि व्यक्तिबोधः; अभेदात् । उक्तविधकारणस्य जातिगुणविशिष्टव्यक्तिशाब्दत्व एव कार्यतावच्छेदकत्व-

---

अपि घटत्वत्वेनैव घटत्वस्य प्रकारतया प्रकारतावच्छेदकतया घटत्वत्वभानात् गौरवसाम्यमित्यत आह—**जातेरिति** ॥ जात्यतिरिक्तपदार्थनामेव किञ्चिद्धर्मपुरस्कारेण भाननियमात् न जातेः स्वरूपतो भानानुपपत्तिरिति भावः । ननु तथापि समवायेनैव जातेः स्वरूपतो भाननियमात् शक्तत्वप्रकारतायां किञ्चिद्धर्मपुरस्कारेण भानमावश्यकमित्यत आह—**न चेति** ॥ सर्वत्रैव जातेः स्वरूपतो भानसम्भवेन तादृशनियमे प्रमाणाभावान्न घटत्वत्वस्य प्रकारतावच्छेदकतया प्रवेश इति न गौरवमिति भावः । **परैः**—नैयायिकादिभिः ॥ **लाघवादिति** ॥ ततश्च पूर्वपक्षोक्तफलमुखत्वं गौरवस्य निरस्तम् । पूर्वपक्ष एव कार्यकारणभावगौरवसत्त्वादिति सूचितम् ॥ **शक्त्यानन्त्यादीति** ॥ आदिना अननुगमपरिग्रहः । उपस्थितिकृतलाघवादपि जातावेव शक्तिरित्याह—**प्रथमेति** ॥ अनेन जातिविशिष्टव्यक्तौ शक्तिरिति पक्षोऽप्ययुक्त इति सूचितम् । नागृहीतविशेषणान्यायेन जातेः प्रथमोपस्थितेरावश्यकत्वेन तत्रैव शक्तेर्युक्तत्वात् । तदुक्तं 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ।' इति ॥ **गुण एवेति** ॥ जगतीतलवृत्त्यरुणादिव्यक्तीनामेकत्वादिति भावः । ननु अरुणा अरुणतरा इत्यादौ अरुणतरादिव्यक्तेर्भिन्नत्वेनैव प्रतीतेः शक्तिनानात्वमवर्जनीयमित्यत आह—**गुणत्वे वेति** ॥ अरुणत्वादावित्यर्थः । **तद्विशिष्टद्रव्ये**—अरुणगुणविशिष्टद्रव्ये, गौरवस्य उक्तत्वादिति भावः । शक्त्यभावे कथं घटादिव्यक्तिबोध इत्याक्षिपति—**कथमिति** ॥ समाधत्ते—**अभेदादिति** ॥ तादात्म्यादित्यर्थः । तथा च लिङ्गसङ्ख्यादीनां प्रकृत्यर्थव्यक्तावन्वयस्य पूर्वपक्ष इव सिद्धान्तेऽपि सम्भवान्न कश्चिद्दोष इति भावः । ननु अभेदाङ्गीकारे उक्तगौरवमस्त्येवेत्यतः पक्षान्तरमाह—**उक्तविधेति** ॥ पदविशेष्यकजात्यादिप्रकारकशक्तत्वसंसर्गकज्ञानरूपकारणस्येत्यर्थः ॥ **जातिगुणविशिष्टेति** ॥ जातिविशिष्टव्यक्तिशाब्दत्वे गुणविशिष्टव्यक्तिशाब्दत्वे चेत्यर्थः । एवमग्रेऽपि । ततश्च जात्यादिविशिष्टव्यक्तिविषयकशाब्दं प्रति निरुक्तज्ञानस्य कारणत्वस्वीकारात् जायमानशाब्दबोधः जात्यादिविशिष्टव्यक्तिविषयक एवोत्पद्यत इति न तत्र शक्त्यपेक्षेति भावः। **तद्बोधोपपत्तेः**—व्यक्तिबोधोपपत्तेः । ननु एवंरीत्या लिङ्गसङ्ख्याकारकाणामपि बोधसम्भवात्तेषां प्रत्ययार्थत्वं न स्यात् । तत्रापि लिङ्गसङ्ख्याकारकविशिष्टव्यक्तिबोधं प्रति जातिज्ञानस्य कारणत्वसम्भवात् । न चेष्टापत्तिः सम्भवति । ग्रहैकत्वाधि-

स्वीकाराद्वा। वस्तुतस्तु—जातिगुणशाब्दत्वमेव लाघवेन कार्यतावच्छेदकम्। व्यक्तिस्तु तृतीयादिस्थले 'पशुना यजेत' 'अरुणया पिङ्गाक्ष्या क्रीणाति'[1] इत्यादौ नैव पदाद्भासते; जातिगुणयोरेव व्यक्तिपरिच्छेदद्वारा कारणत्वोपपत्तेः। लिङ्गसङ्ख्ययोरपि पाशाधिकरणन्यायेन सामानाधिकरण्येन पार्ष्ठिको जातिगुणसम्बन्धः। अतः सम्बन्धविधयैव तत्र व्यक्तिबोधः। द्वितीयादिस्थले तु जातिगुणयोः कर्मत्वाद्यन्वयायोग्यत्वात् व्यक्तेर्लक्षणया बोधः। तस्या एव कर्मत्वाद्यन्वयः लिङ्गसङ्ख्यान्वयश्च साक्षात्सम्बन्धेनैव। सामानाधिकरण्यं च व्यक्तिद्वारकमिति सर्वं सुस्थम्।

प्रयोजनं पूर्वपक्षे रथन्तरादिशब्दानामृग्वाचित्वात् 'रथन्तरमुत्तरयोर्गायति' इत्यादौ उत्तरापदोपलक्ष्योत्तराकार्ययोः[2] ऋग्विधानम्। सिद्धान्ते तु गीत्यतिदेश उत्तरास्विति वक्ष्यते ॥ १० ॥

इति भाट्टदीपिकायां प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

करणपश्वेकत्वाधिकरणपाशाधिकरणादिविरोधापत्तेः। तत्र लिङ्गसङ्ख्यादीनां प्रत्ययार्थत्वं सिद्धवत्कृत्य विचारः कृतः। तस्मान्नायं पक्षो युक्त इत्यत आह—**वस्तुतस्त्विति** ॥ **जातिगुणशाब्दत्वमेवेति** ॥ एवकारेण व्यक्तिशाब्दत्वव्यवच्छेदः। व्यक्तिस्तु नैव पदात् भासत इत्यर्थः। 'पशुना' 'अरुणया' इति तृतीयास्थले तृतीयोपात्तं करणत्वं जातिगुणनिष्ठमेव। तच्च द्रव्यपरिच्छेदद्वारकमिति न द्रव्यस्य शब्दाद्भानमावश्यकमिति भावः। नन्वेवमपि लिङ्गसङ्ख्ययोः जात्यादावन्वयासम्भवात् व्यक्तावेवान्वयो वाच्यः। ततश्च व्यक्तेः शब्दात् भानमावश्यकमित्यत आह—**लिङ्गसङ्ख्ययोरपीति** ॥ **पाशेति** ॥ 'अदितिः पाशान्' इत्यत्र गुणभूतबहुत्वस्य एकस्यां प्रकृतपाशव्यक्तौ असम्भवतोऽप्यवयवेषु सम्भवतः सामानाधिकरण्येन व्यक्त्यन्वयोपपत्तेः साक्षात्तदन्वयानुरोधेन मुख्यभूतपाशप्रातिपदिकस्य विकृतावुत्कर्षस्य नवमेऽनङ्गीकारात्तन्न्यायेन लिङ्गसङ्ख्ययोरपि सामानाधिकरण्येन जातिगुणयोरेवान्वय इति व्यक्तेरशाब्दत्वेऽपि न क्षतिरिति भावः। लिङ्गसङ्ख्ययोः प्राथमिकबोधे भावनान्वयेऽपि द्वितीयबोधादौ जातिगुणसम्बन्ध इत्यभिप्रायेणाह—**पार्ष्ठिक इति** ॥ पाश्चात्य इत्यर्थः ॥ **सम्बन्धविधयैवेति** ॥ सामानाधिकरण्यरूपसम्बन्धघटकतयेत्यर्थः; न तु विशेष्यतया प्रकारतया वेत्यवधारणार्थः ॥ **द्वितीयेति** ॥ 'व्रीहीनवहन्ति' 'बभ्रुमालभेत' इत्यादावित्यर्थः। **जातिगुणयोः**—व्रीहित्वादिजातिबभ्रुत्वादिगुणयोः। **कर्मत्वाद्यन्वयासम्भवात्**—अवहननालम्भनकर्मत्वाद्यन्वयासम्भवात्। **तस्या एव**—व्यक्तेरेव। **साक्षात्सम्बन्धेन**—आश्रयत्वादिसम्बन्धेन ॥ **सामानाधिकरण्य-**

---

१. तै. सं. ६. १. ६.   २. उत्तरापदलक्ष्य इति पाठान्तरम्।

**मिति** ॥ लिङ्गसङ्ख्ययोः कारकसामानाधिकरण्यमित्यर्थः ॥ **व्यक्तिद्वारकं**--व्यक्तिघटितम् । **वक्ष्यत इति** ॥ द्वैतीयीकसाप्तमिकनावमिकाधिकरणानि तु एतदधिकरणप्रयोजनैककथनफलकत्वान्न पुनरुक्तानीत्यभिप्रायः। अत्र आकृतिशब्देन जातिरेवोच्यत इति प्राञ्चः । अन्ये तु नाकृतिरेव जातिः, 'आकृतिग्रहणा जातिः' इति वैयाकरणप्रयोगात्, 'जात्याकृतिव्यक्तयः पदार्थः' इति गौतमसूत्राच्च आकृतिजात्योर्भेदप्रतीतेः । किन्तु आकृतिः अवयवसंस्थानविशेष एव, 'जातिर्व्यक्तिश्च' इत्यादिवार्तिकं तु जात्याकृत्योरभेदाभिप्रायेण कथञ्चिन्नेयमित्याहुः । अत्रेदं बोध्यम् । पूर्वपक्षावसरे शाब्दबोधं प्रति व्यक्तिविशेष्यकपदप्रकारकज्ञानस्य कारणत्वमुक्तम् । तथा सति व्यक्तिज्ञानस्य शाब्दबोधकारणत्वकल्पनमधिकम् । न च पदजन्यपदार्थोपस्थितेः कारणत्वं सिद्धं नाधिक्यमिति वाच्यम्; न हीदृशं ज्ञानं पदार्थोपस्थितिरूपम्, पदार्थोपस्थितेः घटत्वप्रकारकघटविशेष्यकज्ञानरूपत्वात्, अस्य च पदप्रकारकत्वात् । न च घटत्वमपि घटे प्रकारतया भासत इति घटत्वप्रकारकत्वसम्भव इति वाच्यम्; तथा सति तस्य पदज्ञानत्वमेव न स्यात्, पदार्थोपस्थितिरूपत्वात् । न च तदेव ज्ञानं पदज्ञानमपि भवतीति वाच्यम्; शास्त्रप्रक्रियाविरोधात् । पदज्ञानं हि श्रावणप्रत्यक्षरूपं, घटशब्दश्रवणे हि 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इति रीत्या घटादिस्मरणं जनयति । ततश्च क्रियाकर्मभावेन पदार्थानां परस्परान्वय इति हि शास्त्रमर्यादा । सा च पदज्ञानस्य पदजन्यपदार्थोपस्थितेश्चैकत्वे विरुध्येतैव । किञ्च घटपदशक्तिज्ञानस्य सम्बन्धज्ञानविधया पदार्थे उपयोगः । 'अत्रैव शक्तिज्ञानस्योपयोगः' इति तान्त्रिकोक्तेः । ततश्च शक्तिज्ञानपदज्ञानपदार्थोपस्थितीनामेकत्वमङ्गीकृत्य शाब्दबोधकारणत्वोक्तिरसङ्गतैव । एवं सिद्धान्तेऽपि शक्तिज्ञानपदजन्यपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वस्य समानविशेष्यकत्वस्य च नियतत्वात् घटविशेष्यकपदार्थोपस्थितिशाब्दबोधयोर्निर्वाहाय घटविशेष्यकमेव वृत्तिज्ञानं वक्तव्यमिति पदविशेष्यकवृत्तिज्ञानमशुद्धमेव । न च तादृशनियमे मानाभाव इति वाच्यम्;अन्यविशेष्यकशक्तिज्ञानादन्यविशेष्यकशाब्दबोधापत्तेः। एवं शक्तिज्ञानस्य पदविशेष्यकत्वे पदविशेष्यकशाब्दबोधापत्तिः । न चेष्टापत्तिः, अनुभवविरोधात् । जातिगुणशाब्दत्वमेव शक्तिज्ञानकार्यतावच्छेदकमित्युक्तमपि चिन्त्यम्; प्रत्ययोपात्तलिङ्गसङ्ख्ययोरनन्वयापत्तेः । पार्ष्ठिकजात्यन्वयाङ्गीकारे जातिवाचकशब्दस्य स्त्रीलिङ्गतया सर्वत्र स्त्रीलिङ्गशब्दस्यैव प्रयोगप्रसङ्गात् । न च जातेः स्त्रीत्वेऽपि घटत्वाद्यभिप्रायेण लिङ्गान्तरोपपत्तिरिति सम्भवति, तर्हि नपुंसकलिङ्गस्यैव प्रयोगापत्तेः । तस्माद्व्यक्तेश्शाब्दधीविषयत्वं विना कथं लिङ्गवचनाद्युपपत्तिः?न च सामानाधिकरण्यघटकतया व्यक्तेर्भानमस्तीति वाच्यम्; संसर्गप्रविष्टव्यक्त्या पदार्थान्तरान्वयासम्भवात् । शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायात् । अन्यथा स्वाश्रयसंयुक्तसमवायादिना पटत्वादेरपि घटे सत्त्वेन घटः पट इत्यस्यापत्तेः । एवं द्वितीयास्थले लक्षणापि न युक्ता, वैरूप्यापत्तेः । तस्मान्नोक्तरीत्या अधिकरणविचारो युक्त इति भाष्य-

## अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

### (१)—उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

इह गुणविधित्वेन नामधेयत्वेन वा सम्मतानां सर्वेषामेव फलपदातिरिक्त-

वार्तिकरीत्या पार्थसारथिकृतविचार एवादरणीय इति । सूत्रार्थस्तु, अवघातादि **प्रयोगचोदनाभावात्**, व्यक्तेरेवाभिधेयता । एवमपि 'गौस्तिष्ठति, गां पश्य' इत्यादौ जातेरभिधेयत्वं किं न स्यादित्यत उक्तं—**अर्थैकत्वमिति** ॥ अर्थैकत्वं हि सर्वत्र व्यक्त्यभिधाने सिध्यति । अन्यथा क्वचिद्व्यक्तिः क्वचिज्जातिरिति नानार्थत्वं स्यात् । कथं तर्हि जातेः प्रतीतिरित्यत उक्तं—**अविभागादिति** ॥ जातेर्व्यक्तितादात्म्यात् प्रतीतिरिति शिवम् ॥

इति चोळदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायन-
विश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायन-
सूत्रहोशनिकर्नाटजातीयवाञ्छेश्वरयज्वनः कृतिषु
भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ
प्रथमस्याध्यायस्य तृतीयः पादः ॥

---

## अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात्** ॥ अत्र नामधेयादिरूपधर्मप्रमाणनिरूपणाल्लक्षणसङ्गतिः । पदप्रामाण्यनिरूपणस्य पादार्थत्वात्पादसङ्गतिः पादान्तरत्वञ्च । अनन्तरसङ्गतिस्तु पूर्वत्र अवघातादिक्रियान्वयस्य यथा तथैव जातिव्यक्त्योः सम्भवे उपपादिते उद्भिदादिशब्दार्थस्य क्रियान्वयो न उभयथापि सम्भवतीत्याक्षेपादाक्षेपिकी । नामधेयविचारस्य स्मार्तनामधेयसाधारणत्वात् स्मृतिविचारानन्तर्यमित्यभिसन्धायाह—**इहेति** ॥ अत्र वार्तिककारेण प्रथमसूत्रं गुणविधिनामधेयविचारोपोद्घाततया विचारितम् । प्रामाण्यविचारमकृत्वा गुणविधिनामधेयविचारे तस्य स्वातन्त्र्यापत्त्याऽध्यायासङ्गतिस्स्यात् । प्रामाण्यविचारानन्तरं तद्विचारे तु विचारितप्रामाण्यप्रतिष्ठार्थत्वात् गुणविधिनामधेयविचारोऽध्यायस्सङ्गत इत्यभिप्रायेण रचितमधिकरणं दर्शयति—**गुणविधित्वेनेति** ॥ सम्मतानामित्यनेन तेषामेव प्रामाण्यनिरूपणं सङ्गत्यर्थं क्रियत इति सूचितम् । सर्वेषामित्यनेन राजा राजसूयेन यजेत, सक्तून् जुहोति, अग्निहोत्रं जुहोति, सोमेन यजेत, उद्भिदा यजेत, यदग्नये च प्रजापतये च सायं जुहोति, शेषात् स्विष्टकृते समवद्यति, अतिरात्रे ब्राह्मणस्य गृह्णीयात्, समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत इत्यादौ श्रुतानि षडपि कारकाणि इह विषय इति भाव आविष्कृतः । भाव्यवाचकपदं निरस्यति—**फलपदेति** ॥ इदं च निमित्तसंस्कार्ययोः उप-

सुबन्तानां उद्भित्सोमादिपदानां प्रामाण्यमप्रामाण्यं वेति संशये—प्रकारासम्भवात् अप्रामाण्यम् । तथाहि—'उद्भिदा यजेत पशुकामः' 'सोमेन यजेत' इत्यादौ उद्भिदादिपदेभ्यः स्तुतिबुद्धेरनुत्पत्तेर्न तावदर्थवादत्वम् । मन्त्रत्वप्रसिद्ध्यभावाच्च न तत् । एतेषां प्रयोगकाले उच्चारणे च एतत्प्रतिपाद्यार्थस्य यागाङ्गताबोधकप्रमाणाभावेन एतेषां प्रयोगसमवेतार्थस्मारकत्वानुपपत्तेश्च । न च विध्यन्तर्भावः । कामशब्दाद्यभावेन साध्याद्यनभिधायकत्वात् । एकपदगतयजिनैव करणप्रतिपादने सत्येतेषां तत्प्रतिपादकत्वायोगात् । सिद्धरूपाणां सोमादीनां व्यापारमन्तरेण भावनेतिकर्तव्यतात्वानुपपत्तेश्च । नामधेयत्वे तु अभिन्नत्वादेव करणानुग्राहकत्वाभावादितिकर्तव्यतात्वानुपपत्तेः । न च कथमपि भावनान्वयासम्भवेऽपि याग एव करणत्वेनान्वयो भवत्विति वाच्यम्;

---

लक्षणम् । तयोरपि भावनेतिकर्तव्यतात्वासम्भवेनानुदाहरणत्वादिति केचित् । करणं व्यावर्तयति--**सुबन्तानामिति** ॥ उद्भिदादिपदानां भावनाकरणवाचिनामपि गुणविधिप्रत्युदाहरणत्वेन विचारसङ्गत इत्याह—**उद्भिदिति** ॥ अध्ययनविधिना प्रामाण्यसिद्धावपि द्वारासम्भवादप्रामाण्यमिति पूर्वपक्षमाह—**प्रकारासम्भवादिति** ॥ 'दीर्घसोमे सन्तृद्ये धृत्यै' इत्यादौ एकस्यैव धृतिपदस्य विध्येकवाक्यत्वेनार्थवादत्वदर्शनेऽप्यत्र विधिवाक्याद्बहिः पाठाभावादर्थवादत्वमयुक्तमित्याशयेन निरस्यति—**उद्भिदादीति** ॥ आदिना राजसूय-वाजपेयपदपरिग्रहः । यद्यपि उद्भेदनकर्तृत्वादिगुणोपस्थित्या स्तावकत्वं कथञ्चित्सम्भवति ; तथापि न सर्वोदाहरणेषु तत्सम्भव इति भावः । यत्तु कैश्चित् कथञ्चित् स्तुतिबुद्ध्युत्पत्तावपि 'वायुर्वै' इत्यादिवत् प्रथमाप्रवृत्तेर्नार्थवादत्वमित्युक्तम्, तत् 'विश्वसृजामयनं सहस्रसंवत्सरम्' इत्यादावनिर्वाहकत्वादुपेक्ष्यम् । अर्थवादत्वं निराकृत्य मन्त्रत्वं निराकरोति—**मन्त्रत्वेति** ॥ **न तत्**—न मन्त्रत्वम् । ऊहप्रवरनामधेयानाममन्त्रत्वेऽपि मन्त्रकार्यकरत्वमात्रेण प्रामाण्यदर्शनादाह -**एतेषामिति** ॥ **प्रमाणाभावेनेति** ॥ ततश्च एतदर्थस्याङ्गत्वे प्रमाणाभावान्नैतेषामुच्चारणं युक्तमित्यर्थः। विधित्वेन प्रामाण्यमाशङ्क्य निराचष्टे--**न चेति** ॥ फलपरतया विध्यन्तर्भावो वा, करणपरतया वा, इतिकर्तव्यतापरतया वा ? नाद्य इत्याह—**कामशब्दाद्यभावेनेति** ॥ आदिना सनादिसङ्ग्रहः । ततश्च फलत्वाप्रतीतेरित्यर्थः । द्वितीयं निराकरोति—**एकेति** ॥ समानपदोपात्तधात्वर्थस्यैव करणत्वस्य वक्ष्यमाणतया भिन्नपदोपात्तोद्भिदादेः करणत्वासम्भवादित्यर्थः । नामत्वाङ्गीकारेऽपि यजिनैव करणप्रतिपादकत्वोपपत्तेर्नोद्भिदादिपदानां तत्प्रतिपादकत्वसम्भव इति भावः । तृतीयं निरस्यति —**सिद्धरूपाणामिति** ॥ 'नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्रव्ये कथंभावैः गृह्णन्ति प्रकृताः क्रियाः ॥' इति वार्तिकानुसारेण क्रियायोगं विना सिद्धस्य इतिकर्तव्यतात्वासम्भवादिति भावः । नामत्वपक्षे तदर्थस्य धात्वर्थाभिन्नतया करणत्वेन करणानुग्राहकत्वरूपेतिकर्तव्यतात्वं सुतरां न सम्भवतीत्याह—**नामधेयत्व इति** ॥

कारकाणां परस्परसम्बन्धाभावात्। अतः कथमपि भावनान्वयासम्भवात् अनाख्यातत्वेन विधिभावनयोरनभिधानात् अन्यस्य च प्रकारस्य वक्तुमशक्यत्वादप्रामाण्यमिति प्राप्ते--

अध्ययनविध्यध्यापितस्य अप्रामाण्यासम्भवात् प्रकारान्तरासम्भवेऽपि विध्यन्तर्भावस्य स्पष्टत्वेन तत्रैव गुणविधित्वेन नामधेयत्वेन वा वक्ष्यमाणरीत्या सर्वानुपपत्तिपरिहारेण प्रामाण्यमिति सिद्धम्॥ १॥

## (२)-अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात्॥२॥

अतः परं क्व गुणविधित्वं क्व नामधेयत्वमिति कोष्ठशोधनिकार्थमारम्भः। तदिह गुणे कर्मणि च तुल्यवद्वृत्तिकानामुद्भिदादिपदानां विधेयगुणसमर्पकत्वं कर्मनामधेयत्वं

---

**कारकाणामिति**॥ धात्वर्थस्य करणत्वेन कारकतया उद्भिदादीनामपि तृतीयान्तोपात्ततया कारकत्वेन भावनारूपक्रियान्वयस्यैव व्युत्पन्नतया धात्वर्थान्वयासम्भवादित्यर्थः॥ **अनाख्यातत्वेनेति**॥ अतिङन्तत्वेनेत्यर्थः। ततश्च लिङन्तत्वे विधिप्रतिपादकता, लिङ्भिन्नाख्यातत्वे भावनाप्रतिपादकता; उद्भिदादिपदानां चातथात्वान्नोभयप्रतिपादकतया प्रामाण्यमित्यर्थः। ननु नामधेयतया विधेयधात्वर्थपरिच्छेदकतया प्रामाण्यं स्यादित्यत आह---**अन्यस्य चेति**॥ विधेयधात्वर्थपरिच्छेदस्यानाकाङ्क्षितत्वेन धर्मप्रमित्युपयोगस्य वक्तुं अशक्यत्वात् सोमादिपदानां तदसम्भवाच्चेत्यर्थः। **अध्ययनविध्यध्यापितस्य**---स्वाध्यायविधिप्राप्तस्य। **प्रकारान्तरासम्भवेऽपि**---विध्यर्थवादमन्त्रादिवत् द्वारविशेषासम्भवेऽपि॥ **विध्यन्तर्भावस्य स्पष्टत्वेनेति**॥ विधिवाक्ये श्रूयमाणत्वेनेत्यर्थः। **तत्रैव**---विधेययागादावेव। **गुणविधित्वेन** सोमादिपदानां, **नामधेयत्वेन** उद्भिदग्निहोत्रादिपदानां, **वक्ष्यमाणरीत्या**---तत्तदधिकरणेषु वक्ष्यमाणरीत्या, **प्रामाण्यं**--धर्मप्रमित्युपयोगः। सूत्रार्थस्तु, 'तद्भूतानां क्रियार्थेन समाम्नायः' 'आम्नायस्य क्रियार्थत्वात्' इत्यादिसूत्रैः **समाम्नायस्य**--वेदस्य; **ऐदमर्थ्यम्**----अंशत्रयविशिष्टभावनाप्रतिपादनार्थत्वम्, पूर्वमेव **उक्तम्**। भावना हि बहुविधकारकव्यापारघटितमूर्तित्वात्तत्तदन्वयानुगुणाकाङ्क्षाशालिनी। **तस्मात्**, मुख्यभूतायां भावनायां साक्षाद्वा परम्परया वान्वयिनः कारकभूतगुणाः। एतत्पदबोधकपदजातं नामधेयपदमपि भावनायां साक्षात्करणस्य सङ्कल्पादिव्यवहारोपयोगियोगरूढशब्दरूपं **सर्वं** अपि **तदर्थं**--भावनार्थं, **स्यात्** इति॥

**अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात्**॥ उक्तरीत्योद्भित्सोमादिपदानां धर्मप्रामाण्ये सिद्धे अधुना द्वारविशेषचिन्ता क्रियत इत्याह--**अतः परमिति**॥ प्रामाण्यसिद्ध्यनन्तरमित्यर्थः। अनेनोपजीव्योपजीवकभावस्सङ्गतिरिति सूचितम्। **कोष्ठशोधनिका**--विषयविवेचनम्॥ **तुल्यवद्वृत्तिकानामिति**॥ यागे गुणे च योगरूढेस्तुल्यत्वा-

वेति चिन्तायां—'भिदिर् विदारणे' इति स्मृत्या विदारणसमर्थखनित्रादिवचनत्वप्रसिद्धेः नामधेयत्वे वैयर्थ्यप्रसङ्गाच्च गुणविधित्वमेव युक्तम् । तत्र गुणविशिष्टं कर्मैव फलोद्देशेन विधीयत इत्येकः पक्षः । अथ वा प्रकृतसोमयागानुवादेन गुणमात्रविधानमित्यपरः । न च विनिगमनाविरहः । इतिकर्तव्यतासन्निधिविशेषस्यैव कर्मविधिनियामकत्वात् । न चैवं फलपदानर्थक्यम् । 'सर्वेभ्यो ज्योतिष्टोमः' इति वचनेन तस्य सर्वफलार्थत्वावगतेः यजिपदस्य पशुफलोपधायकयागलक्षणायां तात्पर्यग्राहकत्वात् । अत एव न विशिष्टोद्देशे वाक्यभेदः । न चोत्पत्तिशिष्टसोमप्राबल्यम् । पशुकामप्रयोगपुरस्कारेण विहितस्य च खनित्रादेः सामान्यविहितसोमादिबाधकत्वात् । वस्तुतस्तु—प्रकृत-

---

दिति भावः । तुल्यवदित्यनेन पूर्वपक्षे शुद्धयौगिकत्वस्वीकारोऽत्यन्ताप्रसिद्धयोगरुढिकल्पनापेक्षया श्रेयानिति ध्वनितम् । वस्तुतः सिद्धान्तेऽपि यौगिक एवोद्भिच्छब्द इत्यग्रे व्यक्तम् ॥

**स्मृत्येति** ॥ उदुपसृष्टाद्भिदादेः कर्तरि क्विपेत्यर्थः ॥ **खनित्रादीति** ॥ आदिपदेन 'उद्भिदः तरुगुल्माद्या उद्भिदुद्भिज्जमुद्भिदम्' इति कोशोक्तगुणपरिग्रहः । यागे फलोद्भेदनकर्तृत्वाङ्गीकारेऽपि भावनायाः तद्विषयाकाङ्क्षाभावेन तदन्वयायोगात् 'भक्षितेऽपि लशुने न शान्तो व्याधिः' इत्याह—**नामधेयत्व इति** ॥ **वैयर्थ्यैति** ॥ द्रव्यदेवतादिप्रकाशकत्वाभावेन प्रवृत्तिविशेषकरत्वाभावात् व्यर्थत्वापत्तेरित्यर्थः । गुणविधिप्रकारानाह—**तत्रेत्यादिना** ॥ **गुणविशिष्टमिति** ॥ न च मत्वर्थलक्षणा दोषः, तस्य सिद्धान्ते निरसिष्यमाणत्वात् । ननु पार्ष्ठिकबोधे मत्वर्थलक्षणा सिद्धान्तेऽप्यस्त्येवेत्यस्वरसादाह—**अथ वेति** ॥ **प्रकृतेति** ॥ प्रकरणेन सोमयागस्य उपस्थितत्वादिति भावः । अत्र सोमवाक्ये यागविधिः, उद्भिद्वाक्ये गुणविधिः; उत उद्भिद्वाक्ये यागविधिः, सोमवाक्ये गुणविधिरिति विनिगमनाविरह इत्याशङ्क्याह—**न चेति** ॥ **इतिकर्तव्यतेति** ॥ एकस्य कर्मणो बहुशाखासु श्रवणे सति कुत्र कर्मविधिरित्याकाङ्क्षायां यत्राङ्गभूयस्त्वं दृश्यते तत्रैव कर्मविधिरिति 'भूयस्त्वेनोभयश्रुति' इति तृतीये वक्ष्यते । ततश्च प्रकृतेऽपि सोमयागसन्निधौ दीक्षणीयादीनां बहूनामङ्गानां आम्नानात् सोमवाक्यमेव यागविधायकमित्यर्थः ॥ **फलपदेति** ॥ यागोद्देशेन गुणविधाने यागस्यैव भाव्यतया तेनैव भाव्याकाङ्क्षाशान्तेः फलपदानर्थक्यमिति भावः । परिहरति—**सर्वेति** ॥ फलपदस्य यजिधातोः पशुफलोपधायकयागलक्षणातात्पर्यनिर्णायकत्वेन सार्थक्यादित्यर्थः । पशुसाधनयागोद्देशेन उद्भिद्गुणविधाने विशिष्टोद्देशेन वाक्यभेद इत्याशङ्कां निराकरोति—**अत एवेति** ॥ एकपदोपादानादित्यर्थः । ननु तथापि यागस्योत्पत्तिशिष्टसोमावरुद्धत्वात् न तत्र गुणविधिरित्याशङ्क्याह—**न वेति** ॥ सोमस्य स्वर्गादिफलकज्योतिष्टोमादौ सावकाशत्वात् अस्य निरवकाशत्वेन प्राबल्यमित्याशयेनाह—**पशुकामेति** ॥ ननु धातोर्लक्षणैवास्मिन्पक्षे दोष इत्यस्वरसादाह—**वस्तुतस्त्विति** ॥

सोमयागाश्रितः खनित्रादिगुण एव फलोद्देशेन विधीयत इति तृतीयः पक्षः। काम्यत्वादेव च नित्यसोमबाध इति प्राप्ते--

नायं गुणविधिः, गौरवात्। तथा हि--सर्वत्रैव तावत् शुद्धधात्वर्थकरणकभावनाविधानात् आद्यो विधिप्रकारः। यथा--'अग्निहोत्रं जुहोति'[1] इति। अन्योद्देशेन तद्विधिरपरः। यथा--'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति। एतस्य चोद्देश्यवाचकपदान्तरसापेक्षत्वाद्दौर्बल्यम्। धात्वर्थोद्देशेन अन्यकरणकभावनाविधिस्तृतीयः। यथा--'दध्ना जुहोति' इति। अत्र विधेयताया धात्वर्थवृत्तित्वाभावात्, पदान्तरार्थवृत्तित्वाच्च[4] ततोऽपि दौर्बल्यम्। धातोस्साधुत्वार्थकत्वमङ्गीकृत्य अन्योद्देशेन अन्यकरणकभावनाविधिश्चतुर्थः। यथा--'दध्नेन्द्रियकामस्य जुहुयात्'[2] इति। अत्र धात्वर्थस्योद्देश्यत्वेनाप्यसम्बन्धात् ततोऽपि दौर्बल्यम्। गुणविशिष्टधात्वर्थकरणकभावनाविधानं पञ्चमः। यथा--'सोमेन यजेत' इति। अत्र विशेषणविधिकल्पनादेराधिक्यात्[3] ततोऽपि दौर्बल्यम्।

धातूपात्तसोमयागमाश्रित्य पशूद्देशेन खनित्रादिगुणविधिरित्यर्थः। पूर्वस्मिन्पक्षे उद्भित्करणकज्योतिष्टोमे पशुः फलम्। अस्मिन्पक्षे तु गुणस्य पशुफलकत्वेऽपि यागस्य फलान्तरमस्त्येवेति भावः। अस्मिन्पक्षे काम्यत्वाद्गुणस्य नित्यबाधकत्वं युक्तम्। 'पुरुषार्थसमापत्तेः काम्यं नित्यस्य बाधकं' इति न्यायादित्याह--**काम्यत्वादेव चेति**॥ सिद्धान्तमाह--**नायमिति**॥ गौरवोपपादनार्थं विधिप्रकारान् स्पष्टमुपपादयति--**तथा हीति**॥ आघाराग्निहोत्राधिकरणे वार्तिकन्यायसुधोक्तं विधिषाड्विध्यं सङ्गृह्णाति--**सर्वत्रैवेति**॥ उदाहरति--**अग्निहोत्रं जुहोतीति**॥ अत्र धात्वर्थातिरिक्तविधेयाभावात् शुद्धधात्वर्थस्य विधेयत्वमित्यर्थः। शुद्धत्वं धात्वर्थस्य फलसम्बन्धशून्यत्वमित्यभिप्रायः॥ **अन्योद्देशेन**--फलोद्देशेन। **तद्विधिः**--धात्वर्थविधिः। **अपरः**--द्वितीयः। आद्यापेक्षया द्वितीयस्य दौर्बल्यमुपपादयति--**एतस्येति**॥ **दौर्बल्यमिति**॥ आद्यापेक्षयेत्यर्थः। **अन्यकरणकभावनाविधिः**--दध्यादिकरणकभावनाविधिः। 'दध्ना जुहोति' इत्यत्र पदद्वयस्याविशेषेऽपि भावार्थाधिकरणन्यायविरोधप्रतिसन्धानसापेक्षत्वाद्विलम्बितोपस्थितिरित्याशयेनाह--**विधेयताया इति**॥ **पदान्तरार्थवृत्तित्वात्**--दध्यादिपदार्थवृत्तित्वात्। **ततोऽपि**--द्वितीयविधेरपि। **साधुत्वार्थं**--प्रत्ययसाधुत्वार्थम्। 'न केवला प्रकृतिः प्रयोक्तव्या' इति न्यायादिति भावः। **अन्योद्देशेन**--फलोद्देशेन; अन्यकरणकभावनाविधिः॥ **दध्नेन्द्रियकामस्येति**॥ अत्र धात्वर्थस्य उद्देश्यत्वेन विधेयत्वेन वा सम्बन्धाभावात्, एकपदोपादानश्रुतिलभ्यतः पदान्तरलभ्योद्देश्यस्य विलम्बितोपस्थितिकत्वाच्च तृतीयादपि दौर्बल्यमित्यर्थः॥ **विशेषणविधीति**॥ 'सोमेन यजेत' इत्यत्र सोमविशिष्टयागकरणकभावनाविधानेन विशेषणविधिं विना विशिष्टविध्यसम्भवात् विशेषणविधेः कल्पनीयतया चतुर्था-

१. तै. सं. १. ५. ९.  २. तै. ब्रा. २. १. ५.
३. विशेषणविधिकल्पनाधिक्यात् इति पाठान्तरम्। ४. पदार्थान्तरवृत्तित्वाच्च इति पाठान्तरम्॥

अन्योद्देशेन पूर्वोक्तष्षष्ठः । यथा—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः'[1] इति । अयं तु सर्वदुर्बलः । तदेवमुद्भिद्गुणविशिष्टस्य यागस्य फलोद्देशेन विधाने षष्ठविधिप्रकाराश्रय-

पेक्षया च दौर्बल्यमित्यर्थः । आदिना मत्वर्थलक्षणापरिग्रहः ॥ **अन्योद्देशेन**—फलोद्देशेन । **पूर्वोक्तः**—गुणविशिष्टधात्वर्थकरणकभावनाविधिः । **सर्वदुर्बलः**—पूर्वोक्तविधिपञ्चकापेक्षया च दुर्बलः, दौर्बल्यप्रयोजकदोषाणां सत्त्वादिति भावः ॥ **षष्ठविधीति** ॥ 'सौर्यं चरुं' इत्यादौ तु गत्यन्तरासम्भवात् जघन्यविध्याश्रयणेऽपि प्रकृते गत्यन्तरसम्भवात् न जघन्यविधिस्वीकारो युक्त इति भावः । अत्र वदन्ति । पूर्वपूर्वेण उत्तरोत्तरस्य न बाधसम्भवः । तथा सति ज्योतिष्टोमवाक्ये स्वर्गपदस्य सार्वकाम्यवाक्यप्राप्तानुवादकत्वं स्वीकृत्य प्रथमविधिस्वीकारापत्तेः, सोमवाक्ये तृतीयविधिप्रकारापत्तेश्च । न च स्वर्गकामपदानर्थक्यप्रतिहतत्वाद्विपरीतं बलाबलमिति वाच्यम्; तथात्वे पदान्तराघटितद्वितीयविधिप्रकारस्य क्वाप्यभावेन प्रथमेन द्वितीयबाधोदाहरणस्य दुर्लभत्वापत्तेः । किं बहुना । एतेषु समानामेव विषमाणामेव च परस्परसमवायेन समविषमयोरेकत्र समावेशोऽपि प्रायेण दुर्लभः । किञ्च प्रथमविधिप्रकारे धात्वर्थकरणकभावनाविधिरूपे इष्टसामान्यस्य, स्वर्गकामवाक्योपस्थितस्वर्गस्य वा भाव्यत्वात् अन्योद्देशेनेति द्वितीयप्रकारेऽन्तर्भावस्य स्पष्टत्वान्न तयोः प्राबल्यदौर्बल्ये सम्भवतः । न च स्ववाक्ये तदुपस्थित्यभावात् प्रथमस्य लघुत्वमिति वाच्यम्; तथा सति भावनायाः प्रथमं फलाकाङ्क्षानियमेन तदुपस्थित्यभावे प्रवृत्त्यनुपपत्त्या प्रवर्तनात्वरूपविधित्वस्यैवानुपपत्तेः । तदुपस्थितौ द्वयोरेकत्वध्रौव्यात् । न च श्रुतपदसमभिव्याहाराभावेन धात्वर्थमात्रसङ्क्रमात् प्रथमस्य लघुत्वमिति वाच्यम्; तथा सति धात्वर्थस्य करणत्वप्रतीत्यनुपपत्तेः। फलान्वये जाते हि करणाकाङ्क्षा । अन्यथा धात्वर्थस्य भाव्यत्वापत्तेः । किञ्च शुद्धधात्वर्थकरणकभावनाविधिरित्यत्र धात्वर्थस्य शुद्धत्वं नाम न तावत्फलान्वयरहितत्वम्; तस्योक्तरीत्या आवश्यकत्वात् । नापि स्वेतरविशेषणशून्यत्वं, अग्निहोत्रनामसत्त्वेन तस्याप्यसम्भवात् । नापि स्वेतरविशेषणीभूतार्थशून्यत्वं, अग्निहोत्रपदस्य संज्ञात्वेन विशेषणीभूतार्थत्वाभावादिति युक्तम् । तस्य प्राचीनमते सम्भवेऽपि ग्रन्थकारपक्षे संज्ञाप्रतिपाद्यार्थस्य विशेषणतायाः कौस्तुभोक्तत्वात् । किञ्च प्रथमे स्ववाक्यानुपस्थितफलबोधः; द्वितीये तु स्ववाक्योपस्थितफलबोध इति प्रथमस्यैव द्वितीयापेक्षया दौर्बल्यम्; द्वितीयस्य प्राबल्यमित्येव युक्तम् । अपि च उक्तप्रथमविधिप्रकारापेक्षयापि लघुविधिर्दृश्यते । नामधेयमन्तरेण श्रूयमाणो विधिः 'उपव्ययते, स्नाति' इत्यादिरेकः । करणस्वरूपमात्रस्याज्ञातज्ञापनरूपो विधिः 'ज्योतिर्गौरायुरथैष ज्योतिः' इत्यादिः । ततोऽपि पूर्वोऽन्य इति तस्मान्न षड्विधिप्रकारनियमः सम्भवति । एवं हविर्विशेषणदेवताविशेषणनिमित्तभावनाविशिष्टभावनान्तरबोधकानामुत्तरोत्तरगौरवाधिक्यशालिनां वाक्यानामसङ्ख्ये-

१, तै. सं. २. ३. २.

णात् अतिगौरवम् । गुणस्य यागेऽनन्वयात् मत्वर्थलक्षणा च । न हि भावनायां समानपदोपात्तधात्वर्थकरणत्वावरुद्धायां गुणस्य करणत्वं सम्भवति । अतस्तस्य यागान्वयावश्यकत्वेन यागस्य कारकत्वात्, कारकाणां च परस्परसम्बन्धानुपपत्तेः 'सोमेन यजेत' इतिवत् उद्भिद्वता यागेनेति मत्वर्थलक्षणा आवश्यकीति प्राञ्चः । वस्तुतस्तु—दृष्टान्तेऽपि सोमस्य करणत्वेनैव भावनायामन्वयस्तत्र तत्र वक्ष्यते ; युक्तश्च । एककरणत्वावरुद्धेऽपि करणत्वान्तरस्य भिन्ननिरूपितस्य प्रकारतया भावनान्वयोपपत्तेः । न हि यागकरणत्वं भावनानिरूपितं, अपि तु स्वर्गनिरूपितम् । अतश्च यथैवान्यनिरूपितमपि तत्करणत्वं प्रकारतया भावनायामन्वेति, तथैव सोमकरणत्वमपि यागनिरू-

यतया बहुप्रकारत्वमेव विधेः स्यादिति न षड्विध इति नियन्तुं शक्यम् । एवं य इष्ट्यादिवाक्ये धात्वर्थोद्देशेन विकल्पविशिष्टकालस्य कालविशिष्टविकल्पस्य वा विधिरूपः प्रकारोऽपि पूर्वाचार्यैः तर्कपादे उक्तः । तथा 'प्राकाशावध्वर्यवे ददाति' इति धात्वर्थोद्देशेनान्ययोः सम्बन्धमात्रविधिरष्टम इति प्राचीनैरुक्तम् । तस्माद्विधेः बहुप्रकारत्वान्न षड्विधिप्रकारनियम इति प्रौढिवाद एवायम् । वार्तिके तु षडपि प्रकारास्सम्भवन्ति । एवमन्येऽपि प्रकारा ऊह्या इत्यभिप्रायेण कथञ्चिन्नेयमिति सङ्क्षेपः ॥ **गुणस्येति** ॥ कारकाणां परस्परसम्बन्धाभावेन यागेऽन्वयासम्भवात् गुणपदेऽनुगुणवद्धात्वर्थस्य लक्षणीयत्वादपि गौरवमित्यर्थः। लक्षणामेवोपपादयति—**न हीति** ॥ **सोमेनेति** ॥ 'सोमेन यजेत' इत्यत्र हि सोमस्य तृतीयान्तपदोपात्तस्य भावनायां न करणत्वेनान्वयः, भावनायाः समानपदोपात्तधात्वर्थकरणत्वावरुद्धत्वात् । नापि धात्वर्थे, धात्वर्थस्य कारकतया कारकाणां परस्परसम्बन्धाभावात् । अतस्सोमपदस्य सोमवता यागेनेति मत्वर्थलक्षणाया आवश्यकत्वमित्यर्थः । मत्वर्थलक्षणां निरस्यति—**वस्तुतस्त्विति** ॥ सोमयागयोः परस्परान्वये हि मत्वर्थलक्षणा भवति । स एव नास्तीत्याह—**सोमस्येति** ॥ **तत्र तत्रेति** ॥ भाष्ये, सप्तमनवमाध्याययोर्वार्तिके, आघाराग्निहोत्राधिकरणे शास्त्रदीपिकायां 'भावनान्वयतः पश्चादंशयोः पार्ष्णिकोऽन्वयः' इति सप्तमे, तन्त्ररत्नेऽप्येकद्रव्यसंस्काराणां व्याख्यातमित्येकादशचतुर्थाधिकरणे, अन्यत्राप्याकर एवोक्तोऽर्थोऽस्माभिरपि वक्ष्यत इत्यर्थः । ननु समानपदोपात्तधात्वर्थकरणत्वावरुद्धत्वात् भावनाया आकाङ्क्षाभावेन कथं सोमादेः करणत्वेनान्वय इत्याशङ्क्य परिहरति—**एककरणेति** ॥ **भिन्ननिरूपितस्येति** ॥ भावनायाः स्वभाव्यनिर्वर्तकस्येव करणनिर्वर्तकस्याप्याकाङ्क्षितत्वेन तयोश्च द्वारभेदेनैव तत्रान्वयात्, एकान्वयेन इतराकाङ्क्षाशान्तेरभावादिति भावः ॥ **न हीत्यादि** ॥ यागकरणत्वस्य फलनिरूपितस्यापि यथा भावनायां अन्वयः, तथा सोमकरणत्वस्य यागनिरूपितस्यापि भावनायामेवान्वयः । कारकाणां क्रिययैव अन्वयनियमादिति भावः । अत्र च योऽयं निरूपितकरणकत्ववान् स तद्भाव्यकभावनायामन्वेतीति नियमात् स्वर्गभाव्यकभावनायां कथं सोम-

पितम् । उभयत्र तत्तन्निरूपकत्वस्य पार्ष्ठिकबोधलभ्यत्वाच्च न कोऽपि विरोध इति । नास्मिन् पक्षे यद्यपि मत्वर्थलक्षणा ; तथाऽपि विशेषणविधिकल्पनादिकृतं गुणयागोभयविशिष्टभावनाविधेर्गौरवमापाद्यमानं नापह्नोतुं शक्यम् । यथा च प्राथमिकभावनासम्बन्धाङ्गीकारेऽपि द्वितीयबोधवेळायां मत्वर्थलक्षणा तथोक्तं कौस्तुभे । एवं द्वितीयतृतीयपूर्वपक्षयोरपि जघन्यविधिप्रकाराङ्गीकरणं दोषाय । अगत्या च दधिसोमादावेव तदङ्गीकृतम् । तेषां तत्र अर्थान्तरे रूढत्वेन नामत्वासम्भवात् । प्रकृते तु येनैव योगेन खनित्रे प्रवृत्तिः तेनैव योगेन उद्भिद्यते उत्पाद्यते फलमिति व्युत्पत्त्या कर्मण्यपीति नामत्वसम्भवेन द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम् । न च भिदो विदारण एव स्मृतेः शक्तिः ; भिदिर इत्येव धातुपाठात् । विदारण इत्यस्य शक्यार्थमात्रोपलक्षणत्वस्य वैयाकरणसिद्धान्तसिद्धत्वात् । अतो विदारण इवोत्पादनेऽपि प्रयोगात्तुल्यवद्वृत्तिकता ।

---

स्यान्वयः । यागभाव्यकभावनायाश्च प्रत्ययेनानुपस्थितत्वात् । अतश्च प्रधानभावनाया एव सम्बन्धवैलक्षण्येन करणद्वयाकाङ्क्षायां एकस्य साक्षादन्वयः, अन्यस्य स्वकरणकभावनाभाव्यकरणकत्वेनेत्येव वक्तव्यम् । तत्तत्सम्बन्धविशेषावधारणं च पार्ष्ठिकमेवेत्याशयेनाह— **उभयत्रेति** ॥ स स निरूपको यस्य सम्बन्धस्येति विग्रहः ॥ **अस्मिन्नपि पक्षे** -- विशिष्टविधिपक्षेऽपि । ननु एवं पूर्वपक्ष एवाङ्गीकार्यस्स्यादित्यत आह—**तथापीति** ॥ विशिष्टविधौ विशेषणविधिकल्पने गौरवात् पूर्वपक्षो न युक्त इति भावः । ननु एवं मत्वर्थलक्षणाप्रतिपादकवार्तिकादिविरोध इत्यत आह —**यथा चेति** ॥ द्वितीयबोधवेलायां मत्वर्थलक्षणाया आवश्यकत्वात् तदभिप्रायेण वार्तिकाद्युपपत्तिरिति भावः । सोमकरणिका यागकरणिका फलभाव्यिका भावना प्रवर्तनाविषय इति प्रथमबोधः । भाव्यत्वादिनिरूपकाकाङ्क्षायां यागेन फलं भावयेदित्याकारको द्वितीयः । ततो 'नासाधितम्' इति न्यायेन आक्षिप्तकर्मनिरूपकाकाङ्क्षायां सोमेन यागं भावयेदिति तृतीयः । प्रथमबोधे विषयस्य सोमस्य, द्वितीयबोधे विषयत्वस्यावश्यकतया योग्यतया च सोमवता यागेनेत्याकारकत्वं तस्याङ्गीकार्यमित्याशयः । द्वितीयतृतीयपूर्वपक्षयोर्दुर्बलविधिप्रकाराङ्गीकरणमेव दोष इत्याह— **एवमिति** ॥ तर्हि 'दध्ना जुहोति' 'सोमेन यजेत' इत्यादावपि दुर्बलविध्यङ्गीकारो न स्यादित्यत आह— **अगत्येति** ॥ दधिसोमपदयोर्लोकेऽत्यन्तनिरूढत्वेन यागनामत्वासम्भवादित्यर्थः । उद्भित्पदे यागनामत्वसम्भवमाह—**प्रकृत इति** ॥ **येनैवेति** ॥ यथा उद्भिनत्तीति व्युत्पत्त्या ऊर्ध्वविदारणकर्तृखनित्रादिपरत्वं, तथा योगेन यागनामत्वमपि सम्भवतीत्यर्थः ॥ **उद्भिद्यत इति** ॥ उद्भिनत्तीत्यर्थः । यथाश्रुते कर्मणि क्विपोऽसाधुत्वात् ॥ **द्वितीयविधीति** ॥ अन्योद्देशेन धात्वर्थविधानादिति भावः । ननु पूर्वोक्तस्मृत्या कोशादिना च भिदिर्धातोर्विदारण एव शक्तत्वात् उत्पादनार्थत्वेन नामत्वमयुक्तमित्याशयेन शङ्कते—**न चेति** ॥ **वैयाकरणेति** ॥

**न च नामधेयानर्थक्यम् ;सङ्कल्पादौ सार्थकत्वात् । क्वचित्फलोपसम्बन्धश्च,[१]यथा-'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । क्वचिद्गुणोपसम्बन्धश्च,[२] यथा--'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति । प्रकृते च संज्ञया भेदसिद्धिरेव प्रयोजनम् । इतरथा हि प्रकृत एव कर्मणि गुणफलोपबन्धापत्तेर्न कर्मान्तरत्वम् । न च योगस्य फलोद्भेदनकारित्वस्यातिप्रसक्तत्वात् अपूर्वे कर्मणि रूढिकल्पने सोमादिपदानामपि तदापत्तिः । सर्वत्र योगरूढिस्थले प्राचीनप्रयोगस्यैव कारणतायाः क्लृप्तत्वेन प्रकृते तदकल्पनात् । प्रयोजनं स्पष्टम् ॥ २ ॥**

---

'कुर्द-खुर्द-गुदक्रीडायामेव' इत्येवकारात्, 'तनूकरणे तक्षः' इति सूत्रे तनूकरणपदाच्च ज्ञापकात् प्रसिद्धसर्वार्थोपलक्षकत्वं विदारण इत्यस्येति भावः ॥ **तुल्यवद्वृत्तिकतेति** ॥ तथा च योगेन गुणपरत्वमिव नामधेयत्वमपि सम्भवतीति लाघवेन नामत्वमेव युक्तम् । 'असुराणां वै वलं तमसा प्रावृतः' इत्यारभ्य 'स उद्भिदैव बलं व्यच्यावयत्' इत्यन्तेन वाक्यशेषेण यागे अवयवव्युत्पत्तेः प्रदर्शनादुद्भिच्छब्दस्य नामत्वं युक्तमित्याशयः । ननु गुणविधिपक्षे प्रवृत्तिविशेषकरत्वं सम्भवति, गुणवशात्कर्मविशेषप्रतीतेः । नामधेयत्वे तु यजिनैव विधिसहकृतेनान्यत्राविहितोऽयं यागविशेष इत्यवगमसम्भवादानर्थक्यमित्युक्तम् । अत आह—**न चेति** ॥ **सङ्कल्पादाविति** ॥ 'उद्भिदा यक्ष्ये' इति सङ्कल्पे ऋत्विग्वरणादौ च सार्थक्यादित्यर्थः । **फलोपसम्बन्धः**—फलसम्बन्धः ॥ **दर्शेति** ॥ दर्शपूर्णमासपदयोः संज्ञात्व एव त्रिकद्वयस्य फलसम्बन्धसिद्धिः । इतरथा यजिना त्रिकद्वयस्य प्रयाजादीनां च ग्रहणात् राजसूयवत् सर्वेषां फलसम्बन्धापत्तेरित्यर्थः ॥ **गुणोपसम्बन्धः**—गुणसम्बन्धः ॥ **संस्थाप्येति** ॥ पौर्णमासीसंज्ञया यागत्रयानुवादाद्वाक्यात् वैमृधस्य तन्मात्राङ्गत्वसिद्धिरिति । अन्यथा प्रकरणात् दर्शपूर्णमासाङ्गत्वापत्तेरित्यर्थः ॥ **प्रकृते**—उद्भिच्छब्दस्थले । **संज्ञया**—उद्भित्संज्ञया । **भेदसिद्धिः**—ज्योतिष्टोमयागाद्भेदसिद्धिः । 'अथैष ज्योतिः' इत्यादिवदित्यर्थः । एवकारोऽप्यर्थकः । तेनोक्तसङ्कल्पादिसङ्ग्रहः ॥ **इतरथा**—संज्ञाभावे । **प्रकृते**—सोमयागे ॥ **गुणेत्यादि** ॥ यागोद्देशेन उद्भिच्छब्दवाच्यखनित्रादिविधिः, यागमाश्रित्य पशूद्देशेन खनित्रादिविधिर्वा स्यान्न यागभेद इत्यर्थः । ननु उद्भिच्छब्दस्य फलोद्भेदनकारित्वप्रवृत्तिनिमित्तकनामत्वे पशूद्भेदनकारित्वस्य चित्रादियागेष्वपि सत्त्वात् तत्रापि उद्भिच्छब्दप्रयोगापत्तिरिति शङ्कते—**न चेति** ॥ **अपूर्वे कर्मणि**—विजातीययागे । **रूढिकल्पने**—रूढिं परिकल्प्यातिप्रसङ्गवारणे ॥ **सोमादीति** ॥ आदिना दध्यादिपदपरिग्रहः । **तदापत्तिः**—रूढिकल्पनापत्तिः । तथा च रूढेरसम्भवादतिप्रसङ्गो दुर्वार इत्याशयः । परिहरति—**सर्वत्रेति** ॥ पङ्कजादिपदेष्वपि योगरूढिर्न स्वीक्रियते । पङ्कजनिकर्तृत्वस्य योगार्थस्य कुमुदादिसाधारण्येऽपि तत्र प्राचीन-

---

१. फलोपबन्ध इति पाठान्तरम् । २. गुणोपबन्ध इति पाठान्तरम् ।

प्रयोगाभावादेव व्यवहारापत्तिवारणसम्भवान्न कुत्रापि योगरूढिरङ्गीक्रियत इत्याशयः । अत्रेदं बोध्यम् । योगरूढ्यनङ्गीकारे बहुतरपूर्वाचार्योक्तिविरोधः, शक्तिग्राहकव्याकरणादीनामानर्थक्यं, कुत्रापि शक्त्यप्रसिद्ध्यापत्तिश्चेति बहुशास्त्रव्याकुलीभावप्रसङ्गश्च स्यादिति । तथा हि योगरूढिस्थले योगेन पङ्कजशब्दस्य कुमुदादौ प्रयोगवारणाय अवयवार्थविषयकशाब्दबोधं प्रति रूढिज्ञानस्य प्रतिबन्धकत्वं कल्पनीयमिति प्राञ्चः । नव्यास्तु व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति न्यायेन रूढिशक्त्योपस्थितपद्म एवावयवार्थान्वयान्न कुमुदादौ प्रयोगप्रसङ्गः । तस्य रूढिशक्त्यनुपस्थितत्वादिति न प्रतिबन्धकत्वं कल्पनीयम् । तादृशन्यायानङ्गीकारे 'आग्नेय्याग्नीध्रमुपतिष्ठते' इत्यत्र ययाकयाचिदाग्नेय्याग्नीध्रोपस्थानं स्यादित्याग्नेय्यधिकरणविरोध इत्यादिकं बहुतरमुपपादितं श्रीमद्गङ्गेशमिश्रोपाध्यायैरिति तान्त्रिकविरोधस्स्पष्टः । तथा 'पङ्केरुहं तामरसं' इत्यादिकोशानां योगरूढ्यनङ्गीकारे वैयर्थ्यमेव । न च केवलरूढिशक्तिग्राहकत्वमेव कोशादीनामिति वाच्यम्; पङ्केरुहादिशब्दानां अवयवार्थबोधं जनयतां यौगिकत्वस्यापि सर्वमतसिद्धतया तत्र केवलरूढिकल्पनाया अन्याय्यत्वात् । किञ्च गार्ग्यायणादिशब्दानां अवयवव्युत्पत्तिं प्रतिपादयतां महर्षिपाणिन्यादीनां रूढिशक्तिप्रतिपादनतात्पर्ये अवयवव्युत्पत्तिकथनासाङ्गत्यापत्तिः । एवं अवयवव्युत्पत्तिप्रतिपादककोशेष्वप्ययमतिप्रसङ्गो द्रष्टव्यः । किञ्च रूढिशक्तिरेव लोके गगनकुसुमप्रायस्स्यात् । घटशब्दस्य पटे प्राचीनप्रयोगाभावादेव वारणे घटशब्दस्य पटे शक्तिर्नैव कल्प्या स्यात् । ननु घटशब्दस्य घटे प्रयोगं कुर्वतो बहुतरप्राचीनप्रयोगज्ञानस्य पूर्वमक्लृप्तस्य कल्पनापेक्षया एकस्या एव शक्तेः कल्पने लाघवमिति चेत् तत् योगरूढिस्थलेऽपि समानमिति केनाभिप्रायेण योगरूढिर्नास्तीत्युक्तमिति न विद्मः । किञ्च प्राचीनप्रयोगो वृद्धव्यवहाररूपः । स च शक्तिग्राहक इति सिद्धान्तः । ततश्च शक्तिग्राहकव्यवहारस्यैव शाब्दबोधोपयोगित्वे शक्तिरेव न सिध्येत् । ततश्च शक्तेरपलापे शक्तिलक्षणादिव्यवस्थाभावात्सर्वतन्त्रव्याकुलता स्पष्टैवेत्यादिकं सुधीभिर्विभावनीयम् । नन्वत्र 'उद्भिदा यजेत' इत्यादौ गुणविधिरेव सम्भवति । 'सर्वेभ्यो ज्योतिष्टोमः' इति वाक्येन प्रकृतस्य सोमयागस्य सर्वफलार्थतया पशुरूपफले निमित्ते उद्भिद्गुणविधानसम्भवात् । यथा 'यो वृष्टिकामः, यो अन्नाद्यकामः, यस्स्वर्गकामस्स सौभरेण स्तुवीत' इत्यत्र वृष्ट्यादिफलार्थत्वेन विहितस्य सौभरसाम्नः तत्तत्फलावरोधनिमित्तं 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति निधनविधेर्नियमविधानं तद्वदिति चेन्न; कामशब्दस्य निमित्तपरत्वं नास्तीत्येकादशे भाष्यकारादिभिरुक्तत्वेन निमित्तपरत्वासम्प्रतिपत्तेः । 'हीषिति वृष्टिकामाय' इत्यादावपि वृष्टिकामादिशब्दैः वृष्ट्यादिसाधनसौभरं लक्षयित्वा तदर्थत्वेन हीषादयो नियम्यन्ते । हीषादयः सौभराङ्गभूतास्तद्द्वारेण वृष्टिकामादिपुरुषाणामनियमेन शेषभूताः प्राप्ता नियम्य-

## (३)—यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ६ ॥

अत्र गुण एव रूढानां 'चित्रया यजेत पशुकामः'[1] 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' 'त्रिवृद्बहिष्पवमानं' इत्यादौ चित्राज्यपृष्ठत्रिवृद्बहिष्पवमानशब्दानां

न्त इति द्वितीये वक्ष्यमाणत्वात् । तस्मान्नामधेयत्वमेव युक्तमिति भावः । अत उद्भित्पदं उद्भित्पदेनानुक्तमपि प्रत्यक्षश्रुतत्वमात्रेण स्ववाच्यकर्मविशेषमन्यस्माद्व्यावर्तयद्विशेषणतां भजते । शब्दोपस्थितस्यैव अन्वयबोधविषयत्वमिति नियमः । संज्ञाशब्दातिरिक्तविषय इति केचित् । अन्ये तु संज्ञाशब्दानां स्वरूपप्रवृत्तिनिमित्तकत्वं 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्यनुशासनादिति । अतश्चोद्भिच्छब्दस्य उद्भित्पदेनोपस्थितत्वाच्छब्दोपस्थितानामेव शाब्दबोधविषयत्वमिति नियमस्याप्युपपत्तिरित्याहुः । यत्तु कौस्तुभे उद्भिच्छब्दार्थफलोद्भेदन–कारिणोऽभेदेन धात्वर्थेऽन्वय इत्युक्तं, तच्चिन्त्यम्; धातूपात्तयागकरणत्वस्य फलनिरूपितत्वेन तृतीयोपात्तनामार्थनिष्ठकरणत्वस्यापि फलनिरूपितत्वेन फलनिरूपितकरणत्वद्वयप्रतीत्यापत्तेः । पदस्यैव वाच्यतासम्बन्धेन विशेषणत्वे तु नामनिष्ठकरणताया धात्वर्थपरिच्छेदनिरूपितत्वेन द्वारभेदान्न फलनिरूपितकरणत्वद्वयप्रतीतिप्रसक्तिः । न च धात्वर्थस्य विशेषणत्वेऽप्येकस्यानुवादकत्वाङ्गीकारान्न करणत्वद्वयप्रतीतिरिति वाच्यम्; तथा सति धात्वर्थकरणत्वस्यानुवादो वा, तृतीयार्थकरणत्वस्यानुवादो वा? नाद्यः, समानपदोपात्तधात्वर्थकरणत्वानुवादायोगाद्धात्वर्थस्य करणत्वेनैव विधेयत्वस्यावश्यम्भावात् । न द्वितीयः, नामार्थनिष्ठकरणत्वस्यानुशासनसिद्धस्य विधेयत्वावश्यकत्वेनानुवादस्य प्रयोजनाभावात् । न च सोमादिवत् करणत्वद्वयस्यापि उक्तरीत्या भावनान्वयस्सम्भवति ; एकनिरूपितकरणत्वद्वयबोधासम्भवादित्युक्तत्वात् । नाम्न एव करणत्वेनान्वये तद्दोषाभावादिति दिक् । सूत्रार्थस्तु, **अपि** वेति पक्षव्यावृत्तौ । नायं गुणविधिः, किं तु कर्मण एव । उद्भिदादिपदं **नामधेयं स्यात् । यदुत्पत्तौ** प्रथमत एव पदार्थान्तरवाचकत्वेन रूढं न सम्भवति तत् **नामधेयं, गुणविधायकासम्भवात्** इति ॥

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः** ॥ उद्भिदादिपदस्य कर्मण्यपि सम्भववृत्तिकत्वान्नामत्वसम्भवेऽपि चित्रादिपदानां गुणादावेव प्रसिद्धत्वात् न दध्यादिपदवत् नामत्वसम्भव इत्युत्थानात्सङ्गतिरित्याशयेनाह—**अत्रेति** ॥ **गुण एवेति** ॥ तत्प्रख्यादिन्यायाविषयाणां नामतास्वीकारैकपरिहार्यवाक्यभेदप्रसक्तिकानां गुणजातिक्रियायोगान्यतमनिमित्तकानामित्यर्थः । **चित्रा**शब्दश्शबलरूपे, **आज्य**शब्दो घृतत्वजातौ, **पृष्ठ**शब्दो शरीरावयवे, **पवमानशब्दः** पवनक्रियाकर्तरि द्रव्ये च निरूढः । 'सर्वत्र यौगिकैश्शब्दैर्द्रव्यमेवाभिधीयते'

१. तै. सं. २. ४. ६.

गुणविधित्वं, कर्मनामधेयत्वं वेति चिन्तायां दध्यादिवत् रूढेषु कर्मनामधेयत्वासम्भवात् गुणविधित्वमेवैषाम् । तत्र चित्रापदे तावत् प्रातिपदिकेन चित्रत्वं, स्त्रीप्रत्ययेन च स्त्रीत्वं विधीयते । विधेययोः परस्परसाहित्यावगतेः विधेयसामर्थ्यानुरोधेन प्राणिद्रव्यकयागस्यैवोद्देश्यत्वावगतेः प्रकृतानां 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यं' इत्येतद्वाक्यविहितानां यागानामुद्देश्यत्वासम्भवेऽपि सर्वप्रकृतिभूताग्नीषोमीय-

---

इति न्यायात् । न तु स्तोत्रे सम्भवद्वृत्तिकः । अतो न पूर्वाधिकरणविषयत्वम् । सोमादेरनुदाहरणत्वाय वाक्यभेदेत्यादि । इन्द्रियकामवाक्यनिरासाय नामतेत्यादीति ध्येयम् ।'चित्रया' इत्यादि- दध्यादियागसप्तकवाचकचित्राशब्दः ज्योतिष्टोमे पञ्चदशस्तोमकानि चत्वार्याज्यनामकस्तोत्राणि सप्तदशस्तोमकानि षट् पृष्ठनामकानि स्तोत्राणि स्तोत्रीयानवकयुक्तं बहिष्पवमाननामकस्तोत्रमित्यर्थः । सर्वोदाहरणसाधारण्येन पूर्वपक्षमाह—**दध्यादिवदिति** ॥ उद्भिदादिवत् गुणे कर्मणि च तुल्यवद्वृत्तिकत्वाभावादिति भावः । तत्र चित्रापदे पूर्वपक्षमुपपादयति—**चित्रापद इति ॥ स्त्रीत्वमिति** ॥ खट्वादिपदे गुणत्रयापचयात्मकं स्त्रीत्वं, जातिपदे तु स्तनकेशादिमत्त्वरूपं टाप्प्रत्ययेन बोध्यते । तत्राद्यस्य केवलान्वयित्वेन गौणत्वान्मुख्यमेवेह विधेयत्वमित्यर्थः । **विधेययोः** -- चित्रात्वस्त्रीत्वयोः ॥ **परस्परेति** ॥ प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरिति भावः ॥ **विधेयसामर्थ्येति** ॥ 'यस्योभावग्नी अभिनिम्लोचेदभ्युदयाद्वा पुनराधेयं तस्य प्रायश्चित्तिः' इत्यत्राह । द्विरात्रन्यायेन निमित्तविशेषणोभयत्वाविवक्षायामपि विधेयस्य पुनराधेयस्य अग्निद्वयोत्पादकसामर्थ्यादेव अग्निद्वयानुगमस्य निमित्तत्वकल्पनमिति षष्ठे प्रतिपादनात् । इहापि विधेययोः चित्रत्वस्त्रीत्वयोः आरुण्यादिवदेकद्रव्यवृत्तित्वावगतेः प्राणिद्रव्यकयागस्य उद्देश्यत्वासम्भवादित्यर्थः ॥ **उद्देश्यत्वासम्भवेऽपि**—अप्राणिद्रव्यकतया स्त्रीत्वान्वययोग्यत्वासम्भवेऽपि ॥ **सर्वप्रकृतीति** ॥ 'दैक्षस्य चेतरेषु' इति न्यायादिति भावः । अनारभ्याधीतानां 'प्रकृतौ वाऽद्विरुक्तत्वात्' इति न्यायेन प्रकृतिगामित्वात् । प्रकृतौ च कृष्णसारङ्गलोहितसारङ्गत्वविधिभ्यां चित्रत्वस्योपसंहाराद्वाचनिकस्त्रीत्वसत्त्वे 'छागस्य वपायाः' इति मान्त्रवर्णिकपुंस्त्वस्य कल्पनानुपपत्तेः । पुँल्लिङ्गपशुशब्दस्य केवलान्वयिपुंस्त्वानुवादकत्वमिति न विरोध इत्याशयः । अत्र चित्रत्वेन स्त्रीत्वेन च विजातीयप्राणिद्रव्यकयागं भावयेदिति वचनव्यक्तिः । प्राणिद्रव्यकत्वस्योद्देश्यविशेषणतया अविवक्षायामपि विधेयसामर्थ्यानुसारेण प्राप्तत्वेन न वाक्यभेदः। न च तथापि फलस्याप्युद्देश्यत्वात् उद्देश्यानेकत्वप्रयुक्तो वाक्यभेदोऽस्त्येवेति वाच्यम्; पशुकामपदस्य यागीयद्रव्यपश्वार्जनकामनानुवादकत्वात् । अस्ति हि पशुयागं कुर्वतः पशुकामना; अतो नोद्देश्यानेकत्वमित्यभिप्रायात् । न च तथापि गुणफलसम्बन्धविधिरस्त्विति वाच्यम्; आश्रयालाभात्प्रकृतस्य दध्यादियागस्य चित्रत्वस्त्रीत्वाश्रयत्वासम्भवात् । यत्र हि

यागोद्देशेन सर्वपशुयागोद्देशेन वा विधीयते। न चानेकगुणविधाने वाक्यभेदः ; 'धेनुर्दक्षिणा'[1] इतिवत् उभयविशिष्टैककारकविधानेनावाक्यभेदात्। एवं आज्यपदेन घृतं, पृष्ठपदेन शरीरावयवः। स च सङ्ख्याविशिष्टः प्रकरणात् 'आज्यैस्स्तुवते, पृष्ठैः स्तुवते' इत्येतद्वाक्यविहितस्तोत्राङ्गतया यथाक्रमं विधीयते। एवं त्रिवृच्छब्दवाच्यं

---

गुणः कारकतां प्रतिपद्यते स आश्रयः। न च चित्रत्वस्त्रीत्वे दध्यादियागे कारकीभवितुमर्हतः। यजिना विजातीययागं लक्षयित्वा तत्सम्बन्धे फलसम्बन्धे च वाक्येन विधीयमाने वाक्यभेदस्यावर्जनीयत्वात्। नन्वनारभ्यन्यायेनाग्नीषोमीयपशौ निवेश इत्ययुक्तम्। पर्णतादौ द्विरुक्तत्वाद्धि प्रकृतिगामित्वमुक्तम्। विकृतौ पर्णताविधौ जुहूप्राप्त्यर्थं विकृतिषु चोदकापेक्षणात् चोदकेन पर्णतासहितजहूप्राप्तेः द्विरुक्तत्वं युक्तम्। प्रकृते च विकृतिष्वपि पशुविधानसत्त्वेन चोदकापेक्षाभावान्न द्विरुक्तत्वमिति न अनारभ्याधीतन्यायेन प्रकृतिगामित्वसम्भव इत्यत आह—**सर्वपश्विति**॥ प्रकृतौ विकृतौ च पशावित्यर्थः। ततश्च सर्वत्र वाचनिकमेव चित्रत्वस्त्रीत्वयोरङ्गत्वम्। तेन च 'य इष्टया' इति वाक्यविहितसद्यस्कालत्वस्य प्रकृतेर्द्व्यहकालावरुद्धत्वेन विकृतिषु निवेश इव कॢप्तोपकारातिदेशिकपाञ्चदश्यावरोधेन विकृतौ निवेश इव साप्तदश्यस्य नेह किञ्चित्कल्प्यम्। प्रकृते विरुद्धगुणावरुद्धत्वात्तत्र 'सवनीयं पशुमुपाकरोति' इत्यादावुभयोर्निवेशः। 'वायव्यं श्वेतमालभेत' इत्यादौ बाधः। यत्रान्यतरस्य पुनः प्रत्यक्षोपदेशः तत्र तदितरप्राप्तिः। यथा मेषीयागादौ ; तत्र पुनर्विधानेनाभ्युदयशिरस्कत्वं वा फलं कल्प्यमित्याद्यूह्यम्। ननु प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदः स्यादित्याशङ्क्य परिहरति—**न चेति**॥ **धेनुरिति**॥ प्राप्तदक्षिणानुवादेन धेनुत्वैकत्वविशिष्टकरणत्वस्यैकस्यैव एकपदोपात्तस्य विधानवदित्यर्थः। आज्यपदपृष्ठपदयोर्गुणविधित्वमुपपादयति—**एवमिति**॥ **सङ्ख्याविशिष्ट इति**॥ यद्यपि 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इत्यनुशासनेन पञ्चदशशब्दस्य डप्रत्ययान्तस्य सङ्ख्यापूरकत्ववचनं युक्तम्। तथापि सर्वेषामपि सङ्ख्येयानां सङ्ख्यापूरकत्वं सम्भवति। यथा 'षष्ठो भ्राता' इत्यादौ मध्यमेऽपि षट्पूर्वकत्वव्यवहारात्, 'पदं त्रेधा विभज्य तृतीयं गार्हपत्यस्य भस्मन्युपवपति, तृतीयमाहवनीयस्य, द्वितीयं पत्न्यै प्रयच्छति' इत्यादिश्रौतसूत्रकारीयव्यवहारानुसाराच्च सर्वत्र पञ्चदशोपपत्तिरिति सङ्ख्यावाचकत्वे पर्यवसानमिति भावः। केचित्तु 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इत्यनुशासनगतस्तोमपदस्य स्तोत्रसाधनगतसङ्ख्यावाचित्वमभ्युपगम्य पूर्वपक्ष इति वदन्ति। **प्रकरणात्**—स्तोत्रावान्तरप्रकरणात्। स्तोत्राङ्गतया विधाने स्तोत्रप्राप्त्यपेक्षायामाह—**आज्यैरित्यादिना**॥ एतद्वाक्यप्राप्तस्तोत्रोद्देशेन सङ्ख्यायुक्तान्याज्यानि सङ्ख्यायुक्तशरीरावयवश्च विधीयत इत्यर्थः। बहिष्पवमानपदे पूर्वपक्ष-

---

१. तै. सं. १. ८. ७.

त्रिभण्डिद्रव्यं पवनक्रियाविशिष्टं तथैव तद्वाक्येन विधीयते । सर्वत्र द्रव्याणां स्तोत्रसमीपदेशेऽदृष्टार्थं स्थापनेनैव स्तोत्रोपकारकता । उत्पत्तिवाक्येषु तु आज्यादिपदं गुणवाक्यप्राप्तत्वादनुवादः । स्तोत्रमात्रं तु विधीयत इति प्राप्ते—

प्राप्तकर्मानुवादेन चित्रत्वस्त्रीत्वरूपानेकगुणविधाने वाक्यभेदात् करणत्वस्यापि पशुगतस्य प्राप्तत्वेन अविधेयतया उभयविशिष्टैककारकविध्ययोगात् । अतश्च 'अजोऽग्नीषोमीयः' इति प्राकरणिकवचनेन विहितप्राकरणिकपुंस्त्वावरोधे स्त्रीत्वस्य विध्य-

---

मुपपादयति—**एवमिति** ॥ **पवनक्रियाविशिष्टं**—निष्पीडनक्रियाविशिष्टम् । **तथैव**—स्तोत्राङ्गत्वेनैव । आज्यादीनां स्तोत्रकरणत्वासम्भवेऽप्यङ्गत्वं सम्भवतीत्याह—**सर्वत्रेति** ॥ **स्तोत्रसमीपदेश इति** ॥ यथा 'अग्निमुपनिधाय स्तुवीत' इत्यत्र समीपस्थापनेनैवाङ्गत्वं तथा प्रकृतेऽपि समीपस्थापनेनैवाङ्गत्वं उपपद्यत इत्यर्थः । अयमाशयः । पञ्चदशपात्रेषु पञ्चदशगृहीतं वाऽऽज्यं स्तोत्रसमीपे स्थापनीयं, तथा सप्तदशपुरुषाः पृष्ठभागं प्रदर्श्य स्थिताश्चेत् सप्तदशपृष्ठानि भवन्ति, तथा त्रिकट्वादिद्रव्यं चूर्णीकृतं जलसिक्तं सदो बहिः वस्त्रेण निष्पीड्यमानं भवतीति । अत्र पृष्ठशब्दो योन्यवयववाचीति कश्चित्; तन्न, 'हन्तुः पृष्ठं ददाति' इति लोके 'पृष्ठवाहिनं अनड्वाहं' इति वेदे च प्रयोगदर्शनेन पृष्ठशब्दस्य शरीरपश्चाद्भाग्यवयववाचित्वात् । ननु आज्यादीनां उत्पत्तिवाक्यादेव प्राप्तत्वान्नात्र सङ्ख्याविशिष्टाज्यादिविधिस्सम्भवतीत्यत आह—**उत्पत्तिवाक्येष्विति** ॥ उत्पत्तिवाक्ये आज्यविध्यङ्गीकारे विधेयस्य करणत्वात् आज्यस्य तृतीयया करणत्वं वक्तव्यम्; तस्यासम्भवग्रस्ततयानुवादकत्वमित्याशयः । सिद्धान्तमाह—**प्राप्त इति** ॥ ननु उभयविशिष्टकरणत्वविधानादवाक्यभेद इत्युक्तम् । अत आह—**करणत्वस्यापीति** ॥ पशुकरणत्वस्याप्युत्पत्तिवाक्यप्राप्तत्वादित्यर्थः । ननु द्रव्यगतं करणत्वमपेक्ष्य चित्रत्वस्त्रीत्वगतकरणत्वयोः स्वरूपसम्बन्धरूपविशेषयोर्विलक्षणत्वात् परस्परविलक्षणयोरपि 'अरुणया' इत्येतदन्तेनैकया तृतीययोपादानसम्भवान्न विशिष्टकारकविधौ वाक्यभेद इति चेन्न; 'अजोऽग्नीषोमीयः' इति वचनेन लिङ्गनिरूपितकरणताया अपि प्राप्तत्वेन तृतीयया तामुद्दिश्य टाप्प्रत्ययांशेन स्त्रीत्वविधिः, प्रातिपदिकयुक्तया च तया चित्रत्वविशिष्टकरणत्वविधिरिति विधेयानां एकाभिधानप्रतिपाद्यत्वाभावात् अनिवार्यो वाक्यभेद इति । अन्ये तु कृष्णसारङ्गादिवाक्येन वर्णनिरूपितकरणताया अपि प्राप्तत्वात् । वस्तुतः चित्रत्वस्यापि तत एव प्राप्तेः पशुकामपदानुवादानुरोधेन फलोद्देशेन चित्रत्वविधानस्य वक्तव्यतया यजिना आश्रयसमर्पणे वाक्यभेदो दुर्वार इत्याहुः ॥ **प्राकरणिकेति** ॥ प्राकरणिकविधेरुत्पत्तिविधिविवरणरूपतया एकवाक्यत्वेन पुंस्त्वस्योत्पत्तिशिष्टतया तदवरुद्धे स्त्रीत्वविध्यसम्भवादित्यर्थः । सिद्धान्ते रूढिकल्पनादोषं

योगाच्च न गुणविधिः। अतः प्रकृतानामेव यागानां विचित्रद्रव्यकत्वेन लक्षणात् चित्रापदं नामधेयम्। इष्ट्यभिप्रायेण च स्त्रीप्रत्ययः। एवमाज्यादिपदेष्वपि। असमस्तत्वेन विशिष्टस्याव्युत्पन्नत्वात् प्राप्तस्तोत्रानुवादेन द्रव्यसङ्ख्याद्यनेकगुणविधौ वाक्यभेदः। न चोत्पत्तिवाक्य एव द्रव्यविशिष्टस्तोत्रविधिः, अत्र तु सङ्ख्यामात्रविधिरस्त्विति वाच्यम्; घृतादीनां स्तोत्रे करणत्वासम्भवेन विशिष्टविध्ययोगात्, पञ्चदशानीत्यादिस्तुतिगतसङ्ख्यारूपस्तोमवाचिडप्रत्ययस्य गुणविधित्वे अनुपपत्तेश्च। अत आज्यादिपदं वाक्यद्वयेऽपि शक्त्यैव स्तोत्रनामधेयम्। आज्यादिपदाभिधेयस्तोत्रानुवादेन गुणवाक्ये

---

परिहरति—**अत इत्यादिना**॥ दध्यादिविहितयागानां चित्रद्रव्यकत्वेन चित्रत्वाच्चित्रापदं नामधेयं गौण्येति न दोष इति भावः॥ **इष्टीति**॥ 'चित्रेष्ट्या यजेत' इति वाक्यकल्पनया स्त्रीलिङ्गेष्टिपदसामानाधिकरण्यसूचनार्थोऽयं स्त्रीलिङ्गनिर्देश इत्यर्थः॥ **एवमिति**॥ 'पञ्चदशान्याज्यानि' इत्यत्र समासाभावेन परस्परान्वयासम्भवात् द्वयोरपि क्रियान्वयस्यैव वक्तव्यतया द्वयोरपि विधाने वाक्यभेदस्स्यादित्यर्थः। असमस्तत्वेनेत्यनेन समासस्थले 'समर्थः पदविधिः' इति सूत्रानुसारेणैकार्थीभावलक्षणसामर्थ्यस्य आवश्यकतया विधिव्यापारं विना परस्परसम्बन्धोपपत्तेर्न वाक्यभेद इति सूचितम्। यद्यपि 'अग्नये दात्रे' इत्यादौ विशेषणविशेष्यभावेन उभयविशिष्टैककारकविधानवत् प्रकृतेऽपि सामानाधिकरण्येन विशेषणविशेष्यभावात् उभयविशिष्टैककारकविधानात् वाक्यभेदः परिहर्तुं शक्यः; तथापि डप्रत्ययविरोधादेव नामत्वं द्रष्टव्यमित्याशयः॥ **करणत्वासम्भवेनेति**॥ गुणाभिधानरूपस्तोत्रे शब्दस्यैव करणत्वात्। न च रथघोषादिवत्करणत्वं सम्भवतीति वाच्यम्; आज्ञापनरूपोपाकरणे नेत्रादिव्यापाराणामिव तत्सम्भवेऽप्यभिधानस्य वृत्त्यैकसाध्यतया शब्दं विनाऽर्थाभिधानासम्भवात्। 'घृतं मिमिक्षे' इत्यादिमन्त्रलक्षणायां तु प्राकरणिकमन्त्रबाधस्स्यादिति भावः॥ **पञ्चदशानीति**॥ स्तोमपदार्थतावच्छेदककोटौ ऋचामपि प्रवेशस्य याज्ञिकव्यवहारसिद्धतया तद्गतसङ्ख्यावाचित्वेन न आज्यादिद्रव्यगतसङ्ख्यावाचित्वमित्यर्थः॥ **वाक्यद्वयेऽपि**—उत्पत्तिवाक्ये गुणवाक्येऽपि॥ **शक्त्यैवेति**॥ मन्त्रेष्वाज्यसम्बन्धरूपलक्षणाया असम्भवादित्यर्थः। वस्तुतः यद्यपि कुर्यादित्यध्याहृत्य सङ्ख्याद्रव्योभयविशिष्टभावनान्तरविधानान्न वाक्यभेदः। तथापि 'यदाजिमीयुस्तदाज्यानामाज्यत्वं' 'पञ्चदशं होतुराज्यं' इत्यादिवैदिकव्यवहारानुरोधेन स्तोत्रविशेषे त्रिवृच्चर्वश्ववालादिशब्दवत् रूढिसिद्धिः। एवं चित्रादिपदेष्वपि 'इयं वै चित्रा' इत्यादिवाक्यशेष एव निर्णायकः। अधिकरणन्तु न्यायव्युत्पादनमात्रमिति द्रष्टव्यम्॥ **आज्योत्पत्तिवाक्य इति**॥ 'आज्यैः स्तुवते' इति वाक्ये बहुवचनश्रवणात् 'तिस्र आहुतीर्जुहोति' इतिवत् सङ्ख्यया कर्मभेद इति भावः। 'अग्न आयाहि वीतये' 'आ नो मित्रावरुणा'

सर्वत्र सङ्ख्यामात्रविधिः । आज्योत्पत्तिवाक्ये च तत्संज्ञकानि चत्वारि स्तोत्राणि गमकसहकृतबहुवचनेन तावत्त्वावगमात् । एवं पृष्ठोत्पत्तिवाक्येऽपि षट् । अनुष्ठेयानि तु नियतानि चत्वारि । आद्ययोर्द्वयोर्बृहद्रथन्तरयोः, अन्त्ययोः नौधसश्यैतयोर्वचनेन विकल्पविधानात् । यथा चात्र तत्तद्दूषणानां निरासो मतान्तरदूषणानि च तानि कौस्तुभे द्रष्टव्यानि ॥ ३ ॥

## (४)—तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

इह रूढानां यौगिकानां वा सम्भवत्प्राप्तिकानां 'अग्निहोत्रं जुहोति'[1] 'आघारमाघारयति'[2] 'समिधो यजति'[3] इत्यादौ अग्निहोत्रादिपदानां गुणविधित्वं, कर्मनाम-

---

'आयाहि सुषुमा हि ते' 'इन्द्राग्नी आगतं' इति तृचचतुष्टयस्य उत्तराग्रन्थपाठादाह—चत्वारीति ॥ कपिञ्जलन्यायापवादोत्तरादोहाधिकरणं स्मारयति—गमकेति ॥ ऋक्त्रयस्यैव प्रत्याज्यं पञ्चदशत्वं विष्टुतिब्राह्मणोक्ताभ्यासप्रकारभेदेन बोध्यम् ॥ षडिति ॥ 'अभित्वा, त्वामिद्धि, कया नः, तं वो दस्म, अभिप्रवः, तरोभिर्वः' इति तृचषट्केऽस्य पाठात् । ननु कथं चत्वारि पृष्ठानीत्यत आह—अनुष्ठेयानीति ॥ रथन्तरबृहद्वामदेव्यनौधसश्यैतकालेयानां षण्णां मध्ये बृहद्रथन्तरयोर्विकल्पस्य बृहत्पक्षे श्यैतं, रथन्तरपक्षे नौधसमिति व्यवस्थितविकल्पस्य च वचनान्तरसिद्धत्वादिति भावः ॥ पृष्ठैस्तुवत इत्यनेनैकमेव माहेन्द्रस्तोत्रं पृष्ठनामकं विधीयते । बहुवचनन्तु 'समिधो यजति' इतिवन्न कर्मभेदकम् । लिङ्गसमवायात्तु पुरोडाशानलङ्कुर्वितिवत् पृष्ठापृष्ठसमुदाये गौणम् । एकस्मिन्नेव पृष्ठस्तोत्रे बृहद्रथन्तरयोर्विकल्प इति न्यायसुधाकाराः । माहेन्द्रस्तोत्रे द्वैते एव पृष्ठापृष्ठपदवाच्ये । 'बृहत्पृष्ठं भवति' इत्यादिवाक्यद्वयेन उत्पन्ने मुख्यः । 'बृहद्रथन्तरं वा पृष्ठं भवति' इति वचनेन स्तोत्रयोरेव विकल्प इति पार्थसारथिमिश्राः । तत्र प्रकृतौ पृष्ठबहुत्वाङ्गीकारे नावमिकाधिकरणविरोधः परिहर्तव्य इत्याशयेनाह—यथा चात्रेति ॥ सूत्रार्थस्तु, यस्मिन्—वाक्ये । गुणोपदेशः—वाक्यभेदापादकगुणप्रतीतिः । तत्र, प्रधानतोऽभिसम्बन्धः—प्रधानस्य कर्मणो नामधेयं स्यादिति ॥

तत्प्रख्यं चान्यशास्त्रम् ॥ पूर्वाधिकरणोक्तभेदाभावेन अग्निहोत्रादिपदानां गुणविधित्वं अस्त्वित्युत्थानात् सङ्गतिः । पूर्वाधिकरणद्वयविषयीभूताश्शब्दा इह मिळित्वा विषया इत्याह—रूढानामिति ॥ ताभ्यामस्य गतार्थतां परिहरति—सम्भवदिति ॥ अत्रासम्भवत्प्राप्तिकानामिति मूलं धृत्वा असम्भवन्ती पूर्वाधिकरणाभ्यामसिध्यन्ती नामधेयत्वप्राप्तिर्येषामित्यर्थ इति केनचिद्व्याख्यातं; तन्नोपादेयम्, पूर्वाधिकरणाभ्यामित्यध्याहारापत्तेः । तस्मात्सम्भवत्प्राप्तिकानामित्येव छेदो युक्तः ॥ सम्भवत्प्राप्तिकानां—सम्भवत्प्राप्तिकगुणनिमित्तकानां, अग्नि-

---

१. तै. सं. १. ५. ९. २. तै. ब्रा. ३. ३. ७. ३. तै. सं. २. ६. १.

धेयत्वं वेति चिन्तायां प्रसिद्धेर्गुणविधित्वमेव युक्तम् । न च वाक्यभेदः; विधेयानेकत्वाभावात् । अग्निहोत्रपदे अग्नये होत्रमस्मिन्निति व्युत्पत्त्या उपसर्जनार्थोऽग्निर्देवता विधीयते । न च 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यनेन तस्याः प्राप्तत्वादविधानम् । तत्र अनेकगुणोपादानेन विशिष्टकर्मान्तरविधेरावश्यकत्वात् एतद्वाक्यविहिते कर्मणि तत्प्राप्तेरभावात् । अतो यत्र दर्वीहोमादौ आग्नेयो मन्त्रः पठितः तादृशदर्वी-

होत्रादिपदानामित्यर्थः ॥ **प्रसिद्धेरिति** ॥ अग्निशब्दस्य अग्निरूपगुणे प्रसिद्धत्वादिति भावः ॥ **गुणविधित्वमिति** ॥ 'यत्सायं प्रातश्च जुहोति' इति वाक्यविहितकालद्वयविशिष्टहोमोद्देशेनेति भावः । आघारवाक्ये गुणवाचकत्वमित्येव पूर्वः पक्षः । तस्य संस्कारविधित्वात् सामिद्वाक्ये सक्तुन्यायेन विनियोगभङ्गः 'विष्णुं यजति' इतिवद्देवताविधिर्वेत्याशयः । होतृशब्देन औणादिकतृन्प्रत्ययान्तेन हूयमानद्रव्याभिधानात्, तस्य देवतावाचकाग्निपदेन समाहारद्वन्द्वे सत्युभयविधानाद्वाक्यभेदं शङ्कते—**न च वाक्यभेद इति** ॥ परिहरति—**विधेयेति** ॥ होत्रशब्दस्य होमसाधनद्रव्यसामान्यपरत्वेन विशेषाकाङ्क्षायां दध्यादिवाक्यैर्विशेषसमर्पणे तैरेव विशेषविषयैर्द्रव्यप्राप्तिसम्भवेन सामान्यविधेर्व्यर्थत्वान्न द्रव्यविधिः, किन्तु देवतामात्रविधिरिति न वाक्यभेद इति भावः ॥ **अग्नय इति** ॥ प्रकृतिविकारभावाभावेन चतुर्थीसमासस्यासम्भवात्, सम्बन्धिविशेषापरिज्ञानेन षष्ठीसमासानुपपत्तेः, शौण्डादिगणपाठाभावेन सप्तमीसमासायोगात्, 'यदाहवनीये जुहोति' इति वाक्येनैव प्राप्तार्थत्वात्, अग्नौ होत्रमस्मिन्निति समासस्यायोग्यत्वाच्च अगत्या छान्दससमास एवायमिति कश्चित्; तन्न, बहुव्रीहिसम्भवात् । अत एव अग्नये होत्रमस्मिन्निति मूले व्युत्पत्तिरुक्ता । ननु 'अनेकमन्यपदार्थे' इति सूत्रेण समानाधिकरणानामेव बहुव्रीहिविधानादग्नये होत्रमस्मिन्निति व्यधिकरणबहुव्रीहिर्न युक्त इति चेन्न; 'सप्तमीविशेषणे बहुव्रीहौ' इति सप्तमीगर्भव्यधिकरणबहुव्रीहेश्शास्त्रसम्मततया तेनैव सामान्यप्रापकेन चतुर्थीगर्भव्यधिकरणबहुव्रीह्यङ्गीकारात् । अत एव 'सच्छास्त्रजन्यो हि विवेकलाभः' इत्यत्रावर्ज्यो जन्माद्युत्तरपदो व्यधिकरणबहुव्रीहिरिति वामनः । एवञ्च बहुव्रीहिणैव मत्वर्थस्योक्तत्वान्न मत्वर्थलक्षणेत्याह पार्थसारथिः ॥ **उपसर्जनार्थ इति** ॥ 'लोहितोष्णीषाः' इत्यादौ लौहित्यवदित्यर्थः । अग्नेर्वचनान्तरेण प्राप्तत्वान्न विधानमित्याशङ्क्य परिहरति—**न चेत्यादिना** ॥ **अनेकगुणेति** ॥ 'यदग्नये च' इत्यत्राग्नेः प्रजापतेः सायङ्कालस्य च श्रवणेनानेकगुणविधाने वाक्यभेदापत्त्या विशिष्टकर्मान्तरविध्यवश्यम्भावेन तेनाग्निप्राप्त्यसम्भवादित्यर्थः । न च सायं प्रातर्वाक्यविहितकर्मोद्देशेन 'यदग्नये च' इत्यनेनाग्निप्रजापत्युभयविशिष्टैककारकविधानान्नोक्तदोष इति वाच्यम्; विभक्तिभेदेन कारकनानात्वादिति भावः ॥ **एतद्वाक्यविहिते** अग्निहोत्रोत्पत्तिवाक्यविहिते । गुणविधानायानुवाद्यप्राप्तिमाह—**यत्रेति** ॥ सायं प्रातर्वाक्यविहितहोमादावित्यर्थः ॥ **आग्नेयो मन्त्र इति** ॥ अनेन देवतान्तरावरोधो

होमानुवादेन देवतामात्रमनेन विधीयते विशिष्टकर्मान्तरं वा । न च तेन तत्प्राप्तिसम्भवः मान्त्रवर्णिकविधेरकल्पनीयत्वात् । आघारवाक्येऽपि द्वितीयान्ताघारपदेन क्षरणसाधना-ज्यादिद्रवद्रव्यमभिधीयते । धातुना च क्षरणाख्यसंस्कारः तदुद्देशेन विधीयते, अविनियुक्तस्य संस्कारायोगात् । प्रकरणकल्पितवाक्येन उपांशुयाजाङ्गतया द्रवद्रव्यं विधीयते । 'चतुर्गृहीतं वा एतदभूत् । तस्याघारमाघार्य' इत्यनेन प्रयाजाङ्गभूत-चतुर्गृहीतविशेषसमर्पणम् । सर्वथा आघारपदं द्रव्यपरं न नामधेयमिति प्राप्ते—

नास्तीति सूचितम् । ननु 'यदग्नये च' इति वाक्यविहितकर्मण एव अग्निहोत्रनामसिद्ध्यर्थं अग्निहोत्रवाक्यं विद्वद्वाक्यवदनुवादोऽस्त्वित्यत्राह—**विशिष्टेति** ॥ 'अग्निहोत्रं जुहोति' इत्यत्राग्निदेवताविशिष्टं कर्म विधीयते । 'यत्सायं प्रातश्च' इति वाक्ये तस्यैवाभ्यासविधिः । मन्त्रद्वयविधिरभ्यासाभिप्रायेण प्रातःकालिकाभ्यासमन्त्रस्थसूर्यपदस्यैन्द्रीन्यायेनाग्निलक्षणा । 'यदग्नये च' इति वाक्यद्वयं तु पूर्ववदेव व्यवस्थितकर्मद्वयविषयमिति सर्वेषां विधायकत्व-सम्भवे अनुवादकत्वस्यायुक्तत्वादिति भावः । ननु 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा इति सायं जुहोति' इति वचनविहितमन्त्रवर्णादेव सिद्धान्त इवाग्निहोत्रवाक्यविहितकर्मणि देवता-प्राप्तिसम्भवान्न गौरवापादकविशिष्टविधित्वं युक्तमित्याशयेन शङ्कते-**न चेति** ॥ परिहरति—**मान्त्र-वर्णिकेति** ॥ मन्त्रवर्णो न विधायकः ; लिङाद्यभावात् । अतो मन्त्रवर्णेन विधिः कल्प्यः । स च कल्पनागौरवात्प्रत्यक्षवचनादेव प्राप्तिसम्भवाच्चायुक्त इति भावः । आघारवाक्ये गुण-वाचकत्वमुपपादयति—**आघारवाक्य इति** ॥ आङुपसृष्टात् घारयतेः 'अकर्तरि च कारके संज्ञायां' इत्येरचि कृते घार्यतेऽयमित्याघारो द्रवद्रव्यं, न तु भावव्युत्पत्त्या कर्मनामधेयमित्यर्थः। आदिना दधिपयस्सोमादीनां परिग्रहः । ततश्च द्वितीयान्ताघारपदेन क्षरणसमर्थद्रवद्रव्य-मनूद्य तदुद्देशेन क्षरणाख्यसंस्कारविधिः । यथा पात्रस्थपानीयस्य क्षरणेन संस्कारः, एवं आज्यादीनामपीत्याघारपदं द्रव्यपरमिति भावः । संस्कारस्योपयोगमाह—**अविनियुक्तस्येति** ॥ भूतभाव्युपयोगविधुरस्येत्यर्थः। ततश्च संस्कारविध्यन्यथानुपपत्त्या क्षरणसंस्कृतद्रव्येण उपांशुयाजं भावयेदिति प्रकरणकल्पितविधिनोपांशुयाजाङ्गत्वमित्यर्थः। न च संस्कारविध्यनुपपत्त्या विनियोग-कल्पने सक्तुष्वपि तदापत्तिरिति वाच्यम्; सक्तूनां पूर्वमुपयोगाभावेनोपयुक्तसंस्कारासम्भवात्, होमेन भस्मीभूतानामुपयोक्ष्यमाणत्वासम्भवाच्च तत्र तदकल्पनमित्याशयात्। ननूपांशुयाजाज्य-संस्कारकत्वं न युक्तम् । जौहवाज्यस्य प्रयाजार्थतया तस्य क्षरणेन उपांशुयाजाज्यसंस्कारा-सम्भवादित्यस्वरसात् चतुर्गृहीतवाक्यप्राप्तजौहवाज्योद्देशेन संस्कारविधिरित्याह—**चतुरिति** ॥ ततश्च प्रयाजाङ्गजौहवचतुर्गृहीतोद्देशेन संस्कारविधिरित्यर्थः। **सर्वथा**—पक्षद्वयेऽपि ॥ **न नाम-धेयमिति** ॥ कर्मण इति शेषः । 'सायं जुहोति' इत्यादिवाक्यप्राप्तहोमानुवादेन गुणविधिर्न

१. आघारपदेऽपि इति पाठान्तरम् ।

**मन्त्रवर्णकल्प्यविधिनैव प्राप्तिसम्भवेऽस्य पूर्वप्रवृत्तविधिवैफल्यापत्तेः, अभ्युदयशिरस्कत्वस्य च सम्भवति प्रथमविध्यापादकधात्वर्थविधौ अन्याय्यत्वात् न तावद्दर्वीहोमानुवादेन देवताविधिः । नापि विशिष्टकर्मान्तरविधिः ; 'अग्निर्ज्योतिर्ज्योतिरग्नि-**

सम्भवति, तद्वाक्यस्य कालविधित्वोपपत्तौ विशिष्टविधिगौरवस्यानुचितत्वादग्निहोत्रवाक्यस्याग्निहोत्रनामककर्मविधित्वे 'सायं जुहोति' इत्यस्य कालविधायकत्वेन वाक्यद्वयेऽपि विशिष्टविध्यभावाल्लाघवमित्यमुमर्थं हृदि निधाय दर्वीहोमानुवादेन गुणविधिरिति पक्षं दूषयति—**मन्त्रवर्णकल्प्येति** ॥ विधिर्हि स्वलाघवाय प्रमाणान्तरमालोच्य प्रकारान्तरेणाप्राप्तमर्थं विधत्ते । प्रकारान्तरेण प्राप्तिसम्भवे तदंशेऽनुवादमात्रमित्युत्सर्गः । प्रकृते च मन्त्रवर्णकल्प्यविधिनैव गुणप्राप्तिसम्भवान्न तद्विषये विधिव्यापार इति न गुणविधित्वमित्यर्थः । ननु मन्त्रवर्णकल्पितविध्यपेक्षयास्य पूर्वप्रवृत्त्यङ्गीकारेण गुणविधित्वसम्भव इत्यत आह—**विधिवैफल्यापत्तेरिति** ॥ फलसत्त्वे हि मन्त्रवर्णात्पूर्वं वचनप्रवृत्तिः, न त्विह । फलाभावादित्यर्थः । ननु मित्रविन्दादिसाद्यस्कवत् उभाभ्यां विहितो गुण इति ज्ञानपूर्वकानुष्ठानेनाभ्युदय इति कल्प्यत इत्यत आह—**अभ्युदयेति** ॥ विधिसन्निहितधात्वर्थविधिसम्भवे तत्कल्पनस्यान्याय्यत्वात् । अभ्युदयशिरस्कत्वस्यागतिकविषयत्वादिति भावः । देवताविशिष्टकर्मविधिरिति पक्षं दूषयति—**नापीति** ॥ वचनेन मन्त्रविनियोगानुसारेण मान्त्रवर्णिकदेवताविधेरवश्यकल्पनीयतया तत एवाग्निप्राप्तया अग्निहोत्रवाक्यस्य धात्वर्थमात्रविधानेन लाघवादिति भावः । अग्निहोत्रपदस्यान्तोदात्तत्वेन उक्तव्यधिकरणबहुव्रीहेर्वाचनिकत्वाभावेन च देवताप्रापकप्रमाणत्वं न सम्भवतीत्येवकारेण ध्वन्योऽर्थः । तथा चायमर्थः । अग्निहोत्रवाक्ये परिशेषात्कर्ममात्रविधिः । तस्यैव सायम्प्रातर्वाक्येन कालभेदेनाभ्यासः । तद्भेदेन मन्त्रव्यवस्थया सायमग्निः प्रातस्सूर्यः इति देवताव्यवस्था । 'यदग्नये च' इति वाक्यद्वयं तु तत्रैव देवतान्तरं विधत्ते । न च कालद्वयेऽपि 'यदग्नये च' इति वाक्याभ्यां प्रजापतिविधानेन वचनप्राप्तप्रजापतिना मान्त्रवर्णिकाग्निसूर्यबाधापत्तिरिति वाच्यम् ; चशब्दश्रुत्याग्निसूर्यसमुच्चितप्रजापतिविधानेन बाधायोगात् । अन्यथा 'प्रजापतये जुहोति' इत्येतावदेव वचनं स्यान्नाधिकं, वैयर्थ्यापत्तेः । ततश्चैतादृशवाक्यानर्थक्यप्रतिहतत्वेनोत्पत्तिशिष्टप्रायमान्त्रवर्णिकदेवताविधितुल्यबलत्वमस्य विधेस्सिध्यति । एतेन मान्त्रवर्णिकविधेरुत्पत्तिशिष्टप्रायत्वेन न तत्रोत्पन्नशिष्टप्रजापतिनिवेशः । प्रत्युताग्नेः प्रजापतिं प्रति विशेषणत्वेन शेषत्वापत्तिश्चेति वरदराजोक्तं निरस्तम् । मन्त्रवर्णेन केवलाग्नेर्होमाङ्गत्वे निश्चिते तत्काले अग्निः प्रजापतिश्च देवताद्वयमिति देवतयोस्त्वाचङ्क्षाले समुच्चय इत्यस्यैव सिद्ध्या समुच्चयविशिष्टत्वेन विधानेऽपि प्रजापतिं प्रति शेषत्वायोगात् । अन्यतः प्राप्तहोमाभिषवसमानकर्तृकत्वविधिना होमाभिषवयोः भक्षणाङ्गत्वसिद्ध्यभावात् । न च मन्त्रवर्णाज्ज्योतिष्ट्वगुणविशिष्टाग्निरेव देवतान्तरं स्यादिति वाच्यम् ; 'अग्नेः

स्स्वाहा"[1] इति वचनेन विनियुक्तमन्त्रवर्णेनैव देवताप्राप्तेः । 'यदग्नये च प्रजापतये च सायं जुहोति । यत्सूर्याय च प्रजापतये च प्रातः' इत्यत्र सायम्प्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानम् । अत एव यथैव केवलदेवत्यमन्त्रलिङ्गेन केवलयोर्देवतात्वं तथा 'अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति सायं जुहोति । सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहेति प्रातः"[2] इति मिश्रलिङ्गकमन्त्रवर्णात् मिश्रयोरपि[3] तत् । ततश्च 'यदग्नये च' इति वाक्यस्थाग्निसूर्यपदं सायम्प्रातःकालीनदेवतालक्षकम् । सायम्प्रातःकालपदं तात्पर्यग्राहकम् । चशब्दोपस्थितसमुच्चयस्य प्रजापतावन्वयस्य निपातोपसर्गार्थत्वेन व्युत्पन्नत्वात् न विधेयानेकता । अतश्चाग्नेर्दैवतात्वादिना अग्निहोत्रहोमे प्राप्तत्वात्

पूर्वाहुतिः, प्रजापतेरुत्तरा, यदग्नये च' इत्यादिषु केवलाग्नेरेव निर्देशेन केवलस्यैव देवतात्वौचित्यान्मन्त्राम्नातस्यापि गुणस्य तत्राप्रवेशात् । नन्वेवमपि केवलाग्नेर्दैवतात्वमनुपपन्नं 'अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहेति प्रातः' इति वचनाभ्यां मन्त्रद्वयविधानेन सूर्यसहिताग्न्यादेर्दैवतात्वावश्यम्भावादित्यत आह—**अत एवेति** ॥ **मिश्रयोरपीति** ॥ सूर्यसमुच्चिताग्नेः अग्निसमुच्चितसूर्यस्य चेत्यर्थः । **तत्**—देवतात्वम् । नन्वेवं 'यदग्नये च' इति वाक्येन केवलाग्न्योर्देवतात्वं प्रतीयमानं विरुध्येतेत्यतः पर्यवसितार्थमाह—**ततश्चेति** ॥ **देवतालक्षकमिति** ॥ तथा च शुद्धमिश्रयोर्देवतात्वे न कश्चिद्दोष इति भावः । अत्र मन्त्रवर्णस्यैव दाशमिकन्यायेन शब्दविशेष इव तत्क्रयेऽपि व्यवस्थापकत्वात् अग्नये सूर्याय इति सायं प्रयोगः; सूर्यायाग्नय इति प्रातः ; न त्वग्निसूर्याभ्यामिति भिन्नविभक्तिस्थले देवतात्वस्य व्यासज्यवृत्तित्वाभावादेकविभक्त्युपात्तयोः प्रत्येकतद्धितान्ततया त्वष्टृपत्नीवतोरिव भिन्नविभक्तिभ्यां प्रत्येकदेवतात्वावश्यम्भावात् । 'यदग्नये च' इति चतुर्थ्या देवतात्वबोध इति न्यायसुधापक्षेऽपि न मान्त्रवर्णिकमिश्रदेवतावाधः ।'यस्य वै द्वौ पुण्यौ ग्रहे वस्तः' इत्युपक्रम्य मिश्रलिङ्गमन्त्रौ विधाय 'उभाभ्यां हूयते' इत्युपसंहारेण ईदृशसन्दर्भानर्थक्यप्रतिहतिसहकृतमन्त्रवर्णस्य चतुर्थ्या तुल्यबलत्वेन केवलमिश्रयोर्विकल्पसिद्धिसम्भवात् । मन्त्रविधिचतुष्टयं त्वव्यवस्थया प्राप्तयोर्द्वयोर्द्वयोर्मन्त्रयोस्तत्तत्कालिकप्रयोगभेदेन व्यवस्थार्थमिति भावः । ननु चशब्दोपात्तसमुच्चयस्य कथं प्रजापतावन्वयः । नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादित्यत आह—**चशब्देति** ॥ चन्द्र इव मुखं, घटो नास्तीत्यादौ इवार्थनञर्थयोर्भेदेनान्वयानुरोधेनाव्ययानिपातातिरिक्तनामार्थयोरेव भेदेनान्वयस्याव्युत्पन्नतया प्रकृते समुच्चयस्य निपातार्थतया नानुपपत्तिरिति भावः । गौश्चाश्वश्चेत्यादौ तथा व्युत्पत्तेरावश्यकत्वादित्याशयः ॥ **न विधेयानेकतेति** ॥ ततश्च विधेयानेकत्वाभावेन वाक्यभेदप्रसक्त्यभावान्न विशिष्टकर्मान्तरविधिपरत्वमिति भावः ॥ **देवतात्वादिनेति** ॥ आदिना देवताशरीरघटकत्वपरिग्रहः । अत्राहवनीये होमद्वयमेवाग्निहोत्रं नापरयो-

१. तै. ब्रा. २. १. ९.  २. तै. ब्रा. २. १. २.  ३. मिश्राणां इति पाठान्तरम् ।

अग्निहोत्रहोमे अग्नेर्होम इति व्युत्पत्त्या नामधेयम् । एवं आघारेऽप्युपांशुयाजे 'सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम्'[1] इत्यनेनैव द्रवद्रव्यस्य प्राप्तत्वात् प्रयाजाज्योद्देशेन संस्कारविधाने द्वितीयविधिप्रकारापत्तेः लाघवाद्भावव्युत्पन्नमाघारपदं नामधेयं, विधेयश्च धातुलक्ष्यो होम एव । 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति मान्त्रवर्णिकेन्द्रदेवतायाः 'चतुर्गृहीतं वा' इत्यनेन द्रव्यस्य च लाभात् । एवं समिदादिष्वपि वक्ष्यते । सर्वत्र द्वितीया करणत्वलक्षणार्थेति न विरोधः ॥ ४ ॥

---

रित्येकः पक्षः । द्वे आहवनीये, द्वे गार्हपत्ये, द्वेऽन्वाहार्यपचन इति षडाहुतिपक्षो द्वितीयः । द्वे आहवनीये, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचन इति दशाहुतिस्तृतीयः । आद्यपक्षे प्रातर्होमे अग्न्यभावेऽपि एकस्यैव कर्मणः कालभेदेनाभ्यासात् सायङ्कालिकप्रयोगे अग्निदेवताकत्वमात्रेण एकदेशप्रवृत्तिनिमित्तेन वैश्वदेवाधिकरणरील्या तत्प्रख्यन्यायेन नामता । पक्षेतरयोः प्रातर्होमेऽपि 'अग्नये गृहपतयेऽग्नये संवेशपतयेऽग्नयेऽन्नादायान्नपतये' इति वाऽपराग्निकहोमे देवताघटकतयाऽग्नेः सत्त्वान्नामत्वोपपत्तिरित्यर्थः । होत्रशब्दो भावे व्युत्पन्न इत्यभिप्रायेणान्तोदात्तानुगुणं समासमाह—**अग्नेर्होम इति** ॥ योगरूढिवशादतिप्रसङ्गनिरास इति भावः । आघारवाक्ये सिद्धान्तमाह—**एवमिति** ॥ उपांशुयाजे द्रव्यविनियोगं दूषयति—**सर्वस्मै वेति** ॥ **प्राप्तत्वादिति** ॥ ततश्च संस्कृताज्यस्य नोपांशुयाजे विनियोग इति भावः । ननूपांशुयाजे विनियोगासम्भवेऽपि प्रयाजे विनियोगः सम्भवतीत्यत आह—**प्रयाजेति** ॥ द्रव्योद्देशेन धात्वर्थविधानेन विधेः पदान्तरसापेक्षत्वाद्दुर्बलविधिप्रकाराश्रयणमेव दोष इत्यर्थः ॥ **भावेति** ॥ भावव्युत्पत्त्याऽऽघारपदं यागनामधेयमित्यर्थः । यागप्राप्तिमाह—**धातुलक्ष्य इति** ॥ लक्षणया धातुप्रतिपाद्य इत्यर्थः । एवं च होमे प्रक्षेपांशस्य क्षरणस्यान्यतो लाभादाघारशब्दो भावघञन्तः । तत्प्रख्यन्यायेन नामधेयमिति भावः । धातुलक्ष्ययागस्य द्रव्यदेवते उपपादयति—**इन्द्र इति** ॥ **चतुर्गृहीतं वेति** ॥ ततश्च मान्त्रवर्णिकदेवतायाश्चतुर्गृहीतद्रव्यस्य च सत्त्वादाघारशब्दस्य यागबोधकत्वमिति भावः । अत्रायं विशेषः । 'चतुर्गृहीतं वा एतत्' इति वाक्ये तस्येति कर्मणि षष्ठ्या प्रयाजीयद्रव्यसंस्कारकत्वात्त्यागांशेनारादुपकारकः,प्रक्षेपांशेन सन्निपत्योपकारकः स्विष्टकृद्वत्संस्कारकर्मणामप्यंश्वदाभ्यवन्नामत्वसम्भवाद्विकृतिषु 'द्वावाघारौ' इत्यादिव्यवहारोपयोगाच्च आज्यस्य यजन्नित्यादाविव गुणपरैव षष्ठी । अतः परप्रयुक्तद्रव्योपजीव्यत्वेऽपि न संस्कारकर्मत्वमिति केचित् ॥ **एवमिति** ॥ समिद्वाक्येऽपि चतुर्गृहीतद्रव्यमान्त्रवर्णिकदेवतयोश्च प्राप्तत्वात्तत्प्रख्यन्यायेन नामत्वमित्यभ्यासाधिकरणादौ वक्ष्यत इत्यर्थः । नन्वेवं नामत्वे धात्वर्थस्यैव विधेयतया करणत्वेन द्वितीयानुपपत्तिरित्यत आह—**सर्वत्रेति** ॥ अग्निहोत्राघारवाक्यादावित्यर्थः ॥ **द्वितीयेति** ॥

---

१. तै. ब्रा. ३. ३. ५.

## (५)—तद्व्यपदेशं च ॥ ५ ॥

'श्येनेनाभिचरन् यजेत' इत्यादौ पूर्वोक्तबाधकाभावात् प्रसिद्धेः श्येनादिपदानां गुणविधित्वमेव । प्रकृतसोमयागाश्रितो गुणः फलोद्देशेन विधीयते, विशिष्टकर्मान्तरं वा । न चैवं 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्यर्थवादे स्वस्यैव स्वोपमानत्वानुपपत्तिः । उपक्रमनिर्णीतविध्यनुरोधेन उपसंहारस्थार्थ-

---

अर्थाक्षिप्तसाध्यत्वानुवादिनी एकार्थसमवायेन करणत्वलक्षिकेत्यर्थः । सूत्रार्थस्तु, **तत्प्रख्यं**—विधित्सितगुणप्रापकं; **अन्यशास्त्रं**—शास्त्रान्तरं यत्र तदप्यग्निहोत्रादिपदं नामधेयं स्यादिति ॥

**तद्व्यपदेशश्च** ॥ ताण्डिशाखायां ज्योतिष्टोमप्रकरणे 'अथैषश्श्येनेनाभिचरन्यजेत, अथैष गवाभिचर्यमाणो यजेत' इति श्रूयते । अभिचरन्—वैरिणं मारयन्, वैरिमरणकाम इति यावत् । 'भ्रातृव्यं निपत्यादत्ते' इति वाक्यशेषात् । अभिचर्यमाणः-वैरिणा मार्यमाणः; वैरिकृतस्वमरणकर्ममोघीकरणेन स्वसंरक्षणकाम इति यावत् । 'यथा गावो गोपायन्ति' इति वाक्यशेषात् । **इत्यादाविति** ॥ आदिना 'सन्दंशेनाभिचरन्यजेत' इत्यादिपरिग्रहः । पूर्वपक्षमाह—**पूर्वोक्तेत्यादिना** ॥ न चात्रोद्भिन्न्यायः, श्येनादिपदानां दध्यादिवद्गुण एव प्रसिद्धत्वेन तेषां फले विधाने इन्द्रियकामवाक्यवत् मत्वर्थलक्षणाभावेन तदप्रवृत्तेः । नापि चित्राधिकरणन्यायः, वाक्यभेदाभावेन तस्याप्यप्रवृत्तेः । नापि पूर्वाधिकरणन्यायः, तत्प्रापकशास्त्राभावेन तस्याप्यसम्भवादिति भावः । एतेन प्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात्सङ्गतिरिति सूचितम् ॥ **प्रकृतेति** ॥ प्रकरणात्सोमयाग आश्रय इत्यर्थः । अत्र सिद्धान्ते श्येनपदस्य गौण्या यागपरत्वं वाच्यम् । गौणी च लक्षणातो निकृष्टैव । तस्या गुणगुण्युभयलक्षणात्मकत्वात् । तदुक्तं वार्तिके 'अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥' इति । श्रौतार्थस्य वाक्यार्थेऽन्वयानन्वयाभ्यां लक्षणातो गौण्या निकृष्टत्वम् । उक्तं चाचार्यैः 'वृत्त्यर्थोपादानेन कर्माणि प्रवृत्तावत्यन्तविप्रकृष्टगौणता स्यात्ततो वरं मत्वर्थलक्षणा' इति । अतो मत्वर्थलक्षणाङ्गीकारेण पक्षान्तरमाह—**विशिष्टेति** ॥ न चैवं अस्मिन् पक्षेऽपि श्येनस्यैव यागीयद्रव्यत्वादुभयोः को विशेष इति वाच्यम्; सोमयागमाश्रित्य फलोद्देशेन गुणविधिपक्षे सौमिकविध्यन्तप्राप्तिः, विशिष्टविधिपक्षेऽग्नीषोमीयविध्यन्त इति भेदात् । केवलगुणविधिपक्षे उपमानानुपपत्तिं शङ्कते—**न चैवमिति** ॥ विधेयस्यैव प्राशस्त्यापेक्षयार्थवादान्वयो वक्तव्यः । ततश्च गुणविधौ श्येनरूपगुणस्यैव तथात्वेन तत्र श्येनसादृश्यान्वयो न सम्भवति; सादृश्यस्य भेदघटितत्वादिति भावः । परिहरति—**उपक्रमेति** ॥ श्येनशब्दे दधिसोमादिशब्दवदत्यन्तनिरूढत्वेन गुणविधित्वे निर्णीते उपक्रमन्यायेनोपसंहारस्थार्थवादस्य द्वारविशेषाविवक्षया प्राशस्त्यलक्षकत्वोपपत्तेरित्याशयः । यद्वा श्येनस्यैवोपाकृतानुपाकृतभेदेनावस्थाभेदमाश्रित्य यथानुपाकृतःश्येनो निपत्य मत्स्यादीनादत्ते एवमुपाकृतोऽपि श्येनः शत्रू-

वादस्य अन्यथा नेयत्वात्। 'ते तद्विलासा इव तद्विलासाः' इत्यादिवदनन्वयालङ्कारस्याभेदे अनुगुणत्वात् इति प्राप्ते—

नायमनन्वयालङ्कारः। तथात्वे सर्वेषामर्थवादपदानां उपमानान्तराभावलक्षकत्वापत्तेः। तद्वरं भूयोऽनुग्रहस्यैव न्याय्यत्वात् उपक्रमस्थ एवैकस्मिन् पदे रूपक-

न्निपत्य आदत्त इति स्तुतिस्सम्भवतीत्याशयः। उपमालङ्कारासम्भवेऽप्यलङ्कारान्तरेण वाक्यशेषोपपत्तिः सम्भवतीत्याह—ते तद्विलासा इति॥ 'न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितम्बिनीव। यावद्विलासायुधलास्यभासा' इति पूर्वचरणत्रयं बोध्यम्। आदिना 'गगनं गगनाकारं' इत्यादेः परिग्रहः। सादृश्यं हि भेदघटितं, अनन्वयस्तु न भेदघटितः 'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः' इति तल्लक्षणात्। ततश्च वाक्यशेषस्य द्वितीयसदृशव्यवच्छेदद्वारा प्राशस्त्यलक्षकतया नानुपपत्तिरित्यर्थः। तत्रायमनन्वयलक्षणार्थः। द्वितीयसदृशव्यवच्छेदफलकत्वे सति एकोपमानोपमेयकसदृशत्वमनन्वयत्वम्। तत्र 'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतश्शिखरम्। दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये॥' इत्यत्रैकस्यैव कालभेदेनोपमानोपमेयत्वदर्शनादतिव्याप्तिवारणाय सत्यन्तम्। चन्द्र इव मुखमित्यादावतिव्याप्तिवारणाय विशेष्यम्। एकोपमानोपमेयतावच्छेदकवत्सादृश्यमिति फलितोऽर्थः॥ नायमिति॥ श्येनोऽयमिति पदयोर्वाक्यद्वये व्यवस्थया विशेष्यवाचकत्वेन श्रूयमाणयोः तथैवार्थवर्णने एकस्यैव धर्मिणो धर्मभेदेनोपस्थिततयोपमानोपमेयतावच्छेदकभेदात्। अयं श्येनः यथा मत्स्यादीनादत्ते तथा भ्रातृव्यमादत्त इत्यर्थवर्णने 'धर्मार्थकामेषु समां प्रपेदे यथा तथैवावरजेषु वृत्तिं' इत्यादाविव एककर्तृकक्रिययोरेवोपमानोपमेयभावप्रतीतेर्यथायं श्येन आदत्ते तथा अयं श्येन आदत्त इति वर्णने तु मत्स्यभ्रातृव्ययोर्बिम्बप्रतिबिम्बभावेनैकीकरणात् साधारणधर्मत्वेऽपि आवृत्तिदूरान्वयाद्यापत्तेर्नानन्वयालङ्कारस्सम्भवतीति भावः। ननु अवस्थाभेदेन भेदकल्पनयोपमालङ्कार एवास्त्वित्यत आह—तथात्व इति॥ तत्सादृश्य इत्यर्थः॥ सर्वेषां—बहूनाम्। उपमानान्तराभावः—उपमानान्तरं च अभावश्चेति द्वन्द्वः। अनुपाकृतो हि श्येन उपमानम्। तदनन्तरं तद्भेद उपाकृतत्वं तदभावो अनुपाकृतत्वं तयोरर्थयोः लक्षणापत्तेरित्यर्थः। श्येनपदस्य अनुपाकृते जीवति वा लक्षणा, अयमित्यस्योपाकृते मृते वा लक्षणा, आदत्त इति लटो भूते लक्षणेति पदत्रये लक्षणापत्तेरिति भावः। एतेनानन्वयालङ्कारे निरुपमत्वबोधस्य व्यञ्जनामूलत्वेन तत्र लक्षणोक्तिरयुक्तेत्यपास्तम्। उक्तरीत्या तदुपपत्तेरुपक्रमोपसंहारस्थपदानां समसङ्ख्यत्वे मुख्यानुग्रहः; विषमसङ्ख्यत्वे भूयसामनुग्रह इति द्वादशे वक्ष्यमाणमनुसृत्याह—तद्वरमिति॥ रूपकविधयेति॥ उपमेयतावच्छेदकरूपेणोपस्थितोपमेये उपमानतादात्म्यं शब्दात्प्रतीयमानं रूपकं "विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्" इति लक्षणात्। प्रकृतयाग-

**विधया लुप्तोपमानविधया वा गौणीं वृत्तिमङ्गीकृत्य नामधेयत्वं द्वितीयविधिप्रकारापादकं युक्तमाश्रयितुम् । अर्थवादस्तु रूपकाद्यपेक्षितसादृश्योपपादनार्थस्सन् विनैव लक्षणां पूर्णोपमानविधया विधेययागस्तुत्यर्थो न विरुध्यते । तत्सिद्धं चतुर्भिरेव प्रकारैः सर्वत्र नामत्वमिति ॥ ५ ॥**

---

त्वावच्छिन्ने भावार्थाधिकरणन्यायेन करणत्वेनोपस्थिते श्येनेनेति सामानाधिकरण्येन तादात्म्यनिश्चयादिति भावः । रूपके सादृश्यस्य गम्यत्वेन वाक्यशेषस्य गम्यसादृश्योपपादकत्वापेक्षया वाच्यसादृश्योपपादकत्वमेव युक्तमित्याशयेनाह—**लुप्तोपमेति** ॥ केचित्तु 'दधिमधुघृतमापोधानास्तण्डुलास्तत्संसृष्टं' इत्यादाविव भिन्नार्थानां सामानाधिकरण्यमात्रेण तादात्म्यनियमासम्भवात् श्येनाभिन्ने लक्षणैव वाच्या । तस्य च संसर्गमर्यादया भेदान्तरभाने बोधकार्था सा स्यात् । अतः सदृशे एव लक्षणेत्यभिप्रायेण लुप्तोपमानुसरणमित्याहुः । यत्तु वेदे क्वापि रूपकाभावात् लुप्तोपमानुसरणमिति कैश्चिदुक्तं तत् 'योषा वाव गोतमाग्निः' इत्यादौ तद्दर्शनादुपेक्ष्यम् । उपमानोपमेयतासाधारणधर्मसादृश्यबोधकपदघटिता पूर्णा । सा च षड्विधा । तेषां अन्यतमलोपे लुप्तोपमा । सा च अष्टविधेति प्राञ्चः । एकोनविंशतिविधेत्यन्ये । तत्रैषा धर्मवाचकलुप्ता । श्येनपदेनैव श्येनसदृशलक्षणया सादृश्यवाचकपदाभावादित्यर्थः । ननु विधेयमेव स्तोतव्यमिति नियमे मानाभावः, अविधेयस्यापि स्तुतेर्विधेयानुगुणत्वमात्रेणार्थवादत्वसम्भवात्; वेतसावकाविध्यर्थवादे तज्जनकानां स्तुतिदर्शनात् । ततश्च गुणविधिपक्षेऽपि अयमिति शब्दः यागपर एवास्त्वित्यत आह—**द्वितीयेति** ॥ अन्योद्देशेन धात्वर्थकरणकभावनाविधिरित्यर्थः । चतुर्थविधेः जघन्यत्वादयमिति सर्वनाम्नोऽसति बाधके पूर्वोपात्तविशेषपरामर्शित्वस्यौत्सर्गिकत्वान्नैतद्युक्तम् । विशिष्टविधिपक्षस्तु षष्ठविधित्वादतिजघन्यः । विधेयगुणवाचकपदे मत्वर्थलक्षणापेक्षया धात्वर्थानुवादकनामधेयस्य गौण्या एव युक्तत्वादिति भावः ॥ **विनैव लक्षणां**—उपाकृतानुपाकृतलक्षणां प्राशस्त्यलक्षणां वा विना ॥ **पूर्णोपमेति** ॥ वै निश्चितार्थकः । प्रसिद्धःश्येन उपमानम् । अयमिति श्येननामकयाग उपमेयः । यथैवमित्युपमावाचकः । निपत्यादानं साधारणो धर्म इति चतुर्भिः पूर्णत्वात् पूर्णोपमेत्यर्थः । यागे निपत्यादानासम्भवेऽपि बिम्बप्रतिबिम्बभाववस्तुप्रतिवस्तुभावान्यतररीत्या आशङ्कितोपस्थितमृतिजनकत्वध्वननेन धर्मैक्यमुन्नेयमिति तात्पर्यार्थः । अधिकमस्मत्कृतकाकतालीयवादार्थे द्रष्टव्यम् ॥ **चतुर्भिरेवेति** ॥ न च यौगिकरूढलाक्षणिकभेदेन त्रिप्रकारत्वमेव नामधेयस्येति वाच्यम्; निर्णायकन्यायचतुष्ट्वाभिप्रायेण चतुर्भिरित्युक्तत्वात् । यद्यपि वैश्वदेवपदस्य नामत्वं पञ्चमन्यायादिति प्राचीनैरुक्तम् । तथापि तत्पदस्य तत्प्रख्यन्यायेन नामत्वस्य वक्ष्यमाणत्वात्तदनादरणीयमित्याशयेनैवकारः । सूत्रार्थस्तु, **तस्य**—गुणस्य । **व्यपदेशं**—सादृश्यं, यस्मिन् श्येनादिपदे तदपि नामधेयं स्यादिति ॥

**(६)—नामधेये गुणश्रुतेस्स्याद्विधानमिति चेत्; तुल्यत्वात्क्रिययोर्न ॥ ७ ॥ ऐकशब्द्ये परार्थवत् ॥ ८ ॥**

एवं[1] यत्र यत्र विशिष्टविधिपूर्वपक्षे यानि यानि दूषणानि मत्वर्थलक्षणादीनि तानि तानीहाक्षिप्यन्ते । यदीह यागस्य कारकत्वं स्यात् तदा सोमादीनां कारकान्तराणां तदन्वयानुपपत्तेः मत्वर्थलक्षणा भवेत्; उभयविशिष्टभावनाविधानं वा । न ह्येतदभ्युपगमे प्रमाणमास्ति । यागस्य क्रियारूपत्वाङ्गीकारात् । अतश्च तस्मिन् सर्वकारकाणां भावनावदेव विनैव मत्वर्थलक्षणां विनैव च वैरूप्यं सम्बन्धोपपत्तिः । यागस्य च क्रियारूपत्वेऽपि सम्बन्धसामान्येन भावनान्वयो न विरुद्धः । भावना च

**नामधेये गुणश्रुतेस्स्याद्विधानमिति चेत्तुल्यत्वात्क्रिययोर्न** ॥ 'उद्भिदाद्यधिकरणचतुष्टयोक्तमत्वर्थलक्षणादिदोषाणां आक्षेपिकी सङ्गतिरित्यभिप्रेत्याह—**एवमिति** ॥ अधिकरणचतुष्टयोक्तरीत्येत्यर्थः । मत्वर्थलक्षणादिविरहमुपपादयति—**यदीहेत्यादिना** ॥ **यागस्येति** ॥ 'सोमेन यजेत' इत्यादाविति शेषः ॥ **तदन्वयानुपपत्तेः**—यागान्वयानुपपत्तेः, कारकाणां परस्परसम्बन्धाभावादित्यर्थः ॥ **उभयेति** ॥ उभयविशिष्टभावनाविधिप्रयुक्तगौरवं वा स्यादित्यर्थः ॥ **न हीति** ॥ धातूत्तरं करणादिविभक्त्यश्रवणादिति भावः ॥ **क्रियारूपत्वाङ्गीकारादिति** ॥ 'भूवादयो धातवः' इत्यत्र वाशब्देन क्रियावाचकत्व एव धातुसंज्ञाविधानात्, क्रियात्वस्य च 'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते' इति हरिणा निखिलकारकसाध्यव्यापारसमूहत्वेन लक्षिततया 'क्रियां कुर्वद्धि कारकं' इति लक्षिततज्जनकत्वस्य क्रियायामसम्भवादिति भावः । **तस्मिन्**—यागे ॥ **भावनावदेवेति** ॥ सिद्धान्तरीत्या दृष्टान्तोपन्यासः । यत्नरूपायां तस्यां कारकाजन्यायां कारकान्वयायोग्यत्वादपि न कारकान्वय इति भावः । ननु यागस्य कारकत्वाभावे भावनान्वयो न स्यात्; कारकाणामेव क्रियान्वयनियमादित्यत आह—**यागस्येति** ॥ **सम्बन्धेति** ॥ रेवत्यधिकरणे भावनाया अपि भावनान्वयस्य व्युत्पादनात् । सम्बन्धसामान्येन क्रियारूपयागस्य भावनान्वये न किञ्चिद्बाधकम् । कारकाणां क्रिययैवान्वय इत्येव नियमो न कारकाणामेव क्रियान्वय इति; षष्ठ्यन्तानां भावनान्वयानापत्तेः । 'गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः' इत्यादौ षष्ठ्यन्तार्थस्य क्रियान्वयानापत्तेरिति भावः । नन्वेवमाख्यातार्थस्य धात्वर्थेऽन्वयो वा, धात्वर्थस्य आख्यातार्थे वेति विनिगमनाविरहेण क्रियाद्वयविशेष्यकबोधद्वयाङ्गीकारापत्तिः । नापि प्रत्ययार्थप्राधान्यात् प्रत्ययार्थे धात्वर्थस्यान्वयः । क्रियारूपाख्यातार्थस्य कारकाकाङ्क्षानुरोधेन कारकान्वयस्यैव युक्ततयाऽनाकाङ्क्षितस्य सम्बन्धसामान्येनान्वयायोगादित्यत आह—**भावना चेति** ॥ तन्मते धात्वर्थस्यैव क्रियारूपत्वाङ्गीकारेण

१. पूर्वं इति पाठान्तरम् ।

वैयाकरणवदतिरिक्ता नैवाङ्गीक्रियते । अतश्च उद्भिदादिष्वपि सर्वत्र गुणविधित्वमेव युक्तम् । वाजपेयोदाहरणं तु मूले गुणसूत्रानुरोधेनेति प्राप्ते—

पचतीत्यस्य पाकं करोतीति विवरणात् धात्वर्थस्य कर्मत्वकरणत्वान्यतरकारकत्वेनैव भावनान्वयः । भावना च यथाऽतिरिक्ता तथा वक्ष्यते । अतश्चेतरकारकाणां धात्वर्थान्वयानुपपत्तेः अगत्योभयविशिष्टभावनाविधानं स[illegible]ङ्गीकृतम् । प्राचीनरीत्या वा मत्वर्थलक्षणा । अन्यथा श्रुत्यैव फलगुणयोः यागान्वये फलान्वयार्थं

---

तत्रैव सकलकारकान्वयसम्भवे किमतिरिक्तभावनाङ्गीकारेणेति भावः । पूर्वपक्षमुपसंहरति—**अतश्चेति** ॥ ननूद्भिदादीनां चतुर्णां अत्रोदाहरणत्वे भाष्ये वाजपेयोदाहरणं किमर्थमित्यत आह—**मूल इति** ॥ **गुणसूत्रेति** ॥ वाजं—अन्नं, पेयं-सोमरूपं अस्मिन्निति बहुव्रीहिणैव मत्वर्थलाभेन लक्षणाभावाद्गुणविधित्वमेवेत्याक्षेपपरिहाराय 'तुल्यत्वात्क्रिययोर्न' इति गुणसूत्रम् । तथात्वे द्रव्यसादृश्यस्य बलवत्त्वेन ऐष्टिकविध्यन्तप्राप्तेः 'सप्तदशदीक्षो वाजपेयः' इत्यादिलिङ्गदर्शनानुपपत्तिरिति तदर्थानुगुण्याय वाजपेयोदाहरणं भाष्यकारस्योपपद्यत इति भावः । सम्बन्धसामान्येन भावनान्वयं निराकरोति—**पचतीत्यादिना** ॥ **कारकत्वेनैवेति** ॥ न तु सम्बन्धसामान्येनेत्यवधारणार्थः । तथा सति गुणफलयोः अनन्वयापत्तेः, यागं भावयेदिति बोधोत्तरमेव केनेति गुणात्मककरणाकाङ्क्षोत्पत्तेः, यागेन भावयेदिति बोधानन्तरमेव किमिति भाव्याकाङ्क्षादर्शनात् यागसम्बन्धिभावनेति बोधे आकाङ्क्षाया अननुभवात् । भावनायाः प्रवर्तनाविषयत्वबोधे धात्वर्थस्य पुरुषार्थत्वाभावात् न भाव्यत्वमिति करणत्वेनैव धात्वर्थस्यान्वयः । पुरुषार्थत्वावगमानन्तरन्तु कर्मत्वेनान्वय इति नाव्यवस्थेत्याशयः । धात्वर्थातिरिक्तभावना नाङ्गीक्रियत इत्युक्तं निरस्यति—**भावना चेति** ॥ **वक्ष्यत इति** ॥ भावार्थाधिकरण इति शेषः । धात्वर्थस्य करणत्वेनान्वये जाते पार्ष्ठिकबोधवेळायां करणफलयोः सिद्धत्वसाध्यत्वाभ्यामुपस्थित्या भूतभाव्यसमुच्चारणन्यायेन परस्पराकाङ्क्षया करणेन फलस्यैव सम्बन्धः; न गुणस्य । 'नासाधितं करणं' इति न्यायेन करणस्य साध्यत्वेनोपस्थित्यनन्तरं तु गुणस्यैव सम्बन्धः; न फलस्य । ततश्च सिद्धत्वसाध्यत्वयोः परस्परविरुद्धयोर्युगपन्नैकस्मिन् धात्वर्थेऽन्वयबोधसम्भवः । क्रमेण द्विविधबोधाङ्गीकारे त्वावृत्तिलक्षणो वाक्यभेद इत्यभिप्रायेणाह—**इतरकारकाणामिति** ॥ साध्यत्वसाधनत्वयोर्विरोधमेवोपपादयति—**अन्यथेत्यादिना** ॥ विरुद्धत्रिकद्वयेति परस्परविरुद्धद्विकानां त्रयमित्यर्थः । भावनायाः केन कथं किमित्यंशत्रयाकाङ्क्षापूरणाय ज्ञानकृतीच्छाविषयतात्रयस्यैकस्मिन् वस्तुनि क्रमेण बोधकास्त्रयो विधयः; उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिरिति । तत्र यागेनेष्टं भवतीति केवलोत्पत्तिविधिः; यत्रान्यतः प्राप्तं स्वर्गमनूद्य तज्जनकत्वेन यागो विधीयते । एतद्वाक्यजन्यज्ञानीयविषयताविशेषौ अनुवाद्यत्वविधेयत्वे ज्ञातज्ञापनविषयत्वं अज्ञातज्ञापनविषयत्वं चेति तयोः स्वरूपम् । एकस्मिन्

**यागस्य उपादेयत्वविधेयत्वगुणत्वानि गुणान्वये चोद्देश्यत्वानुवाद्यत्वप्रधानत्वानीति विरुद्धत्रिकद्वयापत्तेः । उपादेयत्वादिनिरुक्त्यादिकं च कौस्तुभे द्रष्टव्यम् । अतो मत्वर्थ-लक्षणाभिया विशिष्टविध्यनुपपत्तेः नामधेयत्वमेवोद्भिदादीनाम् ॥ ६ ॥**

---

पदार्थे भावाभावघटितत्वाद्विरुद्धमेकं द्विकम् । यागेनेत्थमिष्टं भावयेदिति प्रयोगविधिः । कृति-रूपभावनाया इह भानाधिक्यादत्र स्वर्गोद्देशेन याग उपादीयते । तेन तदीयविषयताविशेषा-वेवोद्देश्यत्वोपादेयत्वे इत्युच्येते । ते चैककृतिनिरूपिते, परस्पराभावव्याप्ये, 'दध्ना जुहोति' इति 'अग्निहोत्रं जुहोति' इति विधिभेदेनैकस्यैव यागस्योद्देश्यत्वोपादेयत्वसम्भवेऽप्येकेनैव विधिना एकस्मिन्नेव पदार्थे उभयोरबोधात् । अवैरूप्येऽप्यग्निहोत्रविधिना याग एव प्रयुक्तिविषयीक्रियते, न स्वर्गः । तस्य विषयसौन्दर्यमाहिम्नैवेप्सितत्वाद्दधिविधिना दध्येव प्रयोज्यते, न यागः; तस्य विध्यन्तरप्रयुक्तत्वात् । ततश्च प्रकृतविध्यप्रयोज्यत्वप्रयोज्यत्वरूपं विरुद्धं द्विकं द्वितीयम् । यागेन स्वर्गं भावयेदिति विनियोगविधिः । अत्र प्रवर्तनात्मकविधेर्भानाधिक्यात् विनियोगः अङ्गाङ्गि-भावः । स च विध्येकसमधिगम्यः । तदीयविषयताविशेषौ प्रधानत्वगुणत्वे । कृत्युद्देश्यत्वावच्छिन्न-प्रवर्तनाविषयताकत्वं कृत्युपादेयत्वावच्छिन्नप्रवर्तनाविषयताकत्वमिति तत्स्वरूपयोर्विधिविषय-तावच्छेदकांशे परस्पराभावव्याप्यत्वादेकत्र विरुद्धं द्विकं तृतीयम् । एवञ्च ज्ञानकृतीच्छाविषयत्व-रूपाणां द्विकानां विधिभेदेन व्यवस्थितानामप्युत्तरोत्तरविधेः पूर्वपूर्वविधिस्वरूपव्याप्यत्वेनाग्नि-होत्रादिषु क्वचिद्विषयेषूत्पत्त्यादिविधीनां भेदेनाम्नानेऽपि उद्भिदादिविषये तदभावादेकस्मिन्नेव वाक्ये धात्वर्थे गुणफलयोः तन्त्रेणान्वयस्वीकारे तस्यैव वाक्यस्य यागांशे च उत्पत्त्यादिविधित्रय-स्वरूपत्वाद्धात्वर्थे विरुद्धत्रिकद्वयं अनिवार्यमिति । यश्च देशकालादेरनुपादेयत्वव्यवहारः स लौकिककृत्यसाध्यत्वप्रयुक्तः प्रकृतविधिना कृत्युपादेयत्वप्रकारकबोधेऽपि न विरुध्यते । यागोद्दे-शेन मन्त्रादिस्वरविधानेऽप्यानर्थक्यतदङ्गन्यायेन पार्ष्ठिकसमाधानवत् काले कर्मैवोपादीयते, न कर्मणि काल इत्यादिकं समाधानमात्रमिति न कोऽपि दोषः । अत एव 'चैत्र्यां पौर्णमास्यां' इत्यादौ कालविशेषणचैत्रत्वादीनां विवक्षा सङ्गच्छते । प्रतीक्षाविषयत्वेन कालस्याप्युपादेयतेति सङ्कर्षभाष्येऽप्ययमर्थः स्पष्टः ॥ **उपादेयत्वादिनिरुक्त्यादिकमिति** ॥ देशकालादिव्यावृत्तोपा-देयत्वादिनिरुक्त्यादिकमित्यर्थः ॥ **कौस्तुभ इति** ॥ कृतिसमवायाघटितसम्बन्धेन प्रकृतभाव-नान्वयित्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वमुद्देश्यत्वं, तदभावश्चोपादेयत्वम् । अस्ति चेदमुद्देश्यत्वं स्वर्गादिरूपफले प्रातरादिरूपकाले सरस्वतीदक्षिणादिरूपदेशे राहूपरागादिरूपे निमित्ते । तेषां यथोक्तकर्मतादिसम्बन्धेन भावनासम्बन्धिनां कृतिविषयत्वाभावेन प्रकृतविध्यप्रयुक्तत्वादित्या-दिना कौस्तुभे द्रष्टव्यमित्यभिप्रायः । उपसंहरति—**अत इति** ॥ सूत्रार्थस्तु, **नामधेये**—नामधे-यत्वेन सम्भाविते वाजपेयादौ **गुणस्य श्रुतेः** तस्यैव **विधानं स्यादिति चेन्न तुल्यत्वात्** ॥ **क्रिय-योः** वाजपेयशब्दलभ्ययवाग्वादिद्रव्यकस्य कर्मणो दर्शपूर्णमासकर्मणश्चौषधद्रव्यकत्वेन तुल्य-

त्वापातात्। ततश्च दार्शपौर्णमासिकविध्यन्तापत्तौ 'सप्तदश दीक्षाः' इत्यादिदीक्षासङ्ख्याविधिर्नोपपद्येत। तस्मान्न गुणविधिरिति वृत्तिकाराः। वासुदेवदीक्षितास्तु वाजपेये गुणश्रुतेरिति सूत्रपाठं धृत्वा वाजपेयवाक्य इति व्याचख्युः। अत्र वाजं च तत् पेयं चेति व्युत्पत्त्या वाजपेयशब्दे अन्तोदात्तत्वनिर्वाहः कार्यः। वाजरूपं पेयं सोम एव। 'सोमग्रहान् गृह्णाति' इति वाक्यप्राप्तत्वेन तत्प्रख्यन्यायसम्भवादिति वेदभाष्ये विद्यारण्यश्रीचरणाः। अयं च वाजपेयो नित्यः। तत्र मण्डनः, 'चातुर्मास्यानि दर्शश्च पौर्णमास्यग्निहोत्रकम्। वाजपेय इतीमे स्युर्नित्याः काम्या इति द्विधा ॥' इति। तथा गौतमोऽपि चत्वारिंशत्संस्काराणां नित्यत्वं वदन् सप्तसंस्थान्तर्गतवाजपेयस्य नित्यत्वं स्पष्टमाह। यत्त्वत्र निर्णयसिन्धौ कलिवर्ज्यप्रकरणे कमलाकरेणोक्तं, "सुराग्रहस्योद्देश्यस्य सौत्रामणीविशेषणाविवक्षया वाजपेयेऽपि निषेधः। 'सौत्रामण्यां तु पयोग्रहा वा स्युः' इत्यापस्तम्बोक्तेः वैकल्पिकपयोग्रहैरप्यधिकारः। वाजपेये तु तत्प्राप्तौ मानाभावात्सोमसुरयोः सहत्यागेनांशे सुराद्रव्यकत्वात्तत्प्रख्यतया यागनामत्वेन तां विना संज्ञायोगात्कलौ नाधिकार इति युक्तं प्रतीमः। त्रिकाण्डमण्डनादिलिखनं तु निर्मूलमनाकरं चेति" तद्वेदभाष्यादिविरुद्धत्वाद्बहुतरन्यायविरुद्धत्वाच्चोपेक्ष्यम्। तथा हि—सौत्रामण्यामपि सुराग्रहणमित्यादौ सौत्रामणीविशेषणाविवक्षायां 'मधुपर्के पशोर्वधः' इत्यादिनिषेधेष्वपि मधुपर्कादिविशेषणाविवक्षापत्त्याग्नीषोमीयादिपशुवधस्यापि निषेधविषयत्वापत्तेः; सौत्रामण्यादिपदवैयर्थ्यापत्तेश्च। ततश्च यः सौत्रामण्यां स न कार्य इति वाक्यकल्पनया निषेधो वाच्यः। तत्र चैकपदेनोद्देशान्न वाक्यभेद इति परिहारः स्पष्टः। सौत्रामण्यादिपदानामपि सार्थक्यम्। यदपि सौत्रामण्यां 'पयोग्रहा वा स्युः' इत्यापस्तम्बवचनात्पयोग्रहैरप्यधिकारो वाजपेये तत्प्राप्तौ मानाभाव इत्युक्तं, तदपि चिन्त्यम्। सौत्रामणीप्रकरणे 'त्र्यहे पुरस्तात्सीसेन क्लीबाच्छष्पाणि क्रीणाति' इत्यादिभिः सुरोत्पत्तेराम्नानेन वाजपेये 'सुरायाः कल्पेन सुरां कल्पयति' इति सुराकल्पातिदेशेन सुराग्रहविषये वाजपेयस्थसुराग्रहस्य सौत्रामणीस्थसुराग्रहप्रकृतिकत्वावश्यम्भावेन वाजपेयेऽपि व्रीहिभिर्विकल्पितयवानां विकृताविव सुराग्रहविकल्पितपयोग्रहाणां प्राप्तिसम्भवान्मानाभावासिद्धेः। यदपि सोमसुरयोः सहत्यागेनांशे सुराद्रव्यकत्वात्सुराद्रव्यप्राप्तिं निमित्तीकृत्य वाजपेयशब्दो यागनामेत्युक्तं, तदप्यत्यन्तासङ्गतम्; सुराया यागद्रव्यत्वाभावात्। 'एतद्वै देवानां परममन्नं यत्सोमः, एतन्मनुष्याणां यत्सुरा' इति ब्राह्मणे महता प्रबन्धेन सोमस्यैव देवतासम्बन्धप्रतीतेः 'वाजसृभ्यः सुराग्रहान् हरन्ति' इति वचनेन सुराया वैश्यसम्प्रदानकदानस्य स्पष्टं प्रतीयमानतया देवतासम्बन्धप्रसक्त्यभावात्। किञ्च 'सोमो वै वाजपेयः, यो वै सोमं वाजपेयं वेद' इत्यादिवचनैः सोमस्यैव वाजपेयपदार्थत्वप्रतिपादनेन न सुराया यागसम्बन्धप्रसक्तिः। अपि च 'अन्नस्य वा एतच्छमलं यत्सुरा' इति 'अनृतेनैव विशं संसृजति' इति च निन्दितत्वात्

'निन्दितां सुरां देवतायै न दद्यात्' इति निषेधविधिकल्पनस्य स्पष्टतया न सुराया देवतासम्बन्धप्रसक्तिः। एवं 'सम्पृचस्स्थ सम्मा भद्रेण पृङ्क्तेत्याह' इति 'विपृचस्स्थ वि मा पाप्मना पृङ्क्तेत्याह' इति च वचनद्वयेन सोमसुरयोः मन्त्रद्वयविनियोगात्प्रथममन्त्रेण सोमस्यैव देवतासम्बन्धप्रतीतेः, द्वितीयेन सुराया देवतासम्बन्धनिषेधप्रतीतेश्च न सुराया देवतासम्बन्धप्रसक्तिः। अयमनयोरर्थः। सम्पृचस्स्थ-देवतया संयुक्ता भवत। भद्रेण-पुण्येन। मां सम्पृङ्क्त-संयुक्तं कुरुत। विपृचस्स्थ-देवतया वियुक्ता भवत। मां पाप्मना वियुक्तं कुरुतेति। अपि च भगवता बोधायनेन सुराग्रहाणां माध्यन्दिनसवने दानविधानेन तृतीयसवने वाजपेयशस्त्रयाज्यायां सोमग्रहाणां होमविधानेन न सुराया देवतासम्बन्धप्रसक्तिः। प्रत्युत सुराग्रहणमन्त्रेणैव 'जुष्टं न योनिं' इति निषेधाद्देवतासम्बन्धो नास्तीति कण्ठरवेणैवोक्तम्। एवं कात्यायनेन ब्रह्मणे देयहिरण्यपात्रनिष्क्रयार्थत्वं सुराग्रहस्योक्तम्। सुराग्रहं गृहीत्वा सादयित्वा दक्षिणाकाले वाजसृद्भ्यः सुराग्रहं दत्वा मधुग्रहं सौवर्णं क्रीत्वा ब्रह्मणे दद्यादिति तद्व्याख्यातारः। तस्मिन् पक्षे सुतरां सुराग्रहाणां न देवतासम्बन्धः। किञ्च 'तुल्यत्वात्क्रिययोर्न' इति एतदधिकरणसिद्धान्तसूत्रभाष्यवार्तिकेषु वाजपेययागस्य सोमद्रव्यकत्वमेव न सुराद्रव्यकत्वमिति सिद्धान्तदर्शनान्न सुराया देवतासम्बन्धप्रसक्तवाजपेयानधिकारो युक्तः। सूत्रार्थः पूर्वमेवोक्तः। न च तर्हि सुराग्रहणमन्त्रे 'प्रजापतये त्वा' इति चतुर्थ्या देवतात्वप्रतीतिविरोध इति वाच्यम्; चतुर्थ्या सम्बन्धमात्रप्रतीतेः सम्बन्धश्च सुराग्रहघटितप्रयोगविषयत्वमात्रमिति विरोधाभावात्। तच्च सुराग्रहणं मन्त्रैकदेशकरणकग्रहणसंस्कृतं वाजसृद्भ्यो दीयमानमदृष्टमुत्पादयतीत्यभिप्रायेण तद्विधानोपपत्तेः। न च प्राचीनग्रन्थेषु सुराप्राप्तिं निमित्तीकृत्य वाजपेयशब्दो नामधेयमित्युक्तिविरोध इति वाच्यम्; यागीयदेवतासम्बन्धाभावेऽपि यागप्रयोगसम्बन्धित्वमात्रेण तत्प्रख्यन्यायसम्भव इत्यभिप्रायेण तदुपपत्तेः। दृश्यते हि विश्वेदेवदेवताया अष्टयागसम्बन्धाभावेऽपि सप्तमयागस्य विश्वेदेवदेवताकतया तद्घटितसमुदायस्य वैश्वदेवसंज्ञा। न च भगवता आपस्तम्बेन यागकाले 'सुराग्रहाननुप्रकम्पयन्ति' इति विधानेन नाराशंसन्यायेन यागरूपत्वमिति वाच्यम्; तत्र हि ऊमोर्वकाव्यदेवतास्सन्तीति द्रव्यदेवतासम्बन्धात् नाराशंसस्य यागरूपत्वं युक्तम्। प्रकृते देवतासम्बन्धस्यातिनिन्दितत्वेन निषिद्धत्वादेवतासम्बन्धाभावेन यागरूपत्वासम्भवादनुप्रकम्पनस्य वाजसृद्भ्यो दानार्थं नयनरूपत्वात्। किञ्च 'वाजपेयेन स्वाराज्यकामो यजेत' इति फलवाक्ये सूत्रभाष्यवार्तिकवेदभाष्यरीत्या सोमयागस्यैव फलसम्बन्धात् 'फलवत्सन्निधावफलं तदङ्गं' इति न्यायेन सुराग्रहस्य तदङ्गतया 'गुणलोपेऽपि मुख्यस्य क्रिया स्यात्' इति न्यायेन सोमयागानुष्ठानसम्भवादनधिकारोक्तिरसङ्गता। मण्डनवचनाद्यनुसारेण वाजपेयस्य नित्यतया नित्येऽशक्याङ्गत्यागाभ्युपगमात्। न च मण्डनाद्युक्तिर्निर्मूलेति वाच्यम्; गौतमस्मृतेर्मूलत्वात्। न च वाजपेय-

**(७)—तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ९ ॥**

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति'[१] इत्यादौ आग्नेयशब्दो गुणविधिः, कर्मनामधेयं वेति चिन्तायां—अग्नेर्मन्त्रवर्णाल्लाभात् आग्नेयपदं नामधेयमिति प्राप्ते—

पुरोडाशकर्मिकायाः भावनायाः मन्त्रापेक्षाऽभावात् मन्त्रस्य च तत्रायोग्यत्वात् नोपांशुयाज इव मन्त्रस्य देवताकल्पकत्वम्। न चाघारवद्वाचनिको विनियोगो मन्त्रस्य; येन तत्कल्पकत्वं सम्भाव्येत। न च मन्त्रस्याष्टाकपालकर्मकभावनाङ्गत्वे प्रमाणमस्ति; प्रकरणस्य च उपांशुयाजादिषु अविशिष्टत्वात्। नापि क्रमः; ब्राह्मण-

शब्दस्य पेयप्राप्तिं निमित्तीकृत्य नामत्वाङ्गीकारे अतिप्रसङ्ग इति वाच्यम्; योगरूढ्यङ्गीकारेण तत्परिहारात्। अपि च 'गौरनूबन्ध्य' इति विधानेऽपि कलौ गवालम्भस्य निषिद्धत्वात्परित्यागेऽपि ज्योतिष्टोमादिप्रयोगदर्शनात्तन्न्यायेन वाजपेयानुष्ठाने न कोऽपि दोषः। किञ्च 'ब्राह्मणो न सुरां पिबेन्न सुरां स्पृशेत्' इत्यादिनिषेधस्य सर्वयुगसाधारण्यात्सर्वदा वाजपेयाननुष्ठानापत्त्या वाजपेयशास्त्रमननुष्ठापकमेव स्यादिति सुधीभिर्विभावनीयम्। अधिकं हिरण्यकेशिसूत्रव्याख्यायां प्रतिपादितमस्माभिरिति सङ्क्षेपः ॥

**तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः** ॥ वाजपेयशब्दस्य तत्प्रख्यन्यायेन नामत्वे साधिते तन्न्यायेनाग्नेयशब्दस्यापि नामत्वं स्यादित्युत्थानात्सङ्गतिरित्यभिप्रेत्याह—**यदाग्नेय इति** ॥ आदिनाग्नीषोमीयादिवाक्यपरिग्रहः ॥ **गुणविधिरिति** ॥ अग्निदेवताविशिष्टाष्टाकपालरूपद्रव्यविधिरित्यर्थः ॥ **कर्मनामधेयमिति** ॥ अग्निदेवताकयागनामधेयमित्यर्थः। तत्प्रख्यशास्त्रं दर्शयति—**मन्त्रवर्णादिति** ॥ 'अग्निर्मूर्धा' इत्यादियाज्यानुवाक्याभ्यामित्यर्थः। ततश्च तत्प्रख्यन्यायेन नामधेयमाग्नेयशब्द इति पूर्वपक्षाशयः। नात्र अग्निहोत्रपद इव तत्प्रख्यन्यायः। तत्र ह्यग्निहोत्रवाक्योत्पन्नहोमानुवादेन 'अग्निर्ज्योतिः' इति मन्त्रविधानाद्युक्ता मन्त्रवर्णात्प्राप्तिः। प्रकृते त्वष्टाकपालकर्मकभावनायां अष्टाकपालकर्तृकभवनाक्षिप्तायां मन्त्राकाङ्क्षारहितायां न मन्त्रान्वयः। नापि वाचनिको मन्त्रः। तस्मान्न मान्त्रवर्णिकदेवताप्राप्तिरिति तत्प्रख्यन्यायाभावान्न नामधेयत्वमिति सिद्धान्तमाह—**पुरोडाशेत्यादिना** ॥ योग्यताभावादपि न मन्त्रवर्णप्राप्तिरित्याह—**तत्रेति** ॥ अष्टाकपालकर्तृकभवने मन्त्रस्य देवताप्रतिपादकस्यासमवेतार्थकत्वादित्यर्थः। नन्वाकाङ्क्षायोग्यतयोरभावेऽपि आघारादाविव मन्त्रवर्णाद्देवताप्राप्तिरस्त्वित्यत आह—**न चेति** ॥ तद्वदत्र वचनाभावान्न मन्त्रप्रवृत्तिरिति भावः। प्रकरणान्मन्त्रस्याङ्गत्वं

१. तै. सं. २. ६. ३.

पाठक्रमापेक्षया मन्त्रपाठक्रमवैपरीत्यस्य पञ्चमे वक्ष्यमाणत्वात्। अतः तत्प्रख्यन्यायाभावात् नामत्वानुपपत्तेः द्रव्यदेवतोभयविशिष्टभावनाविधिप्रतीतेः तस्य च यागमन्तरेणानुपपत्तेः भूधातुना तल्लक्षणात् सकलविशेषणविशिष्टयागभावनाविधानेनार्थात् विशेषणानामपि विधिकल्पनात् गुणविधिरेव आग्नेयशब्दः॥

प्रयोजनं 'आग्नेयं पयः' इत्यादौ नामातिदेशेन आग्नेयविध्यन्तः पूर्वपक्षे। सिद्धान्ते सान्नाय्यविध्यन्तः॥ ७॥

---

स्यादित्याशङ्क्य निराकरोति—**प्रकरणस्येति**॥ इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणस्योपांशुयाजादिसाधारण्येन अष्टाकपालकर्मकभावनामात्राङ्गत्वे नियामकत्वाभावादित्यर्थः। ननु तथापि क्रमान्मन्त्रस्याङ्गत्वमस्त्वित्याशङ्क्यां परिहरति—**नापीति**॥ ब्राह्मणपाठक्रमस्य मन्त्रपाठक्रमवैपरीत्यं पञ्चमे वक्ष्यत इति क्रमोऽपि न मन्त्रस्याङ्गत्वे प्रमाणमित्यर्थः। अतो मान्त्रवर्णिकदेवताप्राप्त्यसम्भवादष्टाकपालद्रव्याग्निदेवतोभयविशिष्टा भावनैव विधीयते। तत्र द्रव्यदेवतासम्बन्धस्य यागघटितमूर्तिकत्वात् भूधातुना यागं लक्षयित्वा श्रूयमाणसर्वकारकविशिष्टयागभावनाविधानादाग्नेयशब्दो गुणविधिरेवेत्यर्थः। अनेकगुणविधाने विध्यावृत्तिस्स्यादित्यत आह—**अर्थादिति**॥ अन्यथानुपपत्त्येत्यर्थः। ततश्च विशेषणानामर्थापत्तिकल्पितविधिभिरेव प्राप्तिसम्भवान्न श्रूयमाणविधेरावृत्तिरिति भावः। नन्वेवं 'ज्योतिर्गौरायुः' इत्यादौ द्रव्यदेवतयोरश्रवणेन भावनामात्रविधिप्रतीतेः तेषां कथं यागरूपत्वनिश्चय इति चेन्न; तत्राप्राप्तिबलेन भवन्तीत्यनेन भावनामात्रविधिप्रतीतौ अवच्छेदकधात्वर्थापेक्षायामनिर्धारितधात्वर्थविशेषस्यैवावच्छेदकत्वकल्पनात्। न चाव्यक्तत्वात्सौमिकधर्मातिदेशसम्भवात्किमित्यनिर्धारितधात्वर्थकल्पनमिति वाच्यम्; भावनाक्षिप्तानिर्धारितधात्वर्थविशेषस्य ज्योतिर्नामकत्वसिद्ध्युत्तरमेव सौमिकधर्मातिदेशात्। प्रकृते च द्रव्यदेवतासम्बन्धकल्पितयागस्यैव करणत्वेन भावनान्वयोपपत्तेर्विशिष्टविधित्वमङ्गीकृत्य गुणपरत्वमेवाग्नेयशब्दस्येति भावः। तत्रायं वाक्यार्थः। आग्नेयपदेन ढक्प्रत्ययान्तेनाग्निनिष्ठदेवतात्वनिरूपकमष्टाकपालद्रव्यमभिधीयते। अष्टाकपालपदेन अष्टसु कपालेषु संस्कृतपुरोडाशद्रव्यमभिधीयते। तच्च तद्धितस्य देवतायुक्ताष्टाकपालद्रव्यपरत्वे तात्पर्यग्राहकम्। भवतिना यागो लक्ष्यते। ततश्चाग्निदेवताविशिष्टाष्टाकपालद्रव्यवती यागकरणिका पौर्णमास्यमावास्याकालवती भावना प्रवर्तनाविषय इति बोधः। अधिकं पूर्वमेवोक्तम्॥ **नामातिदेशेनेति**॥ देवतासामान्याद्द्रव्यसामान्यं बलीयः, तदपेक्षयापि नामातिदेशो बलवानिति सप्तमे वक्ष्यमाणत्वादिति भावः। सूत्रार्थस्तु, स च गुणाश्च तद्गुणाः। उभयेऽपि **विधीयेरन्**। **विधानार्थे अविभागात्**—विधिविषयभावनायां वैशिष्ट्यात्। **न चेदन्येन शिष्टाः**—वचनान्तरैरप्राप्ताश्चेत्, वचनान्तरेण प्राप्तिसम्भवे तु न विधेयाः। 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादिति॥

## (८)—बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

बर्हिराज्यपुरोडाशादिशब्दानां संस्कृतेषु शास्त्रस्थैः प्रयुज्यमानत्वाद्यूपादिशब्दवत् संस्कारमात्रवाचित्वे, संस्कारविशिष्टकुशादिवाचित्वे वा प्राप्ते—

जातिं विहाय कैरप्यप्रयुज्यमानत्वात् संस्कारं विनाऽपि लोके 'बर्हिरादाय गावो गताः' 'आज्यं क्रय्यं' 'पुरोडाशेन मे माता प्रहेळकं ददाति' इत्यादौ प्रयुज्यमानत्वात् अव्यभिचाराल्लाघवाच्च कुशादिजातिवाचित्वमेव ।

प्रयोजनं यूपावटास्तरणार्थबर्हिरादौ पूर्वपक्षे संस्कारकरणं ; सिद्धान्ते नेति ॥८॥

---

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ कर्मनामप्रसङ्गाद्द्रव्यनामविचार इति सङ्गतिः । पूर्वत्र पुरोडाशविषयाग्नेयशब्दस्य विचारितत्वात्तत्प्रसङ्गेन पुरोडाशशब्दस्य तत्तुल्यतया बर्हिराज्यशब्दयोरपि बुद्ध्युपारूढत्वात्तद्विचारस्यापि प्रसङ्गसङ्गतिः । 'बर्हिर्लुनाति, आज्यमुत्पुनाति, पुरोडाशं प्रथयति' इत्यादिषु श्रुतानां बर्हिरादिशब्दानां संस्कारवाचित्वं जातिवाचित्वं वेति सन्दिह्य पूर्वपक्षमाह—बर्हिराज्येत्यादि ॥ शास्त्रस्थैरिति ॥ अनेन पील्वधिकरणाश्ववालाधिकरणन्यायाभ्यां याज्ञिकप्रसिद्ध्या तदितरप्रसिद्धेर्बाधात्संस्कार एव प्रवृत्तिनिमित्तमिति द्योतितम् ॥ यूपादिशब्दवदिति ॥ ननु 'यूपं छिनत्ति, बर्हिर्लुनाति' इत्यादौ यूपादिपदानां संस्कारवाचित्वे तद्विशिष्टकाष्ठोद्देशेन संस्कारविधावुद्देश्यतावच्छेदकविधेययोरैक्याच्छाब्दबोधानुपपत्तिः । अन्यथा 'घटो घटः' इत्यादिप्रयोगापत्तेरिति चेन्न ; 'यूपं तक्षति, बर्हिर्लुनाति' इत्यादौ यूपं कर्तुं पलाशं तक्षति, बर्हिः कर्तुं कुशान् लुनातीति वचनव्यक्त्यङ्गीकारेणादोषात् । एतेन संस्कारविधिज्ञानार्थं यूपशब्दार्थज्ञानापेक्षा, यूपशब्दार्थज्ञानार्थं संस्कारविध्यपेक्षेत्यन्योन्याश्रय इति निरस्तमित्यभिप्रायः । ननु संस्काराणामननुगतत्वान्न प्रवृत्तिनिमित्तत्वमित्यत आह—संस्कारविशिष्टेति ॥ अन्वयव्यतिरेकाभ्यां जातिवाचित्वमिति सिद्धान्तमाह— जातिं विहायेति ॥ व्यभिचारान्न संस्कारवाचित्वमित्याह—संस्कारं विनेति ॥ प्रहेळकं— क्रीडार्थं भक्ष्यम् ॥ जातिवाचित्वमेवेति ॥ न च पील्वादिन्यायेन शास्त्रस्थप्रसिद्धेः प्राबल्यमिति वाच्यम् ; विरोधाभावेन तन्न्यायाप्रवृत्तेरिति भावः ॥ यूपावटेति ॥ संस्कृतबर्हिषैवास्तरणं कर्तव्यम् । अन्यथा बर्हिश्शब्दाप्रवृत्तेरित्यर्थः ॥ सिद्धान्त इति ॥ जातिवाचित्वात् येनकेनचिद्दर्भेणास्तरणमित्यर्थः । उत्तरत्र यूपावटास्तरणबर्हिषि बर्हिर्धर्मनिराकरणमेतदधिकरणप्रयोजनकथनमेवेति ध्येयम् । बर्हिरादौ इत्यादिना यूपाञ्जनार्थाज्यस्य रौहिणपुरोडाशादेश्च सङ्ग्रहः । सूत्रार्थस्तु, असंस्कारे —संस्काराभावेऽपि । शब्दलाभात् —बर्हिरादिशब्दप्रयोगदर्शनात् । अतच्छब्दः—संस्कारशब्दो न भवति । किन्तु जातिवाचीति ॥

## (९)—प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

प्रोक्षणीशब्दस्यापि पूर्ववत्संस्कारवाचित्वे 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति लोके संस्कारं विहाय जातिमात्रे प्रयोगदर्शनात् रूढ्या जलत्वजातिवाचित्वे प्राप्ते—

क्लृप्तावयवयोगेनोपपत्तौ रूढिकल्पने प्रमाणाभावः। अत एवाश्वकर्णादिशब्दे योगबाध एव तत्कल्पनम्। न चासामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वरूपयोगाभावः। फलोपधानासम्भवेऽपि उक्षणस्वरूपयोग्यत्वसम्भवात्। न चैवं रथकारपदेऽपि रथकर्तृत्वयोग्यत्वरूपयोगसम्भवेन जातिविशेषे शक्तिकल्पनानुपपत्तिः; अनुशासनबलेन तत्कल्पनात्। कर्तृत्वस्वरूपयोग्यत्वस्याव्यावर्तकत्वेन 'वर्षासु रथकारः'

---

प्रोक्षणीष्वर्थसंयोगात् ॥ प्रोक्षणीशब्दस्यापि पूर्ववज्जलत्ववाचित्वं स्यादित्युत्थानात्सङ्गतिः। ईकारबहुवचनान्तस्त्रीलिङ्गप्रोक्षणीशब्द एवात्रोदाहरणम्; न तु प्रोक्षणशब्द इति सूचयन्नाह—**प्रोक्षणीशब्दस्येति** ॥ 'प्रोक्षणीरासादय' इत्यादौ श्रुतस्येति शेषः। किमयं प्रोक्षणीशब्दः संस्कारवाची, उत जातिवाची, अथवा यौगिक इति सन्दिह्याह—**पूर्ववदिति** ॥ बर्हिरादिवदित्यर्थः। प्रथमपक्षोपमर्देन द्वितीयपक्षमुपपादयति—**प्रोक्षणीभिरित्यादिना** ॥ **जातिमात्र इति** ॥ प्रकृष्टोक्षणसाधनत्वस्य तैलादौ सत्त्वेऽप्यप्रयोगादवयवार्थाभावदशायामपि प्रयोगादन्वयव्यतिरेकाभ्यां व्यभिचारेणाश्वकर्णादिशब्दवद्रूढ एव प्रोक्षणीशब्दः। तथा च रथकाराधिकरणन्यायेन रूढया यौगिकार्थबाध इति भावः। क्लृप्तया रूढ्या योगबाधेऽपि न कल्प्यया तया योगबाध इत्यभिप्रायेण सिद्धान्तमाह—**क्लृप्तेति** ॥ **प्रमाणाभाव इति** ॥ अन्यथा यौगिकमात्रोच्छेदापत्तेस्तुल्यन्यायेन वाक्येऽपि शक्त्यापत्तेरिति भावः ॥ **तत्कल्पनम्**—रूढिकल्पनम्। नियतबहुवचनस्त्रीलिङ्गविरोधेन तैलादावप्रयोगान्नान्वयव्यभिचारः। नापि व्यतिरेकव्यभिचार इत्याह—**न चासामिति** ॥ **औदासीन्यावस्थायां**—सेचनफलानुपधानदशायाम्। **स्वरूपयोग्यत्वसम्भवात्**—उक्षणसाधनतावच्छेदकजलत्वजातिमत्त्वसम्भवात्। अन्यथा अरण्यस्थदण्डसाधारण्येन दण्डो घटकारणमिति व्यवहारो न स्यादिति भावः। ननु रथकारपदेऽपि स्वरूपयोग्यतामादायोपपत्ते रूढिर्न स्यादिति शङ्कते—**न चेति** ॥ **जातिविशेषे**—सौधन्वनाख्ये ॥ **अनुशासनेति** ॥ 'रथकारस्तु माहिष्यात्करण्यां यस्य सम्भवः' इति कोशात् 'ऋभूणां त्वा' इति मन्त्रवर्णाच्चेति भावः ॥ **अव्यावर्तकत्वेनेति** ॥ रथकर्तृत्वस्वरूपयोग्यत्वस्य सर्वपुरुषसाधारण्यात् 'वर्षासु रथकार आदधीत' इति वचनमव्यावर्तकं स्यात्। न चेष्टापत्तिः। 'वसन्ते ब्राह्मण आदधीत, ग्रीष्मे राजन्यः' इत्याद्युपक्रमानुसारेण 'वर्षासु रथकारः' इत्यस्य व्यवस्थितविषयत्वावश्यम्भावादित्याशयः। **विकृतौ**—

---

१. न चापां इति इति पाठान्तरम्।

इत्यस्य वैयर्थ्यापत्तेश्च । प्रोक्षणीशब्दे तु रूढिकल्पने प्रमाणाभावात् यौगिकत्वमेव ।

प्रयोजनं तु विकृतौ 'घृतं प्रोक्षणं' इत्यादौ 'प्रोक्षणीरासादय'[1] इत्यविकृतः प्रयोगः संस्कारवाचित्वपक्षे ; 'घृतमासादय' इति जातिवाचित्वे; 'प्रोक्षणमासादय' इति यौगिकत्वे द्रष्टव्यम् ॥ ९ ॥

## (१०)—तथा निर्मन्थ्ये ॥ १२ ॥

'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यत्र निर्मन्थ्यशब्दस्य पूर्ववत्संस्कारवाचित्वे 'निर्मन्थ्यमानय पक्ष्यामः' इति लौकिकप्रयोगेन निरस्ते मथनकर्मत्वस्य पाकसाधनीभूतेऽग्नावभावेन मथनप्रयोज्यत्वस्य पाकनवनीतादावपि सत्त्वेन अतिप्रसङ्गात्

---

सोमारौद्रचरौ, अविकृत ईकारबहुवचनान्त एव। एतत्पक्षे 'घृतं प्रोक्षणं' इत्यस्य घृतेन प्रोक्षतीत्यर्थः; न तु संस्कारवचनः प्रोक्षणशब्दः । घृतस्यौपदेशिकत्वादपां बाधः । द्वितीयपक्षे घृतस्य अप्कार्यापन्नत्वादप्त्ववाचकप्रोक्षणीपदनिवृत्तौ घृतत्ववाचकपदप्रक्षेपरूप ऊहः । सिद्धान्ते त्वीकारबहुवचनयोर्विशेष्यनिघ्नताप्रयुक्तत्वान्निवृत्तावपि न प्रातिपदिकनिवृत्तिः । निगमे वैधपदनियमस्य देवतामात्रपरताया दशमे वक्ष्यमाणत्वादिति भावः । सूत्रार्थस्तु, **प्रोक्षणीषु**—प्रोक्षण्यादिशब्देषु। **अर्थसंयोगात्** , प्रोक्ष्यते आभिरित्येवमवयवार्थसम्भवाद्यौगिक एव प्रोक्षणीशब्दो न तु रूढ इति ॥

**तथा निर्मन्थ्ये** ॥ आतिदेशिकीं सङ्गतिमभिप्रेत्याह—**निर्मन्थ्येनेति** ॥ नामधेयत्वगुणविधित्वयोः समुच्चयरूपविशेषप्रदर्शनायेदमधिकरणमित्याशयः । अग्नौ श्रूयते 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । तत्र किमयं निर्मन्थ्यशब्दः संस्कारनिमित्तकः, उत जातिनिमित्तकः, अथवा यौगिक इति संशये पूर्वपक्षमाह—**निर्मन्थ्यशब्दस्येति** ॥ **संस्कारेति** ॥ स च संस्कारो नाधानप्रसिद्धः । चातुर्मास्यातिथ्यादौ 'पशुवन्निर्मन्थ्येन प्रचर्य' इति सूत्रकारप्रयोगदर्शनात्पाशुक एव आधिमन्थनशकलनिधानरूपो 'धनञ्जयो रणे रणे' इति मन्त्रप्रयोगान्तः । संस्कारं विहायापि लोके 'निर्मन्थ्यमानय पक्ष्यामः' इति प्रयोगदर्शनान्न संस्कारनिमित्तकत्वमित्याह—**निर्मन्थ्यमिति** ॥ 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मार्थकण्यप्रत्ययान्तनिर्मन्थ्यशब्दस्य मथनजन्यत्वं यौगिकोऽर्थः । स च प्रकृते न सम्भवतीति न प्रोक्षणीन्यायेन गतार्थत्वमपीति ध्वनयन्नाह—**पाकसाधनीभूत इति** ॥ अग्नेः अवयवोपचयापचयाभ्यां प्रतिक्षणं भिन्नत्वात्साक्षान्मथनजन्याग्नेस्तदानीं नाशादिति भावः । ननु मथनजन्यत्वाभावेऽपि मथनप्रयोज्यत्वमादाय यौगिकत्वमस्त्वित्यत आह—**मथनप्रयोज्यत्वस्येति** ॥ **पाकेति** ॥ तण्डुलादिपाकेत्यर्थः ॥ **नवनीतादाविति** ॥ तत्रापि दधिमथनप्रयोज्यत्वसत्त्वादित्यर्थः ॥ **अति-**

---

१. तै. ब्रा. ३. २. ९.

अरणिप्रयोज्याग्नित्वावान्तरधर्मव्याप्यजातिवाचित्वे प्राप्ते–

मथनप्रयोज्यत्वयोगेनैवोपपत्तौ रूढिकल्पने प्रमाणाभावात् अतिप्रसङ्गस्य पाकादावपि प्राचीनप्रयोगाभावेनैवाबोधकत्वोपपत्तेर्निराकर्तुं शक्यत्वात् नवनीते च वाच्यत्वस्यापि वक्तुं शक्यत्वाच्च यौगिक एव निर्मन्थ्यशब्दः।

एवं च 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यग्नेः पाकसामर्थ्यादेव प्राप्तत्वात् मथनमात्रविधिरिति तस्यापि प्रयोगमध्ये करणं सिद्धान्ते प्रयोजनम् ॥ १० ॥

**(११)—वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ न प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १४ ॥ मिथश्चानर्थसम्बन्धः ॥ १५ ॥ परार्थत्वाद्गुणानाम् ॥ १६ ॥**

---

**प्रसङ्गादिति** ॥ तथा च मथनप्रयोज्यत्वस्याप्यसम्भवान्न यौगिकत्वमिति भावः। तृणफूत्कारादिजन्याग्निव्यावृत्त्यर्थमाह—**अरणिप्रयोज्येति** ॥ अरणिसंयोगादिव्यावृत्त्यर्थं—**अग्नित्वावान्तरधर्मव्याप्येति** ॥ अग्नित्वावान्तरेति सम्पातायातम्। ततश्च मथनजन्याग्निमात्रनिष्ठवैजात्यनिमित्तक इत्यर्थः। यौगिक एव निर्मन्थ्यशब्द इति सिद्धान्तमाह—**मथनेति** ॥ अतिप्रसङ्गं निराकरोति—**प्राचीनेति** ॥ वस्तुतस्तु पाकादावतिप्रसङ्गस्यारणीमथनप्रयोज्यत्वविवक्षया वारणं सम्भवतीति ध्येयम् ॥ **नवनीते चेति** ॥ लौकिकप्रयोगोऽस्तीत्यभिप्रायेण। अन्यथा पुनः अरणिप्रयोज्यत्वाभावान्न वाच्यत्वमिति बोध्यम् ॥ **एवं चेति** ॥ निर्मन्थ्यशब्दस्य यौगिकत्वसिद्धौ चेत्यर्थः। 'निर्मन्थ्येनेष्टकाः' इत्यत्र नाग्निविधानम्; पाकान्यथानुपपत्त्यैव अग्नेः प्राप्तत्वात्। किन्तु मथिताग्निविधानेऽपि 'लोहितोष्णीषाः' इत्यादिवद्विशेषण एव विधेः पर्यवसानमिति प्रयोगमध्ये मथनस्यानुष्ठानमेव प्रयोजनं सिध्यतीत्याशयेनाह—**पाकसामर्थ्यादिति** ॥ **मथनमात्रविधिरिति** ॥ ननु पाकोद्देशेन मथनविधाने लौकिकेऽपि तत्प्रसङ्गः। इष्टकापाकोद्देशेन तद्विधाने विशिष्टोद्देशप्रसङ्ग इति चेन्न; पाकेष्टकासम्बन्धस्य अवान्तरप्रकरणप्राप्तत्वेन पाकोद्देशेनैव मथनविधानान्न दोष इत्याशयात्। अङ्गप्रधानयोः एकदेशकालकर्तृकत्वलाभार्थं प्रयोगमध्य इत्युक्तम्। यत्त्वत्र साक्षान्मथनजन्य एव मुख्या वृत्तिः, तत्सन्ततौ तु गौणी; जन्यप्रयोज्योभयसाधारण्येनैकस्यानुगतधर्मस्य निर्वक्तुमशक्यत्वान्मुख्यार्थसम्भवे गौणग्रहणस्यान्याय्यत्वात्प्रयोगमध्ये मथनसिद्धिरिति कैश्चिद्व्याख्यातं तत् 'जातमनुप्राणिति' इति विहितप्राणनदशायामेव अग्न्यन्तरोत्पत्त्या मुख्यार्थस्य क्वापि पाकजनकत्वासम्भवात् मथनजन्यस्यापि धारावाहिकमथनान्तर्गतपूर्वपूर्वमथनप्रयोज्यत्वेन प्रयोज्यत्वस्यैव सर्वानुगतत्वाच्च मथनप्रयोज्यत्वयोगेनैवेति मूलविरोधापत्तेश्चोपेक्षितम्। सूत्रं तु स्पष्टार्थम् ॥

**वैश्वदेवे विकल्प इति चेत्। न प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥**

---

१. अग्नित्वव्याप्य० इति पाठान्तरम्।

चातुर्मास्येषु वैश्वदेवे प्रथमे पर्वणि आग्नेयादीनष्टौ यागान्विधाय 'वैश्वदेवेन यजेत' इति श्रुतम् । तत्र वैश्वदेवशब्दः गुणविधिः कर्मनामधेयं वेति चिन्तायां नामधेयत्वे समस्तवाक्यस्य वैयर्थ्यप्रसङ्गात् अगत्या आग्नेयादिषु सप्तसु देवताविधिः । आमिक्षायागे विश्वेदेवदेवतायाः प्राप्तत्वात् देवताविशिष्टयागान्तरविधानं वा गुणात् ।

---

निर्मन्थ्यशब्दे यथोपसर्जनीभूतमन्थनविधिः एवमिहाप्युपसर्जनदेवताविधिरिति प्रत्यवस्थानात्सङ्गतिरित्यभिप्रेत्याह—**चातुर्मास्येष्विति** ॥ चतुर्षु चतुर्षु कर्तव्यानि चातुर्मास्यसंज्ञकानि चत्वारि पर्वाणि, वैश्वदेव—वरुणप्रघास—साकमेध—शुनाशीरीयाख्यानि । तत्र-वैश्वदेवाख्ये प्रथमे पर्वणीत्यर्थः ॥ **अष्टौ यागानिति** ॥ 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालं' इति वाक्यैर्विहितानीत्यर्थः । तत्र द्वितीयतृतीयचतुर्थपञ्चमाश्चरवः । सप्तमी आमिक्षा । अन्ये पुरोडाशा इति स्थितिः । यद्यपि चातुर्मास्यानि राजसूये विहितानि तदन्तर्गतान्येव । तथापि तत्रत्यानामेव अवेष्टिवत् 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' 'चातुर्मास्यैस्स्वर्गकामो यजेत' इत्यादिवाक्येन स्वतन्त्रफलसम्बन्धाद्बहिःक्रतु प्रयोगः । स एव सप्तहविर्यज्ञसंस्थान्तर्गततया नित्यत्वेन गौतमोक्त इति बोध्यम् ॥ **वैश्वदेवेनेति** ॥ न च वैश्वदेवशब्दस्य देवतातद्धितान्तस्य यजिसामानाधिकरण्यमनुपपन्नं, देवतातद्धितस्य 'सूक्तहविषोः' इति वार्तिककारेण नियमितत्वादिति वाच्यम्; तस्य प्रायिकत्वात् । अत एव 'वृधन्वत्याग्नेयस्य आज्यभागस्य पुरोनुवाक्या भवति' इति श्रौतप्रयोगोपपत्तिरिति भावः ॥ **समस्तेति** ॥ नाम्नो विध्यनर्हत्वात् अर्हत्वेऽप्यर्थवाचकस्य शब्दपरत्वे लक्षणाप्रसङ्गात् 'अष्टौ हवींषि' इति लिङ्गदर्शनेन यागविधित्वासम्भवाच्च समस्तवाक्यं व्यर्थं स्यादित्यर्थः ॥ **अगत्येति** ॥ उत्पत्तिशिष्टदेवतावरुद्धेषु देवतान्तरविधानं न युक्तमित्यभिप्रायेणागत्येतिवचनम्; तथापि वाक्यानर्थक्यात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलं' इति न्यायेन उत्पन्नशिष्टस्यैव गुणस्य प्राबल्यादुत्पत्तिशिष्टगुणबाधेन गुणविधित्वं सम्भवतीति भावः । यत्तु उत्पत्तिशिष्टदेवताभिस्साकमानर्थक्यप्रतिहतविधिप्राप्तदेवताया विकल्प इति कैश्चिदुक्तम्, तन्न; आनर्थक्यप्रतिहतन्यायेन बलाबलवैपरीत्यस्य सिद्धतया उत्पन्नशिष्टस्यैव प्राबल्येन तुल्यबलत्वाभावाद्विकल्पोक्त्ययोगात् ॥ **देवताविधिरिति** ॥ यजिना प्रकृतयागाननूद्य तत्र वैश्वदेवपदेन विश्वेदेवदेवताविधिः । वैश्वदेवपदस्य देवताविशिष्टद्रव्यवाचकत्वेऽपि द्रव्याणां विशिष्य प्राप्तत्वात् अप्राप्तदेवतामात्रविधायकत्वोपपत्तेरिति भावः । ननु उत्पत्तिशिष्टगुणावरुद्धेषु गुणान्तरविधिर्न सम्भवत्येव । न चानर्थक्यप्रतिहतन्यायः; विशिष्टविधित्वेन वाक्यसार्थक्यसम्भवादित्यतस्तथैवाह—**देवताविशिष्टेति** ॥ **गुणादिति** ॥ वाजिन-

**एतस्मिन्नेव वा कर्मणि आमिक्षावाक्येन द्रव्यमात्रविधानम् । एवं च 'अष्टौ हवींषि'[1] इति लिङ्गदर्शनस्याप्युपपत्तिरिति प्राप्ते–**

**नाग्नेयादिषु गुणविधिः; उत्पत्तिशिष्टदेवतावरोधात् । नापि यागान्तरविधिः;**

न्यायेन गुणात्कर्मभेद इत्यर्थः । ननु गुणात्कर्मभेद इत्ययुक्तं, भेदकगुणाभावात् । सप्तमयागे विश्वेदेवदेवतासत्त्वेन देवताभेदाभावाद्द्रव्यविशेषस्याश्रवणान्न द्रव्यभेदात्कर्मभेदसम्भव इति चेन्न; तद्धितेन देवताविशिष्टद्रव्यप्रतिपादनेन द्रव्यभेदादेव कर्मभेदसम्भवाद्द्रव्यविशेषाश्रवणेऽपि बहुदेवताकत्वेन अग्नीषोमीयप्रकृतिकतयातिदेशेन पुरोडाशप्राप्तिसम्भवात् 'सर्वस्मै' इति वाक्येन ध्रौवाज्यप्राप्तिसम्भवाच्च सर्वनामार्थकतद्धितेनोपस्थितप्रथमोपात्तप्राकरणिकाग्नेयाष्टाकपालप्राप्तिसम्भवाच्च । न च 'अष्टौ हवींषि' इति लिङ्गविरोध इति वाच्यम्; तस्य प्रधानपरत्वादस्य च वाजिनयागवदङ्गत्वेन विरोधाभावात् । अन्यथा वाजिनयागाधिक्येन लिङ्गविरोधस्यापरिहार्यत्वादित्याशयात् । तस्माद्विश्वेदेवदेवताविशिष्टाज्यादिद्रव्यकयागविधिरिति गुणाद्यागान्तरविधिपक्षस्सम्भवत्येवेति भावः । ननु विशिष्टविधिपक्षे गौरवमित्यत आह—**एतस्मिन्नेव वेति** ॥ 'वैश्वदेवेन यजेत' इति वाक्यविहित इत्यर्थः ॥ **आमिक्षावाक्येन**—सप्तमवाक्येन ॥ **द्रव्यमात्रविधानमिति** ॥ आमिक्षावाक्ये द्रव्यदेवतासम्बन्धकल्पितयागविधावपि वैश्वदेववाक्येन यागदेवतयोः प्राप्तत्वादप्राप्तामिक्षाविधाने पर्यवसानादुभयोस्सार्थक्यमिति भावः । न च आमिक्षावाक्य एव विशिष्टयागविधिः, वैश्वदेववाक्ये तु गुणमात्रविधिरित्येवं किं न स्यादिति वाच्यम्; वैश्वदेववाक्ये यजिश्रवणेन तत्रैव यागविधेर्युक्तत्वादामिक्षावाक्ये च यज्यश्रवणेन गुणमात्रविधानोपपत्तेरित्याशयः । अस्मिन्पक्षे लिङ्गदर्शनस्याप्युपपत्तिरित्याह—**एवं चेति** ॥ न च पूर्वस्मिन्पक्षेऽपि वैश्वदेववाक्यविहितयागस्य सप्तमवाक्यविहितयागस्य च सम्प्रतिपन्नदेवताकतया सह प्रक्षेपात् 'त्रयोदशामावास्यायां' इत्यस्येव 'अष्टौ हवींषि' इति लिङ्गदर्शनस्याप्युपपत्तिस्सम्भवत्येव । अथवा लिङ्गदर्शनस्य प्रधानमात्रपरताया वैश्वदेववाक्यविहितयागस्याङ्गत्वस्य च पूर्वमेवोक्तत्वान्नानुपपत्तिरिति वाच्यम्; 'अष्टौ हवींषि' इति वाक्यस्य यागाष्टत्वाभिप्रायकत्वे तदसम्भवात्, 'त्रयोदशामावास्यायां' इत्यस्याहुतिपरत्वेन वैषम्यात्, वैश्वदेववाक्यविहितयागस्याङ्गत्वे प्रमाणाभावाच्च इत्याभिप्रायेण सिद्धान्तमाह—**नाग्नेयादिष्विति** ॥ आग्नेयादिवाक्येषु अग्न्यादिदेवताश्रवणेनाग्न्यादिदेवताविशिष्टाष्टाकपालादिद्रव्यकयागविधेरावश्यकतया देवताकाङ्क्षाभावान्न वैश्वदेववाक्ये गुणविधिसम्भव इत्यर्थः । ननु 'इन्द्राय हरिवते धाना निर्वपेत्, इन्द्राय पूषण्वते करम्भं, सरस्वत्यै भारत्यै परिवापं, इन्द्राय पुरोडाशं, मित्रावरुणाभ्यां पयस्यां' इति वचनान्न देवतोद्देशेन निर्वापश्श्रुतः ।

१. तै. ब्रा. १. ६. ३.

**भेदबोधकप्रमाणानां नामत्वेनोपपत्तौ विधिगौरवापादकभेदबोधकत्वानुपपत्तेः। अत एव नामिक्षावाक्येऽपि द्रव्यमात्रविधानम्; 'आग्नेयमष्टाकपालं निर्वपेत्' इत्याग्नेयादिवाक्य-**

---

तत्रापि निर्वपतेर्यागलक्षकतयोत्पत्तिशिष्टदेवतावरुद्धेऽपि कर्मणि 'एतेषां हविषामिन्द्रमेव यजन्ति' इति वचनेन इन्द्रस्यैव देवतात्ववत्प्रकृतेऽप्यग्न्याद्यवरुद्धेषु यागेषु वैश्वदेववाक्येन विश्वेदेव-देवताविधिसम्भवान्नोत्पत्तिशिष्टप्राबल्येन गुणविधित्वानुपपत्तिरिति चेन्न; तत्र 'इन्द्राय हरिवते' इत्यादौ निर्वपतिना यागलक्षणाभावाच्चोदकप्राप्तनिर्वापानुवादेन यावल्लक्षणया याग उपस्था-प्यते तावज्झटिति प्रवृत्तेन एतेषामिति वचनेनेन्द्रविधानात्तस्यैव देवतात्वेन इन्द्रविशिष्ट-यागविधिपर्यवसानेन द्रव्यदेवतासम्बन्धान्यथानुपपत्त्या यागकल्पनाभावान्नोत्पत्तिशिष्टत्वं देव-तायाः। प्रकृते तु 'आग्नेयमष्टाकपालं निर्वपति' इत्यादौ निर्वापो न विधेयः, तस्य चोदकप्राप्तत्वात्। नापि निर्वापे देवताविधिः, तद्धितोपात्तदेवताया निर्वापेऽन्वयासम्भवात्, निर्वापार्थतया देवताविधाने यागविधानाभावेन अष्टाकपालादीनामनन्वयापत्तेश्च 'इन्द्राय हरिवते' इत्यादावष्टाकपालादिपदाभावात् निर्वापमात्रे देवताविधिर्युक्त इति वैषम्यात्। एवं तत्रैतेषामिति बहुवचनश्रवणेन युक्त इन्द्रस्य सर्वहविस्सम्बन्धः। प्रकृते तु वैश्वदेवैरिति बहुवचनाश्रवणान्न विश्वेदेवदेवतायास्सर्वहविस्सम्बन्ध इति वैषम्याच्च। ततश्च आग्नेयादि-वाक्येषु यागस्यैव विधेयत्वादुत्पत्तिशिष्टाग्न्यादिरूपदेवतावरोधेन तत्र गुणविधिर्न सम्भवत्येवे-त्याशयः। नन्वेवं गुणाधिकरणे उत्पत्तिशिष्टप्राबल्याद्गुणविधित्वं नास्तीति व्युत्पादनात्तेन गतार्थमेतत्। न चात्रोत्पत्तिशिष्टप्राबल्यं व्युत्पाद्यं, गुणाधिकरणे तद्धितचतुर्थीबलाबलमिति न पौनरुक्त्यमिति वाच्यम्; उत्पत्तिशिष्टप्राबल्यस्यात्र व्युत्पाद्यत्वे गुणाधिकरणपूर्वपक्षस्यैवा-नुन्मेषापत्तेः। पूर्वयागस्यामिक्षावरुद्धतया तत्र वाजिननिवेशासम्भवादिति चेन्न; उत्पत्ति-शिष्टप्राबल्यस्यैतदधिकरणसिद्धत्वेऽपि वाजिनवाक्ये विशिष्टविधिगौरवपरिजिहीर्षया आमिक्षा-यागं निष्कृष्य यागस्वरूपमात्रानुवादेन वाजिनविधिरस्त्विति शङ्कानिराकरणार्थं तदधि-करणप्रवृत्तेस्सुवचत्वात्। अधिकमाकरे व्यक्तम्। द्वितीयपूर्वपक्षं निराकरोति—**नापीति** ॥ **भेदबोधकेति** ॥ देवतायाः चोदकप्राप्तद्रव्यस्यानर्थक्यस्य च यागनामत्वेन वैश्वदेवशब्दो-पपत्तेर्न कर्मभेदबोधकत्वम्। भेदबोधकत्वे हि स्वतन्त्रं कर्म, तज्जन्यमपूर्वं, तयोर्जन्यजनक-भावादिविशेषणविध्यादिकं च कल्पनीयमिति गौरवापत्तेरिति भावः ॥ **अत एव**—नामत्वे-नोपपत्तेरेव ॥ **नामिक्षावाक्य इति** ॥ आमिक्षावाक्ये द्रव्यविधिरिति पक्षे विधेर्धात्वर्थविष-यित्वाभावेन धातुपारार्थ्यमपि दोष इति भावः। दोषान्तरमप्याह—**आग्नेयमिति** ॥ आग्नेयवाक्यस्थस्य निर्वपतेर्द्रव्यदेवताविशिष्टयागविधायकस्यामिक्षावाक्येऽनुषङ्गेणान्वितस्य द्रव्यमात्रविधिपरत्वे वैरूप्यम्। धात्वर्थविषयस्य विधेर्गुणविषयत्वात् एकोच्चारणेन विशिष्टप्रतीते-

स्थस्य निर्वपेदित्यस्य विशिष्टविधायकस्य आमिक्षावाक्येऽनुषक्तस्य द्रव्यमात्रविधायकत्वे वैरूप्यापत्तेश्च। अत आग्नेयादीनामष्टानामपि यागानां नामधेयं वैश्वदेवशब्दः; उत्पत्तिशिष्टदेवतावरोधसहकृततत्प्रख्यन्यायात्। प्रवृत्तिनिमित्तं च विश्वेदवदेवताकयागघटितसमुदायाश्रयत्वम्। वाक्यं च समुदायसिद्ध्यर्थं समुदायिनामनुवादकम्। तत्प्रयोजनं च अष्टानामपि यागानां 'वसन्ते वैश्वदेवेन यजेत' इति वसन्ता-

---

गुणमात्रप्रतीतेश्चासम्भवेन विध्यावृत्तेर्वक्तव्यत्वादिति भावः। आमिक्षावाक्ये द्रव्यमात्रस्य देवतोद्देशेन विधाने द्रव्यस्य देवताङ्गत्वापत्तिः चशब्देन सूचिता। नामधेयत्वमुपपादयति—**उत्पत्तीति**॥ तत्प्रख्यन्यायमात्रेण नामत्वं न सम्भवति; तन्न्यायस्यामिक्षायागमात्रविषयत्वेन यागाष्टकनामत्वासाधकत्वात्। "यद्विश्वेदेवास्समयजन्त। तद्वैश्वदेवस्य वैश्वदेवत्वं" इत्यर्थवादस्य स्तुतिमात्रपरत्वेन नामत्वासाधकत्वादित्यभिप्रायेणोत्पत्तिशिष्टेत्याद्युक्तम्। अत्र वैश्वदेवपदस्य वैश्वदेवावैश्वदेवसमुदाये छत्रिन्यायेन लक्षणेति कैश्चिदुक्तम्। तदसहमानस्सर्वयागसाधारणं प्रवृत्तिनिमित्तमाह—**प्रवृत्तिनिमित्तं चेति**॥ न च 'यद्विश्वेदेवाः' इति वाक्यशेषवशाद्विश्वेदेवकर्तृकत्वमेव प्रवृत्तिनिमित्तं वक्तुं शक्यम्। अर्थवादत्वेऽपि 'त्रिवृत्पञ्चदश' इत्यादिवाक्यशेषवशेन ज्योतिष्टोमादिपदस्य नामधेयत्वसिद्धान्तदर्शनादिति वाच्यम्; 'त्रिवृत्पञ्चदश' इत्यादिवाक्यशेषस्य स्तावकत्वेऽपि शक्यार्थप्रतीतिमादाय नामत्वनिर्वाहकत्वसम्भवात्। प्रकृते च देवताचैतन्यस्य सिद्धान्तेऽनङ्गीकारेण विश्वेदेवकर्तृकत्वस्य यागेषु विरुद्धतया 'विरोधे गुणवादः स्यात्' इति न्यायेन गुणवादमात्रत्वेन शक्यार्थबोधासम्भवान्मूलोक्तप्रवृत्तिनिमित्तस्यैव युक्तत्वात्॥ **विश्वेदेवदेवताकेति**॥ ननु विश्वेदेवदेवताकयागघटितसमुदायत्वं वैश्वदेवपर्वस्थस्य सङ्कल्पप्रभृति ब्राह्मणतर्पणान्तसमुदायस्यास्तीति सर्वेषां तेषां वैश्वदेवपदार्थत्वापत्तिः। न चेष्टापत्तिः; प्रयाजादीनां सर्वेषामपि वसन्तकालसम्बन्धेन चातुर्मास्यसंज्ञापत्त्या फलसम्बन्धेन समप्राधान्यापत्तेः। न च महासमुदायघटकावान्तरसमुदायाश्रयत्वं प्रवृत्तिनिमित्तमस्त्विति वाच्यम्; अवान्तरसमुदायसिद्धौ नामत्वसिद्धिः, नामत्वसिद्धाववान्तरसमुदायसिद्धिरित्यन्योन्याश्रयापत्तेरिति चेन्न; विश्वेदेवदेवताकयागघटितनिर्वपतिलक्ष्ययागमात्रप्रवृत्तिसमुदायाश्रयत्वविवक्षायामतिप्रसङ्गाभावान्निर्वपतिलक्ष्यत्वस्य समुदायिषु विवक्षितत्वेन प्रयाजादिषु तदभावात्। अत एव वाजिनयागघटितसमुदायमादाय नातिप्रसङ्ग इति दिक्। वाक्यानर्थक्यं परिहरति—**वाक्यं चेति**॥ 'वैश्वदेवेन यजेत' इति वाक्यं चेत्यर्थः **समुदायादीनां**—आग्नेयादीनाम्॥ **अनुवादकमिति**॥ एकसंज्ञाकानामेकेन यजिनोपादानादेकसमुदायसिद्धिरनुवादफलमित्यर्थः। समुदायसिद्धेः किं प्रयोजनमित्याकाङ्क्षायामाह—तत्प्र-

---

१. विश्वेदेवदेवताजन्यामिक्षा० इति पाठान्तरम्।

दिसम्बन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसम्बन्धसिद्धिः । इतरथा आमिक्षायागस्यैव विश्वदेवदेवताकत्वात् वसन्तादिसम्बन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसम्बन्धापत्तेः इतरेषामङ्गत्वापत्तिरिति कौस्तुभे स्पष्टम् ॥ ११ ॥

**(१२)—पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥ गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ तच्छेषो नोपपद्यत इति चेत् ॥ १९ ॥ अविभागाद्विधानार्थे स्तुत्यर्थे नोपपद्येरन् ॥ २० ॥ कारणं स्यादिति चेत् ॥ २१ ॥ आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थे**

---

**योजनं चेति** ॥ समुदायसिद्धिप्रयोजनं चेत्यर्थः । 'वसन्ते वैश्वदेवेन यजेत' इति वाक्येन वैश्वदेवसंज्ञिकसमुदायस्य वसन्तसम्बन्धसिद्धिः प्रयोजनमित्यर्थः । आदिना 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति वाक्योक्तदेशसम्बन्धपरिग्रहः । तस्यापि प्रयोजनमाह—**चातुर्मास्येति** ॥ वैश्वदेवपदबोध्यानामष्टानामपि यागानां फलसम्बन्धसिद्धिर्विद्वद्वाक्यवत्प्रयोजनमित्यर्थः ॥ **इतरथा**—अनुवादाभावे ॥ **आमिक्षायागस्येति** ॥ सप्तमयागस्येत्यर्थः ॥ **वसन्तेति** ॥ वसन्तवाक्ये वैश्वदेवपदेन तस्यैव ग्रहणादिति भावः ॥ **अङ्गत्वापत्तिरिति** ॥ 'फलवत्सान्निधावफलं तदङ्गं' इति न्यायादिति भावः । नन्वेवमपि त्रिंशदाहुतिसम्पत्तिविरोधः । एवं हि श्रूयते 'नव प्रयाजाः इज्यन्ते, नवानूयाजाः, अष्टौ हवींषि, द्वावाघारौ, द्वावाज्यभागौ' इति । तत्र वाजिनस्विष्टकृदादीनां पत्नीसंयाजादीनां चाधिक्यादिति चेन्न ; प्रतिपत्त्यतिरिक्ताहवनीयाधिकरणकहोमसङ्ख्यामादाय त्रिंशत्वोपपत्तेः । स्विष्टकृद्वाजिनयोः प्रतिपत्तित्वात्पत्नीसंयाजादीनामाहवनीयाधिकरणकत्वाभावाच्च तद्व्युदासात् । प्रयोजनं प्रथमपूर्वपक्षेऽष्टानामपि विश्वेदेवदेवताकत्वात्सम्प्रतिपन्नदेवताकतया सहप्रक्षेपः । द्वितीये सप्तमनवमयोः सम्प्रतिपन्नदेवताकत्वात्सहप्रक्षेपः । तृतीये विधिपाठक्रमस्यापि अनुष्ठानक्रमनियामकतया एककपालविध्यनन्तरमेव वैश्वदेववाक्यश्रवणात् एककपालानुष्ठानानन्तरमेव वैश्वदेवयागानुष्ठानम् । सिद्धान्ते तु न सहप्रक्षेपो न वा क्रमवैपरीत्यमिति । सूत्रार्थस्तु,**वैश्वदेवे**—वैश्वदेवशब्दे, विश्वेदेवदेवताविधानादग्न्यादिभि**र्विकल्प इति चेत्तन्न, प्रकरणात्प्रत्यक्षविधानाच्च** । विश्वेषां देवानां यजिना यागसामान्यबोधने विशेषाश्रवणात्प्रकरणाद्विश्वेदेवदेवताविधिर्वाच्यः । अग्न्यादीनामष्टाकपालादियागेषु श्रुत्या विधानाद्दुर्बलप्रमाणप्राप्तानां विश्वेषां देवानां न विकल्पो युक्तः ; विषमशिष्टविकल्पापत्तेः ॥ **न हि प्रकरणं द्रव्यस्य** अग्न्यादिगुणस्य न प्रकरणं, किन्तु श्रुतिरिति॥

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये** ॥ पूर्वाधिकरणोक्तनामत्वापवादादाप-

विधीयन्ते ॥ २२ ॥

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते'[1] इत्यनेन यागं विधाय 'यदष्टाकपालो भवति, गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति'[1] इत्यादिनाऽष्टाकपालनवकपालदशकपालैकादशकपालद्वादशकपालाननूद्य 'यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति'[1] इति श्रुतम् । तत्र द्वादशत्वे अष्टत्वादेः प्राप्तत्वादष्टाकपालशब्दो वैश्वानरयागनामधेयमित्येकः पक्षः । स्वरूपेण प्राप्तावपि परिच्छेद-

---

वादकीं सङ्गतिमभिप्रेत्याह—**वैश्वानरमिति** ॥ **यागं विधायेति** ॥ 'वैश्वानरेण द्वादशकपालेन यजेत' इति वाक्यविपरिणामस्य आग्नेयाधिकरणन्यायसिद्धत्वादिति भावः । आदिना 'यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति । यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति । यदेकादशकपालस्त्रिष्टुभैवास्मिन् इन्द्रियं दधाति । यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति' इत्येतदन्तपरिग्रहः । अत्र वैश्वानरमित्यारभ्य पशुमान् भवतीत्यन्तमेकं वाक्यं, उत नानावाक्यानि ? तत्राप्यष्टाकपालादिशब्दा नामधेयानि, उत गुणविधय इति वाक्यैकत्वपक्षे संशयः । वाक्यनानात्वपक्षेऽपि किं केवलगुणविधय एते, उत फलार्थगुणविधय इति । अथ वा 'यदष्टाकपालो भवति' इत्यारभ्य 'सर्वोऽयमर्थवादः' इति संशयनिष्कर्षमभिसन्धाय पूर्वपक्षमाह—**तत्रेति** ॥ **द्वादशत्व इति** ॥ शतं ब्राह्मणास्सोमान् भक्षयन्तीत्यत्राधिकसङ्ख्यान्तर्गतोऽल्पसङ्ख्यैव । 'दश दश एकैकं चमसमनुसर्पन्ति' इत्यत्र यथा निर्दिश्यते तद्वद्द्वादशकपालेष्वष्टादिद्वादशान्तानां प्राप्तत्वात्तत्प्रख्यन्यायेनाष्टाकपालादिशब्दा नामधेयानि । न चैकस्य वैश्वानरयागस्य पञ्चनामधेयाङ्गीकारे संज्ञया कर्मभेदापत्तिरिति वाच्यम्; पाचकपाठकादिवदेकस्यैवानेकसंज्ञासम्भवेन कर्मभेदाभावात् । न च तथाप्येकस्यानेकसंज्ञाकत्वे प्रयोजनासम्भव इति वाच्यम्; अर्थवादे पूतत्वादिफलपञ्चकस्य संज्ञाभेदेन प्रतिनियतनिर्देशबलात्तत्फलकामनाप्रयोगे तत्तन्नाम्नैव सङ्कल्प इति नियमकल्पनेन बहुसंज्ञानर्थक्याभावात् । अत एव नाष्टदोषदुष्टविकल्पोऽपि । न चैकस्मिन्प्रयोगेऽनेकफलकामनायां सर्वसंज्ञाप्रवृत्त्यापत्तिरिति वाच्यम्; योगसिद्ध्यधिकरणन्यायेनैकस्मिन् प्रयोगेऽनेकफलकामनाऽसम्भवात् ॥ **परिच्छेदकत्वेनेति** ॥ श्रपणाधिकरणव्यावर्तकत्वेनेत्यर्थः । द्वादशस्वष्टत्वादीनां स्वरूपेण सत्त्वेऽपि समासस्य सामर्थ्याश्रितत्वान्निरपेक्षत्वरूपसामर्थ्यस्य चतुस्सापेक्षेष्वष्टस्वभावादिति भावः । **अष्टत्वमिति** ॥ औपदेशिकद्वादशत्वेन बाधनिरासायातिदेशप्राप्तमपि पुनर्विधीयत इत्याशयः । नन्वष्टत्वमात्रविधाने कपालपदवैयर्थ्यापत्तिः कपालोद्देशेन तद्विधावेकप्रसरताभङ्गश्चेत्यत आह—

---

१. तै. सं. २. २. ५.

कत्वेन प्राप्त्यभावात् गुणविधय एव एते । अष्टत्वमष्टाकपालं द्रव्यं वा पूर्वयागे विधीयते । उपक्रमोपसंहारैक्येन चैकवाक्यत्वप्रतीतेर्न द्वादशकपालस्योत्पत्तिशिष्टता ॥

अथवा—अस्तु वाक्यनानात्वम् । तथाऽपि 'यद्द्वादशकपालो भवति'[1] इत्यनेनैव तद्विधिः । वैश्वानरवाक्ये तत्पदमनुवाद एवेति द्वितीयः पक्षः । ब्रह्मवर्चसादिरूपफलोद्देशेन प्रकृतयागाश्रिता गुणा एव अष्टाकपालादयो विधीयन्त इति तृतीयः—

सिद्धान्ते तु—सम्भवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वात् प्रकृतयागस्यैवेयं सर्वा

---

अष्टाकपालं द्रव्यं वेति ॥ पूर्वयागे—वैश्वानरयागे । ननु वैश्वानरवाक्ये द्वादशकपालस्योत्पत्तिशिष्टस्य श्रुतत्वान्नोत्पन्नशिष्टाष्टाकपालादिद्रव्यविधिसम्भव इत्यत आह—उपक्रमेति ॥ 'पुत्रे जाते' इत्युपक्रम्य 'जात एतां इष्टिं निर्वपति' इत्युपसंहारादिदमेकमेव महावाक्यं, आख्यातभेदस्यावान्तरवाक्यभेदेनोपपत्तेः । तत्रैकं द्वादशकपालपदं वैश्वदेवपदवन्नामधेयं, वैश्वानरपदं तद्धितान्तं देवतावाचकम् । ततश्च वैश्वानरदेवताकपञ्चद्रव्यकयागो विधीयते । देवतासम्बन्धिहविःपञ्चकस्यैकस्मिन् करणत्वेनान्वयः । न च प्राजापत्यन्यायः, बहुवचनाभावात् । अष्टाकपालादिवाक्यानि द्रव्यविशेषसमर्पकाणि । एवं च सर्वेषामुत्पत्तिशिष्टत्वान्नोक्तदोष इति भावः ।

द्वितीयपूर्वपक्षमाह—अथवेति ॥ वाक्यनानात्वं—आख्यातभेदेन महावाक्यभेदः । 'यस्मिन् जाते' इत्यस्य प्रत्येकं सम्बन्धः । 'यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यस्मिन् जात एतामिष्टिं निर्वपति, स पूत एव भवति' इत्यादिरीत्या सार्थवादकवाक्यानेकत्वमित्यर्थः । तद्विधिः—द्वादशकपालविधिः ॥ तत्पदं-द्वादशकपालपदम् । अनुवाद एवेति ॥ एवं च सर्वेषां द्रव्याणामुत्पन्नशिष्टत्वान्नोक्तदोषावकाश इति भावः । केचित्त्वस्मिन्पक्षे तत्तद्वाक्यैस्तत्तद्द्रव्यकयागा एव विधीयन्ते, पुत्रजननिमित्तकानां यागानां निमित्तैक्यादेकः प्रयोग इत्यप्याहुः । नन्वेवं द्वादशकपालवैयर्थ्यापत्तिरित्यतः पक्षन्तरमाह—ब्रह्मवर्चसेति ॥ वैश्वानरयागमाश्रित्याष्टाकपालादिद्रव्याणि ब्रह्मवर्चसादिफलोद्देशेन विधीयन्त इत्यर्थः । अस्मिन् पक्षे वैश्वानरवाक्यमेव यागविधायकम् । द्वादशकपालस्तु संयोगपृथक्त्वन्यायेन दध्यादिवदुभयार्थ इति भावः । सिद्धान्तमाह—सम्भवतीति ॥ एकवाक्यसम्भवे भिन्नवाक्यत्वस्यान्याय्यत्वादुपक्रमोपसंहाराभ्यामेकवाक्यत्वस्य स्पष्टं प्रतीयमानत्वाद्विधेः प्राशस्त्यापेक्षत्वाच्च 'यदष्टाकपालो भवति' इत्यादिः, 'भवति' इत्यन्तस्सर्वोऽप्यर्थवाद इत्यर्थः । न चाख्यातभेदाद्वाक्यभेदः, यस्योभयमित्यादाविवाख्यातभेदसत्त्वेऽपि यत्तच्छब्दबलादे-

---

१. तै. ब्रा. २. २. ५.

स्तुतिः । [1]तदङ्गभूतद्वादशकपालावयवोऽष्टाकपालादिरप्येकैकफलसाधनं तत्र सर्वावयवोपेतद्वादशकपालस्य सर्वफलप्रयोजकत्वे कस्सन्देह इति यागस्तुतिः । अष्टाकपालपदं चाग्नेयाष्टाकपाले शक्तं गौण्या वृत्त्याऽष्टत्वाश्रयकपालश्रपितत्वसादृश्येन द्वादशकपालावयवे गौणम् । तेन च अवयवद्वारा अवयवी द्वादशकपालो लक्ष्यते । तेन लक्ष-

---

कवाक्यत्वसम्भवादिति भावः । ननु द्वादशकपालस्यैव विधेयत्वे अष्टाकपालादेरविधेयत्वात्तत्स्तुतिर्नोपयुज्यत इत्यतः तत्स्तुतीनामपि द्वादशकपालस्तुत्युपयोगित्वमाह—**तदङ्गभूतेति** ॥ वैश्वानरयागाङ्गभूतेत्यर्थः । मुखाद्यवयवस्तुतिद्वारा अवयविशरीरस्तुतिदर्शनादिति भावः ॥ **सर्वफलप्रयोजकत्व इति** ॥ अनेन एकस्मादेव प्रयोगात्फलपञ्चकोत्पत्तिः, न तु दर्शादिवत् प्रयोगभेदेन । न च योगसिद्ध्यधिकरणविरोधः । तस्यावयवजन्यफलपरत्वाभावादिति दर्शितम् । स्तुतिलक्षणाप्रकारमाह—**अष्टाकपालपदमित्यादि** ॥ **गौण्येति** ॥ समासस्य सामर्थ्याश्रितत्वान्निरपेक्षत्वरूपसामर्थ्यस्य चतुस्सापेक्षेष्वष्टस्वभावेन मुख्यप्रवृत्त्यसम्भवादिति भावः । अत्रेदं विचार्यते । अस्या इष्टेर्नैमित्तिकतया निमित्तस्थलेऽकरणे प्रत्यवायबोधनात्प्रत्यवायपरिहारोऽत्र फलं, उतार्थवादिकं पूतत्वादिकमिति । उभयोरुद्देश्यत्वे तूद्देश्यानेकत्वाद्वाक्यभेदः स्पष्टः । न च रात्रिसत्रन्यायेनार्थवादिकपूतत्वादिकमेव फलमुपस्थितत्वान्न प्रत्यवायपरिहार इति वाच्यम्; निमित्तस्वाभाव्येन तस्यापि पदान्तरकल्पनयोपस्थितेरावश्यकत्वात् । अन्यथा तदकरणे प्रत्यवायानापत्तेः । किंचार्थवादिकफलकल्पनेऽपि पूतत्वादिप्रत्येकफलोद्देशेन यागविधानेऽनेकोद्देश्यत्वाद्वाक्यभेदापत्तेरपि न तत्सम्भवः । सर्वेभ्य इतिवदेकपदेनोद्देशाभावात् । न चार्थवादस्य स्तुतिमात्रे तात्पर्यम् । निमित्तशास्त्रप्राप्तपापक्षय एव फलमिति वाच्यम्; स्तुत्युपपादकत्वेनार्थवादिकपूतत्वादीनामपि फलत्वप्रतीतेरावश्यकत्वात् । अन्यथा सर्वार्थवादानां प्राशस्त्यलक्षकतया कुत्रापि शक्यार्थबोधानापत्त्या वाक्यशेषान्निर्णय इति वहुतरसिद्धान्तासिद्ध्यापत्तेः । उच्चैस्त्वादीनां वेदधर्मत्वानापत्तेश्च । तथा च प्रत्यवायपरिहारस्य पूतत्वादीनां च पञ्चानां फलत्वावश्यकतया वाक्यभेदो दुरुद्धर इति चेदत्राहुः; निमित्तप्रयुक्तप्रत्यवायपरिहारस्य पूतत्वादेश्च विजातीयत्वेन एकान्वयेऽपीतरान्वयनैराकाङ्क्ष्याभावात्पूतत्वादीनामीप्सितत्वान्निमित्तस्यानुष्ठापकत्वरूपोद्देश्यत्वान्निमित्तस्थले एतादृशोद्देश्यानेकत्वस्य सर्वत्राङ्गीकार्यत्वान्नोक्तदोषः । अन्यथा यावज्जीववाक्यस्वर्गकामवाक्याभ्यामुद्देश्यानेकत्वप्रयुक्तवाक्यभेदस्य स्पष्टतया तत्राप्यन्यतरपरित्यागापत्तेः । तस्मादुभयमपि फलं विवक्षितमेव । यदपि पूतत्वादीनामनेकेषामुद्देश्यत्वादुद्देशानेकत्वप्रयुक्तो वाक्यभेद इति तदपि न ; पूतत्वादिषु यागजन्यतावच्छेदकवैजात्यकल्पनेन उद्देश्यतावच्छेदकै-

---

१. यदङ्ग० इति पाठान्तरम् ।

णया यागस्तुतिरिति । इदं चाधिकरणं औदुम्बराधिकरणन्यायेन पुनरुक्तमपि शिष्य-शिक्षार्थमुक्तमिति ध्येयम् ॥ १२ ॥

**(१३-१८)—तत्सिद्धि-जाति-सारूप्य-प्रशंसा-भूम-लिङ्गसमवाया इति गुणाश्रयः[1] ॥ २३ ॥**

**तत्सिद्धिः**

'यजमानः प्रस्तरः'[2] इत्यादावपि सामानाधिकरण्यात् एकमितरस्य नामधेयम् । रूढत्वेन तदसम्भवाद्वा जघन्यप्रस्तरपदलक्षितप्रस्तरकार्यस्रुग्धारणोद्देशेन यजमानोऽधिकरणत्वेन विधीयत इति प्राप्ते—

क्यात् । अन्यथा 'सर्वेभ्यः कामेभ्यः' इत्यादावपि वाक्यभेदापत्तेः । तस्य वैजात्यस्य व्यासज्यवृत्तित्वान्नानेकोद्देश्यता । न च तद्वैजात्यकल्पने प्रमाणाभाव इति वाच्यम्; भवतीत्याख्यातेनैकेन सर्वफलसमुच्चयप्रतीतेरेव प्रमाणत्वादिति कृतं विस्तरेण । अधिकरणवैयर्थ्यमाशङ्क्य परिहरति—**शिष्येति** ॥ अयं भावः । रात्रिसत्राधिकरणे अर्थवादत्वाविरोधेन फलसमर्पकत्वांशस्याधिकसाधनवदिह तदुभयाविरोधेनैव संवलितत्वांशस्य ततोऽप्यधिकस्य साधनेनास्य सार्थक्यमिति शिष्यान् बोधयितुमिदमधिकरणमिति । सूत्रार्थस्तु, **पूर्ववन्तः**—प्रापकप्रमाणवन्तोऽग्निहोत्रेऽग्न्यादयः । **अविधानार्थाः** मन्त्रवर्णप्राप्तत्वात् । इह तु **समाम्नाये**—अष्टाकपालादिपदसमूहे । **तत्सामर्थ्यं**—गुणविधानार्थत्वमस्त्विति ॥

**तत्सिद्धि-जाति-सारूप्य-प्रशंसा-भूम-लिङ्गसमवाया इति गुणाश्रयः** ॥ कृत्स्नस्यास्य एकसूत्रत्वेऽपि व्याख्यासौकर्याय सूत्रावयवोपादानं पूर्ववदत्रावयवद्वारा अवयविस्तुत्यसम्भवादेकं इतरस्य नामधेयमित्युत्थानात्सङ्गतिमभिप्रेत्याह—**यजमान इति** ॥ दर्शपूर्णमासयोः श्रूयते 'प्रस्तरमुत्तरं बर्हिषस्सादयति' इति । तत्सन्निधौ श्रूयते 'प्रजा वै बर्हिः, यजमानः प्रस्तरः' इति वेद्यां बर्हिरुपरि प्रस्तरं सादयतीति विध्यर्थः । एवं ज्योतिष्टोमे ताण्डिब्राह्मणेऽपि श्रूयते 'अध्वर्युः प्रस्तरं हरति । यजनमानो वै प्रस्तरः । यजमानमेव तत्स्वर्गं लोकं हरति' इति बहिष्पवमानादिसर्पणकाले अध्वर्युः प्रस्तरं गृहीत्वा गच्छेदिति विध्यर्थः । प्रस्तरो दर्भमुष्टिविशेषः । अत्र ताण्डिवाक्ये दार्शपौर्णमासिकस्यातिदेशप्राप्तप्रस्तरस्य नोदाहरणत्वं सम्भवति । तस्याज्याधारस्रुग्धारणे व्यापृतत्वात् । किन्तु ज्योतिष्टोमे प्रस्तरद्वयं, एकोऽतिदेशेन प्राप्तस्रुग्धारणे विनियुक्तः, इतरं अध्वर्युर्गृहीत्वा बहिष्पवमानाद्यर्थसर्पणं कुर्यात् । सार्थवादकप्रयोगविध्यन्यथानुपपत्त्या तथाकल्पनात् । न चासादिताज्यानां अन्यत्र निधानं कृत्वा प्रस्तरग्रहणं किं न

---

१. गुणाश्रय इत्यन्तस्यैकसूत्रत्वेऽपि मन्त्राधिकरणपूर्वपक्षसूत्रवत् प्रत्येकं प्रथमान्तसूत्रोपन्यासो व्याख्यासौकर्यार्थो न विरुध्यत इति भाट्टकौस्तुभे । २. तै. सं. २. ६. ५.

प्रत्यक्षविध्यश्रवणात् 'प्रस्तरमुत्तरं बर्हिषस्सादयति'[1] इति विध्यन्तरैकवाक्यत्वाच्च तदर्थवादत्वमौदुम्बराधिकरणसिद्धमेव । यजमानपदं तु गौण्या वृत्त्या प्रस्तरस्तावकम् ॥

नन्वध्यारोपितार्थवृत्तित्वं गौणत्वं लोके प्रसिद्धम्, सिंहत्वस्य देवदत्ते आहार्या-

---

स्यादिति वाच्यम्; तस्य मन्त्रेणासादितस्य "घृतवतीशब्दे जुहूपभृतावादत्ते" इति वचनविहितादानं विना ग्रहणासम्भवात्, मन्त्रेणासादितस्याज्यस्य मन्त्रेणैव गृहीतव्यस्य तूष्णीमध्वर्युणा ग्रहणासम्भवात्, स्तोत्रोपाकरणकाले उद्गात्रे दत्तस्य प्रस्तरस्य पुनर्ग्रहणे प्रमाणाभावाच्च । तस्मात्प्रत्यक्षश्रुतिबलेन द्वितीयं प्रस्तरं कल्पयित्वा तस्यैव स्तोत्रोपाकरणे विनियोगस्ताण्डिब्राह्मणोक्तः । तस्य च दार्शपौर्णमासिकप्रस्तरे प्रस्तरशब्दो मुख्यः; ज्यौतिष्टौमिके गौणः । अत एव 'दर्भमुष्ट्या स्तोत्रमुपाकरोति, दर्भाभ्यामुपाकरोति' इत्यादिः सूत्रकाराणां व्यवहार इति केचित् । अन्ये तु ताण्डिवाक्येऽपि दार्शपौर्णमासिकस्यैवातिदेशप्राप्तप्रस्तरस्य विषयत्वं युक्तम् । द्वितीयप्रस्तरं परिकल्प्य तस्य विषयत्वाभ्युपगमे 'हविषो स्कन्दायते नास्य हविरस्कन्नं भवति' इति वाक्यशेषानुपपत्तेः, द्वितीयप्रस्तरस्य हविरासादनार्थत्वाभावेनाध्वर्युः तद्ग्रहणेऽपि हविस्कन्दनशङ्काया अभावान्मन्त्रेणासादितस्याप्याज्यसहितस्य वचनबलाद्ग्रहणे बाधकाभावादुद्गात्रे दत्तस्यापि साज्यस्य प्रस्तरस्य यागार्थं पुनः स्वीकारसम्भवात् । तस्माद्दार्शपौर्णमासिक एव प्रस्तरोऽत्र विषय इति न द्वितीयप्रस्तरकल्पनं युक्तमित्याहुः । अत्र यजमानशब्दः प्रस्तरशब्दो वा, नामधेयं वा, गुणविधिर्वा, अर्थवादो वेति सन्दिह्याह—**एकमिति** ॥ **एकं**—यजमानपदं प्रस्तरपदं वा । **इतरस्य**—प्रस्तरस्य यजमानस्य वा । **नामधेयं**; विनिगमनाविरहादित्यर्थः । यद्वा, **एकं**—मुख्यं, यजमानपदमित्यर्थः । एतेन प्रस्तरपदं न विचार्यमिति ध्वनितम् । पक्षान्तरमाह—**रूढत्वेनेति** ॥ यजमानपदस्य यागजन्यफलभोक्तर्येव निरूढत्वेन प्रस्तरनामत्वासम्भवादित्यर्थः । सङ्ख्यामुष्ट्यधिकरणन्यायेन मुख्यस्य यजमानशब्दस्य लक्षणाया अयोगादाह—**जघन्येति** ॥ यो होता सोऽध्वर्युरितिवत्प्रस्तरशब्देन प्रस्तरकार्यं लक्षयित्वा तदुद्देशेन यजमानो विधीयत इत्यर्थः ॥ **प्रत्यक्षविधीति** ॥ लिङाद्यश्रवणादित्यर्थः । **विध्यन्तरैकवाक्यत्वात्**—विध्यन्तरापेक्षितप्राशस्त्यसमर्पकत्वेन तदेकवाक्यत्वसम्भवात् । अत्र भाष्ये गुणविधिरर्थवादो वेति द्विकोटिकसंशयप्रदर्शनेनाधिकरणं रचितं, तत् औदुम्बराधिकरणेन गतार्थमिति सूचयन्नाह—**औदुम्बरेति** ॥ तथापि नामधेयत्वशङ्कानिराकरणार्थत्वान्न पौनरुक्त्यमिति भावः । अर्थवादत्वमेवोपपादयति—**यजमानपदमिति** ॥ अत्र गौणीवृत्तिर्न सम्भवतीत्याशङ्कते—**नन्विति** ॥ **अध्यारोपितो यो अर्थः तद्वृत्तित्वं** तत्प्रतिपादकत्वं **गौणत्वमित्यर्थः** ।

---

१. तै. सं. २. ६. ५.

रोपात् । न च तद्वेदे सम्भवति । आरोपकपुरुषाभावादिति चेन्न;विनाऽप्यारोपं सिंहशब्दस्य सादृश्यमात्रविवक्षया देवदत्ते काव्यलोकयोः प्रयोगदर्शनात् । अतः स्वशक्यगुणसमानजातीयगुणयोगनिमित्तत्वं गौणत्वम् । सिंहनिष्ठक्रूरत्वसमानजातीयक्रूरत्वयोगाच्च सिंहपदस्य देवदत्ते प्रवृत्तेः 'सिंहो देवदत्तः' इत्यत्र लक्षणसमन्वयः । खपुष्पादौ[1] खसम्बन्धित्वाद्ध्यारोपेण चारोपितं खपुष्पशब्दार्थमङ्गीकृत्य तद्वृत्तिगुणानामसत्त्वादीनां सिद्धान्ते सत्त्वाच्च न 'खपुष्पं भवत्सिद्धान्तः' इत्यादावव्याप्तिः । अतश्चैतादृशगौणत्वस्य वेदेऽप्यस्त्येव सम्भवः । यद्यपि च रूपकादिस्थले 'सौन्दर्यस्य तरङ्गिणी' इत्यादौ आरोपेणापि गौणी दृष्टा । तथापि सादृश्यमात्रेणापि उपमालङ्कारस्थले सानुभूयमाना

सिंहो देवत्तः, मुखं चन्द्र इत्यादौ देवदत्ते, मुखादौ च सिंहत्वस्य चन्द्रत्वादेश्चारोपदर्शनाल्लक्षणसङ्गतिरिति भावः । तत्—एतादृशं गौणत्वम् ॥ आरोपकेति ॥ आहार्यान्यथाख्यातिरारोपः । स च पदात्प्रयोक्त्रा तादृशज्ञानजननेच्छया प्रयुक्तमिति ज्ञानसहितादेव भवति । यथार्थस्मृतिजनकत्वस्यैव पदस्वभावत्वात्, वेदे च प्रयोक्तुरभावान्न तत्सम्भवतीत्याशयः । समाधत्ते—विनेति ॥ सादृश्यमात्रविवक्षया—सादृश्यमात्रतात्पर्येण । तात्पर्यं च न वक्त्रिच्छारूपं; किन्तु शब्दनिष्ठो धर्म इति पूर्वमेवोक्तमिति भावः ॥ प्रयोगदर्शनादिति ॥ ततश्चेच्छां विनापि प्रयोगदर्शनान्नाध्यारोपितार्थवृत्तित्वं गौणत्वं;किन्त्वन्यदेव वक्तव्यम् । तच्चेहापि सम्भवतीत्याशयः। तदेवाह—स्वशक्येति ॥ स्वं-सिंहादिपदम्; तच्छक्यं—सिंहादिः; तस्य गुणः-पराक्रमादिः; तत्सजातीयो गुणः—पराक्रमादिर्देवदत्ते वर्तत इति भवति सिंहपदं देवदत्ते गौणामित्यर्थः । नन्वेवं स्वशक्यगुणसजातीयगुणवत्त्वस्य गौणीत्वे खपुष्पं भवत्सिद्धान्त इति गौणप्रयोगानुपपत्तिः । तत्र स्वशक्यार्थस्याप्रसिद्धतया सुतरां तद्घटितगौण्या अप्रसिद्धत्वादित्यत आह—खपुष्पादावित्यादि ॥ अङ्गीकृत्येति ॥ ततश्चारोपितखपुष्पस्यैव स्वशक्यार्थत्वात् तत्समवेतासत्त्वगुणसजातीयासत्त्वस्य सिद्धान्ते सत्त्वात्तत्रापि गौणत्वोपपत्तिरित्यर्थः । तथा च गौतमसूत्रम्—"बुद्धिसिद्धं तदसत्" इति । अत एवालीकादिशब्दानां शक्तिग्रहो युज्यत इति तदाशयः । तथा योगसूत्रमपि—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति । शब्दश्रवणमात्रेण वस्तुप्रसिद्धिं विना जायमानवृत्तिविशेषो विकल्प इति तदर्थः । खण्डनकारोऽपि "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि" इति । ततश्चारोपितशब्दार्थस्य पूर्वाचार्यसम्मतत्वादुक्तगौणीवृत्तिरुपपन्नेत्याशयः ॥ एतादृशेति ॥ सादृश्यघटितगौणीवृत्तेर्वेदेऽपि वक्तुं शक्यत्वाद्वेदे आरोपकपुरुषाभावेऽपि गौणत्वमुपपद्यत इत्यर्थः । ननु "सौन्दर्यस्य तरङ्गिणी" इत्यादिरूपकस्थले आहार्यारोपदर्शनादारोपापह्नवोऽनुभवविरुद्ध इति शङ्कते—यद्यपीति ॥ तत्रारोपमादायापि गौणीवृत्तेर्निरूपणसम्भवान्नानुभवविरोध इति परिहरति—तथापीति ॥ उपमालङ्कारस्थले—मुखपद्ममित्यादौ । ततश्च सादृश्यारोपोभयघटिता गौणी वृत्तिरिति

१. पुष्पादौ इति पाठान्तरम् ।

**नापह्नोतुं शक्या । अतश्चोभयसाधारण्येन स्वशक्यसमवेतवत्ता गौणी वृत्तिः । समवेतवत्त्वं च क्वचिदारोपितत्वसम्बन्धेन, क्वचिच्च स्वसमानजातीयगुणवत्तासम्बन्धेनेति भेदः)। अत्र सिंहपदेन शक्त्या सिंहोपस्थित्यनन्तरं लक्षणया क्रूरत्वोपस्थितिरिति प्राञ्चः । वस्तुतस्तु—एकसम्बन्धिस्मरणेन अपरसम्बन्धिस्मारकविधयैव तदुपस्थितिः । गौणीज्ञानकार्यतावच्छेदकं च निरुक्तोभयविधसम्बन्धान्यतरसम्बन्धेन स्वशक्यसमवेतधर्मप्रकारकदेवदत्तविशेष्यकशाब्दत्वमिति न क्रूरत्वादीनामशाब्दत्वप्रसङ्गः । न च**

---

नान्यतरपरित्याग इति भावः । नन्वेवं सादृश्यघटितगौणीवृत्तेरारोपघटितगौणीवृत्तेश्च परस्परं व्यभिचार इत्यत आह—**उभयसाधारण्येनेति** ॥ **स्वं**--सिंहादिपदम् ; **तच्छक्यं**-सिंहादि; **तत्समवेतं**--क्रूरत्वादि; तद्वत्त्वमित्यर्थः ॥ **क्वचित्**—रूपकस्थले ; सौन्दर्यस्य तरङ्गिणीत्यादौ ॥ **आरोपितत्वेति** ॥ स्वप्रकारकारोपविशेष्यत्वेत्यर्थः ॥ **क्वचित्**—सिंहो देवदत्त इत्यादौ । ततश्चारोपितत्वस्वसजातीयगुणवत्त्वान्यतरसम्बन्धेन स्वशक्यसमवेतवती गौणीवृत्तिरिति न काप्यनुपपत्तिरिति भावः । **अत्र**—सिंहो देवदत्त इत्यादौ ॥ **लक्षणयेति** ॥ यद्यपि युगपद्वृत्तिद्वयविरोधान्नायं पक्षो युक्तः । तथापि गङ्गायां घोषमत्स्यौ स्त इति वृद्धव्यवहाराद्युगपद्वृत्तिद्वयविरोधो न दोषः । अन्यथा गवादिपदानां जातौ शक्तिः, व्यक्तौ लक्षणेति पक्षस्यासङ्गतत्वापत्तेः । अत एव "लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति वार्तिकमपि सङ्गच्छते । न च लक्ष्यमाणस्य धर्मिणो गुणैर्योगादिति समासेन न कर्मधारय इति कैश्चिदुक्तम् । कर्मधारयसम्भवे तत्पुरुषस्यान्याय्यत्वात् । अन्यथा निषादस्थपत्यधिकरणविरोधापत्तेः । तस्मात्कर्मधारय एवायमित्यभिप्रायः । नन्वेवं विरम्य व्यापारापत्तिरित्यस्वरसादाह—**वस्तुतस्त्विति** ॥ शक्तिलक्षणावत् सिंहपदेनैव स्वशक्यसमवेतक्रौर्यसदृशक्रौर्यवत्त्वसम्बन्धेन देवदत्तोपस्थितिसम्भवान्न विरम्य व्यापार इत्याशयः । नन्वेवं क्रूरत्वादीनां सम्बन्धघटकत्वे क्रूरत्वप्रकारकशाब्दबोधो न स्यादित्यत आह—**गौणीज्ञानेति** ॥ **निरुक्तेति** ॥ आरोपितत्वस्वसजातीयगुणवत्त्वान्यतरसम्बन्धेन स्वशक्यसमवेतधर्मप्रकारकदेवदत्तविशेष्यकशाब्दत्वावच्छिन्नं प्रति निरुक्तगौणीज्ञानस्य कारणत्वाभ्युपगमेन प्रकारतया क्रूरत्वादीनां भानान्न शाब्दत्वानुपपत्तिरित्यर्थः । नन्वेवं गङ्गायां घोष इत्यादावपि ईदृशरीत्या प्रवाहसम्बन्धप्रकारकतीरविशेष्यकशाब्दं प्रति लक्षणाज्ञानस्य कारणत्वापत्त्या प्रवाहसम्बन्धस्यापि शाब्दत्वापत्तिः । एवं शक्तिस्थलेऽपीति । सर्वत्र वृत्तेश्शाब्दत्वापत्त्या गोपदशक्तिमती गौरित्यादिबोधः स्यात् । वृत्तिज्ञानस्य पदजन्यपदार्थोपस्थितावेवोपयोग इति सर्वतन्त्रसिद्धान्तो विरुध्येतेति चेन्न ; वृत्तिज्ञानस्य पदजन्यपदार्थोपस्थितिमात्रोपयोगिताया प्रचीनोक्तायाश्शक्तिलक्षणाविषयत्वाङ्गीकारेण गौण्यामप्रवृत्तेः । गौणीस्थले संसर्गतया उपस्थितिमात्रेण प्रकारत्वसम्भव इत्यभिप्रायात् । नैयायिकश्शङ्कते—**न चेति** ॥ शक्यसम्बन्धरूपलक्षणयैवोपपत्तौ वृत्त्यन्तरकल्पनमनु-

गौण्या लक्षणातो न भेदः। स्वशक्यवृत्तिगुणानामेव यत्र सम्बन्धत्वेन रूपेण बोधः तत्र लक्षणा, क्रूरत्वत्वादिना बोधे तु गौणीति तयोर्भेदात्। ते च गुणाष्षड्विधाः— क्वचित्तत्सिद्धिः तत्कार्यकारित्वम्। यथा यजमानपदे। यजमानो यथा स्वकार्यकर्ता तथा प्रस्तरोऽपीति। एवं च गौणीगर्भलक्षणया प्रस्तरस्तुतिः। एवमन्येऽपि पञ्च गुणा अग्रिमसूत्रैर्द्रष्टव्याः॥ १३॥

जातिः

'अग्निर्वै ब्राह्मणः'[1] इत्यत्र पूर्ववदेवाग्निशब्दो ब्राह्मणे गौणः, द्वयोरप्यग्निब्राह्मणयोरेकब्रह्ममुखप्रभवत्वात्[2]। अग्निजननसमानजातीयजननमेवात्र गुणः॥ १४॥

---

चितमिति भावः। परिहरति—**स्वशक्येति**॥ **सम्बन्धत्वेनेति**॥ सांसर्गिकविषयतयेत्यर्थः। प्रवाहसम्बन्धस्य संसर्गतयैव भानात्तत्र लक्षणा। गौणीस्थले क्रूरत्वादीनां प्रकारत्वेन भानाङ्गीकारात्क्रूरत्वत्वादिना भाने गौणीवृत्तिरिति तयोर्भेद इत्यर्थः॥ **ते च**—सादृश्यघटकाः॥ **क्वचित्**—यजमानः प्रस्तर इत्यादौ। तत्सिद्धिशब्दार्थमाह—**तत्कार्यकारित्वमिति**॥ यजमानगतस्वकार्यकारित्वसदृशस्वकार्यस्रुग्धारणादिकर्तृत्वगुण इत्यर्थः। तदुपपादयति—**यथेति**॥ **गौणीगर्भलक्षणयेति**॥ गौण्या गुणोपस्थितिद्वारा प्रस्तरप्राशस्त्यं लक्षणया बोध्यत इत्यर्थः॥ **सूत्रैः**—सूत्रावयवैः। अत्र व्युत्पादितगौण्या एवार्थवादाधिकरणे प्रतिपादनान्न पुनरुक्तत्वमपीति द्रष्टव्यम्॥

**जातिः**॥ जननमित्यर्थः। 'अग्निर्वै ब्राह्मणः' इत्यत्राग्निशब्दो ब्राह्मणे गौण्या प्रयुज्यते। गौणीनिमित्तं च जननघटितम्, अग्निजननदेशजनितत्वाद्ब्राह्मणस्य। 'मुखादिन्द्रश्चाग्निश्च' इति, 'ब्राह्मणोऽस्य मुखमासीत्' इति च श्रुतिभ्यामग्निब्राह्मणयोरीश्वरमुखजातत्वप्रतिपादनादग्निजननसदृशजननत्वनिमित्तकोऽग्निशब्दो ब्राह्मणे प्रयुज्यत इत्याह—**अग्निर्वै इत्यादि**॥ अत्र देशस्यैकत्वाद्देशसाजात्यं न विवक्षितम्। किन्तु जननयोरेव सादृश्यम् तथेत्याह—**अग्निजननसमानजातीयेति**॥ अत्र केचित्। श्राद्धे पाणिहोमेऽग्निकार्यकारित्वसत्त्वात् 'यजमानः प्रस्तरः' इतिवत्तत्सिद्धिसूत्रेणैव गौणत्वमित्याहुः, तन्न; 'अग्निमुखा वै देवाः, पाणिमुखाः पितरः' इति ब्राह्मणानुसारेण विप्रपाणेर्होमाधारत्वश्रवणेनाग्नित्वेन पाणिग्रहणाभावात्। अग्नित्वेन ग्रहणेऽपि ब्राह्मणस्याग्निजननसदृशजनननिमित्तस्यापि सम्भवेन जातिसूत्रेण ग्रहणस्य युक्तत्वाच्च॥

---

१. तै. सं ५. २. ८.

२. 'प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवतान्वसृज्यत, गायत्री छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणां, अजः पशूनाम्' (तै. सं. ७. १. १.) इत्यादिकमिह द्रष्टव्यम्।

## सारूप्यम्

'आदित्यो यूपः'[1] इत्यादौ तु सारूप्यं गौणीनिमित्तम् । न च सर्वत्र तदेव निमित्तं, कोऽत्र विशेषः ? चक्षुर्ग्राह्यं तेजस्वित्वाद्यत्र निमित्तमिति प्राञ्चः । वस्तुतस्तु, अन्यत्र शक्यनिष्ठगुणस्यैव स्वसमानजातीयगुणवत्तासंसर्गेण प्रकारत्वान्निमित्तता, न तु सारूप्यस्य तस्य संसर्गत्वात् । इह तु शक्यनिष्ठगुणसजातीयगुणवत्त्वरूपस्य सारूप्यस्यैव समवायादिसंसर्गेण प्रकारत्वात्तदेव निमित्तमिति विशेषः ॥ १५ ॥

**सारूप्यम्** ॥ सारूप्यं समानरूपवत्त्वम् । 'आदित्यो यूपः' इत्यत्रादित्यगततेजस्वित्वसमानतेजस्वित्वमञ्जनाद्यलङ्करणादिसंस्कारैर्यूपे दृश्यत इत्यादित्यशब्दो यूपे गौण इत्यर्थः । ननु सादृश्यस्य सर्वत्र गौणीवृत्तौ सत्त्वाद्विशिष्योपादानं व्यर्थमिति शङ्कते—**न चेति** ॥ परिहरति—**चक्षुरिति** ॥ उक्तसंस्कारैर्यूपस्योज्ज्वलत्वदर्शनादित्यर्थः । अयं भावः । 'यजमानः प्रस्तरः' इत्यादिषु सादृश्यसत्त्वेऽपि प्रस्तरादिप्रत्यक्षदशायां यजमानादिसादृश्यं न चक्षुषा प्रतीयते । तादृशवाक्यप्रयोगकाल एव सादृश्यस्य शाब्दबोधविषयत्वात् । 'आदित्यो यूपः' इत्यादौ तु यूपप्रत्यक्षकाल एव यूपगतोज्ज्वलत्वस्य प्रतीयमानत्वाद्विशिष्य सूत्रेण पृथगुपन्यस्तमिति चक्षुर्ग्राह्यतेजस्वित्वस्य सर्वत्र वक्तुं शक्यत्वात् अयं पक्षोऽस्वरसग्रस्त इत्यभिप्रायेण पक्षान्तरमाह—**वस्तुतस्त्विति** ॥ **अन्यत्र**—सिंहो देवदत्त इत्यादौ । **शक्यनिष्ठगुणस्यैव**—सिंहनिष्ठक्रूरत्वादेरेव; **प्रकारत्वात्**, देवदत्तादौ प्रकारतया भानाङ्गीकारात्; **तस्य**-सारूप्यस्य; **संसर्गत्वात्**—संसर्गतया भानाङ्गीकारात् । **इह तु**—'आदित्यो यूपः' इत्यादौ तु । **तदेव**—शक्यगुणसजातीयगुणवत्त्वमेव; **निमित्तं**—गौणीनिमित्तम्, **विशेषः**—इतरस्माद्भेद इत्यर्थः । अयमभिप्रायः । आरोपितत्वस्वसमानजातीयगुणवत्त्वसमवायादिसम्बन्धान्यतमसम्बन्धेन स्वशक्यसमवेतगुणसजातीयगुणान्यतरप्रकारकदेवदत्तादिविशेष्यकशाब्दत्वावच्छिन्नं प्रति एतादृशगौणीज्ञानस्य कारणत्वं स्वीक्रियते । एवं च सारूप्यस्थले स्वशक्यनिष्ठगुणसजातीयगुणप्रकारकस्य तदतिरिक्तस्थले स्वशक्यनिष्ठगुणप्रकारकस्य च शाब्दबोधस्य जननेऽपि न क्षतिः । निरुक्तकार्यतावच्छेदकस्य सर्वत्र सत्त्वात् । एतेन सारूप्यस्थले स्वशक्यनिष्ठगुणसजातीयगुणवत्त्वस्य समवायादिसम्बन्धेनाङ्गीकारे तस्य गौणीनिमित्तत्वं न स्यात् । निरुक्तोभयसम्बन्धेन शक्यनिष्ठगुणवत्त्वस्यैव गौणीनिमित्ततायाः पूर्वमुक्तत्वात् । न चेष्टापत्तिः; गौणीनिमित्तप्रतिपादकसूत्रमध्यपाठासङ्गतेः । एवं शक्यनिष्ठगुणसजातीयगुणप्रकारकबोधाभ्युपगमे तस्य पूर्वोक्तकार्यतावच्छेदकानाक्रान्तत्वात् स्वतन्त्रकार्यकारणभावकल्पनावश्यकत्वेन गौरवापत्तिश्चेति निरस्तम् । शक्यगुणसजातीयगुणान्यतरत्वस्यैव गौणीनिमित्ततायाः

1. तै. ब्रा. २. १. ५.

### प्रशंसा

'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः'' इत्यत्र अजादीनां तत्र तत्र विहितत्वात् पशुकार्ये प्रतिषेधस्य पर्युदासस्य वा अनुपपत्तेरर्थवादत्वम् । अपशुशब्दो घटादौ मुख्यो गवाश्वगतप्राशस्त्याभावरूपगुणयोगादजादौ गौणस्सन् लक्षणया गवाश्वस्तुत्यर्थः । प्राचां मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतप्राशस्त्यं लक्षयित्वा नञा तदभावरूपो गुण उपस्थाप्यत इति विशेषः । सर्वथा प्रशंसा गौणीनिमित्तघटिकेति सिद्धम् ॥ १६ ॥

---

मूलाभिप्रायविषयत्वेन सूत्रमध्यपाठोपपत्तेः; उक्तरीत्या एककार्यकारणभावोपपत्तेश्च । न च तथापि साजात्यादीनां प्रकारतावच्छेदककोटौ निवेशाधिक्याद्गौरवमिति वाच्यम्; तस्य पृथक्सूत्रप्रणयनसार्थक्यायाङ्गीकार्यत्वात् । समवायादिसम्बन्धस्तूभयत्रापि समानः । आरोपितत्वस्वसजातीयगुणवत्त्वान्यतरसंसर्गेणेत्यत्रापि गुणवत्तायाः समवायादिसम्बन्धेनैव निवेशनीयत्वादिति । वस्तुतस्तु, चक्षुर्ग्राह्यतेजस्वित्वरूपविशेषमादाय सूत्रसार्थक्योपपत्तेः । गौणीज्ञानकार्यतावच्छेदककोटौ अन्यतरसम्बन्धनिवेशेनैवोपपत्तेः । समवायादिसम्बन्धस्य शक्यगुणसजातीयगुणवत्त्वस्य चानिवेशेन लाघवाच्च प्राचीनमतमेव सम्यक् । न च समवायादिसम्बन्धनिवेशो मतद्वयेऽप्यविशिष्ट इति वाच्यम्; अस्मिन् मते एकधैव तन्निवेशेन लाघवानपायात् । त्वत्पक्षे गुणवत्ताघटकतया स्वातन्त्र्येण च द्विधा तन्निवेशापत्त्या गौरवस्यापरिहार्यत्वादिति ध्येयम् ॥

**प्रशंसा** ॥ 'अग्नौ पञ्चशीर्षोपधाने पुरस्तात्प्रतीचीनमश्वस्योपदधाति, पश्चात्प्रतीचीनमृषभस्य' इति विध्योः शेषः । 'अपशवो वा' इत्यर्थवादः । गवाश्वातिरिक्ताः पशवो अजमेषादयः अपशव एवेत्यन्वयः ॥ **तत्र**-'अजोऽग्नीषोमीयः, सारस्वतीं मेषीं' इत्यादौ ॥ **विहितत्वादिति** ॥ पशुकार्ये विहितानां तेषां पशुकार्ये यागादौ अजादिना यागं न कुर्यादिति प्रतिषेधस्य, अजादिभिन्नेन यागं कुर्यादिति पर्युदासस्य वा असम्भवादर्थवादत्वमेव वक्तव्यमित्यर्थः । अत्र न पशुरपशुरिति व्युत्पत्त्या घटादयोऽपशुशब्दवाच्याः । ततश्च घटादिनिष्ठगवाश्वगतप्राशस्त्याभावसदृशप्राशस्त्याभावरूपगुणस्याजादौ सत्त्वाद्गौण्याऽपशुशब्देनाजादयो अभिधीयन्ते । न च गवाश्वगतप्राशस्त्याभावस्यैकत्वाद्भेदघटितसादृश्यानुपपत्तिरिति वाच्यम्; अधिकरणभेदेनाभावभेदाङ्गीकारादभावस्याधिकरणात्मकत्वाङ्गीकारेण दोषाभावादित्याशयेनाह-**अपशुशब्द इत्यादिना** ॥ **स्तुत्यर्थ इति** ॥ अपशुशब्दलक्षणायामपि 'अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोअश्वाः' इति महावाक्यस्यैव प्राशस्त्यलक्षकत्वान्नैकस्यैव लक्षणाप्रसक्तिरिति

---

१. तै. सं. ५. २. ९.

## भूमा

'सृष्टीरुपदधाति'[1] इत्यत्र विध्यन्तरैकवाक्यत्वाभावात् प्रत्यक्षविधिश्रवणाच्च विधित्वम् । तत्र चोपधानमेवेष्टकासंस्कारार्थत्वेन विधीयते । यद्यपि चेष्टकानां चयनाङ्गत्वान्यथानुपपत्त्यैव उपधानं प्राप्येत; तथापि ततः पूर्वमेव प्रत्यक्षविधिना विधीयते । तत्फलं च प्रत्येकोपधानसिद्धिः चयनसमानकर्तृकत्वसिद्धिश्च । अन्यथा समु-

---

तत्र पक्षभेदमाह—**प्राचामिति** ॥ सूत्रे प्रशंसादयः प्राशस्त्याभावपरा इति सूचयन्नाह—**सर्वथेति** ॥ मतद्वयेऽपीत्यर्थः ॥

**भूमा** ॥ 'बहोर्लोपो भू च बहोः' इतीमनिचि इकारलोपः । बहोर्भावो भूमा, बाहुल्यमित्यर्थः । पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिमभिप्रेत्याह—**सृष्टीरिति** ॥ अग्नौ 'सृष्टीरुपदधाति' इत्युपक्रम्य 'एकया स्तुवते, प्रजा अधीयन्त, प्रजापतिरधिपतिरासीत्, तिसृभिस्तुवन्ते, ब्रह्मासृजत' इत्यादिना सप्तदशमन्त्रानाम्नाय 'यत्सप्तदशेष्टका उपदधाति' इत्युपसंहृतम् । तत्र प्रथमचतुर्दशान्तिमा मन्त्रा न सृजिधातुघटिताः । अन्ये सर्वेऽपि असृज्यन्तेति सृष्टिलिङ्गकाः । ते सप्तदशापि निरूढलक्षणया सृष्टिशब्देनोच्यन्ते । सृष्टिशब्दो हि 'तद्वानासामुपधानो मन्त्रः' इतीष्टकासु 'लुङ् च मतोः' इति सूत्रेण सृष्टिमानासामिष्टकानामुपधानः । 'उपधानार्थो मन्त्रः' इत्यस्मिन्नर्थे यत्प्रत्यये मतुप्प्रत्ययलोपे च सति छान्दसत्वेन यत्प्रत्ययलोपान्निष्पन्नः । सृजशब्दवन्मन्त्रोपधेयेष्टकावचनः । उपधानं तु स्थापनमिति स्थितिः । तत्रार्थवादत्वं निराकरोति—**विध्यन्तरेति** ॥ विध्यन्तरशेषत्वे हि 'विधिना त्वेकवाक्यत्वात्' इति न्यायेनार्थवादत्वं स्यात् । तत्र तदभावान्नार्थवादत्वमित्यर्थः । अर्थवादत्वं निराकृत्य विधित्वमुपपादयति—**प्रत्यक्षेति** ॥ 'यथासृष्टमेवावरुद्धः' इत्यर्थवादस्यैतच्छेपत्वेनाम्नानबलेन विधित्वस्यावश्यकतया लेट्त्वनिश्चयादिति भावः ॥ **इष्टकासंस्कारार्थत्वेनेति** ॥ इष्टकोद्देशेन तत्संस्कारकतया उपधानं विधीयत इत्यर्थः । ननु 'इष्टकाभिरग्निं चिनुते' इति वचनेनेष्टकानां चयनाङ्गत्वबोधनेनोपधानं विना तदनुपपत्तेरर्थापत्त्यैवोपधानस्य प्राप्तिस्सम्भवतीति तद्विधिर्व्यर्थ इति शङ्कते—**यद्यपीत्यादिना** ॥ समाधत्ते—**तथापीति** ॥ चयनाङ्गत्वान्यथानुपपत्त्या उपधानप्राप्तावपि अन्यथानुपपत्त्यपेक्षया वचनस्य शीघ्रप्रवृत्तत्वेनान्यथानुपपत्तेःपूर्वप्रवृत्तेन वचनेनोपधानं विधीयत इत्यर्थः । ननु 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेन प्रकारान्तरेण सिध्यत्यर्थे कथं शास्त्रप्रवृत्तिरित्यत आह—**तत्फलं चेति** ॥ ततश्च पूर्वप्रवृत्तेः फलसत्त्वात्प्रकारान्तरेण प्राप्त्यङ्गीकारे तत्फलासम्भवाद्वचनस्य पूर्वप्रवृत्त्या उपधानविधिस्सम्भवतीत्यर्थः । फलमेवाह—**प्रत्येकेत्यादिना** ॥ अन्यथानुपपत्त्या तत्प्राप्तौ फला-

---

१. तै. सं. ५. ३. ४.

दितोपधानमपि कदाचित्प्राप्नुयात् । आर्थिकत्वाच्च चयनभिन्नकर्तृकत्वमपि । सति त्वस्मिन्निष्टकासंस्कारद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्तिन्यायात् अङ्गप्रधानयोरेककर्तृकत्वाच्च फलद्वयसिद्धिः । सृष्टिपदं तु लिङ्गप्रकरणप्राप्तसृष्टयसृष्टिमन्त्रमात्रस्य गौण्यानुवाद इति भाष्यकारः ॥

वार्तिककारस्तु नोपधानमात्रविधिः, तथा सति 'प्राणभृत उपदधाति'[1] इत्या-

सिद्धिमुपपादयति—**अन्यथेति** ॥ चयनस्यैव विहितत्वेन उपधानस्यार्थिकतया बह्वीनामिष्टकानां द्वाभ्यां पाणिभ्यां ग्रहणसम्भवेन समुदितोपधानेऽपि चयनसिद्धेरित्यर्थः ॥ **चयनभिन्नेति** ॥ चेतृभिन्नेत्यर्थः । येन केनचित्पुरुषेणोपधानेऽपि चयनसिद्धेरिति भावः । वचनेन विधाने समुदितोपधानाध्वर्युभिन्नकर्तृकत्वे न सिध्यत इत्याह—**सति त्विति** ॥ इष्टकासंस्कारकोपधानविधौ इष्टकानां संस्कार्यत्वेन प्रधानतया प्रतिप्रधानं गुणावृत्तेर्न्यायादुपधानस्याध्वर्युशाखाविहितत्वेनाङ्गप्रधानयोरेककर्तृकत्वेन चाध्वर्युकर्तृकत्वावश्यम्भावाच्च फलद्वयसिद्धिरित्यर्थः । इष्टकासंस्कारेत्यनेन प्रतिप्रधानं गुणावृत्तिरुपपादिता । चयनाङ्गतेत्यनेन एककर्तृकत्वसिद्धिरुपपादिता । प्रधानदेशकालकर्तृकत्वमङ्गानामिति सिद्धान्तादित्याहुः । ननु चयनस्याध्वर्युकर्तृकत्वादेवोपधानेऽपि तत्सिद्धिः किं न स्यादिति चेन्न; अन्यसहायेन सन्धुक्षणादौ कृतेऽपि चैत्रेण पाकः कृत इति व्यवहारदर्शनेनान्यसहायेनोपधाने कृतेऽपि चयनस्याध्वर्युकर्तृकत्वाविरोध इति सहायान्तरव्यावृत्त्यर्थं तद्विधेरावश्यकत्वात् । न चानेनैव न्यायेन 'व्युष्टीरुपदधाति, चित्रिणीरुपदधाति, वज्रिणीरुपदधाति' इत्यादिष्वपि उपधानमात्रविधिर्वक्तव्य इति एकेनैवोपधानविधिना प्रत्येकोपधानाध्वर्युकर्तृकत्वयोस्सिद्धावितरवैयर्थ्यमिति वाच्यम् ; एकस्मिन् वाक्ये इष्टकासामान्योद्देशेनोपधानविधावेवं स्यात् । इह तत्तद्वाक्येषु सृष्टयादितत्तदिष्टकोद्देशेनोपधानविधानेन तत्तदिष्टकोपधानस्योक्तफलद्वयसिद्धावपि तदितरेष्टकोपधानस्योक्तफलद्वयासिद्धेः सर्ववाक्यानां विधायकत्वस्यावश्यकत्वात् । सृष्टयादिशब्दानामिष्टकाविशेषमात्रवाचित्वादिति भावः । कथं तर्हि भाष्येऽर्थवादत्वकथनमित्यत आह—**सृष्टिपदं त्विति** ॥ सृष्टिपदमेव छत्रिन्यायेन लिङ्गप्रकरणाभ्यां प्राप्तसृष्टयसृष्टिमन्त्रगणस्य गौण्यानुवादकं; न तु कृत्स्नं वाक्यम् । उपधानविध्यङ्गीकारादिति भाष्याशयः । एवं यथाभाष्यमधिकरणं वर्णयित्वा वार्तिककारीयविचारं दर्शयति—**वार्तिककारस्त्विति** ॥ 'सृष्टीरुपदधाति' इत्यत्र नोपधानमात्रविधानं युक्तम् । तथा सति 'प्राणभृत उपदधाति' इत्यादिष्वपि प्राणभृदादिशब्दानां अनयैव रीत्यानुवादत्वेनोपधानमात्रस्य विधेयतया तस्यैवैकेनैव विधिनोपपत्तेरनेकोपधानविधिवैयर्थ्यापत्तिः । न चाभ्यासात् कर्मभेदोऽस्त्विति वाच्यम् ; प्रकरणादिष्टकामात्रोपदेशकत्वप्रतीत्या, तस्य च

१. तै. सं. ५. २. १०.

ह्यनेकोपधानविधिवैयर्थ्यापत्तेः । अतो मन्त्रमात्रमुपधानानुवादेन मन्त्रविशिष्टं वोपधानमिष्टकासंस्कारार्थत्वेन विधीयते । तत्रोपधानविधिफलं तु पूर्ववत् । मन्त्रविधिफलं तूपधाने तन्नियमः । मन्त्रा हीष्टकामात्रप्रकाशकास्तद्ग्रहणादिष्वपि प्राप्तिसम्भवान्नोपधाने नियमेन प्राप्नुवन्ति । अतस्तन्नियमः ग्रहणादिपरिसङ्ख्यैव वा फलम् । मध्यमचितिसम्बन्धश्च । 'यां वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यात्' इति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिसम्बन्धस्य विधानात् । अन्यथा तत्तच्चित्यवान्तरप्रकरणपाठरहितानां मन्त्राणां चयनमहाप्रकरणेन

सर्वत्राविशेषेण कर्मविशेषानवधारणात् । एतेन तत्तदिष्टकोद्देशेनोपधानविध्यङ्गीकारेण सर्वविधीनां सार्थक्यमिति निरस्तम् । तथाङ्गीकारे प्रयोजनाभावादुक्तफलद्वयासिद्धेरिष्टकामात्रोद्देशेनोपधानविधावपि सर्वत्र सम्भवाच्चेति भावः ॥ **मन्त्रमात्रमिति** ॥ चयनाङ्गत्वान्यथानुपपत्तिप्राप्तोपधानानुवादेन मन्त्रमात्रविधिरित्यर्थः । मन्त्रस्याध्वर्यवत्वेऽपि न तत्करणकोपधानस्याध्वर्यवत्वलाभः, याज्यावाद्भिन्नकर्तृकत्वस्यापि सम्भवादित्यस्वरसादाह—**मन्त्रविशिष्टं वेति** ॥ सर्वत्र गुणविशिष्टस्यैव विधानेन क्रयविधिष्विव गुणात्कर्मभेदः । चित्रिण्यादिविधीनां त्वनारभ्याधीतत्वेन संस्कार्येष्टकासम्बन्धेन प्रकरणान्तरादपि कर्मभेदः । अत एव च नैकेन विधिना निर्वाहः । मन्त्रान्तरकरणकोपधानेषु अध्वर्युकर्तृकत्वसिद्ध्यर्थं सर्वविधीनामावश्यकत्वात् । न चैकेन सृष्टिपदेनेष्टकामन्त्रयोरुद्देश्यविधेयांशयोस्समर्पणादेकप्रसरताभङ्ग इति वाच्यम् ; मन्त्रविधेरिष्टकोद्देश्यकत्वाभावादुपधानस्यैवोद्देश्यत्वेनैकप्रसरताभङ्गाप्रसक्तेः । अत एवोपधानाङ्गत्वमेव मन्त्राणां नेष्टकाङ्गत्वम् । न चोपधाने मन्त्रविधाने सर्वेष्टकासु सर्वमन्त्रनिवेशापत्तिरिति वाच्यम् ; 'मन्त्रैरुपदधाति' इति विधानमकृत्वा 'सृष्टीरुपदधाति' इत्यादिविधिभेदकरणेन प्रतिनियतनिर्देशादेव व्यवस्थासिद्धेः । 'यत्ससदशेष्टका उपदधाति' इत्युपसंहारादपि तत्सिद्धेः । नन्वर्थप्राप्तत्वादुपधानस्य न विधिसम्भवः । अर्थप्राप्त्यपेक्षया पूर्वप्रवृत्त्या उपधानविधाने प्रयोजनाभाव इत्यत आह—**उपधानविधिफलमिति** ॥ **पूर्ववदिति** ॥ प्रत्येकोपधानसिद्धिश्चयनसमानकर्तृकत्वसिद्धिश्च भाष्यकारपक्ष इव फलं द्रष्टव्यमित्यर्थः । मन्त्रविधिफलमाह—**मन्त्रेति** ॥ तदुपपादयति—**मन्त्रा हीत्यादिना** ॥ नन्विष्टकानां ग्रहणादिष्वपि स्मारकमात्राकाङ्क्षाया अविशेषाद्ग्रहणोद्यमनादिषु सम्भाव्यमानशेषिषु समुच्चित्य मन्त्रप्राप्त्या पक्षप्राप्त्यभावान्न नियमविधिसम्भव इत्यत आह—**परिसङ्ख्यैव वेति** ॥ **मध्यमेति** ॥ तृतीयप्रस्तारे इत्यर्थः । तदेवोपपादयति—**यां वै काञ्चनेत्यादिना** ॥ लिङ्गप्रकरणकल्प्यश्रुतिविनियुक्तेष्टकानिरासाय **प्रत्यक्षेति** । कल्पितश्रुतेर्विधित्वेऽपि ब्राह्मणत्वं नास्तीति 'अनाम्नातेष्वमन्त्रत्वं' इत्यत्र वक्ष्यमाणत्वात् स्पष्टार्थं तदित्यपि केचित् । उपधाने मन्त्रविधानाभावे तत्फलासिद्धिमुपपादयति—**अन्यथेति** ॥ सर्वचितिषु निवेशापत्तेरित्यन्वयः ।

सर्वचितिषु अन्तिमायामेव वा निवेशापत्तेः। अतो मध्यमचितिसम्बन्धार्थं मन्त्रविधिः। इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं च इष्टकावाचिप्रत्यक्षब्राह्मणपठितपदविधेयमन्त्रकत्वम्। सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रोपधेयेष्टकापरम्। तत्र च विशेषणांशस्य विधेयत्वात्तत्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः। इतिकरणविनियुक्तलोकम्पृणमन्त्रस्यापि मध्यमचितिमात्रसम्बन्धापत्तेरिष्टकावाचीति पदविशेषणम्। अतश्च मन्त्रविशिष्टोपधानमत्र विधीयते। सृष्टिपदं परं गौण्या वृत्त्या सप्तदशसङ्ख्याकसृष्ट्यसृष्टिमन्त्रपरम्, 'यत्सप्तदशेष्टका उपदधाति' इत्यर्थवादानुसारात्। तत्र चतुर्दश सृष्टिमन्त्राः; त्रयोऽसृष्टिमन्त्रा इति सृष्टिबाहुल्यं गुणो गौणीवृत्तिनिमित्तम्॥ १७॥

लिङ्गसमवायः

'प्राणभृत उपदधाति'[1] इत्यादौ अल्पत्वं निमित्तम्। शेषं पूर्ववत्। एवं षड्गौणीवृत्तिप्रकाराः॥ १८॥

---

'अन्ते तु बादरायणः' इति न्यायेनाह—**अन्तिमायामेव वेति**॥ ननु 'इष्टकाभिरग्निं चिनुते' इति ब्राह्मणेन सर्वासामिष्टकानामङ्गत्वेन विधानादितरप्रस्तारेष्विष्टकादौर्लभ्यं स्यादित्यत आह—**इष्टकानामिति**॥ इष्टकाविशेषवाचकं यद्ब्राह्मणवाक्यगतं पदं सृष्ट्यादिपदरूपं तद्विधेयमन्त्रप्रकाश्यत्वमित्यर्थः। सृष्ट्यादिपदानां सृजिपदघटितमन्त्रोपधेयेष्टकाविशेषवाचिनां प्राप्ताप्राप्तविवेकेन मन्त्रविधिपरत्वादिष्टकाभिरित्यस्य चातथात्वान्न दोष इति भावः। ननु 'यदेवास्योनं यच्छिद्रं तदेतया पूरयति, लोकं पृण, छिद्रं पृणेति' इति ब्राह्मणे इति करणविनियुक्तानां प्रत्यक्षब्राह्मणवत्त्वान्मध्यमचितिसम्बन्धः स्यादित्यत आह—**इतिकरणेति**॥ इतिशब्दस्येष्टकावाचित्वाभावादिष्टकावाचित्वविशेषणेनैव तद्व्यावृत्तिरित्याशयः। यत्त्वत्र सृष्टीनां चतुर्थचितावेव प्राणभृतां प्रथमादिप्रस्तारत्रये याज्ञिकानुष्ठानं तदेतत्सिद्धान्तविरुद्धत्वादयुक्तमिति ध्येयम्। प्राञ्चस्तु 'भूमा' इत्यनेन सृष्टिगतबाहुल्यगुणयोगात्सृष्ट्यसृष्टिसमुदाये सृष्टिशब्दस्य गौणीवृत्तिरिति प्रतिपाद्यत इत्याहुः। तन्मते समुदायस्यैव करणत्वात्सर्वमन्त्रपाठोत्तरमुपधानापत्तिः। अतस्समुदायिष्वेव गौणीत्याह—**सृष्टिपदमिति**॥ समुदायसमुदायिनोरभेदात्तन्मतमपि युक्तमित्यन्ये॥ **गौण्येति**॥ सृष्टिपदार्थनिष्ठबहुत्वसदृशबहुत्वस्य तत्र सत्त्वादिति भावः। सप्तदशसङ्ख्याकत्वस्योपष्टम्भकमाह—**यत्सप्तदशेति**॥ सृष्टिबाहुल्यमुपपादयति—**तत्रेति**॥

**लिङ्गसमवायः**॥ 'प्राणभृत उपदधाति' इत्यत्र बाहुल्याभावाद्गौणी न स्यादित्युत्थानात्सङ्गतिरित्यभिप्रायेणाह—**प्राणभृत इति**॥ प्राणम्—प्राणशब्दम्। बिभ्रतीति प्राणभृतो

---

१. तै. सं. ५. २. १०.

## (१९)—सन्दिग्धे तु वाक्यशेषात् ॥ २४ ॥

'अक्ताश्शर्करा उपदधाति'[1] इत्यत्र अक्ता इत्यनेन अविशेषात् यत्किञ्चिदञ्जन-

---

मन्त्रास्तदुपधेयेष्टकाश्च ; न पुनः कूर्मस्येव प्राणिनामुपधानमिति सङ्कर्षे वक्ष्यते । तत्र प्रथमप्रस्तारे पञ्चाशन्मन्त्राः । तेषु 'प्राणो भौवायनः' इति प्राणशब्दघटितास्त्रय एव । द्वितीये पञ्चसु तृतीये दशसु एक एव 'प्राणं मे पाहि' इति प्राणशब्दघटित इति विवेकः । आदिना 'अज्यानीरुपदधाति' इत्यादिसङ्ग्रहः । 'शतायुधाय' इत्यादिपञ्चसु मन्त्रेषु द्वितीयस्यैव 'तेषां यो अज्यानिं' इति अज्यानि पदघटितत्वात् ॥ **अल्पत्वमिति** ॥ विवक्षितबाहुल्यभिन्नमित्यर्थः । विवक्षितभूयस्त्वाभाव इति यावत् । तेन छत्र्यच्छत्रिणोस्समसङ्ख्यत्वेऽपि न तत्पार्थक्येन गौणीवृत्तिनिमित्तम् । लिङ्गशब्देनोभयोरपि सूत्रकारेण सङ्गृहीतत्वाद्वार्तिकस्थाल्पशब्दस्य राणके विवक्षितभूयस्त्वानपेक्षप्रतीतिविषयप्रदर्शनार्थत्वेन साम्यसङ्ग्राहकतया व्याख्यातत्वात् । एतेन प्राणभृतामल्पत्वादप्राणभृतां बहुत्वात्सादृश्यानुपपत्त्या गौण्यनुपपत्तिरिति निरस्तम् । प्रकृते अल्पत्वस्य विवक्षितभूयस्त्वाभावरूपतया प्राणभृच्छब्दार्थनिष्ठविवक्षितभूयस्त्वाभावसदृशा-तादृशाभाववत्त्वस्य प्राणभृदप्राणभृन्मन्त्रसमुदायाश्रये सत्त्वेन गौणीवृत्त्युपपत्तेरधिकरणभेदे-नाभावभेदघटितसादृश्यसम्भवात् । पेटिकार्थमुपसंहरति—**एवमिति** ॥ ननु षडेव गौणी-प्रकारा इत्ययुक्तं, 'स्तेनं मनः' इत्यादौ प्रच्छन्नत्वेन गौणताया आकरे वर्णनादिति चेन्न; गुण-विधिविचारप्रसक्तगौणीवृत्तेरेवात्र षट्प्रकारत्वोक्तेः । निमित्तान्तरोपलक्षणत्वाद्वा अस्य न दोषः । यद्वा 'स्तेनं मनः' इत्यादिष्वपि कथञ्चिदुक्तरीत्या गौणत्वोपपादनसम्भवान्नानुपपत्तिरिति भावः । सूत्रार्थस्तु, **तत्सिद्ध्यादय एते, गुणस्य**--गौणवृत्तेः, **आश्रयाः**—निमित्तानीति ॥

**सन्दिग्धे तु वाक्यशेषात्** ॥ विध्यर्थवादमन्त्रनामधेयात्मकानां वेदावयवानां विधा-यकत्वस्तावकत्वस्मारकत्वधात्वर्थपरिच्छेदकत्वलक्षणैः प्रकारैः प्रामाण्ये प्रतिपादितेऽर्थवादा-त्मकवेदावयवैकदेशस्य कस्यचिद्वाक्यशेषस्य स्तावकत्वातिरेकेणापि प्रकारेण प्रामाण्यव्युत्पादनं प्राप्तावसरमिति सङ्गतिमभिप्रेत्याह--**अक्ता इति** ॥ काठकाग्नौ श्रुत इति शेषः । घृताक्तशर्करा-साध्योपधानेनेष्टं भावयेदिति वाक्यार्थः । **शर्कराः**--क्षुद्रपाषाणविशेषाः । 'तेजो वै घृतं' इत्यादिवाक्यशेषस्य सन्दिग्धार्थनिर्णये प्रामाण्यं न वेति सन्देहे पूर्वपक्षमाह—**अक्ता इत्य-नेनेति** ॥ अञ्जनकर्मीभूतशर्कराणामुपधानाङ्गत्वस्य विधिवाक्यावगतत्वाद्द्रवद्रव्यस्यैवाञ्जन-साधनतया 'निर्विशेषं न सामान्यम्' इति न्यायेन अक्ता इत्यनेनाञ्जनसाधनद्रव्यसामान्याक्षेपस्यैव घृततैलवसाद्यन्यतमविशेषनिर्णायकत्वान्नोपसंहारस्थार्थवादानुसारेण निर्णयो युक्त इत्यर्थः । यत्किञ्चिदित्यनेन सर्वेषां घृतादीनामाक्षेपप्राप्तावपि 'एकार्थास्तु विकल्पेरन्' इति न्यायेन

---

१. तै. ब्रा. ३. १२. ५.

**साधनद्रव्यस्य विधिना निर्णीतत्वात् उपसंहारस्थेन 'तेजो वै घृतम्'[1] इत्यर्थवादेन सङ्कोचानुपपत्तेर्नार्थवादस्य सन्दिग्धार्थनिर्णये प्रामाण्यमिति प्राप्ते—**

**विधेरविशेषप्रवृत्तत्वेनैव घृतमात्रग्रहणेनाप्युपपत्तेरितराक्षेपकत्वे प्रमाणाभावात्**

विकल्प इति सूचितम्। ननु 'आदित्यः प्रायणीयः पयसि चरुः' इत्यत्रादित्यपदप्रकृतिसन्देहे 'अदितिमोदनेन' इति वाक्यशेषेण निर्णयदर्शनादत्रापि तथा निर्णयोऽस्त्वित्यत आह—**निर्णीतत्वादिति** ॥ 'गां दद्यात्, गावो दक्षिणा' इत्यादौ कृष्णश्वेतकपिलादिविशेषानादरेण विकल्पेन ग्रहणवदिहापि घृतादीनां विकल्पेन ग्रहणान्न वाक्यशेषापेक्षा। 'आदित्यः प्रायणीयः' इत्यादौ विधेः सन्दिग्धत्वाद्वाक्यशेषापेक्षेति भावः। ननु 'उच्चैः ऋचा क्रियते' इत्यादौ ऋगादिपदानामेकैकमन्त्रपरत्वेन निर्णीतानामपि वेदोपक्रमेणेवान्यथानयनमस्त्वित्यत आह—**उपसंहारस्थेनेति** ॥ अत्र वाक्यशेषस्योपक्रमस्थत्वाभावान्न तन्न्यायप्रवृत्तिरिति भावः। ननु उपक्रमोपसंहाराभावेऽपि 'अग्नीषोमीयं पशुमालभेत' इत्यत्र विधिस्थपशुशब्दस्य 'छागस्य वपाया मेदसः' इति मन्त्रवर्णाच्छागपरत्वमिति षष्ठान्त्ये सिद्धान्तितम्। तथा 'पुरोडाशं चतुर्धा करोति' इति श्रुतपुरोडाशशब्दस्य 'आग्नेयं चतुर्धा करोति' इति वाक्येनाग्नेयपुरोडाशपरत्वं दृष्टम्, तद्वदत्राप्यर्थवादेन निर्णयोऽस्त्वित्यत आह—**अर्थवादेनेति** ॥ विधेर्हि विध्यन्तरेण मन्त्रेण च वाक्यैकवाक्यतयान्वयाद्विधेर्मन्त्राणां च स्वातन्त्र्येणार्थप्रकाशकत्वात् अन्यशेषत्वाभावाच्च विध्यन्तरेण मन्त्रवर्णेन च निर्णयो युक्तः। प्रकृते त्वर्थवादस्य पदैकवाक्यत्वाद्विधिपरतन्त्रत्वादन्यशेषत्वाच्च न प्रधानभूतार्थवादानुरोधित्वमस्त्वित्यत आह—**सङ्कोचेति** ॥ यत्र गुणानुसरणेऽपि प्रधानस्य न सङ्कोचरूपो बाधः तत्रैव कांस्यभोजिन्यायः। प्रकृते त्वर्थवादानुसरणे विध्यवगततैलादिसाधनत्वबाधापत्तेः नार्थवादेन निर्णयो युक्तः। अत एव 'इन्द्राय वसुमते' इति मन्त्रलिङ्गस्येन्द्रमात्रविषयत्वेऽपि न सोमस्येन्द्रप्रदानमात्रविषयत्वमिति तृतीये वक्ष्यत इति भावः। विधिवाक्यस्य निर्णीतार्थकत्वे तद्विरुद्धार्थवादानुसारेण विधेर्नान्यथात्वम्। अर्थवादस्य प्राशस्त्यमात्रप्रतिपादकतयापि सार्थक्यसम्भवात्। इह तु विधेस्सन्दिग्धार्थकतया प्राशस्त्यप्रतीत्यर्थमर्थवादापेक्षासत्त्वेनार्थवादेन प्राशस्त्यस्येव घृतादिविषयत्वेन विधिपर्यवसानस्य बोधनात्सम्भवत्येवार्थवादेन निर्णयः। न च सामान्याक्षेपस्येव यावद्विशेषनिश्चायकत्वं पूर्वमुक्तमिति विकल्पेन यत्किञ्चिद्ग्रहणोपपत्तेर्न सन्दिग्धार्थको विधिरिति वाच्यम्; आक्षेपेण यावद्विशेषनिश्चयेऽपि विशेषेषु कतमेनाञ्जनमिति सन्देहस्य जागरूकत्वाद्विकल्पस्याष्टदोषदुष्टत्वेनायुक्तत्वाच्चेत्याशयेन सिद्धान्तमाह—**विधेरिति** ॥ **अविशेषेति** ॥ सामान्यबोधकविधेः 'तेजो वै घृतं' इत्यर्थवादोपस्थितविशेषग्रहणेनाप्युपपत्तेरर्थवादेनैव निर्णयो युक्तः। अन्यथा

१. तै. सं. ३. १२. ५.

उपक्रमस्याविरोधेनैवोपपत्तौ उपसंहारस्थस्याप्यर्थवादस्योपलक्षणत्वे प्रमाणाभावाद्विध्यर्थवादयोरेकवाक्यत्वेनैकविषयकत्वस्यावश्यकत्वाच्च युक्तं वाक्यशेषस्य सन्दिग्धार्थनिर्णयेऽपि प्रामाण्यमिति घृतेनैवाञ्जनम् ॥ १९ ॥

## (२०)—अर्थाद्वा कल्पनैकदेशत्वात् ॥ २५ ॥

'स्रुवेणावद्यति, स्वधितिनावद्यति, हस्तेनावद्यति' इत्यादौ विधेरवदेयद्रव्यविषये सन्दिग्धस्य सामर्थ्यान्निर्णयः—स्रुवेण द्रवद्रव्यमेव आज्यादि, स्वधितिना

---

रात्रिसत्रन्यायविरोधः स्यादिति भावः। अत एव विधेर्नेतराक्षेपकत्वप्रयुक्तगौरवमपीत्याह—**इतरेति** ॥ ननूपक्रमस्यासञ्जातविरोधित्वेन प्राबल्यादुपक्रमे च द्रव्यसामान्यस्यैव प्रतीतेः तदनुरोधेनोपसंहारस्थार्थवादस्योपलक्षणत्वमस्त्वित्यत आह—**उपक्रमस्येति** ॥ यद्युपक्रमोपसंहारयोर्विरोधस्तदा उपक्रमस्य प्रबलतया तदनुसारेणोपसंहारस्य नयनं स्यात्। प्रकृते तु परस्परविरोधाभावान्न वाक्यशेषस्यान्यथा नयनमिति भावः। अविरोधमेव दृढयति—**विध्यर्थवादयोरिति** ॥ 'विधिना त्वेकवाक्यत्वात्' इति न्यायादिति भावः। 'विधिस्तुत्योस्सदा वृत्तिस्समानविषयेष्यते। तस्मादेकत्र सन्दिग्धमितरेणावधार्यते ॥' इति वार्तिकमनुसृत्योपसंहरति—**युक्तमिति** ॥ सिद्धान्ते प्रयोजनमाह—**घृतेनैवेति** ॥ पूर्वपक्षे तु येनकेनचिदञ्जनमिति द्रष्टव्यम्। सूत्रार्थस्तु, तुरवधारणे। **सन्दिग्धे** विधौ विधिवाक्ये, **वाक्यशेषात्**—विधिवाक्यशेषात्, अर्थवादान्निर्णयः। उत्तरसूत्रात्कल्पनैकदेशत्वादित्यपकर्षेणान्वयः। विधिवाक्यप्राप्तसामान्यस्यैकदेशत्वाद्विशेषपर्यवसानात्सामान्येन व्यवहारासम्भवादिति ॥

**अर्थाद्वा कल्पनैकदेशत्वात्** ॥ 'स्रुवेणावद्यति' इत्यादौ वाक्यशेषाभावात्सन्दिग्धार्थनिर्णयो न स्यदित्युत्थानात्सङ्गतिमभिप्रेत्याह—**स्रुवेणेति** ॥ **अवदेयद्रव्यविषये**—द्रवद्रव्यादिविषये ॥ **सन्दिग्धस्येति** ॥ अञ्जने करणविशेषस्येवावदाने द्रवादिकर्मविशेषस्य विधावश्रवणाद्वाक्यशेषादेरप्यभावाच्च सन्दिग्धो विधिरित्यर्थः। अत्र सामर्थ्यस्य सन्दिग्धार्थनिर्णये प्रामाण्यं न वेति सन्देहे स्रुवेणेत्यादिषु द्रव्यविशेषाश्रवणादनियमेन स्रुवादीनामपि पुरोडाशाद्यवदानाङ्गत्वप्राप्तेर्न सामर्थ्यस्य सन्दिग्धार्थनिर्णये प्रामाण्यमिति पूर्वपक्षस्य मन्दत्वात्तत्रानादरः। सिद्धान्तमाह—**सामर्थ्यादिति** ॥ वस्तुशक्तिमहिम्नेत्यर्थः। ततश्चाशक्यार्थविधानासम्भवादवश्यं विधेः सहकारितया सामर्थ्यमपेक्षितमिति सामर्थ्यादेव निर्णयो युक्तः। न च स्रुवे तीक्ष्णपुष्करधाराया स्वधितेः कोटीरादिकरणेन च कठिनद्रवाद्यवदानयोग्यतासम्भवोऽस्त्येवेति वाच्यम्; 'अनो ददाति, वासो ददाति' इत्यादौ लोकसिद्धानोवासःप्रभृतीनां ग्रहणमित्यनोवासाधिकरणन्यायेन वेदसिद्धस्रुवादीनामेव ग्रहणोपपत्तौ तीक्ष्णाग्रतादिकल्पने प्रमाणाभावादिति भावः। अस्य लिङ्गस्य श्रुतितोऽपि प्रबलत्वादवदानसामान्याभिधायिन्या अपि

मांसादि, हस्तेन संहतं पुरोडाशादि । अतश्च सामर्थ्यसहकृतावद्यतिपदेनैव लक्षणया द्रवद्रव्याद्यवदानस्योद्देश्यत्वात् तदनुवादेन स्रुवादिविधौ न किञ्चिद्बाधकम् । एवं 'अञ्जलिना सक्तून् जुहोति'[1] इत्यादावपि न सम्पुटाकारोऽञ्जलिः; अपि तु व्याकोचाकार एव ॥

तदेवं विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि । अतः परं भेदादिना तत्स्वरूपं निरूप्यते ॥ २० ॥

इति खण्डदेवविरचितायां भाट्टदीपिकायां प्रथमस्याध्यायस्य
चतुर्थः पादः । अध्यायश्च समाप्तः ॥

---

श्रुतेर्भङ्गेन लक्षणया विशेषपरत्वमित्यभिप्रायेणाह—**अतश्चेति** ॥ पिधेहीत्यादौ द्वारादिपदस्येव द्रवादिपदस्याध्याहार एव लोकसिद्धत्वेन न्याय्य इत्यपि वदन्ति । उद्देश्यस्येव विधेयस्यापि क्वचित्सामर्थ्यान्निर्णय इत्याशयेनाह—**एवमिति** ॥ नमस्काराञ्जलौ पुष्पाञ्जलौ च प्रसिद्धयोरञ्जलिभेदयोरन्यतरस्य यथायोग्यं ग्रहणमित्यर्थः । 'आख्यातानामर्थं ब्रुवतां शक्तिस्सहकारिणी' इति न्यायादिति भावः । अत्र याज्ञिकाः । अवदाने प्रकृतिविकारभावस्य नियामकत्वमिच्छन्तः वपायाः सान्नाय्यप्रकृतिकत्वात्सान्नाय्यवत्स्रुवेणावदानमित्याहुः, तच्चिन्त्यम्; एतदधिकरणानुसारेण सामर्थ्यस्यैव नियामकत्वात्प्रकृतिविकारभावस्य नियामकत्वे आग्नेयपुरोडाशप्रकृतिकयवाग्वादौ हस्तेनावदानापत्तेः । 'पृषातकमञ्जलिना जुहोति' इत्यादौ वचनादञ्जलिना पृषातकहोमविधानान्न तद्विरोधोऽपि । अत एव भगवान् बोधायनः 'स्रुवेण वपां समवलुम्पन्' इति हस्तावदानस्यैव स्रुवसहायतामाह । अन्यथा स्रुवेण वपामवदायेत्येवावक्ष्यत् । न चेत्थमवोचत् । अधिकं हिरण्यकेशिसूत्रव्याख्याने प्रतिपादितमस्माभिः । वृत्तवर्तिष्यमाणयोः सङ्गतिं प्रदर्शयन्नध्यायार्थमुपसंहरति—**तदेवमिति** ॥ सूत्रार्थस्तु, **अर्थात्**—सामर्थ्यात् । **कल्पना**—कल्पितं पदमपि । **वेदैकदेशत्वात्**—वेदावयवतुल्यत्वात्प्रामाण्यमेवेति शिवम् ।

इति श्रीमच्छोलदेशाग्रपूज्यविद्वत्समाजविराजमानकवेरजोत्तुङ्गतरङ्गशीकरशीतल-
शहराजेन्द्रपुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्लेषकवि-
सार्वभौमवाञ्छेश्वरसूरिवरप्रपौत्रश्रीमाधवसूरिवरपौत्रश्रीनृसिंह-
सूरिवरात्मजाश्वलायनसूत्रहोशनकर्णाटजातीयवाञ्छे-
श्वरयज्वनः कृतिषु भाट्टदीपिकाव्याख्याने
भाट्टचिन्तामण्यभिधाने प्रथमस्या-
ध्यायस्य चतुर्थः पादः ।
॥ अध्यायश्च सम्पूर्णः ॥

---

१. तै. सं. ३. ३. ८.

# अथ द्वितीयोऽध्यायः

(१--२)--भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥ सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥ येषामुत्पत्तौ स्वप्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि तस्मात्तेभ्यः प्रतीयेत ॥ ३ ॥ आश्रितत्वात्प्रयोगस्य ॥ ४ ॥

एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते । यद्यपि च तदप्येतावत्प्रमाणप्रतिपाद्यत्वेन रूपेण बुद्धमेव, तथाऽप्येकत्वानेकत्वादिरूपेणाबुद्धत्वादिह तेन रूपेण निरूप्यते । अत्र च शब्दान्तरादिषट्प्रमाणकभावनाभेद एवाध्यायार्थः ।

---

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ प्रमाणाधीनत्वात् प्रमेयसिद्धेरवशिष्टाध्यायानां प्रमाणलक्षणेनावसरसङ्गत्या प्रमाणलक्षणोत्तरत्वमित्यभिसन्धायाह-- अधुनेति ॥ तत्स्वरूपं--धर्माधर्मात्मकप्रमेयस्वरूपम् । ननु प्रमाणनिरूपणेनैव निरूपितप्रमाणप्रतिपाद्यत्वेन रूपेण धर्मस्वरूपस्यापि ज्ञातत्वात् पुनस्तन्निरूपणं व्यर्थमिति शङ्कते--- यद्यपीति ॥ प्रतिपाद्यत्वेन रूपेणेति ॥ विध्यादिप्रमाणप्रतिपाद्यतावच्छेदकेनाग्निहोत्रत्वाष्टकात्वादिनेत्यर्थः । यथाश्रुते प्रमाणप्रतिपाद्यत्वेन ज्ञातस्य प्रमेयत्वादिना ज्ञातवदनुष्ठानोपयोगाभावे स्वरूपनिरूपणवैयर्थ्यशङ्कोपपादकत्वासम्भवात् । एकत्वानेकत्वादीति ॥ आदिना शेषत्वप्रयुक्तत्वादिपरिग्रहः । ननु दधिपयःप्रभृतिद्रव्याणां धर्मरूपाणां भेदस्य प्रत्यक्षसिद्धत्वात् तद्भेदविचारो न कार्य इत्यत आह--शब्दान्तरादिषडिति ॥ शब्दान्तर-अभ्यास-सङ्ख्या-संज्ञा-गुण-प्रकरणान्तर-षट्प्रमाणकभावनाभेद एवाध्यायप्रतिपाद्य इत्यर्थः । ततश्च न दध्यादिद्रव्यभेदोऽत्र व्युत्पाद्यते । किन्तु क्रियारूपभावनाया एव धर्मपदवाच्यतायास्सिद्धान्तसिद्धत्वात्, तद्भेद एव । एवं च तादृशभावनाभेदस्य लौकिकप्रमाणागम्यत्वान्न वैयर्थ्यमिति भावः । ननु विभिन्नधातुरूपशब्दान्तरादिधात्वर्थभेदकत्वस्यैवोचितत्वान्न भावनाभेदकत्वं युक्तमित्यत आह---धात्वर्थेति ॥ करणभाव्ययोर्भेदो हि भावनाभेदकः; नैकतरस्य, दध्यादिकरणमात्रभेदेऽपि अग्निहोत्रभाव्यकभावनाया एकत्वात् । एवं सार्वकाम्यवाक्ये भाव्यभेदेऽपि पादशुद्ध्युभयभाव्यकायाः पादाधिकरणकवस्त्राभिघातकरणकभावनाया इव दर्शादिकरणकभावनानामभेदात् । तत्र च भाव्यभेदस्य वचनमात्रगम्यत्वेऽपि करणभेदे शब्दान्तरादेः

धात्वर्थभेदस्तु तत्सिद्धयर्थः क्वाचित्को निरूप्यते, अपूर्वभेदोऽपि फलत्वेनेति न तावध्यायार्थौ ॥

फलीभूतापूर्वभेदोऽप्यपूर्वसाधनभेदाधीन इति तत्साधनजिज्ञासायां स्वर्गादिसाधनस्यैवावान्तरव्यापाररूपापूर्वं प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वं उत उपपदार्थस्य सोमादेरपीति चिन्तायां—प्राथमिकभावनान्वयस्य तावत् सिद्धान्तिनोऽपि सम्मतत्वात् औत्तरकालिकः फलान्वयोऽपि सर्वेषामेवेति प्राप्ते—

---

प्रवृत्तेस्तद्भेदद्वारा भावनाभेदोऽवगन्तव्यः। वस्तुतस्तु, न धात्वर्थभेदमात्रं शब्दान्तरत्वं; किन्तु विभिन्नधात्वर्थकत्वमेव। तथैव वक्ष्यमाणत्वात्, तस्य च साक्षादेव भावनाभेदकत्वं सम्भवतीति न काचिदनुपपत्तिः। अपूर्वभेदस्तु भावनाभेदानुनिष्पादित्वात् फलत्वेनैव पर्यवस्यतीति न भावनाभेदसाधकः, अशाब्दत्वादित्याह—**अपूर्वभेदोऽपीति** ॥ षष्ठे अभ्युदितेष्ट्यादौ भावनाभेदनिरूपणमत्रत्यस्यैव प्रसङ्गसङ्गत्येति नानुपपत्तिः। तथा प्रसक्तानुप्रसक्तः प्रथमः पाद इति शब्दान्तराधिकरणे मूल एव स्पष्टम्। अन्ये त्वस्मिन्नपि पादे करणभाव्यवेदमन्त्रवाक्यविभागस्यैव क्रियमाणत्वेन धर्मप्रमित्युपयोगिभेदमात्रमध्यायार्थ इत्याहुः। पादार्थस्तु प्राधान्येनोपोद्घातनिरूपणमेव। इतरच्च प्रासङ्गिकमित्यप्याहुः। प्रतिपदाधिकरणमवतारयति—**फलीभूतेति** ॥ अपूर्वस्यावान्तरव्यापाररूपतया व्यापारिभेदं विना व्यापारात्मकापूर्वभेदासम्भवादिति भावः। **तत्साधनजिज्ञासायां**—अपूर्वसाधनजिज्ञासायाम्। 'व्रीहीनवहन्ति' 'दध्ना जुहोति' इत्यादौ धातूपपदार्थयोरेव करणत्वं प्राप्ताप्राप्तविवेकेनेति निर्णयो युक्तः। धातूपपदार्थयोर्द्वयोरप्यप्राप्तौ विनिगमनाविरहाद्द्वयोरपि करणत्वं सम्भवतीति फलान्वयोऽप्युभयोरित्याशयेनाह—**सोमादेरपीति** ॥ सर्वेषां फलकरणत्वमिति पूर्वपक्षमुपपादयति—**प्राथमिकेति** ॥ कारकाणां क्रिययैवान्वयस्य व्युत्पत्तिसिद्धत्वात् धात्वर्थकरणत्वस्य सोमादिकरणत्वस्य च फलभाव्यकभावनान्वयात् द्वितीयबोधे सर्वेषामेव फलान्वयो युक्तः। न च धात्वर्थकरणत्वस्य लाक्षणिकतया सोमादिकरणत्वस्य तृतीयाश्रुत्युपात्ततया तस्यैव प्राबल्यमिति वाच्यम्; तथापि धात्वर्थस्य समानपदोपात्तत्वेन शीघ्रोपस्थितिकतया सोमादेश्च पदान्तरोपात्तत्वेन मन्थरतया धात्वर्थप्राबल्याङ्गीकारस्यावश्यकत्वेन उभयोस्तुल्यबलत्वस्यैव युक्तत्वादिति भावः ॥ **सर्वेषामेवेति** ॥ एकपदोपात्तत्वेन दर्शादेरिव एकवाक्योपात्तत्वेन सोमयागयोस्साहित्यस्याप्युपादेयगतत्वेन विवक्षितत्वात्। समुच्चितयोस्साधनत्वासम्भवेऽपि साधनयोस्समुच्चय इति सर्वेषां करणत्वमिति पूर्वपक्ष इति भावः। 'हिरण्यमात्रेयाय ददाति' इत्यादौ तृतीयाया उपपदेष्वश्रवणेन समबलत्वस्य सार्वत्रिकत्वाभावात् प्राथमिकबोधे यागसोमयोर्विजातीयाकाङ्क्षाभ्यां करणत्वेनात्वेनान्वयस्य विषयतया उभयोरपि पार्ष्ठिकफलान्वये

सर्वेषां करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गात् एकस्यैव फलनिरूपिता करणता, अन्येषां तु दृष्टविधयैव करणार्थत्वम् । तदत्र धात्वर्थस्यैव फलकरणत्वे सोमादीनां तज्जनकत्वेनैव दृष्टार्थता । सोमादीनां करणत्वे च धात्वर्थस्याश्रयविधयैव दृष्टार्थतेति नानेकादृष्टकल्पना ॥ १ ॥

एवं स्थिते विशेषजिज्ञासायां सोमादेरेव फलकरणत्वं, तस्य सिद्धत्वेन योग्यतारूपलिङ्गात् । तृतीयायाः करणत्वे शक्तत्वेन कारकश्रुतेरेकपदोपात्तत्वरूपपदश्रुत्यपेक्षया

---

प्रथमावगतकरणवैजात्यविरोधापत्तेः व्रीहियवयोरिव सजातीयाकाङ्क्षया प्राथमिकबोधस्वीकारे द्वयोरपि फलोद्देशेन विधानाद्विधेयानेकत्वप्रयुक्तवाक्यभेदापत्तेरेकवाक्योपादानस्य वक्तुमशक्यतया न साधनसमुच्चयसम्भव इत्यभिप्रायेण सिद्धान्तमाह— **सर्वेषामिति** ॥ 'समर्थः पदविधिः' इति सुप्तिङ्विध्योः पदसम्बन्धिविधित्वेन समर्थाश्रिततया निरपेक्षसाधनताबोधकताया आवश्यकतया फलपरमापूर्वयोरेकफलत्वेन फलादिनिरूपितनिरपेक्षसाधनताया द्वयोर्वक्तुमशक्यत्वेन स्वस्वोत्पत्त्यपूर्वं प्रत्येव वक्तव्यतयाऽपूर्वद्वयमावश्यकमेव । इन्द्रियकामवाक्ये होमगुणाभ्यां विजातीयापूर्वद्वयदर्शनादित्याशयेनाह—**अनेकेति** ॥ न च करणताया नैरपेक्ष्येऽपि करणानां सापेक्षत्वेन क्रमिकत्वाभावात् दधिपयोयागयोरिवापूर्वमेकमेव कल्प्यमिति वाच्यम् ; प्रमाणवलेनापूर्वभेदसिद्धौ क्रियायौगपद्यस्याप्रयोजकतया तावन्मात्रेण तदैक्यस्य क्वाप्यसम्भवात् । दधिपयोयागस्थलेऽप्येकयागविस्मरणे विस्मृतस्यैव पुनरनुष्ठानं, न द्वयोरिति व्यवस्थयाऽपूर्वभेदस्यावश्यकत्वात् । अपूर्वैक्ये द्वयोरप्यावृत्त्यापत्तेः । गङ्गागोदावरीजलयोर्मेलनेन स्नाने सुवर्णरजतयोर्मिलितयोर्दाने चापूर्वभेदस्य दर्शनात् । तत्तद्विधिभेदेनापूर्वभेदस्य क्लृप्तत्वादपूर्वैकत्वे प्रत्येककीर्तननाश्यत्वानुपपत्तेश्चेति ध्येयम् ॥ **आश्रयविधयेति** ॥ प्रकरणात्तदलाभेऽपि विशेषणविधिकल्पनेन तल्लाभसम्भवादिति भावः ॥

भावार्थाधिकरणमाह—**एवं स्थित इति** ॥ अनेन प्रतिपदाधिकरणसिद्धान्तासत्त्वे भावार्थाधिकरणविचार एव न युज्यते । सर्वेषां करणत्वसम्भवेन किं धात्वर्थः करणं, उत उपपदार्थ इति विचारासङ्गतेः । अत एकस्यैव करणत्वमिति सिद्धान्तानुसारि भावार्थाधिकरणमिति सूचितम् । अत एव सूत्राभावेऽपि भाष्यकारेण उत्सूत्रमेवाधिककरणं कृतं लोकवेदाधिकरणवदिति द्रष्टव्यम् । पूर्वपक्षमाह—**सोमादेरेवेति** ॥ साध्यस्य फलस्य स्वसिद्धये सिद्धपदार्थापेक्षैव जायते, न साध्यान्तरापेक्षा । साध्यान्तरस्य सिद्धपदार्थसम्बन्धेन सिद्धतासम्पादने तु तद्धेतोरेवेति न्यायेन तस्यैव फलकरणतासम्भवात् किमन्तर्गडुना साध्यान्तरेणेत्यभिसन्धायाह—**सिद्धत्वेनेति** ॥ ननु प्राथमिकबोधे पदश्रुत्या करणत्वेनान्वितस्य यागादेर्द्वितीयबोधेऽपि करणत्वेनान्वयस्यावश्यं वाच्यत्वात् साध्यस्यापि

वलीयस्त्वाच्च । फलान्वये पदश्रुतेरप्यभावाच्च । अत एव यागादिर्धात्वर्थस्सोमाद्यर्थ एव । न च तदर्थत्वेऽदृष्टकल्पना । अग्निहोत्रहोमेन दधिनिष्ठकरणतासम्पादनवत् यागेनादृष्टमन्तरेणैव सोमनिष्ठकरणतासम्पादनेन यागस्य सोमाङ्गत्वोपपत्तिरिति प्राप्ते—

पदश्रुत्या यागस्यैव फलकरणत्वम् । यद्यपि च फलान्वये न सा । तथापि प्राथमिकभावनान्वये यस्य यत् प्रमाणं तद्गतबलवत्त्वस्य तस्यामवस्थायामकिञ्चित्करत्वेऽपि पार्ष्ठिकफलान्वये तस्य निर्णायकत्वात् । अतश्च प्राथमिकभावनान्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका । न च तस्याः कारकश्रुत्यपेक्षया दौर्बल्यम् । लाक्षणिकत्वेऽपि यागकरणत्वस्य सोमकरणत्वान्वयात्प्राक् भावनायामन्वितत्वेन तदन्वयस्य

---

यागादेस्सिद्धत्वसम्पादनमावश्यकमित्यत आह—**तृतीयाया इति** ॥ तथा च न पदश्रुत्या धात्वर्थस्य करणत्वम्; कारकश्रुत्यपेक्षया पदश्रुतेर्दुर्बलत्वात्, तृतीयार्थकरणत्वस्य शक्यत्वात्, पदश्रुत्यवगतकरणत्वस्य लाक्षणिकत्वात्; किन्तु सोमादेरेवेति भावः । ननु लाक्षणिकत्वेऽपि पदश्रुत्यवगतकरणत्वस्य उपपदार्थकरणत्वान्वयात्पूर्वमन्वयेन प्राथम्यकृतप्राबल्यसत्त्वात् यागादेरेव करणत्वं युक्तमित्यत आह—**फलान्वय इति** ॥ भावनान्वये पदश्रुतिसत्त्वेऽपि भिन्नपदोपात्तफलान्वये तदभावादित्यर्थः । ततश्च बोधद्वयेऽपि धात्वर्थस्यासिद्धत्वेन प्रतीयमानत्वेन सोमस्यैव योग्यतया भावनायां फले च करणत्वेनान्वये धात्वर्थस्य भाव्यत्वेनान्वयस्य भाव्यद्वयापत्त्याऽसम्भवात् षष्ठाद्ये भाव्यत्वनिरासाच्च इतिकर्तव्यतयैव भावनान्वयस्सिध्यतीत्याह—**अत एवेति** ॥ सोमस्यैव करणत्वेनान्वयस्य युक्तत्वादेवेत्यर्थः । ननु यागादेस्सोमाद्यर्थत्वस्य दृष्टद्वाराऽसम्भवेनादृष्टद्वारैव वक्तव्यतयाऽदृष्टकल्पनापत्तिरिति शङ्कते—**न चेति** ॥ परिहरति—**अग्निहोत्रेति** ॥ **सोमनिष्ठेति** ॥ आश्रयीभवनरूपदृष्टद्वारेणेत्यर्थः । भावनाया अंशत्रयाकाङ्क्षायामपि प्रथमं भाव्याकाङ्क्षा, अनन्तरं करणाकाङ्क्षा, तदनन्तरं इतिकर्तव्यताकाङ्क्षा इति क्रमसत्त्वात्, प्रथमबोधेऽपि यागसोमान्वययोः खले कपोतानां युगपत्पतताममपि ईषत्पौर्वापर्यवत् पौर्वापर्यावश्यम्भावात्, याग एव फलभाव्यकभावनायां करणत्वेनान्वय इत्याशयेन सिद्धान्तमाह—**पदश्रुत्येत्यादिना** ॥ ननु पदश्रुत्या यागस्य फलकरणत्वं न सम्भवति । फलस्य भिन्नपदोपात्तत्वादित्युक्तमिति शङ्कते—**यद्यपीति** ॥ **सा**—पदश्रुतिः । समाधत्ते—**तथापीत्यादिना** ॥ **तस्यामवस्थायां**—प्राथमिकभावनान्वयवेलायाम् । **अकिञ्चित्करत्वेऽपि**—अनिर्णायकत्वेऽपि । कारकश्रुतितः पदश्रुतेर्दौर्बल्यमुक्तं निरस्यति—**न चेति** ॥ **तस्याः**—पदश्रुतेः । "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति स्मृत्या यागभावनयोः करणत्वरूपसम्बन्धस्य वृत्त्यैवोपस्थितेस्सम्भवात्, न संसर्गमर्यादया भानम् । अत एव धात्वर्थविशेषणज्योतिष्टोमादौ पदादेव करणत्वोपस्थितिरिति युज्यत इत्यभिप्रायेणाह—**लाक्षणिकत्वेऽपीति** ॥ यागकरणत्वस्य

प्राथम्यात् । अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः; 'परिपूर्णं पदं पदान्तरेणान्वेति' इति न्यायात् । न च प्रथमावगतस्यापि कल्प्यस्यौत्तरकालिकेन बाधः, उपजीव्यत्वादिति यागः फलसाधनं, सोमो यागार्थ इति सिद्धम् ॥

प्रयोजनं—सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे । सिद्धान्ते तु तत् ॥

नन्विदं धात्वर्थातिरिक्तभावनासत्त्वे भवेत् । न तु तस्यां प्रमाणमस्ति । धातू-

---

लक्षणालक्ष्यत्वेऽपीत्यर्थः । कारकश्रुत्युपात्तत्वेऽपि सोमकरणत्वस्य यागकरणत्वान्वयानन्तरभावित्वेन दौर्बल्यमिति भावः । **तदन्वयस्य**—यागकरणत्वान्वयस्य । ननु प्रबलकारकश्रुत्युपात्तं सोमकरणत्वमेव प्रथममन्वीयतां न यागकरणत्वं इत्यत आह—**अन्यथेति** ॥ यागकरणत्वस्य प्रथममन्वयास्वीकार इत्यर्थः ॥ **परिपूर्णत्वाभावेनेति** ॥ परिपूर्णत्वं हि प्रकृत्यर्थान्वितप्रत्ययार्थबोधकत्वम् । तच्च 'यजेत' इत्यादितिङन्तपदस्य यागान्वितभावनाबोधकत्वाभावे न सम्भवतीति भावः ॥ **उपजीव्यत्वादिति** ॥ सोमफलयोः कारकत्वेन परस्परान्वयसिद्ध्यर्थं पूर्वोपस्थितधात्वर्थकरणकभावनाया एव द्वारत्वेनापेक्षणीयत्वादित्यर्थः ॥ **सोमापचार इत्यादि** ॥ पूर्वपक्षे सोमनाशादौ न प्रतिनिधिः, प्रधानत्वात् । प्रारब्धस्य परिसमापनं त्वसदृशेनापि द्रव्येण कार्यम् । अत्र वचनप्राप्तत्वात्[1] न प्रतिनिधिस्सम्भवतीति चेत्, 'पशुना यजेत' इत्यादावेतद्रीत्या प्रयोजनमूह्यम् । सिद्धान्ते तु यागार्थत्वात् प्रतिनिधिर्भवतीत्यर्थः । सूत्रार्थस्तु, **भावार्थाः**—प्रत्ययांशेन भावनाप्रतिपादकाः । **कर्मशब्दाः**—प्रकृत्यंशेन कर्मवचनाश्च ये 'यजेत' इत्यादयः । **तेभ्य एव, क्रिया**—कार्यमपूर्वम् । **प्रतीयेत**—कल्प्येत । **हि**—यतः । **एषः**—धात्वर्थ एव । फलभावनाकरणत्वेन, **विधीयते,** नान्यदिति । ननु धात्वर्थस्य भावनाकरणत्वमयुक्तं, धात्वर्थातिरिक्तभावनाया एवाभावात् । "फलव्यापारयोर्धातुराश्रये तु तिङस्स्मृताः" इत्युक्त्या धात्वर्थस्यैव व्यापारात्मकभावनारूपत्वात् तत्रैव सकलकारकान्वयसम्भवादिति वैयाकरणश्शङ्कते—**नन्विति** ॥ **इदं**—धात्वर्थस्य भावनाकरणत्वम् ॥ **धात्वर्थातिरिक्तेति** ॥ करणत्वस्य सप्रतियोगिकत्वेन प्रतियोगिनः पृथगेव सम्भवो नान्यथेत्यर्थः । **तस्यां**—धात्वर्थातिरिक्तायां भावनायाम् । ननु धात्वर्थातिरिक्तभावनानङ्गीकारे कारकाणां कुत्रान्वय इत्यत आह—**धातूनामेवेति** ॥ फलानुकूलव्यापारसामान्यस्य धात्वर्थत्वेन फूत्कारादेर्यत्नादेश्च व्यापारतया धातुवाच्यत्वेन कारकाणां फूत्कारादौ यत्नादौ वा धात्वर्थ एवान्वयसम्भवात् न तदतिरिक्तभावनायां प्रमाणमस्तीत्यर्थः । फूत्कारादिरूपव्यापारसमूहशरीरेऽपि तत्तदनुकूलकृतीनामेव

---

१. सोमाभावे पूतीकमभिषुणुयात् इति वचनप्राप्तत्वादित्यर्थः ।

नामेव विक्लित्त्यादिफल इव तत्प्रयोजकव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वात् । अतो यत्नादिरूपभावनाया अपि धातुवाच्यत्वात् धात्वर्थ एव क्रियारूपे सकलकारकान्वयः, न तु यागस्य पदश्रुत्या फलकरणत्वमिति चेत्--न; 'पचति, पाकं करोति, पाके यतते' इति पाकात्पृथग्विव्रीयमाणयत्नादेः पचत्यर्थत्वानुपपत्तेः । न च घञन्तपाकशब्दस्य फल एव शक्तत्वात् पृथग्विवरणोपपत्तिः । व्यापारविगमेऽपि फलदशायां 'पाको विद्यते' इति प्रयोगापत्तेः तस्याः व्यापारवाचित्वावश्यंभावात् । अतो भासमानो यत्नादिः तिङ्वाच्य एव । अत एव धातुवाच्यमपि साक्षात्फलजनकफूत्कारादिव्यापारवृत्तिपाकत्वादिकमेव । तच्च जातिरखण्डोपाधिर्वेत्यन्यदेतत् । तज्जनकयत्नादिकं तु आख्यातवाच्यमेव । तत्र हि शक्ततावच्छेदकं तु करोतिना विव्रीयमाणतिप्त्वादिकं, लाघवात्तिप्त्वादिकमेव वा । न तु स्थानित्वम् । तदुपस्थापकादेशविशेषाणां पदज्ञान-

---

बहुशो व्यापाररूपेणान्तर्भावात् यत्नादिरूपभावनाया इत्युक्तम् । तथा च गुणकामाधिकरणे भाष्योक्तिः "जुहुयादिति शब्दस्य एतत्सामर्थ्यं यद्धोमविशिष्टं प्रयत्नमाहेति" । ततश्च तस्यामेव धातुवाच्यक्रियायां सकलकारकान्वय इत्याह—**धात्वर्थ इति** ॥ ननु पाकं करोतीति विवरणवाक्यस्थकरोतेर्व्यापारवाचित्वेनोपपत्तेर्न यत्नरूपभावनासिद्धिरित्यत आह—**पाके यतत इति** । ततश्च तत्र पाकशब्देन धातोर्विवरणात् धातोः पाकार्थकत्ववत् करोतिपदेन यतत इति पदेन च पाकात्पृथग्विव्रीयमाणव्यापारयत्नयोराख्यातवाच्यताया आवश्यकत्वात् धात्वर्थातिरिक्तव्यापारयत्नयोस्सिद्धिरिति भावः । भाष्येऽपि "तथा यतते यथाकथञ्चिद्भवति नैते भावशब्दा इत्युपपद्यते" इत्युक्तम् । ननु पाकशब्दस्य घञन्तस्य केवलफलपरतया पाकशब्देन फलविवरणे यत्नादिव्यापारविवरणं करोत्यादिना युज्यत इति शङ्कते—**न चेति** ॥ परिहरति—**व्यापारेति** ॥ घञन्तस्य फलमात्रपरत्वे व्यापारनाशानन्तरं फलसत्तादशायां पाकोऽस्तीत्यादिप्रयोगापत्त्या घञन्तस्यापि फलावच्छिन्नव्यापारवाचिताया आवश्यकतया तस्मात्पृथग्विव्रीयमाणयत्नादेराख्यातवाच्यत्वमावश्यकमित्यर्थः ॥ **अत एव**—शब्दस्य व्यापारवाचित्वस्यावश्यकत्वादेव । **धातुवाच्यं**—धातुशक्यम् । जलाहरणादिव्यवहितव्यापारव्यावृत्त्यर्थं—**साक्षादिति** ॥ विक्लृत्यव्यवहितकारणपूर्वकत्वादिवृत्तीत्यर्थः ॥ **पाकत्वादिकमेवेति** ॥ आकृतिन्यायादिति भावः । **तच्च**—पाकत्वादिकं च ॥ **तज्जनकेति** ॥ पाकादिजनकेत्यर्थः । 'जानाति' इत्यादौ ज्ञानाद्यनुकूलयत्नाभावात् ज्ञानाश्रय इत्येव विवरणात्तिप्त्वमात्रस्य तत्रापि सत्त्वाच्च न तिप्त्वमात्रस्य शक्ततावच्छेदकत्वमित्यतः—**करोतिना विव्रीयमाणेति** ॥ किं करोतीति सामान्यप्रश्नस्य घटं करोतीति विवरणदर्शनात्सामान्यस्य विशेषपर्यवसानमात्रेण विवरणत्वसम्भवात् । करोतिधातावतिप्रसङ्गनिरासाय—**तिप्त्वादिकमिति** ॥ 'जानाति'

**निष्ठकारणतावच्छेदककोटौ प्रवेशे गुरुभूतकारणतावच्छेदकघटितानन्तकार्यकारणभावकल्पनापत्तेः। अप्रवेशे यथाकथञ्चिदुपस्थापितलकारादपि भावनोपस्थित्यापत्तेश्च। शक्यतावच्छेदकं तु फलोद्देश्यकधात्वर्थातिरिक्तव्यापारत्वम्। फलं च क्वचिद्धात्वर्थः, क्वचिच्च स्वर्गादिरिति यथाविवक्षम्। एवं च 'रथो गच्छति' इत्यादौ न लक्षणा। गमनानुकूलव्यापारस्यैवाख्यातार्थत्वादिति पार्थसारथिमिश्रः॥**

---

इत्यादौ यत्नस्य बाधादेव आश्रयत्वे लक्षणयाऽप्युपपत्तेराह—**लाघवादिति**॥ ननु स्थानिलत्वस्यानुगतत्वात् शक्ततावच्छेदकत्वमस्त्वित्यत आह—**न त्विति॥ तदुपस्थापकेति**॥ स्थानित्वेन स्थानिनां लकाराणां ज्ञानार्थं तदादेशानां तिबादीनां ज्ञानमावश्यकम्, अन्यथा कस्य कस्य स्थानीति जिज्ञासापत्तेः। अतस्तिबादिज्ञानोत्तरमेव तिबादिस्थानिनो लकारा इति ज्ञानोत्पत्तेः तिप्त्वादिज्ञानस्यावश्यकतया तिबाद्यादेशस्थानिलकारविषयकज्ञानत्वेनैव शाब्दबोधे कारणत्वं वक्तव्यमिति लकारात्मकपदज्ञाननिष्ठकारणतावच्छेदककोटौ निरुक्तरूपेणैव लकारज्ञानस्य निवेशात् गौरवापत्तिरित्यर्थः। ननु कारणतावच्छेदकस्य गुरुत्वेऽप्यनुगतत्वात् तादृशकार्यकारणभावोऽङ्गीक्रियतामित्यत आह—**अनन्तेति**॥ तिबादेशस्थानिलत्वस्य तिङेकवचनमात्रनिष्ठतया सर्वाख्यातसाधारण्याभावात्। तदादेशस्थानिलत्वादीनामपि कारणतावच्छेदककोटिप्रवेशावश्यकतया अष्टादशकार्यकारणभावकल्पनापत्तिरित्यर्थः। न च केवलतिप्त्वादीनां शक्ततावच्छेदकत्वेऽप्येष दोषः। तथाऽपि स्थानिलत्वादीनामप्रवेशेन लाघवात्। ननु स्थानिलत्वं न निवेश्यते येनोक्तदोषः स्यात्। किन्तु लत्वमात्रम्। अतो न गौरवमित्यत आह—**अप्रवेश इति॥ यथाकथञ्चिदिति**॥ जलफलादिपदघटकलकारादपि भावनाप्रतीत्यापत्तिरित्यर्थः। तस्मात् तिप्त्वादिकमेव शक्ततावच्छेदकम्। युक्तं चैतत्। तेषामेव ज्ञानाच्छाब्दबोधोत्पत्तेरिति भावः। आख्यातत्वमेव शक्ततावच्छेदकमित्यपि केचित्। पूर्वं शक्यार्थस्योक्तत्वात् इदानीं शक्यतावच्छेदकमाह—**शक्यतावच्छेदकं त्विति**॥ आख्यातशक्यतावच्छेदकं त्वित्यर्थः॥ **फलोद्देश्यकेत्यादि**॥ फलोद्देश्यकेत्यनेनोदासीनक्रियाव्यावृत्तिः सूचिता। धात्वर्थातिरिक्तेत्यनेन साक्षात्फलजनकाधिश्रयणफूत्कारादीनां धातुनैव प्रतिपादनात् तदतिरिक्तजलाहरणादिव्यापारः फलविशिष्टो भावनेति धात्वर्थव्यावृत्तिस्सूचिता॥ **फलं चेत्यादि॥ क्वचित्**—पचतीत्यादौ, विक्लृत्त्यादिरूपं धात्वर्थः; 'यजेत स्वर्गकामः' इत्यादौ स्वर्गादिरूपमिति विवक्षानुसारात् प्रतीयत इत्यर्थः। ननु 'रथो गच्छति' इत्यादौ फलाभावाल्लक्षणा स्यादित्यत आह—**एवं चेति**॥ धात्वर्थातिरिक्तफलाभावेऽप्युत्तरदेशसंयोगानुकूलव्यापारस्यैव धात्वर्थतया 'पचति' इत्यादाविव धात्वर्थ एव फलस्यान्तर्भावात् तादृशगमनानुकूलवेगादिरूपव्यापारमादायाख्यातप्रयोगोपपत्तेर्न लक्षणेत्यर्थः। व्यापाराणा-

**वस्तुतस्तु--यत्नत्वमेव शक्यतावच्छेदकम्, लाघवात् । तद्बाधे तु सर्वत्राश्रयत्वादौ लक्षणा । यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्मसाकाङ्क्षत्वम्, करोतिपर्यायत्वात् एककर्मकत्वम्, फलभवनानुकूलव्यापारत्वाच्चार्थभावनात्वं द्रष्टव्यम् ॥**

---

मननुगतत्वेन तत्रानुगतशक्त्यसम्भवात्, यत्नत्वस्य जातित्वेनानुगतत्वात् लाघवाच्च यत्नत्वमेव शक्यतावच्छेदकमिति तार्किकमतानुगुणं राणकपक्षमाह—**वस्तुतस्त्विति** ॥ **तद्बाधे**—यत्नबाधे । 'जानाति' इत्यादौ ॥ **आश्रयत्वादाविति** ॥ आदिना प्रतियोगित्वादिपरिग्रहः ॥ **यत्नस्यैवेति** ॥ यत्नसमूहस्येत्यर्थः । तेनैकयत्ननाशमात्रेण पाकसत्तादशायामपाक्षीदिति प्रयोगानापत्तिरिति भावः । भाव्यमन्तरेण भावनाशरीरस्यानिष्पत्तेराह—**नित्यमिति** ॥ "स्वास्थ्यकामश्शयीत" इत्यादौ धातोरकर्मकत्वेऽपि स्वास्थ्यस्य भावनाकर्मत्वादिति भावः । घटं पटं च करोतीति चकारं विना द्वितीयकर्मान्वयस्य करोतेरदर्शनादाह-**एककर्मकत्वमिति** ॥ **फलभवनानुकूलेति** ॥ फलोत्पत्त्यनुकूलेत्यर्थः । अत्र पार्थसारथिमतानुयायिनः । न करोतेर्यत्नार्थकत्वम्; तथा सति सकर्मकत्वानुपपत्तेः । न हि यत्नार्थकयततेः सकर्मकत्वम्; 'घटं यतते' इति प्रयोगापत्तेः । किन्तु करोतेर्भावयतिपर्यायत्वेन भवनानुकूलव्यापारवाचित्वमेव । ततश्च पाकं करोतीत्यस्य पाकं भावयतीत्येवार्थः । एवं च 'पचति' इत्यादावाख्यातस्य पाकभवनानुकूलव्यापार एव शक्तिः । न चाननुगमः; भवनानुकूलव्यापारेषु व्यापारत्वस्याखण्डोपाधित्वस्वीकारात् । एवं च 'जानाति' इत्यादावपि न लक्षणा । अत एव 'यजेत' इत्यादौ भावनायास्सामान्यरूपाया विशेषाकाङ्क्षा इतिकर्तव्यताकाङ्क्षेति प्राचीनग्रन्थानामप्युपपत्तिः । व्यापारसामान्यमध्ये यत्नस्यापि भवनानुकूलव्यापारत्वेन भावनात्वमिष्टमेव । अत एव "डुकृञ् करणे" इति धातुपाठेऽपि 'करणे' इत्येवोक्तम् । यत्नार्थकत्वे "कृती प्रयत्ने" इतिवत् "डुकृञ् प्रयत्ने" इत्येवावक्ष्यत् । न चेत्थमवोचत् । तस्मात् व्यापारसामान्यं भावनेत्येव युक्तम् । एतेन न तावत् कर्तृव्यापारो भावना । स हि पचावधिश्रयणादिः; यजौ मानसस्त्यागः, तद्धेतुर्वा प्रयत्नः, सङ्कल्पो वा; गमौ चलनं ; ते च धात्वर्था एवेति न धात्वर्थातिरेकिणीं भावनामुपलभामहे । प्रयत्नो भावनेति चेत्, "रथो गच्छति" इत्यादौ तदभावस्स्यात् । स्पन्द इति चेत्, न; 'यजेत' इत्यादिष्वात्मकर्तृकेषु व्यभिचारापत्तेः । उभयसाधारणोदासीनत्वविच्छेदसामान्यं भावना । उदासीनत्वमकुर्वद्रूपत्वं, तद्विच्छेदः कुर्वद्रूपत्वं, तदेव भावनेति चेत्, न; शब्दादौ तदभावापत्तेः । प्रयत्नसङ्कल्पादिकमादाय हि लोके प्रयोगो दृश्यते । न हि शब्दस्य विभोरचेतनस्य प्रयत्नादिकं सम्भवति । न चोदासीनत्वविच्छेदः कुर्वद्रूपत्वमिति शब्दादावर्थाभिधानशक्तेरर्थप्रतीतिलक्षणभाव्योत्पादनानुकूलायास्सत्त्वेन तस्या एव भावनात्वौचित्यान्नानुपपत्तिरिति वाच्यम्; यस्मिन् समीकर्तुरुदासीनत्वविच्छेदव्यवहारो दृश्यते तादृश एव धर्मः उदासीनत्वविच्छेद-

शब्दार्थः । सधर्म एव कुर्वद्रूपत्वमिति वक्तव्यम् । स च धर्मः क्रियाविभागान्यतरहेतुप्रयत्न-स्पन्दान्यतररूप एवेति शब्दादौ तदभावस्य स्पष्टत्वात् । न च तत्रेष्टापत्तिरिति वाच्यम्; 'शब्दोऽभिदधाति' इत्यादिप्रयोगानुपपत्तेः । "अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावनात्वन्या सर्वाख्यातेषु गम्यते ॥" इत्याचार्यवचनविरोधाच्च । तस्यायमर्थः । अभिधानशब्दस्य कर्तरि करणे वा व्युत्पत्तौ अभिधायाः शब्दस्य भावनेत्यर्थः । भावे कर्मणि वा व्युत्पत्तौ अभिधात्मिका भावनेत्यर्थः । अर्थः पुरुषार्थः । आत्मा भाव्यत्वेन निरूपको यस्यास्सेत्यर्थः । अभिधाशब्दस्य शब्दपरत्वमाश्रित्य व्यापारव्यापारिणोरसति भेदे अभिधात्मिका शब्दात्मिका भावना अभिधाभावना शब्दभावनेत्यर्थाङ्गीकारे तद्व्यावृत्तये अर्थात्मेति । अर्थस्वरूपा भावना अर्थात्मभावनेत्यपि केचित् । ततश्च शब्दादौ भावनानङ्गीकारे 'अभिधाभावनाम्' इति शब्दगतव्यापारस्य भावनात्वोक्तिः, 'लिङादय आहुः' इत्याख्यातप्रयोगः । तत्राख्यातस्य भावनावाचकत्वाभावे अर्थभावनायास्सर्वाख्यातगम्यत्वोक्तिश्च विरुद्ध्येतैव । न च "सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति । सामानाधिकरण्येन करोत्यर्थोऽवधार्यते ॥" इत्युक्तत्वात् पचति यजतीत्यादिषु यत्र कर्तुस्सिद्धत्वं तत्रैवाख्यातस्य भावनावाचित्वमित्यर्थावगमेन सर्वशब्दसङ्कोचस्यावश्यकतया शब्दादिव्यतिरिक्तविषयत्वेनापि सङ्कोचस्य न्याय्यत्वान्नानुपपत्तिरिति वाच्यम्; "अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना । अन्यत्राशेषभावात्तु न तथा सा प्रतीयते ॥" इत्यसिद्धकर्तृकेऽपि 'अस्ति, भवति' इत्यादौ भावनासत्त्वप्रतिपादनेन सिद्धकर्तृकस्थलीयाख्यातमात्रपरतया सङ्कोचानुपपत्त्या शब्दाद्यतिरिक्तविषयत्वेन सङ्कोचासम्भवात् । प्रत्युत शब्दादीनां सिद्धत्वेन शब्दोऽभिदधातीत्याख्यातस्य भावनावाचित्वावश्यम्भावाच्च । तस्मान्नोदासीनत्वविच्छेदो भावनेति धात्वर्थातिरिक्तभावनास्वरूपं दुर्निरूपमिति शङ्का परास्ता । व्यापारस्य विशेषरूपेण धात्वर्थत्वेऽपि सामान्यरूपेणाख्यातवाच्यत्वसम्भवेन धात्वर्थातिरिक्तव्यापारसामान्यात्मकभावनासिद्धिसम्भवात् । धात्वर्थातिरिक्तत्वस्य धातुशक्यतावच्छेदकातिरिक्तधात्वर्थतावच्छेदकव्यापकशक्यतावच्छेदकवत्त्वरूपत्वात् । धात्वर्थतावच्छेदकावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधर्मवत्त्वरूपत्वाद्वा । तदुक्तमाचार्यैः—"धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते । तथाऽपि सर्वसामान्यरूपेणान्यावगम्यते ॥" इति । विवृतं चैतन्मण्डनेन । "कथ्यमानाद्रूपभेदात् द्विधा धात्वर्थसङ्गतिः । अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यति ॥" इति । एतदुक्तं भवति । सत्यं न धात्वर्थातिरेकिणी भावना । धात्वर्थानामेव द्वे रूपे । पाको, यागः, प्रयत्नः, सङ्कल्पः, चलनं, विक्लेदनं, अभिधानं, छेदनमिति प्रातिस्विकं धात्वभिधेयमक्रियात्मकं सिद्धस्वभावमेकम् । अपरं तु सर्वधात्वर्थानुयायिकरोतिप्रत्ययवेद्यं, क्रियात्मकं, साध्यस्वभावं, अन्योत्पादानुकूलात्मकं,

आख्याताभिधेयमिति । अयमर्थः । भवतेर्ण्यन्तादुत्पन्नो भावनाशब्दः भवितुः प्रयोजकव्यापारवाची । तथा च धात्वर्थो धातुना यागत्वादिविशेषरूपेणाभिधीयते । आख्यातेनान्योत्पादनानुकूलव्यापारत्वेनाभिधीयते । एवं धात्वाख्याताभ्यां कथ्यमानात् सामान्यविशेषलक्षणरूपभेदात् धात्वर्थस्य द्वेधा वाक्यार्थान्वयः । तत्र धात्वर्थस्य सिद्धतया प्रतीतेर्न कारकान्वययोग्यता । अन्योत्पादनानुकूलव्यापारस्य सामान्यरूपस्य क्रियारूपत्वेन प्रतीतेः कारकान्वययोग्यता । भावयतिपर्यायकरोतिप्रत्ययवेद्यत्वाच्च भावनात्वम् । तथा च अनुभवन्ति हि लोकाः, यजति यागं करोति, पचति पाकं करोति, गच्छति गमनं करोतीति करोतिप्रत्ययं सर्वसाधारणमन्योत्पादनानुकूलव्यापाररूपं च । पचति पाकं भावयतीत्यादि च । तस्मात्साध्यस्वरूपपूर्वापरीभूतानेकव्यापारसमुदायात्मकान्योत्पादनानुकूलभावनास्वरूपं धात्वर्थातिरिक्तं सिद्धमेवेति व्यापारसामान्यं भावनेत्येव युक्तम् । यत्तु कृतिरेव भावनेत्युक्तं तत् अन्योत्पदनानुकूलव्यापारत्वेन भावनात्वस्येष्टत्वात् कृतित्वेन भावनात्वस्य भावयतिपर्यायकरोतिप्रत्ययवेद्यत्वानुपपत्त्याऽसम्भवात् भावनाशब्दार्थत्वासम्भवाच्च, जानातीत्यादौ लक्षणापत्तेश्चोपेक्ष्यम् । किं च यत्र करणभाव्ययोर्मध्ये न क्वापि कृतिः यथा परमापूर्वेण स्वर्गो भवतीत्यादौ तत्र भावना नास्त्येव । विद्यमानापि क्वचित् तृतीयादिर्न कारकविभक्तिरिति यत्नभावनावादिना वाच्यम् । व्यापारभावनावादे तु परमापूर्वचरमक्षणसम्बन्धः स्वर्गप्रथमक्षणसम्बन्धश्चेत्येतावेव व्यापारौ सम्भवत इति व्यापारभावनावादस्यैव युक्तत्वात् । पचतीत्यत्र यत्नरूपगुणस्य धात्वर्थानुकूलत्वेन तस्यैव भावनात्वमिति चेत्, न ; पतति, स्रवति, कम्पत इत्यादौ गुरुत्वद्रवत्ववायुसंयोगादिरूपगुणानां तत्तद्धात्वर्थानुकूलत्वेन तेषामपि भावनात्वापत्तेः । ततश्च यत्नत्वादीनामनेकेषां शक्यतावच्छेदकत्वकल्पनेन गौरवापत्तेः । व्यापारसामान्यस्य भावनात्वे तु अखण्डोपाधिरूपस्य व्यापारत्वस्य सर्वानुगतस्यैकस्यैव शक्यतावच्छेदकत्वेन लाघवात् । गुरुत्वात् फलं पतति, द्रवत्वात् पयस्स्रवतीत्यादिरीत्या पृथक् गुरुत्वादिपदप्रयोगान्न तेषामाख्यातार्थत्वमिति चेत् तुल्यमत्रापि, महता प्रयत्नेन पाकं करोतीत्यादिप्रयोगात् । 'अग्निहोत्रं जुहोति' इत्यत्र स्वर्गानुकूलत्वस्य संसर्गतया भानायोगेनानुकूलत्वमपि व्यापारे विशेषणीयमिति चेत् समानमेतद्यत्नभावनावादेऽपि । अनुकूलत्वस्यानुपस्थितौ अंशत्रयाकाङ्क्षाया एवानुदयात् ल्युडन्तभावनापदवैलक्षण्येनाख्यातोपात्तत्वादेव यत्नस्य साध्यत्वेनोपस्थितावाकाङ्क्षासम्भवान्नानुकूलत्वं शक्यतावच्छेदककोटौ निवेशनीयमिति चेत्, तुल्यमेतत् व्यापारभावनावादेऽपि । ननु 'पाके यतते' इति विवरणात् यत्नत्वावच्छिन्नार्थकत्वमेव युक्तमिति चेत्, पचति पाकं करोति इत्येव विवरणदर्शनेन तादृशविवरणस्यैवाप्रामाणिकत्वात् । ननु तथाऽपि कृञो लाघवेन यत्न एव शक्त्यङ्गी-

इयं चाख्यातोपात्तभावनैव मुख्यविशेष्या तद्व्यतिरेकेणेतरपदार्थान्वयापर्यव-

कारात् तेन विव्रीयमाणाख्यातस्यापि यत्नार्थकत्वमेव युक्तमिति चेत्, न; अचेतनेषु करणत्वादिधर्मेष्वपि करोतिनिष्पन्नकारकपदप्रयोगदर्शनेन यत्नार्थकत्वासम्भवात् । कृञो यत्नार्थकत्वे सकर्मकत्वानुपपत्तेश्च । तथा हि, फलव्यधिकरणव्यापारवाचित्वं हि सकर्मकत्वम् । 'पचति' इत्यादौ विक्लृत्त्यादिरूपफलस्य फूत्कारादिव्यापारव्यधिकरणत्वात् । फलसमानाधिकरणव्यापारवाचित्वं चाकर्मकत्वम् । 'यतते' इत्यादौ यत्नादिव्यापारस्य यत्नादिव्यापारजन्यफलस्य च चैत्रनिष्ठत्वेन फलसमानाधिकरणत्वात् । ततश्च कृञो यत्नवाचित्वे यततिवत् अकर्मकत्वापत्तिस्स्पष्टैव । अपि चाख्यातस्य यत्नार्थकत्वे समभिव्याहारमन्तरेणापि आख्यातेन निवृत्तियत्नबोधापत्तिः । किं च "पश्य मृगो धावति" इत्यादौ धावनकृतेर्मृगनिष्ठाया दर्शनकर्मत्वान्वयानुपपत्तेर्न कृतिवाचिताऽऽख्यातस्य । व्यापारभावनापक्षे च मृगनिष्ठक्रियाया दर्शनकर्मत्वान्वयसम्भवान्नानुपपत्तिः । राणके कृत्यर्थकत्वोक्तिस्तु भवनानुकूलव्यापारत्वेन रूपेण कृत्यर्थकत्वाभिप्रायेणेति न तद्विरोधोऽपि । तस्मात् व्यापारसामान्यं भावनेति युक्तमेवेति प्राहुः । एवं धात्वर्थातिरिक्तां भावनां प्रसाध्य तस्यामेव सकलकारकान्वय इत्याह— **इयं चेति** ॥ धात्वर्थातिरिक्तत्वेन सिद्धा भावनेत्यर्थः ॥ **आख्यातोपात्तेति** ॥ मुख्यविशेष्यत्वोपपादकं हेतुगर्भं विशेषणम् । तत्रोपात्तेत्यनेन शब्दवृत्तिबोध्यत्वान्न भावनायास्सांसर्गिकी विषयतेति सूचितम् । तत्रापि प्रत्ययगम्यत्वाद्विशेष्यतारूपा । तत्राप्याख्यातगम्यत्वान्मुख्यविशेष्यतात्मिका, प्रकारतानात्मिका । अत एव ल्युडन्तपदोपात्ताया न विशेष्यत्वम् । क्त्वाप्रत्ययोपात्तायाः कतिपयकारकविशेष्यत्वेऽपि न मुख्यत्वमित्याशयः । ननु 'चैत्रः पचति' इत्यादौ प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्यैवानुभवसिद्धतया कथं भावनाया मुख्यविशेष्यत्वमिति चेत्, न; लाघवेन तस्या एव मुख्यविशेष्यत्वात् । तथा हि, प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारे आख्यातार्थकृतिप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितेः, धात्वर्थप्रकारकशाब्दबुद्धिं प्रत्याख्यातजन्योपस्थितेः, तिङेकवचनार्थैकत्वादिप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेः, लडाद्यर्थवर्तमानत्वादिप्रकारकबोधं प्रति धातुजन्योपस्थितेः, आख्यातजन्योपस्थितेर्वा, सुबर्थकरणत्वादिप्रकारकशाब्दबोधं प्रति धातुजन्योपस्थितेः, 'न पचति' इत्यादावाख्यातार्थप्रकारकशाब्दबुद्धिं प्रति नञ्पदजन्योपस्थितेः, नञर्थप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेश्च कारणत्वं कल्पनीयमित्यनेककार्यकारणभावकल्पनापत्त्या अतिगौरवम् । भावनाया मुख्यविशेष्यत्वे च सर्वेषां पदार्थानां तस्यामेवान्वयस्वीकारेण पदार्थप्रकारकबोधं प्रत्याख्यातजन्योपस्थितेः कारणत्वमित्येककार्यकारणभावस्यैव कल्पनेन लाघवात् । "तद्भूतानां क्रियार्थेन समाम्नायः" "भावप्रधानमाख्यातं" इति जैमिनिपाणिन्यनुभववत् गौतमकणादाद्यनुभवादर्शनाच्च । अधिकं भाट्टरहस्ये

सानात् । तस्यामेव चाख्यातोपात्तायां क्त्वाप्रत्ययाद्युपात्तायां वा योग्यताद्यनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यस्सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तोऽर्थः तस्य सर्वस्यापि प्रकारतयान्वयः । निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति तयान्वयः । अन्यसमभिव्याहारादौ अन्येनापि । प्रातिपदिकार्थोऽपि सुबर्थे करणत्वादौ । तद्धितसमासादिसखण्डप्रातिपदिकावयवार्थानां तु यत्र कारकतासम्बन्धेन तद्धितसमासादिवृत्तिः यथा आग्नेय इत्यादौ तत्राग्नेर्देवतात्वात् भावनायामेवान्वयः, न तु तद्धितो-

---

ज्ञेयमिति दिक् । ननु कर्तृत्वकर्मत्वकालसङ्ख्यादीनामाख्यातोपात्तत्वेन विशेष्यत्वं स्यादित्यत आह—तदिति ॥ 'देवदत्तः काष्ठैः स्थाल्यामोदनं पाकेन करोति' इत्यत्र करोत्यन्वयमन्तरेण इतरपदार्थानां निराकाङ्क्षत्वाभावेन करोत्यर्थस्य प्राधान्यावगमादित्यर्थः । न च करोतेरपीतरपदार्थान्वयं विना पर्यवसानाभावस्तुल्य इति वाच्यम् ; करोत्युपस्थितायास्तथात्वेऽपि प्रत्ययोपस्थिताया भावनायास्तिङन्तपदोपस्थितै रेवार्थैः पाककरणिका इष्टभाव्यिका एककर्तृका भावना इति बोधपर्यवसानात् । 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति स्मृत्या प्रकृत्यर्थस्य "भावप्रधानमाख्यातं" इति स्मृत्या सङ्ख्यादिप्रत्ययार्थानां च भावनां प्रति विशेषणत्वबोधनेन भावनाया एव सर्वतः प्रधान्योक्तेः । "को धातुः, किं प्रातिपदिकं, किं नामाख्यातं" इति गोपथब्राह्मणे षट्त्रिंशत्प्रश्नोत्तरखण्डे धातोः पार्थक्येनाख्यातगणनयाऽऽख्यातपदस्य तिङ्मात्रपरत्वनिश्चयात् । न च "सर्वमाख्यातजं नाम" इति यास्कस्मृतौ धातुपरत्वमुक्तम् । तथा 'येषां तु' इति प्रकृताधिकरणगुणसूत्रे तान्याख्यातानीति तिङन्तपरत्वमुक्तमिति तद्विरोध इति वाच्यम्; तस्य लक्षणयाऽप्युपपत्तेरित्याशयात् ॥ **क्त्वाप्रत्ययाद्युपात्तायामिति** ॥ "रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा" इत्यादिष्विति शेषः ॥ **योग्यतेति** ॥ 'ओदनं भुक्त्वा शास्त्रमधीते' इत्यादावोदनशास्त्रयोर्वैपरीत्येनान्वयासम्भवादिति भावः ॥ **निपातेत्यादि** ॥ **निपाताः**, चादयः । **उपसर्गाः**, प्रादयः । **प्रातिपदिकं**, अर्थवत्सूत्रपरिभाषितं अखण्डम् । कृत्तद्धितसूत्रोक्तस्य सखण्डस्य पृथग्व्युत्पत्तिप्रदर्शनात् । **तदतिरिक्ताः शब्दाः**, सुतिङादयः कृत्वसुच्क्त्वादयश्च प्रत्ययाः, धातवश्च । **लिङ्गसङ्ख्याव्यतिरिक्तोऽर्थः**, कर्तृत्वकर्मत्वादिरूपकारकादिः ॥ **प्रकारतयेति** ॥ तत्प्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वयिभावनानिष्ठविशेष्यतासम्बन्धेनाख्यातपदजन्योपस्थितेः कारणत्वादिति भावः । निपातादित्रयस्य लिङ्गसङ्ख्ययोश्च क्रमेणान्वयमाह—**निपातेत्यादिना** ॥ **तयान्वयः**—क्रिययान्वयः । यथा 'न कलञ्जं भक्षयेत्' इत्यादि निषेधेषु । नञोऽन्येनापि । यथा 'यदग्नये च' इत्यादौ । आग्नेय इति प्रकृत्यर्थस्याग्न्यादेराधेयतासम्बन्धेन प्रत्ययार्थयोर्देवतात्वद्रव्यकारकयोर्मध्ये देवतात्वांश एवान्वयः । तस्य चैकप्रत्ययोपादानश्रुतिसत्त्वेऽपि न द्रव्येऽन्वयः, कारकाणां परस्परं

पात्ते द्रव्ये । स तु पार्ष्ठिक एव । यत्र कारकतातिरिक्तसम्बन्धेन सा तत्र परस्परान्वयोऽपि । यथा 'अश्वाभिधानीं' इत्यादौ । एवं सुबुपात्तलिङ्गसङ्ख्ययोस्समानाभिधानश्रुत्या सुबर्थे करणत्वादावेवान्वयः । तद्व्यतिरिक्तपदार्थमात्रस्य तु सुबर्थकरणत्वादेर्धात्वर्थस्य कर्तुस्तदेकत्वस्य कालादेर्लेडाद्यर्थस्य च विध्यादेस्सर्वस्यैव लिङ्गानन्वयिभावनावाचिपदोपस्थाप्यायां भावनायामेवान्वयः । अत एव भावनापदोपस्थापितायां तस्यां नान्वयः। आख्यातेन क्त्वादिना वोपस्थितायां तु भवत्येवान्वयः प्रकारतया । प्रकारताघटकास्सम्बन्धाश्च सर्वे यथायथं पार्ष्ठिकान्वयबोधवेलायामेव गम्यमानाः कौस्तुभ एव द्रष्टव्याः । तस्मात्सिद्धा आख्यातवाच्या आर्थी भावना । तस्यां च स्वर्गादि भाव्यम् । धात्वर्थश्च करणम् । सोमादिकं तु करणानुग्राहकत्वादितिकर्तव्यतेति सिद्धम् ॥ २ ॥

सम्बन्धाभावात्; किन्तु भावनायामेवान्वय इति भावः । ननु "साऽस्य देवता" इत्यधिकृत्य "अग्नेर्ढक्" इति तद्धितविधानेन तस्य देवताविशिष्टद्रव्यवाचित्वावगमात् तयोः स्वातन्त्र्येण भावनान्वयो न युक्त इत्यत आह—**स त्विति** ॥ द्रव्यदेवतयोः परस्परान्वय इत्यर्थः । पार्ष्ठिकान्वयमादाय तद्धितोपपत्तिरिति भावः ॥ **सा**—समासादिवृत्तिः ॥ **अश्वेति** ॥ अत्र षष्ठ्याः कारकत्वाभावादिति भावः ॥ **सुबर्थेति** ॥ तस्यैव क्रियान्वयित्वेन प्राधान्यादिति भावः ॥ **पदार्थमात्रस्येति** ॥ अत्र देवताकारकातिरिक्तानामेव भावनायामन्वयः । सम्प्रदानापादानाधिकरणानीप्सितकर्मवाचिनां पदानां मत्वर्थलक्षणया धात्वर्थेऽन्वयः । षष्ठ्यर्थसम्बन्धस्योपपदार्थेऽन्वयः । अत एव "तस्य द्वादशशतं दक्षिणा" इति गोसम्बन्धिसङ्ख्याविधानेऽपि "अतिरात्रे ब्राह्मणस्य गृह्णीयात्" इति ब्राह्मणसम्बन्ध्यतिरात्रस्योद्देश्यत्वेऽपि न वाक्यभेद इति प्राञ्चः । उक्तकार्यकारणभावलाघवानुरोधेन सर्वस्यापि भावनायामेवान्वय इति स्वाभिप्रायः । लिङ्गानन्वयिपदव्यावृत्तिमाह—**अत एवेति** ॥ भावनाशब्दस्य स्त्रीलिङ्गतया लिङ्गस्य च प्रकृत्यर्थान्वयितया लिङ्गानन्वयिभावनावाचित्वाभावादाख्यातस्यैव तादृशत्वादिति भावः । प्राथमिकबोधे उक्तरीत्याऽन्वयेऽपि द्वितीयबोधे योग्यताद्यनुसारेण भिन्नो भिन्न एवान्वयः, व्युत्पत्तिवैचित्र्यादित्याह—**यथायथमिति** ॥ उपपदनिष्ठकारकविभक्त्यर्थानां धात्वर्थेऽन्वयः । सुबर्थलिङ्गसङ्ख्ययोः प्रातिपदिकार्थे । तिङर्थसङ्ख्यायाः तल्लक्षितकर्तृत्वकर्मत्वयोः । अत एव दर्शादिकर्तृत्वस्य दम्पत्योर्व्यासज्यवृत्तित्वात् यजेत इत्येकवचनम् । "क्षौमे वसानौ" इत्यत्र तु कर्तृत्वाधिष्ठानलक्षणया तदाश्रये द्वित्वान्वयः । भावाख्यातस्थले सङ्ख्यायास्सर्वत्र लडाद्यर्थकालानां लिङाद्यर्थप्रवर्तनायाश्च न पार्ष्ठिकान्वयः व्युत्पत्तिवैचित्र्यादित्यादिरीत्येति भावः । उपसंहरति—**तस्मादिति** ॥ **करणानुग्राहकत्वादिति** । करणोत्पादकत्वादित्यर्थः । सोमस्य सिद्धरूपत्वेऽपि अभिषवग्रहणादिविशिष्टत्वेन इतिकर्तव्यतात्वं सम्भवतीति भावः ॥

## (३)--चोदना पुनरारम्भः ॥ ५ ॥

धात्वर्थादेवापूर्वमिति स्थिते अपूर्वमेवास्ति न वेति चिन्तायां---कॢप्तयागध्वंसद्वारेणैव क्षणिकस्यापि यागस्य स्वर्गसाधनत्वोपपत्तौ नापूर्वकल्पनं गौरवापत्तेः । न च नित्यत्वात् ध्वंसस्य 'धर्मः क्षरति कीर्तनात्' 'प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि' इति कीर्तनप्रायश्चित्तनाश्यत्वानुपपत्तिः । कीर्तनादेः फलोत्पत्तिप्रति-

---

चोदना पुनरारम्भः ॥ इहापूर्वमेव नास्तीत्याक्षेपिकी सङ्गतिरिति सूचयितुमाह---धात्वर्थादित्यादि ॥ नन्वपूर्वानङ्गीकारे धात्वर्थयागादेः क्षणिकतया कालान्तरभाविस्वर्गजनकत्वानुपपत्तेः धात्वर्थव्यापारत्वेनापूर्वमवश्यं कल्पनीयमेवेत्यत आह---कॢप्तेति ॥ अपूर्वस्य व्यापारत्वे धर्मिसद्भावः, तत्र यागादिजन्यत्वं, तस्य च फलजनकत्वं, चेति त्रयं कल्पनीयम् । यागध्वंसस्य व्यापारत्वे तु तस्य फलजनकत्वमात्रं कल्पनीयमिति लाघवात् ध्वंस एव व्यापारो नापूर्वमित्यर्थः । ननु यागस्य वक्ष्यमाणरीत्या मानसव्यापाररूपत्वेन तद्ध्वंसस्यापि प्रतियोगिसमवायिमनोवृत्तित्वात् स्वर्गादिसुखस्य चात्मनिष्ठत्वात् व्यधिकरणत्वेन कथं कारणत्वमिति चेन्न; आश्रयतासम्बन्धेन स्वर्गादिकं प्रति स्वाश्रयसंयोगसम्बन्धेन यागध्वंसस्य कारणत्वोपपत्तेः । अपूर्वाङ्गीकारेऽपि वाचिकादिकर्मणामपूर्वसाधनत्वसिद्ध्यर्थं परम्परासम्बन्धेन हेतुतायास्तवाप्यावश्यकत्वात् । न च यागध्वंसस्य व्यापारत्वे ध्वंसस्यापि कारणताया वाच्यतया कारणीभूतध्वंसप्रतियोगित्वात् यागस्य स्वर्गप्रतिबन्धकत्वापत्तिः कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वादिति वाच्यम्; कार्यानुकूलधर्मविघटकत्वस्यैव प्रतिबन्धकत्वरूपत्वात् । अत एव मण्यादेः प्रतिबन्धकत्वान्यथानुपपत्त्या शक्तिसिद्धिरिति सिद्धान्तस्सङ्गच्छते । न च कार्यानुकूलधर्मविघटकत्वस्य प्रतिबन्धकत्वरूपत्वे अनुमितिं प्रति सिद्धेः प्रतिबन्धकत्वं न स्यादिति वाच्यम्; प्राचीनमते साध्यसंशयस्य साध्यसंसृष्टत्वज्ञानस्य वा कारणतया तद्विघटकत्वेन प्रतिबन्धकत्वोपपत्तेः ! कारणीभूतात्यन्ताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वरूपत्वान्न दोष इत्यपि केचित् ॥ ध्वंसद्वारेणैवेति ॥ एवकारेण व्यापारमन्तरेणैव कारणत्वस्य व्यापारान्तरेण कारणत्वस्य च व्यवच्छेदः । न च श्रुतिबोधितकारणत्वान्यथानुपपत्त्या यागस्यैव स्वर्गपर्यन्तावस्थायित्वं कल्प्यतामिति वाच्यम् ; यागस्य मानसक्रियारूपस्य क्षणिकत्वेनानुभवसिद्धतया अनुभवबाधेन स्थायित्वकल्पनानुपपत्तेरित्याशयेनाह---क्षणिकस्यापीति ॥ ननु ध्वंसस्य व्यापारत्वे कीर्तनप्रायश्चित्तादिनाश्यत्वानुपपत्तिः, ध्वंसस्य नाशायोगादिति शङ्कते---न चेति ॥ नित्यत्वात्--नाशाप्रतियोगित्वात् । परिहरति---कीर्तनादेरिति ॥ कीर्तनादिः प्रतियोगित्वेन यस्य तस्य कीर्तनध्वंसस्येत्यर्थः । यथाश्रुते कीर्तनस्यापि चिरकालस्थायित्वाभावेन कीर्तननाशोत्तरं प्रतिबन्धकाभावात् फलोत्पत्त्यापत्तेः । न चैवं क्षरत्यादेर्लक्षणापत्तिः ।

**बन्धकत्वाङ्गीकारेण तदनाशकत्वात् । कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वकल्पनाद्वा न कश्चिद्दोषः । अतो नापूर्वे किञ्चित्प्रमाणमस्ति, इति प्राप्ते—**

**क्षरतिनश्यत्योर्नाशवाचिनोर्भवन्मते लक्षणापत्तेः नाशयोग्यमपूर्वमेव कल्प्यते, गौरवस्य फलमुखत्वेनादोषत्वात् । अतश्च प्रधानेन स्वर्गादिफले जननीये अपूर्वमवान्तर-**

---

अग्नेयादिषड्यागान्यतमैकमात्रकीर्तनेऽपि परमापूर्वनाशासम्भवात् उत्पत्त्यपूर्वस्य पूर्वमेव नष्टत्वात् तत्र क्षरत्यादीनां फलह्रासादिपरत्वेन लक्षणायास्सिद्धान्तेऽप्यावश्यकत्वादिति भावः । नन्वेवं कीर्तनादेः प्रतिबन्धकत्वकल्पने गौरवमेव दोष इत्यत आह—**कीर्तनात्यन्ताभावेति** ॥ **व्यक्तित्वेनेति** ॥ व्यक्तिध्वंसत्वेनेत्यर्थः । तथा च कीर्तनात्यन्ताभावविशिष्टयागध्वंसस्य व्यापारत्वादेव कीर्तनस्थले फलानुत्पत्तेः न पृथक्प्रतिबन्धकत्वकल्पनमिति न गौरवमित्यर्थः । न चैवमपि कीर्तनस्थले कालान्तरे कीर्तनात्यन्ताभावसत्त्वात् फलोत्पत्तिस्स्यादिति वाच्यम् ; ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावानङ्गीकारात् कीर्तनकर्तरि कीर्तनध्वंससत्त्वेन कीर्तनात्यन्ताभावरूपविशेषणाभावात् उक्तव्यापाराभावेन फलानुत्पत्तेः । तदङ्गीकारेऽपि कीर्तनपदस्य कीर्तनध्वंसपरत्वाङ्गीकारात् कीर्तनस्थले कीर्तनध्वंसस्याप्युत्तरक्षणे सत्त्वेन तदभावविशिष्टयागध्वंसाभावादनुपपत्त्यभावात् । कीर्तनप्रागभावविशिष्टयागध्वंसस्य व्यापारत्वात् कीर्तने सति कीर्तनप्रागभावविशिष्टयागध्वंसाभावान्नोक्तदोषः । एवं च 'शिखी ध्वस्तः' इतिवत् क्षरतीत्यस्यापि कीर्तनप्रागभावरूपविशेषणनाशपरतयोपपत्तिरित्यप्याहुः । ततश्च सिद्धेन यागध्वंसेनैव आशुतरविनाशिनोऽपि यागस्य कालान्तरभाविफलजनकत्वोपपत्तेः नाप्रसिद्धापूर्वकल्पनं गौरवादिति पूर्वपक्षमुपसंहरति—**अत इति** ॥ लोके 'क्षरति, नश्यति' इत्यादौ धातुना नाशस्यैव प्रतिपादनात् क्षरतीत्यादेः फलं प्रतिबध्नातीत्यर्थे लक्षणापत्तेः, गङ्गास्नानादिस्थले अनेकेषां जलसंयोगध्वंसानां व्यापारत्वे गौरवापत्तेश्च ध्वंसस्यानन्त्येन फलानन्त्यापत्तेश्च ध्वंसो न व्यापारः । किन्तु अपूर्वमेव नाशयोग्यं द्वारत्वेन कल्पनीयमित्यभिप्रायेण सिद्धान्तमाह—**क्षरतिनश्यत्योरिति** ॥ **नाशयोग्यमिति** ॥ कीर्तनादिना फलेन च नाशयोग्यमित्यर्थः । कीर्तनाभावविशिष्टत्वेन कारणता तु न सम्भवत्येव, कीर्तयितर्यपि उत्तरकाले कीर्तनाभावविशिष्टयागध्वंसस्य सत्त्वात् । न च प्रतियोगिन इव ध्वंसप्रागभावयोरप्यत्यन्ताभावविरोधित्वम्; प्रमाणाभावात् । अत एव अन्तरा श्यामे रक्तं रूपं नास्ति' इत्यत्यन्ताभावविषयकप्रत्ययस्सङ्गच्छते । न च तत्र नास्तीति प्रत्ययस्य ध्वंसप्रागभावविषयकत्वमेवास्त्विति वाच्यम्; तथा सति पूर्वापररक्तिमध्वंसप्रागभाववति मध्ये रक्तेऽपि तथा प्रत्ययापत्तेः । तस्मात् कीर्तनाभावविशिष्टत्वेन न कारणत्वसम्भव इति भावः । नन्वपूर्वाङ्गीकारे गौरवं पूर्वमेवोक्तमित्यत आह—**गौरवस्येति** ॥ **फलमुखत्वेनेति** ॥ क्षरत्यादेर्लक्षणाभावप्रयुक्तलाघवमुखत्वेनेत्यर्थः । अन्यथा निषादस्थपत्यधिकरणविरोधापत्तेरिति भावः । उपसंहरति—**अतश्चेति** ॥

व्यापारः । अङ्गेन च प्रधानादिनिष्ठफलाद्यनुकूलयोग्यतारूपे स्वफले जननीये तदवान्तरव्यापारः । स च फलबलादात्मनिष्ठः । अवान्तरव्यापारत्वादेव च न यागादेरन्यथासिद्धिः । तदत्र यत्रैकमेव प्रधानं तत्र पूर्वोत्तराङ्गसहितात्तस्मादपूर्वोत्पत्तेः प्रधानाव्यव-

---

**प्रधानेन**—आग्नेयादिना ॥ **स्वर्गादिफल इति** ॥ आदिना पशुपुत्रादिपरिग्रहः ॥ **अवान्तरव्यापार इति** ॥ चिरध्वस्तस्य यागादेः कालान्तरे जायमानफलं प्रत्यपूर्वद्वारैव पूर्ववृत्तित्वसम्भवादिति भावः ॥ **अङ्गेन चेति** ॥ सन्निपत्योपकारकैराराद्रुपकारकैश्चेत्यर्थः ॥ **प्रधानादीति** ॥ आदिना उत्पत्त्यपूर्वपरिग्रहः ॥ **फलादीति** ॥ आदिना उत्पत्त्यपूर्वादेः परिग्रहः । तथा च प्रधाननिष्ठोत्पत्त्यपूर्वानुकूलयोग्यता सन्निपत्योपकारकाङ्गानां फलम् । प्रधानजन्योत्पत्त्यपूर्वनिष्ठफलाद्यनुकूलयोग्यता आराद्रुपकारकाङ्गानां फलमित्यर्थः ॥ **स्वफले**—अङ्गफले ॥ **अवान्तरव्यापार इति** ॥ अङ्गानां स्वापूर्वद्वारैव निरुक्तफलजनकत्वं सम्भवतीत्यर्थः । अङ्गापूर्वाकल्पने तद्ध्वंसानां नित्यत्वेन विकृत्यनुष्ठानवेलायामपि सत्त्वात् तासां प्रासङ्गिकत्वापत्त्या अतिदेशलोपप्रसङ्गादिति भावः ॥ **स च**—अवान्तरव्यापारश्च ॥ **फलबलादिति** ॥ आत्मनि फलोत्पत्त्यनुरोधेन कार्यकारणयोस्सामानाधिकरण्यसिद्ध्यर्थमात्मन्येव कल्पनीय इत्यर्थः । न चैवमप्यङ्गापूर्वाणामात्मनिष्ठतया योग्यतायाः प्रधानापूर्वनिष्ठतया सामानाधिकरण्याभावात् कार्यकारणभावानुपपत्तिरिति वाच्यम्; अङ्गापूर्वाणां स्वाश्रयसमवेतत्वसम्बन्धेन कारणतया सामानाधिकरण्योपपत्तेः । इदं तु बोध्यम् । अपूर्वस्य करणव्यापारत्वेऽपि कुठारादिकरणव्यापाराणामुद्यमननिपतनादीनां कुठार इव न करणनिष्ठत्वम्; यागनाशे सति तन्नाशापत्तेः । अतः फलसामानाधिकरण्यायात्मन्येव तत्कल्पनम् । तत्र च सन्ध्यावन्दनादिजन्यमपूर्वमेकस्मिन्नेव पुरुषे कल्पनीयम् । अग्निहोत्रादिजन्यं तु दम्पत्योस्सहाधिकारात् प्रत्येकमपूर्वद्वयम् । न च कर्तृत्वस्य व्यासज्यवृत्तित्ववत् अपूर्वमपि व्यासज्यवृत्ति किं न स्यादिति वाच्यम्; दम्पत्योरेकतरनाशे तन्नाशापत्तेः । अन्यतरस्य कीर्तनकर्मनाशाजलस्पर्शादौ तन्नाशापत्तेश्च । तस्मादपूर्वद्वयमेव युक्तम् । अन्यतरनिष्ठरोगनिवृत्त्यर्थं दर्शाद्यनुष्ठाने तु रोगिनिष्ठमेव तदपूर्वम् । तत्र कर्तृत्वस्य व्यासज्यवृत्तित्वेऽपीतरस्य फलभोक्तृत्वाभावान्न तन्निष्ठत्वमपूर्वस्य । अत एव फलिसंस्कारा अप्यन्यतरस्यैव । जातेष्ट्यां तु पूतत्वादिफलकमपूर्वं पुत्र एव । अकरणजनितप्रत्यवायापूर्वं पितर्येव । एवं गयाश्राद्धे कर्तरि पितृषु च । एवं गुरुप्रेरितशिष्यकर्तृकगयाश्राद्धे गुरौ गुरुपितृषु च । शिष्ये तु गुर्वाज्ञापरिपालनजन्यमन्यदेवापूर्वमिति याथायथमूह्यम् । तत्र गयाश्राद्धोत्तरक्षण एव पित्रादेस्तृप्तिसम्भवान्न पित्रादिष्वपूर्वं कल्प्यम् । एवं जातेष्टावपि । इष्ट्युत्तरक्षण एव पुत्रस्य पूतत्वसम्भवान्नापूर्वं कल्प्यमित्यपि केचित् । अन्यथासिद्धिं निरस्यति—**अवान्तरव्यापारत्वादेवेति** ॥ व्यापारेण

हितमेकमुत्पत्त्यपूर्वं,तेन च सर्वप्रयोगान्ते[1] परमापूर्वमपरमिति द्वे अपूर्वे । एवं प्रधानभेदेऽपि प्रतिप्रधानमुत्पत्त्यपूर्वभेदः । परमापूर्वं त्वेकमिति ज्ञेयम् । दर्शपूर्णमासयोस्तु 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयेन यागत्रयकरणतानां त्रिकान्तरनिरपेक्षाणां साहित्यावगतेः साहित्यस्य चैककार्यनिरूपितत्वं विना अनुपपत्तेः प्रतिसमुदायं समुदायापूर्वमपरम् । तेन च परमापूर्वमिति नवापूर्वसिद्धिः । एवमन्यत्रापि चातुर्मास्यद्वादशाहादिषु अपूर्वकल्पना ज्ञेया । अङ्गेषु तु सन्निपत्योपकारकाङ्गजन्यापूर्वाणां प्रधान एवोत्पत्त्यपूर्वजननानुकूलयोग्यताजनने उपयोगः । अन्तिमप्रधानगतयोग्यतया च नाशः । आरादुपकारकजन्यानां तु उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजनने उपयोगः । अव्यवहितं च कार्यं समुदायापूर्वसत्त्वे तदेव । समुदायापूर्वाभावे[2] परमापूर्वं स्वर्गाद्येव वा ज्ञेयम् । अन्तिमयोग्यतोत्पत्तौ च नाशः ।

व्यापारिणोऽन्यथासिद्ध्यसम्भवादिति भावः । प्रसङ्गादपूर्वाणि गणयति–**तदत्रेत्यादिना** । **यत्र**–सौर्यादौ ॥ **पूर्वोत्तराङ्गसहितादिति** ॥ पूर्वाङ्गं प्रयाजादिकम्; उत्तराङ्गमनूयाजादिकम् । पूर्वाङ्गैरेकमपूर्वं, उत्तराङ्गैरेकं, प्रधानाव्यवहितोत्तरमेकमुत्पत्त्यपूर्वं, **तेन**–उत्पत्त्यपूर्वेण । **सर्वप्रयोगान्ते परमापूर्वमिति** ॥ **द्वे**––प्रधानापूर्वे । पर्यग्निकृतोत्सर्गे तु पात्नीवते नास्त्येव परमापूर्वमिति भावः । **प्रधानभेदेऽपि**—पञ्चशारदीये, मारुतीयागेषु । तत्रैवोक्षयागेषु नास्ति परमापूर्वमिति ध्येयम् । दर्शपूर्णमासयोः षडुत्पत्त्यपूर्वाणि । त्रिकाभ्यां समुदायापूर्वे द्वे । तज्जन्यं परमापूर्वमेकमिति नवापूर्वी; परमापूर्वाभावे अष्टापूर्वी; समुदायापूर्वाभावे सप्तापूर्वी; त्रयाणामप्यभावे षडपूर्वीति चत्वारः पक्षा आकरे स्पष्टाः । तानुपपादयति—**दर्शेत्यादिना** । **साहित्येति** ॥ एकपदोपात्तत्वेनेत्यर्थः ॥ **प्रतिसमुदायमिति** ॥ अत एवाङ्गानामावृत्तिरिति भावः ॥ **तेन चेति** ॥ दर्शपूर्णमासाभ्यामिति द्वन्द्वावगतत्रिकद्वयसाहित्यस्य परमापूर्वप्रयुक्तत्वावश्यकत्वादिति भावः । चातुर्मास्येषु वैश्वदेवे पर्वणि अष्टावुत्पत्त्यपूर्वाणि । सर्वान्ते एकं समुदायापूर्वम् । एवं पर्वान्तरजन्यैस्त्रिभिस्समुदायापूर्वैरेकं परमापूर्वम् । द्वादशाहादिषु सोमयागाभ्यासापूर्वैःप्रत्यहमेकं समुदायापूर्वम्, द्वादशभिस्तैरेकं परमापूर्वम्,अहःपदेन समासेन च साहित्यद्वयप्रतीतेरित्याह—**एवमिति** ॥ **द्वादशाहादीति** ॥ आदिना गवामयनादिपरिग्रहः । प्रधानबहुत्वस्थले त्वाह––**अन्तिमेति** ॥ प्रधाने योग्यताधायकत्वमेव प्रयाजादीनां यद्यपि सम्भवति तथाऽप्युत्तराङ्गानां तदसम्भवात् सर्वसाधारणं प्रयोजनमाह—**आरादिति** ॥ एतत्कार्यतावच्छेदककोटौ अव्यवहितोत्तरत्वेनैव कार्याणां निवेशस्य दर्शसौर्यपात्नीवतेषु क्रमेण फलमाह—**अव्यवहितं चेति** ॥ त्रिकसाहित्यस्य उत्पत्त्यपूर्वत्रये व्यासज्यवृत्तियोग्यताधायकत्वेनोपपत्तेराह––**समुदायेति** ॥ तदनभ्युपगम इत्यर्थः । प्रयोगबहिर्भूतानामङ्गानां वैमृध-

१. सर्वाङ्गान्ते इति पाठान्तरम् । २. तदाभावे इति पाठान्तरम् ।

**यदि तु परमापूर्वे न तथा किञ्चित्प्रमाणमस्तीत्याशङ्क्येत ततो मास्तु तत् । अङ्गानां तु आरादुपकारकाणामुत्पत्त्यपूर्वाभावे फलानुकूलयोग्यताजननमेव कार्यमस्तु । सर्वथा सिद्धमपूर्वम् ॥ ३ ॥**

---

सौत्रामणीबृहस्पतिसवादीनामेषैव रीतिः उत्पत्त्यपूर्वाणामेव फलपर्यन्तस्थायित्वादिति ध्येयम् । ननु परमापूर्वाभावस्थले अङ्गापूर्वाणामुत्पत्त्यपूर्व एव फलानुकूलयोग्यतासम्पादकत्वे तस्यैव पुनः प्रयोगेऽपि तेषामेव सत्त्वान्न पुनरङ्गानुष्ठानं स्यादित्यत आह-**अन्तिमेति** ॥ द्वन्द्वावगतसाहित्यस्य फलनिरूपितत्वेनैवोपपत्तेराह—**न तथा किञ्चित्प्रमाणमिति** ॥ **तत्**—परमापूर्वम् । एकस्यैवोत्पत्त्यपूर्वस्य कीर्तनादिना नाशे फलानापत्तिरिष्टैव । फलह्रासकल्पने प्रमाणाभावादिति भावः । ननु सर्वमेतदपूर्वकल्पनं देहादिव्यतिरिक्तात्मसद्भावे सङ्गच्छते । तत्रैव तु प्रमाणाभाव इति चेत् अत्राभिधीयते । देहस्यात्मत्वे बाल्ये विलोकितस्य घटादेः स्थाविरे स्मरणानुपपत्तिः, शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वेन बाल्ये विलोकितुः स्थाविरेऽभावात् । एवं देहस्यात्मत्वे बालकस्य स्तन्यपाने प्रवृत्तिर्न स्यात्; इष्टसाधनताज्ञानस्य प्रवृत्तिहेतुतया तदानीमिष्टसाधनत्वानुभवासम्भवात् । मन्मते च जन्मान्तरानुभवजन्यसंस्कारेणादृष्टविशेषोद्बुद्धेन इष्टसाधनतास्मरणसम्भवान्नानुपपत्तिः । किं च देहस्यात्मत्वे मृतशरीरेऽपि प्रवृत्त्याद्यापत्तिः । तस्मान्न देह आत्मा ; नापीन्द्रियाणामात्मत्वम्; चक्षुर्दृष्टघटादीनां चक्षुर्नाशे स्मरणानुपपत्तेः । अन्यानुभूतेऽन्यस्य स्मरणासम्भवात् । योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामीति दर्शनकर्तृस्पर्शनकर्त्रोरभेदप्रतीतिविरोधापत्तेश्च । नापि मनस आत्मत्वम्; मनसोऽतीन्द्रियत्वेनातीन्द्रियसमवेतगुणानामप्रत्यक्षत्वेन तत्समवेतसुखादीनामप्रत्यक्षत्वापत्तेः । एवं मनस आत्मत्वे तस्य कर्तृतया करणान्तरकल्पनापत्तेश्च । तस्मात् देहेन्द्रियादिव्यतिरिक्तश्चेतनश्चिद्रूप आत्मेति सिद्धम् । स च प्रतिशरीरं भिन्नो विभुर्नित्यश्च । अणुत्वे सर्वदेहव्यापिसुखानुपलब्धिस्स्यात् । तदुक्तं वार्तिके "यद्यणुः परिकल्प्येत देहं न व्याप्नुयादसौ । ततश्च सर्वगात्रस्य सुखदुःखाद्यसम्भवः ॥" इति । मध्यमपरिमाणवत्त्वे सावयवत्वप्रसङ्गेनानित्यत्वापत्तेः कृतहानाकृताभ्यागमप्रसङ्गः । ज्योतिष्टोमादिकर्तुर्विनष्टत्वेन तत्कृतज्योतिष्टोमादेः फलाभावः । अन्यस्य स्वर्गप्राप्तिरिति अकृताभ्यागमः । एवमनित्यत्वे अनन्तावयवतन्नाशकल्पनागौरवं च । तदपि वार्तिके "सद्भावोऽवयवानां च तथा तेषामनन्तता" इत्यादि । तस्मात् विभुर्जीवः । तथा च भगवद्वचनं "नित्यस्सर्वगतस्स्थाणुरचलोऽयं सनातनः" इति । न च जीवस्य विभुत्वे "अङ्गुष्ठमात्रं पुरुषं निश्चकर्षयमो बलात्" इति भारतोक्तिविरोध इति वाच्यम्; तद्वचनस्य पतिव्रताप्रशंसापरत्वेन आत्मवपोत्खननाद्यर्थवादस्येव स्वार्थे तात्पर्याभावात् । "नित्यो विभुश्चेतन एष आत्मा" इति श्रुत्या विभुत्वोक्तेस्तद्विरोधेन स्वार्थे प्रामाण्याभावात् । तदप्युक्तं वार्तिके "अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः । तन्नित्यं

(४)—तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥ यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

'व्रीहीनवहन्ति' इत्यादौ पूर्ववदेव अवघातस्य फलभावनाकरणत्वमविवादम्।

---

विभुचेच्छन्तीत्यात्मनो विभुतेष्यते ॥" इति। नन्वात्मनो विभुत्वे स्वर्गादेर्नित्यसिद्धत्वेन तत्प्राप्त्यर्थं ज्योतिष्टोमादिर्व्यर्थस्स्यात्। न च शरीरावच्छेदेन तत्प्राप्त्यर्थं यागाद्यनुष्ठानमर्थवदिति वाच्यम्; शरीरस्य प्रत्यक्षविनाशित्वेन तदवच्छेदेन स्वर्गादिप्राप्तेर्वक्तुमशक्यत्वात्। न च शरीरान्तरप्राप्तिद्वारा स्वर्गादिप्राप्तिस्सम्भवतीति वाच्यम्; कार्यकारणयोर्वैयधिकरण्यापत्तेः। अन्यथा चैत्रानुष्ठितयागात् मैत्रस्य फलोत्पत्त्यापत्तेरिति चेन्न; सूक्ष्मशरीरावच्छेदेन यागस्वर्गयोस्सामानाधिकरण्योपपत्त्या तदवच्छेदेन स्वर्गादिप्राप्त्यर्थं यागाद्यनुष्ठानसम्भवात्। अत एव सूक्ष्मशरीरस्यानादितया जन्मान्तरानुभूतेष्टसाधनतास्मरणेन स्तन्यपानादौ प्रवृत्त्युपपत्तिः। ततश्चात्मनो विभुत्वेऽपि सूक्ष्मशरीरावच्छेदेन सर्वव्यवहारोपपत्तेः नान्यानुष्ठितेनान्यस्य फलापत्तिः। उक्तं चोत्तरमीमांसायां "तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्" इति। न चोत्तरमीमांसासिद्धान्तः कथं कर्मकाण्डे प्रवर्तत इति वाच्यम्; न्यायस्य सर्वत्र ग्राह्यत्वात्। अत एव भगवानुपवर्षः "आत्मास्तित्वं शारीरके वक्ष्यामः" इति कर्मकाण्डोपयुक्तमात्मास्तित्वं शारीरकमीमांसासिद्धमेव ग्राह्यमित्याह। तत्रायं विशेषः। कर्मकाण्डप्रतिपाद्यमात्मास्तित्वं तत्कर्तृत्वं चानुष्ठानोपयोगित्वात् वास्तवम्। उत्तरमीमांसाप्रतिपाद्यं कर्तृत्वादिकमारोपितत्वान्न वास्तवम्। वेदान्तप्रतिपाद्याद्वैतविरोधात्। तथा चात्मनो विभुत्वे मतद्वयेऽपि न कापि शङ्केत्युपवर्षाभिप्रायः। तस्मात् विभुरेवात्मा; तस्य सूक्ष्मशरीरावच्छेदेनैव कर्तृत्वभोक्तृत्वाद्युपपत्तिरिति आत्मवादवार्तिके स्पष्टम्। न च सूक्ष्मशरीराङ्गीकारे मानाभाव इति वाच्यम्; "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥" इति पूर्वाचार्योदाहृतवचनस्यैव प्रमाणत्वात्। अधिकमाकरे द्रष्टव्यमिति सङ्क्षेपः। सूत्रार्थस्तु, **पुनश्**शब्दो यत इत्यर्थे। चोद्यते कल्प्यत इति **चोदना**—अपूर्वम्। अस्तीति शेषः। कुतः कर्मणः फलस्य, **आरम्भः**—उत्पत्तिः, श्रूयत इति ॥

**तानि द्वैधं गुणप्रधानभूतानि** ॥ एवं सिद्धमपूर्वम्। तच्च धात्वर्थादेवेत्यपि। धात्वर्थस्यापूर्वजनकत्वे द्रव्यादेस्तदर्थत्वमित्यपि। इदानीं तदपवादः प्रस्तूयते इति सङ्गतिमभिप्रेत्याह—**व्रीहीनिति** ॥ आदिना "तण्डुलान् पिनष्टि" इत्यादिसङ्ग्रहः। उत्पाद्यं कर्म निरूप्य करणविभजनमुखेन विकार्यं निरूपयितुमारम्भः। अत्र किमवघातार्था व्रीहयः, उत व्रीह्यर्थोऽवघात इति संशयः। ननु अवघातो न व्रीह्यर्थः। अवघातेन व्रीहीणां जन्यत्वासम्भवात्।

तच्च फलं न व्रीहयः, अजन्यत्वात्। नापि वैतुष्यं, तज्जनकत्वस्य लोकसिद्धत्वेन अविधेयत्वात्। नापि पक्षे दलनादेरप्यर्थप्राप्तत्वेन तद्व्यावृत्तिफलको नियमः, तस्यापि वैफल्यात्। न च तस्यादृष्टार्थत्वं, अदृष्टस्यावश्यकल्पनीयत्वे शाब्दावघातादेव तत्कल्पनौचित्यात्। अतोऽदृष्टार्थमेव अवघातः। तदपि चादृष्टं न व्रीहिनिष्ठं, तत्त्वावच्छिन्नं प्रति आत्मत्वेन समवायिकारणत्वात्। अतः पूर्ववदेव व्रीहय एवावघातार्था इति व्रीहिविशिष्टोऽवघात एवादृष्टार्थमारादुपकारकत्वेन विधीयत इति प्राप्ते—

दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् वितुषीभाव एव अवघातफलम्। न च तस्याक्षेपादेव प्राप्तत्वेन विधिवैयर्थ्यम्। दलनाद्युपायान्तरव्यावृत्तिफलकनियमस्यैव अवघाता-

---

अतो द्वितीयाया अर्थान्तरपरत्वमित्याशयेनाह—**न व्रीहय इति** ॥ **अजन्यत्वात्**—व्रीहीणामवघाताजन्यत्वात्। ननु तेषामजन्यत्वेऽपि व्रीहिवैतुष्यस्यावघातेनोत्पत्त्या तस्यैव फलत्वसम्भवात् वैतुष्योद्देशेनावघातविधिरस्त्वित्यत आह—**नापीति** ॥ **लोकसिद्धत्वेनेति** ॥ लोकप्रसिद्धार्थे विधेः प्रयोजनाभावात् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादिति भावः। ननु वैतुष्यजनकत्वस्यावघाते लोकसिद्धत्वेऽपि पक्षे दलनेनापि वैतुष्यस्य दृष्टतया तद्व्यावृत्त्यर्थमवघातेनैव वैतुष्यं सम्पादयेदिति नियमो विधीयतामित्यत आह—**नापीति** ॥ **तस्यापि**—नियमस्यापि ॥ **वैफल्यादिति** ॥ फलाभावान्न तद्विधिसम्भव इत्यर्थः। नियमस्यादृष्टार्थत्वमाशङ्क्य परिहरति—**न चेति** ॥ अदृष्टस्य कल्पने श्रुतावघातादेव तत्कल्पनेन धात्वर्थकरणत्वसम्भवादार्थिकनियमस्यादृष्टार्थत्वमनुचितमिति भावः। तस्माददृष्टोद्देशेनैवावघातो विधीयतामित्याह—**अत इति** ॥ नन्वदृष्टार्थत्वेऽप्यवघातस्य अदृष्टस्य व्रीहिनिष्ठतया संस्कार्यत्वं व्रीहीणां सिद्धमेवेत्यत आह—**तदपि चेति** ॥ **आत्मत्वेनेति** ॥ आत्मन एव स्वसमवेतकार्यसामान्यं प्रति करणतायास्सुखादिस्थलकॢप्ततयाऽदृष्टार्थत्वेऽप्यवघातस्य व्रीहीणां संस्कार्यत्वाप्रतीतेरित्यर्थः। द्वितीयाया विनियोगभङ्गेन व्रीहिविशिष्टावघातोऽदृष्टार्थं विधीयत इति व्रीहयोऽवघातार्था इति पूर्वपक्षमुपसंहरति—**अत इति** ॥ **दृष्ट इति** ॥ जिज्ञासाधिकरण एवास्य न्यायस्य व्युत्पादनादिति भावः ॥ **वितुषीभाव एवेति** ॥ व्रीहिपदेन तण्डुलनिष्पत्तिद्वारकापूर्वसाधनीभूतवैतुष्यविशिष्टत्वेन व्रीहीणामुद्देश्यत्वात्। तत्र "व्रीहिभिर्यजेत, यवैर्यजेत", इत्यादिवचनैः प्राप्तान् व्रीह्यादीनुद्दिश्यावघातविधौ वचनाल्लोकाच्च प्राप्तविषये विधेरप्रसरात् अपूर्वसाधनीभूतवैतुष्यस्यैव दृष्टत्वात्फलत्वमिति भावः। नन्वपूर्वसाधनीभूतवैतुष्यस्य फलत्वे गौरवापत्तेः वैतुष्यमेव लाघवात्फलमिति वक्तव्यम्। ततश्च तदुद्देशेनावघातविधौ विधिवैयर्थ्यमिति शङ्कते—**न चेति** ॥ विधिवैयर्थ्यं परिहरति—**दलनादीति** ॥ अवघातेनैव वैतुष्यं सम्पादयेदिति धात्वर्थाश्रितो नियम एव अदृष्टोद्देशेन विधीयते। तन्नियमस्य

श्रितस्य अदृष्टार्थं विधेयत्वात् । अत एव कृष्णलचरौ अवघाताभावे तस्य लोपः । वस्तुतस्तु, श्रौतस्यावघातस्यैवाक्षेपतः पूर्वप्रवृत्त्या वितुषीभावार्थं विधेयत्वम् । अतश्चाक्षेपप्रतिबन्धात् दलनादिव्यावृत्तिफलको नियमः फलम् । वैतुष्यस्य च दलनेनापि जायमानत्वात् । वैयर्थ्यशङ्का तु अवघातादेव व्रीहिनिष्ठादृष्टस्याप्युत्पत्तिकल्पनान्निराकर्तव्या । तददृष्टस्य च जन्यत्वमात्रं लाघवात् कल्प्यते, न तु प्रयोजकत्वमपि; दृष्टरूपे वैतुष्य एव तत्कल्पनात् । अतः कृष्णलचरौ वैतुष्याभावे तल्लोपः । आर्थिकविध्यन्तरकल्पनात् एकया द्वितीययैव वा जन्यद्वयोक्तेर्नानेकोद्देश्यता । तत्तददृष्टस्य च द्वितीयादिधर्मिग्राहकप्रमाणेन व्रीह्यादिनिष्ठत्वस्यैवावगतेस्तत्त्वेनैव समवायिकारणता, नात्मत्वेन । अतश्चावघातस्यादृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूतव्रीह्युद्देशेन विधानात् सिद्धं संस्कारकर्मत्वम् । प्रयोजनं यागार्थव्रीह्यपेक्षया व्रीह्यन्तरमवघातार्थमुपादेयं पूर्वपक्षे । सिद्धान्ते नेति ॥ ४ ॥

---

दलनादिव्यावृत्तिफलकत्वान्न विधिवैयर्थ्यमित्यर्थः । **कृष्णलचरौ**—"प्राजापत्यं घृते चरुं निर्वपेत्, शतकृष्णलमायुष्कामः" इति विहिते सुवर्णतण्डुलचरौ । **अवघाताभावे**—वैतुष्याभावेन तदप्रवृत्तौ तल्लोपः । ननु श्रुतधात्वर्थं परित्यज्य अश्रुतनियमं विधाय तस्यादृष्टार्थत्वकल्पनमयुक्तमित्यस्वरसादाह—**वस्तुतस्त्विति** ॥ उत्पाद्यस्येव विकार्यस्यापि भाव्यत्वात् वैतुष्यरूपविकारविशिष्टत्वेन व्रीहीनुद्दिश्यैवावघातः श्रुतविधिना विधीयते, अवघातेन व्रीहीन् विकुर्यादिति । वैयर्थ्यनिरासाय अदृष्टविशिष्टत्वेन व्रीहीनुद्दिश्यावघात एव कल्पितविधिनापि विधीयत इत्यर्थः । तत्र चादृष्टविशिष्टव्रीह्युद्देशेनावघातविधानेनादृष्टस्यावघातजन्यत्वेऽपि नियमवैयर्थ्यानुपपत्तिप्रसूतत्वमात्रेण नियमादृष्टत्वम्, न तु नियमजन्यत्वादिति भावः ॥ **न तु प्रयोजकत्वमपीति** ॥ वैयर्थ्यस्य जन्यत्वकल्पनेनैव निरासे प्रयुक्तिनिमित्तत्वस्यापि कल्पने गौरवात् मानाभावाच्चेति भावः । उद्देश्यानेकत्वनिमित्तकवाक्यभेदं परिहरति—**आर्थिकेति** ॥ विध्यन्तरकल्पने गौरवादाह—**द्वितीययैव वेति** ॥ व्रीहीनिति द्वितीयया एकयैव जन्यद्वयप्रतिपादनाददृष्टवैतुष्यरूपफलद्वयविशिष्टत्वेन व्रीहीणामेकपदोपादानान्नोद्देश्यानेकत्वमिति भावः ॥ **नात्मत्वेनेति** ॥ अपूर्वं प्रत्येवात्मनः समवायिकारणत्वं, न त्वाधेयशक्तिरूपादृष्टं प्रति; मानाभावात् । अत एव प्रोक्षणादिजन्यादृष्टं प्रत्यपि व्रीहीणामेव समवायिकारणत्वमुपपद्यत इति भावः । उपसंहरति—**अतश्चेति** ॥ अवघातेनादृष्टवैतुष्योभयद्वारा व्रीहीन् संस्कुर्यादिति वाक्यार्थपर्यवसानात् व्रीह्यर्थोऽवघात इति सिद्धमिति भावः ॥ **व्रीह्यन्तरमिति** ॥ यागार्था वा अन्ये वा इत्यनियमः, सर्वौषधावघातवत् अदृष्टार्थत्वेन निरुप्तस्यापि व्रीहित्रयस्यावघाते बाधकाभावादिति ध्येयम् ॥ सूत्रार्थस्तु, **तानि**—आख्यातानि । **गुणाप्रधान-**

**(५)--धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥ तुल्यश्रुतित्वाद्वेतरैस्सधर्मा स्यात् ॥ १० ॥ द्रव्योपदेश इति चेत् ॥ ११ ॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥**

'व्रीहीन् प्रोक्षति' 'स्रुचस्सम्मार्ष्टि'[1] इत्यादौ दृष्टोपकारकत्वासम्भवात् द्वितीयायाश्च साध्यत्ववत्करणत्वेऽपि 'सक्तून् जुहोति' 'बल्बजान् शिखण्डकान् कुरु' इत्यादौ

**भूतानि**—गुणं प्रधानं च कर्म प्रकृत्याभिधेयत्वेन प्राप्तानि । अतो **द्वैधं**—द्विधा भवन्ति । भूधातोः प्राप्त्यर्थकात् "गत्यर्थाकर्मक" इत्यादिना कर्तरि क्तः । "आधृषाद्वा" इति णिजभावः । "द्वित्र्योश्च धमुञ्" इति विधार्थे धमुञ् । तत्र प्रधानकर्मलक्षणं दर्शयति सूत्रकार एव—**यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात्** । येषां यागीयद्रव्यदेवतासंस्कारार्थत्वं तदङ्गताबोधकप्रमाणाभावेन नेष्यते **तानि**—कर्माणि, **प्रधानानि**—स्वतन्त्रात्मनिष्ठादृष्टजनकानि सन्ति द्रव्यादिकं प्रति प्रधानभूतानि । द्रव्यादीनि च तत्र सिद्धसाध्यसमभिव्याहारन्यायेन तृतीयाश्रुत्यादिभिर्गुणभूतानि । क्रियां प्रति गुणभूतानि यथा, प्रयाजादिकं प्रयाजाज्यादीनीत्यर्थः । गुणकर्मलक्षणमाह स एव—**यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात्** ॥ पूर्वपक्षवैषम्ये "व्रीहीनवहन्ति" इत्यादिषु **यैः**—अवघातादिभिः, व्रीह्यादिर्**द्रव्यं** वैतुष्यादिदृष्टप्रयोजनवत्तया **चिकीर्ष्यते** उत्पादयितुमिष्यते, **तत्र**, अवघातादिकं **गुणः** । द्रव्यं प्रति गुणभूततया **प्रतीयेत** । कुतः? **तस्य**—अवघातादेः । **द्रव्यप्रधानत्वात्**—वैतुष्यादिद्वारा व्रीह्याद्यर्थत्वात् । तस्मादवघातादिकं गुणकर्मैवेति ॥

**धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्** ॥ पूर्वोक्तगुणकर्मप्रधानकर्मलक्षणयोरव्याप्त्यतिव्याप्तिभ्यामाक्षेपादाक्षेपिकी सङ्गतिः । उत्पाद्यविकार्यात्मककर्मद्वयनिरूपणानन्तरं संस्कार्यप्राप्यरूपकर्मद्वयनिरूपणस्य प्राप्तावसरत्वादवसरो वा सङ्गतिः । "व्रीहीन् प्रोक्षति" इत्यादौ किं प्रधानकर्मत्वं उत गुणकर्मत्वं इति संशयमभिप्रेत्य पूर्वपक्षमाह--**व्रीहीनित्यादि** ॥ आदिना "गार्हपत्यमुपतिष्ठते" इत्यादिपरिग्रहः । उत्पाद्यत्वासम्भवस्य स्पष्टत्वात् विकार्यत्वाभावमेव हेतुतया उपपादयति—**दृष्टेति** ॥ ननूभयविधकर्मत्वासम्भवे द्वितीयाया बाधितार्थकत्वापत्तिः अत आह--**द्वितीयाया इति** ॥ "पृषोदरादीनि यथोपदिष्टं" इत्यादिज्ञापकैर्व्याकरणस्य प्रयोगमूलकत्वावगमेनोपजीव्यप्रयोगानुसारेण साध्यत्व इव करणत्वेऽपि शक्तिकल्पनान्न बाधितार्थकत्वमिति भावः । द्वितीयायाः करणत्वे वैदिकलौकिकौ प्रयोगौ दर्शयति—**सक्तूनिति** ॥ सक्तुभिर्जुहोति बल्बजैश्शिखण्डकान् कुरु इतितदर्थः । बल्बजा इति

१. तै. ब्रा. ३. ३. १.

प्रयोगदर्शनात् पूर्वाधिकरणपूर्वपक्षवदर्थकर्मत्वमेव। बल्बजानां हि करोतेर्द्विकर्मकत्वापत्तेर्न साध्यत्वम्। अतः करणत्वमपि द्वितीयार्थः। अतश्च व्रीहिकरणकप्रोक्षणमेवादृष्टार्थं विधीयत इति प्राप्ते—

'कर्मणि द्वितीया' इत्यनुशासनात् 'घटं करोति' इत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थः, न करणत्वम्; अनेकशक्तिकल्पनाप्रसङ्गात्। कर्मत्वं च 'कर्तुरीप्सिततमं कर्म' इति सूत्रात् नेप्सितत्वरूपमेव। अपि तु 'तथा युक्तं चानीप्सितम्' इति सूत्रादीप्सितानीप्सितसाधारणं साध्यत्वमेव। यथा चैवं सति न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभ एव प्रदर्शितम्। अतश्च व्रीहीणां द्वितीयया साध्यत्वाभिधानात् यागाङ्गत्वावगमेन

---

तृणविशेषवाची नित्यपुंलिङ्गो बहुवचनान्तः शब्दः। "उलपा बल्बजाः प्रोक्ताः" इति हलायुधः। सुगन्धितृणविशेषा इति धूर्तस्वामी। तैर्मृण्मयपुत्तलिकानां शिखां रचयेत्यर्थात्॥ **द्विकर्मत्वापत्तेरिति**॥ 'कटं करोति, घटं करोति' इत्यादौ करोतेरेककर्मत्वस्यैवानुभवसिद्धतया द्विकर्मकत्वासम्भवादित्यर्थः॥ **न साध्यत्वमिति**॥ बल्बजानां सिद्धत्वेन साध्यत्वासम्भवात् करणत्वमेव द्वितीयावाच्यमित्यङ्गीकार्यमिति भावः। न च "काशान् कटं करोति, बल्बजान् शिखण्डकान् करोति" इत्यादौ काशादीनां सिद्धत्वेन करणत्वसम्भवेऽपि "दुग्धं दधि करोति, काष्ठं भस्म करोति' इत्यादौ दुग्धकाष्ठादिनाशानन्तरमेव दधिभस्माद्युत्पत्तेः दुग्धादीनां करणत्वासम्भवेन कर्मत्वस्यैव वक्तव्यतया करोतेर्द्विकर्मकत्वं दुर्वारमिति वाच्यम्; तत्रापि दुग्धादिपदानां लक्षणया दुग्धावयवपरतया दुग्धावयवानां दध्यादिकरणत्वसम्भवात्। यत् यद्द्रव्यध्वंसजन्यं तत् तदुपादानोपादेयमिति व्याप्तेः। न चैवमपि 'घटं शुक्लं करोति' इत्यादौ द्विकर्मकत्वं दुर्वारम्; घटस्य तदवयवस्य वा करणत्वासम्भवादिति वाच्यम्; तत्र शुक्लपदस्य शुक्लरूपविशिष्टे घटे लाक्षणिकतया घटपदस्य तात्पर्यग्राहकत्वेन एकस्यैव कर्मत्वस्य प्रतीत्या उक्तदोषाभावादिति दिक्। अनुशासनप्रयोगयोस्स्मृत्याचाररूपत्वेन ताभ्यामेकवाक्यतया सिद्धायाश्शक्तेर्विरोधेन केवलदुर्बलाचारमात्रेण शक्त्यन्तरकल्पनाया असम्भवात् सक्तूनित्यादौ लक्षणैवाश्रयणीया। प्रकृतोदाहरणे तु शक्त्यैव निर्वाह इत्याशयेन सिद्धान्तमाह—**कर्मणीत्यादिना**॥ साध्यं कर्मेत्येव सूत्रं स्यादित्यत आह—**यथा चेति**॥ 'अग्नेर्माणवकं वारयति' इत्यत्राग्निरीप्सितः, माणवकः ईप्सिततमः। तत्र "वारणार्थानामीप्सितः" इत्यनेनाग्नेरपादानसंज्ञया माणवकस्य कर्मसंज्ञया पञ्चमीद्वितीययोः प्राप्त्यर्थं प्रथमसूत्रस्यावश्यकत्वे शत्रुं हन्तीत्यादिसिद्ध्यर्थं द्वितीयसूत्रस्याप्यावश्यकतेति वैयाकरणैश्शब्दकौस्तुभे

चेप्सितत्वप्रतीतेस्तदुद्देशेन प्रोक्षणं विधीयते। दृष्टद्वारासम्भवेऽपि च अदृष्टमेव द्वारं व्रीहिनिष्ठं कल्प्यते। अत एव यत्र नोपयोगः क्लृप्तः न वा कल्पयितुं शक्यः यथा सक्तुषु तत्र द्वितीयया करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमस्यैवादृष्टार्थं विधानम्। न चानीप्सितकर्मत्वेनाप्यन्वयोपपत्तेर्न करणत्वलक्षणेति वाच्यम्; तथा सति अदृष्टोपकारस्यापि भावनायां कर्मत्वेन अन्वयावश्यम्भावे तस्य द्विकर्मकत्वापत्त्या उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेः। अतस्सक्तुकरणकहोमस्यारादुपकारकत्वेऽपि प्रोक्षणादेस्सन्निपत्योपकारकत्वमेव। प्रयोजनं पूर्ववत्॥ ५॥

---

समाहितमित्यर्थः॥ यागाङ्गत्वेति॥ "व्रीहीभिर्यजेत" "जुह्वा जुहोति" "गार्हपत्ये हवींषि श्रपयति" इत्यादिवचनैरिति शेषः॥ ईप्सितत्वेति॥ चेतनप्रवर्तकस्वभावस्य विधेरनीप्सितफले कर्मणि प्रवर्तकत्वासम्भवात्। स्वभाव्यार्थभावनाया ईप्सितभाव्यकत्वानुमापकत्वादित्यर्थः। उत्पाद्यविकार्यवत् संस्कार्योऽपि भाव्योऽस्तीत्याह—दृष्टद्वारेति॥ प्राप्यं तु 'गां दोग्धि पयः' इत्यादौ लोक एव प्रसिद्धमिति गार्हपत्यस्यापि कर्मत्वोपपत्तिः। ततश्च प्रोक्षणेन व्रीहीन् संस्कुर्यात्, उपस्थानेन गार्हपत्यं प्राप्नुयात् इत्यादिस्तदर्थ इति भावः। अत्र जुहोतेरकर्मकत्वेन सक्तूनामनीप्सितकर्मत्वस्याप्यसम्भवात् द्वितीयायाः करणत्वे लक्षणेति केचित्। तदयुक्तम्। दानादनपर्यायस्य तस्य कर्माकाङ्क्षानियतत्वात्। अत एव हुतः प्रहुतः पर्यावर्तेते। "कर्मणि निष्ठा" "तृतीया च होश्छन्दसि" इति कर्मणि तृतीयानुशासनं च सङ्गच्छते। अतः प्रकारान्तरेण समाधत्ते—तथा सतीति॥ न चार्थिकविध्यन्तरकल्पनान्नानेकोद्देश्यतेति वाच्यम्; तथाऽपि सक्तूनामुपयुक्तोपयोक्ष्यमाणान्यतरत्वाभावेन होमस्य तत्संस्कारकत्वासम्भवात् विधिवैयर्थ्यापत्तेः। ये तु मन्थिग्रहे विनियुक्तास्तेषां सोमरसेनैकीभावादेव होमासम्भवात्। तस्मात् करणत्वलक्षणाऽऽवश्यकीति भावः। अनयैव रीत्या बल्बजानित्यादावपि लक्षणा बोध्या॥ सन्निपत्योपकारकत्वमेवेति॥ तथा च न दृष्टोपकारकत्वं गुणकर्मलक्षणम्; नाप्यदृष्टोपकारकत्वं प्रधानकर्मलक्षणम्; किन्तु द्रव्यदेवतादिसंस्कारकत्वमेव गुणकर्मत्वम्; तद्भिन्नत्वे सत्यदृष्टार्थत्वं प्रधानकर्मत्वम् इति न पूर्वोक्ताव्याप्त्यतिव्याप्ती इति भावः॥ पूर्ववदिति॥ यवप्रयोगेऽपि प्रोक्षणार्थं व्रीहित्रयसम्पादनम्; स्रुग्विभ्रात्रपि तिसृणामेव सम्मार्ग इत्यादीत्यर्थः। सूत्रार्थस्तु—तुः शङ्कायाम्। धर्ममात्रे—केवलादृष्टार्थे कर्मणि। सम्मार्गादिः, कर्म स्यात्—प्रधानकर्म स्यात्। अनिर्वृत्तेः—दृष्टफलानुत्पत्तेः, प्रयाजादिवदिति।

(६)–स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥ अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥ वशावद्वा गुणार्थं स्यात् ॥ १५ ॥ न श्रुतिसमवायित्वात् ॥ १६ ॥ व्यपदेशाच्च ॥ १७ ॥ गुणश्चानर्थकस्स्यात् ॥ १८ ॥ तथा याज्यापुरोरुचोः ॥ १९ ॥ वशायामर्थसंयोगात् ॥ २० ॥ यत्वेति वाऽर्थवत्त्वात्स्यात् ॥ २१ ॥ न त्वाम्नातेषु ॥ २२ ॥ दृश्यते ॥ २३ ॥ अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥ शब्दपृथक्त्वाच्च ॥ २५ ॥ अनर्थकं च तद्वचनम् ॥ २६ ॥ अन्यश्चार्थः प्रतीयते ॥ २७ ॥ अभिधानं च कर्मवत् ॥ २८ ॥ फलनिर्वृत्तेश्च ॥ २९ ॥

'आज्यैस्स्तुवते' 'प्रउगं शंसति' इत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतया याज्यामन्त्रवदेव दृष्टार्थत्वात् अवघातादिवदेव सन्निपत्योपकारकत्वमिति प्राप्ते––

---

स्तुतशस्त्रयोस्तु संस्कारो याज्यावत् देवताभिधायित्वात् ॥ पूर्वोक्तगुणकर्मत्वापवादात् आपवादिकी सङ्गतिः। स्तोत्रशस्त्रयोः गुणकर्मत्वं प्रधानकर्मत्वं वेति सन्दिह्य पूर्वपक्षमाह––**आज्यैरित्यादिना** ॥ अग्निष्टोमे "आज्यैस्स्तुवते, पृष्ठैस्स्तुवते" इत्यादिना आज्यपृष्ठादिनामकानि द्वादशस्तोत्राणि विहितानि। एवं "प्रउगं शंसति, मरुत्वतीयं शंसति" इत्यादिना च प्रउगमरुत्वतीयादिनामकानि तावन्ति शस्त्राणि विहितानि। तत्र च सामविशिष्टमन्त्रैः स्तुतिः गुणिनिष्ठगुणबोधकशब्दप्रयोगः स्तोत्रम्। गुणविशेष्यकगुणिसम्बन्धप्रकारकबोधजनकशब्दप्रयोग इति यावत्। सामरहितैः केवलैर्मन्त्रैः स्तुतिः शस्त्रमित्युच्यते। याज्ञिकप्रसिद्ध्या च शक्तिग्रहः। ततश्च गुणिबोधं विना तन्निष्ठगुणाभिधानासम्भवेन गुणिनोऽप्यभिधानावश्यकत्वे लिङ्गाद्दृष्टार्थे गुणिप्रकाशन एवाभिधानयोर्विनियोगः कल्पनीयः स्तोत्रशस्त्राभ्यां यागीयदेवतादिकं प्रकाशयेदिति गुणकर्मत्वमेव। आदिना अग्नौ "मण्डूकेन विकर्षति" इति विनियुक्तमण्डूकपरिग्रहः। "आग्निमारुतं शंसति" इति विधाय तदवान्तरप्रकरणे "मण्डूकसूक्तं शंसति" इति शस्त्रोद्देशेन गुणविधिदर्शनात् ॥ **याज्यामन्त्रवदेवेति** ॥ "अग्निर्मूर्धा" इत्यादियाज्यामन्त्राणां दृष्टार्थत्वादिति भावः। "चैत्रो वक्रकेशान्तः" इति गुणविशेष्यकाभिधान एव स्तुतिबुद्ध्युत्पत्तेः, यो वक्रकेशान्तस्तमानयेति गुणमनूद्य गुणितात्पर्यकाभिधाने तदनुत्पत्तेश्च, प्रकृते गुणिपरत्वे स्तौतिशंसतिश्रुत्योर्बाधापत्तेर्गुणानां च

लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात् प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तोत्रशस्त्रपदवाच्यत्वात् एषां गुणिप्रकाशनतात्पर्यकत्वासम्भवेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम् । अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारकत्वात्तन्मन्त्राणां तदर्थत्वमेव । न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम् । लिङ्गादेव तादृक्त्वोपपत्तौ विधिवैयर्थ्यात् । एवं च माहेन्द्रयागसन्निधौ ऐन्द्री स्तुतिरुपपन्ना भवति । इतरथा शब्दसमवायिनी देवता विधिगतशब्देनैव

---

यागापूर्वसम्बन्धाभावेन तत्प्रकाशनपरयोस्तयोर्न दृष्टार्थत्वमित्याह—**लोक इत्यादिना** ॥ "प्रयाजशेषेण हवींष्यभिघारयेत्" इत्यत्र शेषश्रुत्यनुरोधेन तत्प्रतिपत्तिसिद्ध्यर्थं "प्रयाजशेषं हविष्षु क्षारयेत्" इति विभक्तिद्वयलक्षणया वाक्यार्थस्य चतुर्थे वक्ष्यमाणत्वात् तन्न्यायेन श्रुत्योर्बाधोऽपि युक्त इति शङ्कते—**न चेति** ॥ **लक्षणयेति** ॥ गुण्यभिधानलक्षणयेत्यर्थः । गुणिप्रकाशनलक्षणयेति केचित् । तदयुक्तम् । करणसमर्पकभाव्ये लक्षणाया व्यर्थत्वात् । अभिधानं उच्चारणम् । तदेव स्तोत्रादिपदवाच्यम् । तस्य भाव्यं प्रकाशनं तदर्थशाब्दबोधः । स्तोत्रकरणानि च सूक्तानीति विशेषात् । शाब्दबोधस्यैवाभिधानरूपत्वे तज्जन्यस्मरणस्य भाव्यत्वं द्रष्टव्यम् । परिहरति—**लिङ्गादेवेति** ॥ **विधिवैयर्थ्यादिति** ॥ गुणपरिसङ्ख्यार्थत्वाद्यसम्भवादित्यर्थः । ततश्च शक्यार्थयोरदृष्टार्थत्वाङ्गीकारेणैव विधिसार्थक्यं वक्तव्यमिति भावः । क्रमबाधरूपदूषणान्तरमाह—**एवं चेति** ॥ **उपपन्नेति** ॥ इन्द्रपदे महेन्द्रलक्षणां विनेति शेषः । याजुर्वेदिकमाहेन्द्रग्रहयागक्रमे सामवैदिकोत्तराग्रन्थे "अभि त्वा शूर नो नुमः" "न त्वा वामन्यो दिव्यो न पार्थिवः" इति मन्त्रद्वयं पठितम् । तच्चेन्द्रलिङ्गकं "ईशानमिन्द्र सुस्थुषो मघवन्निन्द्र वा[illegible]न्द्रत्वेन सम्बोधनात् । अतो न यागीयदेवताप्रकाशकम् । "माहेन्द्रं ग्रहं गृह्णाति" इति विधौ च महेन्द्रपदात्तद्धितश्रवणेन महेन्द्रस्यैव देवतात्वेनेन्द्रस्य देवतात्वाभावात् । "सोमयाजिनस्संवत्सरमिन्द्रं यजेत, ततो महेन्द्रम्" इति व्यवस्थादर्शनेन शब्दभेदेन च देवताभेदस्य स्थापितत्वात् । न चेन्द्रो वृत्रं हत्वा महेन्द्रोऽभवदिति श्रौताख्यायिकया "माहेन्द्रं च ग्रहं लेभे इन्द्रो दिविषदां पतिः" इति महाभारताख्यायिकया च इन्द्रस्यैव महेन्द्रत्वप्रतीतेर्न तयोर्भेद इति वाच्यम्; तस्यार्थवादत्वेन स्तुतावेव तात्पर्यात् । उभयोर्गुणसाम्येनैवोपपत्तेः । अन्यथा विधिशब्दस्येति दाशमिकाधिकरणे आवाहनादिनिगमेषु पर्यायाणां नोच्चारणमिति सिद्धान्तितत्वेन तद्विरोधापत्तेः । न च "सा वा एषा सर्वदेवत्या यदजावशावायव्यामालभेत" इत्यजावशाशब्दचोदिते कर्मणि "छागस्य वपाया मेदसोऽनुब्रूहि" इति मन्त्रस्य प्रवृत्तिवत् प्रकृतेऽपि

**निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम्। अतो यत्रेन्द्र एव देवता तत्रोत्कर्षापत्तिः ; सामान्यसम्बन्धबोधकप्रमाणाभावेन वा मनोतास्थाग्निशब्दवत् लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः। तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे॥ ६॥**

---

तत्सम्भवान्न विरोध इति वाच्यम्; वशाशब्दार्थे विशेषरूपे छागशब्दस्य चोदकप्राप्तस्य सामान्यरूपेण सम्बन्धसम्भवात्। वशाशब्देनोपलक्षणे चोदकबाधात् तत्र वशाशब्दपरित्यागसम्भवेऽपि प्रकृते माहेन्द्रविधिगतमहत्त्वपरित्यागे प्रमाणाभावेन वैषम्यात्। ततश्च स्तोत्रशस्त्रयोर्देवताप्रकाशनार्थत्वे पूर्वोक्तमन्त्रद्वयस्य महेन्द्राप्रकाशकतयाऽङ्गत्वं न स्यादिति भावः॥ **उत्कर्षापत्तिरिति**॥ पूषानुमन्त्रणमन्त्रवत् प्रकरणाद्बहिर्भावस्स्यादित्यर्थः। प्राकरणिकेन्द्रदेवताकाभ्यासान्तरे प्रकरणस्यैव सामान्यसम्बन्धबोधकत्वेऽपि तदवान्तरप्रकरणपठितमन्त्रान्तरावरोधेन एतयोर्निवेशायोगादिति भावः। न च 'नामैकदेशे नाम ग्रहणं' इति न्यायात् राजा महाराज इत्यादौ राजपदेन महाराजस्येव इन्द्रपदेनापि महेन्द्रग्रहणसम्भवेन तयोर्भेदासम्भवान्नोत्कर्ष इति वाच्यम्; तथा सतीन्द्रपदेन महेन्द्रपदं लक्षयित्वा तेन महेन्द्रप्रकाशने द्विरेफादिपदवत् लक्षितलक्षणापत्तेः। किं च तयोर्भेदाभावे दर्शयागे "बहुदुग्धीन्द्राय देवेभ्यः, बहुदुग्धि महेन्द्राय देवेभ्यः" इति इन्द्रमहेन्द्रयोर्निर्देशभेदेन मन्त्रद्वयाम्नानानुपपत्तेः। "एन्द्र सानसिं, प्रससाहिषे पुरुहूत" इतीन्द्रयाज्यानुवाक्ययोः "महां इन्द्रो य ओजसा, महां इन्द्रोनृवदत्" इति महेन्द्रयाज्यानुवाक्ययोश्च भेदेनाम्नानानुपपत्तेश्च। विकल्पस्याष्टदोषदुष्टत्वेनायुक्तत्वाच्च तयोर्भेदावश्यम्भावेनोत्कर्षापत्तिर्दुर्वारेत्याशयः॥ **मनोतास्थेति**॥ अग्नीषोमीये पशौ "त्वं ह्यग्ने प्रथमो मनोता" इति मन्त्रस्थाग्निपदस्य अग्नीषोमदेवतालक्षकत्ववदित्यर्थः। न चेष्टापत्तिः। लक्षणाया एव दोषत्वात्। न च दृष्टार्थत्वाय स्तौतिशंसत्योर्विधिवाक्यस्थयोरपि लक्षणां स्वीकुर्वन्तं प्रति मन्त्रगतेन्द्रपदस्य महेन्द्रलक्षणायाः क्रमबाधनिरासकत्वेनानुगुणाया आपादनं सन्दर्भाशुद्धमिति वाच्यम्; विधिवैयर्थ्यस्य प्रबलस्य सत्त्वेनाभ्युच्चययुक्तेरप्युपन्याससम्भवात्। किं च "मनोतायै हविषोऽवदीयमानस्यानुब्रूहि" इति प्रैषे पशुदेवतावाचिमनोतापदेन हविर्देवतास्मरणे मन्त्रस्य तात्पर्यावगमात् "अग्ने त्वं मनोता" इत्युक्तेर्बाधितार्थकत्वनिरासाय "यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या" इति वचनानुसारेण तत्र लक्षणाया युक्तत्वेऽपि प्रकृते तथाविधवचनाभावाल्लक्षणा न युक्तेति भावः। अग्निष्टुति "आग्नेया ग्रहा भवन्ति" इति विधानात् स्तोत्रशस्त्राणां देवताप्रकाशनार्थत्वे यथादेवतमूहापत्तिरिति प्रयोजनस्य दशमे वक्ष्यमाणत्वात् तदनभिधायैवोपसंहरति—**तस्मादिति**॥ नन्वेवमपि दृष्टार्थत्वलाभात् पूषानुमन्त्रणमन्त्रवत् उत्कर्ष एवाङ्गीकर्तुं युक्त इति गुणकर्मत्वमेव स्तोत्रशस्त्रयोस्स्यात्। न च लिङ्गादुत्कर्षे क्रमसन्निधिबाधस्स्यादिति वाच्यम्; श्रुतिलिङ्गाधिकरणन्यायेन क्रमाद्यपेक्षया लिङ्गस्य बलवत्त्वेन तदु-

(७)—विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥ अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥

गुणकर्मप्रधानकर्मविधायकाख्यातद्वये निरूपिते प्रसङ्गादभिधायकं तृतीय-

---

पपत्तेः। न चाग्निमारुतादावाम्नातेषु याम्यपित्र्यादिमन्त्रेषु कुसुम्भसूक्तमण्डूकसूक्ताक्षसूक्तमूषकसूक्तादिषु प्रकृतकर्मणोऽन्यत्रार्थवत्त्वाभावेनादृष्टार्थवत्त्वमावश्यकमिति तन्न्यायेनान्येषामप्यदृष्टार्थत्वमेवोचितमिति वाच्यम्; याम्यमन्त्राणां यमयज्ञे, पित्र्याणां महापितृयज्ञादौ, मण्डूकसूक्तस्य "मण्डूकेन विकर्षति" इति विधानात् महाग्निचयने, अक्षसूक्तस्य 'अक्षैर्दीव्यति' इति विधानात् राजसूये, मूषकसूक्तस्य "आखुस्ते पशुरिति ब्रूयात्" इति विधानात् यूपैकादशिन्यां च दृष्टार्थत्वसम्भवेनोत्कर्षस्यैव युक्तत्वात्। कुसुम्भकसूक्तादीनां कतिपयानां कुत्रापि विनियोगासम्भवात् केवलादृष्टार्थत्वेऽपि सर्वेषामदृष्टार्थत्वस्यायुक्तत्वादिति चेन्न; "द्वादशस्तोत्रो, द्वादशशस्त्रोऽग्निष्टोमः" इति सङ्ख्यानिर्देशानुपपत्तेः। तयोर्दृष्टार्थत्वे प्रकाशनस्यैकत्वेन द्वादशत्वासम्भवात्। अदृष्टार्थत्वे तु अदृष्टभेदात्तद्भेदोपपत्तिः। एवं दृष्टार्थत्वे उत्कर्षापत्त्या द्वादशत्वानुपपत्तिर्दुर्वारा। किं च गुणकर्मत्वे अग्निष्टुति "आग्नेया ग्रहा भवन्ति" इति ग्रहचोदनयैवाग्नेयीनामृचां प्रकाशनार्थत्वस्य सिद्धतया "आग्नेयीषु स्तुवते" इति पुनर्वचनमनर्थकं स्यात्। अदृष्टार्थत्वे त्वनाग्नेयीनामपि प्रकृतितः प्राप्तौ तन्निवृत्त्यर्थं वचनं सार्थकम्। अपि च "स्तुतमनुशंसति सम्बद्धे वै स्तोत्रशस्त्रे" इति स्तुतशस्त्रयोः प्रतीयमानं पौर्वापर्यमनुपपन्नं स्यात्। प्रकाशनस्यैकत्वेन एकार्थत्वाद्विकल्पस्यैवापत्तौ तदनुपपत्तेः। किं च "अग्निहोत्रं जुहोति, समिधो यजति" इत्यादाविव "पृष्ठान्युपयन्ति, प्रउगं शंसति" इत्यादौ द्वितीयया ईप्सिततमत्वं प्रतीयते। ततश्चादृष्टार्थत्वे फलप्रत्यासन्नत्वादुपपद्यते। गुणकर्मत्वे देवताप्रकाशनद्वारा यागजन्यापूर्वार्थत्वात् ईप्सिततमं न स्यात्। अपि च "स्तुतस्य स्तुतमसि, शस्त्रस्य शस्त्रमसि" इति मन्त्रयोः "इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम्। सा मे सत्याशीर्देवेषु भूयात् ब्रह्मवर्चसं मा गम्यात्" इति स्तुतशस्त्रे प्रतिफलं प्रार्थ्यते। तच्च स्तुतशस्त्रयोः प्रधानत्वे घटते। देवताप्रकाशनार्थत्वे देवतां प्रत्येव फलं प्रार्थ्येत। न हि लोके स्वामिनि स्थिते कश्चित् दासान् प्रार्थयन् दृष्टः। तस्मात् प्रधानकर्मणी स्तुतशस्त्रे अदृष्टार्थे इति सिद्धम्। सूत्रार्थस्तु, स्तुतशस्त्रयोस्संस्कारो देवतास्मरणरूपस्स्यात्, "अग्निर्मूर्धा, भुवो यज्ञस्य" इत्यादि याज्यावत् देवताभिधानार्थत्वादिति ॥

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ स्विष्टकृदुत्तमप्रयाजपशुपुरोडाशाद्याश्रयिकर्मणामंशभेदेन गुणभूतत्वं प्रधानभूतत्वं च सम्भवतीति न चित्ररूपवदन्यप्रकारत्वमित्यभिप्रायेण सूत्रे तानि द्वैधमित्येवोक्तम्। यत्तु "तानि त्रैधं गुणप्रधानाश्रयीणि" इति कस्यचित् सूत्रान्यथाकरणं तत् साहसमेवेति ध्वनयन्नाह—गुणकर्मप्रधानकर्मेति ॥ प्रसङ्गादिति ॥

माख्यातं निरूप्यते । मन्त्रगतानां ब्राह्मणगतानां च यच्छब्दादिसमभिव्याहृतानामपि विधायकत्वम् । सत्यामपि च प्रमाणान्तरेण प्राप्तौ अभ्यासात् कर्मभेद इति प्राप्ते--

'देवांश्च याभिर्यजते'[1] 'यस्योभयं हविरार्तिमार्छति'[2] इत्यादौ यच्छब्दस्य प्राप्तिद्योतकत्वेन स्वविषये अज्ञातज्ञापनरूपविधिप्रतिबन्धकत्वं स्पष्टम् । एवं 'अग्नीदग्नीन्विहर'[3] इत्यादौ सम्बोधनविभक्तेरभिमुखश्रोतृमात्रविषयाया अभिमुखानभिमुखसाधारणविधिविरोधित्वम् । दामीत्यादेरुत्तमपुरुषस्य च परप्रवर्तनरूपविधिविरोधित्वम् । अतो विधायकत्वासम्भवात् मन्त्रगतानां स्मारकत्वम् । ब्राह्मणगतानां निमित्तादिप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ॥ ७ ॥

---

विधायकाख्यातद्वयनिरूपणे कृते आख्यातत्वेनाभिधायकाख्यातस्याप्युपस्थितत्वादित्यर्थः । वेदवाक्यावयवनिरूपणानन्तरमवयविविचाराय वेदविभागप्रदर्शनार्थमस्यारम्भ इति हृदयम् । यच्छब्दादिसमभिव्याहृतानां मन्त्रगताख्यातानां ब्राह्मणगताख्यातानां च विधायकत्वमस्ति न वेति सन्दिह्याह--**मन्त्रगतानामित्यादि** ॥ ब्राह्मणत्वमन्त्रत्वे न विधायकत्वतदभावव्याप्ये "जर्तिलयवाग्वा वा जुहुयात्" "कपिञ्जलानालभेत" इत्यादौ व्यभिचारात् । अतो यच्छब्दादिसमभिव्याहृतपरौ सूत्रस्थविधिमन्त्रशब्दौ व्याख्येयावित्यभिप्रायेणाह--**यच्छब्दादीति** ॥ आदिना सम्बोधनोत्तमपुरुषपरिग्रहः ॥ **विधायकत्वमिति** ॥ "यदाग्नेयः" इत्यादिवाक्यवत् यच्छब्दसत्त्वेऽपि विधायकत्वं सम्भवतीत्यभिमानः । ननु प्रमाणान्तरेण प्राप्तत्वात् विध्यानर्थक्यम्; "अप्राप्ते शास्त्रमर्थवत्" इति न्यायादित्यत आह--**अभ्यासादिति** ॥ तथापि "समिधो यजति" "तनूनपातं यजति" इत्यादिवदभ्यासात् कर्मभेदसिद्धेरेव प्रयोजनत्वान्नानर्थक्यमिति भावः । "न ता नशन्ति" इत्यस्या ऋचस्तृतीयचरणमात्रमुपयुक्तत्वादुदाहरति--**देवांश्चेति** ॥ याभिः गोभिर्देवान् यजते, याश्च गा ब्राह्मणेभ्यो ददाति च, चिरमेव ताभिस्सह गोपतिर्यजमानः परलोकेऽवतिष्ठत इत्यर्थः ॥ **स्पष्टमिति** ॥ "यदाग्नेयः" इत्यादौ सर्वथैवाप्राप्तत्वात् विधिरिष्ट एवेति भावः ॥ **अभिमुखेति** ॥ सम्बोधनस्थले अभिमुखं प्रत्येव वाक्यप्रवृत्तेस्सर्वसाधारणविधिविरोधित्वमित्यर्थः । वस्तुतस्तु नानाशाखागतवाक्यानां तत्तच्छाखाध्यायिपुरुषान् प्रतीव अभिमुखपुरुषं प्रति विधेः प्रवृत्तिसम्भवात् "सत्यं वद, धर्मं चर" इत्यादिविधिदर्शनाच्च । विहरेति लोटः प्रैषार्थकत्वेनैव विधिप्रतिबन्धकत्वं वक्तव्यम् । परप्रवर्तने तिङादयुत्तमपुरुषस्यात्मनि प्रवर्तनाबोधकत्वं तु लक्षणयेति द्रष्टव्यम् । उपसंहरति--**अत इति** ॥ सूत्रार्थस्तु, **विधिमन्त्रयो**रित्युपलक्षणं विधिमन्त्रब्राह्मणगतानामाख्यातानाम् । **ऐकार्थ्यं**--विधानार्थत्वम् । **ऐकशब्द्यात्**--एकजातीयशब्दत्वात् । तत्र किञ्चिद्विधायकं किञ्चिदनुवादकमिति वैरूप्ये प्रमाणाभावादिति ॥

---

१. तै. ब्रा. २. ४. ६. २. तै. ब्रा. ३. ७. १. ३. तै. सं. ६. ३. १.

## (८)—तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

**मन्त्रप्रसङ्गात् 'अहे बुध्निय मन्त्रं मे गोपाय" इति वेदप्रयुक्तमन्त्रशब्दार्थनिर्णयाय तल्लक्षणमुच्यते—यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिका उपस्थितिर्विषयतासम्बन्धेन स मन्त्रः । वाच्यतावच्छेदकं च मन्त्रत्वमखण्डोपाधिर्वेदत्ववत् ॥ ८ ॥**

**तच्चोदकेषु मन्त्राख्या** ॥ वेदविभाजकधर्मयोः क्रमेण स्वरूपं दर्शयति सूत्रद्वयेन । अत्र भाष्यकारेण मन्त्रस्वरूपापरिज्ञाने मन्त्रगताख्यातानामनुवादकत्वं व्युत्पादयितुमशक्यमिति इदमर्थतो विधिमन्त्राधिकरणात्पूर्वं द्रष्टव्यमित्युक्तम् । तदयुक्तम् । "मन्त्रत्वस्य न्यायानुपयुक्तत्वात्" इत्याचार्यैर्दूषयित्वा "प्रासङ्गिकमिदम्" इत्युक्तम् । तत्सूचयितुमाह—**मन्त्रप्रसङ्गादिति** ॥ ननु वेदार्थनिर्णयार्थं प्रवृत्तायां मीमांसायां लक्षणकथनमसङ्गतमित्यत आह—**अहे बुध्नियेति** ॥ आधाने आवसथ्याग्नेरिदं सम्बोधनम् । तथा च वेदप्रयुक्तमन्त्रपदघटितमन्त्रेणाग्निसम्बोधनेन मन्त्रलक्षणं वेदार्थविचाररूपमिति न दोष इति भावः । अत्र प्रयोगकालेऽर्थस्मारकत्वस्यानृक्सामादिषु प्रयाजादिविधिषु क्रमस्मारकेषु चाव्याप्त्यतिव्याप्तिग्रस्तत्वात् प्राचीनलक्षणमुपेक्ष्य लक्षणान्तरमाह—**यत्रेति** ॥ **उपस्थितिः**—ज्ञानम् । विशेष्यतासम्बन्धेन तादृशज्ञानवत्त्वं तादृशज्ञानविशेष्यतावत्त्वं वा मन्त्रलक्षणम् । मन्त्रत्वप्रकारकोपस्थितिविषयत्वस्य मन्त्राभासेषु भाषामन्त्रेष्वपि सत्त्वादतिव्याप्तिस्स्यात् । अतो मन्त्रपदवाच्यत्वोपस्थितिपर्यन्तानुधावनम् । न च भाषामन्त्रेषु मन्त्रत्वप्रकारकभ्रमसत्त्वेऽपि मन्त्रत्वप्रकारकप्रमाविषयत्वाभावात् तद्विवक्षयैव दोषवारणसम्भवे किं पदवाच्यत्वोपस्थितिपर्यन्तनिवेशनेनेति वाच्यम् ; एतदर्थसूचनायैव तत्पर्यन्तानुधावनात् । एतेन मन्त्रपदवाच्यत्वप्रकारकभ्रममादायातिव्याप्तिरिति निरस्तम् । विषयतासम्बन्धेन मन्त्रत्वप्रकारकप्रमात्वस्यैव लक्षणत्वात् । न चैवमपि लाघवात् मन्त्रत्वमेव लक्षणमस्त्विति वाच्यम् ; तथा सति लक्षणलक्ष्यतावच्छेदकयोरैक्यापत्तेः । न चेष्टापत्तिः । लक्षणेनेतरभेदसाधने पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गेन सिद्धसाधनापत्तेः । न चैवमपि भाषामन्त्रेष्वपि मन्त्रपदप्रयोगदर्शनेन मन्त्रत्वप्रकारकप्रमाविषयत्वसत्त्वादतिव्याप्तिर्दुर्वारेति वाच्यम् ; गौण्या शक्तिभ्रमेण वा तत्र मन्त्रपदप्रयोगेणोक्तलक्षणासत्त्वात् । न च तेषां मन्त्रत्वे किं बाधकमिति वाच्यम् ; तस्येहानिरूपणीयत्वात् । वेदार्थनिरूपणाय प्रवृत्त आचार्यः किमिति भाषामन्त्रान् सङ्गृह्णीयात् । अत एव भगवदापस्तम्बहिरण्यकेशिप्रभृतिभिः "मन्त्रब्राह्मणयोर्वेदनामधेयं" इति वेदविभागपूर्वकं मन्त्रलक्षणमुक्तं (इति) । अस्मत्कृतहिरण्यकेशिसूत्रव्याख्यायां विस्तरः । मन्त्रत्वघटितत्वादुक्तलक्षणस्यात्माश्रयः स्यात् । अतो मन्त्रत्वं निर्वक्ति—**मन्त्रत्वमिति** ॥ जातिसाधकप्रमाणाभावादाह—**अखण्डेति** ॥ यत्तु वेदत्वमन्त्रत्वयोर्ब्राह्मणे तान्त्रिकमन्त्रे च परस्पराभावसमानाधिकरणयोर्वैदिकमन्त्रे साङ्कर्यादाहेति

---

१. तै. ब्रा. १. २. १.

**(९)—शेषे ब्राह्मणशब्दः ॥ ३३ ॥**

**'एतद्ब्राह्मणान्येव पञ्च हवींषि'[1] इति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं तल्लक्षणमपि प्रसङ्गादेव । मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणत्वम् ॥ ९ ॥**

**(१०)—अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागस्स्यात् ॥ ३४ ॥**

**ऊहप्रवरनामधेयानां सत्यपि प्रयोगकाले अर्थस्मरणार्थमुच्चार्यत्वे मन्त्रपदैक-**

कैश्चिदवतारितं तदयुक्तम् । तान्त्रिकमन्त्रे मन्त्रपदस्य गौण्यादिनैव प्रयोगेण तत्र मन्त्रत्वाभावात् । अन्यथा मन्त्रत्वस्य वेदविभाजकोपाधित्वानुपपत्तेः । न हि वेदत्वाव्याप्यधर्मेण वेदविभागस्सम्भवति । तथा क्वाप्यदर्शनादिति ध्येयम् । सूत्रार्थस्तु, **तत्**—अभिधानम् । **चोदकं**—प्रयोजकं येषां तेषु **मन्त्राख्येति** ॥

**शेषे ब्राह्मणशब्दः** ॥ मन्त्ररूपवेदभागस्य लक्षणमुक्त्वा ब्राह्मणात्मकवेदभागं लक्षयितुमाह—**एतदिति ॥ वेदप्रयुक्तेति** ॥ ततश्च वेदस्य ब्राह्मणशब्दार्थनिर्णयार्थत्वात् नासङ्गतिरित्यर्थः ॥ **प्रसङ्गादेवेति** ॥ एकभागनिरूपणानन्तरं भागान्तरस्योपस्थितत्वादित्यर्थः ॥ **मन्त्रातिरिक्तेति** ॥ वेदत्वस्य मन्त्रेऽपि सत्त्वान्मन्त्रातिरिक्तत्वनिवेशः । मन्त्रातिरिक्तत्वस्य लौकिकवाक्येऽपि सत्त्वात् वेदत्वनिवेश इति भावः । अत्र केचित् । प्रथमान्त्याधिकरणसूत्रे विधिशेषत्वेन कल्पितस्य भागस्यापि वेदैकदेशत्वोक्तेरूहादेरपि तथात्वात् तत्रातिव्याप्त्यापत्तेर्नेदं लक्षणं युक्तमिति मन्त्रवदेव ब्राह्मणं लक्षणीयमित्याहुः । तच्चिन्त्यम् । सामर्थ्याधिकरणे सामर्थ्यकल्पितपदस्य विध्येकवाक्यतया धर्मप्रमाणत्वोक्तिमात्रेण वेदत्वासिद्धेः एकदेशत्वोक्तेश्च, एकदेशतुल्यत्वाभिप्रायकत्वेनौपचारिकत्वात् । ऊहादावपि नावमिकाधिकरणन्यायेन पौरुषेयत्वेनापौरुषेयत्वसमनियतवेदत्वाभावात् अतिव्याप्त्यसम्भवादिति ध्येयम् । सूत्रं तु स्पष्टम् ॥

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागस्स्यात्** ॥ तच्चोदकसूत्रादापाततः प्रसक्तं मन्त्रत्वमपोद्यत इति सङ्गतिरित्यभिसन्धायाह—**ऊहेत्यादि** ॥ "अग्नये जुष्टं निर्वपामि" इत्यादिमन्त्रस्य सौर्यादिविकृतिषु प्राप्तस्य समवेतार्थत्वाय "सूर्याय जुष्टं" इत्येवं प्रक्षिप्यमाणं सूर्यादिपदमूहः । तथा "अग्निर्देवो होता" इति मन्त्रे देवतरसवत् देवश्रवसवत् विश्वामित्रवदिति प्रक्षिप्यमाणो यजमानार्षेयः प्रवरः, तथा सुब्रह्मण्यानिगदे ईश्वरशर्मा यजते, महादेवशर्मणः पुत्रो यजते, शङ्करशर्मणः पौत्रो यजते, परमेश्वरशर्मणो नप्ता यजते, गौरम्मदायाः पुत्रो यजते इत्यादीनि प्रक्षिप्यमाणानि नामानि नामधेयानि ; न तु सूक्तवाकादौ निर्दिश्यमानानि । तत्र "आशास्तेऽयं यजमानोऽसौ" इति सर्वनामनिर्देशस्य तत्तन्नामाम्नानपर्यवसितत्वेन तेषां मन्त्रत्वावश्यम्भावात् । अतस्सर्वनामरहितविधिविहितानि नामधेयान्येवात्रोदाहरणमिति बोध्यम् ।

१. तै. ब्रा, १. ७. १.

वाक्यत्वे च स्वरूपेण वेदेऽपठितत्वात् अभियुक्तप्रसिद्धयविषयत्वेन नैषां मन्त्रत्वम् । अतश्च नैषां भ्रेषे मन्त्रभ्रेषनिमित्तं प्रायश्चित्तम् । अपि तु अङ्गभ्रेषनिमित्तकमेव ॥ १० ॥

---

इदं च "इषे त्वा" इत्यादौ छिनद्मि इत्यध्याहृतपदादेरुपलक्षणमित्यपि वदन्ति । अत्र ऊहादीनां मन्त्रत्वं उत नेति संशये पूर्वपक्षं सूचयन्नाह—**सत्यपीति** ॥ एतेषां मन्त्रत्वं किं प्रयोगकाले अर्थस्मरणार्थमनुसन्धीयमानत्वात्, (मन्त्रपदैकवाक्यत्वात्,) अथवा मन्त्रकार्यकरत्वात् ? नाद्यः; प्रयोगबोधकवाक्यानामपि मन्त्रत्वापत्तेः । "इषे त्वा" इत्यादौ छिनद्मि इत्यादेरपि मन्त्रत्वापत्तेश्च । अत एव न द्वितीयोऽपि; 'न हि गोसमुदायप्रविष्टो गर्दभो गौर्भवति' इति न्यायात् । नापि तृतीयः; "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इति महाव्रते क्रियमाणरथघोषस्य "असर्ज्यसर्जी" इति मन्त्रकार्यस्तोत्रोपाकरणार्थत्वेन तस्यापि मन्त्रत्वापत्तेः । एवं दुन्दुभिघोषस्यापि मन्त्रत्वापत्तिः । तस्मान्नैषां मन्त्रत्वमित्याशयेन सिद्धान्तमाह—**स्वरूपेणेति** ॥ सूर्यादिपदानां "सूर्याय जुष्टं" इत्येवं वेदे पाठाभावादित्यर्थः ॥ **अभियुक्तेति** ॥ शिष्टैर्मन्त्रत्वेन प्रयुज्यमानत्वाभावेन मन्त्रपदजन्यप्रमाविषयत्वाभावादित्यर्थः । उपसंहारमुखेनाधिकरणप्रयोजनमाह— **अतश्चेति** ॥ **अङ्गभ्रेषेति** ॥ इदं च प्रायश्चित्तं सूर्यादिपदभ्रेष एव । इतरांशानां भ्रेषे तु मन्त्रभ्रेषनिमित्तकमेव प्रायश्चित्तमिति द्रष्टव्यम् । अत्र केचित्, स्तोत्रेषु "यद्योन्यां तदुत्तरयोर्गायति" इत्यादिवचनैरुत्तराग्रन्थे पठ्यमानासु ऋक्षूह्यमानानां साम्नामूहत्वेऽपि ऊह्यमानसामभ्रेषे मन्त्रभ्रेषनिमित्तकमेव प्रायश्चित्तम्; ऋचां साम्नां तद्विधायकवचनानां च वेदत्वादित्याहुः । अन्ये तु सामोहस्याप्यूहत्वाविशेषात् अमन्त्रत्वम् । अन्यथा सूर्यादिपदानामपि विधिगतपदत्वान्मन्त्रत्वापत्तेः । निगमेषु विधिगतशब्दस्यैव दाशमिकन्यायेन प्रयोक्तव्यत्वात् "ऐरं कृत्वोद्गेयम्" इत्यत्र तद्धितप्रकृतित्वेनेरापदपाठात्तस्य मन्त्रत्वाङ्गीकारे युक्तिसाम्यात् सौर्यमित्यत्र सूर्यपदस्यापि मन्त्रत्वापत्तेः । तस्मादेतद्भ्रेषे अङ्गभ्रेषनिमित्तकमेव प्रायश्चित्तमित्याहुः । यत्तु अस्य सूत्रस्य ऊहादीनाममन्त्रत्वव्युत्पादन इव लिङ्गादिकल्प्यविधेरब्राह्मणत्वव्युत्पादनेऽपि तात्पर्यं तयोर्वेदत्वेऽपि न मन्त्रत्वब्राह्मणत्वे । **अनाम्नातत्वात्**—वेदाध्ययनकाले पठितत्वाभावात् । **हि**—यस्मात् । **आम्नातेषु, विभागः**—मन्त्रो ब्राह्मणमिति द्वैराश्यं भवतीति सूत्रार्थवशादमन्त्रत्वमित्येतदब्राह्मणत्वस्याप्युपलक्षणम् । अब्राह्मणत्वप्रयोजनं च गवामयने प्रत्यक्षविधिभिर्नव पशवो विहिताः । आतिदेशिकविधिभिरेकादश । तत्रैव प्रदेशान्तरे "ब्राह्मणवन्तः पशव आलभ्यन्ते" इति श्रुतेर्नवानामेव ग्रहणं नैकादशानामिति कैश्चिदुक्तम्; तन्न सम्यक् । 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बहिरण्यकेशिप्रभृतिमहर्षिभिर्वेदद्वैविध्यस्यैव कथनेन भागद्वयातिरिक्तस्य वेदत्वे प्रमाणाभावात् । लिङ्गादिकल्पितविधेरूहादेश्च वेदमूलकत्वेनैव प्रामाण्यात् । "ब्राह्मणवन्तः पशव आलभ्यन्ते" इत्यस्य "यां काञ्चन ब्राह्मणवतीमिष्टकां"

## (११)—तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

मन्त्रत्वादौ व्यापकधर्मे निरूपिते तत्प्रसङ्गादेव तदवान्तरधर्मः ऋक्त्वादिः 'ऋचस्सामानि यजूंषि'[1] इति वेदप्रयुक्तऋगादिपदार्थपरिज्ञानार्थं निरूप्यते । पादव्यवस्थावन्मन्त्रत्वं ऋक्त्वम् ॥ ११ ॥

## (१२)—गीतिषु सामाख्या ॥ ३६ ॥

मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम् ॥ १२ ॥

---

इत्यस्येव प्रत्यक्षब्राह्मणवन्त इत्यर्थकत्वस्यापि सम्भवेनोक्तरीत्या प्रयोजनोक्त्यसम्भवादित्यन्यत्र विस्तरः । सूत्रार्थस्तु, **अनाम्नातेषु**—उहादिषु । **अमन्त्रत्वम्** । यत **आम्नातेष्वेव** मन्त्रब्राह्मण**विभाग** इति ॥

**तेषामृग्यत्रार्थवशेन पादव्यवस्था** ॥ सङ्गतिं दर्शयन्नाह—**मन्त्रत्वादाविति** ॥ "अहे बुध्निय मन्त्रं मे गोपाय" इत्युपक्रम्य "ऋचस्सामानि यजूंषि" इत्याम्नानेन मन्त्रत्रैविध्यावगतेः । तत्र च मन्त्रत्वरूपव्यापकधर्मनिरूपणानन्तरं ऋक्त्वादिरूपव्याप्यधर्मनिरूपणस्यापि प्रसङ्गागतत्वात् वेदार्थविचाररूपत्वाच्च नासङ्गतिरिति भावः ॥ **पादव्यवस्थेति** ॥ पादव्यवस्थावत्त्वमात्रोक्तौ श्लोकेष्वतिव्याप्तिः । अत उभयमुपात्तम् । केचित्तु, **अर्थवशेन** इत्यर्थपदं पादप्रमाणानां छन्दश्शास्त्रप्रसिद्धानामुपलक्षणम् । अत एव "अपर्यवसितेऽर्थे वृत्तवशेन व्यवस्था" इति वार्तिकम् । वस्तुतस्तु "तदप्येष श्लोको भवति" "तदेतदृचाऽभ्युक्तम्" इत्यादिना "मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे" इत्यादिश्लोकानां "ऋचो अक्षरे परमे व्योमन्" इत्यादीनां ऋचां च व्यवस्थयैव वेदे व्यवहारदर्शनादभियुक्तप्रसिद्धिरेव सर्वत्र शरणम् । उक्तलक्षणस्य वैदिकश्लोकेष्वतिव्याप्तेरित्याहुः । मूलोक्तलक्षणे श्लोकभिन्नत्वे सतीति विशेषणनिवेशादेव अतिव्याप्तिवारणसम्भवात्तत्परित्यागोऽसङ्गत इत्यन्ये । वस्तुतस्तु वैदिकश्लोकेषु ऋक्त्वाङ्गीकारेऽपि निगदानामिव व्यवहारभेदोपपत्तेः त्रयाणामेव मन्त्रभेदानामाम्नानेन यत्र क्वाप्यन्तर्भावस्यावश्यकत्वात् मन्त्रत्वप्रसिद्धिसत्त्वेन ब्राह्मणत्वायोगात् पादव्यवस्थादर्शनेन यजुस्साम्नोरन्तर्भावासम्भवात् वैदिकश्लोकानामृक्त्वमेव युक्तमिति श्लोकभिन्नत्वनिवेशो व्यर्थ इति ध्येयम् । सूत्रार्थस्तु, **यत्र**—मन्त्रे । **अर्थवशेन**—अर्थैकत्वप्रयुक्ता । **पादव्यवस्था** अस्ति, स मन्त्रो **ऋक्** इत्युच्यत इति अर्थैकत्वप्रयुक्तेति विवक्षणात् "अग्निमीळे" इत्यस्यामृचि "अग्निः पूर्वेभिः ऋषिभिः" इति पादमेलनेन चतुष्पदत्वात् त्रिष्टुप्त्वं स्यादिति शङ्का निरस्ता ॥

**गीतिषु सामाख्या** ॥ गीतित्वस्य लौकिकगीतौ सत्त्वात् अतिव्याप्तिवारणाय **मन्त्रत्वसमानाधिकरणेति** ॥ मन्त्रत्वस्य ऋङ्मन्त्रे सत्त्वात्तद्वारणाय **गीतित्वमिति** । षड्जा-

---

१. तै. ब्रा. १. २. १.

**(१३)--शेषे यजुश्शब्दः ॥ ३७ ॥**

ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम् । स्तोभाक्षरेष्वपि तत्त्वान्नातिव्याप्तिः ॥ १३ ॥

**(१४)--निगदो वा चतुर्थस्स्याद्धर्मविशेषात् ॥ ३८ ॥ व्यपदेशाच्च ॥ ३९ ॥ यजूंषि वा तद्रूपत्वात् ॥ ४० ॥ वचनाद्धर्मविशेषः ॥ ४१ ॥ अर्थाच्च ॥ ४२ ॥ गुणार्थो व्यपदेशः ॥ ४३ ॥ सर्वेषामिति चेत् ॥ ४४ ॥ न ऋग्व्यपदेशात् ॥ ४५ ॥**

निगदसंज्ञकानां मन्त्राणां संज्ञाभेदात् 'उपांशु यजुषा, उच्चैर्निगदेन' इति

---

दिस्वरसमाहारात्मकं शब्दरूपं सिद्धद्रव्यं साम ; "सामाथो वा यः कश्चित् गेयस्स्वरः" इति श्रुतेः । यत्तु गीतिष्वित्युक्त्या क्रियारूपं सामेति तन्न ; "गडि वदनैकदेशे" इत्यत्रेव "गै शब्दे" इत्यत्रापि द्रव्यस्यैव निर्देशादिति भावः । ननु "सामान्यधीते" इति गीतिविशिष्टमन्त्र एव शिष्टप्रयोगदर्शनात् न गीतिस्सामशब्दार्थ इति चेन्न ; सामशब्दस्य गीतिविशिष्टमन्त्रपरत्वे "कवतीषु रथन्तरं गायति" इत्यतिदेशानुपपत्तेः । न हि कशब्दयुक्तास्वृक्षु "कया नश्चित्रः" इत्यादिषु रथन्तरशब्दवाच्यस्य "अभि त्वा शूर" इत्यादिमन्त्रस्यातिदेशस्सम्भवति । ऋचां ऋगन्तराधारत्वासम्भवात् । अतो रथन्तरादिशब्दा गीतिवाचका इति सामशब्दस्यापि गीतिवाचकत्वावश्यकत्वात् इति । अत्र सिद्धस्यैव सप्तमे प्रयोजनकथनान्न पौनरुक्त्यमिति बोध्यम् ॥

**शेषे यजुश्शब्दः** ॥ **ऋक्सामेति** ॥ ऋग्भिन्नत्वे सति सामभिन्नत्वमित्यर्थः । न तूभयभिन्नत्वम् । प्रत्येकमुभयभिन्नत्वसत्त्वादतिव्याप्तेः । ब्राह्मणवारणाय **मन्त्रत्वमिति** ॥ यजुर्वेदपठितानामपि "युञ्जानः प्रथमं मनः" इत्यादीनां मन्त्राणां पादव्यवस्थावत्त्वात् ऋक्त्वमेवेति नाव्याप्तिः । यत्त्वत्र कैश्चिदुक्तलक्षणस्य वैदिकश्लोकेष्वतिव्याप्तिः तत्रापि मन्त्रव्यवहारसत्त्वात् । एवं धर्मरोचनाद्यनृक्सामाधारेषु "उद्यन् लोकानरोचयः" इत्यनुष्टुब्रूपदेवतापदेषु चातिव्याप्तिः । पादबन्धराहित्ये सतीति विशेषणेन तन्निरासे "घृतमिव पयसि निगूढं" इति ब्रह्मबिन्दूपनिषदाम्नातार्यायामतिव्याप्तिः । तत्र पादव्यवस्थाया अभावादिति, तन्न ; वैदिकश्लोकानामृक्त्वस्य पूर्वमुक्तत्वात् । ऋग्भिन्नत्वविशेषणेनैव तद्वारणात् । स्तोभाक्षराणामिवानृक्सामाधारपदानामपि यजुष्ट्वे बाधकाभावात् । आर्यायामपि प्रथमपादे द्वादशमात्रा इत्यादि व्यवस्थादर्शनेन पादव्यवस्थाभावासिद्धेरिति ध्येयम् ॥

**निगदो वा चतुर्थस्स्याद्धर्मविशेषात्** ॥ पूर्वाक्षेपेण प्रवृत्तेराक्षेपिकी सङ्गतिः । निगदानां यजुष्ट्वं न वेति सन्देहे पूर्वपक्षमाह— **निगदेति** ॥ "प्रोक्षणीरासादय" "इध्मा-

विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्य इति प्राप्ते—

'ऋचस्सामानि यजूंषि'[1] इति वेदे त्रयाणामेव मन्त्रभेदानां सङ्कीर्तनात्, 'मन्त्र एव खल्वयं निगदभूतो भवति, तस्माद्यजुः'[2] इति च लिङ्गान्निगदानां यजुष्ट्वमेव। संज्ञा तु ब्राह्मणपरिव्राजकन्यायेन अभेदेऽप्युपपन्ना। निगदत्वं च यजुष्ट्वावान्तरधर्मः। न तु नितरामुपांशुस्वरातिरिक्तस्वरेण गद्यमानत्वम्। 'नमः प्रवक्त्रे' इत्यादिनिगदेषु उपांशु पठ्यमानेष्वव्याप्तेः। न च धर्मभेदात् भेदः। विशेषविहितेनोच्चैस्त्वेन सामान्य-

---

बर्हिरुपसादय" "अग्नीदग्नीन् विहर" "बर्हिस्तृणाहि" "इन्द्र आगच्छ हरिव आगच्छ" इत्यादिनिगदमन्त्राणामित्यर्थः। ननु नितरां गद्यत इति व्युत्पत्त्या उपांशुस्वरातिरिक्तस्वरेण निगद्यमानेषु यजुष्ष्वेव निगदशब्दप्रवृत्तिसम्भवान्न भेद इत्यत आह—**संज्ञाभेदादिति**॥ ऋङ्मन्त्रेष्वतिव्याप्तेर्नितरां गद्यत इति व्युत्पत्त्यसम्भवात् मन्त्रविशेषे निगदशब्दस्य रूढिरङ्गीकार्या। ततश्च ज्योतिरादिवत् संज्ञाभेदात् भेद इति भावः। ननु संज्ञाभेदस्य ब्राह्मणपरिव्राजकन्यायेनोपपत्तेः निगदानां यजुष्ट्वमस्त्वित्यत आह—**विप्रतिषिद्धेति**॥ "उपांशु यजुषा" इति यजुषां उपांशुत्वविधानात्, "उच्चैर्निगदेन" इति निगदानामुच्चैस्त्वविधानाच्च उपांशुत्वोच्चैस्त्वरूपविरुद्धधर्मभेदात् वाजिनामिक्षायागयोरिव गवाश्वयोरिव च भेद इत्यर्थः। न च "उच्चैर्निगदेन" इति विशेषविधिना उपांशुत्वविधेस्सङ्कोचो युक्तः। सङ्कोचलक्षणबाधस्यैव दोषत्वादिति भावः॥ **ऋच इति**॥ "अहे बुध्निय मन्त्रं मे गोपाय" इत्युपक्रमानुरोधेनास्य मन्त्रविभजनरूपत्वादित्यर्थः। श्लोकमन्त्राणामपि ऋक्त्वस्य पूर्वमुक्तत्वान्न त्रैविध्यविरोध इति ध्येयम्। अत्र "मन्त्रेष्वाङ्यादेरात्मन" इति पाणिनिसूत्रे मन्त्रपदस्य वेदपर्यायत्वेन प्रयोगदर्शनादयं वेदस्यैव विभागो, न मन्त्रमात्रस्य; 'त्रयिविदा विदुः' इत्युपक्रमाच्च नाथर्वणग्रहणम्। एवं "उच्चैः ऋचा क्रियते" इत्यादावप्युपक्रमानुसारेण ऋगादिपदानां वेदपरत्वस्याग्रे वक्ष्यमाणत्वान्न मन्त्रभेदेन स्वरभेदविधिरित्यपि बोध्यमिति केचित्। लिङ्गदर्शनादपि यजुर्निगदयो(र्न) भेद इत्याह—**मन्त्र एवेति**॥ 'तदाहुः ऋक् सुब्रह्मण्या यजूंषि साम' इति प्रश्नोत्तरात्मकत्वेनोपक्रम्यायमंशः पठितः। ननु निगदानां यजुष्ट्वे संज्ञाभेदानुपपत्तिरित्यत आह—**संज्ञा त्विति**॥ धर्मयोर्विरोधं परिजिहीर्षुः निगदत्वं निर्वक्ति—**निगदत्वं चेति**॥ अत्र यजुष्ट्वपदे "ह्रस्वात्तादौ तद्धिते" इति षत्वम्। उच्चैस्त्वं इत्यत्र तु षत्वं प्रामादिकमेवेति ज्ञेयम्। "नमः प्रवक्त्रे" इति जपतिचोदनाचोदितेष्वेतेषूपांशुत्वस्यैव प्राप्तेरिति भावः॥ **विशेषविहितेनेति**॥ पदविधिना आहवनीयविधेरन्यपरत्ववदिति भावः। नन्वेवं सङ्कोचलक्षणबाधापत्तिरित्याशङ्क्य "उपांशु यजुषा" इत्यत्र यजुर्वेदविहितकर्माङ्गमन्त्राणामेवोद्देशात्,

---

१. तै. ब्रा. १. २. १.		२. षड्विंशब्राह्मणम्, १-२.

विहितस्योपांशुत्वस्य अन्यपरत्वावसायात् । 'उपांशु यजुषा' इत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन भवन्मतेऽपि सङ्कोचस्यावश्यकत्वाच्च । न चैवमुपक्रमवशेन यजुःपदे वेदलक्षणावत् निगदपदेऽपि यजुर्वेदलक्षणापत्तेः एकस्मिन् कर्मणि धर्मद्वयविकल्पापत्तिः ; 'वायोर्यजुर्वेदः' इत्युपक्रमस्य यजुःपद एव लक्षणातात्पर्यग्राहकत्वात् । अन्यथा 'वायोर्निगदवेदः' इत्यपि किं नावक्ष्यत् । अतश्च 'उच्चैर्निगदेन' इति स्वतन्त्र एव निरर्थवादकोऽयमुच्चैस्त्वनियमविधिः विशेषविहितातिरिक्तनिगदोद्देशेन । तेषु हि परप्रत्यायनरूपकार्यवशेन उपांशुत्वनिवृत्तावपि मन्द्राद्यनेकस्वरप्राप्तौ उच्चैस्त्वनियमो नानुपपन्नः । अतो निगदभ्रेषेऽपि यजुर्भ्रेषनिमित्तप्रायश्चित्तम् । आश्विनादौ पारिप्लवशंसनं वा ॥ १४ ॥

## (१५)--अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४३ ॥

**यजुष्ट्वं यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तम् ; न तु वाक्यसमूहे ।**

---

तादृशकर्माङ्गनिगदेष्वपि प्राप्तस्योपांशुत्वस्य "उच्चैर्निगदेन" इत्यनेन बाधः पूर्वपक्षेऽपि तुल्य इत्याह—**उपांशु यजुषेत्यस्येत्यादिना** ॥ **विकल्पापत्तिरिति** ॥ तस्याष्टदोषदुष्टत्वेनायुक्तत्वादिति भावः । समाधत्ते—**वायोरिति** ॥ उपांशुत्वविधेर्निगदवाक्यमर्थवाद इति प्राचीनपक्षः सम्मतः स्वस्येति सूचयन्नाह—**स्वतन्त्र एवेति** ॥ "नमः प्रवक्त्रे" इत्यादेर्विशिष्योपांशुत्वविधानादाह—**विशेषेति** ॥ **परप्रत्यायनेति** ॥ अर्थसामर्थ्यरूपलिङ्गस्य श्रुतितोऽपि प्राबल्यस्य सामर्थ्याधिकरणे साधनात् प्रमेयबलाबलबलीयस्त्वाच्च उपांशुत्वविधेर्बाधादिति भावः । प्रयोजनमाह—**निगदभ्रेष इति** ॥ **आश्विनादाविति** ॥ वाचस्तोमे क्रतौ "सर्वा ऋचः, सर्वाणि यजूंषि, सर्वाणि सामानि पारिप्लवं शंसति" इति विहिते शस्त्र इत्यर्थः ॥ सूत्रार्थस्तु, **निगदश्चतुर्थ**मन्त्रजातं स्यात् ; उच्चैस्त्वरूप**धर्मविशेषा**दिति ॥

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्** ॥ "ऋचस्सामानि यजूंषि" इति मन्त्रगतऋगादिप्रातिपदिकार्थज्ञानानन्तरं बहुवचनावगतऋगादिभेदनिरूपणस्य प्राप्तावसरत्वादवसरसङ्गतिः । तत्र ऋचां भेदोऽध्यापकसम्प्रदायादध्ययनकाल एव विभज्य पाठात् ज्ञायते । सामभेदोऽपि तत्तत्सामारम्भे तत्तन्नाम्नां कीर्तनपूर्वकं पाठात् प्रसिद्ध एव । यजुषां तु प्रश्लिष्टपाठादेकैकमन्त्रमध्य एव बहुमन्त्रान्ते चावसानस्याव्यवस्थया दर्शनात् तद्विषयमेव न्यायप्रदर्शनमिति सूचयन्नाह—**यजुष्ट्वमिति** ॥ एकस्मिन्नेव वाक्ये एकं यजुरिति याज्ञिकव्यवहारः ; नैकस्मिन् पदे । "अग्निर्यजुर्भिः, सविता स्तोमैः, इन्द्र उक्थामदैः, मित्रावरुणावाशिषा" इत्यादिवाक्येषु 'यजुषीपत्न्यौ च, यजूंषि पत्न्यश्च' इति

**तस्य विनियोगानर्हत्वात्। वाक्यत्वं च यत्रार्थैकत्वं विभज्यमानपदसाकाङ्क्षत्वं च तावत्सु। अर्थैकत्वं च भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यम्। अन्यस्य दुर्वचत्वात्। अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया भावनाया एकत्वात् तत्। दर्शपूर्णमासामनहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात् व्रीहियववाक्ययोः 'भगो वां विभजतु' इत्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे**

---

व्यवहारदर्शनात्। अतो वाक्यैकत्वनियतमेव यजुरेकत्वमित्यभिप्रायेणाह---**तस्येति**॥ वाक्यसमूहस्येत्यर्थः॥ **विनियोगेति**॥ व्यवहारानर्हत्वादित्यर्थः। तेन "चतुर्भिरभ्रिमादत्ते, त्रेधा विभक्तं जुहोति" इति समूहस्य विनियोगदर्शनेऽपि नासङ्गतिः। ननु किमिदमर्थैकत्वम्? न तावत्पदार्थैकत्वम्; गामानयेत्यादौ पदार्थैकत्वाभावात्। नापि वाक्यार्थैकत्वम्; पदार्थद्वन्द्वभेदेनान्वयरूपवाक्यार्थस्यानेकत्वेन तदसम्भवात्। नापि प्रयोजनैकत्वम्; 'सौर्यं चरुं' इत्यादौ द्रव्यदेवते प्रति यागः, तं प्रति फलमिति प्रयोजनभेदात्। नापि मुख्यविशेष्यरूपार्थैकत्वम्; "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ आग्नेयादिभावनानां मुख्यविशेष्याणां भिन्नत्वेनैकवाक्यत्वानुपपत्तेः। नापि मुख्यविशेष्यप्रतिपादकशब्दैकत्वम्; व्रीहियववाक्ययोः "भगो वां विभजतु" इत्यादेश्च अर्थैकत्वानापत्तेः। न चेष्टापत्तिः, विभज्यमानपदसाकाङ्क्षत्वविशेषणवैयर्थ्यादित्यतः प्रकारान्तरेण निर्वक्ति-**अर्थैकत्वं चेति**॥ **भिन्नेति**॥ भिन्नप्रतीतिविषया ये अनेकमुख्यविशेष्यास्तद्रहितत्वमित्यर्थः॥ **अन्यस्येति**॥ ननु परस्परान्वितैकमुख्यविशेष्यकप्रतीतिजनकतापर्याप्त्यधिकरणत्वमर्थैकत्वमिति वक्तुं शक्यत्वादिदमनुपपन्नमिति चेन्न; तथा सति विभागे साकाङ्क्षत्वमित्यस्य व्यर्थत्वापत्तेः। न चेष्टापत्तिः, सूत्रविरोधादित्याशयः। गामानयेत्यादावेतदुपपादयति-**अस्ति चेत्यादिना**॥ एकत्वादित्युक्त्या अनेकमुख्यविशेष्यराहित्यं सूचितम्। मुख्यविशेष्येषु भिन्नप्रतीतिविषयत्वनिवेशस्य फलमाह---**दर्शपूर्णमासेति**॥ दर्शपूर्णमासादौ भावनानेकत्वस्य एकादशे वक्ष्यमाणत्वेन मुख्यविशेष्याणामनेकत्वादेकवाक्यत्वं न स्यात्। भिन्नप्रतीतिविषयत्वनिवेशे च तासामेकप्रतीतिविषयत्वेन भिन्नप्रतीतिविषयत्वरूपविशेषणाभावाद्विशिष्टाभावोऽक्षत इत्येकवाक्यत्वोपपत्तिः। नन्वेवमप्याग्नेयादितत्तद्वाक्यजन्यबोधविषयत्वेन भावनानां भिन्नप्रतीतिविषयत्वात् निरुक्तार्थैकत्वं दुर्लभमेवेति चेन्न; स्वजन्यबोधविशेष्यतावच्छेदकातिरिक्तधर्मावच्छिन्नविशेष्यताकप्रतीतेरेव भिन्नप्रतीतिपदेन विवक्षणात्। यस्मिन् वाक्ये अर्थैकत्वं तदेव स्वपदार्थ इति दिक्॥ **व्रीहियवेति**॥ यागभाव्यकभावनायाः करणभेदेऽपि भाव्यभेदाभावादेकत्वम्। "भगो वां विभजतु, पूषा वां विभजतु" इत्यादयो मन्त्राः पुरोडाशविभजनप्रकाशकाः। अत एव तेषां विकल्प इति सङ्कर्षे वक्ष्यते। तत्र विभागपिण्डयोरेव करण-

मुख्यविशेष्यभूताया भावनाया एकत्वादर्थैकत्वम् । अतस्तत्रैकवाक्यत्वव्यावृत्त्यर्थं द्वितीयमन्वीयमानयोः पदार्थयोरनन्वयेऽनिवृत्ताकाङ्क्षत्वरूपं विशेषणम् । 'स्योनं ते सदनं करोमि । तस्मिन् सीद'[1] इत्यत्रानन्वये साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम् ॥ १५ ॥

## (१६)--समेषु वाक्यभेदस्स्यात् ॥ ४७ ॥

यत्र तु नोक्तविधं निभज्यमानसाकाङ्क्षत्वं यथा 'इषे त्वा, ऊर्जे त्वा'[2] इत्यनयोर्यथा वा 'आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां'[2] इत्यादौ तत्र सत्यप्यर्थैकत्वे 'भगो वां' इत्यादिवन्मन्त्रभेदः । किमुत यदा विनियोगानुसारेणार्थभेद एव प्रमाणवान् तदा मन्त्रैकत्वे प्रमाणाभाव एव । अत्र हि 'इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्युन्मार्ष्टि' इति विनियोगभेदात् इषे त्वेति छिनद्मि इति क्रियापदाध्याहारेण भिन्नमेव मुख्यविशेष्यम् । एवं 'ऊर्जे त्वा उन्मार्ज्मि'[3] इति । एवं 'क्लृप्तीर्वाचयति' इति बहुवचनात्

---

भाव्यत्वात् भावनैकत्वमिति बोध्यम् ॥ **अर्थैकत्वमिति** ॥ अनेकमुख्यविशेष्यराहित्यसत्त्वादिति भावः ॥ **अन्वीयमानयोरिति** ॥ तदुत्थाप्याकाङ्क्षानिवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतरवत्त्वमिति फलितार्थः ॥ **साकाङ्क्षत्वेऽपीति** ॥ "तस्मिन् सीद" इति तच्छब्दस्य पदार्थोपस्थितिजननांशे प्रथमोपस्थितिसापेक्षत्वेऽपि न तद्घटितवाक्यस्य नियमेन वाक्यान्तरापेक्षेति ध्येयम् । सदनसादनकरणकभावनयोर्भेदेनार्थैकत्वाभावादाह—**आद्यमिति** ॥ सूत्रं स्पष्टम् ॥

**समेषु वाक्यभेदस्स्यात्** ॥ पूर्वोक्तैकवाक्यत्वपरित्यागात् प्रत्युदाहरणसङ्गतिः । "इषे त्वोर्जे त्वा" इत्यादौ "आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पतां" इत्यादौ च किं एकं यजुष्ट्वं उत यजुर्भेद इति संशयः । तत्रानुष्ठेयार्थप्रकाशकत्वाभावेनादृष्टार्थत्वाददृष्टस्य च कल्प्यत्वेनैकस्यैव कल्पने लाघवात् अर्थैकत्वेनैकयजुष्ट्वमेव । एवं च "इषे त्वेति छिनत्ति, ऊर्जे त्वेत्युन्मार्ष्टि" इति विनियोगभेदसत्त्वेऽपि यावद्विनियोगं सर्वस्यावृत्तिरिति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—**यत्र त्विति** ॥ **उक्तविधमिति** ॥ अन्वीयमानयोरित्यादिना निरुक्तमित्यर्थः । "इषे त्वोर्जे त्वा" इत्यनयोर्विभागे साकाङ्क्षत्वाभावादर्थैकत्वसत्त्वेऽपि नैकवाक्यत्वमिति भावः । वस्तुतस्तु अर्थैकत्वमपि नास्तीत्याह—**यदेत्यादिना** ॥ विनियोगभेदमेवोपपादयति—**अत्र हीति** ॥ **क्रियापदाध्याहारेणेत्यादि** ॥ तथा च धात्वन्तरभेदाच्छब्दान्तरन्यायेन भावनाभेदस्यैव सिद्ध्याऽर्थैकत्वं न सम्भवतीत्यर्थः ॥ **क्लृप्तीरिति** ॥ "क्लृप्तीर्यजमानं वाचयति" इत्यत्र क्लृप्तिशब्दः पुराणं वाचयतीत्येक-

---

१. तै. ब्रा· ३. ७. ५.  २. तै. सं· १. १. १.  ३. तै. सं. १. ७, ९.

क्लृप्तिभेदावगमेनार्थभेदः। अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ॥ १६ ॥

(१७)--अनुषङ्गो वाक्यसमाप्तिस्सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

यत्र बहूनां शेषापेक्षिणामाद्यस्यानन्तरं शेषस्समाम्नातः यथा 'या ते अग्ने

---

वचनस्य शब्दैककर्मकस्यैव तात्पर्यग्राहकत्वाल्लक्षणया धातुपरः। यज्ञतनुदेवपत्नीप्रतिगृह्यादिपदवन्निरूढलक्षणया मन्त्रविशेषपरो वा। तस्य च बहुवचनेन दशसङ्ख्याकत्वमव्यवधानेन तावतामेवाम्नानाल्लभ्यते। ततश्च ह्यासां धात्वर्थभेदेन भावनाभेदात् यजुर्भेद इत्यर्थः। यत्त्वत्र क्लृप्तिशब्दोऽर्थपरः; धातुमन्त्रान्यतरपरत्वे लक्षणापत्तेः। तस्य च बहुवचनेन बहुत्वावसायात् तद्धटितवाक्यार्थभेदात् यजुर्भेद इति सङ्ख्यया धत्वर्थभेद इति कैश्चिदुक्तम्, तत् "वाजश्च मे" इत्यादीनामपि वाचनापत्तेः "वाजश्च मे यज्ञेन कल्पतां, प्रसवश्च मे यज्ञेन कल्पतां" इत्यादिरीत्या वाजप्रसवादिकृतस्वीययज्ञोपकारप्रार्थनारूपसन्दर्भे तत्कृतोपकारात्मकक्लृप्तीनां भिन्नभिन्नत्वेन बहुवचनस्य तादृशव्यापकसङ्ख्यापरत्वेन सङ्कोचकाभावात् क्लृप्तिः क्लृप्तिरिति वाचनापत्तेश्चोपेक्षितम् ॥ **प्रत्युदाहरणमात्रमिति** ॥ अत एव पूर्वपक्षे नातीवादर इति भावः ॥ सूत्रार्थस्तु, **समेषु**—परस्परनिरपेक्षतया तुल्येषु। **वाक्यभेदः**—यजुर्भेदः, **स्यात्** इति ॥

**अनुषङ्गो वाक्यसमाप्तिस्सर्वेषु तुल्ययोगित्वात्** ॥ अस्य विचारस्य यजुःपरिमाणविचाररूपत्वात् सङ्गतिः। यत्र बहूनां वाक्यशेषसापेक्षाणां मध्ये प्रथमस्यानन्तरमाकाङ्क्षापरिपूरणसमर्थो वाक्यशेषश्श्रूयते यथा "या ते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत् त्वेषं वचो अपावधीत् स्वाहा; या ते अग्ने रजाशया, या ते अग्ने हराशया" इति। अयं मन्त्र उपसद्धोमे विनियुक्तः। अस्यार्थः। अयसा-रजतेन हिरण्येन च निर्मिता अग्नेस्तिस्रस्तनवः। तास्वाद्या येयमुक्ता तनूस्सा अतिशयेन प्रवृद्धा, गह्वरे-तीक्ष्णद्रव्ये लोहे अवस्थिता, तया तन्वा क्षुत्पिपासे गोवधाद्युपपातकं वीरहत्यादिमहापातकं च हतवानस्मीति। "अशनया पिपासे हवा उग्रं वचः, एनश्च वैरहत्यं च त्वेषं वचः" इति ब्राह्मणानुसारात्। तत्रोत्तरौ मन्त्रावुदाहरणम्। किं तयोर्लौकिकश्शेषोऽध्याहर्तव्यः उत योऽसौ पूर्वमन्त्रानन्तरं पठितः तनूर्वर्षिष्ठेत्यादिः स एव पूर्वस्येव उत्तरयोरप्यनुषङ्गेण शेष इति संशयः। तत्रैकत्रैव निवद्धत्वात् शेषोऽन्यत्र न नेतव्यः। लौकिकस्त्वनिवद्धत्वात् सर्वार्थः। स च यत्र कार्यं तत्र सर्वत्र विनियुज्यमानो न विरुध्यते। वैदिकस्तु यदर्थमाम्नातः तेनैव निवद्धो नान्यत्र नेतुं शक्यः, नीयमानो वा समाम्नायवहिर्भावाल्लौकिक एव स्यात्। न च वैदिकोऽपि सर्वार्थमाम्नात इति वाच्यम्; सकृदाम्नातस्यानेकार्थतानुपपत्तेः। न चागृह्यमाणविशेषत्वम्; आनन्तर्यस्यैव नियामकत्वात्। द्वितीयस्यानन्तर्यसत्त्वेऽपि परस्ताद्वाविवाक्यशेषस्यैवा-

---

१. वाक्यपरिस० इति पाठान्तरम्

अयाशया'' इत्यस्यानन्तरं 'तनूर्वर्षिष्ठा'' इत्यादिश्शेषः । उत्तरौ मन्त्रौ 'या ते अग्ने रजाशया, या ते अग्ने हराशया'' इति तत्रोत्तरयोश्शेषापेक्षिणोरयमेव शेषोऽनुषज्यते ; न तु लौकिकोऽध्याह्रियते; अक्लृप्तत्वात् । न चासावेकत्र निबद्धोऽन्यत्र नेतुं न शक्यः; सर्वार्थत्वेनाम्नानात् । न चाद्यस्यानन्तरमपेक्षितदेशे पठितत्वात्तदर्थमाम्नानं शङ्क्यम् ; आकाङ्क्षायोग्यतयोरविशिष्टत्वात् । आसत्तेरपि असम्बन्धिपदाव्यवधानरूपायास्सर्वत्रा-विशिष्टत्वाच्च । न ह्यानन्तर्यमेव सम्बन्धकारणम् ; तदभावेऽपि शाब्दबोधस्यासम्बन्धि-पदव्यवधानाभावे आनुभाविकत्वात् । सर्वाव्यवधानस्य सकृत्पाठे अशक्यतया आका-ङ्क्षादित्रयेणैव च सर्वार्थत्वज्ञानोपपत्तेः, आवृत्तिपाठस्य सर्वान्तपाठस्य च आपादयितु-मशक्यत्वात्, अपेक्षितदेशपाठस्य च लिङ्गेनैव ज्ञातुं शक्यत्वात् आम्नानस्य सर्वार्थत्वा-वगतेरनुषङ्ग एव । न चैवमव्यवधानस्याकारणत्वे पदश्रुत्या यागस्यैव करणत्वानापत्तिः;

---

काङ्क्षितत्वेन द्वितीयमन्त्रात्पूर्वभाविशेषान्वयानुपपत्तेः । तृतीयस्य त्वानन्तर्याभावादनाशङ्क्य एव सम्बन्धः । नन्वश्वप्रतिग्रहेष्टौ वैदिकाश्वदानस्यैव निमित्तत्वदर्शनात् तन्न्यायेन वैदिक-शेषस्यैव ग्राह्यत्वं युक्तमिति चेन्न ; तत्र साजात्यमात्रस्य हेतुत्वात् । प्रकृते वैदिकस्य यथापाठं देशविशेषस्यैव व्यवस्थितत्वात् । अतो लौकिक एवाध्याहर्तव्य इति पूर्वपक्षे प्राप्ते, सिद्धान्तमाह—**अयमेवेति** ॥ "तनूर्वर्षिष्ठा" इत्यादिरित्यर्थः ॥ **अक्लृप्तत्वात्**—अनुपस्थित-त्वात् । नन्वेकत्र निबद्धोऽन्यत्र न नेतुं शक्यत इत्युक्तमाशङ्क्य निराकरोति—**सर्वार्थत्वेनेति** ॥ स्वाध्यायविधिना यद्यत्प्रयोजनमधीतेन स्वाध्यायेन सम्पादयितुं शक्यं तत्सर्वं भावयेदिति विधानेन द्वितीयाकाङ्क्षापूरणस्यापि प्रयोजनत्वसम्भवादिति भावः । नन्वानन्तर्यात् प्रथम-मात्रान्वय इति शङ्कते—**न चेति** ॥ समाधत्ते—**आकाङ्क्षेति** ॥ शाब्दबोधे आकाङ्क्षायोग्यता-सन्निधीनां करणत्वात् त्रयाणामपि मन्त्राणां तत्सत्त्वादिति भावः । तृतीयस्याप्यासत्तिमुपपा-दयति—**आसत्तेरपीति** ॥ असम्बन्धिपदव्यवधानाभावरूपा ह्यासत्तिः । सा च प्रथमद्वितीय-योर्मन्त्रयोरानन्तर्यात् पदव्यवधानाभावेन सुलभैव । तृतीयस्य द्वितीयमन्त्रव्यवधानसत्त्वेऽपि तस्यासम्बन्धित्वाभावेन निरुक्तासत्तिरस्त्येवेत्यर्थः । प्रयाजादीनामाग्नेयव्यवधानेऽप्यग्नीषोमीया-द्यङ्गत्वदर्शनादाह—**सर्वाव्यवधानस्येति** ॥ **आकाङ्क्षादीति** ॥ तथा च तद्वदेव कारण-बलात् सर्वार्थत्वमिति भावः । ननु तर्हि त्रिः पाठः सर्वानन्तरपाठो वा कुतो नास्तीत्यत आह—**आवृत्तीति** ॥ लाघववशेन सकृत्पाठे निरुक्तकारणेनैव सर्वसम्बन्धोपपत्तौ गौरवापा-दकत्रिःपाठादेः प्रयोजनाभावादिति भावः । नन्वानन्तर्यस्यानियामकत्वे समानपदश्रुतिरूपा-नन्तर्यबलात् धात्वर्थस्यैव करणत्वमिति भावार्थाधिकरणसिद्धान्तविरोधस्स्यादिति शङ्कते—

---

२. तै. सं. १. २. ११.

तस्य अकारणत्वेऽपि सन्देहे नियामकत्वमात्राङ्गीकारात् । प्रकृते तु आकाङ्क्षादिवशेन सर्वार्थत्वस्यैव प्रतीतेः नियामकाकाङ्क्षाभावेनानुषङ्ग एव युक्तः । अतश्च तद्भ्रेषेऽपि यजुर्भ्रेषप्रायश्चित्तमेव ॥

एवं वा यत्र[1] निराकाङ्क्षाणामेव शेषिणां बहूनामन्ते सापेक्षश्शेषस्समाम्नातः यथा 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु'[2] इत्येतेषामन्ते 'अच्छिद्रेण पवित्रेण' इति तत्रापि सन्निधियोग्यत्वयोरविशेषात् सर्वत्रानुषङ्गः । न चोत्थाप्याकाङ्क्षा या एकसम्बन्धेनैव चरितार्थत्वात् आनन्तर्यस्य नियामकत्वोपपत्तिः । शेषाकाङ्क्षयाऽऽकाङ्क्षोत्थापनेऽपि प्रधानत्वात् शेषिणां विनिगमनाविरहेण सर्वेषामेव शेषग्राह-

न चेति ॥ परिहरति—तस्येति ॥ तस्य—अव्यवधानस्य । अकारणत्वेऽपि—शाब्दबोधं प्रत्यहेतुत्वेऽपि । सन्देहे—धात्वर्थकरणत्वसंशये । नियामकत्वमात्राङ्गीकारात्—व्यवस्थापकत्वमात्राङ्गीकारात् ॥ नियामकाकाङ्क्षाभावेनेति ॥ एकस्यैव शेष इति व्यवस्थापकप्रमाणाभावेनेत्यर्थः । उपसंहारमुखेन प्रयोजनमाह--अतश्चेति ॥ तद्भ्रेषेऽपि--अनुषक्तभ्रेषेऽपि । सूत्रार्थस्तु, अनुषज्यत इति अनुषङ्गः । वाक्यसमाप्तिः-वाक्यसमापकः । सर्वेषु-शेषिषु । तुल्ययोगित्वात्—वाक्यशेषस्य यौगपद्येनान्वयादिति ॥

एवं वेति ॥ पूर्वत्र शेषिणां साकाङ्क्षत्वेन सर्वार्थत्वं वाक्यशेषाम्नानस्येत्यनुषङ्गो युक्तः । इह तु नैवमिति पूर्ववैपम्येण प्रत्यवस्थानात् सङ्गतिः । यत्र निराकाङ्क्षाणां एकार्थानां सन्निधौ सर्वानन्तरं वाक्यशेषश्श्रूयते, यथा यजमानपवनार्थेषु "चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु" इति मन्त्रेषु सत्यप्येकार्थत्वे "त्रिभिः पवयति" इति वचनात् समुच्चितेष्वन्ते "अच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभिः" इति शेषश्श्रुतः । स किं पूर्वयोरप्यनुषज्यते, किं वा परस्यैव मन्त्रस्य शेष इति संशयः । तत्र शेषस्तावदेकेनैव अनन्तरेण सम्बध्य निराकाङ्क्षः । शेषिणस्तु प्रागेव निराकाङ्क्षाः । तेनाप्रामाणिकोऽनुषङ्ग इति प्राप्ते सिद्धान्तमाह—तत्रापीति ॥ सन्निधीति ॥ असम्बन्धिपदव्यवधानाभावसन्निधेर्योग्यतायाश्च सर्वत्र समानत्वात् सर्वत्रानुषङ्ग इत्यर्थः । ननु शेषिणां निराकाङ्क्षत्वात् शेषाकाङ्क्षया शेषिणामाकाङ्क्षामुत्थाप्यान्वयो वक्तव्यः । तत्र च शेषस्यैकशेष्याकाङ्क्षोत्थापनद्वारा तदन्वयेन चरितार्थत्वान्न सर्वान्वयो युक्त इति शङ्कते—न चेति ॥ तत्र विनिगमनाविरहमाशङ्क्य निराचष्टे—आनन्तर्यस्येति ॥ ततश्चानन्तर्यसत्त्वात् अन्त्यस्यैवाकाङ्क्षोत्थापनमिति भावः । आकाङ्क्षाया उत्थाप्यत्वेऽपि शेषिणां प्रधानत्वेन प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् विनिगमनाविरहाच्च सर्वेषामेवाकाङ्क्षोत्थापनेन सर्वैरेवान्वयः । 'आनन्तर्यमचोदना' इति न्यायेनानन्तर्यस्यानियामकत्वादित्याशयेन परिहरति—शेषेति ॥ आन-

१. यत्र निराकाङ्क्षाणां इत्येव क्वचित्पाठः　　　२. तै. सं. १. २. १.

कत्वावगतेरानन्तर्यस्यानियामकत्वात् । अत एवानेकहविष्कविकृतिसन्निधिपठितोपहोमानां सर्वार्थत्वमेव । अतश्च मुखनाभिगुल्फप्रदेशपावनार्थेषु एतेषु मन्त्रेषु शेषोऽप्यनुषज्यते; प्रतिप्रधानावृत्तिन्यायात् ॥ १७ ॥

(१८)--व्यवायान्नानुषज्यते ॥ ४९ ॥

यत्र त्वसम्बन्धिपदव्यवधानं यथा 'सं ते वायुर्वातेन गच्छतां, सं यजत्रैरङ्गानि

---

न्तर्यस्य नियामकत्वे बाधकमाह—**अत एवेति** ॥ आनन्तर्यस्यानियामकत्वादेवेत्यर्थः ॥ **अनेकेति** ॥ बहुहविष्कविकृतिषु नक्षत्रेष्टयादिषु "अग्नये कृत्तिकाभ्यः" इत्यादिवाक्यविहितेष्वाम्नातानामुपहोमानां "अग्नये स्वाहा, कृत्तिकाभ्यस्स्वाहा" इत्यादीनां "पुरस्तात् स्विष्टकृतः स्रुवेणोपहोमान् जुहोति" इति विधिविहितानां सवार्थत्वमेव। आनन्तर्यस्य नियामकत्वे यत्प्रधानानन्तर्यं तदङ्गत्वमेव स्यात् ; न सर्वाङ्गत्वमित्यर्थः । मन्त्राणां पवनरूपैकार्थत्वाद्विकल्पापत्तिं परिहरति—**अतश्चेति** ॥ पवनार्थत्वेऽपि मन्त्राणां मुखनाभिगुल्फप्रदेशानां पवनसंस्कार्याणामनेकत्वात् "त्रिभिर्यजमानं पावयति" इति वचनाच्च समुच्चय एव युक्त इति भावः। अत्र बोधायनकल्पे "अथैनमेकविंशत्या दर्भपुञ्जीलैः पावयति" इति वचनादेकवचनानुसारेण शरीरस्यैव पावनीयत्वादेकविंशतिसङ्ख्याश्रवणेन तद्विभागानुपपत्तेर्मन्त्रैकत्वानुरोधेनानुषङ्गमन्तरेणैव कृत्स्नमन्त्रेण सकृदेव पवनम् । एतेन बोधायनकल्पे पाव्यमानप्रदेशभेदकथनेनेत्युक्तिः केषाञ्चिद्भ्रान्तिमूलिकैवेत्यपि वदन्ति ॥ **प्रतिप्रधानेति** ॥ ततश्च सर्वशेषत्वमित्यर्थः । एवमादावन्ते वा पठितस्य शेपस्य सर्वत्रानुषङ्गेण मन्त्रत्वस्याविशिष्टत्वेऽप्युभयत्र पठ्यमान एक एव शेषः "तेषां सहस्रयोजना वा" इत्यादिः पारायणाद्युपयुक्तः। एवं मन्त्राणां मध्ये मध्ये प्रश्लिष्य पठितानां शेषाणामपि विवेचनेन मन्त्रघटनाप्रकारश्च "नमो रुद्रेभ्यः" इति शतरुद्रीयान्तिममन्त्रे पृथिव्यन्तरिक्षद्युपदानामन्नवातवर्षपदैर्व्यतिषक्तानां विभजनेन मन्त्रत्रयीकरणाद्यात्मकोऽप्याकाङ्क्षादिकृत एव । एवं "ऋताषाडृतधामा" इति मन्त्रे "स इदं ब्रह्म क्षत्रं पातु, ता इदं ब्रह्म क्षत्रं पान्तु" इत्यंशयोः, "तस्मै स्वाहा, ताभ्यः स्वाहा" इत्यंशयोः क्रमेणान्वयोऽप्याकाङ्क्षादिमूलक एव । अत एव बोधायनीयैरेवमेवोक्तम् । यथा चैवं सति "ताभ्यः स्वाहा" इति चतुरक्षर्या एव मन्त्रत्वमित्यापस्तम्बादिवचनसङ्गमनं, तथा चतुर्दशान्त्यपादे सङ्कर्षे ज्ञेयम् ॥

**व्यवायान्नानुषज्यते** ॥ अनुषङ्गापवादादापवादिकी सङ्गतिः । अग्नीषोमीये पशौ पशुसमञ्जने विनियुक्तान् मन्त्रानाह—**सं ते इति** ॥ अत्र "सं ते वायुर्वातेन गच्छतां" इति शाखान्तरीयं वाक्यम् । "सं ते प्राणो वायुना गच्छतां" इति तु प्रत्यक्षवचनम् । तत्रापि न्यायसाम्यान्न विरोधः । अत एव बोधायनादिभिरयमेवोदाहृत इति द्रष्टव्यम् । अत्र

---

१. अनुषज्येत इति पाठान्तरम् ।

सं यज्ञपतिराशिषा'[१] इत्यत्र गच्छतामित्यस्य आशिषेत्यत्र नानुषङ्गः; अङ्गानि इत्यत्रैकवचनान्तस्यानन्वयेन बहुवचनान्तस्यैव गच्छन्तामित्यस्याध्याहारावश्यम्भावात् । वस्तुतस्तु—बहुवचनस्यैवाध्याहारेण गमिधातोरनुषङ्ग एवेति एकवचनस्यैवानुषङ्गप्रत्युदाहरणमिदम् ॥ १८ ॥

इति खण्डदेवकृतौ भाट्टदीपिकायां
द्वितीयस्याध्यायस्य
प्रथमः पादः

---

गच्छतामित्यस्योत्तरयोरनुषङ्गोऽस्ति न वेति सन्देहः । तत्र "संयजत्रैरङ्गानि' इत्यस्य क्रियापदसाकाङ्क्षत्वादनुषङ्गः । न च "संयज्ञपतिराशिषा" इत्यत्र गच्छतामित्यस्यानुषङ्गसम्भवेऽपि "संयजत्रैरङ्गानि" इत्यत्रानुषङ्गासम्भवः । गच्छतामित्येकवचनान्तस्याङ्गानीति बहुवचनान्तेनान्वयायोगादिति वाच्यम् ; एकवचनस्यान्वयासम्भवेऽपि गमिधातोरन्वयसम्भवात् बहुवचनस्य पाशाधिकरणन्यायेनैकत्वलक्षकत्वसम्भवाच्च । तस्मादनुषङ्ग एवेति पूर्वपक्षे प्राप्ते—सिद्धान्तमाह—**गच्छतामित्यस्येति** ॥ **अनन्वयेनेति** ॥ न च वचनस्यैवानन्वयः, न प्रातिपदिकस्येत्युक्तमिति वाच्यम् ; तथाऽपि प्रत्ययमादायासम्बन्धिपदव्यवधानसत्त्वात् प्रातिपदिकमात्रानुषङ्गासम्भवात् प्रकृतिप्रत्यययोः परस्परान्वितयोरेव पदान्तरेण सम्बन्ध इति तयोरेकस्यासम्बन्धे सत्यपरस्याप्यसम्बन्धनियमेन धातुमात्रस्यानुषङ्गायोगात् । अन्यथा अध्याहारादिष्वपि प्रकृतिप्रत्ययान्यतराध्याहारापत्तेः । न चेष्टापत्तिः । 'परिपूर्णं पदं पदान्तरेणान्वेति' इति न्यायात् । अन्यथा भावार्थाधिकरणविरोधापत्तेः । तस्मादसम्बन्धिपदव्यवधानान्नानुषङ्गः । न चाङ्गानीत्यत्र बहुवचनस्य पाशाधिकरणन्यायेनैकत्वलक्षकत्वात् कृत्स्नानुषङ्ग एवास्त्विति वाच्यम्; तत्र पाशस्यैकत्वेन बहुवचनान्वयानुपपत्तेर्लक्षणाकल्पनेऽपि प्रकृते अङ्गानां बहुत्वेन बहुवचनान्वयसम्भवात् लक्षणाकल्पनायोगात् । लक्षणाऽनुषङ्गयोर्द्वयोः कल्पनमपेक्ष्य बहुवचनान्तक्रियाध्याहारस्यैव युक्तत्वाच्च । ततश्च आकाङ्क्षायोग्यतयोस्सत्त्वेऽप्यासत्त्यभावान्नानुषङ्ग इति भावः ॥ **बहुवचनस्यैवेति** ॥ "प्रास्मा अग्निं भरतः" इत्यादौ बहुवचनोहे प्रकृत्यंशस्यार्षत्ववत् इहापि गमिधातुरार्ष एव । प्रत्ययमात्रं त्वनार्षम् । अतो युज्यतामित्यादिधात्वन्तरप्रयोगेऽपि यजुर्भ्रेषप्रायश्चित्तमेवेति भावः । वस्तुतस्तु, धातोरनुषङ्ग इत्युक्तिः प्रौढिवादमात्रं, पूर्वोक्तयुक्तेः । यत्तु युज्यन्तामिति प्रयोगे यजुर्भ्रेषप्रायश्चित्तमिति, तन्न ; "इषे त्वा" इत्यादौ छिनद्मि इत्यादेरिव प्रकृतेऽप्यध्याहृतपदस्य वाक्यार्थमात्रान्वयित्वेन प्रयोगकाले उच्चारणाभावेन प्रायश्चित्ताप्रसक्तेरिति ध्येयम् । इदं तु बोध्यम् । अश्रुतपदसम्बन्धोऽध्याहारः । स्वस्थानस्थितस्य पुनस्सम्बन्ध आवृत्तिः । नेदी-

---

१. तै. सं. १. ३. ८.

## [१]—शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

भावनाभेदेऽपि फलीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्ते अधुना शब्दान्तराद्भेदोऽभिधीयते । ज्योतिष्टोमादिप्रकरणस्थानां 'सोमेन यजेत, हिरण्यमात्रेयाय ददाति, दाक्षिणानि जुहोति' इत्यादीनां विभिन्नधात्वर्थानां भावना-

---

यस्यानन्तरस्थितस्य सम्बन्धोऽनुषङ्गः । दवीयस्यानन्तरस्थितस्य सम्बन्धोऽनुवृत्तिः । इयं च त्रिविधा; सिंहावलोकन-मण्डूकगति-गङ्गास्रोतोवत् । यत्रोत्तरत्र केषुचिद्वाक्येषु पूर्वतनपदस्यान्वयो नास्ति क्वचिदुत्तरवाक्ये पूर्वतनपदस्यान्वयः तत्राद्या । यत्रोत्तरवाक्येषु एकत्र पूर्वपदस्यानन्वयः तदुत्तरवाक्ये अन्वयः तत्र द्वितीया । उत्तरवाक्येषु क्रमेण सर्वत्र पूर्वपदस्यान्वये तृतीयेति शिवम् ॥

इति श्रीमत्कावेरीतीरविराजमानचोलदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्र-
पुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरि-
वरसून्वाश्वलायनसूत्रहोशनिकर्णाटकश्रीवाञ्छेश्वरयज्व-
विरचिते भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ
द्वितीयाध्यायस्य प्रथमः पादः ॥

**शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्** ॥ ननु प्रमाणलक्षणानन्तरं को धर्मः इति भाष्यानुसारेण भावनाभेदस्यैव निरूपयितुमुचितत्वात् कथमस्य भावार्थविचारानन्तर्यमित्यत आह—**भावनाभेदेऽपीति** ॥ निरूपणीय इति शेषः ॥ **फलीभूतेति** ॥ भावनाभेदफली-भूतेत्यर्थः । तथा च भावनाभेदस्यापूर्वभेदफलकत्वात्, अपूर्वभेदस्य च भावार्थाधि-करणाधीनत्वात्, भावार्थाधिकरणविचारानन्तर्यं भावनाभेदरूपाध्यायार्थस्य युक्तमिति भावः । पादभेदं सूचयन्नाह—**उपोद्घातेति** ॥ उपोद्घातः धात्वर्थकरणत्वम् । तच्च स्तुतशस्त्राधि-करणान्तैरधिकरणैस्सपरिकरं निरूपितम् । तत्प्रसक्तं मन्त्रगताख्याताविधायकत्वम्; तदनुप्रसक्तं मन्त्रलक्षणादीति विवेकः ॥ **अधुनेति** ॥ प्राप्तावसरत्वादिति भावः ॥ **भेद इति** ॥ भावनाया इति शेषः । अधुना भावनाभेदोऽभिधीयत इत्युक्त्या अस्मिन्नेव पादे प्राधान्येन भावनाभेदो व्युत्पाद्यत इति सूचितम् । ततश्च उपोद्घातः पूर्वस्यार्थः । अस्य तु भावनाभेद इति पादभेदो बोध्यः । तत्रापि शब्दान्तरस्थले धात्वर्थभेदस्य स्पष्टत्वेन तद्भेद-निबन्धनभावनाभेदस्य सुखेनोपपादयितुं शक्यत्वात् तस्यैव प्राथम्यमिति भावः । प्रकरणा-न्तरगतानि व्यावर्तयति—**ज्योतिष्टोमेति** ॥ **इत्यादीति** ॥ अदिना स्तुवते, शंसति इत्यादिपरिग्रहः । "समिधो यजति" इत्यादिव्यावृत्त्यर्थमाह—**विभिन्नेति** ॥ **भावनाभेद-**

---

१. भेदफली—इति पाठान्तरम् ।

**भेदबोधकत्वमस्ति न वेति चिन्तायां 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन स्वर्गकर्मकभावनामात्रे लाघवाद्विहिते तदनुवादेन सोमादिवाक्यैस्सोमादिविशिष्टयागादिविधानात् । सर्वेषां चोत्पन्नशिष्टत्वेन गुणन्यायाभावात् न भावनाभेदः । न चानेकधात्वर्थानामेकजातीययत्नजन्यत्वासम्भवः; बाधकाभावात् । न च प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात्प्रत्ययानां फलवाक्यस्थेनाख्यातेन धात्वर्थानवच्छिन्नशुद्धभावनाविधानानुपपत्तिः; आख्यातेन धात्वर्थावच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभावात् । अत एव गुणफलसम्बन्धस्थले धात्वर्थानुवादेनापि भावनामात्रविधानम् ।**

---

**बोधकत्वं**—भावनाभेदानुमापकत्वम् ॥ **भावनामात्र इति** ॥ धात्वर्थानुरक्त इत्यर्थः । भाव्यविशेषाननुरागेण करणविशेषमात्रानुरक्ताया इव तद्विपरीताया अपि न्यायसाम्येन विधानसम्भवात् सामान्येनाक्षिप्तभाव्यस्य सार्वकाम्यादिवाक्यैरनेकरूपत्वेन पर्यवसानवत् सामान्येनाक्षिप्तकरणस्य प्राकरणिकवाक्यैर्यागदानादिरूपत्वेन पर्यवसानस्य तुल्यत्वादिति भावः । ननु प्रतिवाक्यं प्रत्ययभेदेन भावनाया अभ्यासात् भेद इत्यत आह—**तदनुवादेनेति** ॥ धात्वर्थविधानार्थं भावनाया अनूद्यमानत्वेन पुनश्श्रवणस्यानन्यपरत्वाभावान्न भेदकत्वमिति भावः । नन्वेवं फलवाक्यस्य भावनामात्रविधायकत्वाङ्गीकारे तदनुवादेनैव सोमवाक्ये सोमयागरूपानेकगुणविधानात् वाक्यभेदस्स्यादित्यत आह—**सोमादिविशिष्टेति** ॥ सोमपदे मत्वर्थलक्षणया सोमविशिष्टयागस्यैकस्यैव विधानान्न वाक्यभेद इत्यर्थः । नन्वेवमपि फलवाक्ये यजिश्रवणेन यागस्य विधेयत्वावश्यकत्वात् उत्पत्तिशिष्टयागावरुद्धायां भावनायां नोत्पन्नशिष्टदानादिविधानसम्भवः ; गुणन्यायादित्यत आह—**सर्वेषामिति** ॥ यागदानहोमादीनामित्यर्थः । फलवाक्ये श्रूयमाणो यजिरनुवाद एव । सोमवाक्यलब्धानुरूपतायास्सिद्धान्तेऽपि स्वीकारात् । ततश्च सर्वेषामुत्पन्नशिष्टत्वान्न गुणन्यायावकाश इति भावः । ननु यागदानहोमानां परस्परं विजातीयत्वादेकजातीयभावनाजन्यत्वं न सम्भवति ; कार्यवैजात्यस्य कारणवैजात्याधीनत्वादिति शङ्कते—**न चेति** ॥ (परिहरति)—**बाधकाभावादिति** ॥ एकस्मादेव घटात् रूपरसादिरूपविजातीयकार्यदर्शनात् निरुक्तनियमोऽप्रयोजक इति भावः । नन्वेवमपि फलवाक्ये केवलभावनाविधानं न सम्भवति ; प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । ततश्च यागविशिष्टभावनाविधेरावश्यकत्वात् उत्पत्तिशिष्टगुणावरोधेन गुणन्यायविसरो दुर्वार इत्यत आह—**न चेति** ॥ **आख्यातेनेति** ॥ उक्तव्युत्पत्त्या धात्वर्थविशिष्टभावनाप्रतिपादनेऽपि विधिफलस्याज्ञातज्ञापनस्य तदंशे तात्पर्याभावेन भावनामात्रविधिस्सम्भवतीत्यर्थः । ननु फलवाक्ये यागविशिष्टभावनाभिधाने यागस्यापि विधिविषयत्वं कुतो नास्तीत्यत आह—**अत एवेति** ॥ **गुणफलेति** ॥ "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादौ धातोरनुवादकत्वमङ्गी-

अत एव च फलवाक्ये यजिः प्रकृतसर्वधात्वर्थोपलक्षकः; ज्योतिष्टोमपदं तु छत्रिन्यायेन सर्वनामधेयमिति प्राप्ते—

कार्यमात्रवृत्तिधर्मस्य विजातीययागत्वादेः कञ्चित्प्रति कार्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति उपस्थितस्य यत्नस्यैव वैजात्यपरिकल्पनया विजातीययत्नत्वेनैव कारणत्वम्। अतश्च प्रतिधात्वर्थं वैजात्याद्भावनावैजात्यसिद्धिः। विभिन्नधात्वर्थकत्व-

---

कृत्य फलोद्देशेन गुणविधिस्वीकारेण धात्वर्थविशिष्टभावनाभिधानेऽपि धात्वर्थे विधिव्यापाराभावेन केवलभावनामात्रविध्यङ्गीकारेण तन्न्यायेन धात्वर्थस्याविधानोपपत्तिरित्यर्थः। नन्वेवं फलवाक्ये यजेरानर्थक्यमित्यत आह—**अत एवेति** ॥ आनर्थक्यादेवेत्यर्थः ॥ **सर्वधात्वर्थेति** ॥ यागदानहोमादिसर्वधात्वर्थलक्षक इत्यर्थः। ननु यजेस्सर्वधात्वर्थलक्षकत्वं न सम्भवति, ज्योतिष्टोमपदान्वयानुपपत्तेः। ज्योतिष्टोमपदं हि (ज्योतीरूपस्तोत्रवत्त्वस्य प्रवृत्तिनिमित्तं) स्वीकृत्य सोमयागनामधेयमिति चतुर्थे वक्ष्यते। ततश्च दानहोमादेस्तादृशप्रवृत्तिनिमित्ताभावादित्यत आह—**ज्योतिष्टोमपदं त्विति** ॥ **(छत्रिन्यायेनेति** ॥ छत्रिणो) यान्तीत्यादौ छत्र्यछत्रिसाधरणैकसार्थवाहित्वलक्षणया छत्र्यछत्रिबोधकत्ववत् प्रकृतेऽपि ज्योतिष्टोमतदितरधात्वर्थसाधारणप्रकृतधा(त्वर्थ इति भावः)। लोके घटपटादिरूपविजातीयकार्याणां कपालतन्त्वादिरूपविजातीयकारणजन्यत्वदर्शनेन प्रकृतेऽपि यागदानहोमानां विजातीयधात्वर्थानां विजातीयकारणजन्यत्वमावश्यकमिति। (सिद्धान्तमाह—**कार्यमात्रवृत्तिधर्मस्येति** ॥ कार्यतानवच्छेदकत्वादिति भावः ॥ **प्रतिधात्वर्थमिति** ॥ ततश्च शब्दान्तराद्भावनाभदे इत्यर्थः।) ननु प्रतिवाक्यं प्रत्ययेन भावनाया अभ्यासात् भावनाभेदस्स्यादिति चेन्न; भावनायाः प्रत्ययेना(अन्यार्थत्वेन) अनूद्यमानत्वात् अनन्यपर(विधि) पुनश्श्र(वणरूपाभ्या)सन्यायाभावात्। न च तथापि धर्मेण पापमपनुदतीति वाक्येन पापक्षयभाव्यका धर्मकरणिका भावनैकैव सर्वस्मिन्नपि वेदे (विधीयते इति) पूर्वपक्षसम्भवात् किमिति फलवाक्यस्थयजेरुपलक्षकत्वाङ्गीकारेण पूर्वपक्षः कृत इति वाच्यम्; उक्तवाक्यस्थधर्मपदस्य चोदनासूत्रेण वेदविधेये शक्तिग्रहस्य वक्तव्यतया तद्वाक्यार्थावगमात्पूर्वं विधेयत्वाज्ञानेन पदार्थोपस्थितिरेव न सम्भवतीति इतरेषां विधीनामेतद्विध्युत्तरमेवात्मलाभात्। तथा च विधिवाक्यार्थावगमोत्तरं विधेयज्ञानात् तत्र शक्तिग्रहादिना पदार्थविशेषोपस्थितिः, तदुत्तरं च तद्घटितवाक्यार्थबोध इति परस्पराश्रयापत्तेः नायं पूर्वपक्षो युक्त इति प्रकारान्तरेण पूर्वपक्षः कृत इति द्रष्टव्यम्। ननु अपर्यायधातुरूपपदभेदस्य शब्दान्तरत्वात् तस्य च कर्मभेदप्रमाणत्वान्न तेन भावनाभेदस्सिध्येत्तद्वाचिप्रत्ययस्य सर्वत्रैकत्वादित्यत आह—**विभिन्नेति** ॥ विभिन्नप्रकृतिकप्रत्ययत्वमित्यर्थः। यथाश्रुते "ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति"

---

१. च इति पाठान्तरम्।

**मेव च शब्दान्तरत्वम्। अत एव 'तिस्र आहुतीर्जुहोति' इत्यत्र सङ्ख्यया होमभेदे सिद्धे शब्दान्तरादेव उक्तविधाद्भावनाभेदः, न तु मूलोक्तादिति ध्येयम्। किञ्च प्राप्तभावनानुवादेन सोमयागाद्यनेकविधाने वाक्यभेदापत्तेः तत्तद्गुणधात्वर्थोभयविशिष्टभावनाविधानमेव तत्तद्वाक्येऽङ्गीकर्तव्यम्। तत्र च चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसम्बन्धः; अन्येषां तु तदङ्गत्वम्। न च स्वर्गवाक्य एव यागभावनोत्पत्तिपूर्वकः फलसम्बन्धः, सोमवाक्येन तु सोममात्रविधानमिति वाच्यम्; स्वर्गवाक्ये राजसूयन्यायेन इष्टिपशुयागानामेव फलसम्बन्धापत्तौ यागान्तरविधाने प्रमाणाभावात्। ततश्च पश्वाद्यवरुद्धे सोमविध्यनुपपत्तेः सोमवाक्ये कर्मान्तरविध्यवश्यम्भावः। प्रयोजनं सोमयागमात्रप्राधान्यम्॥ १॥**

---

इत्यादौ तद्धितबोध्यद्रव्याणां शब्दान्तरेण भेदो वार्तिकोक्तो न सिध्येत्॥ **अत एवेति**॥ विभिन्नधात्वर्थकत्वस्य शब्दान्तरत्वादेवेत्यर्थः। "तिस्र आहुतीर्जुहोति" इत्यत्र विभिन्नधात्वर्थकत्वात् शब्दान्तराद्भावनाभेदः, न तु सङ्ख्यया; तस्या भावनायामन्वयायोगेन भावनाभेदो न सिध्यतीत्यर्थः। अत्र वदन्ति। षडपि प्रमाणानि धात्वर्थभेद एव स्वरसानि। भावनाभेदस्तु करणभाव्यभेदाभ्यां सिध्येदेव। प्रकृते तु विभिन्नधातुभिः करणभेदेन सर्वेषु वाक्येषु भावनाविधाने सिद्धे विहितस्य विधानायोगादभ्यासात् गुणाद्वा भावनाभेदोपपत्तिः। विभिन्नधात्वर्थकत्वस्यैव शब्दान्तरत्वं स्वीकृत्यामनहोमेष्वपि तेनैव भावनाभेदस्वीकारे त्वनेकसङ्ख्याकधात्वर्थकत्वं सङ्ख्यात्वं स्वीकृत्य प्रत्येकैकत्वशालियागदानभावनयोरपि सङ्ख्ययैव भेदोऽस्तु, विनिगमनाविरहात्। "चतुरवत्तं जुहोति" इत्यत्र धात्वर्थभेदेऽपि यागभावनाभेदाभावेन भवदुक्तशब्दान्तरेण भेदापत्तेश्च कर्मणां भेदे भवदुक्तशब्दान्तरस्याप्रसरात्। तदर्थं प्राचीनोक्तमपि स्वीकार्यमेवेति शब्दान्तरद्वैविध्यापत्तेश्च न किञ्चिदेतदिति। करणजनकयत्ने भावनात्वनिराकरणादाह—**किञ्चेति**॥ **यागादीति**॥ आदिना हिरण्यात्रेयदानाद्यनेकगुणविधानपरिग्रहः॥(**वाक्यभेदापत्तेरिति**॥ कारकाणां परस्परसम्बन्धाभावेन सोमादिविशिष्टयागादिविधानासम्भवात्। मत्वर्थलक्षणायाश्च पूर्वमेव निरासादिति भावः॥ **भावनाविधानमेवेति**॥) ततश्च शब्दान्तरात् भावनाभेदसिद्धिरिति भावः। भावनाभेदफलमाह—**तत्र चेति**॥ **चातुर्थिकेति**॥ ज्योतिष्टोमपदस्य राजसूयपदवत् प्राकरणिकसर्वयागपरत्वेन सर्वेषां फलसम्बन्धात् समप्राधान्यमाशङ्क्य वाक्यशेषेण सोमयाग एव शक्तिसिद्धेस्तस्यैव प्राधान्यात् फलसम्बन्ध इत्युक्तमिति भावः॥ **तदङ्गत्वमिति**॥ तथा च तत्तद्विधिषु विलक्षणानां प्रधानोपकाराणामेव भाव्यतया करणभाव्योभयभेदात् भावनाभेद इति भावः। प्रसङ्गाच्छङ्कते—**न चेति**॥ फलवाक्ये स्वर्गोद्देशेन यागकरणकभावनाविधानमङ्गीकृत्य यागानुवादेन सोम-

---

१. तै. ब्रा. १. ३. १०.

## [२]—एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

दर्शपूर्णमासप्रकरणस्थे 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति'' इत्यादौ यागस्यापि प्रत्यभिज्ञायमानत्वेन अभेदान्न भावनाभेदः। न चाभ्यासाद्भेदो यागस्य ; अभ्यासस्यैकत्वसाधकत्वेन विरुद्धत्वात्।

---

वाक्ये सोमविधिसम्भवान्न सोमवाक्ये भावनान्तरसिद्धिः। एवं ददाति, जुहेतीत्यादिष्वपीति भावः॥ **स्वर्गवाक्य इति**॥ यथा, राजसूयवाक्ये तत्तद्वाक्योत्पन्नानामिष्टिपशुयागानामेव ग्रहणं तद्वत् प्रकृतेऽपीष्टिपशुयागानामेव ग्रहणेन तेषामेव फलसम्बन्धापत्तौ उत्पत्तिशिष्ट-पश्वाद्यवरुद्धे सोमविधानानुपपत्तेस्सोमवाक्ये यागान्तरविधानमावश्यकमित्यर्थः। सूत्रार्थस्तु, **शब्दान्तरे**—अपर्यायधातुभेदे। **कर्मभेदः**—भावनाभेदः। धात्वर्थेन भावनाया **अनुबन्धस्य**—अवच्छेदस्य। कृतत्वादिति॥

**एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्**॥ पूर्ववदिह धात्वर्थभेदाभावान्न भावनाभेद इत्युत्थितेस्सङ्गतिः। यथा, शब्दान्तरस्य पदश्रुत्या प्रतीयमानार्थमात्रावलम्बनेन भेदकत्वं एवमभ्यासस्यापीत्यनेन सादृश्येनाभ्यासस्यैवेदानीं भेदकत्वव्युत्पादनं युक्तम् ; न तु सङ्ख्यासंज्ञादीनाम्। तेषां विधिपदस्थत्वाभावेन वाक्यगम्यसम्बन्धमपेक्ष्य भेदकत्वादि-त्याशयेनाह—**दर्शेति**॥ **इत्यादाविति**॥ आदिना "बर्हिर्यजति, नाराशंसं यजति, अग्निं स्विष्टकृतं यजति" इत्यनूयाजविधिपरिग्रहः। किमेतेष्वेका भावना, उत भावनाभेद इति संशये पूर्व-पक्षमाह—**यागस्यापीति**॥ अपिना भावनाप्रत्यभिज्ञानं सूचितम्। पूर्वत्रापर्यायधातुभेदेन शक्यतावच्छेदकभेदेऽपि प्रकृते तदभावान्न भावनाभेद इत्याह—**प्रत्यभिज्ञेति**॥ यत्र यागयोरीषदपि वैलक्षण्यं नास्ति तत्र प्रत्यभिज्ञादार्ढ्येन भेदकल्पनमप्रामाणिकम् ; यथा चक्षु-ष्कामेष्टौ "एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपालं, सौर्यं चरुं, अग्नये भ्राजस्वते पुरोडाशमष्टाकपालं" इति। एवमध्वरकल्पायामपि "सारस्वतं चरुं, बार्हस्पत्यं चरुं" इति विधि[2]........विधिद्वयस्य त्रिः पाठेऽपि दृढतरप्रत्यभिज्ञया यागैकत्वं तद्वदत्रापीति भावः। अत एव "अपः प्रणयति" इत्यस्य षड्वारं पाठेऽपि न भावनाभेदः। ननु शब्दान्तराद्भे-दाभावेऽपि अभ्यासाद्भेदोऽस्त्वित्याशङ्क्य निराचष्टे—**न चेति**॥ **एकत्वेति**॥ एकस्मिन्नेव घटे घटोऽयं घटोऽयमिति (अभ्यासेऽपि यथा) लोके एकत्वमेव सिध्यति; न भेदः। एवमिहापीत्यर्थः। अयं भावः। एकस्यैवं पुनश्श्रुतिरिति अभ्यासलक्षणस्यैकपदस्य नानार्थकत्वमुतैकार्थत्व........ अर्थभेदग्रहोत्तरमेवाभ्यासज्ञानान्नाभ्यासस्य भेदप्रमापकता। द्वितीये वदतो व्याघातः। अत एव "तत्त्वमसि" इति महावाक्यस्य नवकृत्वोऽभ्यासेऽप्य(प्यावृत्ति)रिति भगवान् बाद-रायण आह—"आवृत्तिरसकृदुपदेशात्" इति। ननु एकस्यैव कर्मणः पुनः पुनर्विधानं व्यर्थम्।

---

१. तै. सं. २. ६. १. २. अत्र मातृकायां पत्रत्रयलोपः।

**न च विधिपुनश्श्रवणरूपस्याभ्यासस्य विधेययागादिभेदकत्वम्; 'दध्ना जुहोति' इतिवत् विधेर्देवतारूपगुणसङ्क्रान्तशक्तिकत्वेन यागविषयत्वाभावात्। न च यागोत्पत्तिवाक्यस्थगुणावरोधान्नोत्पन्नवाक्येन गुणविधिः; अगत्या प्राथमिकवाक्यस्थसमित्पदस्य तत्प्रख्यन्यायेन नामधेयत्वाङ्गीकारात्। वस्तुतस्तु, यदि याज्यामन्त्रवर्णात्समित्प्राप्तिः तदा सा तनूनपादादीनामप्यविशिष्टा। अत उपांशुयाजानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा पञ्चस्वपि देवताविधिः। न च सम्भवत्प्राप्तिकता; याज्यामन्त्रवदनुमन्त्रणमन्त्रेभ्योऽपि विकल्पेन वसन्तादिदेवताप्राप्तिसम्भवेन एतेषां नियमविधित्वोपपत्तेः। अतश्चानन्यपरविधिपुनश्श्रवणाभावान्न कर्मभेद इति प्राप्ते—**

---

अप्रवृत्तप्रवर्तनात्मकविधेर्धात्वर्थानुरक्तभावनाविधायकतायाः प्रथमवाक्येनैवावगतत्वात्। अतो द्वितीयादिवाक्येषु विधिविषययोर्भावनाधात्वर्थयोः पूर्वस्माद्भेदस्सिध्यति। न च पुनरनुष्ठानफलकः पुनर्विधिरिति वाच्यम्; तेन पुनः यजेतेतिवत् पुनश्शब्दाश्रवणात्। "त्रिर्वेदिं प्रोक्षति" इतिवत् "पञ्चकृत्वो यजति" इति विधिनैवोपपत्तौ विधिबाहुळ्यवैयर्थ्यस्य दुरुद्धरत्वादिति। सिद्धान्ती शङ्कते—**न च विधीति**॥ अग्निहोत्रस्योत्पत्तिवाक्याधिकारवाक्ययोः द्विर्विधानेऽपि कर्मभेदादर्शनात् अनन्यपरत्वं पुनश्श्रवणे विशेषणं देयम्। तथा च "अपः प्रणयति" इत्यत्रार्थवादवैचित्र्यार्थम्। "तत्त्वमसि" इत्यत्र दृष्टान्तभेदार्थं पुनः पुनरभ्यासस्यान्यपरत्ववत् सौर्यचरोः पूर्वापरकालभेदेन द्विरनुष्ठानादेश्चक्षुष्कामेष्टयादावपि फलत्वसम्भवात् नैकान्ततः कर्मभेदसिद्धिः। प्रकृते तु समिदादयो गुणाः प्रतिवाक्यं श्रूयन्त इति अन्यपरत्वान्नाभ्याससिद्धिरिति परिहरति—**दध्नेति**॥ "विष्णुं यजति" इतिवत् द्वितीयाया देवताबोधकत्वमभिप्रेत्याह—**देवतारूपेति**॥ पञ्चस्वपि वाक्येषु देवतापदश्रवणेनोत्पत्तिशिष्टगुणावरोधान्न गुणविधिसम्भव इति शङ्कते—**न चेति**॥ गुणविधानायोत्पत्तिपरवाक्यस्यान्यस्याभावेनेत्यर्थः। प्रथमोपस्थितत्वलाघवेन प्राथमिकवाक्यस्थसमित्पदस्य नामधेयत्वमङ्गीकृत्य कर्ममात्रविधाने तदनुवादेन द्वितीयादिवाक्यैर्गुणविधिरित्यर्थः। भवदेवोक्तं समाधानमाह—**वस्तुत इति**॥ प्रथमवाक्ये देवताप्राप्त्यङ्गीकारे द्वितीयादिवाक्येष्वपि तत्सम्भवात् क्वापि गुणविधित्वं न स्यादित्यर्थः। उपांशुयाजवाक्यानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा पञ्चस्वपि वाक्येषु गुणविधिरिति पूर्वपक्षः कार्य इत्यर्थः। मन्त्रवर्णात् देवताप्राप्तिसम्भवात् विधिर्व्यर्थ इति शङ्कते—**न चेति**॥ नियमार्थत्वेन विधिफलं सम्भवतीत्याह—**याज्येति**॥ "समिधस्समिधो अग्न आज्यस्य" इत्यादिमन्त्रवर्णादिति भावः॥ **अनुमन्त्रणमन्त्रेभ्यः**—"वसन्तमृतूनां प्रीणामि" इत्यादिभ्यः। ततश्च पक्षप्राप्तत्वात् समिदादिदेवतानां तन्नियम एव समिदादिवाक्येषु देवताविधिफलमिति भावः। पूर्वप(क्षमुपसंहरति **अतः**) **चेति**॥ अत्रेदं

उभयाकाङ्क्षाबललभ्ययाज्यामन्त्राणामेव देवताकल्पकत्वस्य पुरःस्फूर्तिकत्वेन अन्यतराकाङ्क्षाबललभ्यानुमन्त्रणमन्त्रेभ्यो देवताकल्पकत्वानुपपत्तेः न समिदादिपदानां

---

बोध्यम्। उपांशुयाजे याज्यामन्त्रवर्णैर्देवतानां प्राप्ततया निराकाङ्क्षतया न तत्र समिदादिवाक्यैर्देवतानियमस्सम्भवति। नापि विद्वद्वाक्य(विहितकर्मा)नुवादेन देवताविधिसम्भवः; तयोरनुवादकत्वसिद्धान्तविरोधात्। तस्मात् कौषीतकिब्राह्मणे "प्रयाजान्यजति" इति प्रकृत्य "समिधो यजति" इत्यादिश्रवणात् प्रयाजशब्दस्य "प्रयाजानूयाजौ यज्ञाङ्गौ" इति पाणिनिव्यवहारात्, "यदुपभृतिप्रयाजानूयाजेभ्यस्तत्" इति "एकादश प्रयाजान्यजति" इत्यादिबहुतरप्रयोगैर्नामधेयत्वेन "समिधः" इत्यादिबहुवचनस्य कर्मभेदबोधकत्वाभावेन तद्वाक्यविहितमेकमेव कर्म; तदनुवादेन देवताविधानम्। दृष्टार्थत्वाच्च विकल्पः। न च विकल्पेन देवताविधाने एक एव प्रयाजः स्यादिति वाच्यम्; "पञ्च प्रयाजाः" इति लिङ्गदर्शनादेव समुच्चयोपपत्तेः। "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते" इति लिङ्गस्य सर्वदेवत्यप्रयाजानुष्ठाने युज्यते तदनुवादेन देवताविधिरिति पूर्वपक्षो युक्तः। अपि च "वर्म वा एतद्यज्ञस्य क्रियते। यत्प्रयाजानूयाजा इज्यन्ते" इति प्रयाजविधिः। तदनुवादेन पञ्चस्वपि वाक्येषु देवताविधिरिति पूर्वपक्षः। तत्र च पूर्ववद्विकल्पपरिहारः। "अतिहायेडोबर्हिः प्रतिसमानयते जुह्वामौपभृतं" इति विधिबलादपि समुच्चयसिद्धेर्न विकल्पावकाश इति द्रष्टव्यम्। सिद्धान्तमाह—**उभयेति**॥ मन्त्रवर्णप्राप्तसमिदादिदेवतानां विधानानर्थक्यपरिहारार्थं वसन्तादिदेवतानामनुमन्त्रणमन्त्रप्राप्तानां निरासेन समिदादिदेवतानियमार्थत्वमिति पूर्वपक्षोक्तनियमं दूषयति-**उभयाकाङ्क्षेति**॥ उभयाकाङ्क्षाप्राप्तयाज्यामन्त्रापेक्षया अन्यतराकाङ्क्षाप्राप्तमन्त्राणां दुर्बलत्वेन अनुमन्त्रणमन्त्रेण देवताप्राप्तेरभावेन तन्निवृत्तिफलकनियमासम्भवेन विधिवैयर्थ्यस्य दुर्वारत्वादिति भावः। अत्रेदमवधेयम्। अनुमन्त्रणमन्त्राणां याज्यामन्त्रापेक्षया दौर्बल्यं न युक्तम्; वसन्तादिदेवतानां "समिधस्समिधो अग्न आज्यस्य" इति मन्त्रप्रतिपाद्यत्वोपपत्तेः। याज्याप्रतिपाद्यसमिदादीनां वसन्तादिदेवतान्यत्वे "वसन्तमृतूनां" इत्यनुमन्त्रणत्वानुपपत्तेः। अनुमन्त्रणमन्त्रा हि प्रयाजादिदेवताप्रार्थनरूपाः। वसन्तमनेन प्रीणयामि तोषयामि, स वसन्तः मां प्रीणात्विति लिङ्गात्। न हि देवतान्यत्वे अन्यदेवताप्रयोगेणान्यप्रीतिस्सम्भवति। तथा "समिधो यजति, वसन्तमेवावरुन्धे" इत्यर्थवादवशादपि वसन्तदेवताकत्वं स्पष्टं प्रतीयत इति प्रयाजानां वसन्तादिदेवता (प्रतिपादकत्वस्य) सिद्धत्वान्नोक्तानुपपत्तिः। न च समिदादिपदानां वसन्तादिपरत्वे प्रमाणाभाव इति वाच्यम्; बोधायनसूत्रस्थानुमन्त्रणमन्त्रलिङ्गस्योक्त(त्वात्)। न च मन्त्राणामर्थवादस्य स्तुतिस्मरणपरत्वान्न देवतानिर्णायकत्वमिति वाच्यम्; शक्यार्थप्रतिपादनद्वारैव स्तुतिपरत्वस्य वक्तव्यत्वात्। समिदादीनां वसन्ताद्यन्यत्वे प्रमाणाभावाच्च। समिदादीनां वसन्ता-

देवतानियामकत्वम्। अतश्चोपपदार्थस्य सम्भवत्प्राप्तिकत्वात् पदश्रुत्यादिना विधेर्धात्वर्थभावनाविषयत्वप्रतीतेर्विहितविधानायोगात् विधेयतावच्छेदकतया वैजात्यसिद्धिः। न चैवं तत्प्रख्यन्यायेन समिदादिपदानां नामधेयत्वात् संज्ञयैव भेदसिद्धिः; तत्प्रख्यन्यायेन गुणविधित्वनिराकरणे नामधेयकार्यस्यैकेनैव एकस्मिन् कर्मणि सिद्धेरनेकेषां नामधेयानां वैयर्थ्यप्रसङ्गेन समिदादिपदानां गुणानुवादकत्वेनैव उपपत्तेर्नामत्वानिर्णयात्। सिद्धे त्वभ्यासेन कर्मभेदे एकैककर्मणः एकैकं नामधेयं सार्थकमिति नामत्वसिद्धिः[1] प्रयोजनम्॥ २॥

---

द्यन्यत्वेऽपि मनोतास्थाग्निपदवदैन्द्रीन्यायेन वसन्तादिपरत्वस्य बोधायनवचनानुसारेणावश्यकत्वात्। तस्मात् प्रकारान्तरेण सिद्धान्तः कार्यः। यजतिपदस्य प्रत्यभिज्ञया धातुप्रत्यययोः दृढतरप्रत्यभिज्ञयार्थैक्यप्रतीतेर्यागभावनयोर्भेद इति पूर्वपक्षे प्राप्ते—सर्वेषां विधित्वात् विहितविधानायोगात् अनन्यपरविधिपुनःश्रवणरूपाभ्यासेन कर्मभेदसिद्धिरिति सिद्धान्तो द्रष्टव्यः। तमेवोपपादयति—**अतश्चेति**॥ समिदादिपदानां नियामकत्वासम्भवात् इत्यर्थः। **उपपदार्थस्य**—समिदादिदेवतायाः।**सम्भवत्प्राप्तिकत्वात्**-मन्त्रवर्णेन प्राप्तिसम्भवात्। **पदश्रुत्यादिना**-समानपदश्रुत्यादिना। आदिना समानप्रत्ययश्रुतिपरिग्रहः॥**विधेरिति**॥ लेट्त्वेन निश्चितस्येति शेषः।धात्वर्थयागकरणकभावनाविधायकत्वनिश्चयाद्विहितयागादिविधानायोगात् तत्तद्विधिविषयतावच्छेदकत्वेन वैजात्यं सिध्यतीत्यर्थः। विधिफलस्याज्ञातज्ञापनस्य प्रथमविधिनैव सिद्धत्वात्तस्यैव पुनर्विधाने अज्ञातज्ञापनासिद्धेरिति भावः। ननु समिदादिपदानां नामधेयत्वे "अथैष ज्योतिः" इत्यादिवत् संज्ञयैव भेदसिद्धेरभ्यासस्य भेदकत्वं न सम्भवतीति शङ्कां परिहरति—**न चैवमित्यादिना**॥ कर्मभेदसिद्धेः पूर्वं संज्ञात्वनिश्चयाभावान्न संज्ञया भेदसिद्धिः। अभ्यासेन कर्मभेदे सिद्धे तु प्रथमोपस्थिताभ्यासेनैव कर्मभेदसिद्धेर्न संज्ञया कर्मभेदप्रसक्तिरिति परिहरति—**तत्प्रख्यन्यायेनेति**॥ तत्प्रख्यन्यायेन समिदादिशब्दानां गुणपरत्वमात्रं निराकृतम्। तावता च न नामत्वसिद्धिः; किन्त्वभ्याससिद्ध्यनन्तरमेव। अन्यथा एकस्य कर्मण एकसंज्ञयैव व्यवहारोपपत्तेः संज्ञान्तरवैयर्थ्यापत्त्या गुणानुवादकत्वमेव सिध्येत्। अतोऽभ्यासेन कर्मभेदे सिद्धे एकस्य कर्मण एकं नामधेयमिति संज्ञात्वसिद्धिरिति प्रथमोपस्थिताभ्यासेनैव कर्मभेद इत्यर्थः। अयं भावः। "अथैष ज्योतिः" इत्यादौ ज्योतिरादिशब्दानामनिर्धारितक्रियाविशेषसंज्ञात्वनिश्चयोत्तरत्वे तदन्यथानुपपत्त्या विध्याख्यातकल्पनोत्तरमभ्यासस्वरूपान्तर्गतविधिपुनःश्रवणरूपविशेष्यांशसिद्धिः। "उद्भिदा यजेत" इत्यादौ विशेष्यां(श)त्वनिश्चयात् पूर्वमेव सिद्धतया प्रकृतयागाश्रयेणैव गुणफलसम्बन्धविध्युपपत्तेः पुनःश्रवणां-

---

१. "नामत्वनिर्णयः। प्रयोजनमुत्तराधिकरणप्रयोजनम्। प्रयोजनान्तराणि कौस्तुभे स्पष्टानि।" इति पाठान्तरम्।

[३]—प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥ विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिस्स्यात् ॥ ४ ॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना वा गुणानां युगपच्छासनाच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिङ्गदर्शनाच्च ॥ ८ ॥

तत्रत्य एव 'य एवं विद्वान् पौर्णमासीं यजते, यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति, य एवं विद्वानमावास्यां यजते, यावदतिरात्रेण'[1] इत्यादिवाक्येऽप्यभ्यासात्कर्मभेदः। न चायं लट्,लेट्त्वेऽपि वा यच्छब्देन विधिशक्तिप्रतिबन्धात् विधिपुनश्श्रुत्यभावः;'समिधो[2] यजति' इतिवल्लेट्त्वावगतेः। यच्छब्दस्य 'यो दीक्षितः' इतिवद्वेदनक्रियामात्रविधिप्रतिबन्धक-

---

शस्यान्यपरत्वशङ्कानिराकरणस्य संज्ञात्वनिश्चयोत्तरं सिद्धिरिति तादृशस्थलेषु संज्ञाया एव भेदकत्वम्; नाभ्यासस्य। प्रकृते तु उक्तरीत्या संज्ञात्वस्याभ्यासाधीनत्वादभ्यास एव भेदक इति। अधिकरणप्रयोजनं नामत्वसिद्धिरित्याह—**नामत्वसिद्धिः प्रयोजनमिति** ॥ सूत्रार्थस्तु, **एकस्य पुनःश्रुतिरपि, एवं**--शब्दान्तरवत् भेदिका, **अविशेषात्**---दध्यादिवद्विधेयविशेषाभावात्, अन्यथा हि वाक्यमेव **अनर्थकं स्यादिति** ॥

**प्रकरणन्तु पौर्णमास्यां रूपावचनात्** ॥ अभ्यासापवादात् सङ्गतिः ॥ **तत्रत्य एव**—दर्शपूर्णमासप्रकरणस्थ एव। वाक्य इत्यग्रेणान्वयः। यावदित्याद्युक्तिः अर्थवादत्वेन पूर्वपक्षे विधित्वदार्ढ्यार्था। सिद्धान्ते तच्छब्दपूर्वभागत्वेन विधित्वनिरासार्था च। विद्वद्वाक्ययोः कर्मभेदोऽस्ति न वेति संशयः। पूर्वपक्षमाह—**अभ्यासादिति** ॥ "यजते" इत्यस्य द्विः श्रवणादित्यर्थः। आग्नेयादिवाक्यासिद्धयजिपदस्य पुनःश्रवणात् अभ्यास इति प्राञ्चः। लिङाद्यभावात् कथं विधित्वमिति शङ्कते—**न चेति** ॥ **लडिति** ॥ लटो वर्तमानार्थकत्वेन प्रवर्तनावाचित्वाभावादिति भावः ॥ **लेट्त्वेऽपि वेति** ॥ अप्राप्तार्थत्वेन "समिधो यजति" इत्यादिवत् लेट्त्वनिश्चयेऽपि "य एवं विद्वान्" इति यच्छब्देन विधिशक्तिप्रतिबन्धात् "देवांश्च याभिर्यजते" इतिवत् न विधित्वं सम्भवतीत्यर्थः। "यो दीक्षितो यदग्नीषोमीयं पशुमालभेत" इति वाक्ये दीक्षाविधिप्रतिबन्धवदत्रापि वेदनक्रियाविधिप्रतिबन्धमात्रेणोपपत्तेर्न यागविधिप्रतिबन्धकत्वमित्यर्थः। न चाग्नेयादिवाक्येष्वनन्यपरयजिश्रवणाभावाद्विद्वद्वाक्येऽपि पौर्णमास्यादिकालसत्त्वेनानन्यपरपुनःश्रवणाभावात् नाभ्यासस्वरूपसिद्धिरिति वाच्यम्; अत्रत्याभ्यासपदस्य पुनःश्रवणमात्रपरत्वे वाक्यानर्थक्यदोषेण विद्वद्वाक्ययो-

---

१. तै. सं. १ ६ ९. २. तै. सं. २. ६. १.

**त्वात् । अत एव पौर्णमास्यमावास्यापदमपि नामधेयम् । 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयेन एतद्वाक्यविहितकर्मणोरेव कालविधानात् । न च रूपाभावः, 'वार्त्रघ्नी पूर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम्'[1] इति वचनेन आज्यभागक्रमाम्नातानामपि मन्त्राणां क्रमं बाधित्वा एतद्वाक्यविहितकर्माङ्गत्वेन विधानात् ।**

विधायकत्वपूर्वपक्षोपपत्तेरिति भावः । **अत एव**--विद्वद्वाक्यद्वयस्य विधायकत्वाङ्गीकारादेव । **पौर्णमास्यमावास्यापदं नामधेयम्** । तत्प्रख्यन्यायेनेति शेषः । **एतद्वाक्यविहितकर्मणोरेव**—विद्वद्वाक्यद्वयविहितकर्मणोरेव । न त्वाग्नेययागेष्वित्यर्थः । तेषामुत्पत्तिवाक्येष्वेव कालविधानात्, प्रयाजादीनां प्रधानकालेनैव कालसिद्धेरत्रत्यतृतीयैकवचनान्तपदेन बहूनां यागानामभिधानासम्भवाच्चेति भावः । ततश्च विद्वद्वाक्यद्वयं पौर्णमास्यमावास्यासंज्ञककर्मद्वयविधायकमित्याशयः । ननु द्रव्यदेवताभावात् कथं विधायकत्वमिति शङ्कते—**न चेति** ॥ परिहरति—**वार्त्रघ्नी इति** ॥ **वार्त्रघ्नी**—वृत्रहननप्रकाशकपदयुक्ते "अग्निर्वृत्राणि" "त्वं सोमासि" इति द्वे ऋचौ । **वृधन्वती**—वृद्धिप्रकाशकपदयुक्ते "अग्निः प्रत्नेन" "सोम गीर्भिः' इति द्वे ऋचौ । द्विवचनलोपेन प्रयोगश्छान्दसः । ततश्च विद्वद्वाक्यविहितकर्मोद्देशेन मन्त्रविधानात् मान्त्रवर्णिकदेवताप्राप्तिरित्यर्थः । नन्वाज्यभागक्रमाम्नातत्वेन मन्त्राणां तदङ्गत्वस्यैव युक्तत्वात् कथं विद्वद्वाक्यविहितकर्माङ्गत्वमिति शङ्कां परिहरति—**क्रममिति** ॥ ततश्च क्रमापेक्षया वचनस्य प्रबलत्वेन वचनेन दुर्बलक्रमं बाधित्वात्रैव मन्त्रविनियोगः सम्भवतीति भावः । अत्र केचित्, वार्त्रघ्नीवाक्ये एकस्मिन्नेव कर्मणि मन्त्रद्वयस्य विधानात् अग्निः सोमश्चेति द्वयोर्देवतात्वसिद्धिः । तत्प्रकाशकयोश्च दृष्टार्थत्वेऽपि न विकल्पः । एकपदोपादानेन साहित्यस्य विवक्षिततया समुच्चयसिद्धेः । तयोराद्या पुरोनुवाक्या । अन्या याज्या । एवं वृधन्वतीवाक्येऽपीत्याहुः । अन्ये तु, द्वितीयाया ऋचः न याज्यात्वम्; अनुवाक्यासमाख्याबाधात् । अनूच्येते इत्येव विधानाच्च । अतो "द्वे पुरोनुवाक्ये अन्वाह" इति महापितृयज्ञस्य विधिवत् अत्रापि द्वे द्वे अनुवाक्ये विधीयेते । तयोश्च प्रत्यनुवाक्यमन्ते प्रणवो निधेयः । तथैव षोडशान्त्यपादे वर्णनात् । "आज्यभागौ यजति" इति वाक्यमपि एतयोरेव यागयोः समुदायानुवादः । तत्राज्यभागपदमपि तत्प्रख्यन्यायेनैनयोरेव नामधेयम् । समिदादिपदप्रयाजपदयोरिव व्याप्यव्यापकभावेन नामद्वयवैयर्थ्याभावात् । "अग्नीषोमाभ्यामाज्यभागौ यजति" इति वाक्यं तु मन्त्रवर्णप्राप्तप्रत्येकदेवतात्वबाधेन चतुर्थ्या व्यासज्यवृत्तिदेवतात्वविधायकम् । अतो "जुषाणो अग्निराज्यस्य वेतु" इत्येव याज्या । अत्रत्याग्निपदं मनोतामन्त्र इव सोमोपलक्षकम् । वृधन्वतीवाक्येऽप्येतत्सर्वं योज्यम् । एतस्मिन्पक्षे क्रमबाधोऽपि समाहितो भवतीत्याहुः ।

१. तै. सं. २. ५. ७.

मान्त्रवर्णिकाग्नीषोमदेवतायाः 'सर्वस्मै वा एतद्यज्ञाय गृह्यते, यद्ध्रुवायामाज्यम्'[1] इति वचनेन द्रव्यस्य च प्राप्तत्वात् । अथवा आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिपदोपस्थापितैतद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानात् रूपलाभोपपत्तिः । न चानेकविधानाद्वाक्यभेदः ; तद्धितेन देवताविशिष्टद्रव्यवाचिना परस्परान्वयस्य व्युत्पन्नत्वेन विशिष्टविध्युपपत्तेः । प्रकारान्तरेण रूपलाभस्तु कौस्तुभ एव द्रष्टव्यः । सर्वथा विद्वद्वाक्ये कर्मान्तरविधिः । एवं च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति फलवाक्येन प्रयाजादिसाधारण्येन सर्वेषामाग्नेयादीनामेतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसम्बन्धः । द्वितीये तु तत्साधारण्येन तयोरेव । दर्शपूर्णमासप्रातिपदिकस्य काल-

---

द्रव्यप्राप्तिमाह—**सर्वस्मा इति** ॥ अनेन वाक्येन यज्ञत्वावच्छिन्नोद्देशेन ध्रौवाज्यविधानादलङ्करणादिव्यावृत्तावपि विद्वद्वाक्यविहितयोरपि यज्ञत्वाविशेषादुपांशुयाज इवात्रापि प्राप्तिसम्भवादिति भावः । अत्र प्राचीनैः सूत्रभाष्याद्यनुसारेण मन्त्रवर्णादितो रूपलाभ इति पूर्वपक्षं कृत्वा तत्समाधाय पुनराग्नेयादिवाक्यै रूपलाभमाशङ्क्य समाहितम् । तथा सत्यधिकरणान्तरत्वभ्रमः स्यादिति मनसि निधायात्रैव तदपि पक्षान्तरं दर्शयति—**अथवेति** ॥ **आग्नेयादीति** ॥ आदिना अग्नीषोमीयादिवाक्यपरिग्रहः । सर्वेषामुत्पन्नशिष्टत्वाद्विकल्पः । नन्वाग्नेयवाक्येन रूपलाभाङ्गीकारे पौर्णमास्यमावास्याशब्दाभ्यामुभयोरपि पौर्णमास्यमावास्यासंज्ञकविद्वद्वाक्यविहितकर्मणोरुद्देश्यत्वात् उद्देश्यानेकत्वकृतो वाक्यभेदः स्यादिति चेन्न ; आग्नेयवाक्ये चकारश्रवणेन तस्य च निपातत्वेन तदर्थस्य नामार्थान्वयव्युत्पत्तेः समुच्चितयोरुपस्थितत्वेन अश्वाभिधानीवद्विशिष्टस्य व्युत्पन्नत्वेन वाक्यभेदाप्रसरात् । "अर्धमन्तर्वेदि" इतिवत् लक्षणया प्रकृतप्रधानयागत्वस्योद्देश्यतावच्छेदकत्वान्न वाक्यभेद इति केचित् । नन्वेवमप्याग्नेयवाक्येन रूपलाभे प्राप्तकर्मानुवादेन द्रव्यदेवतयोर्विधानात् विधेयानेकत्वकृतो वाक्यभेद इति शङ्कते—**न चेति** ॥ परिहरति—**तद्धितेनेति** ॥ "सास्य देवता" इत्यनुशासनेन तद्धितस्य देवताविशिष्टद्रव्यवाचितया विधिव्यापारं विना परस्परान्वयासम्भवेन विशिष्टैकार्थविधानान्न वाक्यभेद इत्यर्थः ॥ **प्रकारान्तरेणेति** ॥ समिदादिवाक्यैर्देवतालाभः, अव्यक्तत्वात् सौमिकधर्मातिदेश इति पक्षाणां दुर्बलत्वादत्र ते नोक्ता इति भावः । प्रयोजनमाह—**एवं चेति** ॥ आग्नेयादयः प्रयाजादयश्च विद्वद्वाक्यविहितकर्मद्वयं च समप्रधानमिति मान्त्रवर्णिकदेवतापक्षफलमित्यर्थः । उत्पन्नशिष्टरूपलाभपक्षे चाग्नेयाद्यभावादवशिष्टानामेव समप्राधान्यमित्याह—**द्वितीये त्विति** ॥ तदेवोपपादयति—**दर्शेति** ॥ वाक्यशेषे सोमयागमात्रवाचित्वेन प्रसिद्धार्थकं ज्योतिष्टोमपदमेवाख्यातसङ्कोचकं, अप्रासिद्धं

---

१. तै. ब्रा. ३. ३. ५.

योगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात् । आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धत्वात् । अतो राजसूयन्यायेन नाम्नः सङ्कोचकत्वानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः । पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसम्बन्धः; न तु षण्णामेवाग्नेयादीनामिति प्राप्ते—

लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानामपेक्षितव्यवस्थाविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नानपेक्षितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गताबोधकत्वम् । अत एव कालद्वारेण कर्मद्वारेण वा व्यवस्थापरमेव तदिति वक्ष्यते ।

---

त्वाख्यातपरतन्त्रत्वान्न तत्सङ्कोचकम् । अतो राजसूयपदमिष्टिपशुसोमयागदर्वीहोमानां सर्वेषां वाचकमिति सर्वं समप्रधानमिति चतुर्थे वक्ष्यमाणं न्यायं स्मारयति— **राजसूयेति** ॥ **पाशाधिकरणन्यायेनेति** ॥ "अदितिः पाशान् प्रमुमोक्तु" इति मन्त्रे पाशानिति बहुवचनस्यैकत्वे लक्षणेति नवमे वक्ष्यमाणत्वात्, तन्न्यायेन "दर्शपूर्णमासाभ्यां" इति द्विवचनस्यापि बहुत्वार्थकत्वात् प्रातिपदिकोक्तकालसम्बद्धानामाग्नेयादीनां प्रकृतयागयोश्च प्राधान्यमिति भावः । लक्षणाया अपि दोषत्वादाह—**अनयोरेव वेति** ॥ यद्वा आग्नेयादिवाक्यै रूपलाभपक्ष आह--**अनयोरेव वेति** ॥ विद्वद्वाक्यविहितकर्मणोरित्यर्थः ॥ **कथञ्चिदिति** ॥ दर्शपूर्णमासाख्यकर्मवाचकपदगतद्विवचनेन पौर्णमास्यमावास्याख्यकर्मगतद्वित्वप्रतिपादनासम्भवेऽप्यन्वारम्भणीयाविधिवाक्यशेषे "दर्शो वा एतयोः पूर्वः, पूर्णमास इतरः" इत्यादौ दर्शामावास्यापदयोः पूर्णमासपौर्णमासीपदयोश्च एकार्थत्वावगमादिति भावः । अत्र केचित्, "स्रुवेण पार्वणौ होमौ जुहोति" इति वचनविहितपार्वणहोमयोर्द्वित्वात् पर्वशब्दात्तद्धितेन पार्वणशब्दनिष्पत्तेः दर्शपूर्णमासयोरेव पर्वत्वेन कालसम्बन्धाच्च तद्वाक्यविहितयागयोरेव फलसम्बन्ध इत्याहुः । तद्वाक्यस्य विद्वद्वाक्यविहितयागानुवादेन स्रुवविधायकत्वेनोपपत्तौ यागविधायकत्वासम्भवात् विद्वद्वाक्यविहितयागयोरेव फलसम्बन्धो युक्त इत्यन्ये । सिद्धान्तमाह—**लिङ्गक्रमाभ्यामित्यादि** ॥ मन्त्रवर्णाद्देवताप्राप्तिं निराकरोति— **आज्यभागेति** ॥ वार्त्रघ्न्यादिमन्त्राणामव्यवस्थया लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन प्राप्तानां व्यवस्थापेक्षत्वेनापेक्षितव्यवस्थाविधायकत्वे लाघवात् नानपेक्षितमन्त्रविधायकत्वं युक्तम् । तथा सत्यपूर्वविधित्वापत्त्या गौरवापत्तेः । तस्मान्न पूर्वोक्तवचनाभ्यां मन्त्रप्राप्त्या मान्त्रवर्णिकदेवताप्राप्तिरित्यर्थः । ननु विद्वद्वाक्यस्य विधायकत्वानुरोधेन गौरवमप्यङ्गीकृत्य मन्त्रविधिरस्त्वित्यत आह—**अत एवेति** ॥ तद्वचनस्य व्यवस्थापकत्वादेवेत्यर्थः । मन्त्रविधायकत्वाभावादेवेति यावत् ॥ **कालद्वारेणेति** ॥ पौर्णमास्यां काले यावाज्यभागौ तयोर्वार्त्रघ्न्यौ इत्यादिरीत्येत्यर्थः ।

**अतश्च न तावदनेन देवताप्राप्तिः। नाप्याग्नेयादिवाक्येन, प्राप्तकर्मानुवादेन अनेकगुण-विधाने वाक्यभेदात्। विधिफलस्य हि अज्ञातज्ञापनस्यैकविषयत्वमेव सर्वत्र क्लृप्तम्।**

---

अस्मिन् कल्पेऽस्वरसस्य तृतीये वक्ष्यमाणत्वादाह—**कर्मद्वारेणेति** ॥ पौर्णमासीकालकर्तव्य-कर्मणो यावाज्यभागौ तयोर्वार्त्रघ्न्याविल्यादिरीत्या वेत्यर्थः ॥ **वक्ष्यत इति** ॥ तृतीय इति शेषः। ततश्च तद्विरोधापत्तेर्न मन्त्रविधित्वमित्यर्थः। **अतः**—अनयोर्व्यवस्थापरत्वात्। **अनेन**—वार्त्रघ्नीवाक्येन। **देवताप्राप्तिः**—मन्त्रविधिद्वारा मान्त्रवर्णिकदेवताप्राप्तिः। वचनस्य मन्त्रविधायकत्वाभावादित्यर्थः। अथैवमपि "आज्यभागौ यजति" इति वाक्यस्य विद्वद्वाक्य-विहितयागसमुदायानुवादकत्वाङ्गीकारेण तत्रैव क्रमाविरोधेन मन्त्रप्राप्त्या मान्त्रवर्णिकदेवता-प्राप्तिः सम्भवतीति चेत्, अत्र वदन्ति ; क्रमबाधाभावेऽपि विद्वद्वाक्यद्वयादेः वैयर्थ्यमेव स्यात्। "आज्यभागौ यजति" इत्यस्यैव विधित्वसम्भवेन तादृशसमष्टिविधिनैव सिद्धौ प्रत्येकनामकरणस्योपयोगाभावात् न तावदाग्नेयादिवाक्ये व्यवहारः प्रयोजनम् ; तेषां द्रव्य-देवतासम्बन्धेन कालविशिष्टकर्मान्तरविधायकत्वात्। नापि वार्त्रघ्न्यादिवाक्ययोः; तयोरपि कालपरत्वेनैव व्यवस्थापकतया सार्थक्यात्। नाप्यधिकारवाक्ये ; "आज्यभागाभ्यां स्वर्ग-कामो यजेत" इत्येव वक्तव्यत्वापत्तेः। नापि "पौर्णमास्यां पौर्णमास्या यजेत" इति वाक्ययोर्व्यवहारः फलम् ; तत्र सप्तम्यन्तयोरितरवाक्येष्विव कालपरत्वेऽपि तृतीयान्तयोरन्यथा-नयनायोगेन कर्मपरत्वावश्यकत्वात्। तेन चाज्यभागयोरेकैकस्य कालभेदेन व्यवस्थयानुष्ठानं सिध्यतीति वाच्यम् ; तस्याप्याग्नेयवाक्य इवोत्पत्तिविधावेव पौर्णमास्याममावास्यायां चेति पदयोराम्नानेन सिद्धौ तावन्मात्रार्थं नामकरणविध्योः व्यवस्थापकविध्योश्चानावश्यकत्वात्। किं च काले अत्यन्तनिरूढयोः पदयोः कर्मपरत्वे प्रमाणाभावः। न च सिद्धान्त इव तत्तत्कालयोगात् तत्तच्छब्दयोः लक्षणया प्रवृत्तिः। विद्वद्वाक्यार्थबोधात्पूर्वमनयोः कालसम्ब-न्धानवगमेन लक्षणाया अप्रसरात् कर्मत्वेनानुपस्थितेः, वाक्यान्तरयोस्तु लाक्षणिकपदा-भ्यामेव कर्मणी अनूद्य कालविधानेन तयोर्विद्वद्वाक्योत्तरमेव प्रवृत्त्यावश्यकत्वात्। अतः कर्मणोः कालसम्बन्धसिद्धौ लाक्षणिकत्वज्ञानात् कर्मपरत्वसिद्धिः, तत्सिद्धौ च तयोरेवायं कालसम्बन्ध इति ज्ञानाल्लाक्षणिकत्वसिद्धिरिति चक्रकाश्रयापत्तिः ; आग्नेयादियागानां तु तत्तदुत्पत्तिदशायामेव कालसम्बन्धावगमात् विद्वद्वाक्यादिषु लक्षणया तदनुवादः सम्भवतीति वैषम्यम्। अतो नाज्यभागयोः प्रत्येकनामद्वयपक्षो युक्तः। प्रयाजविषये तु "अतिहायेडो बर्हिः प्रति, तनूनपादन्येषां, प्रयाजेभ्यस्तत्" इत्यादिव्यवहारार्थं व्याप्यसंज्ञानां व्यापकसंज्ञायाश्च प्रकृताववोपयोग इति ॥ **आग्नेयादिवाक्येनेति** ॥ देवताप्राप्तिरित्यनुषज्यते। तत्र बाधक-माह—**प्राप्तेति** ॥ वाक्यभेदस्य दूषकताबीजं दर्शयति **विधिफलस्येति** ॥ **एकविषयत्वमेव**—

**तस्यानेकविषयत्वे बाधप्रसङ्गः । न च विशिष्टविधानादवाक्यभेदः । विशिष्टस्याव्युत्पन्नत्वात् । उक्तं ह्येतत् , कारकतासम्बन्धेन यत्र तद्धितादिवृत्तिः न तत्र परस्परान्वयः,**

---

एकपदार्थमात्रनिष्ठमुख्यविशेष्यताकत्वमेव । विशिष्टविधानेनावाक्यभेदं पूर्वपक्षोक्तं निरस्यति--**न चेति** ॥ **अव्युत्पन्नत्वादिति** ॥ देवतायाः सम्प्रदानकारकतया द्रव्यस्य कर्मकारकतया च कारकाणां परस्परसम्बन्धासम्भवात् देवताया द्रव्यविशेषणत्वायोगादित्यर्थः । तत्र भावार्थाधिकरणोक्तव्युत्पत्तिं प्रदर्शयति—**उक्तमिति** ॥ **कारकतासम्बन्धेन**—करणत्वकर्तृत्वादिघटितसम्बन्धेन ॥ **न तत्रेति** ॥ तत्र तद्धितार्थयोर्न परस्परान्वयः; कारकाणां परस्परमनन्वयस्योक्तत्वादित्यर्थः । अयमभिप्रायः । विधिर्हि प्रवृत्तिफलकव्यापारात्मकप्रवर्तनारूपत्वात् समानाभिधानश्रुत्या प्रवृत्तिरूपां भावनामेव प्रथमं विषयीकरोति । तत्र भावनायाश्शास्त्रान्तरेणाप्राप्तिस्थले श्रूयमाणसर्वविशिष्टैकभावनाविधानेन विशेषणानामर्थापत्त्यैव विधिसिद्धेश्श्रूयमाणविधेर्न विशेषणेषु व्यापार इति न वाक्यभेदः । भावनायाश्शास्त्रान्तरेण प्राप्तिस्थले तु "गुणानां च परार्थत्वात्" इति न्यायेन विशेषणानां स्वातन्त्र्येण विधेयत्वादेकविशेषणविधानेनापरविशेषणस्यार्थापत्त्यभावेन पृथग्विधेयत्वावश्यकतया श्रूयमाणविधेरावृत्तिकल्पनया विध्यावृत्तिलक्षणो वाक्यभेदो भवतीति हि शास्त्रमर्यादा । प्रकृते च विद्वद्वाक्यविहितकर्मानुवादेनाग्नेयवाक्यस्य गुणविधायकत्वे आग्नेयपदेन तद्धितान्तेनाग्निदेवताया अष्टाकपालद्रव्यस्य च विधाने द्रव्यदेवतयोरुभयोरपि कारकत्वेन परस्परान्वयाभावेन श्रूयमाणविधेरग्निदेवतायामष्टाकपालद्रव्ये च तात्पर्यस्य वाच्यतया विध्यावृत्तिलक्षणो वाक्यभेदः स्यादिति नाग्नेयादिवाक्येन गुणविधिसम्भवः । न च "सास्य देवता" इत्यनुशासने षष्ठीश्रवणेन सम्बन्धसामान्यप्रतीतेः न कारकतासम्बन्धेन द्रव्यदेवतयोर्वैशिष्ट्यमिति विशिष्टैकार्थविधानं युज्यत इति वाच्यम्; तथापि देवतात्वप्रतीत्यर्थं सम्प्रदानत्वकर्मत्वयोरेव सम्बन्धतया प्रतीतेरावश्यकत्वात् । न च षष्ठ्यवगतसम्बन्धस्य सम्प्रदानत्वादौ पर्यवसानेऽपि सम्बन्धतयैव षष्ठ्या प्रतीयमानतया न कारकत्वप्रतीतिरिति वाच्यम्; षष्ठ्या सम्प्रदानत्वं शक्त्यैवाभिधीयत इति तात्पर्यात् । यदि च सम्बन्धसामान्यमेव षष्ठ्यर्थ इति मतं, तदा अग्निदेवताविशिष्टाष्टाकपालविधानेन वाक्यभेदाभावेऽपि अग्निदेवताविशिष्टद्रव्यस्याष्टत्वसङ्ख्यायाः कपालानां चानेकेषां विधानप्रयुक्तो वाक्यभेदो दुष्परिहर इति नाग्नेयादिवाक्येन गुणप्राप्तिरिति सङ्क्षेपः । अत एव सम्बन्धसामान्यस्थले वाक्यभेदो नास्तीत्याह—**यत्रेति** ॥ आदिना "पशुना यजेत" इत्यादिसङ्ग्रहः । अश्वस्याभिधानीति षष्ठ्या सम्बन्धसामान्यप्रतीत्या अश्वविशिष्टाभिधानीरूपैकार्थविधिसम्भवात् न वाक्यभेदः । न चाश्वस्याभिधानीकर्मतया कारकत्वात् कथमभिधान्यामन्वय इति वाच्यम्; कर्मत्वाविवक्षया सम्बन्धसामान्यविवक्षयैवान्वय इति तात्पर्यात् । एवं "पशुना यजेत"

इत्यादौ लिङ्गसङ्ख्ययोः समानाभिधानश्रुत्या विधिसम्बन्धं विनैव सामानाधिकरण्यसम्बन्धेन कारकान्वयात् तत्रापि न वाक्यभेद इति भावः। अत्रेदं बोध्यम्। भिन्नपदस्थलेऽपि विशिष्टान्वये न वाक्यभेदः। यथा अभ्युदितेष्टिस्थले। तथा हि—चतुर्दश्याममावास्याभ्रान्त्या दर्शोपक्रमे कृते प्रायश्चित्तमिदमाम्नायते, "यस्य हविर्निरुप्तं" इत्यादिना। तत्र 'ये क्षोदिष्ठाः" इति वाक्येन शिपिविष्टत्वविशिष्टविष्णुः शृतक्षोदिष्ठानुवादेन विधीयते। तत्र शिपिभिः— रश्मिभिः, विष्टः-आविष्ट इति शिपिविष्टशब्दस्य यौगिकत्वात् समानविभक्तिकेन विष्णुशब्देन सामानाधिकरण्ये सति शिपिविष्टत्वविशिष्टो विष्णुः क्रियासम्बन्धात्प्रागेव शब्देनोपस्थितः विधिव्यापारं विनैव मन्त्रार्थवादादिभिः विष्णुः शिपिविष्टः प्रसिद्ध इति यो विष्णुः शिपिविष्टः स शृतस्य क्षोदिष्ठानां च देवता इति शृताद्यनुवादेन शिपिविष्टत्वविशिष्टविष्णुविधानेऽपि विशेषणसम्बन्धसिद्ध्यर्थं पृथग्विधिव्यापाराभावेन विध्यावृत्त्यभावान्न वाक्यभेदः। एवं "समर्थः पदविधिः" इति सूत्रेण तद्धितविधेः पदसम्बन्धिविधित्वेन सामर्थ्यापेक्षतया द्रव्यदेवतयोः स्वातन्त्र्येण भावनान्वये एकार्थीभावलक्षणसामर्थ्याभावात् तद्धितानुपपत्तिरिति द्रव्यदेवतयोः परस्परसम्बन्धोऽपि विधिव्यापारं विनैवेति न वाक्यभेदः। यथा चैवं सति आग्नेयवाक्ये गुणविधाने वाक्यभेदः तथोपपादितमधस्तात्। एवं भाष्यानुयायिनां षष्ठ्या अपि भावनान्वयनियमाभावान्न वाक्यभेदः। षष्ठ्यन्तस्य कारकविशेषणत्वोपपत्तेः प्राप्तभावनानुवादेन विशिष्टविधिः सम्भवति। यथा "तस्य द्वादश शतं दक्षिणा" इत्यत्र "ऋत्विग्भ्यो दक्षिणां ददाति" इति विधिप्राप्तदक्षिणानुवादेन तच्छब्दोपात्तगोविशिष्टसङ्ख्याविधिः। यत्तु कौस्तुभे "गोविशिष्टसङ्ख्याविधानेन वाक्यभेदाभावेऽप्यश्वादिविधानप्रयुक्तवाक्यभेदाद्वाक्यभेदापत्त्या विशिष्टदक्षिणाविधानं" इत्युक्तं, तदसङ्गतम्। दक्षिणाया वचनान्तरप्राप्ताया विधानायोगात्, "अप्राप्ते शास्त्रमर्थवत्" इति न्यायात्, वचनान्तरेणैवाश्वादीनां विधानेन "तस्य द्वादश शतं" इत्यनेन विधानाभावात्। यदपि मन्त्रार्थवादादिप्रसिद्धविशेषणवैशिष्ट्यमङ्गीकृत्य "विष्णवे शिपिविष्टाय" इत्यादौ गुणविशिष्टदेवताविध्यङ्गीकारे लोकसिद्धविशेषणवैशिष्ट्यमङ्गीकृत्य "पञ्चदशान्याज्यानि" इत्यत्रापि विशिष्टविधिसम्भवात् तत्रापि वाक्यभेदानापत्तिरित्युक्तं, तदपि न। तत्र "स्तोमे डविधिः पञ्चदशाद्यर्थे" इत्यनुशासनविहितडप्रत्ययस्य स्तोत्रसाधनऋग्गतसङ्ख्यावाचित्वेनाज्यगतसङ्ख्यावाचित्वे तदनुपपत्तेः विशिष्टविधेर्निराकृतत्वात्। यदप्याग्नेय्यधिकरणे शास्त्रदीपिकायां यौगिकशब्दानां सन्निहितमात्रवाचित्वस्य निराकृतत्वात् कृदन्तदात्रादिपदानां सन्निहितपरत्वं तन्त्ररत्नोक्तमसङ्गतमित्युक्तं, तदप्यसत्। आग्नेय्यधिकरणे हि सन्निहितग्रहणाभावे अप्रसिद्धक्रतुसम्बन्धानामाग्नेयीनामपि ग्रहणापत्त्या तासां क्रतुसम्बन्ध उपस्थानसम्बन्धश्च कल्पनीय इति गौरवापत्तेः प्रकृतानामेव

**अपि तु यत्राश्वाभिधानीमित्यादौ तदतिरिक्तसम्बन्धेन वृत्तिस्तत्रैव स इति । अतश्च प्रकृते देवतात्वस्य सम्प्रदानकारकत्वात् परस्परसम्बन्धानुपपत्तेः उभयविशिष्टकर्मान्तरविधानमेवावश्यकम् । अतश्च रूपाभावस्तदवस्थ एव । अस्तु वा कथञ्चिद्रूपलाभः । तथापि न विद्वद्वाक्ये कर्मविधिः । यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनःश्रवणस्यैवाभावात् । न च तस्य वेदनक्रियामात्रविधिप्रतिबन्धकत्वम् ; यच्छब्दादेस्तच्छब्दा-**

---

ग्रहणमित्युक्तम् ; न तु यौगिकशब्दसामान्यस्य प्रकृतपरत्वं नास्तीति । ततश्च विरोधाभावेन दात्रादिपदानां विशेषणत्वोपपत्तेः । किं च यौगिकशब्दानां प्रकृतपरत्वाभावे पङ्कजपदेन कुमुदादिबोधवारणाय रूढिज्ञानस्य यौगिकार्थबुद्धिप्रतिबन्धकतायाः कल्पनीयत्वेन गौरवापत्तेः । यौगिकपदानां पूर्वपक्षे सन्निहितपरत्वनिराकरणेऽपि सिद्धान्ते प्रकृतपरत्वसाधने तात्पर्यावश्यम्भावाच्च न तन्त्ररत्नोक्तस्य कृदन्तशब्दानां सन्निहितपरत्वस्यानुपपत्तिः । यदप्यभ्युदितेष्टौ भावनान्तरविधानवदत्रापि भावनान्तरविधानमाक्षिप्तं, तदप्यापातरमणीयमेव । न ह्यभ्युदितेष्टौ भावनान्तरविधानं युज्यते । तथा सति सर्वत्रैव वाक्यभेदस्थले भावनान्तरविधानमङ्गीकृत्य वाक्यभेदस्य परिहर्तुं शक्यतया कुत्रापि वाक्यभेदस्य दोषत्वानापत्तेः । किं च शब्दान्तराधिकरणे कार्यमात्रवृत्तिजात्तेः कार्यतावच्छेदकत्वात् यागत्वादीनां कार्यमात्रवृत्तिजातितया तेषां कार्यतावच्छेदकत्वसिद्ध्यर्थं यागादिजनकभावनायां वैजात्यमावश्यकमिति यागादिकरणकभावनानां भेदः साधितः । ततश्च यागादिभेदो भावनाभेदक इति स्वयमेव सिद्धान्तितत्वात् । अभ्युदितेष्टौ यागैक्यमङ्गीकृत्य भावनाभेदोक्तिः स्ववचोविरुद्धत्वादनुपपन्नैवेति । अधिकमभ्युदितेष्ट्यधिकरणे वक्ष्यत इति सङ्क्षेपः । नन्वाग्नेयवाक्येनाग्निदेवतामात्रविधानान्न वाक्यभेदः । तद्धितस्य "सर्वस्मै" इति वाक्यप्राप्तद्रव्यानुवादकत्वसम्भवादित्यत आह—**अस्तु वेति** ॥ द्रव्यांशे अनुवादकत्वात्—**कथञ्चिदिति** ॥ एवमप्यभ्यासस्यैवाभावात् न कर्मभेद इत्यभिप्रायेणाह—**तथापीति** ॥ **यच्छब्देनेति** ॥ "य एवं विद्वान्" इत्यत्र यच्छब्दस्य प्राप्तिद्योतकत्वेन अप्राप्तविषयकविधिशक्तिप्रतिबन्धकत्वात् विद्वद्वाक्ययोर्विधित्वासम्भवादित्यर्थः । यच्छब्दस्य वेदनक्रियामात्रविधिप्रतिबन्धकत्वं पूर्वपक्षोक्तं निरस्यति—**न चेति** ॥ **यच्छब्दादेरिति** ॥ अयमर्थः । यत्तदोर्नित्यसम्बन्धाविशेषेऽपि यत्पदघटितवाक्यस्य नियमेन तत्पदघटितवाक्यान्तरापेक्षत्वादवान्तरवाक्यद्वयैकवाक्यत्वमेव । तत्पदघटितवाक्यस्य तु न नियमेन यत्पदघटितवाक्यान्तरापेक्षत्वम् । अपि तु तत्पदस्य बुद्धिस्थवाचकत्वेन तत्पदश्रवणात्पूर्वं यया कयापि विधया तत्पदार्थस्योपस्थितिमात्रमपेक्षितम् । यथा यो भुञ्जानस्तिष्ठति चैत्र इत्येतावन्मात्रं तं पृच्छ इति वाक्यान्तरमपेक्षते एवं तं पृच्छेति वाक्यं न नियमेन पूर्ववाक्यमपेक्षते । दृष्टिचेष्टादिनापि चैत्र-

बाधिकप्रतिबन्धकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । किञ्च, अन्यपरत्वादपि नाभ्यासस्वरूपसिद्धिः । तथा हि—तत्र विद्वद्वाक्यस्थलडन्तयजिना प्रकृतत्वादाग्नेयादयस्त्रय एव तत्तत्कालयोगिनस्तत्तन्नामधेयवशादनूद्यन्ते । तत्प्रयोजनं च तन्त्रेण यजिना अनेकोपादानात्समुदायसिद्धिः । तस्यापि प्रयोजनं फलवाक्ये षण्णामेव फलसम्बन्धसिद्धिः । प्रातिपदिकस्य षट्सु कालयोगेन प्रसिद्धत्वात् । द्विवचनस्य च स्वशक्याश्रयसमुदायघटकसमुदायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणार्थत्वात् । लक्षणातात्पर्यग्राहकमेव च शक्य-

---

व्यक्तिमात्रं निर्दिश्य तं पृच्छेति प्रयोगेऽपि शाब्दबोधानुभवात् । ततश्च "य एवं विद्वान्" इत्यस्य "स यावदुक्थ्येन" इति वाक्यसापेक्षत्वात् तत्पूर्वं यावन्तः पदार्थाः श्रुताः तेषां सर्वेषामेव यच्छब्देन प्राप्तिबोधनादप्राप्तविषयकविधिशक्तिः सर्वथैवाप्राप्तविषये । यच्छब्दश्रवणे त्वगत्या दीक्षादिविशेषणांश एव प्राप्तिद्योतनं स्वीकृत्य इतरांशे विधिरङ्गीक्रियते "यो दीक्षितः" इत्यादिवाक्ये । प्रकृते त्वनुवादत्वेनैव सार्थक्यान्न विधित्वमिति । नन्वेवमपि "यो दीक्षितः" इत्यादौ उक्तनियमस्य व्यभिचारेणासम्भवात् तद्वदेव प्रकृतेऽपि यच्छब्दस्य सन्निहितेन "य एवं विद्वान्" इत्यनेनैव तरसाधिकरणन्यायेनान्वयसम्भवे न दूरस्थेनान्वयो युक्त इत्यत आह—**किञ्चेति** ॥ **अन्यपरत्वादिति** ॥ अनन्यपरपुनःश्रवणस्यैवाभ्यासरूपत्वादिति भावः । अन्यपरत्वमेवोपपादयति—**तथा हीति** ॥ **यजिना**—"पौर्णमासीं यजते, अमावास्यां यजते" इति लडन्तयजिभ्याम् । लडन्तेत्यनेन विधानसामर्थ्यं सूचितम् ॥ **आग्नेयादयस्त्रय इति** ॥ आग्नेयोपांशुयाजाग्नीषोमीयाः पौर्णमासीसंयुक्तयजिनाऽनूद्यन्ते, अमावास्यासंयुक्तयजिना च आग्नेयैन्द्रद्वयं चानूद्यत इत्यर्थः ॥ **तत्तन्नामधेयेनेति** ॥ पौर्णमास्यमावास्याशब्दयोः तत्तत्कालयोगेन तत्प्रख्यन्यायेन नामधेयत्वादित्यर्थः । नन्वनुवादस्य प्रयोजनाभावात् नैतयोरनुवादत्वसम्भव इत्यत आह—**तत्प्रयोजनं चेति** ॥ अनुवादप्रयोजनं चेत्यर्थः ॥ **तन्त्रेणेति** ॥ एकशक्त्येत्यर्थः । **अनेकोपादानात्**—एकपदेनानेकविषयकबोधजननात् । एकपदनिरूपितैकशक्तिजन्यबोधविषयत्वरूपसमुदायसिद्धिरिति वाक्यद्वयेन समुदायद्वयसिद्धिरित्यर्थः । ननु समुदायस्य वा किं प्रयोजनमित्यत आह—**तस्यापीति** ॥ समुदायस्यापीत्यर्थः । **फलवाक्ये**—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ये । ननु समुदायद्वयसिद्धिमात्रेण कथं षण्णां फलसम्बन्धसिद्धिरित्याशङ्क्य अनुवादे सति फलसम्बन्धसिद्धिं तदभावे फलसम्बन्धासिद्धिं चोपपादयति—**प्रातिपदिकस्येत्यादिना** ॥ फलवाक्यगतदर्शपूर्णमासपदस्येत्यर्थः । **षट्सु**—आग्नेयादिषड्यागेषु । **कालयोगेन**—तत्तदुत्पत्तिवाक्यादिश्रुतपौर्णमास्यमावास्यारूपकालसम्बन्धेन । **प्रसिद्धत्वात्**—निर्णीतार्थकत्वात् । **द्विवचनस्य**—"दर्शपूर्णमासाभ्यां" इति द्विवचनस्य । **बहुत्वलक्षणार्थत्वादि**त्यग्रेणान्वयः । शक्यसम्बन्ध-

सम्बन्धघटकसमुदायसिद्धिद्वारा विद्वद्वाक्यद्वयम् । अन्यथा हि विद्वद्वाक्यद्वयाभावे आग्नेयद्वयस्यैव एकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलसम्बन्धापत्तिः। यथा च 'यदाग्नेयोऽष्टाकपालः'[1] इत्यत्राग्नेयद्वयसिद्धिः तथा कौस्तुभ एव प्रपञ्चितम्। अतः षण्णां फलसम्बन्धासिद्धिरेवोक्तविधया विद्वद्वाक्यप्रयोजनमित्यन्यपरत्वादपि

---

मुपपादयति—**स्वशक्याश्रयेति**॥ **स्वशक्यं**—द्वित्वं, **तदाश्रयः**—समुदायद्वयं, **तद्घटकाः समुदायिनः**—आग्नेयादयः षड्यागाः, **तद्वृत्तित्वं**, बहुत्वे वर्तत इति लक्षणोपपत्तिः। समुदायघटकत्वं च समुदायनिरूपितपर्याप्तिसम्बन्धावच्छिन्नाधिकरणताशून्यत्वे सति समुदायनिरूपितस्वरूपसम्बन्धावच्छिन्नाधिकरणतावत्त्वम् । यद्वा, समुदायत्वावच्छिन्नाविषयकप्रतीतिविषयत्वे सति समुदायत्वाश्रयमेव समुदायघटकत्वमिति बोध्यम्। ननु तात्पर्यग्राहकाभावेन तद्ग्रहासम्भवेन तदनुपपत्त्यभावात् लक्षणा न युक्तेत्यत आह—**लक्षणेति**॥ **तात्पर्यग्राहकमिति**॥ विद्वद्वाक्यद्वयमित्यग्रेणान्वयः। **विद्वद्वाक्यद्वयाभावे**-विद्वद्वाक्यद्वये समुदायानुवादाभावे॥ **आग्नेयद्वयस्येति**॥ पौर्णमास्यमावास्यारूपकालद्वययोगेनाग्नेययागस्य द्वित्वावगमेन फलवाक्यस्थयजिना तयोरनुवादात् तयोरेव फलसम्बन्धापत्त्या 'फलवत्सन्निधावफलं तदङ्गं" इति न्यायेनेतरेषां तदङ्गत्वमेव स्यादिति षण्णां फलसम्बन्धो न सिध्येदित्यर्थः । नन्वाग्नेयवाक्येनैकस्यैवाग्नेयस्य विधानात् कथं द्वित्वमित्यत आह—**यथा चेति**॥ यस्य गुणस्य गुणिनि भेदावृत्त्यन्यतरमन्तरेण न निवेशः तस्योत्पत्तिवाक्यश्रुतत्वे तु भेदकत्वं, अनुत्पत्तिवाक्यश्रुतत्वे तु आवृत्तिबोधकत्वमिति नियमस्य सङ्ख्यायां "तिस्र आहुतीर्जुहोति" "एकादश प्रयाजान् यजति" इति वाक्ययोः क्लृप्तत्वेनाग्नेयवाक्यस्योत्पत्तिवाक्यत्वेन तदुपात्तकालद्वयेन भेदसिद्धिः। सायंप्रातः कालयोरग्निहोत्रोत्पत्तिवाक्ये श्रवणाभावेनावृत्तिबोधकतेत्यादिकं कौस्तुभे द्रष्टव्यमित्यर्थः । अत्र पार्थसारथिमतानुयायिनः। नाग्नेययागस्य द्वित्वं सम्भवति। आग्नेय इत्येकवचनेन भवतीत्येकवचनेन च "सप्तदश प्राजापत्यान्" "ऐन्द्रौ भवतः" "आज्यभागौ यजति" इत्यादौ बहुवचनाद्यनुसारेण यागबहुत्वद्वित्वादिवत् आग्नेयैकत्वस्यैव युक्तत्वात्। कालस्य प्रयोगान्वयित्वेन कालरूपगुणेन प्रयोगभेदसिद्धावप्याग्नेयभेदाप्रसक्तेः । किं च "अच्युतो भवति" इत्यच्युतपदश्रवणादप्याग्नेयैकत्वसिद्धिः। न हि यागभेदे अच्युतशब्द उपपन्नो भवति । जातवेदस्य "अच्युताताक्ष्ण्योच्युत" इत्यादावेकस्यैव प्रयोगावृत्तावच्युतशब्ददर्शनादित्याहुः । अधिकमाग्नेयाधिकरणे वक्ष्यते॥ **षण्णामिति** ॥ पौर्णमास्यमावास्यासंज्ञकसमुदायद्वयस्येत्यर्थः । अत एवासोमयाजिनो यजुश्शाखानुवर्तिनः पौर्णमास्यामग्नीषोमीयस्य अमावास्यायां सान्नाय्यस्य चाभावेऽपि आश्वलायनानामसोमयाजिनामग्नीषोमीयसत्त्वेऽपि तेषाममावास्यायामुपांशुयाजसत्त्वेऽपि च तत्तदधिकृतसमुदायद्वयस्य फलसम्बन्धसिद्धिः । पटुत्वविवक्षणे तेषां फलसम्बन्धानापत्तेरिति

---

१. तै. सं. २. ५. ३.

**न 'वैश्वदेवेन यजेत' इतिवदभ्यासस्वरूपसिद्धिः। न चैवं 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयवैयर्थ्यापत्तिः; तस्य समुदितयागत्रिकप्रयोगविधित्वेन सार्थक्यस्य**

---

हिरण्यकेशिसूत्रव्याख्याने विस्तरेण प्रतिपादितमस्माभिः। यत्तु पौर्णमास्यमावास्याशब्दौ समुदायिनामेव नामधेयं, न समुदायस्य, तस्य कालयोगाभावेन तत्प्रख्यन्यायाप्रवृत्तेः समुदायस्य प्रमाणान्तराप्राप्तत्वेन विद्वद्वाक्येऽनुवादासम्भवाच्चेति कैश्चिदुक्तम्, तच्चिन्त्यम्; समुदायसमुदायिनोरनतिभेदेन समुदायिद्वारा कालयोगेऽप्युक्तन्यायप्रवृत्तिसम्भवेन समुदायनामत्वे बाधकाभावात्। "पौर्णमास्यां पौर्णमास्या यजेत" इति समुदायेऽपि कालयोगसत्त्वाच्च। त्रये त्रय एकैकः काल इत्युत्पत्तिवाक्यैर्मानान्तरैरेवावगतत्वाच्च। "एतौ शब्दौ समुदायवचनौ समुदायस्यानुवदितारौ" इति भाष्यानुसारेण समुदायवचनत्वस्यैव युक्तत्वाच्चेत्यन्यत्र विस्तरः। नन्वेवमपि नोक्तरीत्या फलसम्बन्धसिद्धिः; "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलवाक्ये दर्शपूर्णमाससंज्ञकयोरेव कर्मणोः फलसम्बन्धप्रतीतेः। विद्वद्वाक्ये च पौर्णमास्यमावास्यासंज्ञकयागसमुदाययोरेवानुवादात्। ततश्च तयोर्भेदात् कथमिदं सङ्गच्छत इति चेन्न; अन्वारम्भणीयावाक्यशेषे "दर्शो वा एतयोः पूर्वः, पूर्णमास इतरः" इति दर्शामावास्यापदयोः पूर्णमासपौर्णमासीपदयोश्च एकार्थकत्वावगमेन पौर्णमास्यमावास्याशब्दानूदितयोरपि दर्शपूर्णमासशब्दबोध्यत्वसम्भवेन फलसम्बन्धोपपत्तेः। एवं च विद्वद्वाक्यस्य समुदायसिद्धिद्वारा फलसम्बन्धसिद्धिपरत्वेनान्यपरत्वान्नाभ्यासस्वरूपसिद्धिरित्याह—**अन्यपरत्वादपीति**॥ अपिः यच्छब्दोपबन्धग्राहकः॥ **वैश्वदेवेनेति**॥ यथा "वैश्वदेवेन यजेत"इत्यनुवादाभावे सप्तमयागस्यैव देशादिसम्बन्धसिद्धिः स्यात्। "वैश्वदेवेन यजेत" इत्यनुवादसत्त्वे त्वष्टानामपि देशादिसम्बन्धसिद्धिरित्येवं रीत्या अष्टानामपि देशादिसम्बन्धसिद्ध्यर्थं वैश्वदेववाक्यस्य विश्वेदेवदेवताकयागघटितसमुदायत्वबोधनादिद्वारा वैश्वदेवपदस्य तादृशसमुदाये शक्तिग्राहकत्वेन अन्यपरत्वान्नाभ्यासस्वरूपसिद्धिः। एवं प्रकृतेऽपि विद्वद्वाक्यानुवादाभावे आग्नेयस्यैव फलसम्बन्धापत्तिरित्याद्युक्तरीत्या अनुवादत्वेनैव सार्थक्यस्यावश्यकतयान्यपरत्वेन नाभ्यासस्वरूपसिद्धिरित्यर्थः। नन्वेवं "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत" इति वाक्यद्वयमनर्थकं स्यात्। आग्नेयादियागेषु तत्तदुत्पत्तिवाक्यैरेव कालयोगस्य लाभेन तत्र कालविधायकत्वासम्भवात्। विद्वद्वाक्यद्वयस्य विधायकत्वे तु तद्वाक्यविहितयागानुवादेन कालविधित्वेन सार्थक्यं सम्भवतीति विधायकत्वमेव युक्तमिति शङ्कते—**न चेति**॥ समाधत्ते—**तस्येति**॥ "पौर्णमास्यां पौर्णमास्या यजेत" इत्येतद्वाक्यद्वयस्येत्यर्थः॥ **समुदितेति**॥ पौर्णमासीवाक्यस्य आग्नेयोपांशुयाजाग्नीषोमीयरूपयागत्रयसमुदायप्रयोगविधित्वेन अमावास्यावाक्यस्य चाग्नेयैन्द्रयागद्वयरूपयागत्रयसमुदायप्रयोगविधित्वेन च सार्थक्यस्यैकादशे

एकादशे वक्ष्यमाणत्वात्। अन्यथा ह्युत्पत्तिवाक्येषु प्रत्येकं कालयोगात्प्रत्येकमेव पूर्वोत्तराङ्गसहितैकैकप्रधानप्रयोगा भवेयुः। एवं चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थयजिपदसङ्कोचार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकावेतौ, न कर्मान्तरविधी इति सिद्धम्॥ ३॥

---

वक्ष्यमाणत्वादित्यर्थः। अन्यथा—समुदायप्रयोगविध्यभावे। उत्पत्तिवाक्येषु—आग्नेयादिवाक्येषु। कालयोगात्-कालस्य प्रयोगान्वयिगुणत्वात्, कालयुक्ताग्नेयादीनां पूर्वोत्तराङ्गसाहित्येन प्रत्येकमेव प्रयोगासिद्ध्या षट्प्रयोगविधयो भवेयुरित्यर्थः। नन्वेवं विद्वद्वाक्यद्वयवैयर्थ्यम्। राजसूयवाक्ये समुदायानुवादेन नामप्रदर्शनपूर्वकं फलसम्बन्धवदनयोरपि वाक्ययोर्यजिना त्रयं त्रयमनूद्य तृतीयान्तशब्दाभ्यां नामप्रदर्शनपूर्वकं सप्तम्यन्तपदाभ्यां कालसम्बन्धस्य विधिसम्भवादिति चेन्न; शक्तिग्राहकप्रमाणरूपत्वेन सार्थक्यात्। विशेषणविधेरिव तादृशप्रमाणकल्पनस्य राजसूयेऽपि स्वीकारात्। "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिव्ययते" इति वार्तिकोक्तविशेषणविधिवत् क्वचिच्छक्तिग्राहकप्रमाणस्य प्रत्यक्षाम्नानेऽपि तदभावस्थले तत्कल्पनस्य युक्तत्वादिति ध्येयम्। नन्वेवं सत्युत्पत्तिवाक्येषु कालश्रवणमनर्थकं स्यादित्यत आह—एवं चेति॥ उत्पत्तिवाक्यश्रुतकालसम्बन्धबलादेवानुवादफलसिद्धेर्न तद्वैयर्थ्यमिति भावः। अत्र लिङ्गदर्शनविरोधादपि न विद्वद्वाक्यद्वयस्य विधायकत्वम्। तथा हि "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते,त्रयोदशामावास्यायां" इति वचनेनाहवनीयाधिकरणकवषट्काराहुतीनां चतुर्दशत्वं त्रयोदशत्वं च प्रतिपादितम्। प्रयाजानूयाजाज्यभागप्रधानस्विष्टकृद्भिश्चतुर्दशत्वं पौर्णमास्याम्। अमावास्यायां तु दधिपयसोः सम्प्रतिपन्नदेवताकत्वेन सहप्रक्षेपात्त्रयोदशत्वम्। विद्वद्वाक्यद्वयस्य यागविधायकत्वे आग्नेयादिवाक्यैस्तत्र गुणविधाने अग्निहोत्रे दध्यादिवत् विकल्पापत्त्या चतुर्दशत्वासम्पत्तेर्लिङ्गदर्शनानुपपत्तिः। विद्वद्वाक्यद्वयस्यानुवादत्वेनाग्नेयादिवाक्यानां यागान्तरविधायकत्वे तु सर्वेषां समुच्चयेनानुष्ठानात् समुच्चयलिङ्गदर्शनोपपत्तिरिति लिङ्गदर्शनविरोधान्न तयोर्विधायकत्वम्। एवं "उग्राणि ह वा एतानि हवींषि, अमावास्यायां सम्भ्रियन्ते, आग्नेयं प्रथमं, ऐन्द्रे उत्तरे" इति वाक्ये त्रयाणामेवोग्रत्वापरपर्यायप्राधान्यव्यपदेशादपि विद्वद्वाक्यद्वयस्य न विधायकत्वम्। विधायकत्वे आग्नेयादिवाक्यानां गुणविधित्वेन तदनुपपत्तेरित्याशयेनोपसंहरति—इति सिद्धमिति॥ सूत्रार्थस्तु, पौर्णमास्यां—पौर्णमास्युपलक्षितविद्वद्वाक्ये। प्रकरणं—प्रकृतमेव कर्मजातं स्यात्। कर्मान्तरविधौ रूपावचनात्—रूपप्रापकवचनाभावादिति॥

**(४)—पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥ चोदना वाऽप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११ ॥ प्रायवचनाच्च ॥ १२ ॥**

तत्रैव 'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पूरोडाशावुपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय'[२] इति श्रुते अन्तरावाक्ये पूर्ववदेव न कर्मान्तरविधिः। अपि तु तव्यप्रत्ययान्तवाक्यैर्विहितानां देवतोपांशुत्वविशिष्टयागानां समुदायसिद्ध्यर्थमनुवाद एव। तत्प्रयोजनं च अन्तरालकालविधिः त्रयाणामेषाम्। 'तावब्रूतामग्नीषो-

---

**पौर्णमासीवदुपांशुयाजः स्यात्** ॥ इह समुदायानुवादापवादादापवादिकी सङ्गतिः। **तत्रैवेति** ॥ दर्शपूर्णमासप्रकरण एवेत्यर्थः। **जामि**—सदृशम्; दशमे "अजामिकरणाच्च" इति सूत्रभाष्ये जामिता सादृश्यमिति व्याख्यानात्। सादृश्यस्य दोषपर्यवसायित्वं च एकरूपक्रियायाः पुनःपुनरनुष्ठाने आलस्यं स्यादित्यालस्यापादकत्वेन द्रष्टव्यम्। न्यायसुधायामपि सादृश्यस्य दोषपर्यवसायित्वमेव उक्तम्। किन्तु सौन्दर्यवाचिजामिशब्दस्य सादृश्ये लक्षणेत्युक्तम्। नयविवेके तु जामिता सादृश्यं एकरूपा द्विः क्रियेति तेन कृताकृताननुसन्धानदोष इति सादृश्यस्य दोषत्वमुक्तम्। **अन्वञ्चौ**—अनुपूर्वौ; निरन्तराविति यावत्। **यत्** इत्युक्त्या तस्मादिति शेषः। जामितापरिहारायाग्नीषोमीययोर्मध्ये उपांशुयाजं कुर्यादित्यर्थः। तत्र अन्तरावाक्यं किं समुदायानुवादकं उत विधायकमिति सन्दिह्य पूर्वपक्षमह—**अन्तरावाक्य इति** ॥ **तव्येति** ॥ विष्ण्वादिवाक्येषु देवतारूपश्रवणादसन्दिग्धविधिश्रवणाच्च सक्तुवत् विनियोगभङ्गेन तत्रैव यागविधिः। ततश्च तव्यप्रत्ययान्तवाक्यविहितदेवतोपांशुत्वविशिष्टयागा एवान्तरावाक्येनानूद्यन्ते। तेनैकसमुदायसिद्धिर्विद्वद्वाक्यवदित्यर्थः। ननु जमित्वोपक्रमाजामित्वोपसंहाराभ्यां वैश्वानराधिकरणन्यायेन एकवाक्यत्वावगमात् प्रत्येकं यागविधित्वे वाक्यभेदः स्यादिति चेन्न; अत्र प्रत्येकमजामित्वश्रवणेन "जामि वा" इत्यस्यापि प्रत्येकमनुषङ्गेण वाक्यचतुष्टयस्यैव प्रतीत्या नैकवाक्यत्वोपपत्तेः ॥ **अनुवाद एवेति** ॥ यजिना यागत्रयमनूद्य उपांशुयाजपदेनाव्युत्पन्नं नामाङ्गीकृत्यान्तरालकालो विधीयते। छान्दसो वा क्त्वाभावः। न च "जामि वा" इत्युपक्रमस्य कालविधिव्यवहितत्वादनुषङ्गायोग इति वाच्यम्; शाखान्तरे अत्रापि "अजामित्वाय" इति श्रवणात् चतुर्णामप्येकरूपत्वेन पूर्वोत्तरार्थवादयुक्तत्वानपायात्। असम्बन्धिपदव्यवधानाभावाच्च। न चैकरूपत्वे चतुर्थोऽपि यागविधिः किं न स्यादिति वाच्यम्; रूपालाभेन यागविधित्वासम्भवादिति भावः। ननु पुरोडाशनैरन्तर्यप्रयुक्तजामित्वनिरासार्थत्वेनैवान्तरालकालप्राप्तेः विधानं व्यर्थमित्यस्वरसादाह—**तावब्रूतामिति** ॥ उपांशु-

---

२. तै. सं. २. ६. ६.

मावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति कालसम्बन्धतात्पर्यग्रहद्वारा फलसम्बन्धसिद्धिर्वा । अन्यथा ह्यग्नीषोमदेवत्यस्यैव कालसम्बन्धात् फलसम्बन्धः स्यादिति प्राप्ते—

उपक्रमोपसंहारयोरेकविषयत्वेनैकवाक्यत्वप्रतीतेः न तव्यप्रत्ययान्तवाक्यैः कर्मविधिः । अन्तरावाक्य एव तु कालोपांशुत्वविशिष्ट एककर्मविधिः । तदर्थवादश्चायं पूर्वोत्तरभावेन सर्वोऽपि । अन्यथा वाक्यभेदापत्तेः । अत एव तव्यप्रत्ययान्तैर्देवतामात्र-

---

याजानामेकदेशोपांशुपदेन यागत्रयमनूद्य कालविधानेन त्रयाणामपि विद्वद्वाक्येन पुरोडाशयागयोरिव ग्रहणेन फलवाक्येन पञ्चानामपि फलसम्बन्धसिद्धिरित्यर्थः । अन्तरापदस्य पौर्णमासीकालपर्यवसितत्वादिति भावः । **अन्यथा**—अनुवादाभावे ॥ **उपक्रमेति** ॥ जामित्वोपक्रमेणाजामित्वोपसंहारेण चैकवाक्यत्वस्य निश्चितत्वादेकमेवेदं वाक्यम् । ततश्च विष्ण्वादिवाक्यैर्यागविधाने वाक्यभेदः स्यात् । स चायुक्तः । एकवाक्यत्वसम्भवे भिन्नवाक्यत्वस्यान्याय्यत्वात् । अतो वैश्वानराधिकरणन्यायेनार्थवादत्वमेव तेषामिति भावः ॥ **कालोपांशुत्वेति** ॥ न चान्तरालकालस्याक्षेपेणैव प्राप्तत्वात् तद्विधिर्व्यर्थ इति वाच्यम् ; आक्षेपात्पूर्वमेव प्रत्यक्षविधिप्रवृत्तिसम्भवात् । तत्फलं चास्यैवोत्पत्तिविधित्ववत् प्रयोगान्वयिकालसम्बन्धात् प्रयोगविधित्वसिद्धिः । अन्यथा "तावब्रूतां" इत्यस्यैव कालसम्बन्धेन प्रयोगविधित्वापत्तेः । न चेष्टापत्तिः । प्राप्तस्याप्युपांशुयाजस्य प्रयोगविशेषणत्वेन पुनर्विधानात् तद्विशेषणाग्नीषोमदेवताकत्वस्यानुवाद्यविशेषणत्वाभावेन काले कर्मणः उपादेयत्वेन च तद्विशेषणाग्नीषोमदेवत्यत्वस्य विवक्षितत्वात्तस्यैवोपांशुयाजस्य फलसम्बन्धेन प्राधान्यापत्तेः । इतरदेवताकस्य प्राधान्यं न स्यादिति भावः । अत्रान्तरापदस्य पौर्णमासीस्थपुरोडाशद्वयान्तरालपरत्ववदमावास्यास्थहविर्द्वयान्तरालपरत्वस्यापि सम्भवात् अमावास्यायामप्युपांशुयाजः कार्य इति भगवानाश्वलायनः । न च पुरोडाशद्वयनैरन्तर्यप्रयुक्तजामितापरिहारार्थत्वस्य पूर्वमुक्तत्वादमावास्यायां तदभावात् कथमुपांशुयाजविधानमिति वाच्यम् ; भगवद्बोधायनेन सान्नाय्ये पुरोडाशस्यापि विधानेन सर्वेषां मते असन्नयत ऐन्द्राग्नपुरोडाशसत्त्वेन च तदुपपत्तेः । न च पाक्षिकैन्द्राग्नमादाय नित्यवच्छ्रुतान्तरालसम्पत्तिर्न युक्तेति वाच्यम् ; तर्हि पौर्णमास्यामप्यन्तरालानापत्तेः । असोमयाजिनोऽग्नीषोमीयनिषेधेन पाक्षिकत्वस्य तुल्यत्वात् । एवं च पूर्वाधिकरणोक्तं समप्राधान्यं अमावास्यासंयुक्तविद्वद्वाक्येन चतुर्णामनुवादात् सप्तानामिति द्रष्टव्यम् । अन्तरापदस्य पौर्णमासीपरत्वमेवाश्रित्य पौर्णमास्यामेवोपांशुयाज इत्यपि केचित् । **अन्यथा**—कर्मविधायकत्वे । ननु तव्यप्रत्ययान्तवाक्यैरन्तरावाक्यविहितकर्मानुवादेन देवताविधिसम्भवात् किमित्यर्थवादत्वमङ्गीक्रियत इत्याशङ्कां निराकरोति—**अत एवेति** ॥ वाक्यभेदापत्ते-

विधिरन्तरावाक्यस्थकर्मणीत्यपास्तम् । न च तत्र देवताऽलाभः; शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां एतद्यागक्रमे समाम्नातानां विकल्पेन तत्तद्देवताकल्पकत्वोपपत्तेः । तस्य च 'तावब्रूताम्'[1] इत्यनेन कालसम्बन्धात्फलसम्बन्धः । न चोत्पत्तिशिष्टकालसम्बन्धानामेवाग्नेयादीनां झटित्युपस्थितत्वेन फलसम्बन्धापत्तेः उत्पन्नशिष्टकालसम्बन्धस्योपांशुयाजस्य फलसम्बन्धानापत्तिः । अन्यथा पुरोडाशान्तरालकालसम्बन्धान्यथानुपपत्त्यैव पौर्णमास्यादिकाललाभेन उपांशुयागस्य फलसम्बन्धापत्तौ 'तावब्रूताम्' इत्यस्यापि तत्फलत्वानुपपत्तेरिति वाच्यम्; 'तावब्रूताम्' इत्येतदनन्तरं 'उपांशुयाजमन्तरा यजति'[2] इति पठितमिति वार्तिकदर्शनादस्यापि कालस्योत्पत्तिवाक्येनैव विधेयतया भिन्नवाक्यत्वाभावेन तुल्यबलत्वात् फलसम्बन्धोपपत्तेः । अतो नायं समुदायानुवाद इति सिद्धम् । प्रयोजनं स्पष्टम् ॥ ४ ॥

---

रेवेत्यर्थः । नन्वेवं रूपालाभात् कथमन्तरावाक्ये कर्मविधिरिति शङ्कते—**न चेति** ॥ परिहरति—**शाखाभेदेनेति** ॥ **एतद्यागक्रमे**—उपांशुयाजक्रमे । आग्नेययाज्यानुवाक्यायुगलोत्तरमिति यावत् । ततश्च क्रमकल्पितश्रुत्या तेषामङ्गत्वावगमेन मान्त्रवर्णिकदेवताप्राप्त्या अन्तरावाक्यस्य कर्मविधित्वं सम्भवतीत्यर्थः । न चैवमपि द्रव्यालाभात् कथमेतदिति वाच्यम् ; "सर्वस्मै वा" इति वाक्येन ध्रौवविनियोगकरणेनाज्यरूपद्रव्यलाभादिति भावः । **तस्य**—अन्तरावाक्यविहितकर्मणः ॥ **कालसम्बन्धादिति** ॥ ततश्च विद्वद्वाक्येन ग्रहणात्फलसम्बन्धसिद्धिरित्यर्थः । अन्तरालस्य पौर्णमासीरूपत्वेऽपि पौर्णमासीत्वेन तत्प्राप्त्यर्थमुक्तवाक्ये कालविधानमावश्यकमिति भावः । नन्वेवमप्युक्तफलसिद्धिर्न सम्भवतीति शङ्कते—**न चेति** ॥ आग्नेयादीनामुत्पत्तिवाक्य एव पौर्णमास्यादिकालश्रवणात् उपांशुयाजोत्पत्तिवाक्ये च तदश्रवणात् न फलसम्बन्धसम्भव इत्यर्थः । न चान्तरालस्य पौर्णमासीरूपत्वं पूर्वमुक्तमिति वाच्यम् ; तथापि पौर्णमासीत्वेन तदुपस्थितेः प्रमाणान्तरसापेक्षत्वेन विलम्बितत्वान्न फलसम्बन्धो युक्त इति भावः । **अन्यथा**—विलम्बस्याकिञ्चित्करत्वे । ततश्च विलम्बमपि सोढ्वा अन्तरावाक्यादेव पौर्णमासीत्वेन तत्कालसम्बन्धाङ्गीकारे तेनैव फलसम्बन्धसिद्धेः "तावब्रूतां" इत्यस्य कालसम्बन्धबोधकत्वाभावात् वैयर्थ्यमेव स्यादित्यर्थः ॥ **पठितमिति** ॥ ततश्च "तावब्रूतां" इति वाक्यस्यान्तरावाक्यस्य चैकवाक्यत्वान्नानुपपत्तिरित्यर्थः । एकवाक्यत्वे वार्तिकमेव प्रमाणमित्याह—**वार्तिकेति** ॥ दशमान्ताधिकरणस्थेति शेषः । ततश्च पौर्णमास्युपांशुत्वविशिष्टयागविधानात् पौर्णमासीत्वेनैव कालसम्बन्धेन विलम्बाभावात् आग्नेयादिसमत्वेन फलसम्बन्धोपपत्तिरिति नान्तरावाक्यस्य समुदायानुवादकत्वमित्युपसंहरति—**अत इति** ॥ अत्रेयं व्यवस्था । वैष्णवोपांशुयाजआश्वलायनानां नियतः । तत्सूत्रोक्तत्वात् ।

---

१. तै. सं. २. ५. २. २. तै सं. २. ६. ६.

(५)—आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ संज्ञोपबन्धात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात् तत्सन्निधेर्गुणार्थेन पुनश्श्रुतिः ॥ १६ ॥

तत्रैव 'आघारमाघारयति'[1] इति श्रुते 'अग्निहोत्रं जुहोति'[2] इत्यत्र च पूर्ववद्वाक्यभेदस्य दूषकत्वाभावात्[3] भेदकप्रमाणाभावाच्च 'ऋजुमाघारयति'[1] 'सन्ततमाघारयति'[1] 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिवाक्यविहितकर्मणां यथायोगं समुदायानुवादकत्वोपपत्तिः । दध्यादिवाक्यानां निर्व्यापारे विध्यन्वयासम्भवेन अवश्यं

---

एवं प्राजापत्योपांशुयाजो बोधायनानुसारिणां नियतः । इतरेषामैच्छिको विकल्प इति ॥ सूत्रार्थस्तु, **पौर्णमासीवत्**—"पौर्णमासीं यजते" इति वाक्यवत् । **उपांशुयाजः**—उपाशुयाजवाक्यमपि, अनुवादकं **स्यादिति** ॥

**आघाराग्निहोत्रमरूपत्वात्** ॥ इह दध्यादेरन्यतः प्राप्त्यभावेन मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेन विष्ण्वादिवाक्यानामिव स्तावकत्वासम्भवात् विधायकत्वे सति दध्यादिविशिष्टकर्मविधेरग्निहोत्रादिवाक्यमनुवाद इति प्रत्यवस्थानात् सङ्गतिः । **तत्रैव**—दर्शपूर्णमासयोरेव । अत्राघारवाक्याग्निहोत्रवाक्ययोरनुवादकत्वं विधायकत्वं वेति सन्दिह्य पूर्वपक्षमाह—**अत्रेत्यादि** ॥ **दूषकत्वाभावादिति** ॥ विष्ण्वादिवाक्ययोरिव दध्यादिवाक्याग्निहोत्रादिवाक्ययोरेकवाक्यतायाः सिद्धान्तेऽप्यस्वीकारादिति भावः ॥ **भेदकप्रमाणाभावादिति** ॥ अग्निहोत्रवाक्यादौ गुणस्याश्रवणेन वाजिनन्यायेन गुणस्य भेदकत्वासम्भवात् वक्ष्यमाणरीत्या अन्यपरत्वेन अभ्यासस्याभावादित्यर्थः ॥ **इत्यादीति** ॥ आदिना देवताप्रापकाणां "यदग्नये च" इत्यादीनां सङ्ग्रहः । तथा च आघारवाक्यं "ऋजुमाघारयति, सन्ततमाघारयति" इति वाक्यविहिताघारसमुदायानुवादः । "अग्निहोत्रं जुहोति" इति वाक्यं "दध्ना जुहोति, पयसा जुहोति" इति वाक्यप्राप्तसमुदायानुवाद इत्यर्थः । ननु दध्यादिवाक्यानां केवलगुणविधित्वेन कर्मविधित्वाभावात् न समुदायानुवादकत्वसम्भव इत्याशङ्क्य सिद्धान्तेऽपि दध्यादिवाक्यानां कर्मविधायकत्वावश्यकतया पूर्वपक्षेऽपि तेषां विधायकत्वसम्भवेन कर्मसमुदाये प्रसिद्धिसत्त्वात् समुदायानुवादोपपत्तिरित्याह—**दध्यादीति** ॥ **निर्व्यापार इति** ॥ प्रवृत्तेः सिद्धद्रव्यमात्रविषयकत्वासम्भवेन साध्यविषयकत्वस्वाभाव्यात् धातूपात्तक्रियानुरक्तद्रव्यविषयकप्रवृत्तावेव विधेरन्वयो वाच्यः । तथा च पयोऽग्न्यादिविशिष्टहोमविधिषु गुणात् कर्मभेदः । अतश्च रूपलाभाभावात् अग्निहोत्र-

---

१. तै. सं. २. ५. ११ २. तै. सं. १. ९. ९. ३. दूषकस्याभावात् इति पाठान्तरम् ।

गुणविशिष्टकर्मविधायकत्वात् । अतश्च रूपाभावात् भेदकप्रमाणाभावाच्च आघारवाक्ये अग्निहोत्रवाक्ये वा न कर्मान्तरम् । अपि तु तेषामेव समुदायसिद्ध्यर्थमनुवादः । तत्प्रयोजनं चाग्निहोत्रवाक्ये सर्वेषामेवाग्निहोत्रसंज्ञकत्वेन फलसम्बन्धसिद्धिः । इतरथा अग्निदेवत्यस्यैव तदापत्तिः । आघारवाक्ये समुदायानुवादप्रयोजनं कौस्तुभे[1] द्रष्टव्यम् । न च दध्यादिहोमेषु देवताद्यभावः ; समुदायानुवादबलेनैकप्रयोगपरिग्रहावगतेः सकृदनुष्ठानेनाग्न्यादिहोमाङ्गभूतदेवतायाः प्रसङ्गेन दध्यादिहोमोपकारकत्वोपपत्तेरिति प्राप्ते—

सर्वत्र गुणमात्रविधानेन तृतीयविधिप्रकारोपपत्तौ पञ्चमविधिप्रकाराङ्गीकरण-

---

वाक्ये न कर्मविधिरित्याह—**अतश्चेति** ॥ न च "अनिरुक्तो वै प्रजापतिः" "अनादेश आज्यं" इति विधिभ्यां रूपलाभ इति वाच्यम् ; तस्यागतिकविषयत्वादिति भावः । समुदायानुवादे अदृष्टान्तरकल्पनाभावेन लाघवाच्च ॥ **तेषामेवेति** ॥ जुहोतिना दध्यादिवाक्यविहितहोमाननूद्य अग्निहोत्रमिति संज्ञाकरणेन लिङ्गसमवायेन अग्निदेवत्यानग्निदेवत्यहोमपरत्वेन वैश्वदेवपदवत् अनुवादोपपत्तिरिति भावः ॥ **फलसम्बन्धेति,** निमित्तसम्बन्धस्याप्युपलक्षणम् । समुदायानुवादाभावे फलनिमित्तवाक्यगताग्निहोत्रपदस्य छत्रिन्यायेन लक्षणायां तात्पर्यग्राहकाभावादिति भावः ॥ **आघारवाक्य इति** ॥ उपांशुयाजवाक्ये द्रव्यदेवतात्मकरूपभिन्नेन उपांशुत्वगुणेनेवोर्ध्वऋजुसन्ततत्वादिगुणैः परिच्छिन्नानां कर्मणां अभ्यासेन भिन्नतया विहितानां "आघारमाघारयति" इत्यनुवादेन संज्ञाकरणम् । तत्फलं च "इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति" इत्याघारपदेन सर्वाघाराण्यनूद्य मन्त्रविधानेन मान्त्रवर्णिकदेवतालाभः । तेन संप्रतिपन्नदेवताकत्वात् सहानुष्ठानसिद्धिरिति वार्तिके स्पष्टमिति भावः । ऋजुसन्तताद्याघरणवत् मन्त्राघरणस्यापि समुदायिष्वेव निवेशात् नेदं प्रयोजनमिति कौस्तुभोक्तमित्यर्थः । तत्र वार्तिकस्यायमाशयः । आघारेति घञ(न्त)नामघटितवाक्यानां समुदायसंज्ञासिद्ध्युत्तरमेव प्रवृत्तेः वाच्यतया न मन्त्रविधेः समुदायिकोटिनिवेश इति यागे निर्देवताकत्वस्य देवतासामान्योद्देश्यकत्वस्य सङ्कर्षे निरसिष्यमाणत्वात् शङ्कते—**दध्यादीति** ॥ समुदायानुवादानुरोधेन "अग्निहोत्रं जुहोति" इत्यनेन दध्यादिवाक्यविहितहोमसमुदायस्य एकप्रयोगविधिपरिग्रहात् एकप्रयोगान्तर्गतहोमस्य "अग्निर्ज्योतिः" इत्यादिमान्त्रवर्णिकदेवतायाः प्रयोगान्तर्गतायाः सर्वेषामपि प्रसङ्गा(त्)देवतासिद्धिरित्यर्थः । विशिष्टविधिपक्षं दूषयति—**सर्वत्रेति** ॥ प्रसक्तकर्मानुवादेन गुणमात्रविधाने लाघवात् विशिष्टविधिपक्षे मत्वर्थलक्षणादिदोषात् विशेषणविधिकल्पनागौरवात्

---

१. ऊर्ध्वत्वमन्त्रविशिष्टाघाराणां मान्त्रवर्णिकेन्द्रदेवताकाघारेण सह प्रयोगविध्यवगतयौगपद्यसिद्धिद्वारा इन्द्रदेवताकत्वसिद्धिपूर्वकयागरूपतासिद्धिः । इन्द्रदेवताकाघारेण यौगपद्यसिद्धिमात्रं वा प्रयोजनमिति कौस्तुभे ।

स्यान्याय्यत्वात् न दध्यादिवाक्येषु विशिष्टकर्मविधानम् । न च गुणे विध्यन्वयानुपपत्तिः ; होमकर्मकगुणकरणकभावनायामेव विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन विधिफलस्याज्ञातज्ञापनरूपस्य भावनायाः स्वरूपेण प्राप्ततया गुणमात्रविषयत्वोपपत्तेः । अत एव सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षड्विधिप्रकाराः, तेषां चोत्तरोत्तरस्य दौर्बल्यं पूर्वमुक्तम् । अतश्च प्राप्त्यभावादेव समुदायानुवादत्वासम्भवेन आद्यविधिविधया कर्मविधी आघाराग्निहोत्रवाक्ये । न च रूपज्ञानाभावात्कर्मविध्यनुपपत्तिः ; तस्यानुष्ठानं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात् । अतश्च विजातीयहोमत्वावच्छिन्नस्य विधाने अवगते वाक्यान्तरेण रूपलाभेऽपि न काचित्क्षतिः । प्रयोजनं दध्यादिद्रव्यसमुच्चयविकल्पाभ्यां स्पष्टम् ॥ ५ ॥

---

न विशिष्टविधिपक्षो युक्त इत्यर्थः । गुणस्य सिद्धरूपत्वेन विध्यन्वयानुपपत्तिं शङ्कते—**न चेति** ॥ शाब्दबोधे धात्वर्थभाव्यकभावनाया विध्यन्वयेऽपि विधिफलस्याज्ञातज्ञापनस्य गुणमात्रविषयत्वेन तस्यैव विधेयत्वोपपत्तेः भावनाया अग्निहोत्रवाक्येन प्राप्तत्वेन "अप्राप्ते शास्त्रमर्थवत्" इति न्यायादिति भावः । (अग्निहोत्रवाक्येन धात्वर्थस्य नासाधितन्यायसहकृताक्षेपेण तत्कर्मकभावनायाः प्राप्तत्वात् इति भावः । नन्वेवं सर्वविधिषु भावनाविधाने पूर्वोक्तषड्विधिप्रकारस्य उत्तरोत्तरदौर्बल्यस्य अनुपपत्तिरित्यत आह—**अत एवेति** ॥ अज्ञातज्ञापनमादायैव पूर्वोक्तं सर्वं उपपद्यत इति भावः । उपसंहरति—**अतश्चेति** ॥ दध्यादिवाक्यानां कर्मविधित्वाधिक्याभावेन समुदायासिद्ध्या नाग्निहोत्रवाक्यं समुदायानुवाद इति भावः । अग्निहोत्रवाक्ये रूपाभावात् कर्मविधित्वानुपपत्तिं शङ्कते—**न चेति** ॥ परिहरति—**तस्येति** ॥ रूपज्ञानस्येत्यर्थः । अनुष्ठानकाले द्रव्यदेवताज्ञानस्यापेक्षितत्वेऽपि विधिसमभिव्याहृतधातुना अन्यत्राविहितोऽयं होमविशेष इति ज्ञातुं शक्यत्वात् न शाब्दबोधं प्रति तस्य कारणत्वमित्यर्थः । शाब्दव्याप्तिज्ञानादीनां निश्चयजनकत्वस्वाभाव्येन शाब्दबोधानुपपत्त्यभावादित्यर्थः । ननु अनुष्ठानं प्रति रूपस्य कारणत्वे प्रकृते रूपाभावात् अनुष्ठानानुपपत्तिरस्त्येवेत्यत आह—**वाक्यान्तरेणेति** ॥ होमविधानानन्तरमनुष्ठानस्य रूपाकाङ्क्षायां मन्त्रविधीनां मान्त्रवर्णिकरूपलाभात् अनुष्ठानोपपत्तिरिति भावः । अधिकरणप्रयोजनमाह—**दध्यादीति** ॥ पूर्वपक्षे दध्यादिसमुच्चयः ; सिद्धान्तेऽसमुच्चय इत्यर्थः । आघारवाक्ये य एवाघारो विस्तृतः तस्यैव पुनः करणं पूर्वपक्षे । सिद्धान्ते तु, गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वात् प्रायश्चित्तमात्रं द्रष्टव्यम् । सूत्रार्थस्तु, **आघाराग्निहोत्रं**—आघाराग्निहोत्रवाक्यमपि पौर्णमासीवत् समुदायानुवादः स्यात् ; **अरूपत्वात्**—रूपाभावात् इति ॥

**(६)–द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥ अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥**

'अग्नीषोमीयं पशुमालभेत' इति श्रुतम् । तथा 'सोमेन यजेत' इति च । तत्राद्यविधिप्रकारस्यासम्भवान्न पूर्ववत्कर्मविधित्वम् ; अपि तु समुदायानुवादत्वमेव । कर्मप्राप्तिस्तु पशौ 'हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः'[1] इत्यादिभिः । अत्र हि उत्पत्तिशिष्टपशुसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेर्न तदुद्देशेनावदानाख्यसंस्कारविधिः । अतो विहितानां हृदयाद्यवदानानां पशुप्रभवद्रव्यवृत्त्यवदानत्वसादृश्यात् सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यवदेव हृदयादीनां यागसाधनत्वस्य पूतीकवदनुमानात् यावद्धृदयादि यागा एव विधीयन्ते, तांश्च लक्षणया आलभतिना

---

**द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥** दध्यादिवाक्येषु कर्मविध्यभावेन अग्निहोत्राघारवाक्ययोः अनुवादत्वाभावेऽपि हृदयाद्यैन्द्रवायवादिवाक्येषु कर्मविध्यवश्यम्भावेन पशुसोमवाक्ययोः अनुवादो भवतीति प्रत्यवस्थानात्सङ्गतिः । ज्योतिष्टोमे "अग्नीषोमीयं पशुमालभेत, सोमेन यजेत" इति श्रुतमित्यर्थः ॥ **तत्रेति** ॥ शुद्धधात्वर्थकरणकभावनाविधानस्य फलोद्दे(शे)न भावनाविधानस्य धात्वर्थोद्देशेन गुणविधानस्यासम्भवादित्यर्थः । पशुपदानर्थक्यात् फलपदाभावात् धात्वर्थस्य वाक्यान्तरेण प्राप्त्यभावाच्चेत्यर्थः ॥ **समुदायानुवादत्वमिति** ॥ कर्मप्राप्तिमाह—**हृदयस्येति** ॥ **इत्यादिभिरिति** ॥ आदिना "अथ वक्षसः" इत्यादिसङ्ग्रहः । अग्नीषोमीयवाक्यस्य यागविधित्वे पशोरुत्पत्तिशिष्टत्वेन तदवरुद्धे यागे हृदयादीनां साधनत्वेन विधानासम्भवेन हृदयादीनां यागीयद्रव्यत्वाभावेन तत्रावदानसंस्कारविधेः व्यर्थत्वापत्तेरित्यर्थः ॥ **पशुप्रभवेति** ॥ पशुद्रव्यादुत्पन्नहृदयादिद्रव्यवृत्त्यवदानत्वं सान्नाय्यावदानेऽप्यस्तीति सान्नाय्यतत्प्रकृतिकत्वमित्यर्थः । यागसाधनत्वं हृदयादीनां सुलभम् । यथा "सोमाभावे पूतीकानभिषुणुयात्" इत्यत्र यागीयद्रव्यसंस्काररूपाभिषवसंस्कारविधिबलेन पूतीकानां यागसाधनत्वं तद्वदित्यर्थः । प्रयोगश्च हृदयादिकं यागसाधनं यागीयद्रव्यसंस्कारावदानसंस्कार्यत्वात् , अभिषवसंस्कार्यपूतीकवदिति । ततश्च हृदयादीनां यागसाधनत्वसिद्ध्या हृदयादिवाक्यानि यागविधायकानीति भावः ॥ **यावद्धृदयादीति** ॥ अवदेयद्रव्यसमसङ्ख्याका इत्यर्थः । ततश्चावत्तहृदयादिकरणकयागेनेष्टं भावयेदिति विधिवाक्यस्य पर्यवसितोऽर्थ इति भावः । आलभतिना शक्त्या यागानुवादासम्भवादाह—**लक्षणयेति** ॥ **विधीयत इति** ॥

---

१. तै. सं. ६.३.१०.

अनूद्याग्नीषोमदेवता विधीयते । पशुपदं च हृदयादीनां छागप्रकृतिकत्वस्य मन्त्रवर्णात्प्राप्तत्वात् लक्षणया हृदयादिपरम् । अथवा, हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शनेवालभतिना शक्त्यानूद्य पशुशब्दलक्षितहृदयादीनां प्रत्येकं देवतासम्बन्धे कृते तावन्तो यागा देवतासम्बन्धकल्पितास्तेनैव विधिना विधीयन्ते । सर्वथा पशुपदं समुदायानुवादः ॥

तथा सोमेऽपि, 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिवाक्यैर्द्रव्यदेवतासम्बन्धानुमितयागविधानम् ; ग्रहणे देवतान्वयानुपपत्तेः । द्रव्यं च

---

न च पशुवाक्यस्य देवताविधायकत्वे कथमनुवादकत्वपूर्वपक्ष इति वाच्यम् ; तथाप्यालभतेः समुदायानुवादकत्वेन पूर्वपक्षोपपत्तेः । न चाग्नीषोमयोर्द्वयोर्विधाने वाक्यभेद इति वाच्यम् ; तद्धितोपात्तदेवतात्वस्य व्यासज्यवृत्तित्वेन तस्यैकस्यैव विधानेनादोषादिति भावः । ननु हृदयादीनां प्रकृतिद्रव्याकाङ्क्षायां पशोरपि तत्प्रकृतित्वेन विधानावश्यकत्वात् अनेकेषामेकपदोपात्तत्वेनोद्देश्यानेकत्वप्रयुक्तवाक्यभेदाभावेऽपि विधेयानेकत्वप्रयुक्तो वाक्यभेदः स्यादेवेत्यत आह—**पशुपदं चेति** ॥ "छागस्य वपायाः" इति मन्त्रवर्णेन वपाया इव "छागस्य हविषः" इति मन्त्रवर्णेन हृदयादीनां छागप्रकृतिकत्वस्य च प्राप्तत्वेनाविधेयत्वात् । प्रकृतिविकृत्योरभेदोपचारेण लक्षणया वा हृदयादीनां पशुपदेनानुवादमात्रकरणात् नोक्तदोष इति भावः । ननूक्तानुमाने पक्षे हेतुज्ञानं कथम् ? न तावद्धृदयादीनां यागीयद्रव्यसंस्कारावदानसंस्कार्यत्वं वचनेनावगम्यते; यागस्याश्रुतत्वेन तदसम्भवात् । न च प्रकृतितः संस्कारस्य यागीयद्रव्यवृत्तित्वस्य वा अतिदेशेन प्राप्तत्वाद्धेतुज्ञानोपपत्तिरिति वाच्यम् ; प्रकृतौ तस्यार्थिकत्वेनातिदेशाभावात् । "न चार्थिकं चोदकः प्रतिदिशति" इति न्यायादित्यतः प्रकारान्तरेण पूर्वपक्षमुपपादयति—**अथवेति** ॥ **अवदानाक्षिप्तेति** ॥ स्पर्शं विना अवदानस्य कर्तुमशक्यत्वादाक्षेप इति भावः । पशुपदस्य हृदयादिसमुदायानुवादकतायाः प्रयोजनं सूचयति—**प्रत्येकमिति** ॥ एकपदोपात्तत्वप्रयुक्तसाहित्यस्य भानेऽपि तस्योद्देश्यविशेषणत्वेन ग्रहैकत्ववदविवक्षितत्वादिति भावः । ततश्च पशुवाक्यस्य यानि हृदयादिद्रव्याणि स्पृश्यमानानि तानि प्रत्येकमग्नीषोमदेवत्यानीत्यर्थः । द्रव्यदेवतासम्बन्धानुमितयागाश्च "अग्नीषोमीयैः हृदयादिद्रव्यैर्यजेत" इति कल्पितवाक्येनैव विधीयन्ते । तेन नालभतौ युगपद्वृत्तिद्वयविरोधः । परं तु विशेषणविधिमूलस्य श्रुतवाक्यस्यैव गुणांशेऽपि विधायकत्वं स्वीकृत्य विशिष्टविधित्वव्यवहारवत् पशुवाक्यस्यैव यागसमुदायविधिकल्पनामूलत्वादाह—**तेनैवेति** ॥ नन्वेवं पशुवाक्ये यागविधाने समुदायानुवादकत्वात्पूर्वपक्षानुपपत्तिरित्यत आह—**सर्वथेति** ॥ पशुपदस्य हृदयादिसमुदायानुवादकत्वात्पूर्वपक्षोपपत्तिरिति भावः । सोमवाक्ये पूर्वपक्षमाह—**तथेति** ॥ **सोमेऽपि**—सोमवाक्येऽपि ॥ **इत्यादीति** ॥ आदिना "आश्विनं गृह्णाति" इत्यादिवाक्यपरिग्रहः ॥ **द्रव्यदेवतेति** ॥ ऐन्द्रवायवादिवाक्ये

'अण्व्या धारया गृह्णाति' इति प्रकृतं धारासमर्थं द्रवद्रव्यं तद्धितोपात्तम् । सोमवाक्ये तु तत्प्रकृतित्वेन सोमलताविधिः, व्रीहिवत् । 'सोममभिषुणोति' इत्यादिसंस्कारविध्यन्यथानुपपत्त्यैव वा 'अध्वर्युं वृणीते' इतिवत् सोमप्राप्तेः सोमपदं नामधेयम् । सर्वथा यजिः समुदायानुवादः । तत्प्रयोजनं चास्मिन् पक्षे सोमद्रव्यक-

---

इन्द्रवाय्वादिदेवतासम्बन्धिद्रव्यस्य तद्धितार्थत्वेन द्रव्यदेवतासम्बन्धस्य यागं विनानुपपत्तेर्यागोऽनुमीयत इत्यर्थः । ननु ग्रहण एव देवतासम्बन्धश्रवणात् द्रव्यदेवताविशिष्टग्रहणस्यैव विधानान्न यागानुमानसम्भव इत्यत आह—**ग्रहण इति** ॥ त्यज्यमानद्रव्योद्देश्यस्यैव देवतात्वेन ग्रहणस्य त्यागरूपत्वाभावेन देवतासम्बन्धानिर्वाहकत्वात् "तद्विष्णव उरुक्रमायावद्येत्" इत्यत्रावद्यतेरिव गृह्णातेर्लक्षणया यागपरत्वावश्यम्भावादिति भावः । ननु मानान्तरसिद्धयागीयदेवताकं द्रव्यमनूद्य ग्रहणरूपसंस्कारो विधीयतामित्यत आह—**द्रव्यं चेति** ॥ "अण्व्या धारया गृह्णाति" इति धारासमर्थद्रव्यस्य प्रकृतत्वेन तद्धितेन तस्योपादानसम्भवेन यागविधेरेव सम्भवादित्यर्थः । सोमवाक्ये लताया एव यागीयद्रव्यत्वेन विधानेन द्रवद्रव्यस्य भूतभाव्युपयोगाभावेन देवताया अप्यन्यतः प्राप्त्यभावेन तदीयत्वेन द्रव्यमनूद्य संस्कारविधित्वायोगादिति भावः । सोमवाक्यसार्थक्यमुपपादयति—**सोमवाक्य इति** ॥ प्रत्यक्षश्रुतयजिकमपि सोमवाक्यं व्रीहिवाक्यमिव प्रकृतिद्रव्यविधायकमित्यङ्गीकृत्य आग्नेयादिवाक्येष्विव ऐन्द्रवायवादिवाक्येष्वनुमितयागविधिरेवागत्या स्वीकरणीय इति न वैयर्थ्यमित्यर्थः । विकारानुवादेन प्रकृतिविधानाभावेऽपि द्वयोर्द्रव्ययोः यागे निवेशासम्भवात् प्रकृतिविकृतिभावकल्पनेन विधिद्वयस्य व्यवस्थोपपत्तिरिति भावः । प्रकृतिद्रव्यलाभेन पक्षान्तरमाह—**सोममिति** ॥ "सोममभिषुणोति, सोममाप्याययति" इत्यादिसंस्कारविधिना सोमस्य वरणविधिनाध्वर्योरिव प्राप्तत्वात् सोमपदं तत्प्रख्यन्यायेन नामधेयं इति द्वितीयः पूर्वपक्ष इत्यर्थः । अत एव "स एष यज्ञः पञ्चविधः" इत्यादिवाक्ये "न तौ पशौ करोति, न सोमे" "दीक्षा सोमस्य दक्षिणा सोमस्य" इत्यादिवाक्येषु च सोमशब्देन यागनिर्देशोऽप्युपपद्यत इत्याशयः । अत्र ऐन्द्रवायवादिवाक्यस्थतद्धितैः अभिषवादिसंस्कृतः पूतभृदाधवनीयादिपात्रस्थ एव सोमरसः परामृश्यत इति ध्येयम् । फलितमाह—**सर्वथेति** ॥ पक्षद्वयेऽपि यजिः समुदायानुवाद इत्यर्थः । ननु भवेदेवं यदि "ऐन्द्रवायवं गृह्णाति" इति देवतातद्धितः स्यात्; तदेव न । "तस्येदं" इति सम्बन्धसामान्येऽपि तद्धितानुशासनात् । ततश्च देवतोद्देशविशिष्टग्रहणविधिसम्भवात् न यागविधित्वमिति कुतः समुदायानुवाद इति चेन्न; भवेदेवं, ऐन्द्रवायवादिषु मरुत्वतीयवाक्ये तद्धितस्य सम्बन्धार्थकत्वानुपपत्तेः, "द्यावापृथिवी शुनासीरमरुत्वदग्नीषोमवास्तोष्पति-

यागमात्रानुवादात् अस्तुतशस्त्राणामपि फलसम्बन्धः । ज्योतिष्टोमपदं च वैश्वदेववद्गौणम् । समुदायानुवादाभावे हि तद्वशात् सस्तुतशस्त्राणामेव यागानां फलसम्बन्धापत्तिः; तेषामेव ज्योतीरूपस्तोमसम्बन्धात् । सिद्धान्ते तु, यागस्यैकत्वात्

---

गृहमेधाच्छ च" इति छप्रत्ययस्य देवतायामेव विधानेन देवताविशिष्टयागविधानावश्यकतया तदवैरूप्याय ऐन्द्रवायवादिवाक्येष्वपि यागविधेरावश्यकत्वादिति ध्येयम् ॥ **समुदायानुवाद इति** ॥ **अस्मिन् पक्ष इति** ॥ पूर्वपक्ष इत्यर्थः । सोमपदस्य नामत्वपक्ष इत्यर्थ इति केचित् ॥ **सोमद्रव्यकेति** ॥ मात्रशब्दः कृत्स्नार्थकः । ततश्च सर्वेषामैन्द्रवायवादिवाक्यविहितानां यागानां समुदायस्यैवानुवादात् अस्तुतशस्त्राणामपि सोमयागत्वाविशेषात् सोमवाक्येऽनूदितस्यैव समुदायस्योपस्थितत्वेन फलवाक्येऽप्यनुवदनीयत्वात् सर्वेषां फलसम्बन्धसिद्धिरित्यर्थः । ननु फलवाक्ये ज्योतिःशब्दस्य स्तोत्रसम्बन्धित्रिवृदादिस्तोमपरत्वेन बहुव्रीहिणा सस्तुतशस्त्राणामेव ग्रहणात् तेषामेव फलसम्बन्धः सिध्येत्; नान्येषामित्यत आह—**ज्योतिष्टोमपदमिति** ॥ **वैश्वदेववदिति** ॥ "प्राचीनप्रवणे वैश्वदेवेन यजेत" इत्यादौ वैश्वदेवपदस्य वैश्वदेवावैश्वदेवसाधारण्येन प्रकृतयागमात्रपरत्वं यथा, तथा प्रकृतेऽपि सस्तुतशस्त्रास्तुतशस्त्रसाधारण्येन सोमयागमात्रपरत्वात् नानुपपत्तिरित्यर्थः । **समुदायानुवादाभावे**—"सोमेन यजेत" इत्यत्र यजिना समुदायानुवादाभावे । सोमवाक्यस्यैवाभाव इत्यर्थ इति केचित् । **तद्वशात्**—ज्योतिष्टोमनामसामानाधिकरण्यात् ॥ **सस्तुतशस्त्राणामेवेति** ॥ एवकारेणास्तुतशस्त्राणामुपांश्वन्तर्यामादियागानां निरासः । **तेषामेव**—सस्तुतशस्त्राणामेव ॥ **ज्योतीरूपेति** ॥ "त्रिवृत् पञ्चदश सप्तदश एकविंशाः, एतानि वा व ज्योतींषि, य एतस्य स्तोमाः" इति वाक्ये त्रिवृदादिस्तोमानामेव ज्योतिःशब्दार्थत्वावगमादिति भावः । यत्त्वत्र समुदायानुवादसत्त्वेऽपि तत्रानूदितानामेव फलवाक्ये फलोद्देशेन विधानमिति निर्बन्धे प्रमाणाभावेन ज्योतिष्टोमपदेन यजिसङ्कोचोपपत्तेः सस्तुतशस्त्राणामेव फलसम्बन्धसिद्धिरित्युक्तम्, तन्न; तथा सति समुदायानुवादवैयर्थ्यापत्तेः । सोमपदस्य नामत्वादिना सार्थक्येऽपि यजिसमुदायानुवादवैयर्थ्यस्य दुरुद्धरत्वात् । न च समुदायनामत्वसिद्धिरेव प्रयोजनमिति वाच्यम्; यज्युपात्तयत्किञ्चिद्यागनामत्वेनोपपत्तौ समुदायनामत्वानावश्यकत्वात् । यदपि नामद्वयवैयर्थ्यापत्त्या ज्योतिष्टोमसोमत्वयोर्व्याप्यव्यापकभावावश्यम्भावः, दीक्षाद्यङ्गित्वादिनियामकत्वेन व्यापकनाम्नोऽपि सार्थक्यमित्युक्तम्, तदपि न; ज्योतिष्टोमसोमत्वयोः समनियतत्वेऽपि श्रौतव्यवहारभेदेन नामद्वयसार्थक्यसम्भवात् । दर्शमावास्यासंज्ञादौ तथा दर्शनात् दीक्षादिवाक्यानामपि सोमसंज्ञामादायोपपत्तेः । अतश्च मूलोक्तपूर्वपक्षस्यैव युक्तत्वेन प्रकारान्तरेण केषाञ्चित् पूर्वपक्षकरणं वार्तिकादिविरुद्धत्वादयुक्तमिति दिक् । सिद्धान्तं

फलवाक्यस्थयजिना अभ्यासलक्षणापत्तेः विजातीययागत्वावच्छिन्नस्यैव फलसम्बन्धः। ज्योतिष्टोमपदे बहुव्रीह्यर्थस्तु स्वसम्बन्ध्यभ्यासघटितसमुदायाश्रयत्वरूपः । अतः समुदायानुवादावेताविति प्राप्ते—

पशुपदेन[1] हृदयादिलक्षणायां प्रमाणाभावात् तत्रैव विशिष्टयागविधिः; हृदयादि-वाक्यैश्च हृदयाद्युद्देशेन संस्कारमात्रम् । पशोश्च न साक्षाद्धविष्ट्वेन विधानम्; किं तु विशसनावदानादिविधिरूपतात्पर्यग्राहकानुरोधेन हृदयादिप्रकृतित्वेनैव । करण-

---

दूषयति—**सिद्धान्ते त्विति** ॥ "सोमेन यजेत" इति वाक्यविहितयागस्य ज्योतिष्टोमेनेत्येक-वचनानुसारेणैकत्वात् अभ्यासाङ्गीकारस्य शास्त्रान्तरानुरोधेनावश्यकतया सर्वेषां सोमयागा-भ्यासानां फलसम्बन्धसिद्ध्यर्थं ज्योतिष्टोमवाक्यस्थयजिनाभ्यासलक्षणा स्यादित्यर्थः । तथा च फलवाक्यस्थयजेः सोमयागमात्रपरस्य विजातीयसस्तुतशस्त्रयागाभ्यासमात्रपरतया सङ्कोचो दोष इति भावः । नन्वेवं समुदायस्य ज्योतिष्टोमशब्देन कथं बोधः ? अस्तुतशस्त्राणां सोम-यागाभ्यासानां ज्योतिष्टोमत्वाभावादित्यत आह—**बहुव्रीह्यर्थस्त्विति** ॥ **स्वसम्बन्धीति** ॥ **स्वं**—त्रिवृदादिकम् । **तत्सम्बन्ध्यभ्यासः**—सस्तुतशस्त्रसोमयागाभ्यासः । **तद्घटित-समुदायः**—सस्तुतशस्त्रास्तुतशस्त्रसोमयागसमुदायः । **तदाश्रयत्वस्य** सर्वसोमयागानां सत्त्वात् नोक्तदोष इत्यर्थः ॥ **पशुपदेनेति** ॥ हृदयादिषु पशुत्वप्रसिद्धेरभावात् लक्षणाङ्गीकार्या । तथा च स एव दोष इति भावः । **तत्रैव**—अग्नीषोमीयवाक्य एव ॥ **विशिष्टयागविधिरिति** ॥ प्रकृतिद्रव्यस्य देवतायाश्च विधाने वाक्यभेदापत्तेः प्रकृतिद्रव्यदेवतोभयविशिष्टयाग-विधेरेवेत्यर्थः । ननु तर्हि हृदयादिवाक्यानामानर्थक्यमित्यत आह—**हृदयादिवाक्यैरिति** ॥ **संस्कारमात्रमिति** ॥ विधीयत इति शेषः । तथा च हृदयाद्युद्देशेनावदानसंस्कार-विधानार्थत्वात्तेषां न वैयर्थ्यमित्यर्थः । ननु हृदयादीनां यागसाधनत्वेनाविधानात् हविष्ट्वासिद्धौ तदुद्देशेन संस्कारविधिर्व्यर्थ इत्याशङ्क्य तेषां हविष्ट्वमुपपादयति—**पशोरिति** ॥ "पशो-रेकहविष्ट्वं समस्तचोदितत्वात्" इति दाशमिकाधिकरणे पशोः साक्षाद्धविष्ट्वेन विधानस्य निराकृतत्वेन हृदयादिद्वारैव हविष्ट्वस्य वक्तव्यतया हृदयादीनामपि हविष्ट्वसिद्धेर्नोक्तदोष इत्यर्थः ॥ **विशसनेत्यादि** ॥ अवयवानां अवयविनः पृथक्करणं विशसनम् । अवयवादेव यत्किञ्चिद्भागस्य पृथक्करणमवदानम् । आदिना हृदयशूलभेदनपरिग्रहः । ततश्च "पशुं विशास्ति, हृदयस्याग्रेऽवद्यति" इत्यादिवचनैर्विशसनावदानादिविधानेन हृदयादिद्वारैव पशोः करणत्वं प्रतीयते । अवघातपेषणादिविधिरूपतात्पर्यग्राहकानुरोधेन "व्रीहिभिर्यजेत" इति विधिप्राप्तव्रीहिकरणत्वस्य तण्डुलादिद्वारकत्ववत् प्रकृतेऽपि पशुकरणत्वस्य हृदया-दिद्वारा उपपत्तिरित्यर्थः । ननु "साधकतमं करणं" इत्यनुशासनेन साधकतमस्यैव करणत्वं वाच्यम्; साधकतमत्वं च साक्षात्कार्यजनकत्वम्; अन्यस्य दुर्वचत्वात् । ततश्च कथं

---

१. पशुपदं इति पाठान्तरम् ।

**त्वस्य साक्षादिव परम्परयापि तात्पर्यग्राहके सत्युपपत्तेः । अत एवातिदेशप्राप्तावदान-सम्बन्धोऽपि हृदयादीनां हविष्ट्वसिद्ध्यर्थं तदितराङ्गानां हविष्ट्वपरिसङ्ख्यार्थश्चेति कौस्तुभे द्रष्टव्यम् । सोमेऽपि नैन्द्रवायवादिवाक्ये यागविधिः; गौरवात् । किं तु देवताविशिष्ट-**

---

हृदयादिद्वारा करणत्वमित्यत आह—**करणत्वस्येति** ॥ न साक्षात्कार्यजनकत्वं साधकतमत्वम्; यागादीनामपूर्वादिद्वारा स्वर्गादिकरणत्वानुपपत्तेः । किन्तु व्यापारवत्त्वे सति कारणत्वमेव साधकतमत्वम्; तदेव करणत्वम् । तथा च पशोरपि हृदयादिद्वारा करणत्वं नानुपपन्नमित्यर्थः । ननु तर्हि कपालेन घटो जातः, तन्तुना पट इत्यादिप्रयोगवत् कपालिकया घटो जातः, तूलेन पट इत्यादिप्रयोगापत्तिः । कपालतन्त्वादिद्वारा कपालिकातूलादीनामपि कारणत्वसम्भवादित्यत आह—**तात्पर्येति** ॥ तात्पर्यग्राहकप्रमाणसत्त्व एव व्यापारद्वारा करणत्वस्याश्रयणीयतया कपालिकादौ तदभावात् नान्यद्वारा करणत्वम् । प्रकृते तु विशसनादिविधिरूपतात्पर्यग्राहकप्रमाणसत्त्वात् हृदयादिद्वारा करणत्वमुपपद्यते । अन्यथा व्रीहीणामपि तण्डुलादिद्वारा करणत्वानापत्तेरित्यर्थः । ननु हृदयादीनां सान्नाय्यप्रकृतिकतया चोदकत एवावदानप्राप्तेः पुनरवदानविधिर्व्यर्थ इत्याशङ्क्याह—**अत एवेति** ॥ पशोः साक्षाद्धविष्ट्वाभावादेवेत्यर्थः ॥ **अतिदेशप्राप्तेति** ॥ अतिदेशेन सम्भवत्प्राप्तिकेत्यर्थः ॥ **अवदान-सम्बन्धः**—अवदानविधिः ॥ **हविष्ट्वसिद्ध्यर्थमिति** ॥ ततश्च न वैयर्थ्यमित्यर्थः । नन्वेवमवदानविधौ हविष्ट्वसिद्धिः हविष्ट्वसिद्धौ अवदानविधिः इत्यन्योन्याश्रयापत्तिः । यदि चावदानविधौ हृदयत्वादिकमेवोद्देश्यतावच्छेदकमिति हविष्ट्वस्योद्देश्यतावच्छेदकत्वाभावात् नान्योन्याश्रय इति विभाव्यते, तदाप्यवदानविधिर्व्यर्थ एव । हृदयादीनां हविष्ट्वस्य "मनोतायै हविषः" इत्यादिमन्त्रेषु हविष इत्यनुवादबलेनैव सिद्धेरित्यस्वरसादाह—**तदितरेति** ॥ एकादशावयवव्यतिरिक्ताङ्गानां हविष्ट्वपरिसङ्ख्यार्थत्वात् न वैयर्थ्यमित्यर्थः । "एकादश वै पशोरवदानानि" इति वाक्यं च न तत्परिसङ्ख्यायकमिति कौस्तुभ एवोपपादितमिति भावः । **सोमेऽपि**—सोमवाक्येऽपि ॥ **गौरवादिति** ॥ बहुषु वाक्येषु लक्षणाकल्पने गौरवादित्यर्थः । द्रव्यदेवतासम्बन्धस्य तात्पर्यग्राहकस्य सत्त्वेऽपि यागवाचकपदस्यानुवादत्वमङ्गीकृत्य गृह्णातेर्यागलक्षकत्वाङ्गीकारस्यायुक्तत्वादिति भावः । एतेन बहुवाक्यैर्यागविधाने अनेकापूर्वाणां यागजन्यानां कल्पनीयतया कार्यकारणभावानन्त्यमिति गौरवोद्भावनं पूर्वपक्षे न सम्भवति । सिद्धान्तेऽपि ग्रहणानामारादुपकारकत्वात् प्रतिग्रहणमपूर्वाणां प्रत्यभ्यासं च तेषां कल्पनीयतया गौरवादिति केषाञ्चिदाक्षेपो निरवकाशः। प्रकारान्तरेण गौरवस्योपपादितत्वादिति भावः ॥ **देवताविशिष्टेति** ॥ ऐन्द्रवायवमिति तद्धितोपात्तद्रव्योद्देशेन देवताविशिष्टग्रहणमेव विधीयते । न चैवमेकप्रसरताभङ्ग इति वाच्यम्; द्रव्यनिष्ठोद्देश्यताया देवतानिष्ठविधेयतानिरूपितत्वाभावेन सृष्टिवाक्ये

ग्रहणस्यैव तद्धितोपात्तद्रव्योद्देशेन विधिः । सम्भवति च देवतात्वस्य निरूपकतासम्बन्धेन ग्रहणे वैशिष्ट्यायोगेऽपि ग्रहणकालीनोच्चारणकर्मीभूतशब्दवृत्तित्वसम्बन्धेन ग्रहणे वैशिष्ट्यम् । अतश्च देवताया ग्रहणाङ्गभूताया अपि यागापेक्षायां सोमवाक्य-

---

इष्टकोद्देशेन मन्त्रविशिष्टोपधानविधानपक्ष इव तदप्रसरात् । न चाक्षेपादेव ग्रहणस्य प्राप्तेस्तदुद्देशेन देवतामात्रविधिरस्त्विति वाच्यम् ; ग्रहणसामान्यस्योद्देश्यत्वे अतिप्रसङ्गात् । सोमरसीयत्वेन विशेषणे विशिष्टोद्देशप्रसङ्गात् । देवताया इव देवताविशिष्टरसरूपसंस्कार्यसम्बन्धस्यापि विधेयत्वेन वाक्यभेदप्रसङ्गाच्च । अतः आक्षेपतः पूर्वप्रवृत्त्यङ्गीकारेण ग्रहणविधिरङ्गीकार्य एव । तत्प्रयोजनं च देवतानां तत्तद्द्रव्यग्रहणमात्राङ्गत्वसिद्ध्या यागं प्रत्यनङ्गत्वसिद्धिः । ग्रहणाङ्गभूतानामेव देवतानां यागोपकारकत्वमात्रम् । ततश्च स्वार्थचोदितदेवताराहित्यात् अव्यक्तत्वं सोमयागस्येत्युद्भिदादीनामेतद्विकृतित्वसिद्धिरित्यादिकमूह्यम् । ननु ग्रहणेनैन्द्रवायवं कुर्यादिति न विधिसम्भवः । देवतासम्बन्धस्य यागैकनिर्वाह्यत्वेन ग्रहणनिर्वाह्यत्वाभावादित्यत आह—**सम्भवति चेति** ॥ **वैशिष्ट्यायोगेऽपीति** ॥ त्यज्यमानद्रव्योद्देश्यत्वरूपत्वेन देवतात्वस्य यागरूपत्यागस्यैव तन्निरूपकत्वं सम्भवति; न ग्रहणस्येति भावः ॥ **ग्रहणकालीनेति** ॥ सोमग्रहणं हि "इन्द्रवायुभ्यां त्वा जुष्टं गृह्णामि" इत्यादिमन्त्रकरणकं विहितम् । ततश्च ग्रहणकाले उच्चार्यमाणो यः निरुक्तमन्त्रघटकीभूतेन्द्रवाय्वादिशब्दः तद्वृत्तित्वं देवतात्वस्यास्ति ; शब्दस्यैव देवतात्वमिति दशमे वक्ष्यमाणत्वात् । एवं च तुल्यवित्तिवेद्यतया स्वाश्रयोच्चारणसमानकालीनत्वसम्बन्धेन देवतात्ववैशिष्ट्यं ग्रहणे सम्भवतीति भावः । यत्तु ग्रहणकालीनेति ग्रहणपूर्वकालिकेत्यर्थः । तुल्यवित्तिवेद्यतया स्वाश्रयोच्चारणोत्तरकालिकत्वसम्बन्धेनेति यावत् । स्वपदं देवतात्वपरम् । यथाश्रुते "उपयामगृहीतोऽसि, इन्द्रवायुभ्यां त्वा" इत्यादिमन्त्रस्य करणमन्त्रत्वेन क्रियमाणानुवादित्वाभावादसङ्गतिः स्यात् । अत एव छिनद्मि इतिवत् अध्याहृते 'जुष्टं गृह्णामि' इत्यंशे वर्तमानसामीप्य एव लडिति व्याख्यानम् ; तदसत् । 'इन्द्रवायुभ्यां त्वा' इत्यादेः करणमन्त्रत्वेऽपि "उपयामेन" ग्रहेषु, "तया देवतया" इष्टकासु इति विशेषशास्त्रेण "मन्त्रान्तैः" इत्यादिसामान्यशास्त्रसङ्कोचस्य आवश्यकत्वेनोच्चारणकाल एव ग्रहणस्य क्रियमाणतया तदुत्तरकालिकत्वस्य तत्रासम्भवादिति दिक् । नन्वेवं देवताविशिष्टग्रहणविधानादेवाङ्गत्वाद्देवताया न "सोमेन यजेत" इति वाक्यविहितयागसम्बन्धसिद्धिः । ततश्च रूपाभावात् सोमवाक्यस्य कथं विधायकत्वमित्यत आह—**अतश्चेति** ॥ ग्रहणे देवतासम्बन्धेऽपि तस्यानिरूपकयागापेक्षासत्त्वात् सोमवाक्यविहितयागस्य देवतापेक्षासत्त्वेनोभयाकाङ्क्षाबलेन ग्रहणाङ्गभूतदेवताया एव सोमवाक्यविहितयागोपकारकत्वाङ्गीकारेण देवतासम्बन्धात् सोमवाक्ये यागविधानोपपत्तिरित्यर्थः ।

**विहितयागस्यैव देवतापेक्षस्य उपपादकत्वमात्रकल्पनाल्लाघवम्। सोमपदं तु संस्कारविध्यन्यथानुपपत्त्या सम्भवत्प्रासिकत्वेऽपि सक्तुव्यावृत्तिफलकसोमनियमार्थं न विरुध्यते। यथा चैवं सति ग्रहणानां समुच्चयो, यागस्य च प्रतिग्रहणमावृत्तिः तथा सर्वं कौस्तुभ**

---

ननु संस्कारविध्यन्यथानुपपत्त्यैव सोमप्राप्तेः सोमविध्ययोगात् सोमपदवैयर्थ्यमित्याशङ्क्याह— **सोमपदं त्विति** ॥ **संस्कारविधीति** ॥ "सोममभिषुणोति" इत्यादिविध्यन्यथानुपपत्त्येत्यर्थः। अभिषवादिविधिषु विनियोगभङ्गानुपपत्त्या इत्यर्थ इति केचित् ॥ **सक्तुव्यावृत्तीति** ॥ तथा चान्यथानुपपत्तेः पूर्वमेव प्रत्यक्षविधिप्रवृत्तेस्तेनैव सोमविधिः। पूर्वप्रवृत्तेश्च फलजिज्ञासायां सोमवत् सक्तूनामपि विकल्पेन विनियोगकल्पनप्रसक्तौ तद्व्यावृत्तिफलकसोमनियम एव फलमिति न सोमपदवैयर्थ्यमित्यर्थः। नन्वेवं सोमवाक्यविहितयागस्यैकत्वादेकग्रहणेनैव सकृद्यागकरणेऽपि सोमस्य यागसाधनत्वसिद्धेर्ग्रहणसमुच्चयादिविध्यनुपपत्तिरित्यत आह—**यथा चेति** ॥ अगृहीतसोमरसेन यागस्य कर्तुं शक्यत्वेऽपि यागसमकालिकहोमरूपप्रतिपत्तेरसम्भवादाक्षिप्तस्य सकृद्ग्रहणस्य होमरूपदृष्टार्थत्वेऽपि गुणादभ्यासाद्वा भेदोपपत्त्या तत्तद्देवतासम्बन्धित्वेन तावतां देवतायुक्तग्रहणानां दृष्टप्रयोजनालाभेनादृष्टार्थत्वस्यावश्यकत्वात् आरादुपकारकत्वमेव। ततश्च प्रयाजानूयाजवत् क्रमसमुच्चययोरुपपत्तिः। ग्रहणानां समुच्चयादेव "ग्रहैर्जुहोति, चमसैर्जुहोति" इत्यादिवचनैर्ग्रहणाधिकरणपात्राणामेव होमसाधनत्वविधानेन गृहीतानां सोमरसानां सकृदल्पहोमायोगात् तदनुरोधेनैकस्यापि यागस्यावृत्तेरावश्यकत्वात् "तं तृतीयं जुहोति" इत्यादेर्होमांशेऽपि क्रमोपपत्तिरित्यादि कौस्तुभे द्रष्टव्यमित्यर्थः। नन्वेवमपि यथा "यदाग्नेयोऽष्टाकपालः" इत्यादौ श्रुतद्रव्यदेवतासम्बन्धनिर्वाहकत्वेन तत्रैव वाक्ये यागकल्पनम्, एवमैन्द्रवायवादिवाक्येष्वेव तन्निर्वाहकत्वेन यागाः कल्प्यन्ताम्। तथा च सोमवाक्यं विद्वद्वाक्यवदनुवादकमस्तु। इतरथा विद्वद्वाक्यमप्यनुवादकं न स्यात्। सोमवाक्यस्यैन्द्रवायवादिवाक्यापेक्षितयागविधायकत्ववत् विद्वद्वाक्यस्याप्याग्नेयादिवाक्यापेक्षितयागविधायकत्वमेव स्यादिति चेन्न; विशिष्टार्थाभिधानेन पर्यवसितस्य हि वाक्यस्याकाङ्क्षाबलेन वाक्यान्तरेण सम्बन्धः। आग्नेयवाक्ये च पुरुषव्यापाराश्रवणेन विशिष्टभावनाविधानमेव न पर्यवस्यति, अपर्यवसितस्य च न विद्वद्वाक्येनान्वय इति विशिष्टभावनाविधिपर्यवसानाय पुरुषव्यापाररूपयागस्तत्रैव कल्प्यते। अतो विद्वद्वाक्यमनुवाद इति युक्तम्। अत्र तु ऐन्द्रवायवादिवाक्येषु ग्रहणरूपपुरुषव्यापारश्रवणेन नाभिधानापर्यवसानम्। किन्त्वभिधानानन्तरं देवतासम्बन्धनिर्वाहकापेक्षामात्रमिति। सोमवाक्यमपेक्षितविधानार्थं सम्पद्यत इति श्रुतेनैव निर्वाहोपपत्तौ ऐन्द्रवायवादिवाक्येष्वश्रुतयागकल्पनं न युक्तमित्याशयः। नन्वल्पपात्रैर्ग्रहणानन्तरं स्थूलपात्रान्तरे एकीकृतानां सर्वेषां होमसम्भवात्

एव निरूपितम् । प्रयोजनं पशुविकारे हृदयादियागाद्यन्यतमप्रकृतित्वात् नैकादशावदानगणप्राप्तिः पूर्वपक्षे । सिद्धान्ते सेति द्रष्टव्यम् । सोमे चाव्यक्तत्वसिद्धिरेव ॥ ६ ॥

**(७)—पृथक्त्वनिवेशित्वात्* सङ्ख्यया कर्मभेदः स्यात् ॥ २० ॥**

'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति'[1] 'आज्यभागौ यजति'[2] इत्यादौ एकत्वातिरिक्तसङ्ख्यायाः स्वाश्रयप्रतियोगिकस्वाश्रयवृत्तिभेदव्याप्यत्वेन न

नाभ्याससिद्धिरिति चेन्न ; अल्पपात्रैर्ग्रहणस्यैवावदानवत् प्रदानपर्यन्तत्वात् , ग्रहचमसानामेव होमसम्बन्धश्रवणात् , स्थूलपात्रे एकीकरणे मानाभावाच्च न पात्रान्तरेण होमः सम्भवतीत्यभिप्रायात् ॥ **पशुविकार इति** ॥ अग्नीषोमीयपशुविकारे सवनीयादौ हृदयादिवाक्यविहितयागानुवादेनाग्नीषोमदेवताविधाने हृदयादियागानां वैकल्पिकत्वात् एकयागकरणेनैव पशोर्यागसाधनत्वसिद्धेस्तदन्यतमप्रकृतिकत्वात् न एकादशावदानगणप्राप्तिः पूर्वपक्षे प्रयोजनम् । सिद्धान्ते त्वग्नीषोमवाक्यस्य यागविधायकत्वात् पशोः साक्षाद्धविष्ट्वाभावेन हृदयादिद्वारा यागसाधनत्वस्य वक्तव्यतया "एकादश वै पशोरवदानानि" इति वाक्येन समुच्चयविधानादेकादशावदानगणप्राप्तिः प्रयोजनमित्यर्थः ॥ **अव्यक्तत्वसिद्धिरिति** ॥ ऐन्द्रवायवादिवाक्यानां यागविधित्वाभावे सोमवाक्यस्यैव तद्विधितया स्वार्थतया विनियुक्तदेवताराहित्यसत्त्वादव्यक्तत्वसिद्धिः । ततश्च उद्भिदादौ अव्यक्तत्वसादृश्यात् सौमिकविध्यन्तप्राप्तिः सिद्धान्तप्रयोजनम् । पूर्वपक्षे तु उपांशुयाजविध्यन्तप्राप्तिः प्रयोजनमित्यर्थः । सूत्रार्थस्तु, **पशुसोमयोः**—पशुसोमवाक्ययोः । **द्रव्यसंयोगोऽनर्थकः** स्यात् ; **न हि तस्य गुणार्थ**त्वसम्भव इति ॥

**पृथक्त्वनिवेशित्वात्सङ्ख्यया कर्मभेदः स्यात्** ॥ पूर्वत्र सोमवाक्ये यागैकत्ववत् अत्रापि सकृच्छ्रवणेनाभ्यासाभावात् कर्मैकत्वं स्यादित्युत्थानात् सङ्गतिरित्यभिप्रेत्य वृत्तिकारमतेनाधिकरणमारचयति—**आमनेति** ॥ "वैश्वदेवीं साङ्ग्रहिणीं निर्वपेत् ग्रामकामः" इति वाक्यविहितसाङ्ग्रहिणीष्ट्यां श्रूयत इत्यादिः ॥ **इत्यादाविति** ॥ आदिना "द्वादश द्वादशानि जुहोति, अभितः पुरोडाशमाहुतीर्जुहोति" इत्यादेः सङ्ग्रहः । द्वादशेत्यादिवाक्यस्य द्वादशसङ्घातान् प्रत्येकं द्वादशसङ्ख्यायुक्तान् जुहोतीत्यर्थः । ततश्च चतुश्चत्वारिंशदधिकशतं होमाः सम्पन्नाः । अत्र "अग्नाविष्णू" इत्याद्याः "कूयवाश्च मे" इत्यन्ताः पञ्चत्रिंशदधिकशतमन्त्राः "कूयवाश्च मे" इत्यस्यावृत्त्या शेषसङ्ख्यापूरणमिति बौधायनीयाः । "अभितः पुरोडाश" इति वाक्ये अभितः पदस्य देशपरत्वे कालपरत्वे वा आग्नेययागस्यैवोत्पत्तिवाक्यावगतानिविशमानकालद्वयादिरूपगुणादेव "अभितो वपां जुहोति" इत्यत्रेव भेदसम्भवेऽपि सङ्ख्याया अपि भेदकत्वे बाधकाभावादिदमुदाहृतमिति केचित् । वस्तुतस्तु, कालादेः प्रयोगान्वयिगुणत्वेन प्रयोगभेदकत्व-

* पृथक्त्वनिवेशात् इति पाठान्तरम् । १. तै. सं. १. ३. ९. २. तै. सं. २. ६. २.

**तावत्साक्षाद्भावनाभेदबोधकत्वम्; तस्या उक्तसङ्ख्याश्रयत्वाप्रतीतेः। नापि धात्वर्थभेदबोधकत्वम्; तस्य पूर्वप्रमितैकत्वसङ्ख्यावरुद्धत्वेन 'एकादश प्रयाजान् यजति'[1]**

सम्भवेऽपि कर्मभेदकत्वासम्भवात्। सङ्ख्याया एव भेदकत्वं वक्तव्यमिति तस्योदाहरणत्वे न कश्चिद्दोष इति ध्येयम्। "तिस्र आहुतीः" इत्यत्र तिस्र इति पदं आहुतीरिति बहुवचनस्य कपिञ्जलाधिकरणन्यायसिद्धार्थानुवादकम्; प्रत्ययार्थबहुत्वस्यैव भेदसाधकत्वेन विचार्यत्वात्। एतदर्थसूचनायैव "आज्यभागौ यजति" इत्युदाहरणान्तरं प्रदर्शितम्। इतिकरणेन विनियुक्तत्वात्त्रयाणां मन्त्राणां समुच्चयः। ननु "आमनमस्यामनस्य देवाः ये स जाताः कुमाराः समनसः ये महान्तः" इत्यादिरेको मन्त्रः। "आमनमस्यामनस्य देवा यास्त्रियः समनसः" इत्यादिर्द्वितीयः इति द्वयोरेवाम्नानात् कथं त्रित्वसङ्ख्योपात्ता इति चेन्न; प्रथममन्त्रे सजातकुमारपदयोरेकैकपदमात्रघटितपूर्वोत्तरभागानुषङ्गाभ्यां मन्त्रद्वयसत्त्वात् त्रित्वोपपत्तिरिति दिक्। अत्र किं कर्मैकत्वं, किं वा कर्मभेद इति सन्देहे पूर्वपक्षमाह—**एकत्वातिरिक्तेति**। द्वित्वादिसङ्ख्याया इत्यर्थः। सौत्रपृथक्त्वनिवेशित्वशब्दार्थमाह--**स्वाश्रयेति**॥ **स्वं**--द्वित्वादि। **तदाश्रयो**—घटादिः। **तत्प्रतियोगिकः**, द्वित्वाश्रयघटान्तरवृत्तिः यो **भेदः**, शुक्लघटभेदो नीलघटे इति तादृशभेदव्याप्यं द्वित्वादि दृष्टं लोके। प्रकृते तु त्रित्वादिसङ्ख्यया भावनाभेदो न सिध्यति। तस्याहुतिगतत्वेन प्रतीयमानतया भावनान्वयित्वाभावेन स्वाश्रयप्रतियोगिकस्वाश्रयवृत्तिभेदासम्भवादित्यर्थः। यद्यपि सर्वेषां पदार्थानां भावनान्वयस्यैव पूर्वमुक्तत्वात् प्रकृतेऽपि त्रित्वादिसङ्ख्याया भावनान्वयात् सङ्ख्याश्रयत्वाप्रतीतिर्नास्ति। तथापि प्राथमिकभावनान्वयबोधस्य सम्बन्धसामान्यविषयकत्वात् स्वाश्रयकरणत्वात्मकपरम्परासम्बन्धस्यैव द्वितीयबोधविषयत्वादाहुतिगतत्वेन सङ्ख्याप्रतीतेर्भावनायाः सङ्ख्याश्रयत्वाप्रतीतिरुपपद्यते। यद्वा सुबुपात्तसङ्ख्याव्यतिरिक्तार्थस्यैव भावनान्वयस्य पूर्वमुक्तत्वात् तस्याः सङ्ख्याश्रयत्वाप्रतीतेः सुतरां भावनाभेदकत्वं न सम्भवतीत्याशयः। **तस्याः**—भावनायाः। ननूक्तसङ्ख्याया भावनागतत्वाभावेन भावनाभेदकत्वाभावेऽप्याहुतिगतत्वेन प्रतीतेः आहुतिभेदात् शब्दान्तरन्यायेन भावनाभेदसिद्धिरस्त्वित्यत आह—**नापीति**॥ **पूर्वप्रमितेति**॥ वक्ष्यमाणरीत्यानुमितेत्यर्थः॥ **एकत्वेति**॥ ततश्च उत्पत्तिशिष्टत्वैकत्वसङ्ख्याकद्रव्ये आमनहोमादौ त्रित्वादीनामुत्पन्नशिष्टप्रायाणां निवेशासम्भवादित्यर्थः। ननु त्रित्वस्यानन्वये तिस्र इति पदमनन्वितार्थकं स्यादित्यत आह--**एकादशेति**॥ पशौ "एकादश प्रयाजान् यजति" इति वाक्यविहितैकादशत्वस्य प्रकृतिभूतदर्शपूर्णमासविहितप्रयाजगतपञ्चत्वविरोधेन निवेशासम्भवेनाभ्यासगतैकादशत्वसङ्ख्येति दशमे वक्ष्यते। तथा "अग्निहोत्रं जुहोति" इत्युत्पत्तिवाक्यगतार्थैकत्वसङ्ख्यावरुद्धे

१. तै. सं. ६. ३. ७.

'विराट्सम्पन्नमग्निहोत्रं जुहोति' इत्यादिवत् सङ्ख्यान्तरसम्बन्धानुपपत्तेरेतत्सङ्ख्याया अभ्यासविषयत्वप्रतीतेर्न कर्मान्तरत्वमिति प्राप्ते—

नात्र सङ्ख्यान्तरावरोधः। सा हि न तावत्तिङुपात्ता; तस्याः कर्तृवृत्तित्वात्। न चानवच्छिन्नस्यान्वयानुपपत्तेः प्रथमातिक्रमे च कारणाभावात् धात्वर्थे एकत्वसङ्ख्यानुमानमिति वाच्यम्; श्रुतसङ्ख्यासत्त्वे कारणाभावस्यासिद्धत्वेन अनुमानाप्रसरात्। अत एव प्रयाजैकादशत्वस्थले यत्र प्रकृतौ अनुमानप्रसरः तत्राभ्यासविषयत्वम्। न चैवं विराट्सम्पत्तिवाक्यादावपि उत्पत्तिवाक्ये एकत्वानुमानानापत्तिः; तादृशस्थले स्वोपजीव्योत्पत्तिवाक्यजन्यशाब्दबोधत्वनिर्वाहार्थं पूर्वप्रवृत्तस्यानुमानस्योत्तरकालीनेन

---

अग्निहोत्रहोमे "य एवं विद्वान् विराट्सम्पन्नमग्निहोत्रं जुहोति" इति वाक्यविहितदशत्वसङ्ख्याया निवेशासम्भवात् न कर्मभेदः। किन्तु अभ्याससम्पाद्येति वक्ष्यते। तद्वदत्रापि कर्मभेदे प्रमाणाभावात् न कर्मभेदः। किन्तु अभ्याससम्पाद्यैव सङ्ख्येति भावः। "द्वे आहवनीये जुहोति, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने" इति विहितहोमानां दशत्वात् "दशाक्षरा विराट्" इति विराट्छन्दसोऽपि दशत्वयुक्ताक्षरघटितत्वात् तत्सादृश्येनाग्निहोत्रे विराट्त्वं द्रष्टव्यमिति विधिरसायने स्पष्टम्। सिद्धान्तमाह—**नात्रेति**॥ उत्पत्तिशिष्टसङ्ख्यावरोधात् त्रित्वादिसङ्ख्या अभ्याससम्पाद्येत्युक्तं निरस्यति—**सा हीति**॥ उत्पत्तिवाक्यश्रुतसङ्ख्यावरोधो वा आक्षिप्तसङ्ख्यावरोधो वेति विकल्प्याद्यं दूषयति—**न तावदिति**॥ **तिङुपात्तेति**॥ तिङुपात्तसङ्ख्यायाः कर्त्रन्वयित्वेन भावनानन्वयित्वादित्यर्थः। द्वितीयं निरस्यति—**न चेति**॥ सङ्ख्याविहीनस्य पदार्थान्तरान्वयानुपपत्तेरित्यर्थः। ननु तर्हि या काचित्सङ्ख्या आक्षिप्यताम्; विनिगमनाविरहादित्यत आह—**प्रथमेति**॥ एकत्वस्य प्रथमोपस्थितत्वेन विनिगमनाविरहासिद्धेरित्यर्थः॥ **धात्वर्थेति**॥ एकत्वसङ्ख्यानुमानरूप आक्षेप इत्यर्थः। स्ववाक्ये सङ्ख्यावाचकपदसत्त्वेन सहश्रुतानां पदानां सम्भूयैकार्थप्रतिपादकत्वनियमेन त्रित्वसङ्ख्याविशिष्टा इति प्रतीत्यवश्यम्भावेन समभिव्याहाररूपकारणसत्त्वेनानुमानप्रतिबन्धात् नैकत्वावरोध इत्यर्थः। **अत एव**—कारणान्तराभावस्थले अनुमानप्रसरादेव। "एकादश प्रयाजान् यजति" इत्यादौ प्रकृतिश्रुतप्रयाजविधावनुमानप्रसरात् एकत्वमाक्षिप्यत इति तदवरोधात् एकादशत्वमभ्याससम्पाद्यमित्यर्थः। नन्वेवं विराट्सम्पत्तिवाक्येऽपि अग्निहोत्रवाक्ये एकत्वानुमानप्रतिबन्धकत्वापत्त्या एकत्वानुमानप्रवृत्तौ अभ्याससम्पाद्यत्वाभावेन कर्मभेदापत्तिरिति शङ्कते—**न चैवमिति**॥ प्रकृतवैषम्येण परिहरति—**तादृशस्थल इति**॥ विराट्सम्पत्तिस्थल इत्यर्थः॥ **स्वोपजीव्येति**॥ अग्निहोत्रवाक्यविहितहोमस्यैव विराट्सम्पत्तिवाक्येन फलसम्बन्धप्रतिपादनेन अग्निहोत्रवाक्यस्य शाब्दबोधजनकत्वावश्यम्भावेन तत्र

**सङ्ख्याश्रवणेन बाधायोगात् तस्याभ्यासविषयत्वप्रतीतेः । प्रकृते तु शाब्दबोधात्पूर्वमेव इतरपदार्थवत् सङ्ख्याया अपि प्रतीतेः युक्तः शाब्दबोधोत्तरकालीनानुमानप्रतिबन्ध इति कौस्तुभे विस्तरः । अतश्च सिद्धमुत्पत्तिवाक्यगतकर्मसमानाधिकरणविधेयसङ्ख्यायाः कर्मभेदबोधकत्वम् । भावनाभेदस्तु शब्दान्तरादेव । प्रयोजनं, वेदिप्रोक्षणमन्त्रवत् पूर्वपक्षे सकृन्मन्त्रः ; सिद्धान्ते तदावृत्तिरिति ॥**

---

सङ्ख्यानुमानाभावे अवच्छिन्नधात्वर्थप्रतीत्यसम्भवात् शाब्दबोध एव न स्यात् । अत आक्षिप्तसङ्ख्यापरिच्छिन्नाग्निहोत्रस्यैव विराट्सम्पत्तिवाक्येन फलसम्बन्धो वाच्यः । ततश्च विराट्सम्पत्तिवाक्यजन्यशाब्दबोधाधीनत्वात्, तस्य च शाब्दबोधस्यैकत्वबोधोत्तरकालीनत्वात् विराट्सम्पत्तिवाक्यश्रुतसङ्ख्याया अभ्यासविषयत्वमिति वैषम्यमित्यर्थः । प्रकृते अभ्याससम्पाद्यत्वाभावमुपपादयति—**प्रकृते त्विति** ॥ "तिस्र आहुतीः" इत्यत्रेत्यर्थः । सहश्रुतानां सम्भूयैकार्थप्रतिपादकत्वस्य न्यायसिद्धतया तिस्र इति पदान्विताहुतिविषयकशाब्दबोधस्य प्रथमत एवोत्पद्यमानत्वेनाक्षेपप्रतिबन्धः सम्भवतीत्यर्थः । नन्वेवं "समिधो यजति" इत्यादौ बहुवचनान्तसमिच्छब्दस्य होमनामधेयतया बहुत्वसङ्ख्यान्वयात् तत्राप्याक्षेपो न स्यादिति चेन्न ; तत्रत्यबहुवचनस्य देवतागतसङ्ख्यापरत्वेन बहुदेवताप्राप्तिनिमित्तकनामधेयतया धात्वर्थान्वयित्वाभावेन धात्वर्थपरिच्छेदाकाङ्क्षयाक्षेपोपपत्तेः । कर्मभेदकसङ्ख्यां विशिनष्टि—**उत्पत्तीति** ॥ उत्पन्नकर्मानुवादेन विधीयमानैकादशत्वादिसङ्ख्याया न कर्मभेदकत्वम् ; सङ्ख्याविधिवाक्ये कर्मोत्पत्तेरभावेन उत्पत्तिविधिगम्यभेदस्य तत्राप्रसक्तत्वात् । अतः प्रयाजैकादशत्वादीनां न भेदकत्वमिति सूचनाय—**उत्पत्तिवाक्यगतेति** ॥ उत्पत्तिवाक्यगताऽपि सङ्ख्या यदि कर्मसमानाधिकरणा न भवति—यथा "दर्भपिञ्जूलैः पावयति" इत्यादौ—तदा कर्मभेद इत्याशयेनाह—**कर्मसमानाधिकरणेति** ॥ समिद्यागभेदनिरासायाह—**विधेयेति** ॥ नन्वेवं धात्वर्थभेद एव सिद्धो न भावनाभेद इत्यत आह—**भावनाभेदस्त्विति** ॥ **शब्दान्तरादेवेति** ॥ सङ्ख्यया धात्वर्थभेदे सिद्धे विभिन्नधात्वर्थकत्वरूपशब्दान्तरादेव भावनाभेद इत्यर्थः । ननु सङ्ख्यास्थलेऽपि शब्दान्तराद्भावनाभेदाङ्गीकारे क्वापि सङ्ख्याया भेदकत्वं न स्यात् न चेष्टापत्तिः । भेदकप्रमाणानां षट्सङ्ख्याया आकरोक्ताया अपलापापत्तेरिति चेन्न ; सर्वेषां शब्दान्तरादीनां धात्वर्थभेद एव स्वरसात् । अत एवाभ्यासस्थलेऽपि धात्वर्थभेदादेव भावनाभेदः । न च यजिधातूपात्तयागत्वस्यैकत्वात् धात्वर्थभेदो नाभ्यासस्थल इति वाच्यम् ; विधेयतावच्छेदकतया यागत्वव्याप्यजात्यङ्गीकारेण तद्भेदोपपत्तेः । एवं संज्ञास्थलेऽपि संज्ञाभेदेन धात्वर्थभेदस्य स्पष्टत्वात् । एवं गुणस्थलेऽपि गुणजन्यतावच्छेदकवैजात्यभेदात् धात्वर्थभेदः । एवं प्रकरणान्तरनाम्नोरपि धात्वर्थभेदो द्रष्टव्यः । न चैवमग्निहोत्रस्यापि गुणजन्यतावच्छेदकवैजात्यभेदात् भावनाभेदापत्तिरिति वाच्यम् ; उत्पत्तिवाक्यश्रुतप्रमाणानामेव भेदकत्वस्यानुपदमेवोक्तत्वात् । तस्मात्

भाष्यकारेण तु 'सप्तदश प्राजापत्यान् पशूनालभते'[1] इति वाक्ये यागभेदाभेद-चिन्ता कृता। तत्र यद्यपि देवतात्वविशिष्टद्रव्यविशेषवाची तद्धितः यद्यपि च प्राजापत्यपद एवैकशेषः, तथाऽपि तदुत्तरविभक्त्युपात्तायाः सङ्ख्यायाः प्रकृत्यर्थविशेष्य

सर्वप्रमाणेष्वपि शब्दान्तराद्भेद एव भाष्यवार्तिकाभिप्रायः। धात्वर्थभेदकानि षट्प्रमाणानि धात्वर्थभेदद्वारा भावनाभेदं बोधयन्तीति नाकरोक्तिविरोध इति दिक्॥ **वेदीति**॥ "वेदिरसि बर्हिषे त्वा" इति मन्त्रेण वेदिप्रोक्षणस्य "त्रिर्वेदिं प्रोक्षति" इति वचनविहितस्य त्रिरभ्यासेऽपि कर्मभेदाभावात् यथा सकृन्मन्त्रः तथा प्रकृतेऽपि कर्मणः पूर्वपक्षे भेदाभावात् सकृन्मन्त्र इत्यर्थः। सिद्धान्ते कर्मभेदान्मन्त्रावृत्तिरित्यर्थः। एवं वृत्तिकारमते-नाधिकरणमुपवर्ण्य भाष्यकारमतेनाधिकरणमारचयति—**भाष्यकारेण त्विति**॥ अत्र वृत्तिकारमते अस्वरसमाह पार्थसारथिः। कर्मण्येव सङ्ख्याश्रवणात् पूर्वपक्ष्याशङ्का मन्देति मत्वा भाष्यकारः "सप्तदश प्राजापत्यान्" इत्युदाजहार। वाजपेये श्रूयते "सप्तदश प्राजापत्यान् पशूनालभते" इति। तत्र यागैकत्वं वा अनेकत्वं वेति सन्देहे पूर्वपक्षमाह—**तत्र यद्यपीति**॥ "सास्य देवता" इत्यनुशासनेन देवतात्वविशिष्ट-द्रव्यवाची तद्धितः प्राजापत्यपदस्यैवैकशेषः। ततश्च प्रजापतिदेवताविशिष्टपशुद्रव्यस्य बहुत्वान्वयाद्द्रव्यदेवतासम्बन्धानां बहुत्वात् यागभेद एव सिध्यतीति यागैकत्वपूर्वपक्षो न युक्त इति शङ्कार्थः॥ **तदुत्तरेति**॥ तद्धितोत्तरेत्यर्थः। प्रकृतेः देवताविशिष्टद्रव्यवाचित्वेऽपि विभक्त्युपात्तसङ्ख्याया न देवताविशिष्टद्रव्ये अन्वयः; प्रत्ययार्थस्य प्रकृतिजन्योपस्थिति-विशेष्य एवान्वय इति व्युत्पत्तेः। अन्यथा प्रकृत्यर्थे विशिष्टे प्रत्ययार्थसङ्ख्यान्वयाङ्गीकारे द्वौ त्रय इत्यादौ द्वित्वविशिष्टद्वित्वान्वयाङ्गीकारे द्वावित्यत्र चतुर्णां त्रय इत्यत्र नवानां प्रतीत्यापत्तेः। अतो विशेष्य एवान्वयाङ्गीकारात् बहुत्वान्विते तद्धितोपात्तद्रव्ये देवतान्वयात् द्रव्यदेवता-सम्बन्धैक्यादेको यागः सप्तदश पशुद्रव्यकः; न तु यागभेद इत्यर्थः। ननु तद्धितार्थस्य प्रथमं बहुत्वान्वयोऽनुपपन्नः। प्राजापत्यशब्दस्य तद्धितान्तस्य एकशेषे सति तस्यैव बहुष्वर्थेषु वृत्त्या प्राजापत्यशब्दार्थस्यैव बहुत्वान्वययोग्यतया प्रथमं तद्धितार्थस्य बहुत्वान्वयात्पूर्वमेव प्रजापत्यन्वयावश्यम्भावादिति चेन्न; प्रजापतिशब्दात् बहूनां ण्यप्रत्ययानामुत्पत्तौ तद्धित-मात्रस्याप्येकशेषसम्भवेन केवलतद्धितस्यापि बहुषु वृत्तेरविरुद्धत्वात् तद्धितार्थमात्रस्यापि बहु-त्वान्वयो युज्यत एव। "यञिञोश्च" इत्यत्र यञां बहुषु अञो बहुषु इत्यप्यर्थस्य स्वीकारेण गर्गा इत्यादौ गर्गशब्दादेकस्मात् बहूनां यञामुत्पत्तेस्तद्धितमात्रैकशेषस्य च सरूपसूत्रे "तद्राजस्य बहुषु तेनैवास्त्रियां" इति सूत्रे च भाष्यकैयटयोर्व्यवहृतत्वात्। तथा च

१. तै. ब्रा. १. ३. ४.

एवान्वयः ; न तु विशिष्टे । द्वौ त्रय इत्यादौ तथैव व्युत्पत्तेरिति तावदविवादम् । सोऽपि च न द्रव्ये देवतात्वान्वयोत्तरम् ; तथा सति देवतात्वप्रतिसम्बन्धिनि द्रव्ये साहित्यानवगमेन प्रत्येकपर्याप्तपशुत्वावच्छिन्न एव तत्सम्बन्धप्रतीतेरनेकत्वावगमात् द्रव्यदेवतासम्बन्धभेदेन यागाभेदकल्पनागौरवापत्तेः[२] । अतो लाघवात् देवतात्वान्वयात्पूर्वमेव सङ्ख्यान्वयः । तदा हि बहुत्वावच्छिन्न एवैकदेवतासम्बन्धादेकयागादिकल्पनाल्लाघ-

---

तद्धितमात्रस्य यदैकशेषस्तदा प्रथमं बहुत्वान्वयानन्तरं तद्धितार्थस्य प्रकृत्यन्वयः । यदि तद्धितान्तस्यैकशेषः तदा प्रथमं प्रकृत्यर्थान्वितस्य तद्धितार्थस्य पश्चात् बहुत्वान्वय इति पक्षद्वयसम्भवेन पूर्वपक्षः सम्भवतीत्यभिप्रायः । किं च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिः । प्रकृत्यर्थत्वं च प्रकृतिजन्यबोधविशेष्यत्वम् । ततश्च विभक्त्यर्थसङ्ख्यायाः प्रकृत्यर्थविशेष्य एवान्वयात् द्रव्ये बहुत्वान्वयोपपत्तिः । अत्र न्यायसुधाकाराः, केवलताद्धितस्य प्रातिपदिकत्वाभावेन तत्परतो विभक्त्यनुत्पत्तेः एकशेषायोगात् तत्समानार्थकस्य विग्रहवाक्यस्य प्रजापतिर्देवता अस्येत्यत्र सर्वनाम्न एवैकशेषेण एषामिति सिद्धौ ततः प्रजापतिर्देवता इत्यनेनान्वय इत्याहुः । ननु प्रजापतेः प्रकृतितो लाभेऽपि तद्गतदेवतात्वकारकस्य तद्धितैकाभिधेयतया एकप्रत्ययोपात्तयोः द्रव्यदेवतयोः परस्परान्विताभिधानमिति सिद्धान्तात् , वृत्त्यनन्तर्गतसर्वनामैकशेषस्य वृत्तिविषयपदार्थान्वये प्रयोजनाभावात् देवताविशिष्टद्रव्यवाचकतद्धितान्तप्राजापत्यपदैकशेषेण विशिष्टे बहुत्वान्वये सम्बन्धानामपि बहुत्वात् यागभेदः स्यादिति चेन्न; प्रकृत्यर्थविशेष्य एव प्रत्ययार्थसङ्ख्यान्वयस्योक्तत्वात् कृतैकशेषतद्धितार्थद्रव्यान्वयोपपत्तेरिति तात्पर्यात् । **सोऽपि**—विशेष्यान्वयोऽपि । **न द्रव्ये** तद्धितोपात्ते **देवतात्वान्वयोत्तरं** युक्तमिति शेषः । तथा सति दोषमाह—**तथा सतीति** ॥ द्रव्यदेवतयोः परस्परान्वयोत्तरं सङ्ख्यान्वय इत्यर्थः । देवतात्वप्रतिसम्बन्धिनि त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्य द्रव्यत्यागनिरूपिततया द्रव्यस्य देवतात्वप्रतिसम्बन्धित्वमिति भावः ॥ **साहित्यानवगमेनेति** ॥ तद्धितार्थस्यैकशेषाभावेन साहित्याप्रतीतेरित्यर्थः ॥ **प्रत्येकपर्याप्तपशुत्वावच्छिन्न एव, तत्सम्बन्धप्रतीतेः**—देवतासम्बन्धप्रतीतेः । **अनेकत्वावगमात्**—द्रव्यदेवतासम्बन्धानां बहुत्वावगमात् । **द्रव्यदेवतासम्बन्धभेदेन यागभेदकल्पनागौरवापत्तेः** द्रव्यदेवतान्वयोत्तरमेकशेषो युक्त इत्यर्थः । अन्ये तु द्रव्यदेवतयोः कारकत्वेन परस्परान्वयो नास्तीति जैमिन्यधिकरणे प्रतिपादनात् गर्गस्यापत्यानीत्यर्थे गर्गपदोत्तरं यञ्प्रत्ययत्रये कृते गार्ग्यायण इति स्थिते तद्धितान्तस्य प्रातिपदिकसंज्ञया सुबुत्पत्तौ प्रत्ययानामेकशेषस्य महाभाष्योक्तत्वात् सङ्ख्यान्वयोत्तरं देवतासम्बन्धोपपत्तेः एको याग इति लाघवमित्याहुः । ननु प्रकृतावग्नीषोमीयपशौ एकपशुनिष्ठमेकादशावदानं दृष्टम् । तच्च चोदकेन प्राप्तमिति

---

१. 'प्रत्येकवृत्ति' इति पाठान्तरम् ।　१. 'सम्बन्धभेदेनानेकयागादिकल्पनागौरवापत्तेः' इति पाठान्तरम् ।

वम्। न च प्रकृतिप्राप्तैकपशुनिष्पन्नैकादशावदानगणैकत्वानुरोधेन सङ्ख्याया देवतात्वान्वयोत्तरमन्वयः; पशुगतैकत्वस्य श्रुतसप्तदशत्वेन बाधात्, अवदानगणैकत्वस्य च प्रकृतावार्थिकत्वेन इहानतिदेशात्। अतो देवतासम्बन्धभेदे प्रमाणाभावात् न यागभेदः। अस्तु वा समानाभिधानश्रुत्या बहुत्वान्वयात्प्राक् देवतात्वान्वयेन सम्बन्धभेदः। तथापि लाघवाद्यागैकत्वम्। यथैव सिद्धान्ते अनेके यागाः सकृदनुष्ठानेनोपपद्यन्ते तथा मन्मतेऽप्येकेन यागेनानेके द्रव्यदेवतासम्बन्धा इति प्राप्ते—

समानाभिधानश्रुत्या देवतात्वस्यान्तरङ्गत्वात् सङ्ख्यान्वयात्पूर्वान्वयित्वम्।

---

प्रकृते यागैकत्वेऽवदानगणाधिक्यात् एकैकादशावदाने इतरेषां यागसाधनत्वानापत्तेः एकैकस्मात्पशोः एकैकावदानग्रहणेऽपि षट्पशूनां यागसाधनत्वानापत्तेरेकपशुनिष्पन्नत्वासम्भवाच्च कथं यागैकत्वमित्याशङ्कते—**न चेति** ॥ **देवतात्वान्वयोत्तरमिति** ॥ देवतान्वितद्रव्ये सङ्ख्यान्वये यागबहुत्वासिद्धेरित्याशयः। परिहरति—**पशुगतेति** ॥ "पशुना यजेत" इति वाक्यात् प्रकृतितः प्राप्तपश्वेकत्वस्य चोदकापेक्षया प्रबलप्रमाणेन प्रत्यक्षवचनेन विहितसप्तदशत्वेन बाधादित्यर्थः। नन्ववदानगणैकत्वबाधो अस्त्येवेत्यत आह—**अवदानगणैकत्वस्येति** ॥ "न चार्थिकं चोदकः प्रतिदिशति" इति न्यायेनावदानगणैकत्वस्य प्रकृतावविहितत्वेनातिदेशाभावादित्यर्थः ॥ **अत इति** ॥ द्रव्याणां बहुत्वेऽप्येकस्या एव देवताया बहुद्रव्यसम्बन्धात् चित्रेष्टिवन्न यागभेद इत्यर्थः। ननु तद्धितस्य देवताविशिष्टद्रव्ये एकैव शक्तिः। "सास्य देवता" इत्यनुशासनेन देवताविशिष्टद्रव्ये एकशक्तिबोधनात्। न च द्रव्यदेवतयोः तद्धितस्य भिन्नैव शक्तिरास्तामिति वाच्यम्; तथा सति सा चेदं चेति अनुशासनं स्यात्। न चेत्थमन्वशासत्। अतो देवताविशिष्टद्रव्ये एकशक्त्यङ्गीकारस्यावश्यकतया देवताविशिष्टद्रव्ये सङ्ख्यान्वयात् यागभेदो दुर्वार इत्यस्वरसं सूचयन् पक्षान्तरमाह—**अस्तु वेति** ॥ **लाघवादिति** ॥ एकयागकल्पनात् एकापूर्वकल्पनाच्च लाघवमित्यर्थः। ननु तथा सति कथं यागैकत्वपूर्वपक्ष इत्यत आह—**यथैवेति** ॥ **अनेक इति** ॥ "एकधा वपां जुहोति, एकदेवत्यं हि एते" इति वचनेन देवतोद्देशद्रव्यत्यागप्रक्षेपाणां सकृदनुष्ठानविधानेन सकृत्प्रयोगेणैवानेकयागसिद्धेः सिद्धान्ते स्वीकारवत् पूर्वपक्षेऽप्येकयागेनैव अनेकद्रव्यदेवतासम्बन्धा उपपद्यन्त इति यागैकत्वपूर्वपक्ष उपपद्यत इति भावः। सिद्धान्तमाह—**समानेति** ॥ एकतद्धितशक्त्येत्यर्थः। **देवतात्वस्य**--हविष्ट्वनिरूपकस्य ॥ **अन्तरङ्गत्वादिति** ॥ देवतात्वहविष्ट्वयोः कार्यकारणत्वयोरिव परस्परनिरूपितत्वेन एकज्ञानेऽन्याकाङ्क्षावश्यम्भावात्। तद्धितेन हविष्ट्वेनावगतस्य पशोः का देवता इत्याकाङ्क्षाया इव का मे सङ्ख्या इत्याकाङ्क्षाया नियमाभावात्। भावनान्वयप्रयुक्तविलम्बसहिष्णुत्वेऽपि तदितरान्वयकृतविलम्बसहिष्णुत्वा-

पशूनां प्रत्येकं स्वत्वाश्रयत्वेन स्वत्वध्वंसानुकूलव्यापारात्मकयागकरणत्वरूपहविष्ट्वस्य प्रत्येकवृत्तितया 'सूक्तहविषोः' इत्यादिस्मृत्यनुसारेण हविष्ट्वावच्छेदकपशुत्वावच्छेदेनैव देवतासम्बन्धौचित्याच्च । अतश्च बहुत्वानवच्छिन्नस्यैव प्रतिसम्बन्धित्वात् प्रतिसम्बन्धितावच्छेदकस्य प्रत्येकवृत्तित्वात्[1] प्रतिसम्बन्धिभेदप्रतीतेः तद्भेदेन सम्बन्धभेदसिद्धिः । न च सम्बन्धभेदेऽपि यागैकत्वम् ; सम्बन्धानामेकत्वानेकत्वाभ्यामुभयथाप्युपपत्तौ लाघवापेक्षया पश्वेकताप्रापिचोदकस्य शास्त्रतया बलवत्त्वेन नियामकत्वात् । अतः तदनुरोधेन सर्वत्र यागभेदो भावनाभेदश्चेति सिद्धम् । प्रयोजनं च यागैकत्वे एकपशुविस्मरणेऽपि तस्य जातत्वान्न पुनर्यागकरणम् । सिद्धान्ते तदिति ॥ ७ ॥

---

भावात् द्वयोः कारकयोः भावनान्वयोत्तरं परस्परान्वयः, ततः सङ्ख्यान्वय इत्यभिप्रायेणान्तरङ्गत्वादित्युक्तम् । नन्वेवं "वसन्ताय कपिञ्जलानालभेत" इत्यादौ देवताद्रव्ययोः पदभेदेन "परिपूर्णं पदं पदान्तरेणान्वेति" इति न्यायेन सङ्ख्यान्वयोत्तरमेव देवतान्वयो दुर्वार इत्यस्वरसादाह—**पशूनामिति** ॥ पशूनां हविष्ट्वं हि यागकरणत्वम् । यागश्च द्रव्यत्यागरूपः; त्यागश्च स्वस्वत्वध्वंसानुकूलमानसव्यापारः । तत्र स्वत्वस्य पशुषु प्रत्येकवृत्तितया तद्ध्वंसानुकूलव्यापारोऽपि प्रत्येकवृत्तीत्यभ्युपेयम् । ततश्च तत्तद्द्रव्यवृत्तिस्वत्वध्वंसानुकूलव्यापारात्मकयागनिरूपितं करणत्वं प्रत्येकवृत्तीति करणत्वभेदाद्यागभेदो दुर्वार इति भावः । अनुशासनानुसारेणापि यागभेदः सिध्यतीत्याह—**सूक्तहविषोरिति** ॥ हविष्ट्वावच्छेदेन देवतासम्बन्धनियमनात् हविष्ट्वावच्छेदकपशुत्वस्य प्रत्येकवृत्तितया प्रत्येकमेव देवतासम्बन्धो युक्त इत्यर्थः । यागभेदमुपपादयति—**अतश्चेति** ॥ **बहुत्वानवच्छिन्नस्यैव, प्रतिसम्बन्धित्वात्**—प्रत्येकमेव पशूनां देवतासम्बन्धित्वात् । **प्रतिसम्बन्धितावच्छेदकस्य**—पशुत्वादेः । **प्रत्येकवृत्तित्वात्**—प्रत्येकपर्याप्तत्वात् । प्रतिसम्बन्धिदेवतासम्बन्धिभेदात् सम्बन्धिभेदेन **सम्बन्धभेदसिद्धि**; ततश्च यागभेद इत्यर्थः । ननु सम्बन्धभेदेन यागभेदसिद्धावपि सिद्धान्त इव सकृदनुष्ठानेनानेकद्रव्यक एको भवत्वित्युक्तम् । अत आह—**न च सम्बन्धेति** ॥ परिहरति—**सम्बन्धानामिति** ॥ **एकत्वेति** ॥ द्रव्यदेवतासम्बन्धानां यागैकत्वानेकत्वाभ्यामुपपत्तावपि लाघवाद्यागैकत्वमुक्तम् । तच्च लौकिकप्रमाणत्वात् वैदिकचोदकाद्दुर्बलम् । ततश्चैकपशुनिष्पन्नैकादशावदानप्रापकचोदकाविरोधायानेकयागाः सिध्यन्तीत्यर्थः । उपसंहरति—**अत इति** ॥ अत्र अभ्यासस्थले आख्यातपुनःश्रुत्या कर्मभेदेऽपि सङ्ख्यास्थले न कर्मभेदः, पुनःश्रुत्यभावादिति अभ्यासप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात् अभ्यासानन्तरं सङ्ख्यैव सङ्गता । अभ्यासप्रतिष्ठायाः पशुसोमपर्यन्तत्वात् पशुसोमाधिकरणेनास्य न पृथक्सङ्गत्यपेक्षेति द्रष्टव्यम् । सूत्रार्थस्तु, एकाधिकायाः **सङ्ख्यायाः पृथक्त्वैकार्थसमवायतया कर्मभेदः स्यादिति** । प्रयोजनं मूल एव स्पष्टम् ॥

---

१. 'प्रत्येकवृत्तित्वेन' इति पाठान्तरम् ।

## (८)—संज्ञा चोत्पत्तिसंयोगात् ॥ २ ॥

ज्योतिष्टोमं प्रकृत्य 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इति श्रुतेषु ज्योतिरादिपदानां गुणविशेषे प्रसिद्ध्यभावात् द्योतनात्मकत्वेन प्रसिद्ध्युपपादने कर्मण्यपि तदापत्तेः । एतच्छब्देन च तद्विधाने वाक्यभेदा-

---

**संज्ञा चोत्पत्तिसंयोगात्** ॥ सङ्ख्यावत् संज्ञायाः प्रथक्त्वनिवेशित्वाभावात् न भेदकर्तेति पूर्वपक्षोत्थानात् प्रत्युदाहरणरूपा सङ्गतिः । नन्वध्यायाद्ये भाष्यकारेण सङ्ख्यानन्तरं गुणस्योद्देशात् सङ्ख्यागुणयोः कर्माङ्गत्वं नैरन्तर्यप्रयोजकमिति भाष्यकारतात्पर्यावगमात् कथं तादृशहेतूल्लङ्घनेन सूत्रकारेण सङ्ख्यानन्तरं संज्ञाव्युत्पादनं क्रियत इति चेन्न ; उद्देशक्रमस्यातन्त्रत्वाभिप्रायेणोपपत्तेः । भाष्यकारस्य क्रमे तात्पर्याभावात् । ननु तथापि कर्माङ्गत्वहेतोः भाष्यकारतात्पर्यविषयत्वाभावेऽपि वस्तुतस्तस्य हेतुत्वसम्भवात् किमिति न परिग्रहः । ततश्च कर्माङ्गभूतसङ्ख्याविचारानन्तरं कर्माङ्गत्वसाम्यात् गुणविचार एव कार्य इति चेन्न ; गुणादिनिमित्तभेदविचारस्य वहुविचारसापेक्षतया सूचीकटाहन्यायेन संज्ञाविचार एव प्रथमं कर्तव्यः । सङ्ख्यागुणयोः कर्माङ्गत्वसादृश्यस्य नानन्तर्यनिमित्तत्वमिति सूत्रकृदाशयात् । ज्योतिष्टोमं प्रकृत्य श्रूयते "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत" इति । तत्रैतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिसामानाधिकरण्येन यागनामत्वं सिद्धम् । तत्र संशयः । किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्देनानूद्य सहस्रदक्षिणाख्यो गुणो विधीयते, उत कर्मान्तराण्येवन्नामकानि सहस्रदक्षिणानि विधीयन्ते इति । तत्र प्रकरणात् एतच्छब्दस्य प्रकृतवाचित्वात् तत्सामानाधिकरण्याच्च ज्योतिरादीनां प्रकृतहानाप्रकृतकल्पनायोगाच्च पूर्वस्यैव गुणविधिरिति पूर्वपक्षे प्राप्ते सिद्धान्तमाह— **ज्योतिरादिपदानामिति** ॥ ज्योतिःशब्देन गुणविधिर्न सम्भवतीत्याह—**गुणविशेषेति** ॥ दध्यादिवत् गुणे प्रसिद्ध्यभावात् न ज्योतिःशब्दो गुणपर इत्यर्थः । ननु गुणे प्रसिद्ध्यभावेऽपि "द्युतेरसन्नादेश्च जः" इत्यौणादिकसन्प्रत्ययान्तस्य ज्योतिःपदस्य यौगिकत्वमस्त्वित्यतः तस्य गुणविध्यसाधकत्वेन परिहरति—**द्योतनेति** ॥ फलद्योतकत्वात् अखिलफलप्रकाशनाच्च कर्मस्वपि ज्योतिरादिपदप्रवृत्तिस्तुल्या । अतः उद्भिन्न्यायेन नामत्वमेव ज्योतिरादिपदानामित्यर्थः.। चित्रान्यायेनापि नामत्वमाह—**एतच्छब्देनेति** ॥ पूर्वनिर्दिष्टगुणस्य दक्षिणायाश्च विधाने वाक्यभेदापत्तेश्च नामत्वमित्यर्थः ॥ **वाक्यभेदादीति** ॥ आदिना तत्प्रख्यतद्व्यपदेशयोः परिग्रहः । सर्वफलकज्योतिष्टोमे आयुषोऽपि फलत्वेन प्राप्तत्वात् "अयुर्घृतं" इति तत्साधनेऽपि हेत्वलङ्काररीत्या आयुःपदप्रयोगदर्शनेन (आयुःपदे) यागनामत्वस्य तद्व्यपदेशाधिकरणोक्तरीत्या गोपदेऽपि नामत्व(स्य) सम्भवात् । अन्ये तु दक्षिणात्वेन गोः प्राप्तत्वात् तत्प्रख्यन्यायेन

द्यापत्तेस्तेषां नामत्वं तावदविवादम्। तच्च न प्रकृतस्य यागस्य ; ज्योतिष्टोमसंज्ञावरोधात्। संज्ञाकार्यस्य व्यवहारस्यैकेनैव सिद्धेरितरवैयर्थ्याच्च। न च विनिगमकाभावाद्विकल्पः ; अथशब्दस्य पूर्वाधिकारविच्छेदकस्य नियामकत्वात्। अत एव 'वसन्ते वसन्ते ज्योतिषा यजेत' इतिवत् नाख्याविकारत्वाशङ्का। तस्याविच्छिन्नेऽधिकारे समाम्नानेन तथाङ्गीकारात्। न चैवमधिकारविच्छेदाभावे उद्भिदादिसंज्ञातो भेदानापत्तिः। ज्योतिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावेन द्वयोरपि विकल्पो वैपरीत्यं वा किं

---

नामत्वमित्याहुः। न चैतेनेत्यत्र विशिष्टविधिस्वीकारात् न वाक्यभेद इति वाच्यम् ; तथापि ज्योतिरादिपदवाच्यगुणाभावादेव न गुणविधित्वम्। किं च प्रदेशान्तरे नामभिर्यागगणनपरवाक्ये "ज्योतिर्गौरायुः" इत्यादेः पाठान्तरत्वमेव ज्योतिरादिपदानामित्यर्थः। ननु "वसन्ते वसन्ते ज्योतिषा यजेत" इति वाक्ये ज्योतिष्टोमेऽपि ज्योतिःपदप्रयोगात् त्रिवृदादिस्तोमवाचिनस्तस्य तद्वति निरूढलक्षणादिना नीलादिपदवत् प्रयोगोपपत्तेः न यागान्तरसंज्ञा इत्याशङ्क्याह—**न प्रकृतस्येति** ॥ सोमयागस्येत्यर्थः ॥ **अवरोधादिति** ॥ तथा च तस्य ज्योतिष्टोमसंज्ञावरुद्धत्वेन संज्ञान्तरं निष्प्रयोजनमिति भावः। ननु द्वयोः संज्ञयोः विकल्पोऽस्त्वित्यत आह—**संज्ञाकार्यस्येति** ॥ व्यवहारस्यैकेनैव नाम्ना सिद्धेरितरनामवैयर्थ्यात्। यद्यपि संज्ञावरोधः पूर्वमुक्तः। तथापि द्वयोरप्युत्पन्नशिष्टत्वात् न तस्य प्राबल्यमिति भावः। अत एव विनिगमनाविरहं शङ्कते—**न चेति** ॥ **विकल्प इति** ॥ उभयोः साम्यादिति भावः। अथशब्देन पूर्वकर्मप्रकरणविच्छेदेन तन्नामत्वासम्भवादित्यर्थः। अयमभिप्रायः। काम्ये कर्मणां क्रमाभावात् "अथ जिह्वायाः अथ वक्षसः" इत्यादिवत् क्रमबोधकत्वासम्भवात् मङ्गलाद्यर्थान्तरस्यानुपयोगात् "अथ शब्दानुशासनं" "अथ योगानुशासनं" इत्यादाविव आरम्भार्थक एवाथशब्दः। ततश्चारब्धस्य पुनरारम्भायोगात् पूर्वकर्मप्रकरणविच्छेदेऽपूर्वकर्मान्तरारम्भं द्योतयतीति। ननु "सत्या, भीमः" इत्यादौ नामैकदेशेनापि कृत्स्ननामत्वं दृश्यते। सत्याशब्देन सत्यभामायाः, भीमपदेन भीमसेनस्य चोपस्थितेर्दर्शनात्। तथा प्रकृतेऽपि "वसन्ते वसन्ते ज्योतिषा यजेत" इतिवदाख्याविकारत्वं किं न स्यात् इत्यत आह—**अत एवेति** ॥ "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यत्र प्रकरणविच्छेदाभावात् नामैकदेशत्वरूपमाख्याविकारत्वमङ्गीकृतम्। प्रकृते अथशब्देन प्रकरणविच्छेदात् न प्रकृतयागनामत्वमित्यर्थः। नन्वेवमधिकारविच्छेदाभावात् उद्भिदादिसंज्ञया भेदो न स्यात्। किं च ज्योतिष्टोमसंज्ञाया उद्भित्संज्ञायाश्च विकल्पः स्यादिति शङ्कते—**न चेति** ॥ ज्योतिष्टोमसंज्ञायाः प्राबल्यं निरस्यति—**ज्योतिष्टोमेति** ॥ "सोमेन यजेत" इत्युत्पत्तिवाक्ये ज्योतिष्टोमसंज्ञायाः श्रवणाभावेन फलवाक्ये श्रवणस्य च

न स्यादिति वाच्यम्; सोमयागे क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसंज्ञावरुद्धे उद्भित्संज्ञायाः कथमपि निवेशानुपपत्तेः तस्याभेदकत्वात्। अत एव यत्र न किञ्चिन्नियामकमस्ति तत्र सङ्कल्पादौ संज्ञयोर्विकल्प एव। प्रकृते त्वथशब्देन विच्छेदात् भेदकत्वमेव संज्ञायाः। 'सहस्रदक्षिणेन यजेत' इत्येतावतैव प्रकृतयागानुवादेन गुणविध्युपपत्तौ एतच्छब्दान्तस्य ज्योतिरादिवाक्यस्य वैयर्थ्यप्रसङ्गाच्च। अतः द्योतनादियोगेन ज्योतिरादिसंज्ञं कर्मत्रयं सोमयागप्रकृतिकं तत्तद्वाक्यैरुत्पन्नं सहस्रदक्षिणाकं 'एतेन ऋद्धिकामो यजेत' इति वाक्येन फले विधीयत इति सिद्धः संज्ञया कर्मभेदः॥ ८॥

---

द्वयोः समत्वात् विकल्पापत्तिरित्यर्थः॥ **वैपरीत्यमिति**॥ उद्भित्संज्ञैव सोमयागस्यास्तु, ज्योतिष्टोमसंज्ञा तु विकृतेरिति वैपरीत्यमित्यर्थः। सोमद्रव्यकयागस्य ज्योतीरूपस्तोमकत्वरूपप्रवृत्तिनिमित्तस्य वाक्यशेषप्राप्तत्वेन उद्भिच्छब्दस्य गुणसाधारण्येन दुर्बलत्वात् ज्योतिष्टोमसंज्ञैव युक्तेति विनिगमकसत्त्वात् तदवरुद्धे नोद्भित्संज्ञानिवेश इति न विकल्पावकाश इत्यर्थः। **अत एव**—विनिगमकसत्त्वादेव, **यत्र न किञ्चित् नियामकं**—विनिगमकं नास्ति, **तत्र** संज्ञाविकल्पः। यथा "वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति" इत्यत्र वैश्वानरदेवताकग्रहाम्नानात् तद्देवताया यागेऽप्युपकारकत्वसम्भवात् वैश्वानरपदस्य नामत्वम्। तस्य च यागस्य गुणत्वसामान्येन द्वादशाहविध्यन्तप्राप्तौ तदपवादकं ज्योतिष्टोमपदं प्राथम्यगुणयोगात् प्रायणीयपदस्यापि नामत्वम्। तत्र द्वयोरपि नाम्नोर्विकल्प इत्यर्थः। प्रकृते "अथैष ज्योतिः" इत्यादौ अथशब्देन पूर्वोपस्थितकर्मवृत्तिप्रत्यभिज्ञाभावात् ज्योतिरादिशब्दानां भेदकत्वमेवेत्यर्थः। ननु तथापि ज्योतिरादिशब्दैरेव प्रकृतज्योतिष्टोममनूद्य सहस्रदक्षिणाख्यो गुणो विधीयतामित्यत आह— **सहस्रेति**॥ ज्योतिष्टोमानुवादेन सहस्रदक्षिणारूपगुणविधौ "सहस्रदक्षिणेन यजेत" इत्येतावदेव वाक्यमलम्। यजिना प्रकृतज्योतिष्टोमस्योपस्थितिसम्भवात् "अथैष ज्योतिः" इत्यनेन "एतेन" इत्यस्य प्रयोजनाभावात्। ततश्च तत्सार्थक्याय "एतेन सहस्रदक्षिणेन यजेत" इत्यस्य प्रत्येकं सम्बद्धत्वमङ्गीकृत्य ज्योतिरादिनामकसहस्रदक्षिणाककर्मान्तराण्येव विधीयन्ते। (तान्येव) "एतेन ऋद्धिकामो यजेत" इति फलवाक्येन फलोद्देशेन विधीयन्त इत्यर्थः। प्रयोजनं पूर्वपक्षे ऋद्धिफलमुद्दिश्य ज्योतिष्टोममेव ज्योतिरादिशब्देन विकल्पेन निर्दिश्य प्रयोगः कार्यः। तत्रैव सहस्रदक्षिणा दक्षिणा देया। सिद्धान्ते तु काम्यानि त्रीणि कर्माणि अनुष्ठेयानि॥ सूत्रार्थस्तु, **संज्ञा च** भेदिका पृथक्त्वनिवेशित्वात्। पूर्वपक्षेऽपि ज्योतिरादिसंज्ञा यद्यपि सन्ति तथाप्युत्पन्नकर्मगोचरत्वेन उत्पत्तिसंयोगाभावात् तासां भेदकत्वं नास्ति। सिद्धान्ते तु उत्पत्तिसंयोगात् भेदकत्वमिति तात्पर्येणोक्तं **उत्पत्तिसंयोगादिति**॥

## (९)—गुणश्चापूर्वसंयोगाद्वाक्ययोः समत्वात् ॥ २२ ॥

'वैश्वदेव्यामिक्षा' इत्यत्र द्रव्यदेवताविशिष्टे यागे विहिते तदनुवादेन 'वाजिभ्यो

---

**गुणश्चापूर्वसंयोगाद्वाक्ययोः समत्वात्** ॥ सत्यप्यसम्भववैयर्थ्याभ्यां संज्ञागुणयोरवान्तरभेदे अनिविशमानत्वसाम्यात् संज्ञाविचारानन्तरं गुणविचार इति प्रसङ्गसङ्गतिः । इदानीं गुणनिमित्तो भेदो विचार्यते । तथा हि, गुणो भेदकः कश्चिद्गुणः पूर्वविहितस्य कर्मणः प्रबलगुणावरुद्धत्वात् तत्र निवेशमलभमानः स्वात्मसङ्गतये विधेः कर्मान्तरोत्पत्तिपरतां कल्पयन् भेदको भवति । अनेकत्वाद्वा गुणानां प्राप्तकर्मानुवादेन विध्ययोगात् सर्वेषां विधिसिद्धये कर्मपरत्वं विधेः परिकल्प्यते । तत्रानेकगुणनिमित्तो भेदः पौर्णमास्यधिकरण एव प्रसङ्गान्निरूपितः । अधुना बलवद्विरोधनिमित्तोऽभिधीयते । चातुर्मास्येषु "वैश्वदेव्यामिक्षा" इति यागं विधाय श्रूयते "तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा" इति ; तथा "वाजिभ्यो वाजिनं" इति च । तत्र तप्तं पयो दध्यानयनेन संस्कुर्यादित्यर्थः । सेति तच्छब्देन पूर्ववाक्ये प्रधानतया निर्दिष्टं पयोऽनूद्य विश्वेदेवदेवतासम्बन्धविधानेन विश्वेदेवदेवताविशिष्टामिक्षाद्रव्यकयागं विधाय श्रूयते "वाजिभ्यो वाजिनं" इति । तत्रायं संशयः । किं पूर्वस्मिन् आमिक्षायागे वाजिनगुणो विधीयते, किं कर्मान्तरमिति । तत्र पूर्वः पक्षः । वाजिभ्य इति पदेन पूर्वविहितयागदेवता विश्वेदेवा अनूद्यन्ते । वाजं-अन्नं, आमिक्षारूपं येषामस्तीति व्युत्पत्तेः । ततश्च देवतात्वरूपेणोपस्थितानां विश्वेषां देवानामनुवादात्तत्सम्बन्धितया विधीयमानं वाजिनं पूर्वकर्मण्येव विहितं भवति । ततश्च सम्भवति गुणमात्रविधाने न प्रकृतहानाप्रकृतकल्पनापूर्वान्तरकल्पनविशिष्टविधिगौरवादिदोषाङ्गीकारो युक्तः । न चामिक्षायागस्य उत्पत्तिशिष्टामिक्षावरुद्धत्वात् न द्रव्यान्तरस्यापेक्षा योग्यता वास्तीति वाच्यम् ; उत्पत्तिवाक्ये विशिष्टकर्मविधावपि वाजिनवाक्ये द्रव्यं विहाय कर्मस्वरूपमात्रं निष्कृष्यानूद्य द्रव्यविधिसम्भवात् । तात्पर्यकृता ह्याकाङ्क्षा न वस्तुस्वरूपकृता । ततश्चापेक्षा योग्यता चास्यैव द्रव्यान्तरेण स्वरूपमात्रस्य सम्बन्धः । न च शब्दान्तरस्थलेऽपि भावनास्वरूपमात्रानुवादेन धात्वर्थान्तरविधिसम्भवात् तदधिकरणविरोध इति वाच्यम् ; प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः प्रकृत्यर्थं परित्यज्य प्रत्ययार्थमात्रानुवादायोगात् । इह तु कल्पितेन यजिना गुणानन्तरमपि कर्मावगन्तुं शक्यं, पदान्तरत्वात् । अतस्तदनुवादेन शक्यं गुणान्तरविधानम् । अतो नास्त्युत्पन्नशिष्टयोर्विरोधः । न चामिक्षाया देवतासम्बन्धस्य तद्धितश्रुत्युपात्तत्वात् वाक्यगम्यवाजिनसम्बन्धात् बलीयस्त्वमिति वाच्यम् ; उभयोरपि वाक्यगम्यत्वात् । न ह्यामिक्षाया देवतासम्बन्धो वैश्वदेवीपदेन केवलेनावगम्यते ; किन्तु अमिक्षापदैकवाक्यतया । तस्मादुभयोस्तुल्यबलत्वात् पूर्वस्मिन्नेव कर्मणि विकल्पः समुच्चयो वास्त्विति न कर्मभेद इति पूर्वपक्षे प्राप्ते, सिद्धान्तमाह—**वैश्व-**

**वाजिनं' इत्यत्र न गुणमात्रविधिः ; प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेः । न च वाजं अन्नं आमिक्षारूपं विद्यते येषामिति व्युत्पत्त्या विश्वान् देवान् तद्विशिष्टयागं वा उद्दिश्य वाजिनमात्रस्य समुच्चयेन विकल्पेन वा विधिरस्त्विति वाच्यम् ; वाजिशब्दस्य रूढत्वेन विश्वदेवानुवादानुपपत्तेः । उत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरस्य**

---

**देव्यामिक्षा इत्यत्रेति** ॥ **द्रव्येति** ॥ विश्वेदेवदेवत्ययामिक्षया यजेतेति तदर्थ इत्याह—**अत्रेति** ॥ विषयवाक्यमाह—**वाजिभ्य इति** ॥ वाजिपदं देवताविशेषवाचकम् । घनीभूते पयस्यामिक्षापदं वर्तते । अवशिष्टं जलं वाजिनमित्युच्यते । ततश्च वाजिदेवत्येन वाजिनेन यजेतेति तदर्थः । अत्र पूर्ववाक्यविहितामिक्षायागानुवादेन न गुणविधिः; प्राप्तकर्मानुवादेन द्रव्यदेवतारूपानेकगुणविधाने वाक्यभेदापत्तेरित्याह—**अनेकेति** ॥ ननु वाजिपदं देवतापरं, वाजं अन्नं आमिक्षारूपमेषामिति व्युत्पत्तेः । ततश्च देवतायाश्च प्राप्तत्वात् तदनुवादेन द्रव्यमात्रविधानात् न वाक्यभेद इति शङ्कते—**न चेति** ॥ ननु विश्वान् देवानुद्दिश्य वाजिनविधाने कल्पितयजिः व्यर्थः स्यात् इत्यस्वरसादाह—**तद्विशिष्टेति** ॥ देवताविशिष्टयागमनूद्य द्रव्यमात्रविधानमित्यर्थः । ननु तद्धितान्तर्गतसर्वनाम्नः सन्निहितद्रव्यपरत्वान्मारुतस्य ग्रहणं किं न स्यादिति चेन्न; तस्य "वैश्वदेव्यामिक्षा" इत्यनेन व्यवहितत्वादनुवादानुपपत्तेः वाजिपदस्य तात्पर्यग्राहकत्वेनामिक्षायागस्यैवानुवाद इति भावः । ननु देवताविशिष्टयागानुवादे विशिष्टोद्देशदोष इति चेन्न; यजिधातुनोद्देशनैकपदस्यैवोद्देश्यसमर्पणात् वाजिपदस्य तात्पर्यग्राहकत्वादिति भावः । नन्वामिक्षाविशिष्टयागोद्देशेन वाजिनविधिर्न युक्तः । अमिक्षाया उद्देश्यविशेषणत्वेनोद्देश्यतावच्छेदकस्य विशेषणतया "दण्डी प्रैषानन्वाह" इत्यादिवत् उद्देश्यतावच्छेदकत्वात् तस्य यागाविनाभावप्रतीत्या नैराकाङ्क्ष्यान्न वाजिनविधिः सम्भवतीत्यस्वरसादाह—**विकल्पेन वेति** ॥ न चोत्पत्त्युत्पन्नशिष्टयोर्न विकल्पो युक्त इति वाच्यम् ; वचनेन प्राप्तस्य विकल्पे बाधकाभावात् । परिहरति—**वाजिशब्दस्येति** ॥ वाजिशब्दस्य "वाजिवाहार्वगन्धर्व-" इत्यादिकोशेन अश्वे रूढत्वेन योगेन विश्वेदेवपरत्वासम्भवादित्यर्थः । रूढिज्ञानस्य यौगिकार्थबुद्धिप्रतिबन्ध(कत्वादिति भावः ।) ननु अश्वकर्णशब्दस्य वृक्षे रूढत्वेऽपि अश्वस्य कर्ण इति योगेन अश्वसम्बन्धिकर्णे प्रयोगदर्शनेन तद्वदेव अश्वे रूढस्यापि वाजिशब्दस्य विश्वेदेवे योगसम्भवात् गुणविधानमुपपद्यते इत्यस्वरसादाह—**उत्पत्तिशिष्टेति** ॥ "वैश्वदेव्यामिक्षा" इति वाक्येन द्रव्यदेवताविशिष्टयागविधानेन यागस्य द्रव्याकाङ्क्षाभावात् अन्यतराकाङ्क्षया अन्वयस्यागतिकविषयत्वान्न पूर्वयागे वाजिनविधिसम्भव इत्यर्थः । एतेनोत्पत्तिशिष्टगुणावरुद्धे गुणान्तरनिवेशासम्भवेन न वाजिनपदमामिक्षायागनामधेयम् । वाजं-आमिक्षारूपमन्नमस्मिन्निति व्युत्पत्त्या वाजिनपदेनामिक्षायागमनूद्य तदुद्देशेन वाजिदेवता-

निवेशानुपपत्तेश्च। एतेन आमिक्षानुनिष्पन्नवाजिनसम्बन्धप्राप्त्या वाजिनपदमामिक्षायागनामधेयमङ्गीकृत्य तदुद्देशेन वाजिदेवताविधिरित्यपास्तम्। उत्पत्तिशिष्टदेवतावरोधे देवतान्तरस्य निवेशानुपपत्तेः। किञ्च आमिक्षायाः पार्ष्ठिको देवतासम्बन्धः पदश्रुत्या, वाजिनस्य तु वाक्येनेति दौर्बल्यम्। तद्धितस्य हि देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः आमिक्षापदं च तात्पर्यग्राहकमिति प्राञ्चः। आमिक्षादौ द्रव्ये देवतात्वे च भिन्ना शक्तिः, निरूपकत्वं तु संसर्गः। देवतात्व एव वा शक्तिः, द्रव्ये लक्षणा। द्रव्यविशेष एव वा शक्तिः, देवतात्वे लक्षणा। द्रव्यसामान्य एव वा शक्तिः, आमिक्षापदेन विशेषनिर्णय इत्येते पक्षास्तु कौस्तुभ

---

विधिः। न च वाजिनप्राप्त्यभावात् कथं नामधेयत्वमिति वाच्यम्; "तप्ते पयसि दध्यानयति" इत्यनेन बोधितामिक्षानुनिष्पन्नत्वेन वाजिनस्य प्राप्तिसम्भवादिति निरस्तम्। उत्पत्तिशिष्टदेवतावरुद्धे देवतान्तरनिवेशासम्भवादित्यर्थः। ननु कल्प्यमानं यजेतेतिपदं लाघवादेकमेव कल्प्यते द्वयोरपि वाक्ययोरिति वाक्यद्वयाभावात् द्रव्यद्वयं देवताद्वयं च उत्पत्तिशिष्टमेवेत्यस्वरसादाह—**किं चेति**॥ यजतिकल्पकस्य द्रव्यदेवतासम्बन्धस्यामिक्षावाक्ये तद्धितश्रुतिमूलकत्वेन झटिति प्रवृत्तेः, वाजिनवाक्यसमभिव्याहाररूपवाक्येन द्रव्यदेवतासम्बन्धप्रतीत्या विलम्बितोपस्थितिकत्वात् सम्प्रदानत्वशक्तचतुर्थ्या लक्षणया देवतात्वबोधनेनापि विलम्बितत्वात् उभयोर्वाक्ययोः कालभेदेन विधिकल्पकत्वावश्यम्भावेन द्रव्यदेवतयोः प्रतिनियतनिर्देशेन तत्सम्बन्धद्वित्वावश्यम्भावेन यजेतेति पदद्वयकल्पनया यागभेदः सिध्यतीति भावः। तद्धितान्तपदस्यार्थविवरणे प्राचीनैरेकः पक्ष उक्तः, नवीनैश्चत्वारः पक्षा उक्ताः, इति पञ्चापि प्रदर्शयति—**तद्धितस्येत्यादिना**॥ अत्रायं निष्कर्षः। "सूक्तहविषोः" इत्यधिकृत्य पठितस्य "सास्य देवता" इति सूत्रस्य तस्या देवताया इदं हविरित्यर्थे तद्धितो भवतीति विपरिणामेनार्थो वर्णनीयः। द्रव्यविशेषवाचिपदसामानाधिकरण्येन तद्धितान्तपदार्थोपस्थितेर्द्रव्यविशेष्यकत्वावश्यकत्वात्। अत्र चाकृतिन्यायेन देवतात्वे हविष्ट्वे च भिन्ना शक्तिः। तदाश्रययोर्व्यक्तिन्यायेन लाभः। तथा लब्धयोश्च विशेषसमर्पके तद्धितप्रकृतिः तद्धितान्तसमानाधिकरणपदान्तरं च। सूत्रे अस्येति षष्ठ्या सम्बन्धोल्लेखस्तु एकयागसम्बन्धिहविषोऽन्ययागसम्बन्धिदेवतायाश्चाभिधाननिरासार्थः। न पुनस्तत्रापि शक्तिबोधनार्थः। संसर्गमर्यादयैव तद्बोधोपपत्तेः। सम्बन्धशक्तिवादिनामपि हविष्ट्वदेवतात्वावच्छिन्ननिरूपकताक एव हविर्देवतयोः सम्बन्धो बुध्यते। प्रकृतिसमभिव्याहारेण विश्वदेवत्वादेर्निरूपकतावच्छेदकत्वबोधो यद्यपि भवति। तथाऽप्यामिक्षात्वादेर्न वैश्वदेवपदमात्रेण तथोपस्थितिः। हविष्ट्वसूक्तत्वान्यतरमात्रेण द्रव्योपस्थित्या भावनाकरणाकाङ्क्षाया अनिवृत्तेः। आमिक्षादिविशेषपदैरेव तच्छान्तेर्वक्तव्यत्वात्। लोहितोष्णीषन्यायेन तद्धितान्तस्य देवताबोधनमात्रे पर्यवसानमिति॥

एवोपपादिताः । सर्वथा आमिक्षाद्रव्यस्य देवतासम्बन्धः पदश्रुत्येति सिद्धम् । किञ्च, विश्वेषां देवानां तद्धितेन देवतात्वं शक्त्योक्तम्; अनुशासनसत्त्वात् । वाजिनां तु सम्प्रदानत्ववाचिन्या चतुर्थ्या साम्प्रतिकलक्षणया । त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिगृहीतृत्वरूपसम्प्रदानत्वैकदेशत्वात् देवतात्वस्य । तस्याः प्रतिगृहीतृत्वाभावात् । निरुक्तधर्मसमनियतसम्प्रदानत्वव्याप्यदेवतात्वरूपाखण्डोपाधिस्वीकारे तु सुतराम्[1]। अतोऽपि दुर्बलत्वम् । तस्माद्वाजिनवाक्येऽपि गुणात् द्रव्यदेवताविशिष्टं कर्मान्तरमेव वाजिनप्रतिपत्त्यर्थतया आमिक्षायागाङ्गं[2] विधीयते । गुणस्य च पूर्वत्रानिविशमानत्वेन

---

**पदश्रुत्येति** ॥ समानपदश्रुत्येत्यर्थः । शक्तं पदमिति पक्षे प्रत्ययमात्रस्यापि पदत्वात् । न चामिक्षात्वावच्छिन्ननिरूपितत्वेन सम्बन्धबोधोऽपि वाक्यगम्य एवेति वाच्यम्; हविष्ट्वावच्छिन्ननिरूपितत्वेन सम्बन्धबोधेऽपि यागकल्पनसम्भवात् । अनुष्ठानकाल एव विशेषाकाङ्क्षोदयात् । तद्धितचतुर्थीबलादपि वाजिनवाक्ये यागान्तरविधिरित्याह—**किं चेति** ॥ विश्वेषां देवानां देवतात्वं तद्धितश्रुत्युक्तत्वात् शक्त्युपात्तमिति प्रबलम् । "सास्य देवता" इत्यनुशासनसत्त्वादित्यर्थः । वाजिनां तु वाजिभ्य इति चतुर्थ्या देवतात्वं लक्षणया बोधनीयम् । चतुर्थ्याः सम्प्रदानानुशिष्टाया देवताबोधनस्य शक्त्या वक्तुमशक्यत्वादित्यर्थः । लक्षणामेवोपपादयति—**त्यज्यमानेति** ॥ सम्प्रदानत्वं हि द्रव्योद्देश्यत्वविशिष्टप्रतिगृहीतृत्वम् । द्रव्योद्देश्यत्वमात्रस्य सम्प्रदानत्वरूपत्वे ब्राह्मणोद्देशेन त्यक्तस्य गवादेर्ब्राह्मणेन स्वीकाराभावेऽपि सम्प्रदानत्वापत्त्या विप्राय गां ददातीति प्रयोगापत्तिः । प्रतिगृहीतृत्वमात्रस्य सम्प्रदानत्वरूपत्वे यजमानेनादत्तग्रहणेऽपि सम्प्रदानत्वं स्यात् । अतो विशिष्टमुपात्तम् । तथा च "वाजिभ्यो वाजिनं" इत्यादौ चतुर्थ्या देवतात्वाभिधानं शक्त्या न सम्भवति । तस्याः प्रतिगृहीतृत्वाभावात् । अतस्तदेकदेशलक्षणया द्रव्योद्देश्यत्वमात्राभिधानादित्यर्थः । ननु देवतात्वमखण्डोपाधिः । तच्च निरुक्तद्रव्योद्देश्यत्वविशिष्टद्रव्यप्रतिगृहीतृत्वरूपधर्मसमनियतसम्प्रदानत्वव्याप्यमिति स्वीकारात् नैकदेशलक्षणेत्यत आह—**सुतरामिति** ॥ लक्षणेत्यनुषज्यते । निरुक्तदेवतात्वे चतुर्थ्या अनुशासनाभावादिति भावः । **अतोऽपि**—लक्षणापत्तेरपि । **दुर्बलत्वं,** वाजिनस्येति शेषः । उपसंहरति—**तस्मादिति** ॥ "वाजिभ्यो वाजिनं" इति वाक्ये वाजिदेवत्यवाजिनद्रव्यकयागान्तरविधिरेवाङ्गीकर्तव्य इत्यर्थः । नन्वेवं "अष्टौ हवींषि" इति लिङ्गदर्शनानुपपत्तिः । वाजिनयागेन सह नवत्वसम्पत्तेरित्यत आह—**वाजिनप्रतिपत्त्यर्थतयेति** ॥ तथा चामिक्षानुनिष्पन्नवाजिनप्रतिपत्तिरूपत्वेनामिक्षायागाङ्गं वाजिनयाग इति निरुक्तलिङ्गदर्शनस्य प्रधानविषयत्वान्नानुपपत्तिरिति भावः । सङ्ख्यासंज्ञयोर्गुणस्य वा कर्मभेदकतायां वैलक्षण्यमाह—**पूर्वत्रेति** ॥ स्ववाक्यातिरिक्तवाक्ये यागे गुणस्य भेदकतेत्यन्वयः । अनेन

---

१. सुतरां लक्षणेति पाठान्तरम् २. वाजिनप्रतिपत्त्यर्थं आमिक्षायागाङ्गत्वेनेति पाठान्तरम् ।

भेदकता । सा च विद्वद्वाक्ये[1] वाक्यभेदापत्त्या, क्वचित्प्रबलगुणावरोधात्, क्वचिदेकप्रसरताभङ्गादित्यनेकप्रकारिकेति ध्येयम् ॥ ९ ॥

## (१०)—अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २३ ॥

यत्र तु नोत्पत्तौ गुणश्रवणं—यथा, 'अग्निहोत्रं जुहोति'[2] इति—तत्र तदनुवादेन 'दध्ना जुहोति' 'पयसा जुहोति'[3] इत्यादिभिः सर्वैरेव गुणविधानं विकल्पेन; तत्र खलेकपोतन्यायेन सर्वेषामेव युगपत्प्रवृत्तेरेकावरुद्धत्वाभावादिति प्रत्युदाहरणमात्रम् ॥ १० ॥

---

सङ्ख्या स्ववाक्यविहितकर्मण एवानेकत्वबोधनद्वारा परस्परप्रतियोगिकभेदबोधिका । संज्ञागुणौ तु वाक्यान्तरविहितकर्मप्रतियोगिकभेदं बोधयत इति सूचितम् । अनिविशमानपदेन संज्ञा निविशमानाऽपि स्ववैयर्थ्यपरिहाराय पूर्वकर्मतो भिन्नमेव कर्म कल्पयति । गुणस्तु निवेशासम्भवादेव तथेति ज्ञापितम् । तदसम्भवे हेतुत्रयमाह—**सा चेति** ॥ **विद्वद्वाक्येति** ॥ विद्वद्वाक्यविहितयागोद्देशेन आग्नेयादिवाक्येषु द्रव्यदेवताद्यनेकगुणविधाने वाक्यभेदापत्त्या विशिष्टकर्मविधिः प्रथमः । वाजिनवाक्ये द्वितीयः । "वषट्कर्तुः प्रथमभक्षः" इत्यत्र वषट्कारे निमित्ते भक्षमुद्दिश्य प्राथम्यविधाने एकप्रसरताभङ्गापत्तेः भक्षान्तरविधिरिति तृतीय इत्यर्थः । सूत्रार्थस्तु, **अपूर्वसंयोगे** पूर्वकर्मनिवेशाभावे **गुणोऽपि** भेदकः । पूर्वकर्मनिवेशाभावश्च उभयोरपि **वाक्ययोः समत्वात्** । मिथोऽपेक्षत्वादनुवादकतया एकस्य वाक्यस्य इतरापेक्षायां पूर्वकर्मनिवेशः स्यात्; न त्विहेति भावः ॥

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत** ॥ इदं सूत्रं भाष्यकारेण द्वेधा व्याख्यातम् । तत्र "अग्निहोत्रं जुहोति" इति गुणरहिते कर्मणि उत्पन्ने दध्यादिवाक्यैर्गुणविधिः । न तु सगुणश्रुतामिक्षावाक्ये इति प्रथमं व्याख्यानम् । द्वितीयं तु "अग्निहोत्रं जुहोति" इति निर्गुणं कर्मोत्पन्नम् । तत्सन्निधौ "दध्ना जुहोति" "पयसा जुहोति" इत्यादयो बहवो गुणाः श्रूयन्ते । तेषां पूर्वकर्मनिवेशे सति विकल्पप्रसङ्गादन्यतरावरुद्धे चान्यस्य निवेशासम्भवात् पूर्ववदेव कर्मभेद इति पूर्वपक्षे, सिद्धान्तः सर्वेषां गुणवाक्यानामन्योन्यालोचनेनाग्निहोत्रवाक्यमात्रालोचनात् तत्र च निर्गुणस्य कर्मणोऽवगतस्य सर्वगुणयोग्यत्वात् पौर्वापर्याभावाच्च अन्यावरुद्धत्वाभावेन तत्रैव गुणमात्रविधानमिति विकल्प इति । अथ आघाराग्निहोत्राधिकरणे अगुणकर्मसन्निहितगुणश्रुतिः गुणविधानार्थेत्युक्तत्वात् व्यर्थमिदमधिकरणम् । न च यत्र निर्गुणसन्निधावेकमेव गुणवाक्यम् । तत्राघाराग्निहोत्राधिकरणं सावकाशम् । प्रकृते सगुणवाक्यानां बहुत्वात् सर्वेषामेककर्मान्वये विकल्पापत्त्या कर्मान्तरत्वशङ्कायां तन्निराकरणार्थत्वात् न

---

१. क्वचित् इति पाठान्तरम्. २. तै. ब्रा. १. ५. ९. ३. तै. सं. ५. ४. ९.

(११)—फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २४ ॥ अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २५ ॥

अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयात्' इति तत्र स एव होमो दधिविशिष्टः फलोद्देशेन विधीयते । न च प्राप्तकर्मानुवादेन गुणसम्बन्धः पलसम्बन्धश्चेति वाक्यभेदः । प्राप्तानामपि कर्मणां राजकर्तृकत्वविशिष्टानां फलोद्देशेन राजसूयवाक्ये विधानवदिहापि तदुपपत्तेरिति प्रथमः पक्षः । द्वितीयस्तु, नात्र राजसूयन्यायः ;

---

व्यर्थत्वमिति वाच्यम् ; निर्गुणसन्निधिश्रुतानां बहूनामपि सगुणवाक्यानां गुणमात्रविधायकत्वस्य तत्रैव वक्तव्यत्वात् । अन्यथा आघाराग्निहोत्रवाक्ययोः समुदायानुवादपूर्वपक्षस्य निराकरणासम्भवात् । तस्मात् द्वितीयव्याख्यानं न युक्तमिति चेत् ; सत्यम् । एतदभिप्रायेणैव प्रथमव्याख्यानमेव सम्यगिति मूले प्रत्युदाहरणमात्रमुपन्यस्तमिति द्रष्टव्यम् । अगुणकर्मसन्निधिश्रुतानां गुणानां सर्वेषामेव खलेकपोतन्यायेन युगपत् प्रवृत्तेर्योग्यतया च सर्वेषां विकल्पेन निवेशसम्भवान्न कर्मभेद इति प्रत्युदाहरणमित्यर्थः । सूत्रं स्पष्टम् ॥

**फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्** ॥ पूर्वापवादेन प्रत्यवस्थानात् सङ्गतिः ॥ **अग्निहोत्रमिति** ॥ अत्र इतीत्यनन्तरं श्रूयत इति शेषः । "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्राग्निहोत्रहोम एव दधिविशिष्टः फलाय विधीयते, उत गुणात् कर्मभेदः, अथ वा होममाश्रित्य गुण एव फलोद्देशेन विधीयत इति सन्दिह्य प्रथमपूर्वपक्षमाह—**स एवेति** ॥ अग्निहोत्रवाक्यविहितहोम एवेत्यर्थः । तत्र विशेषमाह—**दधिविशिष्ट इति** ॥ तथा च न होममात्रस्य फलोद्देशेन विधिः किन्तु दधिविशिष्टस्येत्यर्थः । स्वर्गवाक्येन स्वर्गोद्देशेनेव इन्द्रियकामवाक्येन इन्द्रियोद्देशेन दधिविशिष्टाग्निहोत्रहोमो विधीयत इति पर्यवसितार्थः ॥ **गुणसम्बन्ध इति** ॥ विधीयत इत्यनुषङ्गः ॥ **वाक्यभेद इति** ॥ न च "दध्ना जुहोति" इत्यनेन दध्नः प्राप्तत्वेन फलसम्बन्धमात्रविधानोपपत्तेः न वाक्यभेद इति वाच्यम् ; दध्यादेः पक्षप्राप्तत्वेन दध्ना इत्यस्य पाक्षिकानुवादत्वापत्तेः । अतः इन्द्रिये जननीये पयआदिनिरासफलकतया प्राप्तस्यापि दध्नः पुनर्विधानावश्यकतया वाक्यभेदो भवेदित्यर्थः ॥ **प्राप्तानामपीति** ॥ अनुमत्यादय इष्टयः मल्हादयः पशवः पवित्रादयः सोमयागा दर्वीहोमाश्च कालसंयुक्ताः देशसंयुक्ताश्च तत्तद्विधिवाक्यैः प्राप्ताः 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति वाक्ये यजिराजसूयपदाभ्यां समुदायीकृत्योपात्तानां तेषामेव राजकर्तृवैशिष्ट्येन फलोद्देशेन प्रयोगविधिरिति अवेष्ट्यधिकरणन्यायसुबोक्तरीत्या समाधत्ते प्राप्तानामिति ॥ द्वितीयपूर्वपक्षमाह—**द्वितीयस्त्विति** ॥ **नात्र**—नेन्द्रियकामवाक्ये, राज-

**कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वात् उत्पन्नस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तेः [1]दधिविशिष्टं च तत् फलोद्देशेन**

**सूयन्यायः** । प्रवर्तत इति शेषः । द्रव्यादयः फलादयः कर्त्रादयश्चोत्पत्तिविनियोगप्रयोगाणां परिचायका इति तत्तद्विधिष्वेव ते अन्वययोग्या इत्येकादशे वक्ष्यते । ततश्च राजसूयवाक्ये कर्मणां विनियोगविशिष्टप्रयोगविधानेन तद्योग्यगुणयोर्वैशिष्ट्यसम्भवेऽपि प्रकृते विनियोगमात्रविधिरूपे वाक्ये द्रव्यवैशिष्ट्यायोगात् तदपि पृथग्विधेयमेव । कर्मभेदपक्षे तु तदुत्पत्तेरपीहैव विधेयत्वात् उभयवैशिष्ट्यसम्भव इत्यभिप्रायेणाह—**दधिविशिष्टं चेति** ॥ अयमभिप्रायः । कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिरिति प्राञ्चः । तस्यायमर्थः । (यत्र) द्रव्यदेवतादिकर्मस्वरूपपरिचायकयुक्ते वाक्ये देवतोद्देशेन द्रव्यत्यागात्मकस्य यागस्य ज्ञानमुत्पद्यते तत्र विधेरज्ञातज्ञापकतयान्यत्राविहितः स याग इति ज्ञानमुत्पद्यते । ततश्चोत्पत्तिविधेस्तादृशज्ञान एव तात्पर्यात् तत्रैव पर्यवसानम् । ततश्च तद्वाक्ये ज्ञाते कर्मणि फलवाक्येन फलसम्बन्धबोधनात् इष्टसाधनताज्ञानमुत्पद्यते । धर्मिज्ञानं विना इष्टसाधनताज्ञानायोगात् । उत्पत्तिविधेरिष्टसाधनताज्ञानधर्मिज्ञानसम्पादकतयोपयोगः । विनियोगविधेरिष्टसाधनताज्ञानरूपतया प्रवृत्तावुपयोगः । तथा प्रवृत्तिं प्रति कृतिसाध्यताज्ञानस्यापि हेतुतया प्रयोगविधिना कर्तृकालदेशादिसम्बन्धबोधनद्वारा अस्मिन् काले अस्मिन् देशे अनेन कर्त्रा विधिप्रतिपादितफलोद्देशेन इदं कर्म कर्तव्यमिति बोधनात् कृतिसाध्यमिदं कर्मेति बोध उत्पद्यते । एवं च कर्मोत्पत्तिवाक्येनावगतस्य कर्मणः कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोधसम्भवात् 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र तत्तदुत्पत्तिवाक्यैः प्राप्तानामिष्टिपशुसोमयागानां फलोद्देशेन कर्तृविशिष्टप्रयोगविधिसम्भवात् विनियोगविशिष्टप्रयोगविधौ न कोऽपि दोषः । प्रकृते त्वग्निहोत्रस्य दधिरूपद्रव्यसम्बन्धेन उत्पत्तिविधानादनेनैवाज्ञातज्ञापनं क्रियते । ततश्च तत्र विधेर्व्यापारः कल्पनीयः । स च विध्येकसमधिगम्यः । न हि तस्मिन्नेवावसरे फलोद्देशेन विनियोगः सम्भवति ; तस्यामवस्थायां धर्मिज्ञानाभावात् । तथा च धर्मिज्ञानानन्तरं इष्टसाधनताबोधकविधेः प्रवृत्तत्वात्तद्वाक्यभेदो दुर्वार इति भावः । कर्मभेदमुपपादयति—**प्रकृत इति** ॥ दध्नः कर्मरूपत्वेन रूपस्योक्तरीत्या उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्तिमनूद्य दध्नः फलविशिष्टविनियोगविधिश्चेति परस्परवैशिष्ट्याभावात् वाक्यभेदः स्यात् । तस्मात् गुणात् कर्मभेद इत्यर्थः । दधिविशिष्टं कर्म फलोद्देशेन विधीयते । तथा च प्राप्तानुवादाभावात् विशिष्टस्य कर्मणः फलोद्देशेन विधानात् न वाक्यभेद इत्यर्थः । ननु

१. इदं वाक्यं, अतो गुणात्कर्मभेद इत्यस्यानन्तरं क्वचित् पुस्तकेषु दृश्यते ।

विधीयते । प्रकृते तु दध्न उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधिः फलविशिष्टविनियोगविधिश्चेति वैशिष्ट्याभावाद्वाक्यभेदः । अतो गुणात् कर्मभेदः । न दधिमात्रम्[1] । भावार्थाधिकरणविरोधापत्तेः । सत्यपि दर्वीहोमत्वे दधिद्रव्यकहोमत्वसादृश्याच्चाग्निहोत्रहोमातिदेशेन रूपलाभः ॥

सिद्धान्तस्तु, यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः संभवत्प्राप्तिः प्राप्तिरेव वा धात्वर्थस्यैव वा प्राप्तिः—यथा, 'सोमेन यजेत' 'उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति' 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति'[2] 'अग्निहोत्रं जुहोति'[3] इत्यादौ तत्र भावार्थाधिकरणन्यायः । यत्र तु गुणस्यैवाप्राप्तत्वाद्विधेयत्वं तत्र तस्यैव फलसम्बन्धः । न च दध्नोऽपि नियता प्राप्तिः, अपि तु विकल्पेन । अतः पाक्षि-

---

दधिमात्रस्य फलोद्देशेन विधानसम्भवात् किं विशिष्टविधानप्रयुक्तगौरवाङ्गीकारेणेत्यत आह—**न दधिमात्रमिति** ॥ समानपदोपात्तत्वेन धात्वर्थस्यैव करणत्वमिति भावार्थाधिकरणासिद्धत्वेन दध्नो विधाने तद्विरोधादित्यर्थः । नन्वष्टमे दर्वीहोमानां कृत्स्नविधानत्वात् प्रकृतिविशेषनिर्णायकप्रमाणाभावाच्चापूर्वत्वोक्तेरिन्द्रियकामवाक्ये कर्मान्तरविधाने द्रव्यसत्त्वेऽपि देवताभावादरूपत्वं स्यादित्यत आह—**सत्यपि चेति** ॥ कृत्स्नविधानसत्त्वे ह्यतिदेशाभावस्तत्रेति । प्रकृते देवताभावेन कृत्स्नविधानाभावात् अग्निहोत्रकर्मोद्देशेन मान्त्रवर्णिकरूपलाभः सम्भवतीति भावः । न च प्रकृतिविशेषनिर्णायकप्रमाणाभाव इति वाच्यम्; दधिद्रव्यकहोमत्वसादृश्येन चोदनालिङ्गातिदेशसम्भवादित्याह—**दधिद्रव्यकेति** ॥ पूर्वपक्षोक्तं धात्वर्थस्य भावार्थाधिकरणन्यायेन करणत्वं दूषयति—**यत्रेति** ॥ **धात्वर्थगुणयोरिति** ॥ "सोमेन यजेत" इत्यादौ सोमयागयोः प्रमाणान्तरेणाप्राप्तत्वादित्यर्थः । द्वितीयोदाहरणे पुरोडाशत्वान्यथानुपपत्त्या प्रथनस्य लिङ्गान्मन्त्रस्य प्राप्तिः । तृतीये प्रातिस्विकविधिभिरग्राणां प्रथमपाठात् अग्रतायाश्च प्राप्तिरिति विवेकः । "अग्निहोत्रं जुहोति" इत्यादौ धात्वर्थस्यैवाप्राप्तिरिति । **तत्र**-तादृशस्थले भावार्थाधिकरणन्यायेन धात्वर्थस्यैव करणत्वेन विधेयत्वमित्यर्थः ॥ **यत्रेति** ॥ 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादौ दधिरूपगुणस्याप्राप्तत्वेन विधेयत्वात् फलसम्बन्ध इत्यर्थः । ननु "दध्ना जुहोति" इति वाक्येन दध्नोऽपि प्राप्तत्वान्न विधेयत्वमित्याशङ्क्य निराकरोति—**न चेति** ॥ **नियतेति** ॥ "पयसा जुहोति" इत्यादिवाक्यैर्द्रव्यान्तरैः सह विकल्पेन प्राप्तत्वादित्यर्थः । ननु विकल्पप्राप्तिमात्रेणाप्यविधेयत्वं स्यादित्याशङ्क्याह—**पाक्षिकेति** ॥ तथा सति नित्यवच्छ्रुतस्य पाक्षिकानुवादत्वं स्यादित्यर्थः । नन्वेवमपि गुणस्य विधेयत्वात्

---

१. न दधि इति पाठान्तरम् । २. तै. सं. ७. २. ६. ३. तै. सं १. ९. ५.

कानुवादत्वपरिहाराय तस्यैव विधेयत्वात्फलसम्बन्धः । करणीभूतगुणसत्त्वेन वचनं विनापि फलोत्पत्तिसम्भवात् वचनवैयर्थ्यप्रसङ्गेन स्वकृतिसाध्यधात्वर्थस्य दृष्टविधया गुणसम्बन्धिन आश्रयस्यापेक्षायां प्रकरणात् होमस्याश्रयत्वलाभात् जुहोतिः साधुत्वार्थम्[1] । दधिकरणकभावनान्तरमेव तु फलोद्देशेन विधीयते । प्राप्तभावनानुवादेन उभयकरणे वाक्यभेदात् । केचित्तु, करणत्वविशिष्टं दधि दधिकरणत्वं वा तृतीयो-

धात्वर्थस्यापि विधाने वाक्यभेदः । विशिष्टविधानेऽपि गौरवमस्त्येवेत्यत आह—**करणीभूतेति** ॥ गुणस्य फलं प्रति करणत्वे दधिसत्तामात्रेण फलोत्पत्तिसम्भवेन वचनवैयर्थ्यापत्त्या सिद्धद्रव्यस्य व्यापारावेशं विना विधिविषयत्वासम्भवेन दध्नः श्रूयमाणकरणत्वनिर्वाहार्थमदृष्टविधया स्वोपकारकक्रियापेक्षानुरोधेन प्रकरणोपस्थितहोमस्यैव दधिकरणत्वनिर्वाहकस्य लाभात् जुहोतिरनुवाद इति । तस्मिन् पक्षे विशिष्टविधिकल्पनादिदोषप्रसक्तिरित्यर्थः ॥ **साधुत्वार्थमिति** ॥ प्रत्ययसाधुत्वार्थमित्यर्थः । 'न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्ययः' इति न्यायादिति भावः ॥ **भावनान्तरमिति** ॥ दध्नो होमनिर्वर्तनद्वारा फलजनकत्वेन दध्युपादानोत्तरकालिकव्यापारसमूहस्य होमोत्तरकालिकव्यापारसमूहापेक्षया विलक्षणतया करणभाव्यतावच्छेदकयोः भेदेन भावनाभेदस्यावश्यकत्वादिति भावः । भवदेवोक्तं भावनैक्यं निरस्यति--**प्राप्तेति** ॥ **उभयकरणे**—गुणफलोभयविधाने । ततश्च वाक्यभेदापादकगुणादेव कर्मभेदो भवतीति भावः । यद्यपि धात्वर्थस्येव भावनाया अपि प्रत्यभिज्ञास्ति । तथापि वाक्यभेदात् प्रत्यभिज्ञान्यथा नेयेत्याशयः । अत्रेदमवधेयम् । होमानुकूलव्यापारस्यैव भावनात्वात्तस्मिन्नेकस्मिन्नपि स्वर्गभावनात्वं तद्व्याप्यं इन्द्रियभावनात्वं चेति धर्मद्वयस्वीकारात् न भावनाभेदः । ततश्चैकैव भावना होमद्वारा स्वर्गं भावयेदिति बोधानन्तरं तमेव होमं दध्ना कृत्वा इन्द्रियं भावयेदिति विधाने कथमित्याकाङ्क्षानुदयात् आश्रयान्वयबोधेनैव तदाकाङ्क्षानिवृत्तेः संस्थाधिकरणन्यायेनाश्रयतो धर्मातिदेशसम्भवात् । अत एव काम्येन नित्यसिद्धिरिति सिद्धान्तोऽपि सङ्गच्छते । अन्यथा भावनाभेदे तादृशभावनान्तरस्य इतिकर्तव्यताकाङ्क्षया नित्यकरणकभावनेतिकर्तव्यतातिदेशापत्त्या प्रसङ्गसिद्ध्यनापत्तेः । धात्वर्थभेदं विना भावनाभेदासम्भवस्य शतशः प्रतिपादनाच्च । किं च वाक्यभेदस्थले भावनाभेदमङ्गीकृत्य वाक्यभेदस्य सर्वत्र परिहर्तुं शक्यत्वेन कुत्रापि वाक्यभेदस्य दोषत्वानापत्तिरिति द्रष्टव्यम् । प्राचीनपक्षं दूषयितुमुपन्यस्यति—**केचित्त्विति** ॥ तृतीयोपात्तकरणत्वविशिष्टं दधि फलोद्देशेन विधीयते । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादिति । ननु "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययः प्राधान्येन" इति न्यायात् प्रत्ययार्थस्यैव प्राधान्यात् तस्यैव फलभावनाकरणत्वेनान्वयो युक्त इत्यत इष्टापत्तिमाह—**दधिकरणत्वं वेति** ॥ तत्रोपप-

१. साधुत्वार्थमनुवाद इति पाठान्तरम् ।

पात्तं फलकरणत्वेन विधीयते। तृतीयार्थकरणत्वस्य निरूपकापेक्षैवाश्रयापेक्षा इत्याहुः। तन्न; यागवैषम्ये प्रमाणाभावात्। सर्वथा सिद्धो गुणफलसम्बन्धः ॥

प्रयोजनं, दध्नो न प्रतिनिधिरुल्लेखविशेषो वा सिद्धान्ते द्रष्टव्यम् ॥ ११ ॥

(१२)—समेषु कर्मयुक्तं स्यात् ॥ २६ ॥

'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यनेन विहितस्य अग्निष्टुद्यागस्य फलसम्बन्धे "तस्य

---

त्तिमाह—**तृतीयेति** ॥ दधिनिष्ठकरणत्वं हि किञ्चित्क्रियानिरूपितमवश्यं वाच्यम्। तस्य फलनिरूपितत्वेन फलजनकं दधीति वाक्यार्थो भवति। ततश्च सिद्धस्यैव दध्नः फलसाधनत्वप्रतीत्या क्रियां विना फलजनकत्वानुपपत्तेः क्रियापेक्षायां करणत्वेनोपस्थितहोमः आश्रयत्वेन सम्बध्यते। ततश्चाग्निहोत्रसाधनेन दध्ना फलं भावयेदिति वाक्यार्थः सम्पन्नः। तथाग्निहोत्रसाधनदधिकरणत्वेन फलं भावयेदिति पर्यवसितार्थ इत्यर्थः। तद्दूषयति—**तन्नेति** ॥ **यागवैषम्य इति** ॥ यागादिधात्वर्थस्य करणत्वेन विधाने यागकरणत्वस्यापि करणत्वेन विधानापत्तेरित्यर्थः। इदं तु तत्त्वम्। दधिकरणत्वस्य तृतीयोपात्तस्य करणत्वेनान्वयो युक्तः। यागकरणत्वस्याशाब्दत्वेन करणतासम्बन्धेन धात्वर्थान्वयस्य युक्तत्वात् होमाश्रितदधिकरणत्वस्य फलोद्देशेन विधिसम्भवात्। यागस्य व्यापाररूपत्वेनाश्रयापेक्षाविरहात् दधिनिष्ठकरणत्वस्य निरूपकाकाङ्क्षाया एव आश्रयाकाङ्क्षारूपत्वात् दधिकरणत्वस्य करणत्वेन नानुपपत्तिरिति। प्रयोजनं पूर्वपक्षे फलार्थहोमे सायंप्रातःकालनियमाभावात् अनियतकालत्वम्। सिद्धान्ते नियतकालेऽग्निहोत्र एव दधिप्रयोग इति प्राञ्चः। तत्र स्वयमपि प्रयोजनान्तरमाह—**प्रयोजनमिति** ॥ **न प्रतिनिधिरिति** ॥ षष्ठे काम्यस्य प्रतिनिधिनिरासादिति भावः। नन्वारम्भोत्तरं दध्यपचारे कृतस्य कर्मणोऽवश्यं समापनीयत्वात् दध्यन्तरालाभे प्रतिनिधिनापि समापनं युक्तमेव। आरम्भात्प्राक् दध्यभावे त्वनारम्भ एवेति प्रयोजनं प्रथमपूर्वपक्षेऽपि तुल्यमेवेत्यस्वरसादाह—**उल्लेखेति** ॥ तत्तत्फलार्थगुणेन सह तदाश्रयं स्वफलार्थं करिष्य इति सङ्कल्प इत्यर्थः। द्वितीयपूर्वपक्षे तत्तत्फलार्थं कर्मद्वयं तन्त्रेण करिष्ये इति सङ्कल्प इत्यर्थः। सूत्रार्थस्तु, भावार्थाधिकरणन्यायेन **फलस्य कर्मसम्बन्धित्वात्** प्रकृतेऽपि **फलश्रुतेः कर्मान्तरं स्यादिति** ॥

**समेषु कर्मयुक्तं स्यात्** ॥ **त्रिवृदित्यादि** ॥ अत्रापि पूर्ववत् गुणफलसम्बन्धोऽस्त्वित्युत्थानात् सङ्गतिः। **त्रिवृत्**—स्तोत्रीयानवकस्तोमकः। **अग्निष्टुत्**—अग्निष्टुन्नामकः। **अग्निष्टोमः**—अग्निष्टोमसंस्थाकः। अग्निष्टोमसाम 'यज्ञा यज्ञा वो' इत्याग्नेयीषु प्रकृतितः

वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत" इत्यनेन कृते पश्चादाम्नातं "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति। तत्रापि पूर्ववदाद्यः पूर्वपक्षः—राजसूयन्यायेन स्वकारकविशि-

---

प्राप्तम्। **तस्य वायव्यास्विति**। वायुदेवताप्रकाशकऋग्वचनेन प्राकृतऋगपवादः। त्रिवृदित्यनेनाविशेषात् सर्वस्तोत्रेषु त्रिवृत्त्वप्राप्तौ अग्निष्टोमसाम्नि एकविंशत्वं प्रतिप्रसूयते एकविंशमित्यनेनेति द्रष्टव्यम्। अत्र त्रिवृदित्यादि यजेतेत्यन्तमेकं वाक्यम्। न तु त्रिवृदित्याद्यग्निष्टोम इत्यन्तमेकं वाक्यम्, तस्य वायव्यास्विति चान्यद्वाक्यम्। तेन तस्य वायव्यास्वित्यादेः नोदाहरणत्वशङ्कावकाशः। ताण्डिब्राह्मणे निकायिषट्कमध्ये चतुष्टोमाग्निष्टुदुत्तरमिति शेषः। निकायित्वादेव पूर्वयागातिदिष्टस्य स्तोमचतुष्टयस्यापवादाय **त्रिवृदिति**। **अग्निष्टुदिति**॥ तत्प्रख्यन्यायेन नामधेयम्। "आग्नेयीषु स्तुवते" इति वचनेनास्याग्निदेवत्यमन्त्रसाध्यस्तोत्राङ्गत्वात्। "अग्नेः स्तुत्स्तोमसोमाः" इति षत्वादिकम्। राजन्यस्याप्येतत्संस्थाप्त्यर्थं अग्निष्टोमपदम्। तस्याग्निष्टोमसंस्थाविकारभूतात्यग्निष्टोमसंस्थाया एवान्यत्र विहितत्वात्। तथा च त्रिवृत्स्तोमकोऽग्निष्टुन्नामकोऽग्निष्टोमसंस्थाको यागः कर्तव्य इत्यर्थः॥ **तस्येति**॥ वायव्या ऋचः 'उपत्वाजामयो' गिरः' इत्याद्याः, तदधिकरणकवारवन्तीयसामकाग्निष्टोमस्तोत्रभावनासमानकालादिविशिष्टयागान्तरभावनाया इह फले विधानम्। ऋक्सामयोराधाराधेयभावस्तु पार्ष्ठिकान्वयलब्धोऽनूद्यते। एकविंशपदं त्रिवृत्त्वापवादकम्। सामान्यस्य विशेषेण बाधात्। अन्ये तूत्पत्तिशिष्टस्य त्रिवृत्त्वस्य प्रधानधर्मस्याङ्गधर्मेणोत्पन्नशिष्टेनैकविंशेन बाधायोगात् असम्भवन्निवेशगुणेन कर्मान्तरतापत्तेः त्रिवृदित्यादि यजेतेत्यन्तमेकं वाक्यमित्याहुः। क्त्वाप्रत्ययस्तु 'मुखं व्यादाय स्वपिति' 'नेत्रे निमील्य हसति' इत्यादिवत् समानकालपर एव। अग्निष्टोमस्तोत्रस्य सर्वान्त्यत्वात्। वस्तुतस्तु, सोमयागक्रियाया वितताया ग्रहग्रहणादिसमाप्तिपर्यन्तमेकत्वेन स्तोत्रात्पूर्वमारब्धत्वेऽपि तच्चरमावयवरूपाभ्यासस्य स्तोत्रोत्तरकालत्वात् क्त्वाप्रत्ययोपपत्तिः। 'मुखं व्यादाय स्वपिति' इत्यादावप्येषैव रीतिः। प्राप्तस्यापि कालादेः विशिष्टविधिलिप्सया अतिदेशात्प्रागेवास्य विधेः प्रवृत्तिः। प्रकृताधिकरणविषयीभूताग्निष्टुदन्तरं दर्शयति—**एतस्यैवेति**॥ अत्र संशयः। किं विनियोगविशिष्टप्रयोगविधिः, किं वा गुणफलसम्बन्धविधिः, किं वा सर्वगुणविशिष्टकर्मान्तरविधिरिति। तत्र प्रथमपूर्वपक्षमाह—**पूर्ववदिति**॥ तदेवोपपादयति—**राजसूयेति**॥ **रेवतीषु**—रेशब्दवतीषु "रेवतीर्नः सधमादः" इत्याद्यासु। तदधिकरणकवारवान्तीयसामकाग्निष्टोमस्तोत्रभावनासमान-

ष्टाग्निष्टोमस्तोत्रभावनाविशिष्टक्त्वाप्रत्ययार्थभूतकालकर्त्रादिरूपप्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसम्भवात् । इष्यते चायमेव प्रकारो वायव्यावाक्ये सिद्धान्तिनापि । द्वितयिस्तु—नात्र राजसूयन्यायः, प्रयोगस्याग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यावाक्येनैव प्राप्ततया तदनुवादेन रेवतीविधिः फलोद्देशेनाग्निष्टुद्विधिश्चेति वाक्यभेदात् । वायव्यावाक्ये ह्यतिदेशेन सम्भवत्प्राप्तिकमप्यग्निष्टोमस्तोत्रोत्तरकाल-

---

कालादिविशिष्टयागान्तरभावना फले विधीयत इत्यर्थः । वायव्यावाक्यवत् रेवतीवाक्येऽपि प्रकृतयागस्य प्रयोगमात्रविधिरस्त्विति शङ्कते—**पूर्ववदिति** ॥ पूर्वाधिकरण इवेत्यर्थः । प्रकृतप्रत्यभिज्ञानेन तस्यैव परामर्शयोग्यत्वादिति भावः । दधिवदुत्पत्त्यन्वयिगुणाभावेन यागान्तरोत्पत्तिविधानासम्भवादाह—**कालेति** ॥ कर्तृकालादिप्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिरेवायम् । अतो न कर्मभेद इत्यर्थः । ननु विनियोगविशिष्टप्रयोगविधानेऽपि गौरवमस्त्येवेत्यत आह—**इष्यते चेति** ॥ **अयमेव प्रकारः**—विनियोगविशिष्टप्रयोगविधिरूपः । वायव्यावाक्ये हि "त्रिवृदग्निष्टुदग्निष्टोमः' इति वाक्योत्पन्नस्याग्निष्टुत्संज्ञकयागस्य वायव्यावाक्येन वायव्याधिकरणकाग्निष्टोमस्तोत्रोत्तरकालविशिष्टयागविधानेन कालादिप्रयोगान्वयिगुणसत्त्वेन ब्रह्मवर्चसादिविनियोगान्वयिगुणसत्त्वेन च विनियोगविशिष्टप्रयोगविधेः सिद्धान्ते स्वीकारेण तद्वदेव रेवतीवाक्येऽपि विनियोगविशिष्टप्रयोगविधिरित्याद्यः पूर्वपक्ष इत्यर्थः । द्वितीयपूर्वपक्षमाह—**नात्रेति** ॥ वायव्यावाक्ये प्रयोगस्याग्निष्टोमस्तोत्रोत्तरकालस्य च वाक्यान्तरेणाप्राप्ततया राजसूयन्यायेन विनियोगविशिष्टप्रयोगविधिः स्वीकृतः । रेवतीवाक्ये त्वग्निष्टोमस्तोत्रोत्तरकालरूपप्रयोगान्वयिगुणस्य वायव्यावाक्येन प्राप्तत्वेन विधानासम्भवादप्राप्तरेवतीविधिः, पशुफलोद्देशेनाग्निष्टुद्विधिश्चेति, वाक्यभेदात् राजसूयन्यायेन न विनियोगविशिष्टप्रयोगविधिसम्भव इत्यर्थः । तदेव स्पष्टमुपपादयति—**वायव्यावाक्ये हीति** ॥ अतिदेशेन निकायित्वेन पूर्वकर्मप्रकृतिकत्वेन उत्तरकर्मणः, पूर्वकर्माणि च चोदकपरम्परया अग्निष्टोमस्तोत्रोत्तरकालत्वस्य यागे प्राप्तत्वेऽप्यस्य वचनस्यातिदेशात् पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विधानोपपत्तेर्विनियोगविशिष्टप्रयोगविधिः सम्भवतीत्यर्थः । न चैन्द्रवायवादिग्रहयागाभ्यासानां प्रातस्सवनप्रभृति पूर्वमेवानुष्ठितत्वात् अग्निष्टोमस्तोत्रपूर्वभावित्वमेव सोमयागस्येति नाग्निष्टोमोत्तरकालत्वं यागस्य सम्भवतीति वाच्यम्; अग्निष्टोमस्तोत्रानन्तरकर्तव्याग्निमारुतशस्त्रयाज्याकरणकयागस्यैवाग्निष्टोमशब्दमुख्यार्थत्वेन तस्य स्तोत्रोत्तरत्वसम्भवादितरेषां सोमयागानां छत्रिन्यायेनाग्निष्टोमशब्दोपपत्तेः प्रयोगोपपत्तेरित्याशयात् । रेवतीवाक्ये तद्वैषम्यमाह—

तादि ततः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विहितम् । न त्वत्र, वायव्यावाक्यस्यापि क्लृप्तत्वेन अस्य पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः । न च विनिगमनाविरहः, प्राथम्यस्यैव नियामकत्वात् । अतो लाघवात् गुण एव रेवत्येधिकरणकवारवन्तीयाख्यो रेवत्याख्य एव वा अप्राप्तत्वात् फलोद्देशेन विधीयते । "वारवन्तीयमग्निष्टोमसाम कार्यम्" इति प्राकरणिकवाक्येन वारवन्तीयस्यापि प्राप्तत्वात् । न चान्त्यपक्षे तृतीयान्तेनैतच्छब्देन विलिङ्ग-सङ्ख्यत्वात् रेवतीमात्रनिर्देशानुपपत्तिः । तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि दाक्षायणयज्ञन्यायेनाप्राप्तरेवतीमात्रस्यैव फलसम्बन्धोपपत्तेः । अतो दधिन्ययेन गुणफलसम्बन्ध एव युक्तः ॥

सिद्धान्तस्तु—नात्राश्रयलाभः शक्यते वक्तुम् । यागस्य तावत् प्रकृतत्वेऽपि

---

न त्वत्रेति ॥ रेवतीवाक्य इत्यर्थः । तदेवोपपादयति—वायव्यावाक्यस्येति ॥ क्लृप्त-त्वेनेति ॥ प्रत्यक्षवचनत्वेनेत्यर्थः । ततश्च वायव्यावाक्येऽतिदेशप्राप्ताग्निष्टोमानन्तर्य-स्यानुमानिकत्वेनानुमानात्पूर्वं वचनस्य प्रवृत्तिर्युक्ता । रेवतीवाक्ये तु उभयोः वायव्या-वाक्यरेवतीवाक्ययोः प्रत्यक्षश्रुतत्वादन्यतरस्य पूर्वप्रवृत्तिर्न सम्भवतीत्यर्थः । ननु प्रकृतयागस्य द्वौ प्रयोगौ 'खले कपोतन्यायेन' विधीयेते । वाचः क्रमवृत्ति-त्वेन दध्यादिवाक्येष्विव प्राथम्यस्याप्रयोजकत्वादित्यत आह—लाघवादिति ॥ विशिष्ट-विधिद्वयाङ्गीकारे गौरवादिति भावः । विधेयगुणमाह—रेवत्यधिकरणकवारवन्तीयाख्य इति ॥ ननु रेवतीवारवन्तीययोः कारकयोः क्त्वाप्रत्ययोक्तभावनायामन्वयोत्तरं पार्ष्ठिकबोधे रेवतीवैशिष्ट्येनोपस्थितं वारवन्तीयं साम यागमाश्रित्य फलाय विधीयते । रेवतीनां च तद्याज्यात्वेन साम्नः सामान्यविधिलब्धः एकश्रुतिबोधेन निवेशः । अग्निष्टोम-स्तोत्रस्यैव वा आश्रयत्वं प्राकरणिकवाक्येन समर्प्यते । तस्याग्निष्टुत्संबन्धोऽपि प्राप्त एव । तेन एतस्येति शब्दः अग्निष्टोमसामपदम्, क्त्वाप्रत्ययो, यजिश्चेति, सर्वमनुवादः प्राप्तत्वाविशेषात् । वारवन्तीयपदमपि अनुवादोऽस्त्विति न रेवत्याधारवारवन्तीयविधिसंभव इत्याह—रेवत्याख्य एव वेति ॥ प्राकरणिकेति ॥ चतुष्टोमाग्निष्टुत्सन्निधिपतितेनेत्यर्थः । अत एव भाष्यस्थवचनादिति पदं वार्तिककृतातिदेशिकं वचनं द्रष्टव्यमिति व्याख्यातम् ॥ विलिङ्गसङ्ख्यत्वात् ॥ स्त्रीलिङ्गबहुवचनयोरभावात् ॥ दाक्षायणेति ॥ दक्षयजमान-सम्बन्धिऋत्विक्कर्तृकप्रयोगावृत्तिमदिष्टिवचनस्यापि दाक्षायणेतिपदस्याप्राप्तावृत्तिमात्रपरस्य वक्ष्यमाणत्वादित्यर्थः ॥ सिद्धान्तस्त्विति ॥ रेवत्याख्यस्य वारवन्तीयसाम्नो वा गुणस्य यागः साक्षादाश्रयो वा, स्तोत्रद्वारा वा, स्तोत्रमेव वा, आश्रयाकाङ्क्षैव नास्ति वा

"अग्निष्टोमसाम" इत्यनुवादानुपपत्तेः न साक्षादाश्रयत्वम् । अग्निष्टोमस्तोत्रद्वारा [यागस्य] तस्यैव वा साक्षदाश्रयत्वं तु अग्निष्टोमस्तोत्रस्यातिदेशतः स्तोत्रान्तरसाधारण्येनोपस्थितत्वादनाशङ्क्यम् । न च वायव्यावाक्येन तस्यौपदेशिकी विशिष्योपस्थितिः । आतिदेशिकऋग्बाधसम्भवे औपदेशिकतद्बाधस्यान्याय्यत्वेन विशिष्योपस्थितेराश्रयत्वासाधकत्वात् । न च साम्नो गायतिधातुवाच्यत्वेन क्रियारूपत्वादाश्रयालाभेऽपि न क्षतिः । साम्नो ध्वन्यात्मकस्वरसमाहाररूपत्वेन वाक्यशेषादौ प्रसिद्धस्य सिद्धरूपतया धातुवाच्यत्वस्याश्रयो-

---

सत्त्वे वा तत्समर्पकं प्रकरणं वा, वाक्यान्तरं वा, प्रकृतवाक्यमेव वा इति सप्तधा विकल्प्य दूषयति—**यागस्येत्यादिना** ॥ यागमाश्रित्य फलोद्देशेन गुणविधाने यागानुवादः अग्निष्टोमसामेत्यनेन वाच्यः । स च न संभवति । अग्निष्टोमपदस्य यागे शक्त्याद्यभावेनानुवादकत्वासंभवादित्यर्थः । द्वितीयं निरस्यति---**अग्निष्टोमस्तोत्रद्वारेति** ॥ अग्निष्टोमपदेनाग्निष्टोमस्तोत्रविशिष्टं यागं लक्षयित्वा अग्निष्टोमस्तोत्रद्वारा यागस्याश्रयत्वमित्यर्थः । तृतीयं निरस्यति—**तस्यैव वेति** ॥ पक्षद्वयेऽपि यागस्यातिदेशतो अग्निष्टोमप्राप्तेर्वक्तव्यतया अतिदेशस्य स्तोत्रान्तरसाधारण्येन प्राप्ततया स्तोत्रान्तरयुक्तयागस्य स्तोत्रान्तरस्य वा आश्रयत्वं स्यादित्यर्थः । नन्वतिदेशप्राप्तिपक्षे तस्य स्तोत्रान्तरसाधारण्येऽपि वायव्यावाक्येनाग्निष्टोमस्तोत्रस्य विशिष्योपस्थितत्वादाश्रयत्वसंभव इत्यत आह—**न चेति** ॥ **आतिदेशिकेति** । अतिदेशप्राप्तऋग्बाधे हि उपदेशेनातिदेशबाधो भवति । वायव्यावाक्योपस्थितऋग्बाधस्तु न युक्तः । उभयोरपि तुल्यबलत्वेन विकल्पापत्तेरित्यर्थः । **अन्याय्यत्वेनेति** ॥ काम्येन नित्यबाधस्य युक्तत्वेऽप्यौपदेशिकबाधस्यानन्यगतिकतया[1] तदङ्गीकारस्यायुक्तत्वात् । कुर्यादित्येतावतैवेष्टसिद्धौ एतेन यजेत इत्यस्य क्त्वाप्रत्ययस्य द सुतरां व्यर्थत्वापत्तेश्चेति भावः । चतुर्थं निरस्यति—**न च साम्न इति** ॥ धातुवाच्यस्य व्यापाररूपत्वात् गायतिना साम्नोऽभिधानेन क्रियारूपत्वेनाश्रयाकाङ्क्षा नास्तीत्यर्थः । तथा चाश्रयसंबन्धं विनैव फलसंबन्धोपपत्तेः न वाक्यभेद इत्यर्थः ॥ **ध्वनीति** ॥ ऋक्साममन्त्रयोः वर्णध्वनिरूपावान्तरवैलक्षण्येऽपि शब्दात्मकद्रव्यत्वे न कोऽपि विवाच इति भावः । ननु तर्हि धातुवाच्यत्वानुपपत्तिरित्यत आह—**धातुवाच्यस्येति** ॥ धातुवाच्यत्वेऽपि सिद्धरूपत्वमङ्गीकर्तव्यमित्यर्थः । सिद्धरूपत्वानङ्गीकारे बाधकमाह—**अन्यथेति** ॥ सौभरस्य सिद्धरूपत्वाभावेन स्तोत्राश्रयत्वानुपपत्तिः स्यादित्यर्थः । दोषा-

---

१. अन्यगतिकतयेति पाठः साधीयान्.

जकत्वात्। अन्यथा—सौभरस्यापि स्तोत्राश्रयत्वानुपपत्तेः, वारवन्तीयसाम्न आश्रयानपेक्षणे "अग्निष्टोमसाम" इत्याद्यनुवादानुपपत्तेश्च। अतः साम्न आश्रयसापेक्षत्वान्न तावत्प्रकरणेनाश्रयलाभः। न च "वारवन्तीयमाग्निष्टोमसामकार्यम्" इति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वानभिधानात् आश्रयसमर्पणमिति वाच्यम्। साम्नो गुणत्वपक्षे तल्लाभोपपत्तावपि रेवतीमात्रस्य गुणत्वे तदयोगात्। साम्नो गुणत्वं तु विधेरप्राप्तरेवतीमात्रसङ्क्रमादेवासम्भवि। फलपदाभावे हि विधिर्यद्विषये अप्राप्ततया व्याप्रियते तस्यैव प्रयोजनाकाङ्क्षया फलसम्बन्धः यथा—गोदोहनादेः। तदत्र पशुपदाभावे वारवन्तीयस्य प्राकरणिकवाक्येनैव प्राप्तत्वात् विधिरप्राप्तरेवतमात्रविषयः सम्पद्यत इति तस्यैव फलसम्बन्धो वाच्यः। न चास्याश्रयः केनापि प्रकारेण लब्धुं शक्यः। न च प्रकारान्तरेणालाभेऽपि अनेनैव वाक्येन आश्रयविशिष्टगुणविधानात् आश्रयगुणोभयविशिष्टभावनाविधानाद्वा तल्लाभोपपत्तिः। क्लृप्त-

---

न्तरमाह—**वारवन्तीयेति**॥ क्रियारूपत्वेनाश्रयसापेक्षत्वाभावे अग्निष्टोमसामपदानुवादो नोपपद्यते। ततश्च तत्पदवैयर्थ्यापत्तेर्न साम्नः क्रियारूपत्वमित्यर्थः। वारवन्तीयसाम्नः आश्रयसापेक्षत्वात् न प्रकरणेनाश्रयप्राप्तिरित्यर्थः। पञ्चमं निरस्यति—**न चेति**॥ वारवन्तीयमग्निष्टोमसाम कार्यमिति वाक्येनाश्रयसमर्पणमित्यग्रेणान्वयः। ननु तद्वाक्येन वारवन्तीयस्य प्रकृतयागाङ्गत्वबोधनात् नाश्रयसमर्पकत्वमिति शङ्कां निरस्यति—**गौरवभियेति**॥ प्रवर्तनाविषयीभूतप्रवृत्तिनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकाक्रियात्वरूपाश्रयत्वमपेक्ष्य तादृशप्रकारतानिरूपितप्रकारान्तरावच्छेदकत्वरूपाङ्गत्वस्य गुरुत्वादित्यर्थः॥ **साम्नो विधानपक्षे तल्लाभोपपत्तावपीति**॥ फलोद्देशेन वारवन्तीयसामविधानपक्षे उक्तरीत्या आश्रयलाभोपपत्तावपीत्यर्थः। चतुष्टोमाग्निष्टुदङ्गाग्निष्टोमस्तोत्रे वारवन्तीयस्याङ्गत्वेन विधायकमेतद्वचनम्। अतिदेशात् त्रिवृदग्निष्टुति वायव्याकरणकत्वेनाग्निष्टोमस्तोत्राङ्गत्वेन वारवन्तीयस्य प्राप्तिरिति स्थितिः। तस्य च वाक्यस्यैतत्प्रकरणे समाम्नानमाश्रयसमर्पकत्वं चासङ्गतमित्यर्थः। ननु तर्हि साम्न एव गुणत्वमस्त्विति शङ्कते—**साम्न इति**॥ "अप्राप्ते शास्त्रमर्थवत्" इति न्यायेन विधेः रेवतीमात्रविधेरित्यर्थपर्यवसानादित्यर्थः। तदाह—**फलपदाभाव इति**॥ 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यत्र पशुकामपदाभावे गोदोहनस्याप्राप्ततयाविधेस्तद्विषयतया फलपदसमभिव्याहारे तस्यैव गोदोहनस्य फलोद्देशेन विधानं, तद्वत् प्रकृतेऽपि पशुपदाभावे रेवतीविषय एव विधिव्यापारः। तासामप्राप्तत्वात्, पशुपदसमभिव्याहारे तासामेव फलसम्बन्धो युक्तः। तासां चाश्रयालाभात् फले विधानं न सम्भवतीति भावः। नन्वनेनैव

प्रयोजनत्वात् लाघवेनाश्रयतासम्बन्धेनैव वैशिष्ट्याङ्गीकाराच्च न गुणाङ्गतापत्तिरिति वाच्यम् । आश्रयस्य गुणान्वयाव्युत्पत्तेः । कर्मत्वातिरिक्तस्याश्रयत्वस्य दुर्वचत्वेन भावनायाः फलाश्रयरूपोभयकर्मत्वाङ्गीकारे एककर्मकत्वभङ्गापत्तेश्च । न च कृत्वा-शब्दोक्तायामाश्रयस्याग्निष्टोमस्तोत्रस्य कर्मत्वात् तदुत्तरकालताविशिष्टगुणभावनायाः आख्यातोपात्तायाः पशुकर्मकत्वान्नैकस्या भावनाया द्विकर्मकत्वापत्तिरिति वाच्यम् । गुणभावनाया अवच्छेदकीभूतधात्वर्थापेक्षायां यागस्यावच्छेदकत्वाङ्गीकारे रेवतीनां यागकरणत्वापत्त्या स्तोत्रं प्रति करणत्वानापत्तेः । स्तोत्रस्यैवावच्छेदकत्वाङ्गीकारे तु

---

वाक्येनाश्रयलाभः किं न स्यात् इति शङ्कते––न चेति ॥ अनेनैव वाक्येन– एतस्यैव रेवतीषु इति वाक्येन । आश्रयविशिष्टगुणविधानात् वारवन्तीयविशिष्टरेवतीनां फलोद्देशेन विधानात् । आश्रयगुणोभयविशिष्टभावनाविधानादिति ॥ अनेन पूर्वप्रकृतभावनोद्देशेन उभयविधाने वाक्यभेदः स्यात् । उभयविशिष्टभावनाविधाने सोऽपि दोषो नास्तीति सूचितम् ॥ क्लृप्तेति ॥ आश्रयस्यापि भावनाप्राधान्येन तस्यामे-वान्वयस्य वक्तव्यत्वादाह––आश्रयस्येति ॥ आश्रयाश्रयिभावेन पार्ष्ठिकबोधसम्भवेन प्राथमिकभावनान्वये इष्टापत्तावाह––कर्मत्वेति ॥ आश्रयस्य भावनायां करणत्वे-नान्वये तस्यैव भावार्थाधिकरणन्यायेन फलजनकत्वापत्तिः । इतिकर्तव्यतान्वये गुणाङ्गत्वापत्तिः । परिशेषात्कर्मत्वेनान्वये फलस्यापि कर्मत्वात् वाक्यभेदापत्तिरि-त्यर्थः ॥ गुणान्वयाव्युत्पत्तेरिति ॥ आश्रयस्य गुणकरणत्वनिर्वाहमात्रप्रयोजनकत्वेन (दध्यनुरागमात्रस्य गुणे अपेक्षितत्वेन तस्य?) कर्मत्वाङ्गीकारे द्विकर्मकत्वापत्तिरिति भावः । एककर्मनिष्ठोद्देश्यताकत्वप्रकारकभावनाविशेष्यकबोधस्यान्यनिष्ठोद्देश्यताकत्वप्रका-रकबोधं प्रति प्रतिबन्धकत्वादिति पर्यवसितार्थः । ननु भावनाया न द्विकर्मकत्व-प्रसक्तिः ; एकस्या भावनायाः कर्मद्वयान्वयानङ्गीकारात् । क्त्वाप्रत्ययेनैकाभावना अभिधीयते । आख्यातेन चैका । तथा च क्त्वाप्रत्ययोक्तभावनायामाश्रयस्याग्निष्टोम-स्तोत्रस्य कर्मत्वम् । तदुत्तरताविशिष्टाख्यातोपात्तगुणभावनायाः पशुकर्मकत्वमित्येकस्यां कर्मद्वयाभावान्नैककर्मकत्वभङ्ग इत्याशङ्कते––न चेति ॥ गुणभावनायां धात्वर्थस्य यागस्यावच्छेदकत्वम्, उत स्तोत्रस्येति विकल्प्य नाद्य इत्याह––यागस्येति ॥ याग-माश्रित्य रेवतीविधाने रेवतीनां यागकरणत्वमेव स्यात् । यत्र गुणः कारकतां प्रतिपद्यते स आश्रय इति सिद्धान्तात् । ततश्च रेवतीनां यागकरणत्वापत्त्या स्तोत्र-करणत्वं न स्यादित्यर्थः । द्वितीयं निरस्यति––स्तोत्रस्येति ॥ स्तोत्रमाश्रित्य फलो-द्देशेन रेवतीविधानेन यजिधातोः स्तुतिलक्षकत्वापत्त्या स्तोत्रं कृत्वा स्तुवीतेति पर्य-

धात्वर्थद्वयावच्छिन्नभावनाद्वयाभावात् क्त्वाप्रत्ययानुपपत्तिः । न च रेवतीविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालताविशिष्टरेवतीकरणकयागाश्रयकभावनैव फलोद्देशेन विधीयतामिति वाच्यम् । आख्यातोपात्तभावनाया द्विकर्मकत्वापत्तेस्तदवस्थत्वात् । न च प्रकरणाद्यागस्य आश्रयत्वोपपत्तेः न द्विकर्मकत्वम् । तथात्वेऽपि तृतीयान्तैतच्छब्दस्य धातुपारार्थ्यभयेन यागपरामर्शित्वस्यैवोपपत्तौ रेवत्यादिपरामर्शकत्व एव प्रमाणाभावात् । अतस्तदपेक्षया [लाघवात्] लघुभूतकर्मान्तरविधानमेव ज्यायः । तदा हि निकायित्वेनाग्निष्टुद्यागविकारत्वात् वारवन्तीयं प्राप्तमेवानूद्यते, केवलं रेवतीविशिष्टस्तोत्रभावनोत्तरकालविशिष्टयागान्तरभावनैव फलोद्देशेन विधीयते ।

---

वसानेन धात्वर्थद्वयविशिष्टभावनाद्वयाप्रतीतेः क्त्वाप्रत्ययानुपपत्तिरिति भावः । एतेनेत्यस्य एताभिरित्यर्थकत्वमभिप्रेत्याह—**रेवतीकरणकेति** ॥ **आख्यातोपात्तेति** ॥ द्विकर्मकत्वोपपादनं पूर्ववदाश्रयफलरूपकर्मद्वयसम्बन्धात् द्रष्टव्यम् । ननु दध्यादिवत् प्रकरणात् आश्रयलाभान्न द्विकर्मकत्वमित्याशङ्क्य समाधत्ते—**न चेति** ॥ **धातुपारार्थ्येति** ॥ धात्वर्थस्य करणत्वभाव्यत्वोभयबहिर्भावादित्यर्थः ॥ **यागपरामर्शित्वोपपत्ताविति** ॥ एतेनेति पुलिङ्गैकवचनानुरोधेन यागस्यैव बोधनौचित्यात् विलिङ्गसङ्ख्यत्वेन रेवतीपरामर्शासम्भवेन रेवतीनां फले विधानं न सम्भवतीत्यर्थः । नापि स्तोत्रविधानम्; तस्यापि प्राप्तत्वात् । अतस्तदनूद्य रेवतीविधानं फले यागविधानमिति वाक्यभेद इत्यर्थः । अतः—गुणफलसम्बन्धासम्भवात्—तदपेक्षया **लाघवात्**—धात्वर्थस्य पदश्रुत्या करणत्वसम्भवेनोपस्थितिकृतलाघवात् ॥ **लघूभूतेति** ॥ तदेवोपपादयति—**तदा हीति** ॥ **निकायित्वेनेति** ॥ निकायिषु पूर्वयागधर्माणामुत्तरयागे प्रवृत्तिरित्यष्टमे वक्ष्यमाणत्वेनास्य यागस्य त्रिवृद्वाक्यविहिताग्निष्टुद्विकारत्वेन वारवन्तीयस्यातिदेशप्राप्तत्वात् वारवन्तीयवाक्यमनुवादः । रेवतीविशिष्टस्तोत्रभावनोत्तरकालताविशिष्टयागान्तरकरणकभावना फलोद्देशेन विधीयते । यद्यपि विशेषणविशेष्ययोरेकतरप्राप्तावपि विशिष्टस्याप्राप्तिरस्ति । तथाऽपि तत्रैकोद्देशेनान्यविधानेनान्यतरस्यानुवादरूपत्वेऽपि वाक्यभेदाभावात् । विशिष्टवैशिष्ट्यस्थल इव मध्यपतितस्य विशेषणस्य प्राप्तत्वेनानुवादाश्रयणे प्रथमचरमयोरप्राप्तयोर्वैशिष्ट्यासंभवेन प्रत्येकं विधेयत्वे वाक्यभेदापत्त्या तस्यापि विधेयकोटौ निवेशे केवलस्य प्राप्तत्वेऽपि विशिष्टस्याप्राप्तत्वात् विधिः संभवतीति सिद्धान्तमर्यादा । ततश्चेदृशोपपत्तिमूलकेनाचार्योक्तेन "विशिष्टविधिसन्दष्टं प्राप्तं चापिविधीयते" इति न्यायेन रेवतीयागयोः संबन्धघटकस्तोत्रस्यापि विधेयत्वान्न वक्यभेद इति भावः । रेवतीस्तोत्रसम्बन्धे वारवन्तीयस्याघटकत्वात् न तस्य सन्दष्टन्यायेन विधेयता । ननु कर्मान्तरविधानेऽपि

षष्ठ्यन्तैतच्छब्दः प्रकृतिविकारभावानुवादकः । तृतीयान्तैतच्छब्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति । उत्तरकाललक्षणो गुणश्च प्रयोगान्वयित्वात् अवेष्टिवद्यद्यपि तद्भेदमेवापादयेत् । तथापि कालस्यात्र सम्भवत्प्राप्तिकतया वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या यागे परंपरासम्बन्धेन विधेयस्य रेवत्याख्यस्य गुणस्य उत्पत्त्यन्वयित्वात् कर्मभेदबोधकत्वाविघातः ॥ १२ ॥

## (१३)—सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २७ ॥
## सर्वस्य वोक्तकामत्वात्तस्मिन् कामश्रुतिःस्यान्निधनार्था पुनः श्रुतिः॥२८

ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य समाम्नातैः "यो वृष्टिकामो योऽन्नाद्यकामो

---

एतस्यैवेति षष्ठयन्तोल्लेखबलात्त्रिवृदग्निष्टुदङ्गमेवायं यागः स्यादित्यत आह—**षष्ठयन्तेति** ॥ प्रधानयागस्य फलस्य चोद्देश्यत्वे उद्देश्यानेकत्वप्रयुक्तवाक्यभेदापत्तेः निकायित्वेनाव्यवहितपूर्वाम्नाताग्निष्टुत्प्रकृतिकतया तद्बोधाय प्रकृतिषष्ठयोरनुगुणत्वान्नास्याङ्गत्वबोधकत्वमिति भावः । "अथैष ज्योतिः" इत्यादाविव पूर्वप्रकृतकर्मपरामर्शकत्वं नास्तीत्याह—**तृतीयान्तेति** ॥ **प्रस्तोष्यमाणेति** ॥ अस्मिन्नेव वाक्ये विधीयमानेत्यर्थः । ननु तथाप्युत्तरकालरूपगुणविधिः फलोद्देशेन विशिष्टयागविधिरिति वाक्यभेद इत्यत आह—**उत्तरेति** ॥ **अवेष्टिवदिति** ॥ राजसूयान्तर्गतमिष्टिपञ्चकं पृथक्प्रयोगमवेष्टिसंज्ञकम् । तस्यैव "यदि ब्राह्मणो यजेत" इत्यदिवाक्यैः प्रयोगान्तराण्येव विधीयन्ते । ब्राह्मणादेः कर्तुः प्रयोगान्वयित्वान्न कर्मान्तरमिति वक्ष्यमाणत्वादित्यर्थः ॥ **तद्भेदमेव**—प्रयोगभेदमेव ॥ **आपादयेत्**—प्रयोगस्यैवभेदः स्यत्, न तु कर्मण इत्यर्थः । **कालस्य**—उत्तरकालस्य ॥ **संभवत्प्राप्तिकतयेति** ॥ स्तोत्रोत्तरं यागानुष्ठानेनोत्तरकालताप्राप्तिसंभवादित्यर्थः॥ **वाक्यभेदेति** । विधिविषयत्वसत्त्वेऽपि विधितात्पर्याभावात् वारन्तीयपदस्य रेवतीयागयोः संबन्धविशेषतात्पर्यग्राहकत्वेनोत्तरकालतात्पर्याभावात् न वाक्यभेद इति भावः । ततश्च रेवतीगुणः स्तोत्रस्यैव भेदकः, स्तोत्रभेदाच्च यागभेद इत्यर्थः । ततश्च रेवत्याख्यगुणस्य उत्पत्त्यन्वयित्वात् कर्मभेदो दुर्वार इति भावः । सूत्रार्थस्तु **समेषु**—क्रियात्वाविशेषादाश्रयानपेक्षतया तत्तुल्येषु श्रुतेषु, **कर्मयुक्तं**—फलं **स्मात्**—न गुणयुक्तमिति ॥

**सौभरे पुरुषश्रुतेः निधने कामसंयोगः** । रेवतीवाक्ये गुणफलसंबन्धविध्यसंभवेऽपि सौभरवाक्ये तत्सम्भव इति प्रत्यवस्थानात् सङ्गतिः ॥ **ब्रह्मसामेति** ॥

यः स्वर्गकामः स सौभरेण स्तुवीत" इत्येतैरुक्तस्तोत्राश्रितं सौभरं साम फलत्रयोद्देशेन विधीयते । उद्देश्यानेकत्वेन स्तुवीत इत्यस्यानुषङ्गेण वाक्यभेदप्रतीतेः । सौभरे च शाखाभेदेन निधनाख्यान्तिमसामावयवाधारतया 'हीष् ऊ ऊर्क्' इत्यादीन्यक्षराण्याम्नातानि । तदेव सौभरं प्रकृत्य "हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊ इति स्वर्गकामाय ऊर्गित्यन्नाद्यकामाय" इति श्रुतम् । तत्र वृष्टिकामादिशब्दानां फलपरत्वात्तदुद्देशेनैव हीषादयो गुणा विधीयन्ते । सौभरं च प्रकृतत्वाद्यूपादिवदाश्रयः । निध-

ज्योतिष्टोमे षोडशिसंस्थाके सन्त्युक्थ्यसंज्ञानि स्तोत्राणि त्रीणि । तत्र मध्यमं ब्रह्मसामस्तोत्रम् । तत्प्रकृत्य समाम्नातैः "यो वृष्टिकामः" इत्यादिभिरित्यर्थः । तत्र संशयः——किं हीषादयो निधनविशेषाः सौभरफलात्फलान्तरार्थेन विधीयन्ते, उत सौभरस्यैव [इति] तत्तत्फलं साधयतः तत्फलमनियमेन पाठतः प्राप्तं नियम्यते[1] इति । तत्र पूर्वपक्षमाह——**उक्तस्तोत्राश्रितेति** ॥ सौभरस्य क्रियारूपत्वपक्षे आश्रयापेक्षाभावेन स्तुवीतेत्यनुवादानुपपत्तावपि ध्वन्यात्मकशब्दस्य द्रव्यरूपत्वमिति मूलकारपक्षे क्रियान्तरस्यापेक्षायां प्रकरणेन स्तोत्रमाश्रयत्वेन समर्प्यत इति भावः ॥ **सौभरं सामेति** ॥ धात्वर्थगुणयोरुभयोरपि प्राप्तौ भावार्थाधिकरणन्यायेन विधाने तस्य बहिःक्रतु प्रयोगापत्त्या तत्र सौभरप्राप्त्यभावेन तस्यापि विधौ विशिष्टविधिगौरवात् गुण एव फलाय विधातुं युक्त इत्यर्थः । ननु फलत्रयोद्देशेन विधाने उद्देश्यानेकत्वाद्वाक्यभेदः स्यादित्यत आह——**स्तुवीतेत्यस्येति** ॥ तथा च वाक्यत्रयेण फलत्रयोद्देशेन विधाने वाक्यानेकत्वस्येष्टत्वान्न दोष इति भावः ॥ **निधनाख्येति** ॥ प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवो, निधनं चेति पाञ्चभक्तिकं साम । भक्तिः भागः अवयव इति यावत् । तच्चरमभागापेक्षितकालपूरकतयेत्यर्थः ॥ **हीष् उ उर्क् इत्यक्षराणि समाम्नातानि** । तादृशं सौभरं प्रकृत्य **"हीषिति वृष्टिकामाय"** इत्यादीनि श्रुतानीत्यर्थः ॥ **फलपरत्वादिति** ॥ षष्ठाद्यन्यायेन लक्षणयेति शेषः । "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायादिति भावः । ननु हीषाद्यक्षरगणस्य सिद्धद्रव्यस्य स्वाधेयचरमावयवघटितत्वरूपदृष्टविधयैव स्वावच्छिन्नसौभराश्रितत्वमस्त्विति चेन्न; सौभरस्य सिद्धद्रव्यत्वेनाश्रयत्वायोग्यत्वादित्याशङ्क्याह——**यूपादिवदिति** ॥ ननु शब्दाधिकरणे ध्वनीनामनित्यत्व-

[1] सौभरफलकं निधनम् अनियमेन प्राप्तं नियम्यत इत्यर्थः ।

नाधारतया हीषादिपाठस्यैव नियामकत्वात् भागान्तरे स्तोभाद्यक्षरान्तरबाधापत्तेश्च न निधनातिरिक्तभागस्याश्रयत्वापत्तिः । न च लाघवाद्वृष्टिसाधनसौभरीयनिधने अनियमेन प्राप्तानां हीषादीनां नियममात्रकरणात् व्यवस्थार्थत्वं शङ्क्यम् । तथात्वे वृष्टिकामादिपदैस्तत्तत्साधनीभूतसौभरलक्षणाद्यापत्तेः । तस्य च निधनविशेषणत्वे

---

साधनादिदमयुक्तमिति चेन्न; उत्पादनक्रिययोच्चारणक्रियया वा वैशिष्टयेनाश्रयत्वसंभवादिति भावः । ननु सौभरस्य प्रस्तावभागाद्यवच्छेदेनाश्रयत्वनिरासाय हीषादेर्निधनभागनियमोऽपि विधेय इति वाक्यभेदः स्यादत आह—**निधनेति** ॥ पाठकल्पितविधिनैव भागनियमसिद्धेरिति भावः । ननु पाठेन निधनभागस्याश्रयत्वेऽपि भागान्तरस्य सौभरत्वाविशेषात् आश्रयत्वं किं न स्यादित्यत आह—**भागान्तर इति** ॥ भागान्तरे स्तोभाद्यक्षरान्तरस्य समाम्नायसिद्धस्य बाधापत्तेर्न भागान्तरस्याश्रयत्वसिद्धिः । निधनस्य तु फलार्थत्वेन काम्यत्वादक्षरान्तरसत्त्वेऽपि बाधोपपत्तिरिति भावः । ननु वृष्टिसाधनसौभरीयनिधने अनियमेन प्राप्तहीषादीनां नियममात्रकरणे लाघवात् व्यवस्थार्थत्वं किं न स्यादित्याशङ्कते—**न चेति** ॥ **तथात्व इति** ॥ वृष्टिकामादिपदैः तत्साधनसौभरे लक्षणापत्तेरिति भावः । ननु लक्षणायाः फलमुखत्वान्न दोष इत्यत आह—**तस्य चेति** ॥ वृष्ट्यादिसाधनसौभरस्येत्यर्थः ॥ **विशिष्टोद्देश इति** ॥ वृष्टिसाधनसौभरीयनिधनोद्देशेन विधौ विशिष्टोद्देशापत्तिरित्यर्थः । पूर्वपक्षमुपसंहरति—**अत इति** ॥ **सौभरफलादिति** ॥ ननु उभयोरपि वृष्टित्वाविशेषात् कथं फलान्तरार्थत्वमिति चेन्न; केदारादिप्रदेशभेदेन दिवसभेदेन च वृष्टिद्वयोपपत्तेः । व्यक्तिभेदस्यैवाभिप्रेतत्वेन जातिभेदस्याविवक्षितत्वादिति भावः । सिद्धान्तमाह—**नियमविधीति** ॥ वृष्टिकामपदे वृष्टिसाधनसौभरलक्षणाङ्गीकारात् तदुद्देशेन हीषादिनियमा विधीयन्त इत्यर्थः । अयं भावः । निधनस्थानकेन हीषितिस्तोभेन वृष्टिसाधनसौभरं भावयेदिति विधिः पर्यवस्यति । सौभराणि काम्यानि त्रीणि नित्यनैमित्तिकरूपमेकमिति चत्वारि सौभराणि । यदि बृहत्सामेत्यादिना निमित्तेऽपि तद्विधानात्, तान्येकस्मिन्नपि निधनस्तोभे शेषित्वेन पक्षप्राप्तानीति हीषा वृष्टिसाधनसौभरमेव भावयेदिति शेषिनियमेन शेष्यन्तरे व्यावर्तिते नित्यादिसौभरे त्रयातिरिक्त एव शाखान्तराम्नातः कश्चित्स्तोभः ; तदभावनिश्चये तु प्रकारान्तरेण निधनभागापेक्षितस्तोभालाभात् पाठकल्पितविधिभिर्विकल्पितं स्तोभत्रयमेतदेव प्राप्यत इति पर्यवस्यति ।

विशिष्टोद्देशापत्तेश्च । अतः सौभरफलात् फलान्तरार्थानि हीषादीनीति प्राप्ते—

नियमविधिलाघवानुरोधेन वृष्टिकामादिपदैर्वृष्टिसाधनसौभरलक्षणामङ्गीकृत्यापि हीषादिनियमविधिरेवाश्रीयते । पक्षप्राप्तिश्च पाठान्निधनस्थान एवेति नियमस्यापि तत्स्थानकत्वलाभः । वस्तुतस्तु—नियमविधिलाघवानुरोधेन हीषादेर्वृष्ट्याद्यर्थतैव स्वसाधनसौभराधारत्वसम्बन्धेनाश्रीयत इति न लक्षणापि । सम्बन्धघटकीभूतं च सौभरं न सौभरत्वावच्छिन्नम्, अपि तु सौभरविशेष एव । शाखाभेदेन हि क्वचिद्विजातीयानि सौभराणि निधनान्तरयुक्तानि समाम्नातानि । तत्र हीषः पक्षेऽप्यप्राप्तत्वान्न तस्य सौभरस्य सम्बन्धघटकत्वम् । अपि तु यज्जातीयसौभरे हीषादीन्यनियमेन समाम्नातानि तज्जातीयस्यैव तत् । अतश्च वृष्ट्यर्थे निरुक्तसम्बन्धेन हीषेवेति नियमकरणात् सम्बन्धघटकीभूतसौभरे निधनान्तरव्यावृत्तिवत् विजातीयसौभरान्तरस्यापि वृष्ट्याद्यर्थत्वव्यावृत्तिसिद्धिः । अतश्च तन्नित्यप्रयोगविषयमेव सम्पद्यत इति विवेकः ॥ १३ ॥

---

एकैकस्मिन् सौभरेऽपि त्रयाणां स्तोभानां शेषत्वेन प्राप्तौ हीषैव वृष्टिसाधनसौभरं भावयेदिति शेषनियमेनापि चतुर्थे सौभरे पाठकल्पितविधिभिर्विकल्पेन तत्प्राप्तिसत्त्वात् । न च वृष्टिकामपदे निधनमिति विभक्तौ च लक्षणापत्तिरिति वाच्यम्; इष्टापत्तेः । नियमविधिलाघवसत्त्वेन लक्षणागौरवस्य फलमुखत्वात् । अत एव वार्त्रघ्न्यादिवाक्यस्थपौर्णमास्यादिपदस्याज्यभागादिलक्षणा, प्रयाजशेषवाक्ये विभक्तिद्वयेऽपि सेति लाघवलोभादङ्गीकृतमिति ॥ **हीषादीति** ॥ विधिफलस्य नियमस्य विधेयगतत्वस्यैव युक्तत्वादिति भावः । ततश्च शेषनियमोऽयमिति द्रष्टव्यम् । ननु प्रस्तावादिस्थानव्यावृत्तेरप्यावश्यकतया तन्नियमस्यापि विधावत्यन्तगौरवं स्यादित्यत आह—**पाठादिति** ॥ ततश्च पाठान्निधनस्थान एव प्राप्तत्वेन तत्रैव नियमो न प्रस्तावादिषु । तत्र प्राप्तेरेवाभावादित्यर्थः । लक्षणां विना पक्षान्तरमाह—**वस्तुत इति** ॥ **हीषादेरिति** ॥ वृष्ट्याद्युद्देशेनैव हीषादिविधिरित्यर्थः । ननु वृष्ट्युद्देशेन सौभरविधाने शाखाभेदेन विजातीयसौभराणां निधनान्तरयुक्तानां पाठात्तेषामपि सौभरसंबन्धितया वृष्ट्याद्युद्देशेन विधाने सति काम्यत्वेन तत्रत्यनिधनान्तरबाधेन हीषादिविधानं स्यादित्यत आह—**स्वसाधनेति** ॥ **स्वं**—वृष्ट्यादिकम्, **तत्साधनीभूतं यत्सौभरं तदाधारो** यस्य निधनस्य तत्त्वसंसर्गेणेत्यर्थः । स्वाधारसौभरजन्यत्वं संसर्ग इति फलितार्थः । तत्र च सम्बन्धघटकत्वं सौभरविशेषस्यैव । न सौभरसामान्यस्येति न शाखान्तरीयसौभराणां सम्बन्धघटकत्वमिति नोक्तातिप्रसङ्गः । यथा "वासिष्ठानां नाराशंसो

## अथ द्वितीयाध्यायस्य तृतीयः पादः

**(१)—गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥ एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥**

ज्योतिष्टोमे "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान्" इति श्रुतम्। तत्र यदिशब्दोपात्तस्य निमित्तत्वस्य न तावद्रथन्तरे बृहति वा अन्वयः; तस्य विशेषणत्वेन वृत्त्यनर्हत्वात्। नाप्यन्यपदार्थे; तस्य कादाचित्कत्वाभावात्। नापि विशिष्टे; ज्योतिष्टोमे सामान्तराणामपि नियतत्वेन

---

द्वितीयः प्रयाजः" इत्यत्र वासिष्ठोद्देशेन मन्त्रविधौ वासिष्ठाभिलषितफलजनकदर्शपूर्णमासाङ्गद्वितीयप्रयाजस्मारकत्वेन परम्परासम्बन्धेन मन्त्रविधिः तद्वदिति भावः। तत्—परम्परासम्बन्धघटकत्वम्। "यो वृष्टिकामः" इति विधौ सौभरविशेषे सौभरपदस्य लक्षणायामिदं वाक्यं तात्पर्यग्राहकमिति तात्पर्येण व्यावृत्तिसिद्धिरित्युक्तम्। सूत्रार्थस्तु—वृष्टिकाम इत्यादि पुरुषसंयोगात् सौभराश्रिते हीषादौ फलसंयोग इति ॥ १३ ॥

इति श्रीमत्कावेरीतीरविराजमानचोळदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायनसूत्रहोशानिकर्णाटकजातीयश्रीवाञ्छेश्वरयज्वनः कृतिषु भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ द्वितीयाध्यायस्य द्वितीयः पादः

---

## अथ द्वितीयाध्यायस्य तृतीयः पादः

**गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥**

पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः। अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वमानन्तर्यं च द्रष्टव्यम्। ज्योतिष्टोमं प्रकृत्य श्रूयते "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्" इत्यादि। तत्र संशयः—किं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामा इत्यादिना विधीयते, किं वा ज्योतिष्टोम

**बृहद्रथन्तरयोरन्ययोगव्यावृत्त्या विशेषणत्वासम्भवात् । ज्योतिष्टोमत्वावच्छेदेनायोगस्यापि व्यावर्तयितुमशक्यत्वाच्च । अतः समासार्थस्य केवलरथन्तरसामकत्वस्य प्रकृते कर्मणि ग्रहाग्रतानिमित्तत्वेन निवेशायोगात् उभयविशिष्टकर्मान्तरमेव विधीयते। यदिशब्दस्त्वविवक्षितार्थ इति प्राप्ते—**

---

एव रथन्तरादिनाऽवच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेनानुकीर्त्यत इति । तत्रायं क्रमः । उपांश्वन्तर्यामयोरधाराग्रहयोर्ग्रहणानन्तरं धाराग्रहाणामुपक्रमः । तेष्वैन्द्रवायवमैत्रावरुणशुक्रामन्थ्याग्रयणातिग्राह्युक्थ्याश्विनाः क्रमेणाम्नाताः । अन्ये च ग्रहाः प्रातःसवने गृह्यन्ते । तत्रैव पृष्ठस्तोत्रे रथन्तरं बृहच्चेति विकल्पेन सामद्वयं विहितम् । तत्र रथन्तरसामपक्षे धाराग्रहेष्वैन्द्रवायवग्रहस्य प्राथम्यं पाठप्राप्तमनुष्ठेयम् । बृहत्सामपक्षे शुक्रं प्रथमतो गृहीत्वा पश्चादैन्द्रवायवादीन् गृह्णीयादित्यर्थकमुदाहरणवाक्यमिति । तत्र पूर्वपक्षमाह—**यदिशब्देति** ॥ यदिशब्देन प्रतीयमाननिमित्तत्वस्य रथन्तरादावन्वयो वा अन्यपदार्थे वा विशिष्टे वा इति विकल्प्य क्रमेण दूषयति—**वृत्त्यनर्हत्वादिति** ॥ 'ऋद्धस्य राजमातङ्गाः' इत्यत्र राजनि ऋद्धत्वस्येव सविशेषणानां वृत्तिनिषेधेनान्वेतुमयोग्यत्वादित्यर्थः । द्वितीयं निरस्यति—**अन्यपदार्थेति** ॥ सोमद्रव्ये तत्साध्ययागे वा ॥ **अभावादिति** ॥ नित्यस्य निमित्तत्वे यदि रथन्तरसामेति बहुव्रीहिघटकपदवैयर्थ्यापत्तेः अग्रतयोर्विकल्पापत्तेश्चेति भावः । तृतीयं निरस्यति—**नापीति** ॥ रथन्तरविशिष्टस्य क्रतोर्निमित्तत्वे रथन्तरस्य विशेषणत्वं वाच्यम् । तच्चान्ययोगव्यावृत्त्या वा अयोगव्यावृत्त्या वा ? नाद्य इत्याह—**ज्योतिष्टोम इति** ॥ **सामान्तराणामिति** ॥ "समर्थः पदविधिः" इति सूत्रे पदनिष्पादकसमासादिविधेः समर्थाश्रितत्वमुक्तम् । सामर्थ्यं च नैरपेक्ष्यरूपं विशेषणनिष्ठम् । तदुक्तं वार्तिके—"समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे । विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि चोच्यते ॥" इति ॥ ततश्च प्रकृते गायत्रादिसाम्नामनेकेषां सत्त्वेनान्ययोगव्यावृत्त्यसम्भवादित्यर्थः । अयोगव्यावृत्त्या विशेषणत्वमिति द्वितीयं निरस्यति—**ज्योतिष्टोमत्वावच्छेदेनेति** ॥ रथन्तरमस्य सामैवेत्ययोगव्यावृत्त्या विशेषणत्वेन नित्यत्वं रथन्तरादेर्वाच्यम् । तच्च न सम्भवति । बृहत्सामके रथन्तरस्य रथन्तरसामके बृहतश्चाभावेनायोगस्यावर्जनीयतया तद्व्यावृत्तेरसम्भवादित्यर्थः ॥ **बृहद्रथन्तरयोरिति** ॥ ज्योतिष्टोमाङ्गस्तोत्रादिषु सर्वेषु तत्तद्विधिभिः सामान्तराणां विशिष्य विहितानां बाधस्य विषमशिष्टविकल्पस्य चायोगेन पूर्वत्रानिविशमानः केवलरथन्तरसामकत्वरूपो

---

१. नेदं प्रतीकं मूलपुस्तकेषूपलभ्यते । 'केवलरथन्तरेति' इति कदाचित्स्यात् ॥

बृहद्रथन्तरयोर्ज्योतिष्टोमे पाक्षिकत्वात् स्वायोगव्यावृत्त्या परस्परयोगव्यावृत्त्या वा विशेषणत्वोपपत्तिः। न च ज्योतिष्टोमत्वावच्छेदेन तदभावः ; स्वावान्तरकार्यपृष्ठस्तोत्रत्वावच्छेदेन तदुपपत्तेः। अन्यथा तवापि साक्षाद्यागे प्रोक्षणावघातादौ तदसम्भवावश्यम्भावात्। अतो युक्तैव रथन्तरयुक्तस्य क्रतोर्निमित्तता।

---

नैरपेक्ष्यापरपर्यायकैवल्यविशिष्टो गुणः उभयविधानप्रयुक्तवाक्यभेदसहकृतः कर्मभेदक इति भावः॥ **उभयेति** ॥ ऐन्द्रवायवाग्रत्वरथन्तरसामकत्वोभयविशिष्टकर्मान्तरविधानमित्यर्थः। ननु निमित्तत्वप्रतीत्यभावात् यदिशब्दानुपपत्तिरित्यत आह—**यदिशब्द इति** ॥ "यदिशब्दपरित्यागो रुच्यध्याहारकल्पना" इत्यादिवार्तिकोक्तप्रकारेण स्तुत्याद्यर्थान्तरालम्बनेन वा नेयः। सर्वथा प्राप्त्यभावे "यदि ब्राह्मणो यजेत" इत्यादिवत् अन्यथा नेय इति भावः। ननु रुच्यध्याहारेण यदि रोचेत रथन्तरसामानं क्रतुं कुर्यादिति व्याख्यानसम्भवान्न कर्मान्तरमिति चेन्न ; आनर्थक्यस्यैव दोषत्वात्। न च तथापि गृह्णीयादिति लिङः कामप्रवेदनार्थतया यद्यैन्द्रवायवाग्रान् गृहीतुमिच्छेत्तदा रथन्तरसामानं क्रतुं कुर्यादित्यर्थः संभवत्येवेति वाच्यम् ; रुच्यध्याहारस्यैव दोषत्वात्। चातुर्थिकशाखाधिकरणन्यायात् वाक्यभेदापत्त्या एकवाक्यत्वाभावाच्च। ननु तथापि "हेतुहेतुमतोर्लिङ्" इत्यनुशासनात् स्यादिति लिङो हेत्वर्थत्वेन यदि रथन्तरसामा सोमो हेतुः तदा तद्धेतुकानैन्द्रवायवाग्रान् गृह्णीयादिति व्याख्यानं संभवति। तथा गृह्णीयादिति लिङो हेतुमदर्थत्वेन यदि ग्रहाग्रता हेतुमत्त्वेन विवक्षिता तदा तद्धेतुः सोमः कर्तव्य इति व्याख्या संभवतीति नानर्थक्यं युक्तमिति चेन्न; यदि गृह्णीयादिति व्यवहितान्वयापत्तेर्दोषात्, तरसाधिकरणन्यायेन तस्य दोषत्वात्। असिद्धस्य हेतुत्वकल्पनापत्त्या द्वितीयव्याख्यानस्याप्यसंभवादविवक्षितत्वकथनमिति द्रष्टव्यम्। सिद्धान्तमाह—**बृहद्रन्तरथयोरिति** ॥ **स्वायोगेति** । वार्तिके व्यवच्छेत्तृपदस्य विशेष्यपक्षकेतरभेदानुमापकपरत्वात् विशेष्येतरावृत्तित्वे पर्यवसानात् विशेष्यव्यापि चेत्यनेन यावद्विशेष्यवृत्तित्वबोधनादयमर्थः सम्पन्नः। तत्र च व्यभिचारवारणाय विशेष्येतरावृत्तित्वे सतीति पदम्। स्वरूपासिद्धिवारणाय विशेष्यवृत्तित्वमुपात्तम्। भागासिद्धिवारणाय यावदिति। विशेष्यश्च प्रकृते विजातीयपृष्ठस्तोत्रविशिष्टः सोमयागो लक्षणया निर्दिष्टः। बृहद्रथन्तरविकल्पबोधकवाक्यस्य तात्पर्यग्राहकत्वात्। तादृशविशेष्यायोगव्यावृत्तिरूपं व्यवच्छेत्तृत्वं च निराबाधम्। अन्ययोगव्यवच्छेदपदे अन्ययोगशब्देन स्वान्यस्य विशेष्येण योगवत् विशेष्यान्यस्मिन् स्वयोगस्यापि सङ्ग्रहात्। अतो रथन्तरसामकत्वादेर्विशेषणत्वसंभवात् युक्तस्तद्विशिष्टे निमित्तत्वान्वय इति भावः। यागे विशेषणस्य साक्षादन्व-

**वस्तुतस्तु—न क्रतोर्निमित्तान्तर्भावः । प्रयोजनाभावात् । प्रकरणावगतक्रत्वङ्गत्वबलेनान्यपदार्थसम्बन्धस्यानुवादत्वात् । अन्यथा ज्योतिष्टोमरूपान्यपदार्थस्य विकृतावभावेन शुक्राग्रताया अनापत्तेः । अतो लक्षणयापि रथन्तरमेव निमित्तम् । नैमित्तिकं**

---

याभावेन तदङ्गेष्ववतारस्यावश्यकत्वेन प्रमाणान्तरबलादङ्गविशेषणवदन्वयो वाच्यः । न तु सर्वाङ्गावच्छेदेनेति समाधानमाह—**स्वावान्तरेति** ॥ तथा च निरपेक्षस्यैव रथन्तरसामकत्वस्य निवेशसंभवान्न कर्मभेदः । **अन्यथा** स्वावान्तरकार्यद्वारा व्यवच्छेदानङ्गीकारे । **तवापि** पूर्वपक्षिणोऽपि । **साक्षाद्यागे** अयोगव्यावृत्त्यभावात् प्रोक्षणादावप्ययोगसत्त्वेन तद्व्यावृत्त्यसंभवात् विशेषणत्वं न स्यादित्यर्थः । विशिष्टक्रतोर्निमित्तत्वमुपसंहरति—**अत इति** ॥ लाघवादाह—**वस्तुतस्त्विति** ॥ ननु विशिष्टस्य निमित्तत्वाभावे केवलरथन्तरे यदिशब्दार्थनिमित्तत्वस्यान्वयो न संभवति । समासानुपपत्तेरुक्तत्वादिति चेन्न, विशिष्टे निमित्तत्वस्यान्वयेऽपि तस्य नित्यतया आनर्थक्यतदङ्गन्यायेन रथन्तरे निमित्तत्वपर्यवसानात् । "सविशेषणे हि विधिनिषेधौ" इति न्यायादिति भावः । क्रतोर्निमित्तत्वे प्रयोजनाभावमुक्त्वा बाधकमप्याह—**अन्यथेति** ॥ क्रतोर्निमित्तान्तर्भावे इत्यर्थः । नैमित्तिकस्थले निमित्तस्यैव नैमित्तिकानुष्ठानप्रयोजकतया विकृतौ रथन्तरविशिष्टक्रतुरूपनिमित्तस्याभावेन अग्रताप्राप्तिर्न स्यादित्यर्थः ॥ **शुक्राग्रताया इति** ॥ ऐन्द्रवायवाग्रतायास्तु वचनेन नैमित्तिकत्ववत् पाठेन नित्यत्वस्यापि बोधनेन विकृतौ ज्योतिष्टोमाभावेऽपि नित्यत्वेनातिदेशोपपत्तेः शुक्राग्रताया इत्युक्तम् ॥ **लक्षणयापीति** ॥ यदिशब्दपरित्यागापेक्षया ज्यायस्येति शेषः । अन्ये तु केवलरथन्तरस्य निमित्तत्वे समासान्तर्गतरथन्तरे यदिशब्दोपात्तनिमित्तत्वान्वये समासान्वये समासानुपपत्ते रथन्तरविशिष्टक्रतोरेव निमित्तत्वम् । न च विशिष्टोद्देशदोषः । हविरार्तिन्यायेन रथन्तरस्य निमित्तत्वसम्भवात् । मलिनः स्नायात् इत्यादौ मालिन्यविशिष्टस्य स्नाननिमित्तत्वेऽपि मालिन्यस्य निमित्तत्वपर्यवसानवत् रथन्तरस्य निमित्तत्वपर्यवसानान्न विकृतौ शुक्राग्रतादिप्रवृत्त्यनुपपत्तिरित्याहुः । अत्रेदं बोध्यम् । बृहत्सामत्वे शुक्राग्रत्वविधानादेव पाठप्राप्तैन्द्रवायवाग्रत्वस्य रथन्तरसामविषयत्वसिद्धावपि "यदि रथन्तरसामा" इति वचनं ऐन्द्रवायवाग्रताया नैमित्तिकत्वप्रतिपादनार्थम् । तत्फलं च 'संसवे उभे कुर्यात्' 'गोसवे उभे कुर्यात्' इति बृहद्रथन्तरोभयसामसु निमित्तभूतस्य निरपेक्षरथन्तरस्य बृहतश्चाभावेन 'अपवर्तीं रथन्तरपृष्ठस्य प्रतिपदं

---

१. 'शुक्राग्रतादेः' इति पाठान्तरम् ।

त्वग्रताविशेषः प्रकृतापूर्वसाधनीभूतग्रहोद्देशेन विधीयते । न च पाठादेवैन्द्रवायवाग्रत्वनियमस्य प्राप्तेस्तद्विधिवैयर्थ्यम् । ततः पूर्वमेव नैमित्तिकतया विधानात् । तत्प्रयोजनं च निमित्ताभावे प्रकृतौ विकृतौ च लोपः । यद्यपि च सर्वत्र निमित्तस्य स्वसत्त्वे नैमित्तिकावश्यकत्वमात्रं प्रमेयम्, तथापि तस्यात्र पाठादेव सिद्धेस्तदभावे तदभाव एव प्रमेयं बोध्यम् । तस्मान्न कर्मान्तरविधिः ॥ १ ॥

## (२)—अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

राजसूये राजकर्तृके प्रत्येकदक्षिणाम्नानात् अवेष्टिसंज्ञकाः पञ्चेष्टयः पृथक्प्रयोगाः

---

कुर्यात् अग्रवर्ती बृहत्पृष्ठस्य' इति विहितप्रतिपद्द्वयनिवृत्तिवत् रथन्तरनिमित्तैन्द्रवायवाग्रताया अपि निवृत्तिरिति ॥ **पाठादिति** ॥ "एन्द्रवायवं गृह्णाति" इति प्रथमं पाठादित्यर्थः ॥ **ततः पूर्वमिति** ॥ पाठकल्प्यविधितः पूर्वप्रवृत्त्यङ्गीकारेणेत्यर्थः ॥ **तत्प्रयोजनं**—पूर्वप्रवृत्तिप्रयोजनम् । **निमित्ताभावे** रथन्तराभावे ; निरपेक्षरथन्तराभाव इति यावत् । **लोपः**—ऐन्द्रवायवाग्रत्वलोपः । ननु निमित्तस्वाभाव्यात् रथन्तरसत्त्वेऽग्रताप्राप्तिरेव स्यात् न तु निमित्ताभावे नैमित्तिकलोपः शास्त्रार्थः, तस्यार्थसिद्धत्वादित्याशङ्कते—**यद्यपि चेति** ॥ **तस्येति** ॥ निमित्तप्रयुक्तनैमित्तिकस्याग्रत्वस्य पाठप्राप्तत्वेन विधिफलत्वायोगेनाभावस्यार्थिकस्यात्र विधिफलत्वमिति परिहरति—**तथापीति** ॥ **प्रयोजनं**—पूर्वपक्षे एतद्वाक्यविहितकर्मणः फलवदफलन्यायेन ज्योतिष्टोमाङ्गत्वात् ज्योतिष्टोमाङ्गत्वेन केवलं रथन्तरसामकं कर्मानुष्ठेयम् । सिद्धान्ते तु नैमित्तिकाग्रतामात्रानुष्ठानम्, यदि बृहत्सामेति वाक्यविहितशुक्राग्रतायाः प्रकृतौ निवेशानिवेशादिकंच द्रष्टव्यम् ॥

सूत्रार्थस्तु—रथन्तरसामेति सामसंयोगस्याशेषे कृत्स्नक्रतौ भूतत्वात् रथन्तरसामेति शब्दस्य अपूर्वक्रतुसंयोगात् रथन्तरसामादिर्गुणः कर्मान्तरमाक्षिपेदिति ॥ १ ॥

**अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते** ॥ यदिशब्दबलान्निमित्तार्थत्वमिति प्रत्यवस्थानात्सङ्गतिः ॥ **राजसूय इति** ॥ तत्र संशयः—किं ब्राह्मणादीनामवेष्टौ प्राप्तानां मध्ये निधानविशेषं प्रति श्रवणानि निमित्तार्थानि उताप्राप्तप्रापकाणीति ॥ **प्रत्येकेति** ॥ 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा' 'ऐन्द्रमेकादशकपालमृषभो दक्षिणा' 'वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा' 'मैत्रावरुणीमामिक्षां वशा दक्षिणा' 'बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति वाक्येषु प्रयोगान्वयिगुणस्य दक्षिणारूपस्य कर्त्रानत्यर्थत्वात् तद्भेदेन

समाम्नाताः। तदवान्तरप्रकरणे 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेत्। यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्' इति श्रुतम्। तत्रापि पूर्ववद्ब्राह्मणकर्तृकत्वादि निमित्तमेव; यदिशब्दश्रुतेः। राजसूयस्य त्रैवर्णिककर्तृकत्वेन ब्राह्मणादेः प्राप्तत्वाच्च। राजशब्दस्य प्रजापालनकर्तरि सर्वलोकप्रसिद्धेः, क्षत्रियमात्रे द्राविडप्रसिद्धेस्तु म्लेच्छप्रसिद्धित्वेनासाधकत्वात्। व्याकरणप्रसिद्धेस्तन्मूलकत्वेनानियामकत्वाच्च। सर्वलोकप्रसिद्धेः श्रौतयदिशब्दमूलकत्वाच्च।

---

कर्तृभेदप्रतीतेः प्रयोगभेद इत्याशयेनाह—**दक्षिणाम्नानादिति** ॥ एते प्रयोगाः अभिषिक्तक्षत्रियैककर्तृकाः, त्रैवर्णिकानां तु पञ्चहविष्कः एकैकः प्रयोग इति दर्शयति—**यदि ब्राह्मण इति** ॥ पाठप्राप्तं वैश्वदेवस्य मध्येनिधानमपवदति—**बार्हस्पत्यमिति** ॥ मध्येनिधायेत्यादेरुत्तरवाक्यद्वयेऽप्यनुषङ्गः। तृतीयवाक्ये मध्येनिधानं पाठप्राप्तानुवादमात्रम्, प्रत्याहुत्यभिघारणं तु सर्वत्र विधेयम्। परं तु राजसूयान्तर्गता एते प्रयोगा इत्याह—**तत्रापीत्यादि** ॥ **पूर्ववदिति** ॥ "यदि रथन्तरसामा" इतिवत् "यदि ब्राह्मणो यजेत" इति यदिशब्दानुसारेण ब्राह्मणादिकर्तृकत्वस्य निमित्तत्वप्रतीतेरित्यर्थः ॥ **त्रैवर्णिकेति** ॥ तेषामाधानसिद्धाग्निमत्त्वादुपनयनसिद्धविद्यावत्त्वाच्च स्वाराज्यकामनायाश्च सत्त्वेन राजसूयाधिकारसम्भवादिति भावः ॥ **प्रजापालनेति** ॥ 'राजा मृगाङ्के क्षत्रिये नृपे' इति कोशेन नृपपरत्वाद्राजशब्दस्य चोरादिशब्दवत् कर्मविशेषनिमित्त एव राजशब्द इत्यर्थः। न चानेन कोशेन क्षत्रियजातिपरत्वमपि राजपदस्य प्रतीयत इति वाच्यम्। प्रजापालके सर्वलोकप्रसिद्धेरनुगुणः कोशः प्रबलः; केवलद्रविडप्रसिद्धिसहकृतस्तु दुर्बलः, आर्यम्लेच्छप्रसिद्ध्योः बलाबलस्य निर्णीतत्वात्। विन्ध्यहिमवन्मध्यदेशस्यैवार्यावर्तत्वात् प्रत्यन्तदेशस्यैव म्लेच्छवासत्वात्। न च राज्ञः कर्मेत्यर्थे ब्राह्मणादित्वात् ष्यञि पुरोहितादित्वाद्वा यकि राज्यपदनिष्पत्तेः राजपदं क्षत्रियत्वजातिवाचीति वाच्यम्। "न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतिनः। न शूद्रराज्ये निवसेत्" इति स्मृतिषु 'एष वो भरतो राजा सोमोऽस्माकं ब्राह्मणानां राजा सोम ओषधीनां राजानौ वा एतौ देवतानां यदग्नीषोमौ, इन्द्रो राजा जगतश्चर्षणीनाम्' इत्यादिवैदिकनिर्देशानुसारेण प्रजापालनेऽप्यस्ति राजशब्द इति प्रजापालनमादाय त्रैवर्णिकानां राजसूयाधिकारे विरोधाभावादिति भावः। ननु व्याकरणप्रसिद्ध्या जातिवाचित्वमस्त्वित्यत आह—**व्याकरणेति** ॥ **तन्मूलकत्वेन**—म्लेच्छप्रसिद्धिमूलकत्वेन। **अनियामकत्वात्**—जाति-

अतो ब्राह्मणादिकर्तृकत्वे निमित्ते मध्येनिधानपूर्वकप्रत्याहुत्यभिघारणविशिष्टपञ्चहविष्कैकेष्टिप्रयोगो राजसूयान्तर्गतो विधीयते। प्रत्येकप्रयोगाश्च पञ्चानुलोमविषया इति बोध्यम्। 'एतयान्नाद्यकामं याजयेत्' इत्यनेन चोभयोरपि नित्यनैमित्तिकप्रयोगयोः फलार्थं बहिःक्रत्वनुष्ठानमिति न ब्राह्मणादिगुणस्य भेदकत्वमिति प्राप्ते—

'राजानमभिषिञ्चेत्' इति श्रुतौ राजोद्देशेनाभिषेकविधानादभिषिक्ताधिकारिकराज्ययोगात्पूर्वमेव राजशब्दस्य क्षत्रियत्ववाचित्वप्रतीतेः 'तस्य कर्मणि' इत्याधिकृत्य

---

वाचित्वानियामकत्वात्। अविरुद्धत्वादिति यावत्। ननु बर्हिराज्याधिकरणन्यायेन जातिवाचित्वमस्त्वित्यत आह—**सर्वलोकेति**॥ श्रुतिस्थयदिशब्दानुसारेण ब्राह्मणादीनामपि राजसूयाधिकारप्रतीतेरित्यर्थः। तथा च जातिमपहायापि प्रयोगदर्शनेनान्वयव्यतिरेकाभावान्न बर्हिराज्यन्यायप्रसक्तिरिति भावः। राजा यजेत इति सामान्यतः श्रुतस्य द्विविधकोशोपलम्भनेनानेकार्थत्वेन सन्दिग्धस्य वा ब्राह्मणो यजेतेत्यादिश्रुत्यन्तरैः षष्ठान्त्यन्यायेनोपसंहारेण विशेषपर्यवसानं युक्तमित्यभिप्रेत्याह—**श्रौतेति**॥ मध्येनिधानाक्षिप्तमर्थं विवृणोति—**एकेष्टीति**॥ **अनुलोमाः**—मूर्धाभिषिक्तमाहिष्याम्बष्ठा एव, न तु करणादयः। एतेषु पितृगतजातेरभावेन मातृगतजातिसद्भावस्यैव स्मृतिषु वर्णनेन तेषां शूद्रत्वात्। न चैवं राजन्यत्वादेव तेषामेकप्रयोगस्यैव नैमित्तिकस्यापत्तिः। राजन्यवैश्यपदयोः ब्राह्मणप्रायपठितयोः स्वव्याप्यजात्यन्तरासमानाधिकरणजातिपरत्वेन व्यवस्थोपपत्तेः। अत एव 'बार्हद्गिरम् ब्राह्मणस्य ब्रह्मसाम कुर्यात्' इत्यादौ ब्राह्मणे निमित्ते ब्रह्मसामविधानात् अभीवर्तस्य सामान्येन विहितस्य मूर्धाभिषिक्तपरत्वं न्यायसुधायामुक्तम्। पृथक्प्रयोगैकप्रयोगयोः समुच्चय इति प्राञ्चः। तृतीयप्रयोगप्रसक्तिं वारयति—**एतयेति**॥ प्रयोगान्वयिगुणाभावेन तद्भेदासम्भवात् विनियोगभेदमात्रमिति भावः॥ **बहिःक्रत्विति**॥ योगसिद्ध्यधिकरणन्यायेन अन्तःक्रतु निरवकाशेन फलजननायोगेन सिद्धोऽयमर्थ इति भावः। अत्र एतया इति विशिष्यावेष्टिनिर्देशेन निरवकाशेन राजसूयेनेति सामान्यनिर्देशस्य तदितरपरत्वं युक्तमिति द्रष्टव्यम्॥

सिद्धान्तमाह—**राजानमिति**॥ "राजानमभिषिञ्चति" इत्यनेन हि राजोद्देशेनाभिषेको विधीयते। "राजेत्येतानभिषिक्तानाचक्षते" इत्यनेनाभिषेकोत्तरमेव राजत्वं प्रजापालनरूपं राज्यं प्रसिद्धम्। ततश्चाभिषेकोत्तरभाविप्रजापालनरूप-

'पत्यन्तपुरोहितादिभ्यो यक्' इति स्मृत्या पुरोहितादिगणपठितात् राजशब्दात् यगादिविधानेन च राज्यशब्दस्य राजशब्दप्रसिद्धिपूर्वकत्वावगतेर्द्रविडप्रयोगानुसारेण राजशब्दः क्षत्रियवचन एव । अतश्चावेष्टौ ब्राह्मणादीनां प्राप्त्यभावात् विधेयत्वावगतेः कर्तृरूपाद्गुणात् अवेष्टिप्रयोगान्तरमेव पञ्चहविष्कैकेष्टिरूपं समस्तगुणविशिष्टं बहिःक्रतु

---

राज्यप्राप्तेः पूर्वमेव प्रवृत्तेन 'राजानमभिषिञ्चति' इति वचनेन राजप्रतीतेः क्षत्रियविषयत्वात् न राज्ययोगनिमित्तत्वं राजशब्दस्येत्यर्थः । वस्तुतस्तु—"पुरोहितं वृणीते" "अध्वर्युं वृणीते" "यूपं तक्षति" इत्यादिवत् अभिषेकेण राजानं कुर्यादित्यर्थसम्भवात् नाभिषेकात्पूर्वं राजशब्दप्रयोगबलाज्जातिवाचित्वसिद्धिः । किं तु राजपदार्थज्ञाने राज्यसम्बन्धज्ञानापेक्षा राज्यपदार्थज्ञाने राजपदार्थज्ञानापेक्षा इति परस्पराश्रयप्रसङ्गाज्जातिवाचित्वसिद्धिरिति द्रष्टव्यम् । अत एव क्षत्रियानधिकृत्य श्रूयते "राज्यायैतेऽभिषिच्यन्ते राजेत्येतानाभिषिक्तानाचक्षते" इति । ततश्चोक्तकोशेऽपि "क्षत्रियो नृपः" इत्यनयोः सामानाधिकरण्येनान्वयः । एवं च स्मृतिकोशद्रविडप्रसिद्धीनामभिषिक्तक्षत्रिये शक्तिग्राहकत्वेनासन्दिग्धमेव राजपदमिति तद्विरुद्धप्रयोगाः सर्वेऽपि गौण्योपपादनीयाः ॥ **क्षत्रियवाचित्वेति** ॥ अभिषिक्तक्षत्रियवाचित्वेत्यर्थः । "कर्षात्वतो घञोऽन्त उदात्तः" इत्यनुवर्तमाने "कित" इत्यनेनान्तोदात्तता यगन्ते प्राप्यते । ष्यञन्तत्वे तु "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तता । तयोर्मध्ये 'सोमो वा एतस्य राज्यमादत्ते' इत्यादिश्रौतप्रयोगानुगुण्याय न्यायसुधापक्षमाह—**पत्यन्त इति** ॥ "तस्य कर्मणि" इत्यधिकृत्य पत्यन्तशब्देभ्यः पुरोहितादिभ्यश्च यगित्यर्थः । पुरोहितादिगणपठितत्वात् राजशब्दस्य यक्प्रत्ययोत्पत्तेः पूर्वमेव राजशब्दप्रयोगानुसारेण राजपदस्य क्षत्रियपरत्वमित्यर्थः । द्रविडप्रयोगसहकृतव्याकरणस्मृत्यनुसारेण राजशब्दः क्षत्रियवचन इत्यर्थः । फलितमाह—**अतश्चेति** ॥ राजा राजसूयेनेत्यादिवाक्ये राजशब्दस्य क्षत्रियपरतया क्षत्रियस्यैव राजसूयेऽधिकारात् ब्राह्मणादीनां प्राप्त्यभावेन विधेयत्वात् कर्तुः प्रयोगान्वयित्वेन कर्तृरूपगुणात् प्रयोगान्तरमेव पञ्चहविष्कैकेष्टिरूपं विधीयत इति न कर्मभेद इत्यर्थः ॥ **समस्तगुणविशिष्टेति** ॥ प्रत्याहुत्यभिघारणमध्येनिधानादिगुणविशिष्टेत्यर्थः ॥ **बहिःक्रत्विति** ॥ राजसूयानन्तर्गतः प्रयोगो अन्नाद्यलक्षणफलोद्देशेन विधीयत इत्यर्थः । नन्वेवं चातुर्मास्यानामपि राजसूयमध्योत्पन्नानां 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यनेन प्रयोगभेदोपपत्तेस्तत्रापि कर्मभेदो न स्यादिति चेन्न । तत्र यदि ब्राह्मणो यजेत इत्यादिवत्

विधीयते। तस्य चोक्तवचनेनान्नाद्यं फलम्। अन्तःक्रतौ तु प्रत्येकं पञ्च प्रयोगा एव। यद्यपि च पूर्वपक्षसिद्धान्तयोः पञ्चहविष्कैकेष्टिप्रयोगस्तुल्यः। तथापि ब्राह्मणादिगुणस्य पूर्वपक्षे न भेदकत्वम्, सिद्धान्ते तु तदिति विशेषः। तत्प्रयोजनं पक्षद्वयोपपादनेनैवोक्तम्। न चैवं राजन्यवाक्ये तस्य प्राप्तत्वात् विधेयत्वाभावेन भेदकत्वानापत्तिः। राजन्यपदस्याभिषिक्तानभिषिक्तक्षत्त्रियमात्रवाचित्वेन राजसूयेऽप्राप्तस्यैव

---

प्रयोगान्वयिगुणाभावेन प्रयोग भेदकाभावात्। न च तत्र चतुर्षु चतुर्षु मासेषु विधानेन कालरूपगुण एव प्रयोगान्वयितया प्रयोगभेदक इति वाच्यम्। तथापि चातुर्मास्यानां सप्तहविर्यज्ञसंस्थान्तर्भावेन गौतमस्मृत्या नित्यत्वावगमेन यागभेदस्यावश्यकतया कालविधानस्य तत्प्रयोगे उपपत्तेः। 'चातुर्मास्यानि दर्शश्च पौर्णमास्यग्निहोत्रकम्। वाजपेय इतीमे स्युर्नित्याः काम्या इति द्विधा ॥' इति त्रिकाण्डीयवचनेनाग्निहोत्रादिवत् तेषां भेदावश्यकत्वात्। नन्वस्याधिकरणस्य राजशब्दार्थनिर्णयमात्रपर्यवसितत्वेन पूर्वपक्षसिद्धान्तयोरनुष्ठाने विशेषाभावात् व्यर्थमधिकरणमिति शङ्कते—**यद्यपीति** ॥ पूर्वपक्षसिद्धान्तयोः पञ्चहविष्कैकेष्टिप्रयोगसमत्वेन फलभेदाभावादित्यर्थः। पूर्वपक्षे ब्राह्मणादिगुणस्य न भेदकत्वं, त्रैवर्णिकानां राजसूयाधिकाराङ्गीकारात्। सिद्धान्ते कर्तृभेदात्प्रयोगभेद इत्यर्थः। ननु तथाप्यनुष्ठानवैषम्यं नास्त्येवेत्यत आह—**तत्प्रयोजनमिति** ॥ पूर्वमेवानुष्ठाने वैषम्यमुक्तमित्यर्थः। ननु तथापि राजन्यवाक्ये प्रयोगभेदाभावात् भेदकत्वं न संभवति, तस्य राज्याधिकारित्वादित्याशङ्कते—**न चेति** ॥ **राजन्यपदस्येति** ॥ राजपदस्येत्यर्थः। तथा च राजपदस्याभिषिक्तानभिषिक्तसाधारणक्षत्त्रियमात्रपरत्वेनाभिषिक्तक्षत्त्रियाधिकारसिद्ध्यर्थं प्रयोगभेदकत्वोपपत्तेरित्यर्थः। तथा च राजशब्दस्य लोके जातिपरत्वेऽपि राजसूयवाक्ये राजपदमभिषिक्तक्षत्त्रियपरमिति "राजेत्येतानभिषिक्तानाचक्षते" इति लिङ्गरूपतात्पर्यग्राहकानुसारेणाभिषिक्तस्यैव राजसूयाधिकार इत्यर्थः। अयमभिप्रायः। अभिषेकजन्यादृष्टवत्त्वस्य शक्यतावच्छेदककोटिप्रवेशे गौरवात् क्षत्त्रियत्वजातिरेव राजपदशक्यतावच्छेदिका। राजसूयकर्तृतावच्छेदकं त्वदृष्टविशेषविशिष्टक्षत्त्रियत्वमेव, उक्ततात्पर्यग्राहकानुरोधेन तत्र निरूढलक्षणाङ्गीकारात्। तेन राज्ञोऽपि क्षत्त्रियत्वाविशेषात् अन्नाद्यकामनयापि बहिःप्रयोगेऽप्यधिकारः। तथा च भक्तिसूत्रं "बहिरन्तःस्थमुभयमवेष्टिवत्" इति अभिषिक्तस्य राजसूयान्तर्गतः प्रयोगः, अनभिषिक्तकेवलक्षत्त्रियस्य बहिःक्रतु प्रयोग इति द्विविधत्वमवेष्टिप्रयोगस्येति तत्सूत्रस्वप्रेश्वरभाष्ये स्पष्टम्। **अभिषिक्तक्षत्त्रियस्य** अभिषिक्तक्षत्त्रियमात्रस्यैव। न तु क्षत्त्रियजात्यवच्छिन्नस्य सर्वस्यापीत्यर्थः। एतेनाप्राप्तस्यैवेति पदमनभिषिक्त-

तस्य विधेयतया भेदकत्वोपपत्तेः । राजसूये हि राजपदस्य क्षत्रियमात्रशक्तस्यापि 'राजेत्येतानभिषिक्तानाचक्षते' इति निरूढलक्षणातात्पर्यग्राहकाल्लिङ्गादभिषिक्त-क्षत्रियस्यैवाधिकारः । अतःसिद्धं त्रिष्वपि वाक्येषु कर्तृरूपस्य गुणस्य प्रयोग-भेदकत्वम् । यदिशब्दश्च 'अभिघारयेत्' इति लिङः प्रयोज्यत्वापरपर्यायहेतुमदर्थकत्वे आख्यातद्वयैकवाक्यत्वे च तात्पर्यग्राहकः । तेन मध्येनिधानपूर्वकप्रत्याहुत्यभि-घारणप्रयोजकीभूतैर्ब्राह्मणादिकर्तृकैर्यागैरिष्टं भावयेदिति वाक्यार्थो बोध्यः ॥ २ ॥

## (३)--आधानेऽसर्वशेषत्वात् ॥ ४ ॥

"वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः" इति

---

क्षत्रियैकपरमिति भ्राम्यतः पूर्वव्याख्यातुः यथाभ्रममेव व्याख्याय वार्तिकविरोधान्मूलोक्तिः प्रौढिवादमात्रमित्युक्तिः स्वप्रौढिमेव प्रकाशयति । पूर्ववाक्ये अभिषिक्तानभिषिक्तेत्यस्यास्मिन् वाक्ये अभिषिक्तेत्यस्य क्षत्रियविशेषणत्वेन मूलकृतोपात्तस्य स्वरसस्यापरामर्शात् । एक-प्रयोगपक्षे दक्षिणाविचार एकादशे करिष्यते । सिद्धान्ते फलितं वाक्यार्थमाह— **यदिशब्दश्चेति** ॥ तात्पर्यग्राहक इत्यग्रेणान्वयः ॥ **प्रयोज्यत्वेति** ॥ "हेतुहेतुमतोर्लिङ्" इत्यनुशासनस्थहेतुमत्पदस्य कार्यपरतया प्रकृते ब्राह्मणादिकर्तृकप्रयोगाणां साक्षादभि-घारणजनकत्वाभावेन प्रयोजकत्वे पर्यवसानादिति भावः । आख्यातद्वयैकवाक्यताप्रकारं दर्शयति—**मध्ये इति** ॥ पञ्चहविर्मध्ये इत्यर्थः । मध्ये निधानं कृत्वाभिघारये-दित्यर्थः । ततश्च मध्येनिधानपूर्वकप्रत्याहुत्यभिघारणप्रयोजकीभूतब्राह्मणादिकर्तृकयागैरन्नाद्यं भावयेदिति वाक्यार्थ इत्यर्थः । ननु यदि ब्राह्मण इत्यादेः प्रापकत्वे निमित्तार्थत्वे च बहिरवेष्टि त्रयाणामपि वर्णानां कर्तृत्वान्न फलभेद इति चेन्न ; राजसूया-न्तर्गतावेष्टौ पूर्वपक्षे त्रयाणां वर्णानां कर्तृत्वं सिद्धान्ते क्षत्रियस्यैवेति फलभेदात् । एवं राजसूयमेव विषयीकृत्य राजशब्दार्थनिर्णयस्य कर्तुं शक्यत्वेऽप्यध्यायसङ्गतये प्रयोगभेदव्युत्पादनायावेष्टिवाक्यमुदाहृतमिति द्रष्टव्यम् ॥

सूत्रार्थस्तु—**अवेष्टिवाक्ये** "यदि ब्राह्मणो यजेत" इत्यादिकं ब्राह्मणादिकर्तृक-प्रयोगान्तरप्रधानं स्यात् । एकस्यैव क्षत्रियस्य राजसूय**यज्ञसंयोगादिति** ॥ २ ॥

**आधानेऽसर्वशेषत्वात्** ॥ इह प्राप्तार्थत्वान्निमित्तार्थमस्त्विति प्रत्यवस्थानात्सङ्गतिः । किं ब्राह्मणादीनामाधानोपनयनयोः प्राप्तानां वसन्तादिकालं प्रति निमित्तार्थानि श्रवणानि

श्रुतम् । तथा—“वसन्ते ब्राह्मणमुपनयीत । ग्रीष्मे राजन्यम् । शरदि वैश्यम्” इति च । तत्र सर्ववर्णसाधारणानां क्रतूनामग्निविद्यासाध्यत्वात् अग्नेश्च उपायभूतस्याधानस्य “य एवं विद्वानग्निमाधत्ते” इत्यनेनानन्याक्षिप्तशक्तिकेन अग्न्युद्देशेनाधानविधायिना प्राप्तत्वादाधाने ब्राह्मणादीनां प्राप्तेर्निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः काल आधानाङ्गत्वेन विधीयते । अथवा अस्त्वेतस्य ‘अथ

---

उत प्रापकाणीति संशयः ॥ **सर्ववर्णेति** ॥ “यजेत स्वर्गकामः” इत्यादिशास्त्रप्रतिपादितस्वर्गकामनायाः सर्ववर्णसाधारण्यात् “अनधीयाना व्रात्या भवन्ति” इति वचनेनाध्ययनाभावे प्रत्यवायश्रवणाच्चाध्ययनमपि सर्ववर्णसाधारणमिति क्रतोस्तत्साधनविद्यायाश्च सर्ववर्णसाधारण्यमित्यर्थः । यद्वा स्वर्गकामत्वाविशेषात् शूद्रस्यापि यज्ञाधिकारोऽस्तीति तात्पर्येण क्रतूनामेव सर्ववर्णसाधारण्यमुक्तम्, न तु वेदस्यापीत्यर्थो द्रष्टव्यः । नन्वाधाने ब्राह्मणादीनामप्राप्तत्वात् कथं निमित्तार्थता ब्राह्मणादिश्रवणस्येत्यतः प्राप्तिमुपपादयति—**अग्निविद्येति** ॥ स्वर्गकामादिवाक्यैः यावज्जीवादिवाक्यैश्च सर्ववर्णानां क्रत्वधिकारे सिद्धे क्रतूनामग्निविद्यासाध्यत्वादर्थापत्त्या अग्निविद्याक्षेपेणाग्निविद्ययोरपि सर्ववर्णसाधारण्यात् ब्राह्मणादिप्राप्त्या निमित्तत्वं संभवतीत्यर्थः । ननु ‘वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः’ इति प्रत्यक्षविधिभिः आधानविधानादाधानस्यार्थप्राप्तिरयुक्ता । ततश्च न क्रतुविधीनां सर्वसाधारण्यं युक्तमित्यत आह—**य एवं विद्वानिति** ॥ ततश्च वसन्तादिवाक्यस्य कालकर्तृविशेषरूपानेकगुणश्रवणेन तद्विशिष्टाधानविधायकत्वे गौरवापत्तेर्विद्वद्वाक्यमेवाधानविधायकम् । तत्र विधेयान्तराभावेनानन्याक्षिप्तशक्तित्वात् । ततश्चाधानस्यापि सर्ववर्णसाधारण्यात् क्रतुविधीनां सर्ववर्णसाधारण्यं युक्तमिति भावः । इदमुपलक्षणम् । ‘यत्रैधाग्निराधीयते तदैव श्रद्धोपनमेत्, अथादधीत’ इति विधिसत्त्वेनाधानप्राप्तिरिति द्रष्टव्यम् । ततश्च विद्वद्वाक्येनाग्न्युद्देशेनाधानविधानेन ब्राह्मणादीनां प्राप्तत्वात् ब्राह्मणादिकर्तृकत्वे निमित्ते वसन्तादिविधिः सम्भवतीत्यर्थः । नन्वाधानस्योद्देश्यत्वात् कालस्यानुपादेयतया विधेयत्वाभावेन उद्देश्यत्वावश्यकतया ब्राह्मणादिनिमित्तस्याप्युद्देश्यतया उद्देश्यत्रयसन्निपातादुद्देश्यानेकत्वप्रयुक्तवाक्यभेदः स्यादिति चेन्न ; आधानस्येप्सितत्वाख्योद्देश्यत्वात् कालोद्देशेनाधानोपपादनेऽपि अनुवाद्यविधेयत्वे आधानकालगते एवेति विजातीयानेकोद्देशान्न वाक्यभेद इत्याशयात् ॥ **विधीयत इति** ॥ प्राप्त्यप्राप्तिभ्यामिति भावः । कालस्य निमित्ताधीनानुष्ठानविषयत्वाभावेऽपि निमित्तान्वयव्यतिरेकानुविधाय्यधिकरणताकत्वा-

सम्भारान् सम्भरति' इति विध्यन्तरशेषस्य वर्तमानापदेशता । तथापि 'सम्भारेष्वग्निमादधाति' इत्ययमाधानप्रापको विधिः । अत्र हि न सम्भारा विधेयाः; प्रमाणान्तरप्राप्तत्वात् । नापि तदधिकरणत्वम्, 'तस्मिन्नाधीयतामयम्' इति मन्त्रवर्णादेव प्राप्तत्वात् । अत आधानमात्रविधिरयम् । अथ वा—प्राप्ताधानानुवादेन कालविधिः आत्मनेपदार्थस्य अनाधातुराहवनीयत्वाभावरूपस्य च विधिरिति

---

नैमित्तिकत्वोपपत्तिरिति द्रष्टव्यम् । वसन्तादिकाले निमित्ते ब्राह्मणादिकर्तृकतानियमविधिरप्यत्र द्रष्टव्यः । वसन्ते चेत् ब्राह्मण एव कुर्यादित्यादिरीत्या विध्यर्थः । तेन हेमन्तस्य ग्रीष्मेण सह विकल्पात् वर्षासु रथकारस्य विधानादवशिष्टस्य शिशिरस्य सार्ववर्णिकत्वं कल्पोक्तं युज्यते । ब्राह्मणश्चेत् वसन्त एवेत्युक्तौ तु न तत्सिध्येत् । ननु विद्वद्वाक्ये यच्छब्देन विधिशक्तिप्रतिबन्धान्नाधानविधिसम्भव इत्यस्वरसादाह— **अथ वेति** ॥ **एतस्य**—विद्वद्वाक्यस्य ॥ **विध्यन्तरेति** ॥ एवं "समस्तसम्भारस्थापनपूर्वकं यो विद्वानग्निमाधत्ते स सहायसम्पन्नमपि भ्रातृव्यं दूरीकुरुते" इति वाक्यान्तरैकवाक्यतया संम्भारस्थापनप्रशंसारूपत्वान्नास्य विधित्वमिति भावः । "नक्तं गार्हपत्यमादधाति । दिवा आहवनीयम्" इति कालविध्युद्देश्यत्वान्यथानुपपत्त्या आधानप्राप्तिरिति मिश्राः । 'आहितोऽग्निराहवनीयः' इत्यर्थवशादाहवनीयादेराधानजन्यत्वावगतिरिति भवदेवः । तदुभयस्य क्लिष्टत्वमभिप्रेत्य टुप्टीकोक्तपक्षमाह—**सम्भारेष्विति** ॥ सिकताः, ऊषाः, आखूत्करः, वल्मीकवपाः, सूदः, वराहविहतं, पुष्करपर्णं, शर्कराः, राजतसौवर्णशकलानि, अथ वानस्पत्याः, अश्वत्थः, औदुम्बरः, पलाशः, शमी, वैकङ्कतः, अशनिहतः, चित्रीयाश्वत्थः, समिधः, मुञ्जकुलाय, इति सम्भाराः । अत्राप्यधिकरणताविशिष्टाधानविधिरिति न्यायसुधायामुक्तम् । ननु सम्भारवाक्ये सम्भारमात्रविधिसम्भवान्नाधानविधायकत्वमित्यत आह— **अत्र हीति** ॥ **प्रमाणान्तरेति** ॥ 'अथ सम्भारान् सम्भरति' इति वाक्यप्राप्तत्वेनास्मिन् वाक्ये विधिवैयर्थ्यादित्यर्थः । ननु तेन वाक्येन सम्भारप्राप्तावपि सम्भाराणामधिकरणत्वस्य तद्वाक्येनाप्राप्तत्वादधिकरणविधिरस्त्वित्यत आह—**तस्मिन्निति** ॥ सम्भारसमुदाय इत्यर्थः । तथा च मन्त्रवर्णगतसप्तम्या सम्भाराणामधिकरणत्वस्यापि प्राप्तत्वात्तदपि न विधेयमित्यर्थः । अतः परिशेषादाधानमात्रविधिरयं 'सम्भारेष्वग्निमादधाति' इति विधिरित्यर्थः । वसन्तवाक्यस्य कालपरत्वे दोषप्रतिपादनपूर्वकं प्रकारान्तरेण पूर्वपक्षमाह—**अथ वेति** ॥ **अनाधातुरिति** । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति स्मृत्या आधानजन्यमाहवनीयत्वादिकं फलमाधातुरेव

वाक्यभेदापत्तेः 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्ययमाधानप्रापको विधिः। उक्तवाक्ये तु अभ्युदयशिरस्कतया मन्त्रवर्णात्पूर्वमेवाधिकरणत्वविधिः। एवं च जातपुत्रवाक्ये वयोऽवस्थाविशेषलक्षणापि नापद्यते। सर्वथा आधानप्राप्तेर्निमित्तार्थानि ब्राह्मणादिश्रवणानि न भेदकानि। तथा विद्यासाधनतया अध्ययनं तत्साधनत्वेनोपनयनं चार्थप्राप्तम्। अध्ययनस्य तु "स्वाध्यायोऽध्येतव्यः" इत्यनेन नियमोऽपि, अतः सर्वसाधारण्येन प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालो विधीयते इति प्राप्ते—

---

न त्वनाधातुः, तेनाधानं विना क्रयादिभिरग्नीनां सम्पादनेऽपि लौकिकज्वलनत्वावच्छेदेनैव स्वत्वोत्पत्तिः नाहवनीयत्वावच्छेदेन। अतस्तस्मिन्नग्नौ साङ्गैरपि परेण कृतैः क्रतुभिर्न फलोत्पत्तिरिति सिद्धान्तः। सम्भारवाक्ये चात्मनेपदाभावात् अग्निष्वाधातृभिन्नस्वत्वाभावोऽपि वसन्तवाक्येनैव विधेयः स्यात्। अतस्तद्विशिष्टाधानविध्यन्तरमेव प्रदर्शयति—**जातपुत्र इति**॥ अत्रान्यतः प्राप्ताधानोद्देशेन जातपुत्रत्वाद्यनेकगुणविधाने वाक्यभेदात् अर्धमन्तर्वेदि इत्यत्रेव वयोऽवस्थाविशेषे लक्षणामाश्रित्य तादृशकर्तृविशेषविधिर्वाच्यः। तदपेक्षया सकलगुणविशिष्टाधानविधानमेव युक्तमित्याह—**जातपुत्र इति**॥ ननु जातपुत्रवाक्यस्याधानविधायकत्वे सम्भारवाक्यं व्यर्थं स्यादित्यत आह—**उक्तवाक्य इति**॥ सम्भारेष्विति वाक्य इत्यर्थः। ननु तस्मिन्नाधीयतामिति मन्त्रवर्णादधिकरणत्वस्यापि प्राप्तत्वान्न तद्विधिसम्भव इति व्यर्थत्वं तद्वाक्यस्य दुर्वारमित्यत आह—**मन्त्रेति**॥ मन्त्रवर्णात्पूर्वं वचनप्रवृत्तिसम्भवादित्यर्थः। पूर्वप्रवृत्तेः फलमाह—**अभ्युदयशिरस्कतयेति**॥ प्रत्यक्षवचनमन्त्रवर्णाभ्यामधिकरणत्वं विधीयत इति ज्ञानेनापूर्वं कल्प्यत इति भावः। जातपुत्रवाक्ये आधानविधाने उपपत्त्यन्तरमप्यस्तीत्याह—**एवञ्चेति**॥ जातपुत्रवाक्ये पूर्वोक्तरीत्या वयोऽवस्थाविशेषलक्षणाभावाल्लाघवमस्मिन् पक्ष इत्यर्थः। उपसंहरति—**सर्वथेति**॥ विद्वद्वाक्येन सम्भारवाक्येन जातपुत्रवाक्येन वा आधानस्य प्राप्तत्वान्निमित्तार्थानि ब्राह्मणादिश्रवणानीति पूर्वपक्ष इत्यर्थः। एवं विद्याया अपि सर्ववर्णसाधारण्यमुपपादयति—**तथेति**॥ 'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायविधेः सर्वसाधारण्यात् तस्य चाध्ययनसाध्यत्वात् अध्ययनस्य गुरूच्चारणानूच्चारणरूपत्वात् तस्यापि 'तमध्यापयीत' इत्यनेनोपनीताधिकारकत्वात् अध्ययनविधिनैव सर्ववर्णसाधारणेनाक्षेपप्राप्तत्वात् तत्र ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालो विधीयत इति तत्रापि न कर्मभेद इति पूर्वः पक्षः॥

सर्वकर्तृत्ववत् सर्वकालकत्वस्याप्याधानादौ प्राप्तिसम्भवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधिः, काले वा निमित्ते कर्तृविधिरित्यत्र विनिगमनाविरहात् उभयविशिष्टाधानविधिरेव । उपनयनस्य च पक्षेऽप्यसम्भवत्प्राप्तिकत्वेन सुतरां विध्युपपत्तिः । अत एव विनिगमनाविरहात् कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविध्यापादकत्वावश्यम्भावे एतद्विधिविहितप्रयोगानुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधिः । आत्मनेपदार्थस्य चोत्पत्त्याद्यन्वयिनो गुणस्य श्रवणात् उत्पत्त्यादिकमप्यत्रैव; न तु जातपुत्रादिवाक्ये, वाक्यभेदापत्तेः । प्राथम्याद्वा ब्राह्मणवाक्य एवोत्पत्त्यादि । इतरयोस्तु प्रयोगमात्रम् । तेन सिद्धोऽत्रापि गुणात्प्रयोगभेदः । एतयोश्चाधानोपनयनयोरग्निविद्याफलकत्वेऽपि अकरणे प्रत्यवायादिश्रवणान्नित्यत्वमपि । एवं च स्वविधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे

---

सिद्धान्तमाह—**सर्वेति** ॥ **विनिगमनाविरहात्** ब्राह्मणकर्तृकत्वे निमित्ते वसन्तादिविधिर्वा काले निमित्ते कर्तृविधिर्वेति विनिगमनाविरहात् वसन्तादिकालब्राह्मणादिविशिष्टाधानविधिरेव वसन्तवाक्य इत्यर्थः । अध्ययनविध्यन्यथानुपपत्त्या उपनयनस्य सम्भवत्प्राप्तिकत्वेन 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायेन न विधेयत्वम् । तस्मात् कर्तृकालादिरूपप्रयोगान्वयिगुणसत्त्वात् प्रयोगभेद एव । ततश्च एतद्विधिविहितप्रयोगानुवादेन जातपुत्रादिवाक्ये वयोऽवस्थाविशिष्टकर्तृविधिः, आत्मनेपदार्थस्य पूर्वोक्तस्योत्पत्त्यन्वयित्वात् उत्पत्तिरप्यत्रैव । जातपुत्रवाक्ये तद्विधाने वाक्यभेदापत्तेः । **उत्पत्त्यादिकमपी**त्यनेनाधानानां स्वरूपतोऽपि भेद उक्तः । आदिना विनियोगप्रयोगयोः सङ्ग्रहः । गौरवादितरवाक्ययोः प्रयोगमात्रभेदो युक्त इत्याह—**प्राथम्याद्वेति** ॥ ततश्च गुणात्प्रयोगभेद एवायमित्युपसंहरति—**तेनेति** ॥ आधानोपनयनयोर्नित्यत्वं साधयति—**एतयोरिति** ॥ नन्वग्निविद्याफलत्वादेतयोः काम्यत्वमेव न नित्यत्वमित्यत आह—**अकरण इति** ॥ "नानाहिताग्निर्म्रियेत" "अनधीयाना व्रात्या भवन्ति" इत्यादिवचनैरित्यर्थः । अपशूद्राधिकरणं प्रयोजनकथनार्थमित्याह—**स्वविधीति** ॥ ततश्च पूर्वोक्तवचनाभ्यामाधानाध्ययनयोर्नित्यतया तद्विधिसिद्धाग्निविद्यावतामेव क्रतुविधिभिर्ग्रहणात् सर्वक्रतुविधीनामधिकारिसम्पत्तेर्नाक्षेपसिद्धाग्निविद्यावतां शूद्राणामधिकार इत्यपशूद्राधिकरणे वक्ष्यत इत्यर्थः ॥

सूत्रार्थस्तु—**आधाने**—विषये वसन्तादिवाक्यं प्रापकमेव, **असर्वशेषत्वात्**—आधानस्य कञ्चिदपि क्रतुं प्रति शेषत्वाभावेन क्रतुविधिभिराक्षेपतः प्राप्त्यभावादिति ॥३॥

क्रतुविधयः नाग्निविद्ये तदुपायान्वा प्रयुञ्जत इति न तद्रहितस्य शूद्रादेरधिकार इति प्रयोजनं षष्ठे वक्ष्यते ॥ ३ ॥

**(४)—अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥ अगुणा च कर्मचोदना ॥ ६ ॥ समाप्तं च फले वाक्यम् ॥ ७ ॥ विकारो वा प्रकरणात् ॥ ८ ॥ लिङ्गदर्शनाच्च ॥ ९ ॥ गुणात्संज्ञोपबन्धः ॥ १० ॥ समाप्तिरविशिष्टा ॥ ११ ॥**

दर्शपूर्णमासयोः "दाक्षायणयज्ञेन स्वर्गकामो यजेत"[1] इति श्रुतम् । तथा "साकंप्रस्थायीयेन यजेत पशुकामः"[2] इति च । तत्र दाक्षायणादिपदवाच्यस्य गुणस्य लोके अप्रसिद्धत्वात् उद्भिदादिवन्नामधेयत्वावगतेः संज्ञया अभ्यासाद्वा कर्मान्तरं विधीयते ; फलसम्बन्धस्यापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेनान्यपरत्वाभावादिति प्राप्ते—

---

**अयनेषु चोदनान्तरं संज्ञोपबन्धात्** ॥ वसन्तादिवाक्येष्वाधानमिवात्रापि कर्मान्तरं विधेयमिति प्रत्यवस्थानात्सङ्गतिः । दर्शपूर्णमासयोः श्रूयते 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इति । तथा 'साकंप्रस्थायीयेन यजेत पशुकामः' इति । तत्र संशयः, किं कर्मान्तरविधी एतौ उत गुणफलसम्बन्धविधी इति । तत्र पूर्वपक्षमाह— **दाक्षायणेति** ॥ दधिसोमादिपदानामिव गुणे प्रसिद्ध्यभावादित्यर्थः । यजिसामानाधिकरण्येनोद्भिदादिपदवत्संज्ञात्वनिश्चयात्संज्ञया "अथैष ज्योतिः" इतिवत् "समिधो यजति" इत्यादिवत् अभ्यासाद्वा कर्मभेद इत्यर्थः । न च संज्ञात्वनिश्चयो वा कथमिति वाच्यम् । 'पयसा प्रवर्ग्येण चरन्ति, पयसा दाक्षायणयज्ञेन' इत्यादिश्रुत्यन्तरे कर्मनामधेयप्रवर्ग्यपदप्रायपाठादप्रसिद्धस्य प्रसिद्धयजिसामानाधिकरण्येन शक्तिग्रहात् संज्ञात्वनिश्चयादिति भावः । ननु स्वर्गकामपदसमभिव्याहारेण स्वर्गोद्देशेन यागविधिसम्भवेन विधेरन्यपरत्वेनाभ्यासस्वरूपं न संभवतीति कथमभ्यासात्कर्मभेद इत्यत आह— **फलसम्बन्धस्यापीति** ॥ **सार्वकाम्येति** ॥ 'सर्वेभ्यो दर्शपूर्णमासौ' इति वाक्येन सर्वफलार्थत्वावगमेन सर्वान्तर्गतस्वर्गार्थत्वस्यापि प्राप्तत्वेन फलसम्बन्धस्याप्यविधेयत्वादित्यर्थः । ननु 'सर्वेभ्यो दर्शपूर्णमासौ' इति वाक्येन दर्शपूर्णमासयोः सर्वफलार्थत्वावगमेऽपि दाक्षायणयज्ञस्य तेन वाक्येन सर्वफलार्थत्वानवगमात् कथमनन्यपरत्वमिति

---

१. तै. सं. २–५–५. २. तै. सं. २–५–४.

अभिधीयते—यद्यपि लोके गुणो न प्रसिद्धः ; तथापि दक्षस्य यजमानस्य इमे दाक्षाः ऋत्विजः, तत्कर्तृकमयनं प्रयोगावृत्तिर्यस्य यज्ञस्येति व्युत्पत्त्या आवृत्तिपरत्वावगतेः, साकं सह प्रस्थानं यत्रेति व्युत्पत्त्या च सहत्वपरत्वावगते- र्नातिरिक्तशक्तिकल्पनया नामधेयत्वाध्यवसानम् । अतोऽप्राप्तावृत्तिरूपः सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते । आवृत्तिश्च कियतीत्यपेक्षायां 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत' इति वाक्येन विशेषविधानात् द्विरावृत्तिरेव । सहत्वं च प्रस्थाने केनेत्यपेक्षायां 'सह कुम्भीभिरभिक्रामेत्' इति वचनात्कुम्भीभ्याम् ।

---

चेन्न । 'द्वे पौर्णमास्यौ द्वे अमावास्ये' इति वाक्यशेषेण दाक्षायणपदवाच्यस्य यज्ञस्य दर्शपूर्णमाससंज्ञावगमेन दर्शपूर्णमासप्रकरणविहितदाक्षायणयज्ञस्यापि सर्वफलार्थत्व- सम्भवादित्यभिमानात् । ततश्चाभ्यासात्कर्मान्तरसिद्धिरिति पूर्वपक्षो युक्त एवेति भावः ॥

सिद्धान्तमाह—**यद्यपीति** ॥ यजिसामानाधिकरण्येऽपि यागे रूढिर्न कल्पनीया, गौरवात् ; अवयवार्थत्वासम्भवे हि रूढिकल्पनम्, अवयवार्थत्वसम्भवे तु क्लृप्तावयव- शक्तिभिरेव प्रयोगप्रत्यययोरुपपत्तेः । अन्यथा प्रोक्षण्यधिकरणविरोधापत्तेः । ततश्च प्रकृते क्लृप्तावयवयोगेनोपपत्तेर्न संज्ञया कर्मभेद इत्यर्थः । फलाय गुणविध्युपपत्तये अवयवयोगेन गुणे प्रसिद्धिमुपपादयति—**दक्षस्येति** ॥ दक्षस्य उत्साहिनो यजमा- नस्येमे दाक्षाः ऋत्विजः, तेषामयनम् आवृत्तिः, आवृत्तितद्वतोरभेदोपचाराद्यज्ञशब्द- सामानाधिकरण्यनिर्वाहः । ततश्च दक्षयजमानसम्बन्धिऋत्विक्कर्तृकावृत्त्यात्मकयज्ञ इत्यवयवव्युत्पत्त्या आवृत्तिपरत्वसम्भवेन लोहितोष्णीषादिवदावृत्तेः फलोद्देशेन विधिसम्भवात् गुणविधिरेवायमिति नापूर्वकर्मकल्पनागौरवमङ्गीकार्यमिति भावः । साकंप्रास्थायीयपदस्य गुणपरत्वमुपपादयति—**साकमिति** ॥ साकमित्यस्य विवरणम्— **सहेति** ॥ **प्रस्थानं**—गमनं यत्र कर्मणीति व्युत्पत्त्या साकंप्रस्थायिशब्दो गमन- वाची, तत्सम्बन्धित्वात् साकंप्रस्थायीत्यादिवाक्यशेषप्रसिद्धया सहप्रस्थानरूपगुण- वचनत्वात् फलायावृत्तिसहप्रस्थानरूपगुणविधिरित्यर्थः । तत्रावृत्तेर्द्वित्वादिपरार्धपर्यन्त- बोधकत्वेनानुष्ठानासम्भवात् कियत्यावृत्तिरित्याकाङ्क्षा भवति । तन्निवृत्त्यर्थं वाक्य- शेषादेव निर्णय इत्याह—**आवृत्तिश्चेति** ॥ तथा च वाक्यशेषेण द्विरावृत्तिः प्रकृतदर्श- पूर्णमासावाश्रित्य फलोद्देशेन विधीयत इत्यर्थः । तथा प्रस्थानं केनेत्यपेक्षायां 'सह कुम्भीभिरभिक्रामेत्' इति वचनेन कुम्भीभिः सहत्वमित्यवगम्यते । ततश्चाभिक्रमण- माश्रित्य फलोद्देशेन सहत्वविधानादत्रापि गुणविधिरित्यर्थः । ततश्चोक्थ्यव्यूढादिवाक्य-

अनेनैव च वचनेन सहत्वाश्रयत्वमभिक्रमणस्य विदधता अवान्तरप्रकरणाभावेऽपि तस्याश्रयत्वसिद्धिः । आवृत्तेस्तु प्रकरणाद्दर्शपूर्णमासावेवाश्रयः । अतोऽत्र संज्ञात्वाभावात् गुणफलसम्बन्धपरत्वेन चाभ्यासाभावान्न कर्मान्तरम् । वस्तुतस्तु, 'पूर्वपदात्संज्ञायामगः'[1] इति स्मृत्या संज्ञात्वाभावे णत्वानापत्तेर्दाक्षायणयज्ञपदे संज्ञात्वावश्यम्भावेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकारादवयवार्थरूपावृत्तिरप्राप्तत्वात् फलोद्देशेन विधीयत इति न विरोधः ॥ ४ ॥

द्वयवत् प्रकृतेऽप्येकेन स्वरूपस्यान्येन फलसम्बन्धस्य बोधनात् सर्ववाक्यानां सार्थक्यमिति भावः । नन्वेवं सहत्वस्य फलसम्बन्धः अभिक्रमणरूपाश्रयसम्बन्धश्च विधेय इति वाक्यभेद इत्यत आह—**अनेनेति** ॥ सहशब्दस्य निपातत्वेन तदर्थस्य निरूपकतासम्बन्धेन तृतीयान्तार्थेऽन्वयव्युत्पत्तेः अभिक्रमणोद्देशेन साहित्यनिरूपककुम्भीनां विधानेऽपि न विधेयानेकत्वकृतो वाक्यभेदः । ततश्च कुम्भीसाहित्याश्रयत्वमभिक्रमणस्य फलतीत्यभिप्रायेण विदधतेत्युक्तम् । विशिष्य च सहत्वस्य कुम्भीबहुत्वस्य दाक्षायणपदार्थावृत्त्यादेश्च विचारस्त्रयोदशे तृतीयपादे स्पष्टः । दाक्षायणपदार्थावृत्तेः फलसम्बन्धमुपपादयति—**आवृत्तेस्त्विति** ॥ दाक्षायणवाक्यस्य दर्शपूर्णमासप्रकरणपाठाद्दर्शपूर्णमासावाश्रित्य स्वर्गोद्देशेनावृत्तिर्विधीयत इत्यर्थः ॥ **संज्ञात्वाभावादिति** ॥ अवयवव्युत्पत्त्यैवोपपत्तौ गौरवान्न रूढिकल्पनमिति भावः । संज्ञया कर्मभेदो न भवतीत्युक्त्वा अभ्यासादपि कर्मभेदो नास्तीत्याह—**गुणफलेति** ॥ ततश्चानन्यपरविधिपुनःश्रवणाभावादभ्यासासिद्ध्या नाभ्यासादपि कर्मभेद इति भावः । संज्ञात्वेऽपि कर्मभेद इत्याह—**वस्तुत इति** ॥ **पूर्वपदादिति** ॥ पूर्वपदस्थान्निमित्तात् परस्योत्तरपदगतनकारस्य णकारः स्यादिति सूत्रेण संज्ञायां णत्वविधानेऽपि संज्ञात्वाभावे णत्वानुपपत्तेरित्यर्थः । नन्वेवं संज्ञात्वाङ्गीकारे संज्ञया कर्मभेदः स्यादित्यत आह—**अवयवार्थेति** ॥ निर्मन्थ्यपदवत् संज्ञात्वेऽपि यौगिकार्थप्रतिपादकत्वाक्षतेर्योगार्थावृत्तिविधानोपपत्तेर्न गौरवापादककर्मभेदपरत्वमिति भावः ॥ **योगरूढिस्वीकारादिति** ॥ अनेन प्राचीनप्रयोगबलेनातिप्रसङ्गवारणं कृत्वा योगरूढिः कुत्रापि न स्वीकार्येत्युक्तिः प्रौढिवादमात्रमिति स्पष्टम् । अत्र मणिकृतः आवर्तनरूपगुणस्यैवेयं संज्ञा उत्तरायणशब्दवदिति संज्ञात्वेऽपि न कर्मभेदप्रसक्तिरित्याहुः ॥

सूत्रार्थस्तु—**अयनेषु**—दाक्षायणादिवाक्येषु **संज्ञोपबन्धात्कर्मभेदस्स्यादिति** ॥४॥

१. पा. सू. ८-४-३.

**(५)---संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥**

"ईषामालभेत" "चतुरो मुष्टीन्निर्वपति" इत्येताभ्यां विहितयोर्दर्शपूर्णमासिकयोरीषालम्भचतुर्मुष्टिनिर्वापयोरनुवादेन अनारभ्याधीताभ्यां 'वायव्यं श्वेतमालभेत भूतिकामः'[1] 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्येताभ्यां श्वेतचरुगुणौ विधीयेते—आलम्भकर्मीभूता ईषा श्वेता कर्तव्येति, निर्वापः चरुशब्दलक्ष्यस्थाल्यां कर्तव्य इति । सर्ववृक्षाणां च वायुसम्बन्धात् वायव्यमित्यनुवादः । सौर्यमिति चाग्नेयस्यैव तेजोदेवत्यत्वसामान्यात् । न तु देवताविधिः । यागाश्रवणात् ।

---

**संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्** ॥ **ईषा**—निर्वापार्थशकटावयवदीर्घदारुविशेषः । दर्शपूर्णमासयोः श्रूयते 'ईषामालभेत' इति । तथा "चतुरो मुष्टीन् निर्वपति" इति । तथा अनारभ्य श्रूयते "वायव्यं श्वेतमालभेत भूतिकामः" "सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः" इति । तत्र संशयः । किं दार्शपूर्णमासिकयोः ईषालम्भमुष्टिनिर्वापयोः श्वेतचरुगुणौ विधीयेते, किं वा कर्मान्तरे यावदुक्ते निर्वपणमालम्भनं च गुणफलविशिष्टे, किं वा यागविधानमुभयत्रेति । पूर्वत्र कर्मणः सन्निहितत्वात् फलाय गुणविधिः, इह त्वनारभ्यविधानात् प्रकरणादाश्रयलाभाभावेन फलाय गुणविध्यसम्भवात् कर्मणि गुणविधिः गुणविशिष्टकर्मान्तरविधिर्वा स्वीकार्य इति प्रत्यवस्थानात् सङ्गतिरित्यना**रभ्याधीताभ्या**मित्यनेन सूचितम् । तत्र पूर्वपक्षमाह—**दार्शपूर्णमासिकयोरिति** ॥ ततश्च दार्शपूर्णमासिकेषालम्भमुष्टिनिर्वापानुवादेन वायव्यवाक्येन सौर्यवाक्येन च श्वेतपशुद्रव्यं चरुद्रव्यं च विधीयत इत्यर्थः । अनारभ्याधीतानां प्रकृतिगामित्वादित्यभिमानः । तदर्थमाह—**आलम्भकर्मीभूतेति** ॥ श्वेतवर्णामीषां कृत्वा आलभेतेत्यर्थः । एवं निर्वापश्चरुशब्दलक्ष्यस्थाल्यां कर्तव्य इत्यर्थः । चरुमिति द्वितीयायाः सप्तम्यर्थे लक्षणेति भावः । ननु वायव्यपदानन्वय इत्यत आह—**सर्ववृक्षाणामिति** ॥ सौर्यमित्यनेनाग्नेयानुवादः ; तेजोदेवत्यत्वसादृश्येन गौणीसम्भवादित्यर्थः । उभयत्र फलपदं सार्व-

---

१. तै. सं २-१-१.

उभयत्रापि फलपदं सार्वकाम्यवाक्यप्राप्तफलप्रयोजकत्वानुवाद इति प्रथमः पक्षः। द्वितीयस्तु फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन च गुणफलसम्बन्धानुपपत्तेर्गुणविशिष्टं यावदुक्तमालम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयत इति ॥

सिद्धान्तस्तु—वायव्यं सौर्यम् इत्यादितद्धितान्तपदवैयर्थ्यापत्तेर्द्रव्यदेवतासम्बन्धानुमितो याग एवालभतिनिर्वपतिधातुलक्षितो द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयत इति। अतिदेशप्राप्तौ चालम्भनिर्वापौ न विधीयेते ॥ ५ ॥

**(६)--विशये प्रायदर्शनात् ॥ १६ ॥ अर्थवादोपपत्तेश्च ॥ १७ ॥**

यत्र तु न देवताश्रवणं तत्र न यागकल्पना, अपि तु संस्कारमात्रविधानम्।

---

काम्यवाक्यप्राप्तफलसम्बन्धानुवाद इत्याद्यः पक्षः ॥ **फलपदेति** ॥ भूतिकामः ब्रह्मवर्चसकाम इति पदयोः सार्वकाम्यवाक्यप्राप्तानुवादत्वाङ्गीकारे तस्य प्रयोजनाभावेन फलपदवैयर्थ्यापत्तेरित्यर्थः। इदमुपलक्षणम्। वायव्यपदसौर्यपदयोरपि वैयर्थ्यादित्यपि बोध्यम् ॥ **आश्रयालाभेनेति** ॥ वायव्यसौर्यवाक्ययोरनारभ्याधीतत्वेन प्रकरणादाश्रयालाभादित्यर्थः। न च पर्णतान्यायेन प्रकृतौ निवेश इति वाच्यम्, द्विरुक्तिदोषाभावेन प्रकृतौ निवेशासम्भवात् ॥ **यावदुक्तमिति** ॥ सूर्यदेवताचरुविशिष्टनिर्वापः वायुदेवताश्वेतद्रव्यविशिष्टालम्भमात्रं फलोद्देशेन विधीयत इति द्वितीयः पक्षः। न चाग्नेयवाक्येऽपि यावदुक्तं कर्म स्यान्न यागविधिरिति वाच्यम्। तत्र पुरुषव्यापाराश्रवणेन विधिसिद्ध्यर्थं पुरुषव्यापारापेक्षायां द्रव्यदेवतासम्बन्धनिर्वाहाय यागकल्पनावश्यकत्वात्। इह त्वालम्भनिर्वापरूपपुरुषव्यापारस्य सत्त्वेन यावदुक्तविधानोपपत्तेः ॥ **तद्धितान्तेति** ॥ वाक्यद्वयेऽपि वायव्यमिति सौर्यमिति देवतातद्धितश्रवणात् द्रव्यदेवतासम्बन्धस्य यागैकनिर्वाह्यत्वात् द्रव्यदेवतासम्बन्धानुमितो याग एव वाक्यद्वयेऽपि विधेय इत्यर्थः। ततश्च निर्वपतिना आलभतिना च यागो विधीयत इति भावः। आलम्भनिर्वापौ च चोदकप्राप्तावनूद्येते इति न दोषः ॥

सूत्रार्थस्तु—**अप्रकरणे**—अनारभ्यश्रुते वायव्यादिवाक्ये दार्शपौर्णमासिकः **संस्कार** एवानूद्यते न तु यागो विधीयते **कर्मणो** यागस्य **शब्दा**भावादिति ॥ ५ ॥

**विशये प्रायदर्शनात्** ॥ ननु वायव्यवाक्यवत् अग्निहोत्रदोहाधिकारश्रुते 'वत्समालभेत' इत्यत्रापि यागविधिः स्यादित्यत आह—**यत्र त्विति** ॥ वायव्यवाक्ये द्रव्यदेवतासम्बन्धश्रवणात् आलभतेर्यागलक्षकत्वेऽपि प्रकृते देवतासम्बन्धाभावेन यागकल्पनं न

यथा—अग्निहोत्रे 'वत्समालभेत'[1] इत्यत्र आलम्भमात्रं वत्ससंस्कारकत्वेन विधीयते । आलभतेः स्पर्शमात्रवाचित्वात् ॥ ६ ॥

(७)-संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

अग्नौ श्रूयते 'चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवाराः'[2] इत्यत्र यजमानस्यान्नं बृहस्पतेः कथं स्यात् यदि न बृहस्पतिर्देवता इत्यर्थात् बृहस्पतेर्देवतात्वावगतेः, तैत्तिरीयशाखायां 'बार्हस्पत्यो भवति'[3] इति तद्धितपद-युक्तवाक्यशेषश्रवणाच्च द्रव्यदेवतासम्बन्धानुमितयागविधानमेवेदम् । तस्य चौषधद्रव्यकत्वेन आग्नेयातिदेशतः स्विष्टकृदादिप्रतिपत्तिप्राप्तौ 'चरुमुपदधाति' इत्यनेनोपधानं प्रतिपत्तित्वेन विधीयत इति प्राप्ते—

युक्तमित्यर्थः । ननु तर्हि वाक्यं व्यर्थं स्यादित्यत आह—**संस्कारमात्रेति** ॥ गोसमीप-स्थापनेन चाटूकरणार्थः स्पर्श इत्यर्थः । तथा च संस्कारविधिरेव वाक्यफलमित्यर्थः । ननु "'पूषासि' इति वत्समुपावसृजति" इति मन्त्रविधानेन मान्त्रवर्णिकदेवताप्राप्ति-सत्त्वाद्यागविधिः सम्भवतीति चेन्न ; अत्यन्तत्वेन लिङ्गाद्यभावेन देवतावाचित्वाभावात् । अदन्तकत्वसाम्येन वत्सस्य पूषपदेनाभिधानसम्भवेन देवतावाचित्वाभावात् । प्रयोजनं पूर्वपक्षेऽग्निहोत्राङ्गतया वत्सयागानुष्ठानम् । सिद्धान्ते दोहकाले वत्सालम्भमात्रम् ॥

सूत्रार्थस्तु—यागविधिः संस्कारविधिर्वेति सन्देहे यावदुक्तं संस्कारमात्रमेव विधेयं दोहनादिसंस्कारप्रायपाठादिति ॥ ६ ॥

**संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात्** ॥ अग्नौ श्रूयते **'चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवाराः'** इति । तत्र संशयः । किं यागविधिरुत उपधानमात्र-विधिरिति । पूर्ववैषम्येन प्रत्यवस्थानात्सङ्गतिः । ननु "नैवारश्चरुर्भवति" इति वाक्यं किमिति नोदाहृतमिति चेन्न "अक्ताः शर्करा उपदधाति" इत्यत्र अञ्जनसाधनघृतस्येव वैधचरुसाधनत्वेन नीवाराणां वाक्यशेषात्प्राप्तेः नैवारं चरुमुपदधाति इति विधिपर्यव-सानेन तद्विशेषणविधिसमानार्थकत्वात् प्रसिद्धवाक्योदाहरणमयुक्तमित्यभिप्रायात । ननु देवताभावेनारूपत्वात् कथं यागविधिरित्यतो देवताप्राप्तिमाह—**बृहस्पतेर्वा इति** ॥ यदि बृहस्पतिर्नीवारप्रकृतिकचरौ देवता न भवेत् तदा कथं बृहस्पतेर्नीवारा अन्नं भवेयुः ।

१. तै. सं. २-१-४.
२. तै. ब्रा. १-३-७.
३. तै. सं. ५-३-२.

यद्यपि तैत्तरीयशाखायां तद्धितश्रवणं तथापि विध्यभावात् विध्यन्तरैकवाक्यत्वभङ्गापत्तेश्च नायं देवतातद्धितः । 'चरुमुपदधाति' इत्यनेन च स्थण्डिलनिष्पादकचरुसंस्कारकतयोपधानविधानाद्देवतानाकाङ्क्षतया नार्थवादोन्नीतस्यापि देवताविधेः कल्पनम् । अत एव चर्वपेक्षितप्रकृतिद्रव्यस्यैव नीवाररूपस्य विधिकल्पनम् । अतश्च बृहस्पतेर्ब्राह्मणस्यान्नं नीवार इत्येवं स्तुत्युपपत्तेः न बृहस्पतेर्वा इत्ययं देवताकल्पनद्वारा यागकल्पक इति सिद्धम् ॥ ७ ॥

---

अतो देवतात्वं बृहस्पतेर्वक्तव्यमिति द्रव्यदेवतासम्बन्धात् यागविधिरित्यर्थः । ननु तद्धितचतुर्थीमन्त्रवर्णानामेव देवताप्रापकत्वेन प्रकृते तदभावात् कथं बृहस्पतेर्देवतात्वमित्यत आह—**तैत्तिरीयेति** ॥ किं चोपधानमात्रविधिस्वीकारे चरोरन्यत्राविनियुक्तत्वेन सक्तुवत्संस्कार्यत्वाभावात् द्वितीयाश्रुतिरनुपपन्ना स्यात् । यागविधाने तु तस्यैकदेवताकत्वौषधद्रव्यकत्वसादृश्येनाग्नेयविध्यन्तप्राप्तौ चोदकप्राप्तस्विष्टकृदादिबाधेन उपधानं चरोः प्रतिपत्तित्वेन विधीयत इति न द्वितीयानुपपत्तिः । अतो यागविधिरेव युक्त इत्याह—**तस्य चेति** ॥ बृहस्पतेर्वा इति वाक्यशेषात् देवताप्राप्त्यपेक्षया तद्धितेन देवताप्राप्तेः शास्त्रसिद्धत्वात् आदौ देवतातद्धितेन देवताप्राप्तिं निरस्य अनन्तरं वाक्यशेषेण देवताप्राप्तिं निरस्यति—**यद्यपीत्यादिना** ॥ **तद्धितश्रवणेति** ॥ बृहस्पतिपदोत्तरं तद्धितेन बार्हस्पत्यपदनिष्पत्तावपि बृहस्पतेरिदमित्यर्थ एव ण्यप्रत्ययः प्राग्दीव्यतीयः पत्युत्तरपदलक्षणः, न तु देवतातद्धित इत्यर्थः । ननु देवतातद्धिताङ्गीकारेण द्रव्यदेवतासम्बन्धमङ्गीकृत्य यागविधिसम्भवात्किमिति तत्पक्षपरित्याग इत्यत आह—**विध्यभावादिति** ॥ विध्यश्रवणादित्यर्थः । भवतीति वर्तमाननिर्देशादित्यर्थः । ननु यदाग्नेयादिवाक्यवत् विधिकल्पनं वा, भवतेर्यागलक्षकत्वं वा, किं न स्यादित्यत आह—**विध्यन्तरेति** ॥ 'चरुमुपदधाति' इति विध्येकवाक्यतया उपधानस्तुतिद्वारा उपधानविधिशेषत्वादित्यर्थः । अनाकाङ्क्षितत्वादपि नायं देवतातद्धित इत्याह—**चरुमिति** ॥ "कूर्ममुपदधाति" "पुरुषशीर्षमुपदधाति" इत्यादिवत् "चरुमुपदधाति" इत्यस्यापि स्थण्डिलनिष्पादकोपधानविधिपरत्वेन देवताकाङ्क्षाभावान्नायं देवतातद्धितः । आग्नेयवाक्ये पुरुषव्यापाराश्रवणेन द्रव्यदेवतासम्बन्धकल्पितयागविधानं न त्वत्रेति भावः । एतेनार्थवादोन्नीतदेवताकल्पनेन यागविधिरपि निरस्त इत्याह—**नार्थवादेति** ॥ **अत एव** उपधानविधेरेव ॥ **चर्वपेक्षितेति** ॥ चरोः प्रकृतिद्रव्यापेक्षित्वात् चरुप्रकृतिनीवारस्तुतिकल्पितविधिना नीवाराणां प्रकृतित्वेन विधानं वाक्यस्वरसात्प्रतीयत इत्यर्थः । स्तुतिप्रकारमुपपादयति—**अतश्चेति** ॥ 'गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात्' इत्यादिस्मृत्या पवित्रान्न-

## (८)----पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ ॥

'त्वाष्ट्रं पात्नीवतमालभेत' इत्यनेन द्रव्यदेवताविशिष्टं यागं विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजति'[1] इति श्रुतम् । तत्रोभयदेवत्यस्य पूर्वयागस्य 'आग्नेयं चतुर्धा करोति' इतिवत् केवलपात्नीवतपदेनानुवादायोगात् पर्यग्निकरणादेश्च

---

मात्राशनं कुर्वतो ब्राह्मणस्यैव मुनित्वोक्त्या नीवाराणां मुन्यन्नत्वात् बृहस्पतेश्च ब्राह्मणत्वात् अर्थवादत्वोपपत्तिरित्यर्थः । एतेन 'बृहस्पतिपदव्याख्यानं ब्राह्मणपदम्' इति मूलार्थं मत्वा बहुश्रमः प्राचीनव्याख्याकृतो निरस्तो बोध्यः । "ब्रह्म वै देवानां बृहस्पतिः" इत्यर्थवादविरुद्धं च तद्व्याख्यानम् । देवानां मध्ये बृहस्पतिर्ब्रह्म ब्राह्मणजातीय इति तदर्थात् । नपुंसकत्वं छान्दसम् । वेदपर एव वा सन् ब्रह्मपर इति द्रष्टव्यम् ॥

सूत्रार्थस्तु---चरुः **अर्थशब्देन** कार्यशब्देन उपदधातिना **संयुक्तः तदर्थ** एव न तु यागार्थः **श्रुतिसंयोगात्** । उपधानार्थत्वं च उपधानसंस्कार्यस्यापि चरोरार्थिक-साधनत्वाभिप्रायेण बोध्यम् ॥ ७ ॥

**पात्नीवते तु पूर्वत्वादवच्छेदः** ॥ बार्हस्पत्यपदे देवतातद्धिताभावेऽपि पात्नीवत-वाक्ये देवतातद्धितश्रवणात् यागान्तरमिति प्रत्यवस्थानात् सङ्गतिः । 'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्य श्रूयते 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति । तत्र संशयः । किं यागान्तरविधिः, उत पर्यग्निकरणान्ताङ्गविधिरिति । अत्र यागान्तरविधाना-भावे विधेयान्तरासम्भवेन वचनवैयर्थ्यादवश्यं यागान्तरविधिरिति पूर्वपक्षमाह---**तत्रेति** ॥ ननु प्रकृतयागानुवादेन पर्यग्निकरणान्ताङ्गविधानसम्भवात् गुणविधिरित्यत आह---**उभयदेवत्यस्येति** ॥ त्वष्टृपत्नीवदुभयदेवत्यस्येत्यर्थः । ततश्च 'आग्नेयं चतुर्धा करोति' इत्यत्र यथा अग्नीषोमीयादेरग्रहणम्, तद्धितस्य 'समर्थानां प्रथमाद्वा'[2] इति सूत्रानुशिष्टसामर्थ्यापेक्षितद्वयाग्नीषोमीये केवलाग्नेर्देवतात्वाभावेन सोमसहितस्यैव देवतात्वेन सामर्थ्यविघातात्, यथा अग्नीषोमीयादेर्न चतुर्धाकरणम्; एवमिहापि त्वष्टृसहितपत्नीव-द्देवताकयागस्य न पात्नीवतशब्देनानुवादसम्भव इत्यर्थः । विधेयस्याभावादपि **नानुवादेन** गुणविधिरित्याह---**पर्यग्निकरणादेरिति** ॥ चोदकप्राप्तपर्यग्निकरणादेर्विधिवैयर्थ्यादित्यर्थः । ननु तथापि गृहमेधीये आज्यभागयोश्चोदकप्राप्तयोरितराङ्गनिवृत्तिफलको विधिर्दृष्टः;

---

१. तै. सं. ६-६-६. २. पा. सू. ४-१-८२.

विधेयस्य गुणस्य अतिदेशेनैव प्राप्तत्वात् इतराङ्गपरिसङ्ख्यायां च त्रैदोष्यापत्तेः पर्यग्निकृतपदस्यानुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायमिति प्राप्ते—

प्रत्यभिज्ञानान्न कर्मान्तरम् । न चानुवादानुपपत्तिः; सत्यप्यग्नीषोमादिवत्त्वष्टृपत्नीवतोर्व्यासज्यवृत्तिदेवतात्वे मनोतास्थाग्निशब्दवल्लक्षणया अभिधानोपपत्तेः । वस्तुतस्तु—पृथक्तद्धितश्रवणाद्देवताद्वयमेवेदम् । एकवाक्योपादानाच्च समुच्चयः । अतो डित्थडपित्थयोर्माता डित्थमाता इतिवच्छक्यत एव केवलेन पात्नीवतपदेनानुवादः । अतः पूर्वकर्मानुवादेन गुण एव विधीयते । न च

तद्वदिह गुणविधिरस्त्वित्यत आह—इतराङ्गेति ॥ त्रैदोष्येति ॥ स्वार्थत्यागपरार्थस्वीकारप्राप्तबाधरूपदोषत्रयापत्तेरित्यर्थः । प्रकृतिप्राप्तपर्यग्निकरणानुवादः पत्नीवद्देवताकयाग एव विधीयते पूर्वपक्ष इत्यर्थः ॥ प्रत्यभिज्ञानादिति ॥ 'सन्निधौ त्वविभागात्'[1] इति न्यायेन 'त्वाष्ट्रं पात्नीवतमालभेत' इति पूर्ववाक्यविहितयागस्यैव पर्यग्निकृतवाक्येन प्रत्यभिज्ञानान्न कर्मभेद इत्यर्थः । नन्वाग्नेयपदेनाग्नीषोमीयस्येव पात्नीवतपदेन त्वाष्ट्रपात्नीवतस्यानुवादानुपपत्तिरित्युक्तम्; अत आह—न चेति ॥ व्यासज्यवृत्तिदेवतात्वं त्वष्टृपत्नीवतोरभ्युपगम्याह—सत्यपीति ॥ मनोतास्थेति ॥ अग्नीषोमीयपशौ विहितस्य 'त्वं ह्यग्ने प्रथमो मनोता'[2] इति मन्त्रस्य केवलाग्निप्रकाशकस्य लक्षणया अग्नीषोमप्रकाशकत्ववदित्यर्थः । नन्वेवमाग्नेयपदेनाप्यग्नीषोमीयोपलक्षणं स्यादित्यत आह—वस्तुतस्त्विति ॥ अग्नीषोमशब्दोत्तरं तद्धितविधानादेकं तद्धितोपात्तं देवतात्वमिति केवलाग्नेयशब्देन ग्रहणे सामर्थ्यविघातात् तद्धितानुपपत्तिः स्यात् । इह तु 'त्वाष्ट्रं पात्नीवतम्' इत्युत्पत्तिवाक्ये पृथक्तद्धितश्रवणेन देवतात्वं पृथगेव । ततश्च पात्नीवतशब्देन केवलपत्नीवद्देवताकत्वमस्तीत्यनुवादोपपत्तिरित्यर्थः । ननु तर्हि प्रत्येकदेवताकयागद्वयं स्यादित्यत आह—एकवाक्येति ॥ विद्वद्वाक्येनोपादानात् यथा आग्नेयादीनां समुच्चयः तथा 'त्वाष्ट्रं पात्नीवतमालभेत' इत्युत्पत्तिवाक्ये द्वयोरपि श्रवणेन देवताद्वयसमुच्चयोपपत्तिरित्यर्थः । ततश्चात्राग्नीषोमीयन्यायाभावात् डित्थमातृन्यायेन केवलपात्नीवतपदेनानुवादोपपत्तिः । तत्र हि डित्थनिरूपितमातृत्वं डपित्थनिरूपितमातृत्वं च पृथगेवेति उभयनिरूपितमातृत्ववत्यामपि डित्थमातेति यथा व्यवहारः तथा प्रकृतेऽपि केवलपत्नीवन्निष्ठदेवतात्वनिरूपकद्रव्ययुक्तयागस्य प्रतीत्युपपत्तिरिति

१. जै. सू. २–३–२३. २. तै. ब्रा. ३–६–१०.

विधेयाभावः। वृत्तपर्यग्निकरणत्वस्यैव क्तप्रत्ययान्तार्थस्य विधेयत्वात्। तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैवातिदेशतः पूर्वप्रवृत्त्या विधेयत्वात्; क्लृप्तोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यात् अतिदेशाकल्पनेनोत्तराङ्गानामर्थादेव निवृत्तौ त्रैदोष्यानापत्तेः। वृत्तपर्यग्निकरणत्वस्य च पूर्वाङ्गेष्वकृतेष्वसम्भवात्तान्याक्षिप्यन्ते। न च क्तप्रत्ययबलेन प्रमाणान्तरप्रमितत्वावगमात् अतिदेशाप्रतिबन्धकत्वम्। 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यादौ प्रमाणान्तराभावेऽप्येतद्विधिविधेयस्यापि क्तप्रत्ययेनोपात्तत्वेन बाधकाभावात् ॥ ८ ॥

---

भावः। नन्वत्र विधेयाभावात् विशिष्टकर्मविधिरित्युक्तेत्यत आह—**वृत्तेति** ॥ पर्यग्निकरणान्ताङ्गसमूहस्येत्यर्थः। ननु तस्य चोदकप्राप्तत्वान्न विधेयत्वमित्यत आह—**गृहमेधीयेति** ॥ चातुर्मास्येषु साकमेधपर्वणि "मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्" इति वचनविहितेष्टिः गृहमेधीयेष्टिः। तत्र श्रूयते "आज्यभागौ यजति" इति। तत्र चोदकादाज्यभागप्राप्तिसम्भवेऽपि वचनस्य चोदकात्पूर्वं प्रवृत्तत्वेन वचनादेवाज्यभागप्राप्तिः। पूर्वप्रवृत्तेश्च फलं तदितराङ्गनिवृत्तिरिति दशमे[1] वक्ष्यते। तद्वदत्रापि चोदकात्पूर्वमेव पर्यग्निकृतवाक्यप्रवृत्तेः तदुत्तराङ्गानामाकाङ्क्षाभावेन निवृत्तत्वात् पर्यग्निकरणान्ताङ्गैरेवोपकारसिद्धिः। अत एवोत्तराङ्गानामप्राप्तत्वान्न त्रैदोष्यमपीति भावः। नन्वेवमपि पर्यग्निकरणस्यैव प्राप्तिः स्यात्, नान्यस्येत्यतो **वृत्तपर्यग्निकरणस्य** इत्युक्तम्। तत्रोपपत्तिमाह—**क्तप्रत्ययेति** ॥ क्तप्रत्ययेन पर्यग्निकरणस्य सिद्धत्वं प्रतीयते। ततो यावदङ्गानुष्ठानोत्तरं पर्यग्निकरणान्तं वृत्तमिति प्रतीतिस्तावदङ्गानुष्ठान एव पर्यग्निकरणान्ताङ्गस्य वृत्तत्वप्रतीतेः न पूर्वाङ्गानां निवृत्तिरित्यर्थः। उत्तराङ्गनिवृत्तौ कथं क्रतोरवैगुण्यमित्यतस्तदुपपादयति—**क्लृप्तोपकारेति** ॥ प्राप्ताङ्गस्य पुनः श्रवणे हि प्राकृताङ्गानां प्रकृत्युपकारकत्वस्य क्लृप्तत्वात्तैरेव विकृतेरुपकाराकाङ्क्षाशान्तेः नोत्तराङ्गाकाङ्क्षेति तल्लोपे न क्रतुवैगुण्यप्रसक्तिरिति भावः। ननु क्तप्रत्ययबलेन वृत्तपर्यग्निकरणत्वबोधने तस्य चोदकप्राप्तत्वेनातिदेशप्रवृत्तेरावश्यकत्वान्न चोदकलोपेनोत्तराङ्गनिवृत्तिसम्भव इति शङ्कते—**न चेति** ॥ न हि प्रमाणान्तरप्रमितमेव क्तप्रत्ययान्तेन बोध्यत इति नियमोऽस्ति। 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यादावुलूखलमुसलयोः शास्त्रान्तरेण प्रोक्षणस्याविहितत्वात्। किं तु अनेनैव वचनेन प्रोक्षणं विधीयत इति स्वविहितप्रोक्षणपरत्वमेव

---

१. पू. मी. अ. १०–७–९.

## (९)—अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

अनारभ्य श्रुतम् "एष ह वै हविषा हविर्यजति । योऽदाभ्यं गृहीत्वा सोमाय यजते । परा वा एतस्यायुः प्राण एति । योंऽशुं गृह्णाति"[१] इति । अत्र हविः सोमः स एव देवता स एव द्रव्यमिति प्रथमस्यार्थवादस्यार्थः । प्राणो आयुर्मर्यादामतिवर्धत[२] इति द्वितीयस्यार्थः । तत्र न तावत् ग्रहणमेव ज्योतिष्टोमे

---

क्तप्रत्ययेन बोध्यते । तद्वदेव प्रकृतेऽपि वृत्तपर्यग्निकरणत्वस्य स्ववचनविहितस्यैव क्तान्तेन निर्देशसम्भवाच्चोदकलोपः सम्भवतीति भावः ॥

सूत्रार्थस्तु—पात्नीवते पर्यग्निकृतं पात्नीवतमिति वाक्ये प्रत्यभिज्ञायमानपूर्वकर्मवशात् तदन्ताङ्गरीतिविधानेनेतरेषामभावः स्यादिति ॥ ८ ॥

अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ पूर्ववदिह प्रत्यभिज्ञाविरहात् यागान्तरविधिरिति प्रत्यवस्थानात् सङ्गतिः । अत्र किं ज्योतिष्टोमे ग्रहणविधिः, उत यागान्तरविधिरिति संशयः । परेत्युपसर्गस्य एतीत्यनेनान्वये परैति नश्यतीत्यर्थः । अंश्वदाभ्यग्रहयोर्ज्योतिष्टोमेऽवभृथात्परतो विधिद्वयमात्रमौपानुवाक्याकाण्डे च गुणविधिना सह तदाम्नातम् । तत्र "भूयस्त्वेनोभयश्रुति"[३] इत्यनेन न्यायेनानारभ्यवाक्य एवोत्पत्तिविधित्वम् । तयोश्च "भ्रातृव्यवता अदाभ्यो ग्राह्यः; ग्राह्यो बुभूषतांशुः" इति वचनाभ्यां केवलपुरुषार्थत्वं मा भूदिति क्रत्वर्थत्वाय पुनः प्रकरणे पाठ इति सङ्कर्षे वक्ष्यत इत्यभिप्रायेणाह—अनारभ्येति ॥ "यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा" इति मन्त्रेऽदाभ्यपदस्य सोमनामत्वकीर्तनादाह—हविषा हविरिति ॥ अवभृथोत्तरं पठितस्यापि वचनादभिषवात्पूर्वमेव प्रचारस्य सङ्कर्षे कथनादर्हस्य इति तदर्थात् । परेत्यस्य एतीत्यननोन्वयं कृत्वा व्याचष्टे—प्राण इत्यादिना ॥ यद्यप्यंशुग्रहणे नष्टप्रायाः प्राणा एतदुत्तरविहितेन हिरण्ये श्वासप्रक्षेपमन्त्रेण 'आ नः प्राणः' इत्यनेनात्मन्येव तिष्ठन्तीति तदेकवाक्यतया व्याख्यातं वेदभाष्ये । तथापि तादृशव्याख्यानानुसरणे "परा वा" इत्यादेः "आनः प्राणः" इति मन्त्रविधिशेषत्वापत्त्या "अंशुं गृह्णाति" इत्यस्य स्वतन्त्रविधित्वस्य तान्त्रिकानुमतस्योपपत्त्यर्थं परैतीत्यस्य नश्यतीति व्याख्यानमनादृत्याह—अतिवर्धत इति ॥ ननु ग्रहणमेव श्रौतं विधीयत इति

---

१. तै. सं. ३–३–४. २. 'अभिवर्धते" इति पाठान्तरम् ।

३. जै.सू. ३–३–१०.

विधीयते । संस्काररूपस्य ग्रहणस्य अवघातादिवत् अंश्वदाभ्यनामकत्वानुपपत्तेः; द्वितीयान्तयोस्तयोः संस्कार्यद्रव्यनामत्वाङ्गीकारे तु अव्यभिचरितक्रतुसम्बन्धाभावान्न द्रव्यमात्रोद्देशेन ग्रहणविधिसम्भवः । अतो द्रव्यदेवताविशिष्टयागान्तरविधानमेवेदम् । अदाभ्यपदेन हिंसानर्हसोमाख्यद्रव्यस्य अंशुपदेन च निर्यासद्रव्यस्याभिधानात् । द्वितीया तूभयत्र[1] सक्तुन्यायेन । देवता तु एकत्र सोमः, अन्यत्र "प्रजापतय स्वाहा"[2] इति मन्त्रवर्णात् प्रजापतिः । गृह्णातिश्चाद्येऽनुवादः ; द्वितीये यागलक्षकः । तयोश्च यागयोः प्राकरणिकैतत्समानजातीयतैत्तिरीय-

न यागविधिसम्भव इत्यत आह—**न तावदिति** ॥ ग्रहणस्य संस्काररूपत्वेन संस्काराणां सङ्कल्पाद्यभावेन नाम्न उपयोगाभावेन नामानर्हत्वादित्यर्थः । न चाघारस्य प्रयाजार्थद्रव्यसंस्कारस्य संज्ञादर्शनात् इदमयुक्तमिति वाच्यम् ; तस्य यागरूपत्वस्यापि सत्त्वेन केवलसंस्कारकर्मणः संज्ञाया अनुपपत्तेरुक्तत्वात् । ननु "अंशुं गृह्णाति" इत्यादौ द्वितीयान्तांशुपदस्य सोमरूपद्रव्यपरत्वमङ्गीकृत्य तदुद्देशेन संस्कारविधिः सम्भवतीत्यत आह—**द्वितीयान्तयोरिति** ॥ गृह्णातेः सकर्मकत्वात् उक्तमन्त्रवर्णाच्च द्रव्यपरत्वमिति भावः ॥ **अव्यभिचरितेति** ॥ ततश्च अपूर्वसाधनत्वाप्रतीत्या लोकसिद्धद्रव्यमात्रोद्देशेन संस्कारविधावानर्थक्यापत्तेरित्यर्थः ॥ **द्रव्यदेवताविशिष्टेति** ॥ यागविधिप्रकारमेवाह—**अदाभ्यपदेनेति** ॥ **हिंसानर्हेति** ॥ अभिषवाभावेन हिंसाभावादित्यर्थः ॥ **निर्यासेति** ॥ सकृदभिषवनिस्सृतरसक्लिन्नावयवस्येत्यर्थः । ननु विशिष्टविधित्वाङ्गीकारात् द्रव्यस्य करणतया द्वितीयानुपपत्तिरित्यत आह—**द्वितीया त्विति** ॥ **सक्तुन्यायेनेति** ॥ द्वितीया करणत्वं लक्षयतीत्यर्थः । देवतामाह—**देवता त्विति** ॥ **एकत्र**—अदाभ्ययागे मन्त्रवर्णेन "सोमाय स्वाहा" इति चतुर्थ्या च प्रमितः सोमो देवतेत्यर्थः । **अन्यत्र**—अंशुयागे ॥ **प्रजापतय इति** ॥ प्रजापतिदेवतोद्देश्यकहविस्त्यागकरणीभूतस्य "दधन्वे वा यदीमनु" इति मन्त्रस्यास्पष्टदेवताकत्वेऽपि "अनिरुक्तः प्रजापतिः" इति परिभाषानुसारेण प्रजापतिर्देवतेति वेदभाष्यानुसारादिति भावः । बोधायनीयौपानुवाक्यासूत्रे यथाश्रुत एव मन्त्रः ; तत्र गोपालः—"स्यात्प्रजापतये त्वेति ग्रहणं होम एव च" इति । **आद्ये**—अदाभ्यवाक्ये । **गृह्णातिरनुवादः**—यागाक्षिप्तग्रहणस्य । **द्वितीये**—अंशुवाक्ये । **यागलक्षकः**—तत्र यागाश्रवणात् द्रव्यदेवतासम्बन्धानुमितयागलक्षक इत्यर्थः । नन्वेतयोर्यागयोः फलाश्रवणात्

१. "चोभयत्र"—इति पाठान्तरम् । २. तै. ब्रा. ३-१-४.

शाखास्थवाक्याज्ज्योतिष्टोमाङ्गत्वमिति प्राप्ते—

गृह्णातौ यागलक्षणायां प्रमाणाभावात् आद्यवाक्ये गुणसङ्क्रान्तशक्तिना विधिना ग्रहणस्यैव विधेयत्वावगमाच्चोभयत्रापि ग्रहणमेवोक्तसंज्ञकं उक्तसंज्ञकद्रव्यसंस्कारकत्वेन वा विधीयते। एवं च, विनियोगभङ्गोऽपि द्वितीयाया न कल्पितो भवति। देवता तु सोमरूपा आद्यवाक्ये ग्रहण एवान्वेतीति देवताविशिष्टं ग्रहणमेव तत्र विधीयते। द्वितीये तु, "उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि"[1] इति मन्त्रवर्णात् ग्रहणाङ्गतया देवताप्राप्तिर्द्रष्टव्या।

---

कथं पुरुषार्थत्वम्? न च विश्वजिन्न्यायेन फलकल्पनमिति वाच्यम्; तथा सति स्वतन्त्रप्रयोगापत्तेः इत्यत आह—**तयोश्चेति** ॥ अंश्वदाभ्ययागयोरित्यर्थः ॥ **तैत्तिरीयेति** ॥ "यस्यैवं विदुषो अदाभ्यो गृह्यते"[2] "यस्यैवं विदुषोंऽशुर्गृह्यते"[3] इति वचनाभ्यामित्यर्थः। तथा च ज्योतिष्टोमप्रकरणपठितवाक्याभ्यां ज्योतिष्टोमे प्रवर्ग्यस्येव विनियोगाज्ज्योतिष्टोमाङ्गतया न स्वतन्त्रप्रयोगापत्तिरिति भावः। श्रौतार्थविधानोपपत्तौ लाक्षणिकार्थविधानस्यान्याय्यत्वाद्वाक्यद्वयेऽपि ग्रहणमेव विधेयमित्याह—**गृह्णाताविति** ॥ **आद्यवाक्य इति** ॥ अदाभ्यवाक्य इत्यर्थः ॥ **गुणसङ्क्रान्तेति** ॥ ग्रहणविधिसङ्क्रान्तशक्तिकत्वात् विधेर्न यागविधानमित्यर्थः ॥ **उभयत्रापि**—वाक्यद्वयेऽपि। **उक्तसंज्ञकम्**—अंश्वदाभ्यसंज्ञकम्। विधीयत इत्यन्वयः। अंश्वदाभ्यपदयोर्द्रव्यपरत्वपक्षेऽपि द्रव्यसंस्कारत्वेन ग्रहणं विधीयत इत्यर्थः। अदाभ्यादिपदस्य कर्मनामत्वे गृह्णातेः कर्माकाङ्क्षाया अनिवृत्तिः, उक्तमन्त्रवर्णासङ्गतिः, द्वितीयाया असङ्गतिश्चेति अस्वरसो वाकारेण सूचितः। पूर्वपक्षोक्तः सक्तुन्यायेन विनियोगभङ्गदोषोऽप्यस्मिन् पक्षे नास्तीत्याह—**एवं चेति** ॥ ननु द्रव्यदेवतासम्बन्धात् यागविधिरित्युक्तमत आह—**देवतेति** ॥ सोमरूपदेवताविशिष्टग्रहणस्यैव श्रौतार्थस्य विधिसम्भवान्न यागविधिः इत्यर्थः। ततश्च देवताविशिष्टग्रहणमेव विधीयत इत्याह—**देवताविशिष्टमिति** ॥ **द्वितीये**—उपांशुवाक्ये; 'उपयामगृहीतोऽसि' इति मन्त्रवर्णाद्देवताया ग्रहणाङ्गतया प्राप्तिमाह—**उपयामेति** ॥ ननु 'कया नश्चित्र:' इति मन्त्रस्यैवांशुग्रहणे करणत्वेन विनियोग इति मूले मन्त्रान्तरोक्तिरसङ्गतेति चेन्न; तस्या एव ऋचः काये एककपाले अनुवाक्यात्वेनान्यत्र विनियोगदर्शनात् को नाम प्रजापतिः तत्प्रकाशिका सेति कथं-

---

१. तै. सं. १–७–१२. २. तै. सं. ६–६–९.
३. तै. सं. ६–६–१०.

होममन्त्रस्तूत्तरभावियागोपकारकत्वमादाय नेयः । देवताविशिष्टग्रहणद्वये च प्रकारणिकवाक्येन ज्योतिष्टोमाङ्गत्वस्य तदुपपाद्यत्वस्य च बोधोपपत्तेर्न कश्चिद्विरोधः ॥

प्रयोजनं पूर्वपक्षे यागस्याङ्गत्वाद्यथाशक्तिन्यायविषयत्वम् । सिद्धान्ते प्रधानत्वान्नेति ॥ ९ ॥

**(१०)---अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥**

अनारभ्यैव श्रुतं "य एवं विद्वानग्निं चिनुते"[1] इति । तत्र चिनोतिना

---

चित्समाधेयम् ॥ **होममन्त्रस्त्विति** ॥ "यत्ते सोमदाभ्यम्" इति मन्त्रो "दधन्वे वा यदीमनु" इति मन्त्रश्चेत्यर्थः । ग्रहणाङ्गत्वेनावगतयोरपि देवतयोः प्रसङ्गेन यागं प्रत्युपकारकत्वात् ग्रहणाङ्गमन्त्रेणापि प्रकाश्यत्वं युक्तमिति भावः । ननु ग्रहणयोर्यागरूपत्वाभावेन देवतासम्बन्धानर्हत्वात् विधीयमानमपि देवतावैशिष्ट्यं नोपपद्यत इत्यत आह—**तदुपपाद्यत्वस्य चेति** ॥ स्वोपकार्ययागाङ्गग्रहणकालीनोच्चारणकर्मीभूतशब्दवृत्तित्वसम्बन्धेन ग्रहणे देवतावैशिष्ट्यस्योपपादकं प्राकरणिकवाक्यद्वयमित्यर्थः ॥ **प्रयोजनमिति** ॥ पूर्वपक्षे एतद्वाक्यद्वयविहितयागयोर्ज्योतिष्टोमाङ्गत्वान्नित्ये अशक्याङ्गत्यागाभ्युपगमात् अशक्तौ त्यागो भवति । तावता च न क्रतोर्वैगुण्यम् । सिद्धान्ते प्रधानत्वान्न त्याग इत्यर्थः ॥

सूत्रार्थस्तु—**अद्रव्यत्वात्** द्रव्यस्य तदुपलक्षितदेवतायाश्चालाभात् **केवले गृह्णातौ कर्मशेषः** ज्योतिष्टोमाङ्गविधिरेव **स्यादिति** ॥ ९ ॥

**अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत** ॥ पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिः ॥ अनारभ्य श्रुतं "य एवं विद्वानग्निं चिनुते" इति ॥ तत्र संशयः । किमयं यागविधिः, उत अग्निसंस्कारमात्रं चयनं स्वतन्त्रं विधीयते, किं वा ज्योतिष्टोमादिषु गुणो विधीयत इति ॥ **अनारभ्यैवेति** ॥ न त्वंश्वदाभ्यवत् प्रकरणेऽपि पुनः पठितमित्यर्थः ॥ **नाग्नीति** ॥ अग्निशब्दस्य ज्वलनपरत्वे तस्य भूतभाव्युपयोगविधुरत्वेन विधानायोगादाहवनीयपरत्वे च स्वनिष्पादितस्थण्डिलाधेयत्वसम्बन्धेनैव संस्कारकत्वस्य वक्तव्यतया तस्य

---

१. तै. सं ५-६-३.

नाग्निसंस्कारार्थत्वेन चयनविधिः, अपि तु अग्निसंज्ञकस्य यागस्यैव विधिः । "अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन, तमतिरात्रेण, तं द्विरात्रेण" इत्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञानामग्न्यनुयजनत्वरूपगुणाम्नानात् । न ह्यग्न्यनुयजनत्वमग्नेरयागत्वेऽवकल्पते ; देवदत्तमनुगच्छति यज्ञदत्त इत्यादौ तुल्यक्रियायोग एवानुशब्ददर्शनात् । अतश्चाग्निसंज्ञकस्य यागस्य तस्मिन्नेव विधौ गौरवात् विद्वद्वाक्य एव चिनोतिना लक्षणया तद्विधानम् । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । उत्तरवाक्यैश्च तस्य क्रत्वङ्गत्वसिद्धिः ।

---

"इष्टकाभिरग्निं चिनुते" इत्यनेनैव प्राप्तत्वेन विध्यनर्हत्वादिति भावः ॥ **अथात इति** ॥ **अथ**—चयनानन्तरम् । **अतः**—स्थण्डिलस्य सिद्धत्वात् । अर्थात्तस्मिन्नग्निमाहवनीयं स्थापयेदिति शेषः । अग्निस्थापनोत्तरकाले अग्निष्टोमेनेष्टं भावयेदित्यर्थः । अधिकं हिरण्यकेशिचयनसूत्रव्याख्याने प्रतिपादितमस्माभिः । अत्र प्राप्ताप्राप्तविवेचनेन स्थण्डिलस्य क्रत्वङ्गत्वमात्रं विधीयत इति वस्तुस्थितिः । तत्र पूर्वपक्षमाह—**विधिरिति** ॥ अग्निसंज्ञकयाग एव विद्वद्वाक्येन विधीयत इत्यर्थः । तत्र युक्तिमाह—**अथात इत्यादि** ॥ आदिशब्देन तं त्रिरात्रेणेत्याद्येकादशरात्रान्तवचननवकपरिग्रहः । 'अनुर्लक्षणे' इत्यनेन कर्मप्रवचनीयसंज्ञकस्यानोर्योगे विहिताया द्वितीयाया अनुशब्दार्थोत्तरकालप्रतिसम्बन्धित्वबोधकतया पूर्वकालीनाग्न्याख्ययागनिरूपितोत्तरकालक्रियमाणयागत्वस्यैवाग्न्यनुयजनत्वरूपतया तस्य च पूर्वत्वानिविशमानगुणत्वेन कर्मभेदकत्वमिति तात्पर्येणाह—**अग्न्यनुयजनत्वरूपगुणेति** ॥ **इत्यादौ** ॥ लोके वेदे चेत्यर्थः । "सोमस्याग्ने वीहि इत्यनुयजति" "तस्मादनुवषट्कृत्यं देवानां तृप्त्या" इत्यादिप्रयोगादिति भावः । यागत्वादेवाहवनीयप्राप्तेस्तत्प्रख्यन्यायमनुसृत्याह—**अग्निसंज्ञकस्येति** ॥ अत एव 'अग्नेः शस्त्रम्' इत्याद्युपपत्तिरिति भावः ॥ **विद्वद्वाक्य एवेति** ॥ "इष्टकाभिरग्निं चिनुते" इति वाक्यस्य गुणसङ्क्रान्तशक्तित्वान्न यागविधित्वमित्येवकारार्थः । ननु यागवाचकशब्दाभावात् कथं यागविधिरित्यत आह—**चिनोतिनेति** ॥ ननु रूपाभावान्न यागविधिसम्भव इत्यत आह—**स चेति** ॥ विद्वद्वाक्यविहितयागश्चेत्यर्थः ॥ **अव्यक्तत्वादिति** ॥ "अव्यक्तासु तु सोमस्य"[१] इति न्यायादित्यर्थः ॥ **उत्तरवाक्यैः**—अथात इत्यादिवाक्यैरित्यर्थः । ननु "अथात" इत्यादिवाक्येषु अग्निमिति द्वितीयया अग्निष्टोमेनेत्यादितृतीयाभिश्च अग्निसंज्ञकयागं प्रत्येव संस्थानामङ्गत्वप्रतीतेः कथमिदमिति चेन्न ; द्वितीयाया उपपदविभक्तित्वेन

---

१. जै. सू. ८–१–१६.

'इष्टकाभिरग्निं चिनोति'[1] इत्यनेन च चयनस्य प्राप्तत्वाच्चिनोतिर्निर्वपतिवत् अनुवादश्चयनस्येति प्राप्ते—

'पाकमनुभुङ्क्ते' इत्यादौ तुल्यक्रियायोगाभावेऽप्यनुशब्ददर्शनान्न तदनुरोधेनाग्निशब्दस्य चयनशब्दस्य च यागपरत्वकल्पना युक्ता। अतो विद्वद्वाक्ये चयनमेवाग्निसंस्कारार्थं विधीयते। अग्निशब्देन च यद्यपि शक्त्या ज्वलन एवाभिधीयते तथापि तदर्थत्वे वैयर्थ्यापत्तेर्निरूढलक्षणया आहवनीयादिपरत्वावसायात् तदुद्देशेनैव चयनं संस्कारतया विधीयते। संस्कारश्च सामर्थ्याच्चयन-

---

तृतीयानां स्वस्वफलनिरूपितकरणतानुवादकत्वेन तत्फलानां तत्तद्वचनैरेवावगतत्वेन फलवदफलन्यायेन विपरीत एवाङ्गाङ्गिभाव इत्याशयेन क्रत्वङ्गत्वोक्तेरित्यर्थः। ननु चिनोतेर्विधेयार्थकत्वाभावात् आनर्थक्यमित्यत आह—**इष्टकाभिरिति** ॥ चयनस्य "इष्टकाभिरग्निं चिनुते" इति वचनप्राप्तत्वात् "सौर्यं चरुं निर्वपेत्" इत्यादौ निर्वपतिर्यथा चोदकप्राप्तनिर्वापानुवादः तद्वदिह वचनप्राप्तानुवाद इत्यर्थः। 'देवदत्तमनुगच्छति यज्ञदत्तः' इत्यादिवत्तुल्यक्रियायामेव अनुशब्द इति पूर्वपक्षोक्तं दूषयति—**पाकमिति** ॥ पाकभुजिक्रिययोर्विजातीयत्वेऽप्यनुशब्ददर्शनान्न तदनुरोधेनाग्निशब्दचयनशब्दयोर्यागपरत्वमित्यर्थः। अयमभिप्रायः। अनुशब्दो हि क्वचिद्दैशिकपश्चाद्भावं बोधयति। यथा देवदत्तमनुगच्छति यज्ञदत्त इत्यादौ। क्वचित्कालिकपश्चाद्भावम्। यथा पाकमनुभुङ्क्त इत्यादौ। न तु पूर्वापरयोः समानजातीयत्वमपि बोधयति। उक्तप्रयोगेषु वचनान्तरैरेव पूर्वस्य यागत्वनिश्चयात्। इह तदभावेनाग्निशब्दचिनोत्योः लक्षणाया इष्टकावाक्ये विशिष्टविधिस्वीकारस्य चानुचितत्वादिति भावः। "अग्निमुपनिधाय स्तुवीत" इत्यादौ केवलज्वलनपरोऽग्निशब्दः। "अथातोऽग्निम्" इति चयनविनियोगवाक्ये चयनक्रियापरः। "हिरण्यशकलैरग्निं प्रोक्षति" इत्यादौ चयननिष्पादितस्थण्डिलपरः। "इष्टकाभिः" इति चयनोत्पत्तिवाक्ये आहवनीयपरः। "अग्नेः शस्त्रम्" इत्यादौ साग्निचित्यक्रतुपरः। इह तात्पर्यग्राहकन्यायेन षोडश्यादिशब्दवत् व्यवस्थितार्थक इत्यभिप्रायेणाह—**अग्निशब्देन चेति** ॥ **तदर्थत्वे**—केवलज्वलनार्थत्वे। **वैयर्थ्यादिति** ॥ लोकसिद्धज्वलनस्य संस्कारस्य प्रयोजनाभावादित्यर्थः ॥ **निरूढलक्षणयेति** ॥ ज्वलनमात्रशक्तस्याप्यग्निशब्दस्य निरूढलक्षणया आहवनीयपरत्वादित्यर्थः ॥ **तदुद्देशेनैव** ॥ एवकारेण यागविधिव्यवच्छेदः। ननु चयनस्य कथमग्निसंस्कारकत्वम्, तस्येष्टका-

---

१. तै. सं. ५–६–६.

निष्पादितस्थण्डिलस्थापनरूपः । स्थापितस्याग्नेरुपयोगापेक्षायाम् 'अथातः' इति वाक्येन तस्य ज्योतिष्टोमाङ्गत्वेन विधानम् । तत्र ह्यग्निशब्देन चयननिष्पादितस्थण्डिलस्थापितोऽग्निः चयनमेव वा लक्षणया अभिधीयते । अग्निष्टोमशब्दश्च जातिन्यायेन संस्थावचनोऽपि व्यक्तिन्यायेन ज्योतिष्टोममेव प्रचुरप्रगोगादभिधत्ते; पार्थशब्द

---

सम्बन्धित्वादत आह—**संस्कारश्चेति** ॥ चयनसम्पादितस्थण्डिलस्थापनेनाग्नेः संस्कारसम्भवादित्यर्थः ॥ **स्थापितस्याग्नेः**—चयननिष्पादितस्थण्डिलस्थापनसंस्कृतस्याग्नेः आहवनीयस्य । **उपयोगापेक्षायाम्**—प्रयोजनापेक्षायाम् ॥ **अथात इति वाक्येन**—'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इति वाक्येन ॥ **तस्य**—संस्कृताग्नेः ॥ **ज्योतिष्टोमाङ्गत्वेन विधानम्** ॥ तथा चाग्निष्टोमपदस्य ज्योतिष्टोमपरत्वात् ज्योतिष्टोमत्वमेवाग्निविधेरुद्देश्यतावच्छेदकमिति भावः । ननु ज्योतिष्टोमत्वस्योद्देश्यतावच्छेदकत्वेऽनेन वचनेनोक्थ्यादिषु अग्निप्राप्तिसम्भवात् "तमुक्थ्येन, तमतिरात्रेण" इत्यादिवचनानां वैयर्थ्यं स्यादिति चेन्न; तेषां गुणकामप्राप्त्यर्थत्वात् । तथा हि—'श्येनचितिं चिन्वीत स्वर्गकामः' इत्यादिभिः विहिता आकृतिविशेषाश्रयनाश्रिताः फलाय विधीयन्ते । चयनस्याग्निष्टोमप्रयोगसंवलितस्य विकृतिषूक्थ्यादिषु अतिदेशेन प्राप्तत्वेन तदाश्रितगुणकामानां विकृतौ प्रवृत्त्यसम्भवात् । 'तमुक्थ्येन' इत्यादिवाक्यसत्त्वेनाग्निष्टोमस्य तद्विकाराणां च समानविध्यादतिदेशप्राप्त्यभावात् उक्थ्यादिष्वपि गुणकामाः प्रवर्तन्त इति तद्वाक्यसार्थक्यात् । न चेदं प्रयोजनम् अग्निविधेरग्निष्टोममात्रोद्देश्यत्वे सङ्गतम्, न तु ज्योतिष्टोमोद्देशेन विधाने इति वाच्यम्; तथापि उत्तरवेद्यामग्निं निदधाति' इति प्राकरणिकवाक्येनोत्तरवेद्या सह विकल्पितस्याग्नेर्नित्यप्राप्त्यर्थं तमुक्थ्येनेति वचनसार्थक्यसम्भवात् । नन्वग्निष्टोमशब्दस्याग्निष्टोमसंस्थाकक्रतुपरत्वात् कथं ज्योतिष्टोमोद्देशेन विधानमित्यत आह—**अग्निष्टोमशब्दश्चेति** ॥ **जातिन्यायेनेति** ॥ आकृत्यधिकरणन्यायेनेत्यर्थः । तस्मिन्नधिकरणे विशेषणे शक्तेः सिद्धान्तितत्वादिति भावः ॥ **व्यक्तिन्यायेनेति** ॥ व्यक्तौ निरूढलक्षणाङ्गीकारादिति भावः । अग्निष्टोमात्यग्निष्टोमोक्थ्यइत्यादिवैदिकप्रयोगादित्यर्थः । ततश्चात्राग्निष्टोमशब्दः प्रकृत्यग्निष्टोमपरः, उत विकृत्यग्निष्टोमपरः, उत उभयसाधारण इति प्राचां सन्देहो निरस्त इति सूचितम्; ज्योतिष्टोमपरत्वाङ्गीकारात् ॥ **पार्थशब्द इति** ॥ पृथातनयवाचिनः पार्थशब्दस्य युधिष्ठिरादिपरत्वसम्भवेऽप्यर्जुन एव प्रचुरप्रयोगदर्शनादित्यर्थः । ननु 'अथातः' इति वाक्यस्थाग्निष्टोमपदस्य ज्योतिष्टोमपरत्वेऽप्यग्निष्टोमसंस्थाक-

इवार्जुनम्। अतश्च ज्योतिष्टोमत्वमेव लाघवादुद्देश्यतावच्छेदकं, न त्वग्निष्टोमसंस्थावत्त्वमपि। यद्यपि चयनस्य ज्योतिष्टोमप्रयोगसंवलितत्वादनुष्ठानसादेश्यादेव तदङ्गत्वसिद्धिः। तथापि 'पशुकामश्चिन्वीत'[1] इति वाक्यैः आग्नेः काम्यत्वावगमात् क्रत्वङ्गत्वप्रतिप्रसवार्थं तन्न विरुध्यते। अयं चाग्निः प्रकृतौ 'अग्निः सोमाङ्गं वेच्छताम्' इत्यादिवचनाद्वैकल्पिकः। अग्निपक्षे च 'उत्तरवेद्यां ह्यग्निश्चीयते'[1] इति

---

ज्योतिष्टोमपरत्वमस्तु। तथा च नानेन वाक्येन सर्वसंस्थाकज्योतिष्टोमाङ्गत्वं चयनस्येत्यत आह—**अतश्चेति** ॥ उद्देश्यतावच्छेदककोटावग्निष्टोमत्वनिवेशे प्रयोजनाभावाच्च अग्निष्टोमत्वं न निवेश्यमित्यर्थः। लाघवेन ज्योतिष्टोमत्वस्योद्देश्यतावच्छेदकत्वात् सप्तसंस्थाकज्योतिष्टोमाङ्गत्वं चयनस्य सिध्यतीत्यर्थः। ननु दीक्षोत्तरं चयनाङ्गानामुपक्रमात् मध्यमोपसदादौ चयनविधानाच्च सोमाङ्गसंवलितत्वेन स्थानप्रमाणेनैव प्रकरणादिकल्पनद्वारा क्रत्वङ्गत्वसम्भवात् अथात इति वचनेन क्रत्वङ्गत्वबोधनं व्यर्थमित्यत आह—**यद्यपीत्यादि** ॥ **तथापीति** ॥ स्थानेन प्रकरणादिकल्पनात् श्रुतिकल्पनस्य विलम्बितत्वेन तदुपेक्ष्य झटिति प्रवृत्तप्रत्यक्षवचनेन "पशुकामश्चिन्वीत" इत्यनेन फलार्थत्वमेव स्यादित्यर्थः। तथा च कामनासंयोगेन केवलपुरुषार्थत्वापत्त्या क्रत्वर्थत्वस्य बाधितत्वात् 'अथातः' इति वाक्येन बाधितं क्रत्वर्थत्वं प्रतिप्रसूयत इति उत्पत्तिविनियोगप्रयोगाणां पूर्वसिद्धानामेव ग्रहणाल्लाघवमपीति भावः। ननु स्थण्डिलस्थापनेनाग्नेः संस्कार्यत्वात् अव्यभिचरिताहवनीयसंस्कार्यद्वारा क्रत्वङ्गत्वोज्जीवनसम्भवात् इदं वचनं व्यर्थमिति चेन्न; काम्यत्वपक्षे "अग्निं चिनुते" इत्यत्र विनियोगभङ्गस्यावश्यकत्वेन काम्यचयनानुनिष्पन्नस्थण्डिले आहवनीयस्थापनविधिनापि परप्रयुक्तोपजीव्यस्थापनं प्रत्यग्निचयनस्याङ्गत्वबोधनायोगेन तद्द्वारा क्रत्वङ्गताया आधानवदसिद्धेः। न च "सोत्तरवेदिषु क्रतुषु चिन्वीत" इत्यनेन क्रत्वङ्गत्वसिद्धिरिति वाच्यम्; तस्य काठकादिक्षुद्रचयनविषयत्वेन महाग्निचयनविषयत्वाभावात्। ननु 'अथातोऽग्निम्' इत्यादिवाक्यानामाश्रयसमर्पकत्वसम्भवात् किमिति प्रतिप्रसवार्थत्वमङ्गीक्रियत इति चेन्न; स्थण्डिलस्य सिद्धद्रव्यस्य फलसम्बन्धपक्षे तत्सम्भवेऽपि धात्वर्थचयनक्रियाया एव फलार्थत्वस्वीकारे तदपेक्षाभावादित्याशयः। दशमे वार्तिके अग्न्युत्तरवेद्योर्विकल्प उक्तः। सङ्कर्षे समुच्चयः साधितः। तदुभयमविरोधेन सङ्गमयति—**अयं चेति** ॥ "यद्यग्निश्चेष्यमाणः" इत्यादिवचनादग्नेः स्वाभावप्रतियोगिक एव विकल्पो न व्रीहियववत् भावद्वयकोटिकः; उत्तरवेदिमात्रं वा तदुभयं वेत्याकारक

---

१. तै. आ. १–२६.

वचनादुत्तरवेद्या समुच्चयः। तदभावे चोत्तरवेदिमात्रम्; 'उत्तरवेद्यामग्निं निदधाति' इति वचनात्। अतश्च 'तमुक्थ्येन' इत्यादिवाक्यानि वैकल्पिकत्वात् विकृतिविशेषे तन्नियमार्थानि चयनाश्रितश्येनाकारतादिफलार्थगुणानां प्राप्त्यर्थकानि चेति दशमे वक्ष्यते॥ १०॥

## (११)—प्रकरणान्तरे प्रयोजनान्यत्वम्॥ २४॥

कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्ण-

---

इति यावत्। पक्षद्वयेऽपि क्रमेण प्रमाणे उपन्यस्यति—अग्निपक्षे चेत्यादिना॥ 'उत्तरवेद्यां ह्यग्निश्चीयते' इति वचनेन उत्तरवेदिप्रदेशाधेयत्वस्याग्नौ प्रतीतेरुभयोः समुच्चय इत्यर्थः। अग्न्यभावपक्षे च उत्तरवेद्यामग्निं निदधाति' इति वचनात् उत्तरवेदिमात्रमित्यर्थः॥ **विकृतिविशेष इति**॥ उक्थ्यादिशब्दानां तत्तत्संस्थाकज्योतिष्टोमपरत्वे 'अथातोऽग्निम्' इत्यनेनैव तत्र चयनस्य प्राप्तत्वेन अगत्या तत्संस्थविकृतिपरत्वमङ्गीकार्यमिति भावः॥ **चयनेति**॥ श्येनकङ्काद्याकाररूपफलार्थगुणविधायकवाक्येषु ज्योतिष्टोमापूर्वसाधनत्वेनैवाग्निचयनस्याश्रयतया बोधापत्त्या तादृशस्य विकृतिष्वभावात् गुणकामानामाश्रयाभावादाष्टमिकन्यायेनाप्राप्तौ तत्तद्विकृत्यपूर्वसाधनत्वस्याप्युद्देशेनाश्रयलाभात् तदाश्रितगुणकामाः प्रवर्तन्त इति फलमपि वचनानां सम्भवतीत्यर्थः॥ **दशमेति**॥ अग्न्यतिग्राह्याधिकरणे। प्रयोजनं पूर्वपक्षे साग्निचित्यमग्निनामकं सोमयागमेकं कृत्वा अग्निष्टोमादिकं केवलोत्तरवेदिकं कार्यम्; सिद्धान्ते नेति॥

सूत्रार्थस्तु—अग्निः अग्निशब्दः यागनाम **प्रतीयेत**, "अग्नेस्तोत्रं" "अग्नेः शस्त्रम्" इति स्तोत्रशस्त्रयुक्ततया निर्देशरूपलिङ्गदर्शनात्, स्तोत्रशस्त्रयोः क्रत्वेकसम्बन्धित्वादिति। स्तोत्रशस्त्रवाक्येऽनुपपत्तिबलाल्लक्षणया अग्निशब्दस्य तद्युक्तक्रतुपरत्वमात्रेण विद्वद्वाक्ये यागनामत्वमग्निशब्दस्य नाभ्युपेयमिति सिद्धान्त्याशयः॥ १०॥

**प्रकरणान्तरे प्रयोजनान्यत्वम्**॥ पूर्ववैषम्येण प्रत्यवस्थानात् सङ्गतिः। गुणभेदप्रसङ्गे समाप्तेऽधुना प्रकरणान्तरेण भेदोऽभिधीयते। कुण्डपायिनामयने "उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति" "मासं दर्शपूर्णमासाभ्यां यजेत" इत्यादि। तत्र संशयः। किं नैयमिकाग्निहोत्रादौ मासो विधीयते, किं वा कर्मान्तरमिति। तत्र पूर्वपक्षमाह—**तत्रेति**॥ आदिना 'मासं वैश्वदेवेन, मासं वरुणप्रघासैः, मासं साकमेधेन, मासं शुनासीरीयेन, मासं त्रिवृता, मासं पञ्चदशेन' इत्यादिपरिग्रहः। जुहोतीत्यस्य

मासाभ्याम्' इत्यादि श्रुतम् । तत्र जुहोतिना अग्निहोत्रादिपदैश्च दूरस्थस्यापि कर्मण उपस्थितत्वात्तदनुवादेन 'यदाहवनीये जुहोति' इतिवत् मासादिरूपगुणविधिः ; उपादेयवदनुपादेयस्यापि दूरस्थकर्मानुवादेन विधाने बाधकाभावात् ; कर्तृबहुत्व-कालादिरूपानेकगुणविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । अतो न कर्मान्तर-विधिरिति प्राप्ते—

---

पञ्चस्वनुषङ्गः । ननु 'अग्निहोत्रं जुहोति' इत्यत्र जुहोतेः सन्निहितकर्मानुवादा-सम्भवात्कथं मासरूपगुणविधानमित्यत आह—**अग्निहोत्रादीति** ॥ **दूरस्थस्यापि,** शब्देनो-पस्थितत्वादित्यर्थः । ननु शब्देनोपस्थितिमात्रेण दूरस्थकर्मानुवादे 'द्वादशाहीनस्य' इत्यत्रापि दूरस्थाहर्गणानुवादापत्त्या अहर्गणानुवादेन द्वादशोपसद्विधानं स्यादिति चेन्न ; तस्य ज्योतिष्टोमाङ्गत्र्युपसत्त्वविधिशेषत्वेनोपपत्तेर्दूरस्थकर्मानुवादानङ्गीकारात् ; प्रकृते तु 'यदाहवनीये जुहोति' इत्यादिवत् दूरस्थकर्मानुवादोपपत्तिरित्याशयेनाह—**यदाहवनीय इति** ॥ ननु मासस्यानुपादेयत्वेन कृतिसाध्यत्वाभावात् विध्यनुपपत्तिरत आह—**अनुपादेयस्यापीति** ॥ **विधाने इति** ॥ कृत्यसाध्यत्वेऽपि कृत्यधिकरणत्वेनामा-वास्यादिकाल इव विधिसम्भवादिति भावः । न च तथापि सायंप्रातःकालयोः प्राकरणिकयोर्विरोध इति वाच्यम् ; अपराह्णादेरिवाविरुद्धत्वात् । न च तथापि मासमिति द्वितीयया अत्यन्तसंयोगार्थविहितया सान्तत्यरूपगुणविधिविरोध इति वाच्यम् ; आहारविहाराद्यर्थं तस्य बाधावश्यकत्वेनान्यथानुपपत्तिबाधितस्य सान्तत्यस्य सायंप्रातःकालविधिनापि सङ्कोचसम्भवात् । दृश्यते हि जातेष्टौ अन्यथानुपपत्ति-बाधितस्य जातेष्टिप्रयोगस्य पर्वकालेनाबाधः । न च जीवननिमित्तस्य सायंप्रातः-कालाभ्यामिव मासेनाप्यवच्छेदोऽस्त्विति वाच्यम् ; यावज्जीववाक्यवैयर्थ्यापत्तेः । अस्य विधेः "जीर्णो वा विरमेत्" इत्यंशस्य वानुकल्पस्य काम्यप्रयोगपरत्वस्य वा कल्पनात् । न च 'दीक्षितो न जुहोति' इति पर्युदासात् नाग्निहोत्रप्रसक्तिरिति वाच्यम् ; यावज्जीववाक्येन नित्यप्राप्ताग्निहोत्रस्य दीक्षामध्ये पर्युदस्तस्य मासवाक्येन पर्युदाससम्भवात् संवत्सरसत्रे मासषट्कस्य सोमयागैरिवावशिष्टमासषट्कस्याग्निहोत्रादि-षट्केनापूरणादाकाङ्क्षादिवशेन सत्रप्रयोगवचनेन फलविधानाद्वा सत्रप्रकरणपाठस्यापि युक्तत्वादिति भावः । ननु प्राप्ताग्निहोत्रानुवादेनोपसदाद्युत्तरकालस्य मासस्य कर्तृबहुत्वस्य च विधाने वाक्यभेदः स्यादित्यत आह—**कर्तृबहुत्वेत्यादि** ॥ मासादीनां प्रयोगा-न्वयितया निरुक्तसकलगुणविशिष्टप्रयोगविधिसम्भवान्न वाक्यभेद इत्यर्थः । प्रकरणा-

सर्वत्र प्रवर्तकस्य विधेः कृतिविषयत्वापरपर्यायमुपादेयत्वं प्रमाणत्वाच्चाज्ञातज्ञाप्यत्वाख्यं विधेयत्वं च प्रमेयम्। तदुभयमप्येकवृत्ति समानाभिधानश्रुत्यादिना च धात्वर्थभावनावृत्तीत्युत्सर्गः। योग्योपपदसत्त्वे तु विशिष्टविधिगौरवभिया तन्मात्रवृत्ति। यथा 'यदाहवनीये जुहोति' इत्यत्राहवनीयस्योपादेयत्वविधेयत्वोभयाश्रयत्वाद्योग्यत्वम्। अत एव तत्र धात्वर्थानुवादापेक्षायां दूरस्थानामपि सर्वहोमानां कथंचिदनुवादः। प्रकृते तु मासस्यानुपादेयत्वादुपादेयत्वं धात्वर्थ एव वाच्यम्।

---

न्तरेण कर्मभेदं साधयितुं तदुपयुक्तं विधिस्वरूपं प्रथमतो विविनक्ति—**सर्वत्रेति** ॥ **प्रवर्तकस्येति** ॥ प्रमेयमित्यग्रेणान्वयः । उपादेयत्वमेकं विधिप्रयोजनमित्यर्थः । अज्ञातज्ञाप्यत्वमेकं प्रमेयम् । विधिर्हि प्रवर्तनात्मकः । प्रवृत्तिफलकव्यापारश्च प्रवर्तना । ततश्च यागादौ प्रवृत्तिं जनयति विधिरिति प्रवृत्तिविषयत्वं यागादेः सिध्यतीति कृतिविषयत्वरूपोपादेयत्वस्य विधिप्रमेयत्वं स्पष्टम् । तथा अज्ञातज्ञापकत्वस्यापि वेदस्वाभाव्यादेव सिद्धत्वात् विधेरप्यज्ञातज्ञापकत्वं सिद्धमेव। अन्यथा प्राप्तार्थत्वेनानुवादत्वापत्तेः । अतोऽज्ञातज्ञापकत्वं विधेरित्युभयं विधिप्रमेयमित्यर्थः ॥ **तदुभयमपीति** ॥ नन्वङ्गत्वस्यापि विधिप्रमेयत्वात् उत्पत्तिप्रयोगविनियोगाख्यानां विधित्रयविषयतानां विधेयत्वोपादेयत्वाङ्गत्वानां त्रयाणामप्येकवृत्तित्वं वक्तुं युक्तमिति तदनुक्तेर्मूलस्य न्यूनतेति चेन्न ; एकस्यैव कर्मणो बहवः प्रयोगा विनियोगाश्च सम्भवन्ति । ते च भावनाभेदसंयोगपृथक्त्वशब्दाभ्यां शास्त्रे व्यवह्रियन्ते । उत्पत्तिस्त्वेकैव, एकेन ज्ञापनोत्तरमन्येन ज्ञातज्ञापनायोगात् । तस्मादुत्पत्तिविधिभेद एव कर्मान्तरम् । अनुपादेयगुणास्तु स्वेतरस्मिन्नुपादेयत्वमापादयन् तत्सामानाधिकरण्येन विधेयत्वस्यैव अङ्गत्वस्यापि बोधको भवति । तथापि तद्बोधनस्य कर्मभेदसाधकत्वाभावात् प्रकृते तदुपन्यासोऽनुपयुक्त इति नोक्त इति द्रष्टव्यम् ॥ **श्रुत्यादिनेति** ॥ आदिना पदश्रुतिपरिग्रहः । भावनायाः करणफलमध्यवृत्तिव्यापारसमूहरूपत्वेन फलजनकत्वेन च फलोद्देशेन तज्जनकधात्वर्थस्यैव व्यापारस्यापि जनकत्वाविशेषेणोपादेयत्वसम्भवात् भावनावृत्तीत्युक्तम् । तत्र च समानाभिधानश्रुत्या व्यापारवृत्ति समानपदश्रुत्या धात्वर्थवृत्तीत्यर्थः ॥ **योग्योपपदेति** ॥ अप्राप्तत्वे सति यत्कृतिसाध्यं तद्बोधकतिङन्तभिन्नपदेत्यर्थः । आहवनीयस्य प्रकृतविधिबोध्यहोमोद्देश्यककृतिजन्यत्वाभावेऽपि प्रणयनप्रादुष्करणसमिन्धनादिक्रियाविशिष्टत्वेनोपादेयत्वसम्भवादिति भावः ॥ **कथञ्चिदिति** ॥ सकलहोमविधिसन्निध्यभावेऽपि जुहोतिना होमत्वाच्छिन्नोपस्थिति-

अतस्तत्सामानाधिकरण्येन विधेयत्वमपि तत्रैवेति विहितस्य विधानायोगाद्भेदः ।

सम्भवादित्यर्थः । तद्वैषम्यमाह—**प्रकृते त्विति** ॥ **मासस्येति** ॥ ननु सङ्कर्षभाष्ये पितृयज्ञाधिकरणेऽमावास्यादिकालस्यापि प्रतीक्षाविषयत्वात् अस्त्येवोपादेयत्वम् इत्युक्तत्वादिदं तद्भाष्यविरुद्धमिति चेन्न ; सावनादिमासस्य सर्वदा सत्त्वेन तत्प्रतीक्षणस्यापि प्रकृते असम्भव इत्याशयात् । मासविशेषस्य सायंप्रातःकालावच्छिन्नस्य तत्सम्भवेऽपि प्रतीक्षायाः तत्कालविहितक्रियाविषयकव्यापारप्रागभावपरिपालनरूपायाः कृतिरूपत्वाभावान्न कृतिसाध्यत्वरूपोपादेयत्वम् । न चानुपादेयरूपत्वेन "वैशाख्याममावास्यायां सप्तदश मारुतीर्वत्सा उपाकरोति" इत्यादिविधिषु अमावास्याविशेषणस्य वैशाखस्याविवक्षापत्तिरिति वाच्यम् ; अनूद्यमानविशेषणत्वस्यैवाविवक्षाबीजत्वेनानुपादेयस्यापि विधेयत्वेन विवक्षाया अङ्गत्वस्य चोपपत्तेरिति भावः । "अग्निहोत्रं जुहोति" इत्यत्र जुहोतिना होमसामान्यस्य अग्निहोत्रपदेनाग्निदेवताकत्वस्य चोपस्थित्या सामानाधिकरण्येनानग्निदेवत्यहोमव्यावृत्तौ तत्प्रख्यशास्त्रपर्यालोचनोत्तरमग्निहोत्रपदस्य स्ववाक्यविहितजुहोतिनामत्वनिश्चयोत्तरम् अग्निदेवत्येष्वपि विजातीयोऽयं होम इत्यवगम्यते । ततश्च जुहोतिना विजातीयहोमत्वप्रकारकहोमोपस्थितिः । अग्निहोत्रपदेन त्वग्निदेवत्यहोमत्वप्रकारिकैव, न तु जातिविशेषोऽपि तच्छक्यतावच्छेदकः । अतिप्रसङ्गनिरासस्य उद्भिदधिकरण एव प्रदर्शनात् । तथा च तादृशोपस्थितेः सन्निधिना यावत्पर्यन्तमनुवृत्तिः तदन्तर्गतजुहोत्यन्तरेणापि तादृशविजातीयहोमस्य पूर्वज्ञातस्यैवोपस्थापनान्नाज्ञातज्ञाप्यत्वरूपविधेयपरता । असन्निधौ तु तदुपस्थापकाभावात् केवलजुहोतिना होमस्यैवोपस्थापनात् अग्निहोत्रपदस्य त्वग्निदेवत्यत्वप्रकारकोपस्थितिमात्रजनकत्वेन तादृशविजातीयहोमादस्य भेदेऽप्यविरोधादग्निदेवत्यहोमविधाने बुद्धे धर्माकाङ्क्षायां यागान्तरगवेषणावसरे नित्याग्निहोत्रोपस्थित्या तदीयनामधेयसामानाधिकरण्येन नूनं तद्धर्मकमिति नामातिदेशे ज्ञाते तत एवाग्निदेवत्यत्वस्यापि लाभपर्यालोचनेन अत्रत्याग्निहोत्रपदस्य तद्धर्मकत्वलक्षणाज्ञानादग्निहोत्रधर्मकं नित्याग्निहोत्रात् कर्मान्तरम् इदमिति निश्चीयते । न चाग्निहोत्रपदस्य स्ववाक्यगतकर्मनामत्वदर्शनात् तदभेदादभेदः किं न स्यादिति वाच्यम् ; प्रकरणभेदेन द्विःपाठावगतस्य भेदस्य प्राणाग्निहोत्रसाधारणाग्निहोत्रपदमात्रेण बाधायोगान्नैयमिकाग्निहोत्रसन्निहिततत्प्रख्यशास्त्रेण तन्नामत्वनिश्चयेऽपि मासाग्निहोत्रनामत्वानिश्चयात् ऐक्यसिद्ध्युत्तरं नामत्वसिद्ध्या तद्बलादैक्यसाधनेऽन्योन्याश्रयाच्च । किं बहुना ? ईदृशानिश्चयोऽग्निहोत्रवाक्यद्वयमव्यवधानेन यदि पठ्येत तदाप्यभ्याससहकारेण विहितविधानायोगन्यायेन स्यादेव भेदः । किमुत

**एवं सत्यपि यदि 'यत्सायं जुहोति'[1] इत्यादिवत् प्रत्यभिज्ञापकं सन्निध्यादि**

असन्निधाने । तत्रैव पदान्तराम्नाने तु तदर्थो यद्युपादेयः सन्नप्राप्तः तस्यापि विधाने गौरवात् धात्वर्थस्योद्देश्यसमर्पकत्वसम्भवासम्भवचिन्तया तत्प्रापकप्रमाणपर्यालोचनेन यद्यतिदेशादिरूपं दूरस्थोपस्थापकं लभ्यते यथा 'एकादश प्रयाजान् यजति' इत्यादौ तदा तावन्मात्रे विधिपर्यवसानसम्भवान्न कर्मान्तरतेति निश्चीयते । यद्यनुपादेयः सन्नप्राप्तः तदा तस्योद्देश्यत्वयोग्यतया धात्वर्थस्यैव तदुद्देशेनोपादेयत्वावश्यंभावात् उपादेयत्वे च विधेयत्वसामानाधिकरण्यस्य औत्सर्गिकस्यापि प्रकृते प्रबलापवादमन्तरेण परिहारायोगात् विशिष्टस्यैव विधेयत्वेन कर्मान्तरत्वसिद्धिः। तस्मादप्राप्तोपादेयगुणत्व एव कर्मान्तरा-योगात् तदभाव एवानुपादेयगुणसाचिव्यशब्दार्थः । अप्राप्तोपादेयगुणाभावस्तु विशिष्टा-भावरूपत्वात्त्रिविधः । उपादेयत्वेऽपि गुणस्य प्राप्तत्वात् यथा 'अप्सुमन्तावाज्यभागौ' इति । अप्राप्तत्वेऽप्युपादेयगुणाभावात् यथा मासाग्निहोत्रविधौ । उभयाभावात् यथा गृहमेधी-याज्यभागविधौ ; आज्यभागविध्योः पूर्वपक्षे प्रकरणान्तरात् कर्मभेदस्याकरे व्यक्तत्वात् । तदेतत्सर्वमभिप्रेत्याह—**एवं सत्यपीति** ॥ "एवं सरस्वत्या" इत्यन्तेनैवं सिद्धान्तिताात्पर्य-विषयार्थो निरूपितः । अधुना स्पष्टप्रतिपत्त्यर्थं मूलाक्षराणि व्याख्यायन्ते ॥ **सर्वत्रेति** ॥ सर्वविधिस्थलेऽपीयं परिभाषा द्रष्टव्येति शेषः ॥ **प्रवर्तकस्य**—प्रवृत्तिजनकस्य । आर्थ-भावनाभाव्यकस्येत्यर्थः । **कृतिविषयत्वापरपर्यायं** कृतिविषयत्वरूपमित्यर्थः ॥ **उपादेयत्वं प्रमेयं** फलमित्यर्थः । प्रवृत्तिजनकव्यापाररूपप्रवर्तनाविषयत्वस्य प्रवर्तनारूपविधिजन्य-प्रवृत्तिविषयत्वरूपत्वेन स्वर्गादेः भाव्यत्वेन यागादेः करणत्वेन विषयत्वात् । **प्रमाणत्वात्** वैदिकप्रमाणत्वादित्यर्थः । लोके ज्ञातज्ञापनेऽपि घटोऽस्तीत्यादौ प्रमाणत्वाविघातादिति भावः । वेदस्य हि प्रामाण्यमनधिगताबाधितार्थबोधकत्वं शास्त्रसिद्धम् । विशेषतश्च विधिवाक्यानाम् । ततश्च धात्वर्थभावनयोः अज्ञातज्ञाप्यत्वरूपं विधेय-त्वमपि प्रमेयमित्यर्थः ॥ **तदुभयमपीति** ॥ उपादेयत्वं विधेयत्वं चेत्यर्थः ॥ **एकवृत्ति** एकपदार्थवृत्तीति ज्ञेयमित्यर्थः । तत्र नियामकमाह—**समानेति** ॥ आदिना समानपदश्रुतिपरिग्रहः । समानाभिधानश्रुत्या भावनावृत्ति समानपदश्रुत्या धात्वर्थवृत्तीत्यर्थः । उपादेयत्वविधेयत्वयोः विधिप्रयोज्यत्वेन विधिसान्निध्येन तदुभय-वृत्तित्वस्य युक्तत्वादिति भावः । उत्सर्गस्यापवादमाह—**योग्येति** ॥ उपादेयत्वविधेयत्वान्वय-योग्येत्यर्थः ॥ **उपपदेति** ॥ तदुभयान्वययोग्यार्थबोधकपदसमभिव्याहारसत्त्वस्थल इत्यर्थः ॥ **विशिष्टविधिगौरवभिया**—तदुभयविशिष्टधात्वर्थभावनाविधानगौरवेणेत्यर्थः ।

१. तै. ब्रा. २–१–२.

प्रमाणं भवेत् ततोऽगत्या कालादौ विधेयत्वं कर्मणि च प्राप्तेऽप्युपादेयत्वमिति वैयधिकरण्यमप्याश्रीयेत । न त्वेतदस्ति । न च सन्निध्यभावेऽपि नाम्न एव

---

**तन्मात्रवृत्ति**—उपपदार्थमात्रवृत्ति । मात्रपदेन धात्वर्थभावनावृत्तित्वव्यवच्छेदः । तयोरुपपदार्थवृत्तितया धात्वर्थभावनामात्रविधाने लाघवादित्यर्थः । तदुदाहरति—**यथेति** ॥ 'यदाहवनीये जुहोति' इत्यादौ आहवनीयस्योपादेयत्वविधेयत्वोभयान्वययोग्यत्वात् कृतिसाध्यत्वमज्ञातज्ञाप्यत्वं च सम्भवतीत्यर्थः । ननु यदाहवनीयवाक्ये धात्वर्थस्य विधेयत्वाभावेऽनुवाद्यत्वावश्यंभावेन प्रापकप्रमाणाभावादनुवाद्यत्वं न सम्भवतीत्यत आह—**अत एवेति** ॥ **दूरस्थानाम्**—तत्तद्विधिप्रकरणपठितानामित्यर्थः ॥ **कथञ्चिदिति** ॥ यदाहवनीयवाक्ये द्रव्यदेवताभावेन होमविशेषाज्ञानेऽपि होमत्वरूपसामान्यधर्मपुरस्कारेणोपस्थितिसम्भवेनानुवादत्वोपपत्तिरिति भावः ॥ **प्रकृते तु**—"मासमग्निहोत्रं जुहोति" इत्यादौ । **मासस्यानुपादेयत्वात्**—कृतिविषयत्वाभावात् । **धात्वर्थ एवोपादेयत्वं** कृतिविषयत्वं **वक्तव्यम्** । ननु धात्वर्थस्योपादेयत्वेऽप्यज्ञातज्ञाप्यत्वं मासेऽस्त्वित्यत आह—**अत इति** ॥ **तत्सामानाधिकरण्येन**—कृतिविषयत्वसामानाधिकरण्येन ॥ **विधेयत्वमपि तत्रैव**—धात्वर्थ एवेति । उपादेयत्वविधेयत्वयोरेकवृत्तित्वस्य व्युत्पत्तिसिद्धत्वादिति भावः । ततश्च विहितविधानायोगात् कर्मभेदोऽङ्गीकर्तव्य इत्यर्थः । नन्वेवं 'सायं जुहोति' इत्यादावप्युपादेयत्वविधेयत्वयोः सामानाधिकरण्यव्युत्पत्त्यनुरोधेन कर्मान्तरत्वापत्तिरत आह—**एवं सत्यपीति** ॥ तदुभयसामानाधिकरण्यव्युत्पत्तिसत्त्वेऽपीत्यर्थः ॥ **सन्निध्यादीति** ॥ अग्निहोत्रप्रकरणे 'सायं जुहोति, प्रातर्जुहोति' इति श्रवणेन नैयमिकाग्निहोत्रस्योपस्थितत्वादित्यर्थः । ततश्च सान्निध्यभावविशिष्टविधिसमभिव्याहारस्यैव तदुभयसामानाधिकरण्यबोधकत्वव्युत्पत्तेस्तत्र तदुभयवैयधिकरण्यं युक्तमित्यर्थः ॥ **कालादौ**—सायंप्रातरादौ ॥ **विधेयत्वम्**—अज्ञातज्ञाप्यत्वम् । **कर्मणि**—अग्निहोत्रहोमे । **उपादेयत्वं** कृतिविषयत्वं, **प्राप्तेऽपी**त्यनेन कर्मणः स्वरूपेण प्राप्तत्वेऽपि कालसम्बन्धितया प्राप्त्यभावेन विधेयत्वोपपत्तिरिति सूचितम् ॥ **न त्वेतदिति** ॥ प्रकृत इति शेषः ॥ **एतत्**—प्रकृतप्रत्यभिज्ञापकप्रमाणं सन्निधानादिकमित्यर्थः । ननु प्रकृते प्रकृतप्रत्यभिज्ञापकसन्निध्यभावेऽपि अग्निहोत्रनाम्न एव नैयमिकाग्निहोत्रोपस्थापकत्वमस्त्वित्याशङ्क्याह—**न चेति** ॥ 'सायं जुहोति' इत्यादौ नैयमिकाग्निहोत्रस्यैव मान्त्रवर्णिकदेवतायुक्तस्य दध्यादिद्रव्यकस्य च होमस्योपस्थितत्वात् अग्निहोत्रवाक्ये सायंप्रातर्वाक्ये च द्रव्यदेवतायुक्तविजातीयहोमत्वप्रकारकहोमत्वविशेष्यकोपस्थितिजननेन तादृशोपस्थित्या सायंवाक्यस्य विधेयार्थविषयकत्वबुद्धिप्रतिबन्धसम्भवान्न सायंप्रातर्वाक्यं कर्मान्तरविधायकमित्यर्थः ।

पूर्वकर्मोपस्थापकता । 'अग्निहोत्रं जुहोति' इत्यनेन जुहोतिना हि यादृशी विजातीयहोमत्वप्रकारिका होमोपस्थितिस्तादृश्यैव सन्निधिनोपनीता युक्तं यत् 'सायं जुहोति' इत्येतद्वाक्यस्थजुहोतेरपि स्वविषयविषयत्वमापादयन्ती भवति तद्गतविधेयार्थकत्वप्रतिबन्धिका । अग्निहोत्रनाम[1] त्वग्निदेवताकहोमत्वप्रकारकहोमविशेष्यकबोधं जनयत् जुहोतेर्न पूर्वकर्मोपस्थापकत्वमापादयितुं क्षमम् । न ह्यग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति । विजातीयहोमत्वस्य नाम्ना अनुपस्थितेः। अन्यथा पर्यायत्वेन सहप्रयोगानापत्तेः । अतिप्रसङ्गनिराकरणस्य प्राचीनप्रयोगाभावेनैवोद्भिदधिकरणे स्थापितत्वेन योगरूढ्यनङ्गीकाराच्च । अन्यथा मत्वर्थलक्षणादिभिया अतिप्रसङ्गभङ्गार्थमपि रूढ्यङ्गीकारे सोमादावपि तदापत्तेः । अतो न नाम्ना तदुपस्थितिः । अत एव यत्र नामैवानुपादेयगुणयोगेन श्रुतं न तु धातुः 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ तत्र नामार्थस्यैवोपादेयत्वसामानाधिकरण्येन विधेयत्वप्रसक्तौ नामजन्योपस्थित्या तत्प्रतिबन्धान्न कर्मान्तरम्, अस्तु वा तद्वाक्यस्य प्राकरणिकत्वा-

---

ननु प्रकृतेऽप्यग्निहोत्रनामजन्योपस्थितेर्विधेयार्थबुद्धिप्रतिबन्धः स्यादित्यत आह—**अग्निहोत्रनाम त्विति** ॥ 'मासमग्निहोत्रम्' इत्यत्र नामेत्यर्थः ॥ **अग्निदेवताकेति** ॥ अग्निदेवताकहोममेवोपस्थापयति, न तु नैयमिकाग्निहोत्रमित्यर्थः । ततश्च जुहोतिना न नैयमिकाग्निहोत्रमित्यर्थः । तदेवोपपादयति—**न हीति** ॥ अग्निदेवताकहोमानां शास्त्रे बहुशो दर्शनादित्यर्थः । नाम्ना मान्त्रवर्णिकदेवतायुक्तकर्मानुपस्थितेः । ननु रूढ्या विजातीयहोमोपस्थितिरस्त्वित्यत आह—**अन्यथेति** ॥ नाम्नो धातोश्चैकार्थत्वे घटः कलश इत्यादिवदप्रमाणत्वापत्त्या सहप्रयोगानुपपत्तिरित्यर्थः । ननु योगरूढ्या तदुपस्थितिरस्त्वित्यत आह—**अतिप्रसङ्गेति** ॥ ततश्च योगरूढ्यनङ्गीकारान्न तदुपस्थितिसम्भव इत्यर्थः ॥ **अन्यथा**—योगरूढ्यङ्गीकारे, उद्भिदादिपदानां मत्वर्थलक्षणाभिया अतिप्रसङ्गनिराकरणाय रूढ्यङ्गीकारे सोमादिपदानामपि यागनामत्वं स्यादित्यर्थः । विस्तरेण चैतत् व्याख्यातम् उद्भिदधिकरणे । मूलेऽपि दाक्षायणाधिकरणे योगरूढिः स्पष्टमेवोक्तेतीदं प्रौढिवादमात्रमिति द्रष्टव्यम् । नन्वेवं "सर्वेभ्यो दर्शपूर्णमासौ" इत्यादौ धात्वर्थाश्रवणेन केवलनामश्रवणात् तत्र नामार्थस्यैवोपादेयत्वसामानाधिकरण्येन विधेयत्वापत्त्या कर्मान्तरत्वं स्यादित्यत आह—**अत एवेति** ॥ सान्निध्यज्ञानस्य प्रतिबन्धकत्वादेवेत्यर्थः ॥ **अनुपादेयेति** ॥ फलसामानाधिकरण्येनेत्यर्थः ॥

---

१. 'अग्निहोत्रादिनाम तु' इति पाठान्तरम् ।

दकर्मान्तरत्वम् । अतो नाम्ना प्रकृते जुहोतेर्विधेयार्थत्वप्रतिबन्धायोगादनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात् सिद्धं कर्मान्तरत्वम् । अत्र चानुपादेयगुणयोगस्य स्ववृत्त्युपादेयत्वापनयद्वारा पारिशेष्याद्धात्वर्थवृत्त्युपादेयत्वापादनं व्यापारः । अनुपस्थितेः उपादेयत्वसामानाधिकरण्येन विधेयत्वाप्रतिबन्धः सः । अत एव न प्राचीनरीत्या अनुपादेयगुणयोग एव प्रयोजकः, अपि तु उपादेयगुणसामान्याभाव एवेति ध्येयम् । अतः सिद्धं कालविशिष्टकर्मान्तरविधानमेवेदम् ॥

---

**नामजन्येति** ॥ सन्निधिसहकृतयेति शेषः ॥ **तत्प्रतिबन्धात्**—कर्मविधिप्रतिबन्धात् । ननु सार्वकाम्यवाक्यस्य दर्शपूर्णमासप्रकरणस्थत्वादेव "सन्निधौ त्वविभागात्" इति न्यायेन प्रकृतकर्मपरत्वसम्भवान्न प्रतिबन्धकत्वं कल्पनीयमित्यत इष्टापत्त्या तथैवाह—**अस्तु वेति** ॥ **अत इति** ॥ मासाग्निहोत्रवाक्ये नामजन्योपस्थितेर्जुहोत्यर्थविधिप्रतिबन्धायोगात् अनुपादेयमासरूपगुणयुक्तासन्निधिरूपप्रकरणान्तरात् कर्मान्तरमेव विधीयत इत्युपसंहरति—**अनुपादेयेति** ॥ अनुपादेयगुणस्यासन्निधेश्च भेदकत्वे व्यापारभेदमाह—**अत्र चेति** ॥ **स्ववृत्तीति** ॥ मासादिगुणवृत्तीत्यर्थः ॥ **अपनयद्वारेति** ॥ स्वस्योपादेयत्वाभावेन वाक्यसाफल्याय कस्यचिदुपादेयस्यावश्यकत्वात् धात्वर्थ एवोपादेयत्वं पर्यवस्यतीत्यर्थः । अनुपस्थितेरुपादेयत्वसामानाधिकरण्येन विधेयत्वाप्रतिबन्धेन प्रतिबन्धकाभावात् कर्मान्तरविधानं सिध्यतीत्यर्थः । अयमाशयः । 'मासवाक्यश्रुतो होमो विधेयः ; स्वबोधकधातुसमभिव्याहृतकृतिविषयत्वायोग्यमासादिसमभिव्याहृतविधिविभक्तिप्रकृतिकधातुबोध्यत्वात् ; यन्नैवं तन्नैवम् ; यथा आग्नेयादि' इत्याद्यनुमानेन धात्वर्थस्योपादेयत्वापादनं बोध्यम् । अनुपस्थितेस्तु 'मासाग्निहोत्रवाक्यश्रुतो होमः उपादेयत्वसमानाधिकरणविधेयतावान् ; उपस्थितिरूपप्रतिबन्धकाभावसहकृतविधिसमभिव्याहृतत्वात्' इत्यनुमानेन विधेयत्वावगमो द्रष्टव्य इति ॥ **स इति** ॥ व्यापार इत्यर्थः ॥ **अत एवेति** ॥ असन्निध्यनुपादेयगुणयोर्द्वारभेदेन कर्मभेदप्रयोजकत्वादेवेत्यर्थः ॥ **अपि त्विति** ॥ अनुपादेयगुणाभावेऽपि उपादेयगुणाभावमात्रेण विधेर्धात्वर्थे पर्यवसानसम्भवेन कर्मभेदसिद्धेरिति भावः । दर्शपूर्णमासचातुर्मास्यादिषु प्रकरणपठिते 'यवाग्वैवैतां रात्रिमग्निहोत्रं जुहोति' इति विधौ उपादेयानुपादेयगुणद्वययोगेन प्राचीनमते प्रकरणान्तरापत्तेरिति भावः । नन्वेवं "तनूनपातं यजति" इत्यत्राप्यनेनैव कर्मभेदसिद्धौ अभ्यासरूपप्रमाणान्तरं व्यर्थमिति चेन्न ; तत्राभ्यासेन भेदसिद्ध्युत्तरमेव तद्वाक्ये पूर्वयागानुपस्थितेरात्मलाभेन पश्चादापततोऽपि प्रकरणान्तरस्यानधिगतार्थगन्तृत्वाभावेनाभ्याससार्थक्यात् । "बार्हस्पत्यश्चरुः" इत्यभ्यासे प्रकरणान्तरस्य विशेषणभावेनाभावाच्च ॥ **इदमिति** ॥ मासाग्निहोत्रवाक्यमित्यर्थः ।

एवं 'सरस्वत्या दक्षिणेन तीरेण आग्नेयोऽष्टाकपालः' इति देशरूपानुपादेयस्य आग्नेयपदस्य साधारणत्वेन पूर्वकर्मोपस्थापकत्वाभावात् । निमित्तस्य तु 'सत्रायागूर्य विश्वजिता यजेत' इति ; आगूरणं सङ्कल्पः, तदुत्तरं सत्रमकुर्वतोऽयं 'विश्वजिता यजेत' इत्यस्मात् कर्मान्तरम् । न चानेन विनियुक्तस्य प्रयुक्तस्य वा तेनोत्पत्तिः । विनियोगादिसामानाधिकरण्येनावगताया उत्पत्तेः सन्निधिं विना बाधे प्रमाणाभावात् ॥ ११ ॥

## (१२)—फलं चाकर्मसन्निधौ ॥ २५ ॥

फलस्य 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति । संस्कार्यस्य तु 'औदुम्बरीं प्रोक्षति' इति व्रीहिप्रोक्षणात् कर्मान्तरम् । पञ्चैव यथानुपादेयानि तथा वाजपेयाधिकरणे कौस्तुभे प्रपञ्चितम् ॥ १२ ॥

---

अस्यैवोत्तरत्र अनुपादेयस्य निमित्तस्य फलस्य संस्कार्यस्य इति पदेष्वनुवृत्तिः एतेषु । पञ्चसु कालादिष्वनुपादेयेषु आद्यं द्वयमङ्गमेव । अन्त्यं द्वयं प्रधानमेव । मध्यमं तु नोभयम् । अनुष्ठापकत्वं तु सर्वेषामविशिष्टम् । अत एवैतैर्धात्वर्थस्योपादेयताक्षेपात् समानाधिकरणविधेयताबोधनद्वारा कर्मान्तरनिर्णयोपयोगित्वमपि समानमेव । तत्राद्यद्वयमङ्गित्वाभावोपाधिना पृथङ्निरूप्य अङ्गिद्वयं पृथङ्निरूपयति । सूत्रे प्रयोजनशब्दो धात्वर्थपरो भावनापरो वा ॥ ११ ॥

फलं चाकर्मसन्निधौ ॥ पूर्वन्यायातिदेशादातिदेशिकी सङ्गतिः । अनारभ्य श्रुतम् 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति ॥ तथा अश्वमेधे 'त्रैधातवीया दीक्षणीया' इति । तत्र संशयः । किं प्रकृताग्नेये फलविधिः, काम्ये चा त्रैधातवीये कर्मणि दीक्षणीयकार्ययजमानसंस्कारविधिः, उत कर्मान्तरविधिरिति । तथ संस्कारस्योदाहरणान्तरमप्याह—**औदुम्बरीमिति** ॥ तत्र पूर्वाधिकरणवदेव पूर्वपक्ष इति मत्वा सिद्धान्तमेवाह—**फलस्येति** ॥ रुक्काम इत्यनुपादेयफलसहकृतसमभिव्याहृतनिर्वपतिना कर्मान्तरमेव विधीयत इत्यर्थः । तथा "व्रीहीन् प्रोक्षति" इति विहितप्रोक्षणात् औदुम्बरीप्रोक्षणं भिन्नमेव ; औदुम्बरीरूपसंस्कार्यस्यानुपादेयत्वादिति भावः । ननु यजमानैकत्वब्राह्मणत्वादेश्चानुपादेयस्य सत्त्वात् तयोः कर्मभेदकत्वस्यानुक्तत्वान्न्यूनतेत्यत आह—**यथेति** ॥ विस्तरभयात्तेषामनुपादेयत्वं नात्र निराकृतमित्यर्थः ॥

सूत्रार्थस्तु—**अकर्मसन्निधौ**—कर्मसन्निध्यभावे । फलमपि कर्मभेदकं स्यादिति ॥ १२ ॥

## (१३)---सन्निधौ त्वविभागात्फलार्थेन पुनः श्रुतिः ॥ २६ ॥

पञ्चानामप्यनुपादेयानां सन्निधौ प्रत्युदाहरणानि—दर्शपूर्णमासप्रकरणे 'पौर्णमास्यां पौर्णमास्या यजेत' 'समे दर्शपूर्णमासाभ्यां यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति चतुर्णाम्; स्विष्टकृतं प्रकृत्य 'शेषात्स्विष्टकृतं यजति' इति शेषरूपसंस्कार्यस्य। अत्र सर्वत्र सन्निधानात् स्वविषयवृत्तिविधेयत्वप्रतिबन्धात्प्राप्तस्यैव कर्मणः कालदेशविशिष्टप्रयोगमात्रं विधिलाघवायानुमन्यते; न तु कर्मोत्पत्तिमपि विधत्ते। यत्र तु प्रयोगोऽपि प्राप्तः

---

अयमत्र निष्कर्षः। 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इत्यादौ मासकालोऽनुपादेयः। 'सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः' इत्यादौ देशोऽनुपादेयः। 'सत्रायागूर्य विश्वजिता यजेत' इत्यत्रागूरणरूपसङ्कल्पो निमित्तात्मकोऽनुपादेयः। 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इत्यदावनुपादेयं फलम्। 'औदुम्बरीं प्रोक्षति' इत्यादौ संस्कार्योऽनुपादेयः इत्यनुपादेय इति सर्वत्र गुणानां पूर्वत्र विधानासम्भवात् प्रकरणान्तराद्धात्वर्थभावनयोर्भेद इति सिद्धम्। नन्वेवं शब्दान्तराभ्याससंज्ञागुणादिस्थलेष्वपि प्रकरणान्तरादेव भेदसम्भवात्तेषां पृथक्प्रमाणत्वं न स्यात्। सर्वत्र हि शब्दान्तरादिभिरप्रकृतविषयतैव विधेर्बोध्यत इति न साक्षाद्भेदः। भेदस्तु विधेरप्रकृतविषयत्वात् सिध्यति। तस्मात् सर्वत्र प्रकराणान्तरमेव भेदकप्रमाणमिति। न च तेषामेव भेदकत्वं यद्विधेरप्रकृतविषयत्वापादनमिति वाच्यम्; एवं सत्यत्रापि गुणादेव तत्सिद्धेः स एव भेदकः स्यान्न प्रकरणान्तरमिति चेन्न; प्रकरणान्तरस्य शब्दान्तरादिभिः साम्याभावात्। प्रकरणान्तरस्य साक्षाद्भेदकत्वात्। अन्येषां प्रकरणान्तरसम्पादकत्वात्। किं च "मासं दर्शपूर्णमासाभ्याम्" इत्यादौ अनेकगुणाभावात् नाप्रकृताभिधानं सिध्येत्। अतः पूर्वकर्मासन्निधानमेव प्रकरणान्तरम्। कथं पुनस्तेन भेदः सिध्यतीति चेदुच्यते। असन्निहितस्य कर्मणो बुद्धौ विपरिवृत्त्यभावेन शब्देनैवोपस्थितेर्वक्तव्यतया अनुपादेयसमभिव्याहारे तस्य विधिविषयत्वासम्भवेन धात्वर्थस्यैव विधिविषयत्वेन भेदसिद्धेर्निष्प्रत्यूहत्वादिति ॥ १२ ॥

**सन्निधौ त्वविभागात्फलार्थेन पुनःश्रुतिः॥** अनुपादेयपञ्चकमपि सन्निधौ कर्मान्तरं नापादयतीति प्रत्युदाहरणमात्रमेतदित्याह—**पञ्चानामपीति**॥ सन्निधिनेव यच्छब्दादिनापि विधेयताप्रतिबन्धे सति न प्रकरणान्तरमिति दर्शयति—**य इष्ट्येति**॥

'य इष्ट्या' इत्यादौ तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिः सम्भवति । देशकालयोरुपादेयत्वासम्भवेऽपि यागाङ्गत्वेन विनियोगविधिः । निमित्तस्थले तु मिथो निमित्तनैमित्तिकयोरङ्गाङ्गित्वासम्भवात् प्राप्तस्यापि कर्मणो निमित्तसम्बन्धानुमितपापक्षयार्थत्वेन विनियोगविधिरिति वक्ष्यते । फलसंस्कार्ययोस्तु तदुद्देशेन प्राप्तकर्मविनियोगविधिः स्पष्ट एव । अतो न सन्निधिसत्त्वेऽनुपादेयगुणयोगेऽपि कर्मान्तरम् ॥ १३ ॥

**(१४)—आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥ अविभागात्तु कर्मणो द्विरुक्तेन विधीयेत ॥ २८ ॥ अन्यार्था वा पुनः श्रुतिः ॥ २९ ॥**

कालद्वययोगेनाग्नेयं विधाय 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति'[१] इति श्रुतम् । तत्र कालद्वययुक्तादाग्नेयात्कर्मान्तरमिदम् ; प्रकरणान्तरादभ्यासाद्वा

---

अत एव 'एतया पुनराधेयसम्मितया इष्ट्येष्ट्वा अग्निहोत्रं जुहोति' इति विधौ पुनराधेयसम्मितवत् उदवसानीयेष्टेर्विशेषणेन 'दीक्षितो न जुहोति' इति निषेधापेक्षितविधिसमर्पणेऽस्य विधेस्तात्पर्यग्राहकेण विधेयताप्रतिबन्धान्न कर्मान्तरतेत्याद्यूह्यम् ॥ **वक्ष्यत इति** ॥ यावज्जीवाधिकरण इति शेषः ॥ सूत्रे **अविभागात्** विपरिवृत्तेरित्यर्थः ॥ १३ ॥

**आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत** ॥ दर्शपूर्णमासयोः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति कालद्वययुक्तमाग्नेयस्यैकं वचनम् । अपरं तु 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति । तत्र संशयः । किं उभयत्र विहिताग्नेयाद्भिन्नं कर्मेदममावास्यायां विहितम्, उत तस्यैवानुवाद इति । तत्र पूर्वपक्षमाह—**कालद्वययुक्तेति** ॥ **प्रकरणान्तरादिति** ॥ दर्शपूर्णमासप्रकरणानुवृत्तावपि प्रदेशान्तरश्रुतत्वेन कालद्वययुक्ताग्नेयप्रत्यभिज्ञाभावेनामावास्यारूपानुपादेयगुणयोगाच्च यागान्तरमित्यर्थः । ननु दर्शपूर्णमाससमाप्तिपर्यन्तं प्रकरणानुवृत्तेर्न प्रकरणान्तरसम्भवः । प्रदेशान्तरश्रुतत्वमात्रेणानुपस्थित्यङ्गीकारे पत्नीसंयाजादीनां प्रदेशान्तरश्रुतानामङ्गत्वानापत्तेरित्यस्वरसादाह—**अभ्यासाद्वेति** ॥ ननु केवलाग्नेयवाक्यविहितयागानुवादेन कालद्वयवाक्ये पौर्णमासीविधिसम्भवात् नाभ्यासविधिसम्भव इत्यत

---

१. तै. सं. २—५—३.

भेदोपपत्तेः । अनेनैव विहितस्येतरेण पौर्णमासीमात्रविधिस्तु उत्पत्तिशिष्टकालावरोधान्निराकर्तव्यः । न चैकस्यैव कर्मणोऽभ्युदयशिरस्कतया विधिद्वयेन विधानं पिङ्गाक्ष्येकहायनीशब्दाभ्यामिव द्रव्यविशेषस्येति वाच्यम् ; पिङ्गाक्ष्येकहायनीशब्दाभ्यामुपस्थितस्याप्येकेन विधिना विधाने बाधकाभावात् । प्रकृते त्वेकेन विहितस्य नेतरेण विधिसम्भव इति कर्मान्तरमेव । अत एवामावास्यायामाग्नेयद्वयकरणं पूर्वपक्षे प्रयोजनमिति प्राप्ते—

---

आह—**अनेनेति** ॥ **उत्पत्तिशिष्टेति** ॥ अस्मिन् वाक्येऽमावास्याकालस्यापि विधेयत्वेनोत्पत्तिशिष्टकालावरोधेन पौर्णमासीविधिर्न सम्भवतीत्यर्थः । ननु अरुणावाक्ये पिङ्गाक्ष्येकहायनीशब्दाभ्यामेकव्यक्तेरिवात्रापि विधिद्वयेन विहितत्वज्ञानमभ्युदयफलकमिति कल्पनान्न कर्मभेदः, साप्तदश्यादौ दृष्टत्वादित्याशङ्क्य परिहरति—**न चैकस्येति** ॥ **पिङ्गाक्षीति** ॥ पदद्वयस्यापि बहुव्रीहिबलात् प्रतीयमानान्यव्यक्तेरेकत्वेऽपि पदद्वयस्यापि गुणविशेषबोधकतया सार्थक्यात् । अत एव पार्थसारथिः 'गुणाधिक्यफलं च शब्दद्वयम्' इति । तथा च तत्र एकेनैव विधिना गुणद्वयविशिष्टव्यक्तिविधिरेव । साप्तदश्यस्थलेऽपि गत्यन्तराभावादभ्युदयफलकत्वमङ्गीकृतम् । इह तु कर्मविधिसम्भवान्नागतिकत्वमिति भावः ॥ **प्रकृत इति** ॥ तत्रैकेन विधिना द्वयोर्गुणयोः प्राप्त्यर्थं विधानम्; प्रकृते त्वेकेन विहितस्येतरेण विधानायोगात् यागान्तरविधानमेव युक्तमित्यर्थः ॥ **अत एव**—यागान्तरविधानादेव । **अमावास्यायामाग्नेयद्वयं** केवलामावास्यावाक्यविहितमेकं कालद्वयवाक्यविहितमेकमित्यर्थः । न चाग्नेयद्वयस्य सम्प्रतिपन्नदेवताकतया सहानुष्ठानादेकानुष्ठानेनोभयोरपि सिद्धिसम्भवात्कथमाग्नेयद्वयमिति वाच्यम् ; सहप्रक्षेपेऽपि सान्नाय्यवत् यागद्वयस्यानिवार्यत्वात्, पुरोडाशद्वयस्यावश्यकत्वादित्यभिप्रायात् । सन्निहितविध्येकवाक्यत्वोपपत्तौ वाक्यभेदगौरवाद्यापादकविधित्वकल्पनानुपपत्तेरैन्द्राग्नविधिशेषार्थवाद एवायं न विधिरिति सिद्धान्तमाह—**न स्वातन्त्र्येणेति** ॥ 'अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायन्' इत्यादिना आग्नेययागं स्तुत्वा तदाम्नानात् प्रशस्त आग्नेयो यतोऽमावास्यायां भवति तत ऐन्द्राग्नोऽपि तस्मिन्नेव पर्वणि क्रियमाणः प्रशस्त इति स्तावकत्वमित्यर्थः ॥

सूत्रार्थस्तु—**आग्नेयस्तु**—आग्नेययागस्तु **अभ्यासेन** यागान्तरं **प्रतीयेत उक्तहेतुत्वात्** प्रकरणान्तरादभ्यासाद्वेति ॥

एतस्यैन्द्राग्नविधिशेषत्वान्न स्वातन्त्र्येण विधायकत्वम् । प्रशस्ताग्नेयसाहित्येन चैन्द्राग्नप्रशंसा । अतो न कर्मान्तरम् ॥ १४ ॥

इति श्रीखण्डदेवकृतायां भाट्टदीपिकायां
द्वितीयस्याध्यायस्य तृतीयः पादः

---

अयमत्र निष्कर्षः—"सन्निधौ त्वविभागात्" इति पूर्वाधिकरणेनानुपादेयपञ्चकसमभिव्याहारेऽपि प्रकरणोपस्थितिसत्त्वे कर्मविधिप्रतिबन्धान्न कर्मविधित्वमित्युक्तम् । अस्मिन्नधिकरणेऽपि केवलामावास्यायुक्ताग्नेयवाक्ये सन्निधिप्रतिबन्धादेवार्थवादत्वं सिद्धान्तितमिति कालद्वययुक्ताग्नेयवाक्येनाग्नेयद्वयं विधीयत इति केषांचिद्ग्रन्थकाराणामुक्तिः कथमुपपद्यते । विचार्यम् । तथा हि—पौर्णमास्यधिकरणे कौस्तुभे उक्तम् । यो हि पदार्थो भेदमावृत्तिं [वा] विना न कर्मान्वयि स उत्पत्तिवाक्यस्थः कर्मभेदं बोधयति । उत्पन्नवाक्यस्थस्तु तदावृत्तिम् । व्यक्तं चैतत् सङ्ख्यायाम्, सा ह्येकत्वातिरिक्ता 'आज्यभागौ यजति' इत्यादावुत्पत्तिवाक्यगतत्वात् कर्मणां स्ववाक्यविहितानामेव भेदं बोधयति । "एकादश प्रयाजान् यजति" इत्यादौ तूत्पन्नवाक्यगतत्वात् प्रयजानामावृत्तिं कल्पयति । इत्थं च पौर्णमास्यमावास्याकालरूपो गुणोऽपि स्वाश्रयप्रतियोगिकभेदावृत्त्यन्यतरव्यतिरेके सति कर्मानन्वयित्वात् उत्पत्तिवाक्यस्थत्वाच्च स्वान्वय्याग्नेयभेदमेव कल्पयतीति गुणादेवात्र भेदः । प्रयोगश्च, आग्नेयवाक्यश्रुतौ पौर्णमास्यमावास्याकालौ स्वाश्रयप्रतियोगिकभेदसमानाधिकरणौ भेदावृत्त्यन्यतरव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिकर्मान्वयकत्वे सति उत्पत्तिवाक्यगतत्वात् सङ्ख्यावदिति । अत्रेदं विचार्यते । कर्मभेदं बोधयतीत्यस्य कर्मप्रतियोगिकभेदबोधार्थकत्वे सिद्धसाधनम् । आग्नेयवाक्यविहितकर्मण्यपि अग्नीषोमीयादिभेदसत्त्वात् । न च स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदपरत्वमिति वाच्यम्; बाधात्, यो हि भेदः स्वसमानाधिकरणः स स्वाश्रयप्रतियोगिको न भवति । यश्च स्वाश्रयप्रतियोगिकः स स्वसमानाधिकरणो न भवति । अमावास्यादिकालस्य द्वित्वादिवत् व्यासज्यवृत्तित्वाभावात् । "आज्यभागौ यजति" इत्यादौ द्वित्वस्य व्यासज्यवृत्तितया स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेदबोधकत्वं सम्भवतीति प्रकृते बाधो दुर्वारः । किं च उत्पत्त्यन्वयिगुणः उत्पत्तिभेदमेव बोधयेत् । कालस्तु प्रयोगान्वयित्वात् प्रयोगभेदमेव बोधयेदित्येकादशे वक्ष्यते । ततश्चामावास्यापौर्णमास्यादिकालस्य प्रयोगभेदमादायोपपत्तेर्न कर्मभेदप्रसक्तिः । न च कालस्य प्रयोगान्वयित्वेऽपि उत्पत्तिवाक्यश्रुतत्वात् कर्मभेदबोधकत्वमिति वाच्यम्; नह्युत्पत्ति-

वाक्यश्रुतत्वमात्रेण भेदकत्वम्, मानाभावात् । किं तु भेदं विना अनुपपद्यमानत्वम् । प्रकृतेऽप्युत्पत्तिविशिष्टप्रयोगविधिसम्भवेन प्रयोगान्वयिगुणनिवेशसम्भवेन प्रयोगभेदोपपत्तेर्न कर्मभेदः । ततश्चानन्यथासिद्धत्वसहितमुत्पत्तिवाक्यश्रुतत्वमेव कर्मभेदप्रयोजकमिति प्रकृते प्रयोगविध्यन्वयित्वेनान्यथासिद्धत्वान्न भेदकत्वम् । अत एव 'समिधो यजति' 'इडो यजति' इत्यादौ उत्पत्तिवाक्यश्रुतापि बहुत्वसङ्ख्या देवतान्वितत्वान्न कर्मभेद-प्रयोजिका । अत एव रेवत्यधिकरणकौस्तुभे रेवत्याख्यगुणस्य यागे परम्परा-सम्बन्धेन विधेयस्योत्पत्त्यन्वयित्वात् कर्मभेदकत्वम् । उत्तरकालस्य तु प्रयोगान्वयि-त्वादवेष्टिवत् प्रयोगभेदकत्वमिति स्वयमेवोक्तत्वेनोत्पत्तिवाक्यश्रुतत्वमात्रस्य भेदकत्वं नास्तीत्युक्तं भवतीति न प्रकृते कर्मभेदप्रसक्तिः । किं च गुणसामान्यस्य व्यावर्तकतया स्वाश्रयभेदकत्वस्य सिद्धत्वाद्धेतुकोटिप्रविष्टविशेषणस्य व्यर्थत्वात् व्यर्थविशेषणप्रयुक्तव्याप्यत्वासिद्धिरपि । किं च चशब्दद्वयबलात् कालयोः समुच्चय-प्रतीतेः कर्मभेदाङ्गीकारे कर्मणि कालयोः काले कर्मणोर्वा समुच्चायासम्भवात् भेदोऽसङ्गतः । कर्मैकत्वे तु प्रयोगस्य भिन्नत्वेऽपि प्रयुज्यमानकर्मणः एकत्वात् तदुपपत्तिः । किं च "सप्तदश प्राजापत्यान्" इत्यत्र प्राजापत्यपदोत्तरबहुवचनेन द्रव्यदेवतासम्बन्धबहुत्वप्रतीत्या तदुपपाद्ययागबहुत्ववत् "आग्नेयोऽष्टाकपालः" इत्यत्रा-प्याग्नेयपदोत्तरैकवचनेन तत्प्रकृत्यर्थद्रव्यदेवतासम्बन्धैकत्वप्रतीत्या तदुपपाद्ययागस्याप्येकत्वं सूपपादमिति नाग्नेयभेदप्रसक्तिः । अपि च "यदाग्नेयः" इत्यादौ भवतीत्येकवचनेन प्रतिपादितमेकत्वं न भावनान्वयि । किं तु प्रकृत्यर्थकर्त्रन्वयीति भवनकर्तुराग्नेयस्यैकत्वमेव युक्तम् । "ऐन्द्रौ भवतः" इत्यादौ यागद्वित्वदर्शनात् । अतश्च नाग्नेयद्वित्वसम्भवः । न च प्रत्येकैकत्वमादाय तदुपपत्तिरिति वाच्यम् ; प्रत्येकैकत्वस्य वस्तुमात्रसाधार-ण्येनाव्यावर्तकत्वापत्तेः । अत एव "पशुना यजेत" इत्यादौ अनेकपशुकरणक-यागानुष्ठानेऽपि शास्त्रार्थसिद्ध्यापत्तेः । न चेष्टापत्तिः । 'तत्रैकत्वमयज्ञाङ्गम्' इति प्रयुक्ति-लक्षणाधिकरणविरोधापत्तेः । तस्मात् स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूप-मेकत्वमेवैकवचनार्थः । साजात्यं च समभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थताव-च्छेदकरूपेणेत्यादिपूर्वतान्त्रिकोक्तरीत्या वक्तव्यमिति नात्र प्रत्येकैकत्वमादायोपपत्तिरिति यागद्वयपक्षे एकत्वानन्वयो दुरुद्धरः । अपि चैकवचनश्रुत्या यागैकत्वमवगम्यते । तद्भेदः कालद्वयसम्बन्धानुपपत्तिमूलकत्वादानुमानिकः । न च श्रुतिविरोधेऽनुमानं प्रवर्तते । अन्यथा वेष्टनस्मृतिमूलश्रुत्यनुमानसम्भवेन 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति द्वितीया-श्रुत्यवगतसाक्षात्सम्बन्धबाधापत्त्या विरोधाधिकरणसिद्धान्तभङ्गापत्तेः । अतोऽपि नाग्नेयभेदः ।

किं च आग्नेयद्वयाङ्गीकारे तद्विकारसौर्यादौ य इष्टयादिवचनेन वैकल्पिकपौर्णमास्यमावास्याकालिकैकदेवतात्वौषधद्रव्यकत्वसाम्येनाग्नेयद्वयविध्यन्तप्राप्तावपि प्रकृतौ कालभेदेन "चतुर्होत्रा पौर्णमासीमभिमृशेत्" "पञ्चहोत्रा अमावास्याम्" इति वचनबलाद्यागद्वयसम्बन्धिहविर्द्वयाङ्गतया व्यवस्थया अन्वितयोः चतुर्होतृपञ्चहोतृमन्त्रयोः अतिदेशेन तथैव प्राप्त्यवश्यंभावात् विकृतावव्यवस्थया तदनुष्ठानसिद्धान्तविरोधादाष्टमिकाधिकरणं व्यर्थं स्यात् । तदेकत्वे तु तस्य समुच्चितकालद्वयसत्त्वादव्यवस्थयैव तत्र मन्त्रद्वयस्याङ्गत्वेऽपि व्यवस्थितकालिकाग्नीषोमीयादिप्रधानान्तरसम्बन्धात्तयोः प्राकृतप्रयोगे व्यवस्थेति तस्याश्च व्यवस्थाया आर्थिकत्वेनातिदेशाभावात् "न चार्थिकं चोदकः प्रतिदिशति" इति न्यायात् अव्यवस्थोपपत्तिरित्याष्टमिकसिद्धान्तोपपत्तिरिति नाग्नेयभेदः । यत्तु आग्नेयद्वित्वपक्षेऽपि पौर्णमास्यमावास्याकालीनत्वरूपावान्तरसादृश्यवशात् विकृतावपि कालद्वयसम्बन्धिन्यां मन्त्रयोर्व्यवस्थयैव प्राप्तिर्युक्तेति पूर्वपक्षे विजातीयभावनात्वं विजातीययागत्वं वा इतिकर्तव्यताकाङ्क्षोत्थापकतावच्छेदकम्, न तु पौर्णमासीकालीनत्वादिकम् । कालस्य प्रयोगमात्रान्वयिनः स्वरूपानन्वयित्वात् । अतो न कालकृतसादृश्यमादाय व्यवस्थया प्राप्तिर्युक्तेति व्यवस्थयैव मन्त्रयोर्विकृतौ प्रयोग इति सिद्धान्तसमर्थनम् । तदपि न । एवं तर्हि कालस्य प्रयोगमात्रान्वयित्वेन इतिकर्तव्यताकाङ्क्षोत्थापकतानवच्छेदकत्ववत् कर्मभेदाप्रयोजकत्वस्याप्यापत्तौ आग्नेयद्वित्वस्यासिद्धिप्रसङ्गात् । किं च यदाग्नेयवाक्ये अमावास्यापौर्णमास्यादिशब्दाभ्यां पर्वलक्षणया पर्वकालैकत्वेनाग्नेयस्यैकत्वमेव युक्तम् 'अर्धमन्तर्वेदि' इतिवत् । न च 'अर्धमन्तर्वेदि' इत्यादिवाक्ये वाक्यभेदादिदोषवशाल्लक्षणोपपत्तिः । प्रकृते तु यथाश्रुतार्थोपपत्तेः आग्नेयभेद एव युक्त इति वाच्यम्; अत्रापि 'आग्नेयोऽष्टाकपालः' इत्येकवचनार्थैकत्वविरोधेन द्वित्वासम्भवात् । भवतीत्याख्यातोपात्तैकत्वविरोधस्य पूर्वमुक्तस्य दोषस्य सत्त्वात् । अच्युतशब्दानुपपत्तेर्वक्ष्यमाणत्वाच्च । किं च अच्युतशब्दश्रवणादप्याग्नेयैकत्वसिद्धिः । एकस्य पुनः प्रयोगे हि सत्यच्युतशब्द उपपद्यते । अत एव बह्वृचब्राह्मणे "स्ताक्ष्योऽच्युतो जातवेदस्याच्युतः" इत्यादौ एकस्यैव पुनः प्रयोगेऽच्युतशब्दो दृष्टः । तस्मादाग्नेयैकत्वमेव युक्तमिति प्राचीनानुमतः पन्थाः समीचीनः । न च यागषट्कप्रसिद्धिरेकत्वपक्षे न सम्भवतीति वाच्यम्; न हि क्वचिद्वेदे षडेव यागाः फलसाधनमिति श्रूयते ।

## अथ द्वितीयस्याध्यायस्य चतुर्थः पादः

(१)—यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥ कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्मधर्मो हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात् ॥ ३ ॥ व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥ अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र काम्य एव स्वर्गाद्यर्थे दर्शपूर्णमासकर्मणि जीवनपर्याप्तकालविधिः । न च पौर्णमास्यादिकालविरोधः;

---

हविर्याजिनां षड्यागाभावेन फलानुत्पत्तिप्रसङ्गात् । आश्वलायनानां यागसप्तकसत्त्वेन यागषट्त्वासम्भवाच्च । ततश्च प्रकृतेऽप्येकस्यैवाग्नेयस्य द्विवारमनुष्ठानेन षट्त्वस्योपपत्तिः सम्भवतीति सुधीभिर्विभावनीयमिति सङ्क्षेपः ॥ १४ ॥

इति श्रीमत्कावेरीतीरविराजमानचोलदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायनसूत्रहोशानिकर्णाटकश्रीवाञ्छेश्वरयज्वनः कृतिषु भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ द्वितीयाध्यायस्य तृतीयः पादः

---

## ॥ अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

**यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्** ॥ अस्मिन् पादे प्रयोगभेदः प्राधान्येन प्रतिपाद्यत इति पादान्तरत्वम्, पूर्वपादे कर्मभेदसहायत्वेनोक्तानुपादेयसमभिव्याहारेण प्रयोगभेदव्युत्पादनात् आनन्तर्यं च द्रष्टव्यम् ॥ **यावज्जीवमिति** ॥ बह्वृचब्राह्मणे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति काम्यप्रयोगं विधाय

व्याप्यव्यापकभावेनामावास्यापराह्णादिवदुपपत्तेः । अत एव विनिगमनाविरहात् कालद्वयविधावपि प्रयोगद्वयविधिः । जीवनपर्याप्तकालविधिसामर्थ्यादेव च प्रतिपौर्णमास्याद्यर्थाद्दर्शपूर्णमासावृत्तिः । अतश्च तावद्व्याप्यप्रयोगव्यासक्तव्यापकप्रयोगादेव स्वर्गादिफलमिति प्राप्ते—

---

श्रुत इति शेषः । उत्पत्तिविधिप्रयोगविधिकृतकर्मभेदभावनाभेदविचारानन्तरविनियोगविधिभेदकृताङ्गताभेदविचारस्य पादार्थत्वादिह वाक्ये कालसंयोगेन प्रयोगभेदमात्रं वा निमित्तसंयोगेन विनियोगभेद एव वेति विचार इत्यप्याहुः । तत्र पूर्वपक्षमाह—**काम्य एवेति** ॥ स्वर्गकामवाक्यसार्वकाम्यवाक्याभ्यां काम्यमेवेदं कर्म । न तु नित्यम् । काम्ये ज्योतिष्टोमे "वसन्ते वसन्ते" इतिवत् वीप्साभावात् । तत्तादृशं कर्मोद्दिश्य यावज्जीववाक्ये कालविधिः । न पुनः काम्यप्रयोगोद्देशेनेति वार्तिकात् भ्रमितव्यम् । नित्यप्रयोगस्याधुनाप्यसिद्धत्वेन व्यावृत्त्यभावात् । णमुलन्तस्य 'यावद्दोहं तिष्ठति' इत्यादौ कालपरत्वदर्शनात् । तस्य च निरूढलक्षणयोपपत्तेः । 'अभिक्रामञ्जुहोति' इत्यादौ निमित्तपरत्वादर्शनाच्च । तत्परत्वेऽधिकाराख्यप्रकरणानुग्रहेऽपि कथंभावाख्यप्रकरणाभावाच्चेति भावः । ननु जीवनपर्याप्तकालविधौ पौर्णमास्यमावास्यादिकालस्योत्पत्तिशिष्टस्य विरोध इत्यत आह—**न चेत्यादिना** ॥ **व्याप्येति** ॥ घटकघटितकालयोरमावास्यापराह्णकालयोरिव विरोधाभावादित्यर्थः । अमावास्यासम्बन्ध्यपराह्णग्रहणेन द्वयोरपि सङ्ग्रहवत् यावज्जीवकालान्तर्गतामावास्यादिकालग्रहणेनोभयोपपत्तेरिति भावः । आदिना "सन्धिमभितो यजेत" इत्यादिपरिग्रहः ॥ **कालद्वयेति** ॥ पौर्णमास्यमावास्यात्रिकयोर्व्यवस्थया विधीयमानः पञ्चदशीरूपः एकः कालः, जीवनपर्याप्तिरूपः अपरश्चेत्युभयस्येत्यर्थः ॥ **सामर्थ्यादेवेति** ॥ पौर्णमास्यमावास्याकालयोः जीवनकालात्मकत्वविशेषणस्य व्यावृत्त्यभावेनावृत्त्याक्षेपकत्वेन सार्थक्यादित्यर्थः । तेन प्रतिदर्शपूर्णमासमेकैकः प्रयोग इति । अनेकेषु प्रयोगेषु विधेयतावच्छेदकतया सिद्धानि व्याप्यप्रयोगत्वानि । व्यापकमन्यत् प्रयोगत्वं सर्वेषु व्यासज्यवृत्तीति सर्वान्त एव फलमिति सिद्धम् । वस्तुतो जीवनपर्याप्तकालस्यावृत्त्याक्षेपकस्य आहारविहारादिवशेन सङ्कोचस्यावश्यकतया व्यापककालस्यावच्छेदकाकाङ्क्षायां पौर्णमास्यादेरवच्छेदकत्वेन विधानसम्भवे किमिति व्याप्यप्रयोगान्तरपरत्वमिति द्रष्टव्यम् । एवं च जीवनकालस्य सौर्यादावतिदेशात् यावज्जीवमभ्यासः पूर्वपक्षप्रयोजनं बोध्यम् ॥

काललक्षणापत्तेर्नायं कालविधिः । अतो धातुसम्बन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य कर्मसम्बन्धावगतेः स्वावच्छिन्नकालकत्वादिरूपसम्बन्धाश्रयणे च गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्यायलभ्यत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेर्लाघवान्निमित्तत्वमेव सम्बन्धः प्रतीयते । तदा हि प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्यायलभ्यत्वाद्यावच्छब्दार्थोऽनुवादः । निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानवत्त्वं यथा राहूपरागान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानं

---

सिद्धान्तमाह—**कालेति** ॥ 'धातुसम्बन्धे प्रत्ययाः' इत्यधिकृत्य णमुलो विधानात् प्रकृत्यर्थप्राणधारणस्य जुहोत्यर्थसम्बन्धबोधनेऽपि कालपरत्वेनानुशासनाभावात् स कालः पदार्थविधया भासते वा, संसर्गमर्यादया वा ? नाद्य इत्याह—**लक्षणापत्तेरिति** ॥ कालबोधकपदाभावादित्यर्थः । न द्वितीय इत्याह—**अत इति** ॥ **स्वावच्छिन्नेति** ॥ **स्वम्**—जीवनम् । तदवच्छिन्नकालानुष्ठेयत्वमित्यर्थः ॥ **गुणभूतेति** ॥ कालस्याङ्गत्वादित्यर्थः । जीवनकालानुरोधेन होमरूपप्रधानावृत्तेरन्याय्यत्वादित्यर्थः । अग्निहोत्रादिकाले यजमानमृतौ यजमानायाः सत्त्वात् अग्निहोत्रादिकं कृत्वा पश्चादेवाहिताग्निशरीरदाहापत्तिव्यावर्तनेन जीवनकालात्मकविशेषणस्य सार्थकतया आवृत्त्याक्षेपकत्वाभावात् । 'वसन्ते वसन्ते' इत्यत्र तु वीप्सयैवावृत्तिलाभात् सप्तम्या निमित्तत्वस्यैव बोधनाद्वेति भावः । अत एव णमुलो भावमात्रवाचित्वेन कालस्य सम्बन्धविधया भानमपि न युक्तमित्याह—**यावदिति** ॥ जीवनगतसमस्तत्वस्य जीवनव्यापकत्वस्याभिधाने गौरवादिति भावः ॥ **प्रतिनिमित्तमिति** ॥ प्राणधारणक्रियारूपनिमित्तस्य प्रतिक्षणं भेदात् वसन्तस्य मासद्वयव्यापिनः एकत्वादिति भावः ॥ **न्यायलभ्यत्वादिति** ॥ लोकसिद्धत्वादित्यर्थः । राजाश्रितानां राजदर्शनोपयोगिवस्त्रादिधारणे राजदर्शनं निमित्तम् । तदावृत्तौ वस्त्रधारणाद्यावर्तते । तदकरणेऽनिष्टं च भवति । तद्वदित्यर्थः । 'यजेत' इति विधिलकारेण हि यागस्यानुष्ठेयत्वेनोपस्थितेरनुष्ठेयानुष्ठापकभाव एव धात्वर्थयोः सम्बन्धः संसर्गमर्यादया प्रतीयते । 'यावद्दोहं तिष्ठति' इति प्रयोगो नास्त्येव । तत्सत्त्वे वात्र वर्तमानतापदेशेनानुष्ठानस्याबोधात् स्वावच्छिन्नकालकत्वमेव सम्बन्धः । 'यावद्दोहमासीत' इत्युक्तौ तु केन वा दोहस्य निमित्तत्वं वार्येत इत्युक्तम् ॥ **निमित्तत्वं चेति** ॥ **स्वम्**—निमित्तम्, राहूपरागादि । **तदन्वयव्यतिरेकाभ्यां** नैमित्तिकस्नानेऽन्वव्यतिरेकसत्त्वात्तादृशस्नानकत्वं राहूपरागे प्रयोजकतासम्बन्धेन वर्तत इति लक्षणसमन्वयः । विधिना व्यतिरेकानुविधानं न बोध्यते । उपरागव्यतिरेकप्रापकप्रमाणाभावादेव स्नानव्यतिरेक-

**यस्य स्नानस्य तद्वत्त्वं राहूपरागे । अत्र च व्यतिरेकानुविधानस्य सर्वत्र प्रापकप्रमाणाभावादेव सिद्धेरन्वयानुविधान एव विधेस्तात्पर्यम् । अतश्च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठानबाधेनादकरणे प्रत्यवायोऽनुमीयते । करणे च 'धर्मेण**

---

सिद्धेः । किं त्वन्वयानुविधान एव प्रायेण विधितात्पर्यमित्याह—**अत्र चेति ॥ अवश्येति** ॥ 'द्वादशाहमनग्निस्तु शूद्र एव न संशयः' इत्यादिशास्त्रैरकरणे प्रत्यवायश्रवणेन अवश्यानुष्ठेयत्वमिति भावः । नित्यनैमित्तिकयोरनुगतफलमाह—**अकरणे चेति** ॥ 'द्वाभ्यां नुदति' इत्यादिना 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥' इत्यादिसङ्ग्रहः । नित्यनैमित्तिककर्मविशेषाणां तत्तद्विशेषविधिभिरेव विधानादिदं वाक्यं तच्छेषमेव सत् तदपेक्षितभाव्यसमर्पकम् । काम्यविधिभिर्भाव्यानपेक्षणात् । अत एव "विश्वजिता यजेत" इति विधिशेषत्वेन तस्य वीप्साद्यश्रवणेन निमित्तसम्बन्धाभावेन च नियतानुष्ठाने मानाभावेन काम्यकोटावेव निवेशसिद्ध्या 'स स्वर्गः स्यात्' इति न्यायेन भाव्याकाङ्क्षापूर्तेरिति भावः । अन्ये तु, अस्य स्वतन्त्रविधित्वेऽपि अतद्गुणसंविज्ञानबहुव्रीहिवशादादिशब्देन गृहीतानां "यद्रात्र्या पापमाकार्षम्" इत्यादीनां वाक्यशेषत्वमित्याहुः । अत्रेदं चिन्त्यम् । किमयं धात्वर्थस्य स्वतन्त्रो विधिः, उतोपपदार्थस्य ? नाद्यः ; पापध्वंसस्य लौकिकत्वाभावेन शास्त्रतः तत्स्वरूपसाधनावगमाय 'नासाधितं करणम्' इति न्यायसहकृतेन सोपपदेन विशेषणविधिविधया धर्मजन्यत्वं विधेयस्य बोध्यते । तत्र बर्हिषि रजतस्य धर्मनाश्यत्वाभावात् तद्दानक्रियायाश्च धर्मं विनापि स्वत एव नाशात् तज्जन्यपापादृष्टस्यैव तन्नाश्यत्वेन धर्मजन्येन दुरितापूर्वध्वंसेन इष्टं भावयेत् इत्येवंविधवाक्यार्थपर्यवसानं वाच्यम् ; तथा सति भाव्यविशेषाकाङ्क्षायां पापध्वंसस्यापि विहितत्वेन धर्मत्वाद्विशेषणविधिबोधितपापक्षयान्तरस्य फलत्वम् । तस्यापि धर्मजन्यपापध्वंसत्वाकारेण विधेयकोटावपि प्रवेशात् ततोऽपि पापक्षयान्तरमित्यनवस्थापत्तिः । विश्वजिद्रात्रिसत्रादीनामनेनैव विशेषणविधिना भाव्याकाङ्क्षाशान्तेरस्यैवैतदधिकरणोदाहरणत्वेन परिशेषात् स्वर्गफलकल्पने तु ध्वंसस्य चिरस्थायिनः करणत्वेनापूर्वद्वारकल्पनानवकाशेन स्वर्गस्याक्षयत्वापत्तिः । न द्वितीयः ; उपपदार्थस्यैव पापक्षयोद्देशेन विधिस्वीकारे पापक्षयफलकत्वेन क्लृप्तानां प्रायश्चित्तानां धर्मपदेन ग्रहणे प्रकृतविधेवैयर्थ्यम् । विनिगमनाविरहात् सर्वधर्मग्रहणं न सम्भवतीति शब्दान्तराधिकरणोक्तत्वात् । तस्मादाकाङ्क्षितविधानस्य ज्यायस्त्वात् नित्यनैमितिकमात्रविधिशेषत्वस्वीकारो युक्तः ।

**पापमपनुदति'[1] इत्यादिवाक्यशेषात् रात्रिसत्रन्यायेन पापक्षय एवानुषङ्गिको नित्यनैमित्तिकस्थले फलम् । यत्र तु रथन्तरसामत्वादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिसम्भवेनान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिस्तत्र व्यतिरेकानुविधान एव विधेस्तात्पर्यम् । अत एव रथन्तराभावे ऐन्द्रवायवाग्रत्वस्याभावः । अतश्च यावज्जीवपदे लाघवाद्यनुरोधेन जीवनस्य निमित्तत्वावगतेस्तदनुरोधेन पापक्षयार्थं विनियोगान्तरमेवेदमिति सिद्धम् ॥ १ ॥**

---

'विहितस्याननुष्ठानात्' इति प्रत्यवायवाक्यं लोकसिद्धानुवाद इति दिक् ॥ **पापक्षय एवेति** ॥ न तु पण्डापूर्वं पापप्रागभावपरिपालनं वेत्यर्थः । जीवनस्य निमित्तत्वेन कालविधानाभावेन व्यापकप्रयोगान्तरानाक्षेपात् सिद्धव्याप्यप्रयोगकयोरेव दर्शपूर्णमासयोः सन्ध्यवच्छिन्नपर्वावच्छिन्नजीवनावृत्तावावृत्तिमात्राक्षेपात् "विविदिषन्ति यज्ञेन" इत्यत्रेव पापक्षय इव फलान्तराङ्गत्वमात्रं बोध्यते । न पुनः पश्वादिफलकप्रयोगस्य जीवनपर्याप्तकालपर्यन्ततेति सिद्धार्थमाह—**विनियोगान्तरमेवेति** ॥ पश्वाद्यर्थं पर्वद्वयकालिकैकप्रयोगस्यैव समर्थत्वेऽपि पापक्षयार्थं तादृशप्रयोगावृत्तिरेवेत्येतावता न तावतामेकप्रयोगत्वम् । प्रतिप्रयोगं वा कतिपयपापक्षयसिद्धिः । राणके तु "सन्ध्यावन्दनमात्राद्धि सर्वपापक्षये सति । अग्निहोत्राद्यनुष्ठाने कः प्रवर्तेत बुद्धिमान् ॥ एकस्य तु क्षये कस्येत्यवगन्तुं न शक्यते ॥" इति न पापक्षयः फलमित्युक्तम् । तस्यायमाशयः । नित्यनैमित्तिककर्मणां न पापक्षयार्थत्वम् । तथा सति "यद्रात्र्या पापमकार्षम्" इत्यादिमन्त्रवर्णात् अहोरात्रकृतपापानां सर्वेषामेव पापानां नष्टत्वेनाग्निहोत्रादिनाश्यपापस्यैवाभावात् । न च जन्मान्तरीयसञ्चितपापानामग्निहोत्रादिना नाशः सम्भवतीति वाच्यम्; "यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥" इति भगवद्वचनेन सञ्चितानां पापानां ज्ञानैकनाश्यत्वोक्तेः नित्यकर्मनाश्यत्वासम्भवात् । न च "सर्वकर्माणि" इति वचनेन पुण्यकर्मणामपि ज्ञानेन नाशापत्तिरिति वाच्यम्; इष्टत्वात् । पुण्यकर्मणामपि जन्महेतुत्वेन पापसमत्वेन ज्ञाननाश्यत्वोपपत्तेः । अत एव "सुकृतदुष्कृते विधूनुते" इति श्रुतिरुभयोरपि पुण्यपापयोः विनाशं स्पष्टं ब्रूते । अत एव 'इतरस्याप्येवमसंश्लेषः पाते तु' इत्युत्तरमीमांसायां पुण्यपापयोः सममेव तरणं सिद्धान्तितम् । तस्मान्नित्यनैमित्तिककर्मणां न पापक्षयार्थत्वम् ।

---

१ तै. आ. १०—६९.

(२)----नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥ एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥ न नाम्ना स्यादचोदितत्वात् ॥ १० ॥ सर्वेषां चैककर्म्यात् ॥ ११ ॥ कृतकं चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥ १४ ॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अद्विर्वचनं वा प्रतिसंयोगाविशेषात् ॥ १६ ॥ वाक्यासमवायात् ॥ १७ ॥ अर्थासन्निधेश्च ॥ १८ ॥ न चैकं प्रति शिष्यते ॥ १९ ॥ समाप्तिवच्च सम्प्रेक्षा ॥ २० ॥ एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २१ ॥ प्रायश्चित्तं वा निमित्तेन ॥ २२ ॥ प्रक्रमाद्वा नियोगेन ॥ २३ ॥ समाप्तिश्च पूर्ववत्वाद्यथाज्ञाते प्रतीयेत ॥ २४ ॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहारव्यपदेशः स्यात् ॥ २५ ॥ द्रव्ये चाचोदितत्वा-

---

न च तथापि 'सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥' इति वचनेन ब्रह्मलोकप्राप्तिः फलमस्त्विति वाच्यम्; तथा सति काम्यत्वापत्तेः । न च फलाभावे इष्टसाधनताज्ञानाभावात् प्रवृत्त्यनुपपत्तिरिति वाच्यम्; अकरणे प्रत्यवायश्रवणेनैव प्रवृत्त्युपपत्तेः । 'एकाहं जपहीनस्तु सन्ध्याहीनो दिनत्रयम् । द्वादशाहमनग्निस्तु शूद्र एव न संशयः ॥' इति स्मृतेः तद्वचनस्य नित्यनैमित्तिकविधिस्तावकत्वेनार्थवादत्वसम्भवात् । 'धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इत्यापस्तम्बवचनेनानुषाङ्गिकब्रह्मलोकप्राप्त्यभिप्रायेण वोपपत्तेः । "अहरहः सन्ध्यामुपासीत" 'षट्कर्माणि दिने दिने' इति वीप्साबलेन नित्यानुष्ठानबोधनात् । उक्तवचनेनाकरणे प्रत्यवायश्रवणाच्च नित्यानुष्ठानोपपत्तेः । तथापि फलजिज्ञासायां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति श्रुत्या विविदिषार्थत्वमेव नित्यकर्मणाम् । न च पूर्वोक्तवचनेन नित्यानामपि ज्ञानेन नाशः किं न स्यादिति वाच्यम्; ज्ञानेन नित्यकर्मणां विविदिषायामेवोपयोग इति सिद्धम् ॥

सूत्रार्थस्तु—यावज्जीविकोऽभ्यासः स कर्मार्थः प्रकरणादिति ॥ १ ॥

द्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २६ ॥ विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥ २७ ॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २८ ॥ उपहव्ये प्रतिप्रसवः ॥ २९ ॥ गुणार्था वा पुनःश्रुतिः ॥ ३० ॥ प्रत्ययं चापि दर्शयति ॥ ३१ ॥ अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां शाखायां व्यवतिष्ठेत ॥ ३२ ॥ विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३३ ॥

शाखाभेदेनाम्नाते[1] अग्निहोत्रादौ सत्स्वपि भेदकप्रमाणेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्ववाक्यस्य कर्मोत्पत्तिपरत्वावगतेरुत्पन्नस्योत्पत्त्ययोगात्कर्मान्तरत्वसिद्धिः । प्रकृते तूक्तप्रमाणैरुत्पत्तिपरत्वावगमेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येकस्यैव कर्मणः सर्वत्रोत्पत्तिसम्भवान्न कर्मभेदः । न हि सर्वाः शाखाः सर्व-

---

नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरेषु कर्मभेदः स्यात् ॥ सर्वप्रमाणनिबन्धनभेदापवादात् सर्वान्ते निवेश इत्यापवादकी सङ्गतिः । शाखान्तरेषु किमग्निहोत्रादिकं भिद्यते किं वा सर्वशाखास्वेकमेवेति संशयः । तत्राविशेषपुनःश्रुतिलक्षणादभ्यासात्, दूरत्वलक्षणप्रकरणान्तरात्, द्वादशकपालत्वादिगुणाच्च भेद इति पूर्वपक्षे प्राप्ते सिद्धान्तमाह—**शाखाभेदेनेति** ॥ एकवेदसम्बन्ध्यनेकशाखासु यत्र रूपलाभो गुणभूयस्त्वं च तुल्यं तादृशशाखेत्यर्थः ॥ **भेदकेति** ॥ अभ्यासगुणप्रकरणान्तरेष्वित्यर्थः । ऐन्द्राग्ने एकादशद्वादशकपालत्वगुणभेदात् उपादेयगुणसाचिव्याभावे सति दूरस्थत्वादिति भावः । एकेनैव हेतुना प्रमाणत्रयं निरस्यति—**एकस्यैवेति** ॥ माध्यन्दिनादीनां तत्तद्विधिज्ञानैः काण्वादीनां तत्तद्विधिविषयकाज्ञाननिवृत्त्यभावादिति भावः । तदेवोपपादयति—**न हीत्यादिना** ॥ "ननु स्वाध्यायोऽध्येतव्यः" इति विधिना सर्ववेदाध्ययनविधानात् सर्वपुरुषाणां सर्वविधिज्ञानात् ज्ञातज्ञापनमवर्जनीयमेव । न च स्वाध्यायविधावेकत्वस्य विवक्षितत्वान्न वेदान्तराध्ययनप्रसक्तिरिति वाच्यम्; स्वाध्यायगतैकत्वस्योद्देश्य-

---

१. इदं क्वचित्पुस्तके नास्ति ।

पुरुषैरध्येयाः । स्वाध्यायविधौ 'अध्वर्युं वृणीते' इतिवत्स्वीयत्वैकत्वयोर्विवक्षितत्वे- नानेकशाखाध्ययनानुपपत्तेः । न चैवं वेदान्तरस्थशाखाध्ययनस्याप्यनापत्तिः । 'वेदानधीत्य' इत्यादिवचनान्तरानुरोधेन वेदत्रयगतैकैकशाखाध्ययनस्यैवावश्यक- त्वावगतेः । अत एव वेदभेदे पुरुषाभेदादेकत्रैवोत्पत्तिरपरत्र गुणार्थं श्रवणमित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्यपि सर्वेषामुत्पत्तिपरत्वे

---

गतत्वेनाविवक्षितत्वादित्यत आह—स्वाध्यायविधाविति ॥ ततश्च स्वाध्यायविधा- वुद्देश्यगतत्वेऽपि 'अधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेत्' इति कल्पितविधौ उपादेयगतत्वेन विवक्षितत्वात् एकशाखाध्ययनोपपत्तिः ; अन्यथा "अध्वर्युं वृणीते" इत्यत्राप्युद्देश्याध्वर्युगतैकत्वस्याविवक्षापत्तेरिति भावः ॥ स्वीयत्वैकत्वयोरिति ॥ अयमर्थः— अधीयत इत्यध्यायः, स्वश्चासावध्यायश्चेति स्वाध्यायः । न च स्वस्य अध्यायः स्वाध्याय इति व्युत्पत्त्या स्वेनाधीयमानवेदपरत्वं किं न स्यादिति वाच्यम् ; निषादस्थपत्यधि- करणन्यायेन कर्मधारयसम्भवे तत्पुरुषाङ्गीकारस्यायुक्तत्वात् । स्वत्वं चाध्याये पितृपितामहादिपरम्पराप्राप्तत्वमेव । ततश्च स्वाध्यायविधिना स्वकीयशाखाध्ययनमेव विधीयते । ततश्च तत्तच्छाखाध्यायिपुरुषान् प्रति तत्तद्विधेः सार्थक्यात् अज्ञातज्ञापकत्वं सर्वविधीनां सम्भवतीति भावः । ततश्चाभ्यासाभावान्न कर्मभेद इति भावः । नन्वेवं स्वत्वैकत्वयोर्विवक्षितत्वे वेदान्तरगतशाखान्तराध्ययनं न स्यादिति शङ्कते—न चेति ॥ वेदानधीत्येति ॥ 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥' इति स्मृत्येत्यर्थः । ततश्च स्वाध्यायविधिना स्वकीयवेदाध्य- यनेन "अनधीयाना व्रात्या भवन्ति" इति वचनबोधितप्रत्यवायपरिहारेऽपि 'वेदानधीत्य' इत्यादिवचनेन वेदत्रयगतैकैकशाखाध्ययनमावश्यकमिति भावः । अत एव—वेदभेदेऽपि पुरुषाभेदात् उत्पत्तिविधिद्वयासम्भवादेव ॥ वक्ष्यत इति ॥ "भूयस्त्वेनोभयश्रुति" इत्यत्रेति शेषः । नन्वेवं वेदैकत्वस्थले शाखाभेदे पुरुषैकत्वात् सर्वेषामुत्पत्तिपरत्वेन विहित- विधानायोगात् कर्मभेदः स्यादित्यत आह—वेदैकत्वे त्विति ॥ तत्राप्येकत्र कर्मविधिः अन्यत्र गुणार्थं श्रवणमित्यर्थः । विधेयगुणाभावस्थलेऽप्येकत्रैव विधिरन्यत्रार्थवादत्वं स्थल(द्वय)श्रुतत्वादिदं कर्मातिप्रशस्तमिति सम्भवादिति भावः । यत्र त्वेकस्यामेव शाखायां पञ्चविंशषड्विंशादिब्राह्मणभेदेन अन्यूनानधिकमाम्नातं तत्र पुरुषभेदाभावात् अभ्यासेन कर्मभेद इति केचित् । तत्र कर्मभेदे प्रयोजनाभावात् अर्थवादत्वमेव युक्तम् ॥

**न कर्मभेदः। अत एवैकस्मिन् कर्मणि विरुद्धानां नानाशाखागताङ्गानां विकल्पः। स च न तत्तत्पुरुषभेदेन व्यवस्थितः। तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः। अविरुद्धाङ्गेषु तु समुच्चयः। शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम्। यत्तु 'बह्वल्पं वा स्वगृह्योक्तम्' इत्यादिवचनं तत् सर्वाङ्गोपसंहारासम्भवेऽनुकल्पविधानार्थमिति कौस्तुभे द्रष्टव्यम्॥**

---

**अत एवेति**॥ पुरुषभेदेनान्यपरत्वसिद्धेरेवेत्यर्थः॥ एकस्मिन् कर्मणि विरुद्धानां नानाशाखाप्राप्तानामङ्गानां विकल्प एव। न च तत्र गुणत्वसम्भवः; उत्पत्तिशिष्टगुणावरोधात्। अतो विकल्प एवेत्यर्थः। नापि समुच्चयः; विरोधे समुच्चयासम्भवादिति भावः। न च विकल्पो व्यवस्थितः पुरुषभेदेनास्त्विति वाच्यम्; तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः पुरुषभेदेन व्यवस्थासम्भवादित्यर्थः। अविरुद्धाङ्गेषु तु समुच्चयः। नन्वेकवेदाध्ययने वेदान्तरीयाङ्गानां ज्ञातुमशक्यत्वात् कथं समुच्चय इत्यत आह—**शाखान्तरीयेति**॥ **कल्पसूत्रादिभिरिति**॥ बौधायनीयादिकल्पैराश्वलायनादिसूत्रैश्च शाखान्तरीयाङ्गज्ञानं सुलभमित्यर्थः। ननु 'बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेत्॥' इति वचनेन स्वशास्त्रोक्तमात्रानुष्ठानप्रतीतेः कथं शाखान्तरीयाङ्गोपसंहार इत्यत आह—**यत्त्विति**॥ **अनुकल्पेति**॥ कल्पसूत्राणां सर्वपुरुषसाधारण्यस्य पूर्वमेव स्थापितत्वात् सर्वशाखाप्राप्ताङ्गोपसंहार आवश्यक एव। नित्येष्वशक्याङ्गत्यागस्य वक्ष्यमाणतया सर्वाङ्गोपसंहाराशक्तौ स्वसूत्रोक्तानुष्ठानेन शास्त्रार्थसिद्धिरिति तद्वचनार्थ इत्यर्थः। तदयमत्र निष्कर्षः। वेदभेदेनाग्निहोत्रादीनां विधानेऽपि तत्तद्वेदाध्यायिनं प्रति तत्तदग्निहोत्रादिविधेः सार्थक्यात् अग्निहोत्रमेकमेव। तत्र स्वशाखोक्तगुणैरेवोपकारसिद्धेः स्वशाखोक्तगुणानामनुष्ठानेन फलसिद्धिः। स्वशाखोक्तगुणानां विरोधे विकल्पः। शाखान्तरोक्तगुणानामविरोधे समुच्चयः। कर्मभूयस्त्वात् फलभूयस्त्वसिद्धिः। स्वशाखोक्तगुणेष्वेव अनुष्ठानाशक्तावशक्याङ्गत्यागेन नित्यानुष्ठानम्। काम्ये तु यावदङ्गानुष्ठानाशक्तावनारम्भ एव काम्यकर्मणाम्। नित्यस्थले अध्वर्युशाखास्थगुणविरुद्धगुणानामाश्वलायनसूत्रबह्वृचब्राह्मणादौ दर्शने सति आश्वलायनोक्तप्रकारेणैव आश्वलायनानामनुष्ठानम्। आपस्तम्बानामापस्तम्बाद्याध्वर्यवप्रयोगानुष्ठानम्। एवं छन्दोगानां स्वसूत्ररीत्या अनुष्ठानमित्यादिकं हिरण्यकेशिसूत्रव्याख्याने प्रतिपादितमस्माभिः॥ प्रयोजनं पूर्वपक्षे कर्मणां प्रतिवेदं भिन्नत्वान्न शाखान्तरोक्तगुणोपसंहारः।

तदेवं शब्दान्तराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरैर्निरूपितः कर्मणां भेदः। अतः परं तेषां विनियोगो निरूपयिष्यते ॥ २ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वितीयस्याध्यायस्य चतुर्थः पादः

---

सिद्धान्ते सर्ववेदेषु कर्मण एकत्वात् सर्वशाखागतगुणोपसंहार इति द्रष्टव्यम् ॥

सूत्रार्थस्तु—**नाम्ना**—काठकादिसंज्ञया। **रूपेण**—अष्टाकपालदशकपालादिरूपेण **धर्मविशेषेण**—कारीर्याद्यध्ययनेषु भूभोजनादिधर्मविशेषेण। **पुनरुक्त्या**—उक्तकर्मणः पुनः प्रतिपादनेन। **निन्दया**—उदितानुदितहोमनिन्दया। **अशक्त्या**—एकस्मिन् कर्मणि सर्वशाखाङ्गानामनुष्ठानाशक्त्या। **समाप्तिवचनेन**—अग्निचयनादेः शाखाभेदात् समाप्तिभेदेन। **प्रायश्चित्ते[त्तवचने]न**—उदितानुदितहोमयोः स्वस्वकालातिक्रमे प्रायश्चित्तविधानेन। **अन्यार्थदर्शनेन**—इष्टयज्ञानामनिष्टयज्ञानां च सत्रात्मकद्वादशाहे अधिकारदर्शनादिरूपान्यार्थदर्शनेन च। **शाखान्तरे कर्मभेदः स्यादिति** ॥

इति श्रीमत्कावेरीतीरविराजमानचोलदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायनसूत्रहोशनिकर्णाटकश्रीवाञ्छेश्वरयज्वनः कृतिषु भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ द्वितीयाध्यायस्य
चतुर्थः पादः

---

अध्यायश्च समाप्तः

## अथ तृतीयाध्यायस्य प्रथमः पादः

### (१)—अथातः शेषलक्षणम् ॥ १ ॥

तदेवं[1] षट्प्रमाणके भेदे निरूपिते सम्प्रति शेषिनिरूपितं शेषत्वापरपर्याय-मङ्गत्वं निरूप्यते । भिन्नानां च तत्सम्भवति नाभिन्नानामिति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता ।

---

**अथातः शेषलक्षणम्** ॥ उपजीव्योपजीवकभावसंगतिं दर्शयन् वृत्तकथन-पूर्वकं वर्तिष्यमाणं प्रतिजानीते---**तदेवमिति** ॥ **षट्प्रमाणक इति** ॥ शब्दान्त-रादिषट्प्रमाणक इत्यर्थः ॥ **शेषिनिरूपितमिति** ॥ अत्र "अथातः शेषलक्षणम्" "शेषः परार्थत्वात्" इति सूत्रयोः शेषनिरूपणस्यैव स्पष्टं प्रतीयमानत्वेन शेषनिरूपणमेव प्राधान्येनाध्यायार्थः । शेषिनिरूपणं तु शेषत्वस्य ससंबन्धिकत्वेनार्थात् सिध्यतीति सूचयितुं शेषिनिरूपितमित्युक्तम् । नन्वर्थादपि शेषिज्ञानावश्यकत्वे सूत्रकारेण शेषिनिरूपणं कुतो न कृतमिति चेन्न ; शेषिनिरूपणस्य प्रतिज्ञातत्वे शेषोऽस्यास्तीति शेषीति मतुबर्थज्ञानार्थं शेषज्ञानस्यावश्यकत्वेन शेषशेषिणो-रुभयोरपि प्रतिज्ञायां सूत्रस्य गौरवापत्त्या शेषनिरूपणेऽर्थात् शेषिनिरूपणं भवतीति सूत्राशय इति भावः । आर्थिकसिद्धिमादायैव "शेषशेषित्वमिदानीं चिन्त्यते" इति पार्थसारथिग्रन्थोपपत्तिः । ननु दर्शपूर्णमासयोः सोमयागस्य च सत्यपि भेदे शेषशेषित्वाभावेन कर्मभेदनिरूपणस्य शेषनिरूपणहेतुत्वाभावात् कथमुपजीव्योपजीवकभाव इत्याशङ्क्य हेतुत्वमुपपादयति—**भिन्नानामिति** ॥ भेदं विना शेषशेषित्वादर्शनात् भेदोऽवश्यं शेषत्वहेतुरित्यर्थः । **तन्निरूपणस्य**—भेदनिरूपणस्य । **तत्र**—शेष-निरूपणे । नन्वेवमपि पूर्वाध्यायार्थकर्मभेदं विनापि शेषशेषित्वदर्शनान्न भेदशेषलक्षणयोः हेतुहेतुमद्भाव इत्याशङ्कते—**यद्यपीति** ॥ **द्रव्यकर्मणोः** व्रीह्यादिद्रव्याणां प्रोक्षणादि-कर्मणां चेत्यर्थः । यद्यपि तत्रापि परस्परभेदोऽस्ति । तथापि स भेदो न पूर्वाध्याय-प्रतिपाद्य इति सूचयितुं पूर्वोक्तनिरूपणस्येत्युक्तम् ॥ **तथापीति** ॥ (शेष) शेषित्वमेवास्मि-

---

१. इदं क्वचित्पुस्तके नास्ति ।

तथापि[1] सामानाधिकरण्येन हेतुतामादायैव सङ्गत्युपपत्तावच्छेदकावच्छेदेन तदसत्त्वेऽपि न कश्चिद्विरोधः । अंश एव हेतुत्वम् ; अंशान्तरस्य तु तत्प्रसङ्गान्निरूपणमित्यपि बोध्यम् । अङ्गत्वमेव चाध्यायार्थः ; अङ्गित्वं त्वर्थात् । तदपि

---

न्नध्याये प्रतिपाद्यम्, न द्रव्यकर्मणोरेव शेषशेषित्वम्, ततश्च कर्मणां शेषशेषित्वस्य कर्मभेदाधीनत्वात् कर्मभेदनिरूपणं विना कृत्स्नस्य शेषशेषित्वस्य निरूपयितुमशक्यत्वादस्ति हेतुहेतुमद्भाव इति भावः ॥ **सामानाधिकरण्येनेति** ॥ अङ्गत्वसामानाधिकरण्येनेत्यर्थः । कर्मणां शेषशेषिभाव इति यावत् ॥ **अवच्छेदेनेति** ॥ अङ्गत्वावच्छेदेनेत्यर्थः । यथाश्रुतपाठस्त्वापाततः, तस्यावच्छेदद्वयघटितत्वात् । नन्वङ्गत्वावच्छेदेन कार्यत्वमेव सङ्गतिः, नाङ्गत्वसामानाधिकरण्येनेति प्रकृते तदभावात् कथं भेदनिरूपणानन्तर्यं शेषनिरूपणस्येति चेन्न ; उपजीव्योपजीवकभावसङ्गतिस्थले सामानाधिकरण्येन कार्यत्वसंगतित्वस्य व्युत्पत्तिसिद्धत्वात् । अन्यथा उपजीव्योपजीवकभावसङ्गत्या प्रत्यक्षनिरूपणानन्तरमनुमाननिरूपणं तान्त्रिकाणामसङ्गतं स्यात् । तत्रापि शाब्दपरामर्शस्थले व्यभिचारेण प्रत्यक्षकार्यत्वस्यानुमानेऽभावात् ॥ **अंश एवेति** ॥ क्वचित् शेषनिरूपण इत्यर्थः । कर्मणोः प्रयाजाग्नेययोरिति यावत् । ननु तर्हि द्रव्यकर्मणोः शेषशेषित्वं कथमत्र निरूप्यत इत्यत आह—**अंशान्तरस्येति** ॥ **तत्प्रसङ्गात्** । शेषविचारनिरूपितप्रसङ्गसङ्गतेरित्यर्थः । 'शेषशेषित्वमध्यायार्थः' इति प्राचीनग्रन्थाभिप्रायमाह—**अङ्गत्वमेव चेति** ॥ **अध्यायार्थः**—प्राधान्येनाध्यायप्रतिपाद्य इत्यर्थः ॥ **अर्थादिति** ॥ तत्प्रसंगादित्यर्थः । यद्यपि प्रयुक्त्यादिनिरूपणस्यापि भेदापेक्षित्वाविशेषात् भेदलक्षणानन्तर्यं युक्तम्, तथापि तेषां शेषशेषिभावापेक्षाया अपि सत्त्वाच्छेषलक्षणानन्तर्यं द्रष्टव्यम् ॥ **तदपीति** ॥ शेषत्वमपीत्यर्थः ॥ **श्रुत्यादिषट्प्रमाणकमिति** ॥ न च श्रुतेरेव सर्वत्र प्रमाणत्वेन लिङ्गादीनां श्रुतिकल्पन एवोपक्षीणत्वात् कथं षट्प्रमाणकत्वमिति वाच्यम् ; शेषत्वप्रतिपादनाय श्रुतिकल्पनेऽपि कल्पकप्रमाणैः सह षट्प्रमाणकत्वोपपत्तेः । नन्वतिदेशस्यापि शेष(त्वे प्रमाण)त्वात्कथं षट्प्रमाणकत्वमित्यत आह—**अतिदेशेति** ॥ **इहेति** ॥ तथा च अत्राध्याये षट्प्रमाणकमेव शेषत्वं विचार्यम् । अतिदेशप्रमाणकं तु सप्तमादौ निरूप्यते इतीह विचार्यस्य षट्प्रमाणकत्वोपपत्तिरित्यर्थः । ननु यदि शेषत्वमेवाध्यायार्थः

---

१. तथापि अङ्गत्वसामानाधिकरण्येन इति पाठान्तरम् ।

च श्रुत्यादिषट्प्रमाणकम् ; अतिदेशप्रमाणकस्येहाविचार्यत्वात् । तच्चानेकप्रकारकं विचार्यते—अङ्गत्वलक्षणम्, शेषपदशक्यतावच्छेदकम्, अङ्गाङ्गितयोरवच्छेदकम्, श्रुत्यादीनि षट् अङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलम्, विरोधश्च क्वास्ति क्व नास्ति—इत्यादि ॥ १ ॥

---

स्यात् तदा श्रुत्यादिप्रमाणादिनिरूपणमसङ्गतं स्यादित्यत आह—तच्चेति ॥ शेषत्वं चेत्यर्थः ॥ अनेकप्रकारकमिति ॥ विचार्यानेकविशेषणयुक्तम् इत्यर्थः । तान्येवाह —अङ्गत्वलक्षणमिति ॥ अङ्गत्वस्वरूपमित्यर्थः ॥ शेषपदशक्यतावच्छेदकमिति ॥ शेषपदप्रवृत्तिनिमित्तमित्यर्थः ॥ तयोरिति ॥ प्रमाणयोरित्यर्थः ॥

सूत्रार्थस्तु—अथशब्दः आनन्तर्यार्थः । नाधिकारार्थः । अतःशब्दसमभिव्याहारात् । समभिव्याहाराभावे ह्यथशब्दोऽधिकारार्थो भवति । 'अथ योगानुशासनम्' 'अथ शब्दानुशासनम्' इत्यादौ । प्रकृते च तत्समभिव्याहारात् आनन्तर्यार्थक एव । अतःशब्दो हेत्वर्थः । कर्मभेदलक्षणहेतोः वृत्तत्वादित्यर्थः । शेषलक्षणम् । वक्ष्यत इति शेषः—इति । आचार्यैस्तु "द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम् । तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम् ॥" इति अवशिष्टसकलाध्यायार्थनिरूपणप्रतिज्ञापरत्वेनापीदं सूत्रं व्याख्यातम् ॥

यत्त्वत्र कौस्तुभे—अथशब्दोऽधिकारार्थः । प्रथमसूत्रे हि प्रारब्धव्यानुपादानात् जिज्ञासापदाभिधेययोः ज्ञानेच्छयोः प्रमाणवस्तुपरतन्त्रत्वेन अकृतिसाध्ययोरनारभ्यत्वाद्विचारलक्षणायां च प्रमाणाभावादधिकारार्थत्वमथशब्दस्य नाश्रितम् । किं तु अध्ययनानन्तर्यार्थत्वमेवेत्युक्तम् । प्रकृते तु लक्षणपदाभिधेयस्याध्यायस्य तदर्थन्यायसन्दर्भरूपस्य प्रारब्धव्यस्य उपात्तत्वादधिकारार्थत्वमेव युक्तमित्युक्तम् । तच्चिन्त्यम् ; अधिकारार्थकत्वे हि पूर्वाधिकारस्य धर्मजिज्ञासापदाभिधेयविचारस्य विच्छेदापत्त्या शेषलक्षणस्य धर्मविचारानन्तःपातित्वेन शास्त्रसंगत्यभावापत्त्या च उन्मत्तप्रलपितत्वापत्तेः । न चात्रत्याधिकारस्य जिज्ञासासूत्राधिकृतधर्मविचारावान्तराधिकाररूपत्वान्न पूर्वाधिकारविच्छेदप्रसक्तिरिति वाच्यम् ; तथा सति संज्ञाधिकरणे अथशब्दस्य पूर्वप्रकृतज्योतिष्टोमाधिकारविच्छेदकत्वस्य स्वेनैवोक्तत्वेन तद्विरोधापत्तेः । तत्राप्यवान्तराधिकाररूपत्वसम्भवात् । यदपि प्रथमसूत्रे प्रारब्धव्यानुपादानादित्युक्तम् , तदपि न ; धर्मविचारस्यैव प्रारब्धव्यत्वेन तदुपादानस्य स्फुटत्वात् । न च विचारलक्षणायां

## (२)---शेषः परार्थत्वात् ॥ २ ॥

**इहाद्यं प्रकारद्वयं निरूप्यते। यदेव ह्यङ्गत्वलक्षणं तदेव शेषपदशक्यतावच्छेदकं नान्यत्। तत्राङ्गत्वं नाम पारार्थ्यम्; तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन**

---

प्रमाणाभाव इत्युक्तमिति वाच्यम्; जिज्ञासापदाभिधेयज्ञानेच्छयोः कर्तव्यत्वाभावस्यैव प्रमाणत्वात्। प्रथमाध्याये धर्मविचारः कर्तव्यतया प्रतिज्ञात इति स्वेनैवोक्तत्वेन तत्पदाध्याहारस्य सर्वतान्त्रिकसिद्धस्यावश्याङ्गीकार्यत्वात्। अत एवोत्तरमीमांसासूत्रे 'ब्रह्मजिज्ञासा कर्तव्या' इति भगवद्भाष्यकारैरुक्तम्। किं चाथशब्दस्यानन्तर्यार्थकत्वे सङ्गतिप्रदर्शनं प्रयोजनमपि लभ्यत इत्यानन्तर्यार्थकत्वमेव युक्तमिति दिक् ॥ १ ॥

**शेषः परार्थत्वात् ॥ प्रकारद्वयमिति ॥** शेषस्वरूपं हेतुश्चेत्यर्थः। तत्र सूत्रे श्रुत्या हेतुरुच्यते परार्थत्वाच्छेष इति। स्वरूपं त्वर्थात्। यदि पारार्थ्यं शेषपदप्रवृत्तौ हेतुः तदा परार्थ एव शेष इति सिद्धं भवति। भाष्ये तु 'यः.... परार्थः तं वयं शेषं ब्रूमः' इति स्वरूपं श्रुत्योक्तम्, अर्थाद्धेतुरिति द्रष्टव्यम् ॥ **अङ्गत्वलक्षणमिति** ॥ अङ्गत्वस्वरूपमित्यर्थः। नन्वनेन सूत्रेण शेषत्वेऽङ्गत्वापरपर्याये साध्ये पारार्थ्यं हेतुरिति प्रतीयते। तच्चायुक्तम्; पारार्थ्यस्यैवाङ्गत्वरूपत्वेन पक्षधर्मताज्ञानकाले साध्यसिद्ध्या सिद्धसाधनात्। किं च शेषपक्षके इतरभेदानुमाने पारार्थ्यरूपाङ्गत्वस्यैव लक्षणस्य हेतुत्वात् तत्र च व्याप्तिकाले पारार्थ्याधिकरणवृत्तिरितरभेद इति ज्ञाने समानसंवित्संवेद्यतया इतरभेदाधिकरणवृत्तित्वस्य पारार्थ्यहेतौ ज्ञातत्वात् व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहकाल एव पक्षे साध्यसिद्ध्या सिद्धसाधनम्। यदि च समानसंवित्संवेद्यत्वे मानाभावात् अस्मिन् मते साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानस्य कारणत्वाच्च न सिद्धसाधनमित्युच्यते; तदा लक्षणवाक्याच्छाब्दबोधानुपपत्तिः। 'परार्थः शेषः' इति वाक्ये घटो घट इतिवदुद्देश्यतावच्छेदकविधेययोरेकत्वादिति चेन्न; शेषपदवाच्यत्वस्य साध्यत्वेन सर्वदोषानवकाशात्। इतरभेदानुमाने पक्षतावच्छेदकहेत्वोरैक्येन हेत्वाधिकरणे साध्यसिद्धावपि पक्षतावच्छेदकावच्छिन्नविशेष्यकसाध्यप्रकारकसिद्धेरनुत्पत्त्या सिद्धसाधनस्य परिहर्तुं शक्यत्वादिति द्रष्टव्यम्। पारार्थ्याङ्गत्वयोर्भेदभ्रमं निरस्यति—**तत्रेति** ॥ सूत्र इत्यर्थः। अनेनोपकारकत्वमङ्गत्वमिति बादरिमतं निरस्तं बोध्यम्। तदेव पारार्थ्यं निर्वक्ति—**यदुद्देशेति**।

विहितं यत् तत्त्वं तदङ्गत्वम्। स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलायां यागस्य कारकत्वेन विध्यन्वयात् यागे लक्षणसमन्वयः । प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वेन विध्यन्वयात्प्रयाजादावपि सः । द्रव्यगुणकर्तृकालदेशादौ च यागाद्युद्देश्यकयागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वाद्यागाङ्गत्वाविघातः । षष्ठीस्थले च सम्बन्धसामान्याभिधानेऽपि करणत्व[1] एव पर्यवसानान्नाव्याप्तिः । निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वा-

---

करणत्वेन विधीयमानो यागादिः स्वर्गाङ्गमित्यर्थः । तदेवोपपादयति—**स्वर्गेति** ॥ प्रयाजादौ तदुपपादयति—**प्रधानेति** ॥ सः—लक्षणसमन्वय इत्यर्थः । द्रव्यगुणादीनां तदाह—**द्रव्यगुणेति** ॥ **द्रव्यस्य**—व्रीह्यादेः । **गुणस्य**—आरुण्यादेः । **कर्तुः**—स्वर्गकामादेः । **कालस्य**—पौर्णमास्यादेः । **देशस्य**—समादेः ॥ **करणत्वेति** ॥ द्रव्यस्य व्रीह्यादेः 'व्रीहिभिः' इति तृतीयया करणत्वेन विधानात्, आरुण्यस्यापि 'अरुणया' इति तृतीयया करणत्वेन विधानात्, देशकालयोः 'समे', 'पौर्णमास्याम्' इति सप्तम्या अधिकरणत्वेन विधानाल्लक्षणसमन्वय इत्यर्थः । ननु 'कृष्णानां व्रीहीणाम्' इत्यादौ षष्ठ्या सम्बन्धसामान्यस्यैव प्रतीतेः कारकत्वेन विध्यन्वयाभावादव्याप्तिरित्यत आह—**षष्ठीस्थल इति** ॥ **करणत्व एवेति** ॥ सम्बन्धसामान्यस्याव्यावर्तकत्वेन योग्यतावशात् करणत्व एव पर्यवसानात् नाव्याप्तिरित्यर्थः । एवं क्रमस्य गुणवत् पदार्थपरिच्छेदकत्वेन करणत्वं द्रष्टव्यम् । निमित्तेऽतिव्याप्तिं परिहरति—**निमित्तस्य चेति** ॥ उद्देश्यत्वं द्विविधम्, ईप्सितत्वरूपमनुष्ठापकत्वं चेति । निमित्तस्य क्रियोपलक्षकत्वेन विध्यन्वयसत्त्वेनानुष्ठापकत्वसत्त्वेऽपीप्सितत्वाख्योद्देश्यताया एव लक्षणघटकत्वेन निमित्ते तदभावान्नातिव्याप्तिरित्यर्थः । एवं प्रयाजादीनां पशूद्देशप्रवृत्तकृतिकारकत्वसत्त्वात् पश्वङ्गत्वमेव, न तु पुरोडाशाङ्गत्वम्, तदुद्देशेन प्रयाजादिविधानाभावात् तदंशेऽतिदेशाकल्पनात् । तथा दध्यानयनादेर्वाजिनोद्देशेनाविधानान्न वाजिनाङ्गत्वम्, अपि त्वामिक्षोद्देशेन विधानादामिक्षाङ्गत्वमेव । पुरोडाशकपालस्य तुषोपवापोद्देशेन विधानादङ्गत्वोपपत्तिः, परं तु तुषोपवापार्थमुपादानाभावादुपादेयत्वरूपतुषोपवापप्रयोज्यत्वरूपं नास्तीति द्रष्टव्यम् । अत्र कृतिकारकत्वमात्रोक्तौ फलस्यापि कर्मकारकतया विध्यन्वयात् फलाङ्गत्वं स्यात्, अतः—**परेत्यादि**[2] ॥ अतश्च भोक्त्रुद्देशप्रवृत्तपुरुषकृतिकर्मकारकतया

---

१. कारकत्व इति पाठान्तरम्.

२. इदं प्रतीकं मूले क्वचिदपि पुस्तके नोपलभ्यते

भावान्नाङ्गत्वापत्तिः । निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम् । लक्षणे तादृश्या एवोद्देश्यताया विवक्षितत्वात् । उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदं तदतिरिक्तपरम् ।

---

फलस्य विध्यन्वयात् फलस्य भोक्त्रङ्गत्वम्, न तु फलाङ्गत्वम्, स्वस्य स्वं प्रति परत्वाभावात् । तदेतदाह—**कारकपदमिति ॥** कर्मकारकातिरिक्तकारकपरमित्यर्थः । इदं त्ववधेयम्—कारकपदस्य कर्मकारकातिरिक्तकारकपरत्वे आग्नेयादिष्वव्याप्तिः । तेषां प्रयाजादिविधावुद्देश्यतया कर्मकारकत्वेन तद्भेदासंभवात् । किं च, स्वर्गोद्देशप्रवृत्तपुरुषस्य या भोजनादिकृतिः तत्कारकत्वेन शाकसूपादेरपि स्वर्गाङ्गत्वं स्यात् । न च तेषां विध्यन्वयित्वाभावान्न दोष इति वाच्यम् ; दीक्षाभोजनादौ तस्यापि सत्त्वात् । न च परोद्देशप्रवृत्ततत्तत्पुरुषीयतत्तत्कृतिकारकत्वविवक्षणान्न कृत्यन्तरमादायातिप्रसङ्ग इति वाच्यम् ; तथा सति परोद्देश्यककृतिनिरूपितकारकत्वविवक्षयैवोपपत्तौ प्रवृत्तपदवैयर्थ्यापत्तेः । अपि च कर्मकारकाभिन्नत्वविवक्षायां यत्किंचित्कर्मभिन्नत्वस्य स्वर्गेऽपि सत्त्वात् फलेऽतिव्याप्तिस्तदवस्था, कर्मकारकसामान्यभेदविवक्षायां पूर्वोक्ताग्नेयाद्यव्याप्तिर्दुरुद्धरा । तत्तत्कृतिकर्मकारकाविवक्षयामपि नित्यवाक्येन पापक्षयोद्देशेन धर्मादेर्विधानेन तत्तत्कृतिकर्मकारकभिन्नत्वस्य पापक्षयस्वर्गयोः प्रत्येकं सत्त्वेन पापक्षयस्वर्गयोः परस्पराङ्गत्वं स्यात् । न च लक्षणे ईप्सितत्वाख्योद्देश्यत्वस्यैव निवेशेन निमित्तशास्त्रप्राप्तपापक्षयस्येप्सितत्वाभावान्नानुपपत्तिरिति वाच्यम् ; तथा सत्यपि 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इत्यादौ स्वर्गपश्वादीनामीप्सितत्वेन तत्र परस्परभेदमादायातिप्रसङ्गस्य दुर्वारत्वात् । न च तत्रापि ज्योतिष्टोमादेः प्रयोगभेदेनैवानेकफलार्थतया स्वर्गोद्देशप्रवृत्तपुरुषीयतत्तत्प्रयोगान्तर्गततत्तत्कृतिकर्मत्वमेकस्यैव फलस्येति नानुपपत्तिरिति वाच्यम् ; तथा सत्यपि तत्फलस्यैकस्यैव विविदिषासमुच्चयेन विविदिषायामीप्सितत्वेन च तत्कृतिकारकभेदस्य पर[स्परं]सत्त्वेनोक्तदोषानिवारणात् । न च तत्र विविदिषाया एव ईप्सितत्वमितरस्य तु नेप्सितत्वं, 'त्यक्त्वा कर्मफलम्' इत्यादिभगवद्वचनैरितरफलद्वेषस्य विविदिषाङ्गत्वबोधनेन इतरफलस्येप्सितत्वाभावेनेप्सितफलभेदस्य विविदिषायामभावेन दोषाभावादिति वाच्यम् ; एवं सत्यपि जातेष्टौ पूतत्वादिफलपञ्चकस्यापीप्सितत्वेन तत्र पर[स्पर]भेदमादाय परस्पराङ्गत्वापत्तेर्दुर्वारत्वात् । किं च, चतुर्थे सार्वकाम्याधिकरणे ज्योतिष्टोमस्य स्वर्गकामवाक्येन स्वर्गः फलम्, सार्वकाम्यवाक्येन पश्वाद्यन्यतरत् फलमिति मूलकारेण वक्ष्यमाणत्वेन

**कृष्यादेरपि यागकृतिकारकत्वात् अङ्गत्वप्रसक्तौ विधेयत्वान्तम् । यथा चास्य न क्वाप्यव्याप्त्यतिव्याप्ती तथा कौस्तुभे विस्तरः । एवं च यत्रेदं न लक्षणं यथा यागादेर्भावनादि[1] प्रति तत्र भाक्तोऽङ्गत्वव्यवहारः शास्त्रे[2] विशेषणमात्रे । यद्यपि च**

---

तत्राप्यतिव्याप्तिर्दुर्वारेति चेत् अत्रोच्यते—स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यताकत्वसंबन्धेन स्वविशिष्टभिन्नत्वस्यैव कर्मकारकभिन्नत्वमित्यनेन विवक्षितत्वान्न कोऽपि दोषः । स्वं स्वर्गादि, तदवच्छिन्नोद्देश्यतानिरूपककृतिः यागानुकूला, तन्निरूपितोद्देश्यताकत्वं स्वर्गे वर्तत एवेति स्वर्गस्य तद्वद्भिन्नत्वाभावान्न [कर्म]कारकभिन्नत्वम् । जातेष्टौ चैकया जातेष्ट्यनुकूलकृत्यैव फलपञ्चकोत्पत्तेरुक्तसंबन्धेन पञ्चफलानामपि पूतत्वादिमत्त्वात् तद्वद्भेदस्य कस्मिन्नपि फले अभावात् नानुपपत्तिगन्धोऽपि । एवमन्यत्रापि द्रष्टव्यम् । वस्तुतस्तु लक्षणे कृष्यादिवारणाय विधीयमानत्वविशेषणस्यावश्यकया लिप्सासूत्रे वक्ष्यमाणरीत्या फलस्य विधेयत्वाभावादेवातिव्याप्तिवारणे कृतं कर्मकारकभिन्नत्वविशेषणेन । एवं यदुद्देश्यककृतिकारकत्वेन विहितं यत् तत् तदङ्गमित्येव लक्षणोपपत्तौ पुरुषवाचकप्रयोजनाभावः । तत्प्रवेशे पूर्वोक्तातिप्रसङ्ग इति कृतं पल्लवितेन । विहितत्वनिवेशप्रयोजनमाह—**कृष्यादेरपीति** । ननु फलस्य भोक्त्रङ्गत्वं न स्यात्, भोक्त्रुद्देशप्रवृत्तकृतिकारकत्वाभावात्, उक्तरीत्या निमित्तेऽतिव्याप्तिश्चेत्यत आह—**यथा चेति** ॥ **कौस्तुभ इति** ॥ तथा च भोक्त्रुद्देशप्रवृत्तपुरुषकृत्यन्तराभावेऽपि यागकृतेरेव भोक्त्रुद्देशप्रवृत्तकृतित्वान्नाव्याप्तिः । निमित्तस्य चेप्सितत्वाख्योद्देश्यत्वाभावान्नातिव्याप्तिरिति भावः । नन्वेवं यागादेर्भावनाङ्गत्वं न स्यात्, भावनोद्देश्यककृत्यभावादित्यत आह—**एवं चेति** ॥ **भाक्त इति** । गौण इत्यर्थः । यागादेरित्यादिना भावनादिपरिग्रहः । भावनादीत्यादिना फलादिसङ्ग्रहः । तथा च भावनायाः फलं प्रति, शब्दभावनाया अर्थभावनां प्रति, पश्वादेः कारकं प्रति, कारकस्य क्रियां प्रत्यङ्गत्वव्यवहारो भाक्त इत्यादिशब्दार्थः । ननु तर्हि भाष्ये कथमेतेष्वङ्गत्वव्यवहार इत्यत आह—**विशेषणमात्र इति** ॥ उक्तानां विशेषणत्वसत्त्वात् तदभिप्रायेणाङ्गत्वव्यवहार इति भावः । नन्वेवं निरुक्ताङ्गत्वस्य श्रुत्यादिप्रमाणकत्वं न स्यात् , तृतीयादीनां "कर्तृकरणयोस्तृतीया" इत्याद्यनुशासनेन कारकत्वमात्रशक्तत्वात् इत्याशङ्क्य समाधत्ते—**यद्यपीत्यादिना** ॥ ननु द्रव्यादीनां विध्यन्वयित्वाभावात् कथमङ्गत्वमित्यत आह—

---

१. भावनादिकं इति पाठान्तरम्. २. इदं पदं वहुषु पुस्तकेषु नास्ति.

नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकम् ; कारकत्वमात्राभिधायित्वात्तृतीयादेः, तथापि यत्पदार्थः स्वर्गादिपदात्, तदुद्देश्यकत्वं संसर्गादिना, कृतिराख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात् । विधिर्हि विशिष्टभावनां विदधन्नर्थाद्विशेषणान्यपि विधत्त इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः । अत एवाङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहारः ॥ २ ॥

**(३)----द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥ कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ फलं च पुरुषार्थत्वात् ॥ ५ ॥ पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥**

यद्यपि पारार्थ्यमङ्गत्वं, तथापि न यागादेर्लक्ष्यता । समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहितत्वाभावात् । विधेः

---

**विधिर्हीति** ॥ **अर्थादिति** ॥ अर्थापत्त्येत्यर्थः । तथा च प्रत्यक्षविधेर्विशिष्टविषयत्वेऽपि तन्मूलकक्लृप्तविधिविषयत्वात् द्रव्यादीनां विध्यन्वयित्वं संभवतीत्यर्थः । ननु तर्हि श्रुत्यादीनामङ्गत्वप्रामाण्यव्यवहारानुपपत्तिरित्यत आह—**अत एवेति** ॥ कारकत्वस्य श्रुत्यादिगम्यत्वादेवेत्यर्थः । तथा च विशिष्टाङ्गत्वस्य श्रुत्यादिगम्यत्वाभावेऽपि तद्घटकीभूतकारकत्वस्य श्रुत्यादिगम्यत्वात् विशिष्टप्रमाणव्यवहारोऽभियुक्तानां नानुपपन्न इत्यर्थः ॥

सूत्रं व्याख्यातम् ॥ २ ॥

**द्रव्यगुणसंस्कारेषु बादरिः** ॥ अत्र पूर्वमुक्तशेषत्वस्य लक्ष्यनिर्देशः क्रियते । तत्र बादरिमतमाह—**यद्यपीत्यादिना** ॥ पारार्थ्यस्याङ्गत्वरूपत्वेन यागादेः पारार्थ्यादङ्गत्वं यदुक्तं तन्नास्तीत्यर्थः । कुत इत्यत आह—**समानेति** ॥ स्वर्गोद्देशेन यागविधाने हि यागस्य पारार्थ्यं घटते, तदेव नास्ति, भावनाया भाव्यापेक्षायां समानपदोपात्तधात्वर्थस्यैव भाव्यत्वसम्भवेन तदतिक्रम्य पदान्तरोपात्तस्वर्गादेर्भाव्यत्वायोगात् तस्यैव प्राधान्येन न पारार्थ्यमित्यर्थः । ननु विधेः प्रवर्तकत्वानुरोधेन इष्टसाधनत्वाक्षेपकत्वेन यागादेरिष्टसाधनत्वज्ञानाभावे यागादौ प्रवृत्त्यनुपपत्त्या स्वर्गस्यैव

प्रवृत्तिस्वरूपयोग्यत्वेनैव लिङर्थतया इष्टसाधनत्वानाक्षेपकत्वात्। आक्षेपकत्वेऽपि वा भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतया इष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च। स्वर्गकामपदस्य तु 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इतिवत् कर्तृपरत्वादिनाप्युपपत्तेर्न भाव्यपरत्वावश्यकता। अतो न यागादेर्लक्ष्यत्वम्। वस्तुतस्तु उपकारकत्वमेव शेषत्वम्। तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात्। तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयगम्यमेव। अत एव व्रीह्यादेर्द्रव्यस्य आरुण्यादेर्गुणस्य अवघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम्। प्रोक्षणादिसंस्कारस्य तु

---

भाव्यत्वावश्यंभावात् यागस्य पारार्थ्यमवश्यमङ्गीकार्यमित्यत आह—**विधेरिति** ॥ **प्रवृत्तिस्वरूपयोग्यत्वेनेति** ॥ अयमर्थः—प्रवृत्त्यनुकूलत्वमेव लिङा बोध्यते, न तु फलोपहितप्रवृत्त्यनुकूलत्वम्, येन प्रवृत्तिविषयस्येष्टसाधनत्वमाक्षिप्येत। काम्यकर्मणि कामनासत्त्वेऽपि शतवारं विधिश्रवणेऽपि च कदाचिदेव प्रवृत्तिजननात्। ततश्च प्रवृत्तिजननयोग्यस्यैव विधेः स्वविषये इष्टोद्देश्यककृतिकारकत्वानाक्षेपकत्वात्, प्रवृत्तिविषययागादेरङ्गत्वासिद्धिरिति। नन्विष्टसाधनताज्ञानाभावे शास्त्रमेव व्यर्थं स्यात्, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन कस्यापि प्रवृत्त्यसंभवादित्यत आह—**आक्षेपकत्वेऽपीति** ॥ **भ्रमप्रमासाधारण्येनेति** ॥ तथा चेष्टसाधनताभ्रान्त्यैव प्रवृत्तिसम्भवात् न प्रवृत्तिविषयस्येष्टसाधनत्वासिद्धिरित्यर्थः। ननु स्वर्गकामपदस्य कृदभिहितन्यायेन काम्यमानस्वर्गपरतया तत्समभिव्याहृतविधिना इष्टसाधनत्वं सिध्यत्येवेत्यत आह—**स्वर्गकामपदस्येति** ॥ तथा च 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इत्यदौ परस्त्रीणां भाव्यत्वाप्रतीत्या कर्तृपरत्वदर्शनेन तद्वदेवात्रापि स्वर्गकाम[पदस्य]कर्तृपरत्वेन भाव्यपरत्वाभावादित्यर्थः। एवं बादरिमतानुसारेण यागस्यैव भाव्यत्वेनाङ्गत्वं निराकृत्य तन्मतानुसारेणाङ्गत्वलक्षणमाह—**वस्तुतस्त्विति** ॥ **उपकारकत्वमिति** ॥ तत्र हेतुमाह—**तदर्थ इति** ॥ **अपकारक इति** ॥ 'मशकार्थो धूमः' इत्यादौ मशकापकारकधूमादौ मशकाङ्गत्वव्यवहाराभावेनोपकारकत्वमेवाङ्गत्वमिति वक्तव्यमित्यर्थः। **तच्च**—अङ्गत्वं च। एवकारेण प्रकरणादित्रयव्यवच्छेदः। सूत्रोक्तद्रव्यगुणकर्मणां शेषत्वमुपपादयति—**अत एवेति** ॥ अङ्गत्वस्योपकारकत्वरूपत्वादेवेत्यर्थः ॥ **आरुण्यादेरिति**। आदिना 'कृष्णानां व्रीहीणाम्' इत्यादिषु श्रुतकृष्णरूपादेः परिग्रहः। तस्य द्रव्यपरिच्छेदद्वारा उपकारकत्वादिति भावः ॥ **आवघातादेरिति** ॥ आदिना पेषणादि-

लिङ्गेनाङ्गत्वासम्भवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेस्तद्बलेनैवोपकारकत्वकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वमिति प्राप्ते—

नोपकारकत्वं शेषत्वं गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्ग-

---

संग्रहः । तस्य वैतुष्यद्वारा उपकारकत्वादिति भावः । नन्वेवमुपकारकत्वस्याङ्गत्वरूपत्वे 'व्रीहीन् प्रोक्षति' इत्यादौ द्वितीयया व्रीहीणां संस्कार्यत्वावगमात् प्रोक्षणस्य व्रीह्युपकारकत्वादर्शनादव्याप्तिः इत्याशङ्कां परिहरति—**प्रोक्षणादिसंस्कारस्येति** ॥ **लिङ्गेनेति** ॥ प्रोक्षणस्य स्वसामर्थ्येनोपकारकत्वरूपाङ्गत्वासम्भवेऽपीत्यर्थः । **श्रुतिवाक्याभ्यामिति** ॥ श्रुतिसमभिव्याहाररूपवाक्याभ्यामित्यर्थः । **तद्बलेनैव**—अङ्गत्वबलेनैव । **उपकारकत्वकल्पनया**—दृष्टोपकाराभावेऽप्यदृष्टोपकारकल्पनया । **शेषत्वेति** ॥ अदृष्टोपकारकत्वरूपशेषत्वेत्यर्थः ॥ **गोदोहनेति** ॥ आदिना पुरोडाशोपकारकप्रयाजादिसङ्ग्रहः ॥ **प्रणयनेति** ॥ 'गोदोहनेन पशुकामस्य प्रणयेत्' इत्यादौ केवलकाम्यस्य गोदोहनस्य केवलपश्वर्थतया क्रत्वर्थत्वाभावेनोपकारकत्वस्याङ्गत्वरूपत्वे प्रणयनोपकारकत्वसत्त्वेन प्रणयनाङ्गत्वापत्तिः । एवं 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा' इत्यत्रामिक्षाङ्गस्य दध्यानयनस्य वाजिनोपकारकत्वेन वाजिनाङ्गत्वापत्तिरिति नोपकारकत्वं शेषत्वमित्यर्थः । अत्र वदन्ति । उपकारकत्वमेव शेषत्वम् । न च गोदोहनादावतिव्याप्तिः; अन्यानुपकारकत्वे सतीति विशेषणात् । गोदोहनादेः पशूपकारकत्वेनान्यानुपकारकत्वाभावात् । न च प्रयाजादेः पश्वङ्गत्वं न स्यात्, तस्य पुरोडाशोपकारकत्वेनान्यानुपकारकत्वाभावादिति वाच्यम्; अन्यानुपकारकत्वपदेनान्याप्रयुक्तत्वस्य विवक्षितत्वात्, प्रयाजादेः पुरोडाशोपकारकत्वेऽपि पुरोडाशप्रयोज्यत्वाभावेन लक्षणसत्त्वात् । न चैवमपि 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र पुरोडाशकपालस्य तुषोपवापाङ्गत्वं न स्यात्, पुरोडाशप्रयुक्तत्वेनान्याप्रयुक्तत्वघटितलक्षणासम्भवादिति वाच्यम्; यदन्यप्रयुक्ततानवच्छेदकयदुपकारकतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वात् । पुरोडाशकपालस्य हि पुरोडाशप्रयुक्ततावच्छेदकं कपालत्वं, पुरोडाशस्य 'कपालेषु श्रपयति' इति वचनेन कपालत्वावच्छिन्नप्रयोजकत्वात्, तुषोपवापे पुरोडाशीयत्वेनोपकारकत्वात्, अतो नाव्याप्तिः । नन्वेवं प्राकृताङ्गानां विकृत्यङ्गत्वानापत्तिः, दीक्षणीयात्वादिना प्रकृतिप्रयुक्तत्वेन तेनैव रूपेण विकृत्युपकारकत्वादिति चेन्न; दीक्षणीयात्वादिना प्रयुक्तत्वेऽपि प्राकृताङ्गत्वेन विकृत्युपकारकत्वेन दोषाभावात् ।

त्वापत्तेः । अपि तु पारार्थ्यमेव । अपकारकस्थले तु तदपकारस्यैवेष्टत्वेन उद्देश्यता न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः । तदपि श्रुत्यादिषट्प्रमाणकमिति[1]

न हि दीक्षणीयात्वादिना विकृत्युपकारकत्वम् । तथा सति प्रत्येकमतिदेशकल्पनापत्त्या गौरवापत्तेः । प्रकृतिसंबन्ध्यङ्गत्वेनातिदेशकल्पनेऽवेकातिदेशकल्पनाल्लाघवमिति प्रकृतिप्रयुक्ततावच्छेदकविकृत्युपकारकतावच्छेदकयोः भेदेन लक्षणसत्त्वात् । नन्वेवं 'सर्वेभ्यो ज्योतिष्टोमः' इत्यादौ ज्योतिष्टोमत्वेनैव स्वर्गादिकं प्रति पश्वादिकं प्रति च करणत्वेन स्वर्गादिप्रयोज्यतया तत्र प्रयुक्ततावच्छेदकोपकारकतावच्छेदकयोर्भेदाभावेन स्वर्गाद्यङ्गत्वं न स्यात् । न च तत्र तत्तत्फलजनकतावच्छेदकवैजात्यस्वीकारसम्भवः, ज्योतिष्टोम इत्येकवचनानुपपत्तेः । न च तत्र प्रयोगभेदेन तत्तत्फलजननेन वैजात्यमङ्गीकार्यमिति वाच्यम् ; तथा सत्यपि तत्तद्वैजात्यरूपेणैव विविदिषोपकारकतया अव्याप्तेर्दुर्वारत्वात् । एवं जातेष्टिस्थले तेनैव यागेन पूतत्वाद्यनेकफलोत्पत्त्या प्रयुक्ततावच्छेदकोपकारकतावच्छेदकयोरैक्येनाव्याप्तिर्दुरुद्धरा । तस्मादुपकारकत्वं शेषत्वमिति लक्षणमनुपपन्नमेवेति चेन्न ; यदन्यमात्राप्रयुक्तत्वनिवेशेनादोषात् । उक्तस्थले यदन्यमात्रप्रयुक्ततानवच्छेदकयदुपकारकतावच्छेदकधर्मवत्त्वं यस्य तस्य तदङ्गत्वमिति पर्यवसानेन सामञ्जस्यात् । तत्रोभयप्रयुक्ततावच्छेदकस्य ज्योतिष्टोमत्वादेर्यदन्यमात्रप्रयुक्ततानवच्छेदकत्वेन लक्षणसमन्वयसम्भवात् बादरिमतं युक्तमेवेति । अत्राहुः । निरुक्तोपकारकत्वस्याङ्गत्वरूपत्वे आधानाध्ययनयोः क्रत्वङ्गत्वापत्त्या अपशूद्राधिकरणविरोधापत्तेः । तथा हि—'अनधीयाना व्रात्या भवन्ति' 'नानाहिताग्निर्म्रियेत' इति निषेधाभ्यां प्रत्यवायपरिहारोद्देशेन विधानेन तयोः प्रत्यवायाभावप्रयुक्तत्वेन 'वसन्ते ब्राह्मणोऽग्नीनादधीत' 'ब्राह्मणेन षडङ्गो वेदोऽध्येतव्यः' इत्यादिना चाधानाध्यनयोः अग्निस्वाध्यायप्रयुक्तत्वेनाधानाध्ययनत्वादिना क्रतूपकारकत्वेन च क्रत्वन्यमात्रप्रयुक्ततानवच्छेदकक्रतूपकारकतावछेदकीभूताधानत्वाध्ययनत्वरूपधर्मवत्त्वेन क्रत्वर्थतापत्त्या क्रतुविधिप्रयुक्तत्वेन कामश्रुतिवशेन शूद्राणामप्याधानाध्ययनाक्षेपसम्भवेन तदधिकरणविरोधस्य वज्रलेपत्वात् । तस्मान्नोपकारकत्वं शेषत्वमिति । अपकारकस्थलोक्तं दोषं निरस्यति—**अपकारकस्थल इति ॥ तदपकारस्यैव**—मशकाद्यपकारस्यैव । तन्निवृत्तेरिति यावत् । तस्येप्सितत्वाख्योद्देश्यत्वसूचनाय इष्टत्वेनेत्युक्तम् ।

१. प्रमाणगम्यमिति पाठान्तरम् ।

वक्ष्यते । अतश्च वाक्याद्यागोऽपि फलाङ्गम् । तथा हि—यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङा अवगम्यते । तथापि कदाचिदपि प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेः अवश्यं कदाचित्तया भवितव्यम् । तथा चेष्टसाधनताज्ञानं विना तदसम्भवात् तस्य च बाधकाभावे भ्रमत्वायोगात् इष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते । इष्टविशेषसाधनत्वं च स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः । एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम् । भोक्ता च उत्सर्गतो विधिवशात् कामनावशात् आत्मनेपदवशाच्च कर्तैव । प्रमाणसत्त्वे त्वन्यः । अत्राङ्गत्वव्यवहारो भाक्त इति तु ध्येयम् । पुरुषः पुनः कर्तृत्वादिना यागाद्युद्देश्यकक्रुतिकारकत्वात् वाक्यादेव तदङ्गमित्यविवादमेव ॥ ३ ॥

---

तथा च तदुद्देश्यकक्रुतिकारकत्वसत्त्वान्नाव्याप्तिरित्यर्थः । **तदपि**—पारार्थ्यरूपं शेषत्वमपि ॥ **श्रुत्यादिषट्प्रमाणकमिति** ॥ प्रकरणादिनिरूपणे वक्ष्यमाणत्वान्न प्रमाणत्रयमात्रगम्यमङ्गत्वमिति भावः । ननु समानपदोपात्तधात्वर्थस्यैव भाव्यत्वात् न फलाङ्गत्वमित्युक्तमत आह—**अतश्चेति** । तस्य समानपदश्रुत्याङ्गत्वाभावेऽपि एकवाक्यावगतत्वेन वाक्यादेव फलाङ्गत्वं यागादेरित्यर्थः । वस्तुतो यागस्येष्टसाधनत्वाभावेऽपि इष्टसाधनत्वस्वरूपयोग्यतयैव प्रवर्तकत्वमिति पूर्वपक्षोक्तं निरस्यति—**यद्यपीत्यादिना** ॥ **कदाचिदपीति** ॥ न हि कदाचिदपि कार्याजनकं स्वरूपयोग्यं भवति । अन्यथा दण्डादिकं सर्वमपि घटादिसर्वकार्यं प्रति स्वरूपयोग्यकारणं स्यात् । ततश्च यागादेर्भवन्मते भाव्यत्वाङ्गीकारेण कदापि फलाजनकत्वात् प्रवृत्तिं प्रति स्वरूपयोग्यत्वमपि नास्ति । ततश्च कथं स्वरूपयोग्यतया प्रवर्तकत्वमित्यर्थः । यत्त्वत्र कौस्तुभे नित्यस्य स्वरूपयोग्यस्य फलावश्यंभावनियमात् कदाचित् फलेन भवितव्यमित्युक्तम्, तन्न । कर्मणां नित्यत्वाभावेन तन्नियमस्य प्रकृते अप्रवृत्तेः । ननु विधिवशादेव प्रवृत्तिरस्त्वित्यत आह—**तथा चेति** ॥ **इष्टसाधनतेति** ॥ प्रवृत्तिसामान्यं प्रतीष्टसाधनताज्ञानहेतुताया लोके क्लृप्ततया प्रवृत्तिविषययागादेरिष्टसाधनत्वमनुमीयत इत्यर्थः । नन्विष्टसाधनत्वभ्रममादाय प्रवृत्तिरुपपद्यते इत्युक्तमत आह—**तस्य चेति** ॥ तथा च प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च स्वतस्त्वाङ्गीकारात् इष्टसाधनताज्ञानं जायमानं प्रमारूपमेवोत्पद्यते, प्रमात्वे बाधकाभावात् । प्रमायाश्च वस्तुसाधकत्वाद्यागादेरिष्टसाधनत्वसिद्ध्या यागादेरङ्गत्वमेवेत्यर्थः ॥ **विधिबलादिति** ॥ प्रवृत्तिजनकव्यापाररूप-

**(४)—तेषामर्थेन सम्बन्धः ॥ ७ ॥ विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात् प्रकरणाविशेषात् ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥**

तदेवमङ्गत्वे निरूपिते अङ्गत्वे श्रुत्यादीनि षट् प्रमाणानीत्युक्तम् । तत्र

---

प्रवर्तनाविषयत्वरूपहेतुबलादित्यर्थः । ननु विधिबलादिष्टसाधनत्वावगमे स्वर्गकामादिपदं व्यर्थं स्यात् इत्यत आह—**इष्टविशेषेति** ॥ ततश्च स्वर्गकामपदस्य काम्यमानस्वर्गपरतया तस्यैव भाव्यत्वेनान्वयाद्यागादेस्तदङ्गत्वं सिद्धमित्यर्थः । एवं 'कर्माण्यपि जैमिनिः फलार्थत्वात्' इति सूत्रार्थो वर्णितः । 'फलं च पुरुषार्थत्वात्' इति सूत्रार्थमाह—**एवं फलस्यापीति** ॥ यागे प्रवृत्तस्य पुरुषस्य ह्यस्त्यंशद्वयम्, भोक्तृत्वांश एकः, कर्तृत्वांशोऽपरः । तत्र फलभोक्तुः प्राधान्यं लोके सिद्धमेव, वेदे च भोक्तुर्यागादिविधानात् फलभोक्तृत्वात् प्राधान्यम्, अन्यथा फलेच्छया प्रवृत्त्यनुपपत्तेरित्यर्थः ॥ **आत्मनेपदवशाच्चेति** ॥ 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनुशासनेन क्रियाफलस्य कर्तृगामित्वे आत्मनेपदविधानादित्यर्थः । ननु जातेष्टिफलस्य पूतत्वादेः पुत्रगतत्वेऽप्यात्मनेपददर्शनान्नायं नियम इत्यत आह—**प्रमाणसत्त्व इति** ॥ तत्र वाक्यशेषवशात् अन्यगतत्वाङ्गीकारेऽपि सर्वत्र तथात्वे मानाभावात् भोक्त्रङ्गत्वमेव फलानामित्यर्थः । ततश्च फलेन यजमानप्रीतिं भावयेदिति वाक्यार्थाङ्गीकारेण पुरुषाङ्गत्वं फलस्येत्यर्थः । अन्ये तु पूतत्वादिविशिष्टपुत्रकत्वं कर्तृनिष्ठं फलं तत्रापि वक्तुं शक्यम्; अत एव पार्थसारथिः—'यदपि परार्थं तदपि परम्परया स्वार्थमेव' इत्याहेत्याहुः ॥ **भाक्त इति** ॥ विशेषणत्वविवक्षया अङ्गत्वव्यवहार इति पूर्वमेवोक्तः । कर्तृत्वांशेन तु कृतिकारकत्वसत्त्वादङ्गत्वं सुलभमेवेत्याह—**पुरुषः पुनरिति** ॥ तत्र प्रमाणमाह—**वाक्यादिति** ॥ यजिपदोत्तराख्यातलक्ष्यत्वादित्यर्थः । औदुम्बरीसंमानादिष्वपुरो [ष्वपि तु ?] पुरुषश्च कर्मार्थ इति सूत्रं स्पष्टम् ॥ ३ ॥

**तेषामर्थेन सम्बन्धः** ॥ सङ्गतिप्रदर्शनायाह—**तदेवमिति** ॥ स्वरूपविचारानन्तरं प्राप्तावसरत्वात् अवसरसङ्गतिरित्यर्थः ॥ **षट्प्रमाणानीत्युक्तमिति** ॥ तत्र श्रुत्यादित्रयमध्ये श्रुतिवाक्ययोरङ्गत्वबोधकतायाः स्पष्टत्वात् सामर्थ्याधिकरणे

श्रुतिर्नाम अङ्गत्वघटकीभूतोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकः शब्दः। स च द्वितीयातृतीयाादिविभक्तिरूपः[1]। कृदन्तस्थले निष्ठातृजादिव्यावृत्त्यर्थं प्राधान्येनेति। तस्य कारकत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्ववाचित्वाभावात्। अत एव 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' 'वारणो यज्ञावचरः' इत्यादौ वाक्यीय एव विनियोगः न श्रौतः। तत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः। वस्तुतस्तु, ईप्सितत्वाख्याया उद्देश्यतायाः साध्यतामात्र-

---

लिङ्गस्य क्रियान्वयबोधकत्वव्युत्पादनाच्च श्रुत्यादित्रयस्याक्षेपसमाधानादेरकृतत्वात् तत्प्रामाण्योपयोगिविशेषविचार एव क्रियते। प्रकरणादित्रयस्य तु आक्षेपसमाधानपूर्वकं विशेषविचारः क्रियत इति द्रष्टव्यम्। तत्राङ्गत्वप्रमाणेषु श्रुतेर्मुख्यत्वात्तस्याः प्रथमं लक्षणमाह—**श्रुतिर्नामेति** ॥ यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत् तत् तदङ्गमिति लक्षणे उद्देश्यत्वकृतिकारकत्वयोः घटकत्वेन तयोः प्राधान्येन वाचको द्वितीयातृतीयादिः श्रुतिशब्दार्थः। तथा चोक्तान्यतरवाचकशब्दत्वं श्रुतिलक्षणमित्यर्थः। प्राधान्येनेत्यस्य प्रयोजनमाह—**कृदन्तस्थल इति** ॥ **तस्येति** ॥ कृत्प्रत्ययस्येत्यर्थः। **कारकत्वविशिष्टेति** ॥ 'कर्तरि कृत्' इत्यधिकृत्य विहितस्य कृत्प्रत्ययस्य करणत्व[कारकत्व ?] विशिष्टधर्मिपरत्वेन प्रकृत्यर्थविशेष्यतया कारकत्ववाचित्वाभावादित्यर्थः। **अत एव**—कृत्प्रत्ययस्य प्राधान्येन कारकत्ववाचित्वाभावादेव ॥ **वाक्यीय इति** ॥ निष्ठातृच्प्रत्ययाभ्यां [निष्ठा-घ-प्रत्ययाभ्यां ?]प्रकृत्यर्थोपसर्जनीभूतकर्मत्व[कर्मत्वकरणत्व ?]प्रतिपादनेन प्राधान्येन कर्मत्वा[कर्मत्वाद्य ?]भिधानाभावेन श्रुत्या विनियोगाभावेन वाक्येनैव विनियोग इत्यर्थः। *तत्र 'प्रोक्षिताभ्याम्' इत्यादौ निष्ठार्थकर्मोपसर्जनीभूतकर्मत्ववाचिकाया द्वितीयाया उद्देश्यत्वपरत्वेन तदुद्देशेन प्रोक्षणविधानेन वाक्येन प्रोक्षणस्याङ्गत्वमित्यर्थः। यथा 'घटमानय' इत्युक्ते चैत्रीयघट एव योग्यतया प्रतीयते, तथा द्वितीयायाः साध्यत्वमात्रार्थकत्वेऽपि योग्यतया ईप्सितत्वमेव साध्यत्वविशेषः प्रतीयत इत्यर्थः। ननु साध्यत्वमात्रवाचिद्वितीययोद्देश्यत्वरूपसाध्यत्वबोधसंभवेऽपि उद्देश्यतात्वेन तद्बोधो न, शक्यतावच्छेदकातिरिक्तत्वरूपेण बोधस्य लक्षणासाध्यत्वात्' षष्ठीस्थले व्यासस्य

---

१. 'तृतीयाविभक्ति' इति पाठान्तरम्।

* यदि 'तत्र' इत्यनेन द्वितीयादिविभक्तयः "स च द्वितीयातृतीयादिविभक्तिरूपः" इति वाक्योपात्ताः परामृश्यन्ते, तदा चिन्तामणिसमाहृतस्य क्लेशस्य अवकाशो न भवेत्—इति विदां कुर्वन्तु सुधियः।

वाचिद्वितीयावच्यत्वाभावात् तत्रापि न मुख्या श्रुतिः। अपि तु भाक्त एव तत्र श्रुतित्वव्यवहारः। ईप्सितत्वांशे लक्षणाङ्गीकारात्। अतश्चोद्देश्यतापदमपि नैव लक्षणे देयम्। एवं षष्ठ्यादावपि कारकत्वशक्तत्वाभावाच्छ्रुतित्वव्यवहारो भाक्त एव। एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तरप्रतिपादनं तत्रापि वाक्यीय एव विनियोगः न श्रौतः। एवं समानपदश्रुत्यादिष्वपि द्रष्टव्यम्॥

तदेवं श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धे अधुना गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्यङ्गाङ्गित्वयोरवच्छेदकविचारः क्रियते॥

दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' 'आज्यमुत्पुनाति' इत्यादयः आज्यौषधसान्नाय्यसम्बन्धिनः संस्काराः श्रुताः। तेषु किं सर्वसाधारणमवघातविधावुद्देश्यतावच्छेदकम्, उत आज्यादिव्यावृत्तम्? एवमन्यत्रापीति विचारः। तत्र न तावच्छ्रुतं

---

कृतिरित्यादौ कर्तृत्वेन बोधार्थं लक्षणास्वीकारात्। ईप्सितत्वस्य 'कर्तुरीप्सिततमं कर्म' इत्यनुशासनसिद्धत्वात् शक्तितुल्यवृत्तिकवृत्तिगम्यत्वोपपत्तिः। न प्रकृते तत्संभव इत्याशयेनाह—**वस्तुत इति**॥ **भाक्त इति**॥ तदुपपादयति—**ईप्सितत्वांश इति**॥ गौणमुख्यसाधारण्येन श्रुतिलक्षणमाह—**अतश्चेति**॥ कृतिकारकत्वस्य प्राधान्येन वाचकशब्दत्वं श्रुतित्वमित्येव लक्षणम्। लक्षणास्थलेऽपि प्राधान्येन कारकत्ववाचकशब्दत्वसत्त्वादित्यर्थः॥ **कारकत्वशक्तत्वाभावादिति**॥ 'शेषे षष्ठी' इत्यनेन संबन्धसामान्ये षष्ठीविधानेन कारकत्वाशक्तत्वात् भाक्त एव श्रुतिव्यवहार इत्यर्थः॥ **यत्रापीति**॥ कृष्णानां व्रीहीणामित्यादिषष्ठ्या करणत्वलक्षणया तत्रापि वाक्यीय एव विनियोग इत्यर्थः॥ **एवमिति**॥ समानपदश्रुत्यादिष्वपि भाक्त इति द्रष्टव्यमित्यर्थः। आदिना समानाभिधानश्रुतिपरिग्रहः॥ **तद्भूताधिकरणेनेति**॥ 'तद्भूतानां क्रियार्थेन समाम्नायः' इत्यनेन प्रथमाध्यायस्थेन सिद्ध इत्यर्थः॥ **अङ्गाङ्गित्वयोरिति**॥ तथा चावच्छेदकविचारार्थत्वादस्याधिकरणस्य सार्थक्यमिति भावः। अङ्गाङ्गित्वयोरवच्छेदकविचारस्याप्यध्यायादौ प्रतिज्ञातत्वादिति भावः। "व्रीहीनवहन्ति" "आज्यमुत्पुनाति" इत्यादिना "शाखामाच्छिनत्ति" इत्यादिसङ्ग्रहः। तत्र "व्रीहीनवहन्ति" इत्यादय औषधधर्माः। "आज्यमुत्पुनाति" इत्यादय आज्यधर्माः। "शाखामाच्छिनत्ति" इत्यादयः सान्नाय्यसम्बन्धित्वेन श्रुताः संस्कारा इत्यर्थः॥ **सर्वसाधारणमिति**॥ औषधाज्यसाधारणमित्यर्थः। दर्शपूर्णमासपरमापूर्वसाधनत्वस्य सर्वसाधारण्यादिति भावः॥ **आज्यादिव्यावृत्तमिति**॥ आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्य आज्यादिव्यावृत्तत्वादिति भावः। ननु "व्रीहीनवहन्ति"

**व्रीहित्वादिकमेवोद्देश्यतावच्छेदकम् ; आनर्थक्यापत्तेः । अवघातप्रोक्षणादि-व्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्जायमानत्वात् । यवेष्वनापत्तेश्च । अतो नवमाद्याधिकरणन्यायेन व्रीहित्वाविवक्षया अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् तत्र फलप्रत्यासन्नत्वादेकत्वादारादुपकारकेषु क्लृप्तप्रयोजकशक्तिमत्त्वाच्च परमापूर्वस्य**

---

इति व्रीहित्वावच्छिन्नोद्देशेनैवावघातप्रतीतेः कथमस्य सर्वसाधारण्यमित्यतस्तदुपपादयति— **तत्र न तावदिति ॥ आनर्थक्यापत्तेरिति** ॥ "व्रीहीनवहन्ति" इत्यनेन व्रीहित्वावच्छिन्नोद्देशेनावघातविधौ व्रीह्यादेः कर्मत्वं वाच्यम्; तच्च नोत्पाद्यत्वरूपम् । अवघातमन्तरेण तस्योत्पत्तेरित्यर्थः । ननु संस्कार्यत्वरूपकर्मत्वाङ्गीकारात् संस्कारविशिष्टस्योत्पाद्यत्वं सम्भवति इत्यत आह—**यवेष्विति** ॥ व्रीहित्वावच्छिन्नोद्देशेनावघातविधाने यवानामुद्देश्यतावच्छेदकानाक्रान्तत्वेनावघातस्य यवसाधारण्यं न स्यादित्यर्थः । चकारेणावघातं विनापि व्रीह्यादेः प्राप्तिसम्भवेन प्राप्यत्वरूपकर्मत्वमपि न सम्भवतीति सूचितम् । प्रोक्षणादिभिः कस्यचिद्विकारस्यादर्शनाद्विकार्यत्वरूपं कर्मत्वमपि न सम्भवतीति द्रष्टव्यम् ॥ **नवमेति** ॥ तत्र व्रीहित्वाविवक्षायाः सिद्धान्तितत्वादित्यर्थः । तथा च व्रीहित्वावच्छिन्नोद्देशेनावघातविधिवैयर्थ्यात् व्रीहिपदेनापूर्वसाधनं लक्षयित्वा अपूर्वसाधनोद्देशेनावघातविधानमेवाङ्गीकर्तव्यम् । ततश्चापूर्वसाधनत्वस्योद्देश्यतावच्छेदकत्वेन तस्य चाज्यादिष्वपि सत्त्वेन सर्वसाधारण्येनाज्यादिष्वप्यवघातः कार्य इत्यर्थः । तथा सति नावघातानर्थक्यम्, अवघातमन्तरेणापूर्वोत्पत्तौ प्रमाणाभावादिति भावः । नन्वानर्थक्यपरिहारायापूर्वसाधनलक्षणायामपि आग्नेयाद्युत्पत्त्यपूर्वसाधनलक्षणयाप्यानर्थक्यपरिहारसंभवात् आग्नेयापूर्वसाधनत्वस्याज्यादिष्वभावात् कथं साधारण्यमित्यत आह—**तत्रेति** ॥ **फलेति** ॥ लक्षणाया आवश्यकत्वे परमापूर्वस्य फलप्रत्यासन्नत्वेन सर्वापेक्षया अभ्यर्हितत्वात् तत्साधनमेव लक्ष्यते । तत्साधनं चाज्यादिकमपीति सिध्यति सर्वसाधारण्यमित्यर्थः । तत्र लाघवमप्याह—**एकत्वादिति** ॥ तत्तदुत्पत्त्यपूर्वसाधनलक्षणायामपूर्वाणामनेकत्वात् सर्वेषामुद्देश्यतावच्छेदकत्वं कल्पनीयम् । ततश्च तेषामननुगतत्वेन गौरवेण च नोद्देश्यतावच्छेदककोटिप्रवेशो युक्तः । परमापूर्वस्य त्वेकत्वात् अनुगतत्वाच्च तदेवोद्देश्यतावच्छेदकमिति भावः । ननूत्पत्त्यपूर्वाणामनेकत्वेऽप्यपूर्वत्वेनानुगमात् प्रकृतापूर्वसाधनोद्देशेनावघातादिविधावुद्देश्यतावच्छेदकतावच्छेदकस्यैकत्वेनावच्छेदकताभेदाभावान्नाननुगमदोष इत्यत आह—**आरादुपकारकेष्विति** ॥ ततश्चाग्नेयाद्युत्पत्त्यपूर्वेषु अवघातादिप्रयोजकशक्तेः कल्पनीयतया अनेकेषु तत्कल्पनादत्यन्तगौरवं स्यात् । परमा-

तत्साधनत्वमेव प्रदेयघटकत्वसम्बन्धेन लक्ष्यते । अस्ति चाग्नेयादेस्तत्प्रत्यपि साधनता । अत एव न वाङ्नियमन्यायोऽपि । अतश्चोद्देश्यतावच्छेदकस्य सर्वसाधारणत्वात् आज्यादिष्वप्यवघातादेः सङ्करः । न च प्रतिनियतनिर्देशात् व्यवस्था । तथात्वे व्रीहित्वादिविवक्षाया आवश्यकत्वेन नीवारेष्वनापत्तेरिति प्राप्ते—

पूर्वेषु तु आरादुपकारकविषये प्रयोजकशक्तेः क्लृप्तत्वान्न कल्पनागौरवम्, नाप्यनेकत्र तत्कल्पनागौरवमिति परमापूर्वमेव प्रयोजकमिति भावः । नन्वेवं परमापूर्वसाधनत्वस्य प्राकरणिकसर्वपदार्थेषु सत्त्वेनातिप्रसक्तत्वान्नोद्देश्यतावच्छेदकत्वसंभव इत्यत आह—**प्रदेयघटकत्वसम्बन्धेनेति** ॥ तथा च प्रदेयत्वेनापूर्वसाधनत्वस्योद्देश्यतावच्छेदकत्वान्नातिप्रसङ्ग इत्यर्थः । नन्वाग्नेयादेरुत्पत्त्यपूर्वं प्रत्येव साधनतया कथं साधारण्यं धर्माणामित्यत आह—**अस्ति चेति** ॥ तथा चाग्नेयादेरुत्पत्त्यपूर्वसाधनत्वेऽपि तद्द्वारा परमापूर्वं प्रत्यपि साधनत्वान्नानुपपत्तिरित्यर्थः । ननु 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्' इति वचनविहितस्य वाङ्नियमस्य दीक्षणीयापूर्वार्थत्वमेव, न तु परमापूर्वार्थत्वमित्युक्तत्वेन तद्विरोधापत्तिरत आह—**अत एवेति** ॥ परमापूर्वं प्रति साधनत्वादेवेत्यर्थः । अयमर्थः । तत्र दीक्षणीयाशब्देन साक्षात् स्वसंबन्ध्युत्पत्त्यपूर्वं लक्षयित्वा तद्द्वारा परमापूर्वं लक्षणीयमिति शक्यसम्बन्धस्य स्वबोध्यसम्बन्धस्य [लक्षित] लक्षणारूपत्वेन गौरवम्, उत्पत्त्यपूर्वस्य तु साक्षाद्दीक्षणीयासम्बन्धित्वाल्लाघवमिति दीक्षणीयापूर्वार्थत्वमेव वाङ्नियमस्योक्तम्, प्रकृते त्वाग्नेयाद्युत्पत्त्यपूर्वस्य परमापूर्वस्य च साक्षादाग्नेयादिजन्यत्वात् फलवत्त्वादिना प्राधान्यात् परमापूर्वप्रयुक्तत्वमेवेति साधारण्यं सुवचमेवेति आज्यादिष्वप्यवघातसंस्कारः । तस्य च दृष्टार्थत्वाभावेऽप्यदृष्टार्थत्वोपपत्तेरदृष्टकल्पनागौरवस्य फलमुखत्वेनादोषत्वादिति पूर्वपक्षाशयः । ननु "व्रीहीनवहन्ति" इति प्रतिनियतनिर्देशेन व्यवस्थोपपत्तौ किमित्याज्यादिसाधारण्यमङ्गीकृत्यादृष्टकल्पनागौरवमित्याशङ्क्याह—**न चेति** ॥ **नीवारेष्विति** ॥ तथा च व्रीहित्वविवक्षया व्यवस्थाङ्गीकारे नीवारेषु व्रीहिप्रतिनिधिभूतेषु व्रीहित्वाभावेनावघातप्रवृत्तिर्न स्यात् । अतो व्रीहित्वविवक्षया व्यवस्था न युक्तेति पूर्वपक्ष इत्यर्थः । अत्र पूर्वपक्षे अवान्तरापूर्वाणि नाङ्गीक्रियन्ते । तदङ्गीकारे वाङ्नियमन्यायेनास्याधिकरणस्य गतार्थताया अपरिहार्यतापत्तेः । तदनङ्गीकारेणैव परमापूर्वार्थत्वनिराकरणमत्रव्युत्पाद्यम् । वाङ्नियमाधिकरणे तु उत्पत्त्यपूर्वं पूर्वपक्षेऽङ्गीकृत्य परमा[पूर्वा]र्थत्वं निराक्रियते इत्यपौन-

१. 'निवारादिषु' इति पाठान्तरम् ।

यद्यपि विधिरविशेषप्रवृत्तः स्यात्; तथापि दृष्टार्थत्वनियमविधिलाघवानुरोधेन विशेषे व्यवस्थाप्येत, किमुत यदा सोऽपि विशेषप्रवृत्त एव । व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात् । तस्याप्यनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेः आनर्थक्याभावेन तदतिक्रमकारणाभावात्, परम्परया फलवत्त्वाच्च । अतो व्रीहिपदेन व्रीहिसाध्यानि यान्याग्नेयाग्नीषोमीयैन्द्राग्नोत्पत्त्यपूर्वाणि तन्निष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुलरूपव्यापारकसाधनतासामान्याश्रयत्वस्यैवोद्देश्यतावच्छेदकत्वेन

---

रुक्त्यं संभवतीति द्रष्टव्यम् ॥ **यद्यपीति** ॥ दर्शपूर्णमासप्रकरणे अवहन्तीति श्रवणेऽप्यवघातस्य दृष्टप्रयोजनलाभाय व्रीहिष्ववघातः प्राप्नोति, तथा आज्यादिषु अदृष्टार्थत्वेनापूर्वविधित्वमपि स्यात्, व्रीहिषु प्रवृत्तौ नियमविधित्वमिति लाघवमपीति तत्रैवावघातः प्रवर्तेत, किमुत व्रीहियुक्त एव विधिः श्रूयते इति कैमुतिकन्यायेन व्रीहिष्वेवावघात इत्यर्थः । ननु परमापूर्वस्य फलसाधनतया कथंभावाकांक्षासत्त्वात् तस्यैवावघातादिप्रयोजकत्वम्, न तूत्पत्त्यपूर्वस्येत्यत आह—**तस्यापीति** ॥ उत्पत्त्यपूर्वस्यापीत्यर्थः ॥ **अनिर्ज्ञातेति** ॥ लोकसिद्धत्वाभावेन कथंभावाकांक्षया अवघाताद्यङ्गग्राहकत्वोपपत्तेरित्यर्थः ॥ **आनर्थक्याभावेनेति** ॥ वैदिकेतिकर्तव्यतां विना तदुत्पत्तौ ह्यानर्थक्यं भवेत्, अपूर्वस्यानिर्ज्ञातप्रकारत्वात् नानर्थक्यम्, अङ्गानुष्ठानं विना तदुत्पत्तौ प्रमाणाभावादित्यर्थः ॥ **परम्परयेति** ॥ परमापूर्वद्वारा फलप्रयोजकत्वसत्त्वादित्यर्थः ॥ **व्रीहिपदेनेति** ॥ विवक्षितत्वादित्यग्रेणान्वयः । **यानीत्यादि** व्रीहिसाध्यानि व्रीहिजन्ययागसाध्यानि इत्यर्थः । तथा च प्रकृताग्नेयाद्युत्पत्त्यपूर्वनिष्ठकार्यतानिरूपिता कारणता [या] यागादिनिष्ठा तत्समानाधिकरणकार्यतानिरूपिता कारणता व्रीहिगता तदाश्रयत्वं व्रीहिष्वस्तीति तत्रावघातसिद्धिः । साधनताविशेषग्रहणसिद्ध्यर्थमाह—**प्रदेयेति** ॥ प्रदेयोऽग्न्याद्युद्देशेन त्यक्तव्यः पुरोडाशः । तस्य पिण्डरूपत्वेन प्रकृतिद्रव्यापेक्षासत्त्वात् तण्डुलाः प्रकृतित्वेन ग्राह्याः, 'तण्डुलान् पिनष्टि' इति वचनात् । ततश्च तद्द्वारकसाधनताश्रयत्वं व्रीहिनिष्ठमुद्देश्यतावच्छेदकमित्यर्थः । अत्र आग्नेयाद्युत्पत्त्यपूर्वघटितधर्मस्योद्देश्यतावच्छेदकत्वेन तस्याज्यादिष्वभावान्नावघातप्रसक्तिः । उक्तोद्देश्यतावच्छेदकत्वस्य जुह्वादौ सत्त्वात् तत्रावघातापत्तिवारणाय तण्डुलद्वारकेति । नन्वाग्नेयाद्युत्पत्त्यपूर्वाणामेकानुगमकाभावेन तत्तद्व्यक्तित्वेन निवेशनीयतयोद्देश्यतावच्छेदकभेदात् वाक्यभेदः स्यादित्यत आह—

विवक्षितत्वान्नाज्यादिष्वतिप्रसङ्गः । अत्र चापूर्वत्रयस्यैकानुगमकाभावेऽप्येकपदोपादानादवाक्यभेदः । तत्तद्व्यापारकसाधनता एव च विवक्ष्यन्ते, न तु साधनतावच्छेदकादीन्यपि । तेन व्रीहित्वाद्यभावेऽपि न क्षतिः । यथा च व्रीहियवयोः कारणताभेदेऽपि यवसाधारण्यं तथा कौस्तुभे विस्तरः । तत्र तत्र नवमादौ चोपपादयिष्यते ॥ ४ ॥

---

अपूर्व[त्रय]स्यैकानुगमकाभावेऽपीति ॥ एकपदेति ॥ तथा चैकानुगमकरूपाभावेऽपि सर्वेभ्यः कामेभ्य इत्यादाविव न वाक्यभेद इत्यर्थः । वस्तुतस्तु पुरोडशजन्ययागत्वेन उत्पत्त्यपूर्वं प्रति कारणत्वकल्पनया तत्तद्धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतया सिद्धवैजात्यस्यानुगमकस्य सम्भवान्नाननुगम इति द्रष्टव्यम् । यत्त्वत्र कौस्तुभे गोधूमादेरपि पुरोडाशद्वारा कारणत्वसम्भवेनातिप्रसङ्गवारणाय व्रीहियवेतरद्रव्यत्वेन यागं प्रत्यपूर्वं प्रति प्रतिबन्धकत्वमित्युक्तम् । तच्चिन्त्यम्; व्रीहियवयोर्हि 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति विधिना अग्नेयादिकं प्रति तदपूर्वं प्रति च साधनत्वमङ्गीकृतम्, गोधूमानां तु तादृशकारणत्वे प्रमाणाभावेन उक्तोद्देश्यतावच्छेदकानाक्रान्तत्वादेव वारणे किमिति प्रतिबन्धकत्वं कल्प्यत इति । तण्डुलद्वारकत्वनिवेशाच्चरावप्यवघातप्रवृत्तिः । ननु साधनतावच्छेदकीभूतव्रीहित्वाद्यभावात् कथं यवसाधारण्यमित्यत आह—न त्विति ॥ विवक्ष्यन्त इत्यन्वयः ॥ व्रीहित्वाद्यभावेऽपीति ॥ आदिना पुरोडाशत्वपरिग्रहः । तथा च पुरोडाशत्वाभावेऽपि चरौ तत्प्रवृत्तिरित्यर्थः । ननु व्रीहियवयोः कारणताया भिन्नत्वात् एकोपादाने तदितरग्रहणं न स्यादित्यत आह—यथा चेति ॥ कौस्तुभ इति । तयोर्भेदेऽपि साधनता[त्वा]वच्छिन्नस्योभयत्र सत्त्वात् साधारण्योपपत्तिरित्यर्थः । नन्वेतत्सर्वं तदोपपद्यते, यद्याग्नेयाद्युत्पत्त्यपूर्वमङ्गीक्रियेत तत्रैव मानं न पश्यामः, यागस्य ह्याशुतरविनाशिनः कालान्तरभाविस्वर्गजनकत्वान्यथानुपपत्त्या परमापूर्वं व्यापारतया कल्प्यते, न तूत्पत्त्यपूर्वाणीति कथमुत्पत्त्यपूर्वघटितमुद्देश्यतावच्छेदकघटकं कृत्वा व्यवस्थासिद्धिरिति चेन्न ; परमापूर्वस्य सर्वप्रयोगसमाप्त्यनन्तरं जायमानत्वेन तावत्कालपर्यन्तमाग्नेयादिव्यक्तेरसत्त्वेन तत्तत्कारणतानिर्वाहार्थमुत्पत्त्यपूर्वाणामावश्यकत्वेन व्यवस्थोपपत्तेः । अथैवं वाङ्नियमन्यायेन गतार्थत्वम्, तत्राप्युत्पत्त्यपूर्वप्रयुक्तत्वव्युत्पादनादिति चेन्न ; तत्रोत्पत्त्यपूर्वमङ्गीकृत्य तस्य प्रत्यासन्नत्वेन वाङ्नियमप्रयोजकत्वव्युत्पादनात् । इह तूत्पत्त्यपूर्वमनङ्गीकृत्य परमापूर्वप्रयुक्तत्व-

---

१. 'यागत्वपुरोडाशत्वव्रीहित्वाद्यभावे' इति पाठान्तरम् ।

## (५)—द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

दर्शपूर्णमासयोः "स्फ्यश्च कपालानि च"[1] इति दश द्रव्याण्यनुक्रम्य "एतानि वै दश यज्ञायुधानि"[1] इति श्रुतेन वाक्येन दशानामपि द्रव्याणां यज्ञसाधनत्वेन विधानात् उत्पत्तिशिष्टपुरोडाशाद्यवरोधेन च साक्षाद्यागसाधनत्वायोगादङ्गेष्ववतारात् प्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षशक्यक्रियात्वावच्छिन्नोद्देशेन द्रव्याणि विधीयन्ते । "स्फ्येनोद्धन्ति" इत्यादिविशेषविनियोगास्त्ववयुत्यानुवादा इति प्राप्ते—

तेन तेन प्रत्यक्षविधिना तृतीयाश्रुतिसहकृतेन स्फ्यादीनां विशिष्य

---

शङ्कायामुत्पत्त्यपूर्वं साधयित्वा सिद्धान्तकरणेनागतार्थत्वमिति द्रष्टव्यम् । अधिकं नवमे वक्ष्यते ।

सूत्रार्थस्तु—**तेषाम्**—संस्काराणाम् । **अर्थेन**—दृष्टप्रयोजनवशेन व्यवस्थया ; **सम्बन्ध** इति । न चैवं तानि द्वैधाधिकरणेन पौनरुक्त्यम्, तत्र दृष्टार्थत्वस्य साधितत्वादिति वाच्यम् ; तत्र दृष्टार्थत्वसिद्धावपि आनर्थक्यपरिहारायादृष्टसाधनत्वलक्षणाया आवश्यकत्वेन परमापूर्वसाधनलक्षणायामवघातविधेर्व्रीह्यंशे दृष्टार्थत्वम्, आज्यांशेऽदृष्टार्थत्वमिति विधिवैरूप्यापत्त्योत्पत्त्यपूर्वलक्षणया व्यवस्थाया एतदधिकरणव्युत्पाद्यत्वेन पौनरुक्त्यपरिहारात् ॥ ४ ॥

**द्रव्यं चोत्पत्तिसंयोगात् तदर्थमेव चोद्येत ॥** अत्रोद्धननादिवाक्यस्य विधायकत्वाभावात् व्रीह्यादीनामवघातादिसंयोगादिवदिह संयोगासत्त्वात् न व्यवस्थितिरिति प्रत्यवस्थानात् सङ्गतिः । यज्ञायुधवाक्यं विधायकम् उत स्फ्येनोद्धन्ति इत्यादिवाक्यानि विधायकानीति संशयः । तत्र यज्ञायुधवाक्यमेव विधायकं, लोके आयुधशब्दस्य युद्धसाधनखड्गादौ प्रयोगदर्शनेन प्रकृते यज्ञसाधनानि [यज्ञायुधानि ?]इत्यनेन यज्ञोद्देशेन द्रव्याणि विधीयन्ते । तत्र चाष्टाकपालावरुद्धाग्नेयादिषु प्रदेयतया विधानायोगेन आनर्थक्यतदङ्गन्यायेन यज्ञोपयुक्तं यद्यत् क्रियाजातं द्रव्यं साकाङ्क्षं तत् सर्वं स्फ्यादिभिः कुर्यात् इति वाक्यार्थाङ्गीकारेण शक्यक्रियाजातं स्फ्यादिभिः कुर्यादिति पूर्वपक्षमाह—**दशानामपीति ॥** ननु शक्यक्रियामात्रोद्देशेन स्फ्यादिविधौ 'स्फ्येनोद्धन्ति' इत्यादीनां वैयर्थ्यम् इत्यत आह—**अवयुत्यानुवाद इति ॥** अवयुत्य एकदेशं पृथक्कृत्येत्यर्थः ॥ **प्रत्यक्षविधिनेति ॥**

---

१. तै. सं. १–६–७.

विनियोगात् यज्ञायुधवाक्यमेवैकमश्रुतविधिकं वैशब्दोपबद्धमनुवादकम्। बहूनामनुवादानां वैयर्थ्यात्। अस्य च "यज्ञायुधानि सम्भरन्ति" इत्येतद्विध्यर्थवादत्वेन सार्थकत्वात्। तस्मादुद्धननमात्रजन्यव्यापारकप्रकृतापूर्व-साधनत्वाश्रयत्वमेव उद्धननपदेन लक्षयित्वा तदुद्देशेनैव स्फ्यादिविधिः ॥ ५ ॥

(६)—अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

ज्योतिष्टोमे "अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इति श्रुतम्। तत्र अरुणशब्दोऽरुणगुणवचनः, अरुणत्वजातिवचनो वा। न तु

---

स्फ्येनोद्धन्ति इत्यनेन उद्धननाद्युद्देशेन स्फ्यादीनां तृतीयाश्रुत्या साधनत्वेन विधि-सम्भवेन आनर्थक्यतदंगन्यायेन शक्यक्रियामात्रोद्देशेन विधानानुपपत्तेरुद्धननादिवाक्यानामेव विधायकत्वम्, अन्यथा बहूनां वाक्यानां निरर्थकानुवादत्वापत्तेः, तद्वरं यज्ञायुधवाक्य-स्यैवानुवादकत्वेनार्थवादत्वम्। न चानुवादप्रयोजनाभावः, 'यज्ञायुधानि सम्भरन्ति' इति वाक्यविहितसम्भारविधिशेषत्वसंभवात्। तस्मात् यथासंयोगं व्यवस्थैव युक्तेति सिद्धान्ताभिप्रायः। तत्रोद्धननपदेन उद्धननजन्यापूर्वसाधनताश्रयत्वमुद्देश्यतावच्छेदकीकृत्य स्फयादिविधिरिति बोध्यम्। ननु चतुर्थे 'द्रव्याणि त्वविशेषेणानर्थक्यात् प्रतीयेरन्' इत्यधिकरणे यज्ञायुधवाक्यस्यानुवादकत्वस्य सिद्धान्तयिष्यमाणत्वेन तेन गतार्थमेतदिति चेत्, न; अत्र शक्यक्रियोद्देशेन स्फयादिविधाननिराकरणेऽपि उत्पत्तिवाक्ये द्रव्यविशेषासंयुक्तोपांशुयाजोद्देशेन स्फयादीनां प्रदेयत्वेन विधिसम्भवात् यज्ञायुध-वाक्यमेव विधायकमित्याशङ्कानिराकरणार्थत्वेन पौनरुक्त्यपरिहार इति ॥

सूत्रार्थस्तु—द्रव्यमपि येन संयुक्तं **तदर्थमेव चोद्येत** 'स्फयेनोद्धन्ति' **इत्युत्पत्तिसंयोगात्** इति ॥ ५ ॥

**अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्** ॥ नन्वरुणाशब्दस्य गुण-विशिष्टद्रव्यवाचितया द्रव्यस्य क्रीणात्यन्वयसम्भवेन व्यवस्थोपपत्तेर्विचारोऽयमनर्थक इत्यत आह—**तत्रेति । अरुणगुणवचन इति** ॥ जगतीतलवृत्तिनीलारुणादिव्यक्ती-नामेकत्वेन आकृत्यधिकरणोक्तलाघवानवकाश इति भावः। नैयायिकमतमनुसृत्याह—**अरुणत्वजातिवचनो वेति ॥ न त्विति** ॥ विशिष्टव्यक्तिवाचित्वे आकृत्यधि-करणोक्तशक्त्यानन्त्यादिदोषापत्तेरिति भावः। ननु द्रव्यस्यैव क्रयभावनाकरणत्व-

**विशिष्टव्यक्तिवचनः । तृतीयया च शक्यस्यैव करणत्वमुच्यते । न तु तदर्थं द्रव्यलक्षणा । टाबाद्यर्थोऽपि तत्रैव सामानाधिकरण्येनान्वीयते । न तु तदर्थमपि व्यक्तिलक्षणा । अव्युत्पत्त्यापत्तेः । यथा चैवं सति "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति" इत्याद्यनुशासनोपपत्तिस्तथा कौस्तुभे द्रष्टव्यम् । एकहायन्यादिपदानां तु बहुव्रीहित्वादवयवार्थविशिष्टान्यपदार्थरूपे द्रव्य एव शक्तिरिति प्राञ्चः । अन्यपदार्थे पदद्वयस्य लक्षणेति तु बह्वः । न च द्रव्यस्यैकेनैव पदेन विधिसम्भवे इतरेण विधानानुपपत्तिर्वैयर्थ्यं चेति वाच्यम् ; उभयोर्युगपत्प्रवृत्तेर्विहितविधानाभावात् ; गुणान्तरपरत्वेन सार्थक्याच्च ।**

---

सम्भवेन गुणस्यामूर्तस्य तदसंभवात् द्रव्यलक्षणा आवश्यकीत्यत आह—**तृतीयया चेति** ॥ **शक्यस्यैवेति** ॥ तथा च शक्यार्थगुणस्यैव द्रव्यपरिच्छेदद्वारा करणत्वसम्भवान्न द्रव्यलक्षणेत्यर्थः । ननु टाबाद्यर्थस्य स्त्रीत्वस्य व्यक्तावेव सत्त्वेन तदन्वयार्थं द्रव्यलक्षणा अस्त्वित्यत आह—**टाबाद्यर्थोऽपीति** । **सामानाधिकरण्येनेति** ॥ तथा चाश्रयतासंबन्धेनान्वये हि गुणे स्त्रीत्वाभावात् द्रव्यलक्षणा स्यात् । न त्वेवमङ्गीक्रियते । अपि तु सामानाधिकरण्येनैवान्वयः स्वीक्रियते । ततश्च द्रव्यगतस्त्रीत्वस्यैव प्रतीतेस्तदर्थमपि न द्रव्यलक्षणेत्यर्थः ॥ **अव्युत्पत्त्यापत्तेरिति** ॥ प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वेन करणत्वेनान्वितप्रत्ययार्थं [अन्वितप्रकृत्यर्थं ?]परित्यज्य लक्षितव्यक्त्यन्वयस्वीकारे तद्व्युत्पत्तिविरोधापत्तेरित्यर्थः । ननु 'गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यनुशासनेन अरुणशब्दस्य गुणवाचितया तदुत्तरमतुपा गुणविशिष्टद्रव्यस्य प्रतीतिरावश्यकीति तत्रैव टाबाद्यर्थान्वयः सम्भवतीत्यत आह—**यथा चैवं सतीति** ॥ **कौस्तुभ इति** ॥ व्यक्तौ निरूढलक्षणाङ्गीकारेण मतुबनुशासनोपपत्तिरित्याकरग्रन्थानुसारेणोक्तं द्रष्टव्यमित्यर्थः । नन्वेकहायन्यादिपदानामपि गुणवाचकत्वं स्यादित्यत आह—**एकहायन्यादिपदानामिति** ॥ **बहुव्रीहित्वादिति** ॥ बहुव्रीहेरन्यपदार्थप्रधानत्वेन एकहायनपिङ्गाक्षिविशिष्टद्रव्ये शक्तत्वेन तस्य साक्षाद्भावनायां करणत्वेनान्वयसम्भवात् न गुणपरत्वमिति भावः । ननु पिङ्गाक्ष्येकहायनीपदयोरुभयोरपि द्रव्यपरत्वे एकेनैव पदेन द्रव्यविधिसम्भवात् पदद्वयवैयर्थ्यमिति शङ्कते—**न चेति** ॥ **इतरेण विधानेति** ॥ द्रव्यस्यैकेन विधाने पुनस्तस्यैव विध्यनुपपत्तिरित्यर्थः ॥ **वैयर्थ्यमिति** ॥ द्रव्यस्य प्राप्तत्वेन पुनर्विधाने प्रयोजनाभावादिति भावः ॥ **उभयोरिति** ॥ पिङ्गाक्ष्येकहायन्यो[यनीपदयो ?]रित्यर्थः । तथा च पदद्वयस्यापि युगपत्प्रवृत्तत्वेन एकविधानानन्तरम् इतरविधानाभावेन न प्राप्तविधानमित्यर्थः ।

**शक्यते त्वत्रापि अरुणान्यायेन लक्षणापि नेति वक्तुम्। समासानुशासनस्य मतुबाद्यनुशासनवदुपपत्तेः। द्रव्ये पार्ष्ठिकगुणसम्बन्धोपपादनं च प्रमाणान्तरप्रमितद्रव्यमादायोपपादनीयमिति न कश्चिद्विरोधः॥**

**तदिहारुण्यस्य योग्यत्वेऽपि कारकत्वेन अव्युत्पन्नस्य वाक्यीयद्रव्यान्वया-**

---

वैयर्थ्यं निरस्यति—**गुणान्तरेति**॥ एकहायनपिङ्गाक्ष्यादिगुणप्राप्त्यर्थत्वेन पदद्वयस्यापि सार्थक्यादित्यर्थः। नन्वेकवाक्ये समानाधिकरणसमानलिङ्गवचनानां पदानां मध्ये एकस्यारुणापदस्य गुणपरत्वम्, इतरयोः द्रव्यपरत्वमिति वैरूप्यं स्यादित्यत आह— **शक्यते त्विति॥ अरुणान्यायेनेति**॥ यथा अरुणापदस्य गुणमात्रपरत्वं [तथा] एकहायन्यादिपदानामपि एकहायनादिपरत्वान्न वैरूप्यमित्यर्थः। नन्वेवं 'अनेकमन्यपदार्थे' इति स्मृत्या अन्यपदार्थे प्रतीयमाने बहुव्रीहिविधानेन द्रव्यविशेषप्रतीत्यभावे तदनुशासनविरोध इत्यत आह—**समासानुशासनस्येति॥ मतुबाद्यनुशासनवदिति**॥ 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति स्मृतेः यथा पार्ष्ठिकद्रव्यसम्बन्धमादायोपपत्तिः एवमेकहायनीशब्देऽपि 'अनेकमन्यपदार्थे' इति स्मृतेरन्यपदार्थे प्रतीयमाने बहुव्रीहिर्भवतीत्यर्थकत्वेन पार्ष्ठिकद्रव्यसम्बन्धप्रतीतिमादायैवोपपत्तिरिति न तद्वशेनान्यपदार्थवाचकत्वमित्यर्थः। ननु द्वयोरपि पिङ्गाक्ष्येकहायनीपदयोर्गुणवचनत्वे द्रव्यवाचकशब्दान्तराभावेन कथं पार्ष्ठिकान्वयमादाय समासोपपत्तिरित्यत आह—**पार्ष्ठिकेति॥ प्रमाणान्तरेति**॥ 'अनडुहा क्रीणाति' 'वाससा क्रीणाति' इत्यादिवाक्यप्राप्तद्रव्याण्यादाय पार्ष्ठिकसम्बन्धोपपत्तिरित्यर्थः। तत्र संशयः। किं आरुण्यस्य प्राकरणिकसर्वद्रव्येषु निवेशः, उत क्रीणातिना संम्बद्धैकहायन्यामेव निवेश इति। तत्र पूर्वपक्षमाह—**आरुण्यस्येति**॥ नन्वारुण्यस्य गुणतया न क्रयान्वयसम्भवः, लोके 'गुणेन क्रीणाति' 'रसेन क्रीणाति' इति प्रयोगाभावात्। क्रयो हि स्वकीयद्रव्यदानेन परकीयद्रव्यस्वीकारः। न हि रूपरसादिकं दत्त्वा किंचिद्द्रव्यं क्रेतुं शक्नुवन्ति इत्यत आह—**योग्यत्वेऽपीति**॥ साक्षात् गुणानां दानासंभवेऽपि रक्तरूपादितारतम्येन क्रयस्थले 'रूपेण क्रीणाति' इति पनसाम्रादिषु 'रसेन क्रीणाति' इति च प्रयोगदर्शनेनाश्रयद्रव्यदानद्वारा साधनत्वोपपत्तेर्योग्यता अस्तीत्यर्थः॥ **अव्युत्पन्नस्येति**॥ अरुणापदस्यारुण्यशक्तत्वेऽपि स्त्रीलिङ्गत्वेनाश्रयनिरूढलक्षणाया आवश्यकत्वेन तत्र विशेषणत्वेनान्वितस्य कारकत्वे विशेषणतया अन्वयस्याव्युत्पन्नत्वादित्यर्थः। घटे जातित्वमिति प्रयोगवारणाय एकत्र विशेषणत्वेनान्वितस्य अन्यत्र विशेषणत्वेनान्वयो नास्तीति

योगात् व्युत्पन्नत्वेऽपि वा अमूर्तत्वेनायोग्यस्य वाक्यीयक्रियान्वयायोगात्, ततो विच्छिन्नस्य प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेन वाक्येन अरुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारकेण प्राकरणिकसर्वद्रव्याङ्गत्वमिति प्राप्ते—

न योग्यताज्ञानं शाब्दबोधहेतुः, अपि तु अयोग्यतानिश्चयस्य

---

व्युत्पत्तेरावश्यकत्वादिति भावः ॥ व्युत्पन्नत्वेऽपीति ॥ अयं भावः । एकत्र विशेषणत्वेनान्वितस्यापि धर्मिपारतन्त्र्येणान्यत्रान्वयस्यावश्यमङ्गीकार्यतया प्रकृते गुणस्याश्रयद्वारा अन्वये बाधकाभावात् । स्वविशेष्यान्वयित्वस्यैव पारतन्त्र्यशब्दार्थत्वात् । तथा चाश्रयद्वारा अन्वयोपपत्तेः नाव्युत्पन्नत्वम् । कथमन्यथा 'दण्डी प्रैषानन्वाह' इत्यादौ पुरुषविशेषणतयोपस्थितदण्डादेः प्रैषानुवचनाङ्गत्वमिति ॥ अमूर्तत्वेनेति ॥ अमूर्तस्य क्रियानिर्वर्तनशक्त्यभावेनेत्यर्थः ॥ ततो विच्छिन्नस्येति ॥ वाक्याद्भित्त्वेत्यर्थः । ननु प्रकरणे वा कथमस्य निवेशः, न तावत्क्रियाभिः, अमूर्तत्वेन क्रियान्वयायोगात् । नापि द्रव्यैः, द्रव्याणां कारकत्वेनारुण्यस्य तृतीयया कारकत्वेन श्रुतस्य कारकीभूतद्रव्यान्वयायोगात्, प्राकरणिकद्रव्याणामरुणावाक्येनानुपात्तत्वेन तदुद्देशेन विधानायोगाच्च । न च तृतीयया करणद्रव्याण्यनूद्य तदुद्देशेनारुण्यं विधीयत इति वाच्यम्; एकप्रसरताभङ्गापत्तेः । 'समर्थः पदविधिः' इति सूत्रेण पदसंबन्धिविधिमात्रे एकार्थीभावरूपसामर्थ्यस्यापेक्षितत्वेन सुब्विधेरपि पदसम्बन्धिविधित्वे[न] तदभावे विभक्त्युत्पत्त्यनुपपत्तेरित्यत आह—प्रकरणकल्पितेति ॥ श्रुतानुमितेति ॥ अरुणयेति श्रुतैकदेशः, प्रकृतापूर्वसाधनेत्याद्यनुमितैकदेशः । तथा चारुणावाक्येन विनियोगाभावात् कल्पितवाक्येन विनियोगाच्च न द्रव्याणामप्राप्तिरिति भावः ॥ न योग्यताज्ञानमिति । यदि हि योग्यताज्ञानं शाब्दबोधे कारणं स्यात् तदारुण्यस्यायोग्यत्वात् करणत्वेनान्वयो न स्यात् । न त्वेतदस्ति, शाब्दबोधे अयोग्यताज्ञानस्य प्रतिबन्धकत्वेनायोग्यतानिश्चयकाले शाब्दबोधानुत्पत्तावपि तन्निश्चयासत्त्वे करणतया आरुण्यस्यान्वयोपपत्तेर्न वाक्यं भित्त्वा वाक्यान्तरकल्पनया प्रकरणे निवेशो युक्त इत्यर्थः । अत्र वदन्ति—नायोग्यताज्ञानस्य प्रतिबन्धकत्वं युक्तम्, अत्यन्तगौरवापत्तेः । तथा हि—अयोग्यताज्ञानेऽप्रामाण्यज्ञानसत्त्वे शाब्दबोधोत्पत्त्या अप्रामाण्यज्ञानानास्कन्दितायोग्यताज्ञानस्यैव प्रतिबन्धकताया वक्तव्यतया तत्र च त्रिविधाप्रामाण्यज्ञानस्यैवोत्तेजकत्वात् तद्वति तदभावप्रकारकमित्यप्रामाण्यज्ञानस्य, तदभावाभाववति तदभावप्रकारकमित्यप्रामाण्यज्ञानस्य, प्रतियोगितासम्बन्धेन तदभाववत्यभावे प्रतियोगितासम्बन्धेन तत्प्रकारकमित्य-

प्रतिबन्धकतामात्रम्। अतश्च प्रतिबन्धकाभावसत्त्वे आरुण्यस्यापि क्रियान्वय-

---

प्रामाण्यज्ञानस्य चोत्तेजकताया वक्तव्यतया अतिगौरवात्। योग्यताज्ञानस्य कारणत्वे तु तदभाववति तत्प्रकारकं इत्यप्रामाण्यज्ञानस्यैवोत्तेजकतया एकविधाप्रामाण्यज्ञानस्यैव निवेशनेन लाघवात् योग्यताज्ञानमेव शाब्दबोधहेतुः। किं च यद्विषये अनुमित्यादिकं न जातं शाब्दबोध एव जातः तद्विशिष्टबुद्धावयोग्यताज्ञाना[भाव]त्वापेक्षया लाघवेन योग्यताज्ञानत्वेनैव योग्यताज्ञानस्य हेतुतासिद्धिः। तथा च यद्विशेषयोरिति न्यायेन शाब्दबोधसामान्ये योग्यताज्ञानस्य हेतुतासिद्धिः। एवमिच्छाया उत्तेजकत्वानुरोधेनायोग्यताज्ञानस्य प्रतिबन्धकत्वस्य विशेषे पर्यवसानादपि गौरवम्। तथा हि— लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धिं प्रति तदभावनिश्चयत्वेन सामान्यतः प्रतिबन्धकता न सम्भवति, घटाभाववद्भूतलमिति निश्चयोत्तरमपि घटप्रकारकभूतलविशेष्यकचाक्षुषं जायताम् इतीच्छाबलाद्घटादेरुपनयसन्निकर्षेण भूतलादौ चाक्षुषोत्पत्त्या व्यभिचारापत्तेः ; किं तु तच्चाक्षुषेच्छाविरहविशिष्टतदभावनिश्चयत्वेन विशिष्यैव प्रतिबन्धकत्वं वक्तव्यम्। एवं च शाब्दबोधे पृथगेवायोग्यतानिश्चयस्य प्रतिबन्धकत्वं कल्पनीयमिति गौरवम्। अपि च बाधनिश्चयस्येव तदभावव्याप्यतदभावावच्छेदकधर्मदर्शनयोः प्रतिबन्धकत्वकल्पनेऽतिगौरवम्। एवं शाब्दसामग्रीकाले योग्यताज्ञानाभावविशिष्टात्ममानसवारणायात्र सामग्र्याः प्रतिबन्धकत्वं कल्पनीयमिति गौरवम्। योग्यताज्ञानहेतुत्वे तु शाब्दसामग्रीकाले विषयाभावादेव न मानसमिति उक्तप्रतिबन्धकत्वाकल्पनेन लाघवाद्योग्यताज्ञानहेतुतासिद्धिरिति। अत्र ब्रूमः। नायोग्यताज्ञानस्य प्रतिबन्धकत्वे त्रिविधाप्रामाण्यज्ञानोत्तेजकत्वादिप्रयुक्तगौरवप्रसक्तिः, स्वप्रतियोगिकाभाववद्विशेष्यकत्वस्वप्रकारकत्वोभयसम्बन्धेन प्रकारविशिष्टज्ञानत्वस्यैवाप्रामाण्यरूपतया तादृशाप्रामाण्यज्ञानत्वस्य उक्ताप्रामाण्यज्ञानेष्वनुगततया तदवच्छिन्नाभावस्यैकस्यैव निवेशेन लाघवानपायात्। यदपि यद्विषयकमनुमित्यादिकमित्यादिना योग्यताज्ञानस्य हेतुत्वं साधितं, तदपि न। वाक्यार्थज्ञानं विना वाक्यप्रयोगासम्भवेन वाक्यप्रयोगमूलभूतं ज्ञानं प्रत्यक्षादिरूपमेव वाच्यम् ; तस्यापि शाब्दत्वेऽनवस्थाप्रसङ्गात्। ततश्च तादृशविषयविशेषस्यैवाप्रसिद्धत्वात् यद्विशेषयोरिति नियमस्याप्रयोजकत्वाच्च न योग्यताज्ञानहेतुतासिद्धिः। यच्चोक्तम् इच्छाया उत्तेजकत्वानुरोधेन पृथक्प्रतिबन्ध्यप्रतिबन्धकभावकल्पनेन गौरवमिति, तदपि न, इच्छायाः स्वातन्त्र्येण कारणत्वाङ्गीकारेणोत्तेजकत्वाकल्पनेन गौरवानवकाशात्। यदपि शाब्दसामग्रीकाले

**बोधोपपत्तेः पश्चाच्च योग्यतागवेषणायामारुण्यस्य पार्ष्ठिकद्रव्यसम्बन्धबोधोपपत्तेर्न ततो विच्छेदाशङ्का। अत एव प्रथमतः सोमक्रयारुण्यादिसकलकारकविशिष्टभावनाविधानोत्तरं क्रयस्य सोमसम्बन्धवेलायामारुण्यादित्रिकस्य मत्वर्थलक्षणया**

---

योग्यताज्ञानाभावविशिष्टात्ममानसवारणाय शाब्दसामग्र्याः प्रतिबन्धकत्वमित्यादि, तदपि चिन्त्यम्, बाधाभावकारणतायाः सर्वत्र क्लृप्ततया तयैव शाब्दबोधोपपत्त्या योग्यताज्ञानकारणत्वाकल्पनेन लाघवात्। क्वचिच्छाब्दसामग्र्याः प्रतिबन्धकत्वकल्पनगौरवस्य फलमुखत्वेनादोषत्वादिति। किं च योग्यताज्ञानस्य हेतुताया असम्भवदुक्तिकत्वादप्ययोग्यताज्ञानस्य प्रतिबन्धकत्वं सिध्यति। योग्यताज्ञानं हि शाब्दबोधसमानाकारम्, तच्च श्रोतृनिष्ठमेव वक्तव्यम्, तस्यैव शाब्दबोधोत्पत्तेः। ततश्च तस्य पूर्वं सत्त्वे सर्वेषां वाक्यानामनुवादकत्वापत्त्या अनधिगतार्थगन्तृत्वं कस्यापि वेदवाक्यस्य न सिध्येत्। अतो न योग्यताज्ञानं शाब्दबोधहेतुरिति कृतं विस्तरेण। नन्वारुण्यस्यामूर्तत्वेन कारकत्वं न सम्भवतीत्युक्तमत आह—**पश्चाच्चेति** ॥ प्रथमतः करणत्वेनान्वयोत्तरमित्यर्थः ॥ **योग्यतागवेषणायामिति** ॥ किंद्वारा करणत्वमिति द्वारविशेषापेक्षायामित्यर्थः ॥ **पार्ष्ठिकेति** ॥ प्राथमिकबोधे सर्वेषां कारकाणां भावनान्वये सति पश्चात् तत्तत्पदार्थानां योग्यतानुसारेण परस्परान्वयवेळायाम् एकहायन्याः परिच्छेदकाकाङ्क्षायाम् आरुण्यस्य परिच्छेद्याकाङ्क्षायाम् एकहायनीपरिच्छेदद्वारा करणत्वोपपत्तेः स्ववाक्य एवारुण्यस्य निवेशोपपत्तेः न वाक्यं भित्त्वा प्रकरणे निवेश इत्यर्थः। तत्र बोधक्रममाह—**अत एवेति** ॥ **सोमक्रयेति** ॥ भावनाया भाव्यापेक्षायां द्वितीयाश्रुत्या सोमस्य भाव्यत्वेनान्वयः। करणाकाङ्क्षायां समानपदश्रुत्या भावार्थाधिकरणन्यायेन धात्वर्थस्य क्रयस्य करणत्वेनान्वयः। एकहायन्याश्च स्वजन्यक्रयकरणत्वसम्बन्धेन भावनायामन्वयः। पिङ्गाक्ष्या अपि तेनैव सम्बन्धेनान्वयः। आरुण्यस्य स्वपरिच्छेद्यद्रव्यजन्यक्रयकरणत्वसम्बन्धेनान्वय इति सोमभाव्यका क्रयकरणिका एकहायनीकरणिका पिङ्गाक्षीकरणिका आरुण्यकरणिका भावनेति प्राथमिको बोधः। द्वितीयबोधमाह—**क्रयस्य सोमसम्बन्धवेलायामिति** ॥ कारकाणां क्रिययैवान्वयनियमेन प्रथमतो भावनायां पूर्वोक्तसम्बन्धैः स्वस्वकरणत्वद्वारा भावनान्वये जाते साध्यस्य सोमस्य साधनाकाङ्क्षायां क्रयस्य धात्वर्थस्य करणत्वेनान्वितस्यापि धात्वर्थकरणत्वस्य भावनाभाव्यनिर्वर्तकत्वरूपत्वेन क्रयेण सोमं भावयेदिति क्रयस्य सोमसम्बन्धोऽवगम्यत इत्यर्थः। तत्रारुण्यादिपदानामन्वयक्रममाह—**आरुण्यादित्रिकस्येति** ॥ सोमस्य क्रयसाध्यत्वेनान्वयकाले आरुण्यादित्रयविशिष्टक्रयसाध्यः सोम इति बुध्यत इत्यर्थः। ततश्चारुण्यैक-

**क्रयसम्बन्धावगतौ पश्चाद्विशेषणविधित्रयकल्पनया तेषां क्रयाङ्गत्वावगमे जाते पश्चात्परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्ठिकोऽरुणैकहायन्योः परस्परं विशेषण-विशेष्यभावमात्रेण सम्बन्धो द्रव्यविशेषसम्बन्धश्चेति द्रष्टव्यम् । अतश्च युक्तः क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य ; न तु वासःप्रभृतिषु**

---

हायनीपिङ्गाक्षीविशिष्टक्रयसाध्यः सोम इति द्वितीयबोध इति यावत् । तृतीयबोधमाह—**पश्चादिति** ॥ क्रयस्य साधनाकाङ्क्षायां पिङ्गाक्ष्येकहायन्यो-रभेदेनान्वयात् पिङ्गाक्ष्येकहायनीसाधनकः आरुण्यकरणकश्च क्रय इति तृतीयबोध इत्यर्थः । तत्र पिङ्गाक्ष्येकहायन्योरुभयोरपि तृतीयाभेदेन पृथगेव साधनत्वेनान्वयादेकत्र द्वयमिति न्यायेन क्रये अन्वयात् पिङ्गाक्षीकरणक एकहायनीकरणक आरुण्यकरणकश्च क्रय इत्यन्वयबोधो भवति इत्यन्ये । तत्र प्रकारभेदमाह—द्वितीयबोधे विशिष्टविध्यङ्गीकारेण एकेन विधिना त्रयाणां क्रयोद्देशेन विधानासंभवात् एकहायनीसाध्य इत्येको बोधः, पिङ्गाक्षीसाध्यः क्रयः इत्येकः, अरुणासाध्यः क्रय इत्येक इति बोधत्रयमित्यर्थः । आरुण्य-स्यान्वयार्थं चतुर्थबोधमाह—**पश्चादिति** ॥ पिङ्गाक्षिपरिच्छेदः अवयवकृतः, स्वावयव-जन्यत्वपरिच्छिन्नं द्रव्यम्, एकहायनपरिच्छेदः कालिकसम्बन्धेन एकहायनपरिछिन्नं द्रव्यम् ; आरुण्येन समवायेन परिच्छिन्नं द्रव्यमिति परिच्छेदभेदात् स्वपरिच्छेद्यद्रव्यापेक्षा आरुण्यस्यास्ति, द्रव्यस्यापि स्वपरिच्छेदकद्रव्यापेक्षा अस्तीति परस्पराकाङ्क्षया या अरुणा सा एकहायनी या एकहायनी सा अरुणेति चतुर्थो बोधः । तथा चारुण्यस्य स्वपरिच्छेद्यद्रव्यद्वारा करणत्वोपपत्तेः न ततो विच्छिद्य प्रकरणे निवेश इति भावः । अत्र **द्रव्यविशेषसम्बन्धश्चे**त्यनेन समानविभक्तिकपदनिर्दिष्टानामभेदान्वय इति सूचितः । अत्रायं विशेषः । तृतीयबोधवेळायां विशेषणत्रयविधिकल्पनेन पिङ्गाक्षीकरणक एक-हायनीकरणकश्च अरुणाकरणकश्च क्रय इति बोधत्रयमेवोत्पद्यते, न तु विधित्रयेण क्रयविशेष्यकः अनेकहेतुजन्यत्वप्रकारक एक एव शाब्दबोधो भवितुमर्हति, विधि-त्रयेणैकशाब्दबोधजननासम्भवात् । एकबोधाङ्गीकारे प्राप्तक्रयानुवादेन द्रव्यत्रयविधाने वाक्यभेदस्यावर्जनीयत्वाच्च । तस्मात् बोधत्रयमेव युक्तम् । तथा चतुर्थबोधेऽपि आरुण्यवदेकहायनपिङ्गाक्ष्यादेरपि स्वस्वाश्रयद्वारा परिच्छेद्यपरिच्छेदकभावेनान्वयो जायत इति वक्तव्यम् । अन्यथा तयोरपूर्वसाधनत्वप्रतीत्यनापत्तेः । उक्तरीत्या अन्वये तु प्रकृता-पूर्वसाधनीभूतसोमप्राप्तिहेतुद्रव्योद्देशेन विधानादपूर्वसाधनत्वमुपपद्यते । एतदनन्तरं च तत्तद्गुणाश्रयद्रव्याणां समानविभक्तिकपदप्रतिपाद्यत्वकृतोऽभेदान्वयबोधः पञ्चम इति द्रष्टव्यम् । ननूक्तरीत्या अपूर्वसाधनत्वमुद्देश्यतावच्छेदकीकृत्य आरुण्यस्य विधाने

क्रयद्रव्यान्तरेषु । न च यवेष्विव सोमप्राप्तिसाधनक्रयद्रव्यत्वाविशेषात्प्राप्त्याशङ्का । तेषां क्रयान्तरद्रव्यत्वात् । भिन्ना हि गुणादत्र क्रयाः । न च विक्रेत्रानतिवशादुत्पत्तिशिष्टद्रव्यावरोधेऽपि द्रव्यान्तरनिवेशसम्भवः । एकद्रव्यानतस्यैव विक्रेतुः सम्पादनीयत्वात् । अन्यथा दक्षिणानामपि प्रसङ्गबाधाद्यनापत्तेः । न च

---

वासःप्रभृतीनां द्रव्याणां अपि निरुक्तोददेश्यतावच्छेदकाक्रान्तत्वात् तत्रापि निवेशापत्तिरित्याशङ्कते---**न चेति । यवेष्विवेति** ॥ अत्र व्रीहित्वाविवक्षावत् प्रकृतेऽप्येकहायनात्वादीनामविवक्षितत्वादित्यर्थः ॥ **क्रयान्तरद्रव्यत्वादिति** ॥ तथा चापूर्वसाधनीभूतसोमप्राप्तिसाधनीभूतविजातीयक्रयसाधनत्वस्य उद्देश्यतावच्छेदकतया तस्य क्रयान्तरद्रव्येष्वभावान्न वासःप्रभृतिषु निवेश इत्यर्थः । नन्वेकसोमप्राप्तिफलकेषु क्रयेषु नानावैजात्याङ्गीकारे प्रमाणाभाव इत्यत आह—**भिन्ना हीति** ॥ ननु भिन्नत्वे किं प्रमाणमित्यत आह—**गुणादिति** ॥ 'हिरण्येन क्रीणाति' 'वाससा क्रीणाति' इति बहूनि वाक्यानि श्रूयन्ते । तत्र सर्वत्र क्रयभेदोऽवश्यं स्वीकार्यः । न चैकेन क्रयविधिरन्यत्र गुणविधिरिति वक्तुं शक्यम्, सर्वत्र गुणश्रवणेन उत्पत्तिशिष्टगुणावरुद्धे गुणान्तरनिवेशायोगात् । तेन सर्ववाक्येष्वपि तत्तद्गुणविशिष्टक्रयविधिरेव स्वीकार्यः । ततश्च विहितविधानायोगात् गुणात् क्रयभेदोऽङ्गीकार्य इत्यर्थः । ननु तथापि 'तस्मात् सोमं क्रीणाति' इति गुणरहितवाक्यश्रवणात् तद्वाक्यविहितक्रयानुवादेन सर्वत्र गुणविधिसंभवात् क्रयैकत्वमस्त्विति [चेन्न ; अरुणा] वाक्येऽनेकगुणश्रवणेन प्राप्तक्रयानुवादेनानेकगुणविधाने वाक्यभेदापत्त्या तत्रानेकगुणविशिष्टक्रयान्तरविधानावश्यकत्वेन वैजात्यसिद्धेर्निष्प्रत्यूहत्वात् । ननु विक्रेतुरेकद्रव्यानतत्वाभावे द्रव्यान्तरदानेनापि क्रयस्यावश्यं कर्तव्यतया अन्यथानुपपत्तिरेव गुणन्यायबाधेन द्रव्यान्तरनिवेशे प्रमाणमित्येक एव क्रय इति वक्तुं शक्यते इति शङ्कते—**न चेति** ॥ परिहरति—**एकेति** ॥ एकद्रव्यानतपुरुषादेव क्रयसम्भवेन क्रयशास्त्रस्य अर्थवत्त्वसंभवेनार्थापत्त्यभावात् न गुणन्यायापवाद इत्यर्थः । एकद्रव्यानतपुरुषसम्पादनाभावे दोषमाह—**अन्यथेति** ॥ तादृशपुरुषात् क्रयाकरणे इत्यर्थः ॥ **प्रसङ्गेति** ॥ ज्योतिष्टोमे हि 'दक्षिणा सोमस्य' इति वचनेन सोमयागाङ्गतया दक्षिणा आम्नाता, तयैवोपकारसिद्धेरग्नीषोमीयाद्यङ्गानां पृथक् दक्षिणा न देयेति द्वादशे वक्ष्यते । अन्यत उपकारलाभप्रयुक्तस्वाङ्गाननुष्ठानस्यैव प्रसङ्गशब्दार्थत्वात् । तथा ज्योतिर्विकारेषु पौण्डरीकादिषु 'अयुतं दक्षिणा' इत्यादिभिः दक्षिणा विधीयन्ते, तत्र वैकृतदक्षिणाभिः प्राकृतदक्षिणानां बाध इति दशमे वक्ष्यते ॥ तत्रापि ऋत्विगानत्यभावे अग्नीषोमीयादिदक्षिणाया

'दशभिः क्रीणाति' इति वचनमेव निवेशतात्पर्यग्राहकम् ; तस्य क्रयसमुच्चयपरत्वेनाप्युपपत्तौ गुणन्यायसिद्धभेदापवादकत्वायोगात् । न च क्रयभेदेऽपि एकसोमप्राप्त्यर्थत्वाविशेषात् क्रयान्तरद्रव्येऽपि आरुण्यस्य निवेशाशङ्का । आरुण्यविशिष्टविजातीयक्रयविध्यन्यथानुपपत्तिकल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वा अनतिप्रसक्तस्यैव कल्पनीयतया विजातीयानतिविशेषस्य[1] विजातीयक्रयत्वस्यैव वा विवक्षितत्वेनातिप्रसङ्गानुपपत्तेः । यथा चैवं सति त्रिवत्से सर्वक्रयद्रव्यस्थानापन्ने निवेशस्तथा कौस्तुभे द्रष्टव्यम् ॥ ६ ॥

---

ज्योतिष्टोमे पौण्डरीकादौ प्राकृतदक्षिणायाश्च देयत्वापत्त्या तदधिकरणविरोधः स्यादित्यर्थः । ननु 'दशभिः क्रीणाति' इति वचनेन दशद्रव्याणां समुच्चयविधानेन समुच्चयस्य चैकक्रयनिरूप्यत्वात् द्रव्याणामेकस्मिन्नेव क्रये निवेशः कार्य इत्याशंक्य निराकरोति—**न चेति** ॥ **तात्पर्यग्राहकमिति** ॥ द्वादशे हि 'क्रयणेषु तु विकल्पः स्यात्' इत्यधिकरणे क्रयणशब्दस्य क्रयसाधन[पर]तया क्रयसाधनद्रव्याणां विकल्पसमुच्चयचिन्तनात् द्रव्यसमुच्चयानङ्गीकारे तद्विरोधापत्त्या एकस्मिन् सर्वनिवेशे तदधिकरणविषयीभूतं 'दशभिः क्रीणाति' इति वचनमेव तात्पर्यग्राहकमित्यर्थः ॥ **तस्येति** ॥ अधिकरण[विषयवाक्य]स्येत्यर्थः । तदधिकरणे क्रयाणां बहुत्वात् तेषामेव विकल्पसमुच्चयचिन्ता, न तु द्रव्याणाम्, सौत्रक्रयणशब्दस्य क्रयपरत्वात्, तस्मात् क्रयभेदः सिद्ध इत्यर्थः । नन्वेवमपि क्रयाणामेकसोमप्राप्त्यर्थ[त्वात्]क्रयसाधनत्वस्योद्देश्यतावच्छेदकतया तस्य च क्रयान्तरद्रव्यसाधारण्यात् तत्राप्यारुण्यं परिच्छेदकतया प्रवर्तेतेति शङ्कां निरस्यति—**न चेति** ॥ आरुण्यस्य पूर्वोक्तरीत्या विजातीयक्रयसाधनत्वस्य उद्देश्यतया न दोष इत्यर्थः ॥ **पार्ष्ठिकान्वयस्य वेति** ॥ पार्ष्ठिकान्वये स्ववाक्योपस्थितैकहायनीसम्बन्धेनोपपत्त्या द्रव्यान्तराकाङ्क्षाभावादित्यर्थः ॥ **विजातीयानतिविशेषस्येति** ॥ एकहायनीजन्यानतिविशेषस्येत्यर्थः । आनतौ वैजात्यमङ्गीकृत्येत्यर्थः । क्रयवैजात्यं पूर्वमेवोक्तम् । नन्वेवं 'त्रिवत्सः साण्डः सोमक्रयणः' इत्यादौ क्रयसाधनीभूते साण्डे आरुण्यनिवेशो न स्यात्, तत्र द्वारलोपात्, स्त्रीत्वस्योद्देश्यघटकस्याभावात्, पुंस्त्वस्य विवक्षितत्वेन स्त्रीत्वस्य बाधितत्वात् । न च द्वारलोपेऽपि क्रयसाधनत्वमात्रेण त्रिवत्से आरुण्यप्रवृत्तिरस्त्विति वाच्यम् ; कृष्णलेष्वपूर्वसाधनत्वमात्रेणावघातप्रवृत्त्यापत्तेरित्यत आह—**यथा चेति** ॥ **कौस्तुभ इति** ॥

---

१. विजातीयक्रयजन्यानतिविशेषस्य इति पाठान्तरम् ।

**(७)---एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४ ॥ चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥**

ज्योतिष्टोमादिषु 'ग्रहं सम्मार्ष्टि' इति श्रुतम् । तत्र सम्मार्गादि प्रति ग्रहत्ववदेकत्वस्यापि उद्देश्यतावच्छेदकता, उत तस्यैव सा, एकत्वं तु कथमपि विध्यन्वयासम्भवादविवक्षितमिति चिन्तायाम्, पश्वेकत्ववत् ग्रहैकत्वस्याप्यविवक्षाकारणाभावादुद्देश्यतावच्छेदकता । अतश्चैकस्यैव ग्रहस्य सम्मार्ग इति प्राप्ते—

---

विजातीयक्रयसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वेन त्रिवत्सस्यापि उद्देश्यतावच्छेदकाक्रान्तत्वेन तत्राप्यारुण्यप्रवृत्तेः सम्भवादिति भावः ॥

सूत्रार्थस्तु—**अर्थैकत्वे**—प्रयोजनैकत्वे । **द्रव्यगुणयोः**—अरुणैकहायन्योः । **ऐककर्म्यात्**—एकक्रियान्वयित्वात् । **नियमः स्यात्**—परिच्छेद्यपरिच्छेदकभावेन व्यवस्था स्यादिति ॥ ६ ॥

**एकत्वयुक्तमेकस्य श्रुतिसंयोगात्** ॥ यथासंयोगं शेषत्वे सिद्ध एव तद्विशेषचिन्ता युज्यत इत्यनन्तरसङ्गतिः ॥ **संमार्गादीति** ॥ 'ग्रहं संमार्ष्टि' इत्यत्र 'ग्रहैर्जुहोति' इति वाक्यप्राप्तग्रहोद्देशेन संमार्गो विधीयते । तत्र ग्रहप्रातिपदिकार्थग्रहत्वस्यामूर्तत्वेन संमार्गासंभवेन निरूढलक्षणया ग्रहत्वस्योद्देश्यतावच्छेदकत्वमङ्गीकृत्य संमार्गो विधीयत इति स्थितिः । तत्र च ग्रहत्ववत् वचनार्थैकत्वस्याप्युद्देश्यतावच्छेदकतया विवक्षा न वेति संशय इत्यर्थः ॥ **तस्यैव**—ग्रहत्वस्यैव । **सा**—उद्देश्यतावच्छेदकता । अत्र एकत्वं विवक्षितम्, उताविवक्षितमित्येतावानेव संशयः । अधिकं तत्तत्कोटिहेतुत्वेनोक्तमिति द्रष्टव्यम् ॥ **पश्वेकत्ववदिति** ॥ यथा 'पशुना यजेत' इत्यादौ पशुपदोत्तरैकवचनार्थैकत्वस्य समानाभिधानश्रुत्या करणत्वान्वितस्य कारकद्वारा भावनान्वयित्वात् विवक्षा, तथा प्रकृतेऽपि ग्रहपदोत्तरैकवचनार्थैकत्वस्यापि समानाभिधानश्रुत्या कर्मत्वान्वितस्य कारकद्वारा भावनान्वयसम्भवात् विवक्षेत्यर्थः । तत्र हेतुमाह—**अविवक्षाकारणाभावादिति** ॥ **उद्देश्यतेति** ॥ यथा ग्रहोद्देशेन संमार्गविधानात् ग्रहत्वमुद्देश्यतावच्छेदकं तथैकोद्देशेन संमार्गविधानात् एकत्वमप्युद्देश्यतावच्छेदकमित्यर्थः ॥

यत्र हि समासादौ परस्परान्वयो व्युत्पन्नः यथा—'अश्वाभिधानी' 'यत्किञ्चित्सोमलिप्तम्' इत्यादौ, तत्र भवत्येव विशिष्टोद्देशः। यत्र तु न सः, तत्र परस्परान्वयेन विशिष्टोद्देशे अव्युत्पन्नान्वयनिबन्धनवाक्यभेदापत्तेर्न विशिष्टोद्देशः। यथा 'यस्योभयं हविरार्तिमार्छेत्' 'ग्रहम्' इति च; द्वयोः सुबन्तयोर्भावनान्वयस्यैव व्युत्पन्नत्वेन परस्परान्वयस्याव्युत्पन्नत्वात्। अन्यथा 'पञ्चदशान्याज्यानि' इत्यत्रापि विशिष्टविधानापत्तिः। एकवचनाद्युपात्तसङ्ख्यादेस्तु समानाभिधानश्रुत्या करणत्वकर्मत्वादिरूपे प्रत्ययार्थ एवान्वितस्य पदश्रुत्या

---

**यत्र हीति** ॥ अश्वाभिधानीमित्यादिसमासस्थले विधिव्यापारं विनैव एकार्थीभावलक्षणसामर्थ्यानुरोधेन अश्वाभिधान्योः परस्परान्वयस्यावश्यकतया तत्राश्वविशिष्टाभिधान्युद्देशेनादानविधिः संभवतीत्यर्थः ॥ **यत्र तु न स इति** ॥ यत्र तु परस्परान्वयो न व्युत्पन्न इत्यर्थः। 'यस्योभयं हविः' इत्यादौ भिन्नविभक्तिकपदस्थले पदद्वयार्थयोरपि कारकत्वेन भावनायामेवान्वयेन एकपदार्थविशिष्टापरपदार्थप्रतीतेः न विशिष्टोद्देशसंभवः। ततश्च पदार्थद्वयवैशिष्ट्यस्यापि विध्यधीनत्वात् भवति विध्यावृत्तिलक्षणो वाक्यभेद इत्यर्थः। ननु द्वयोः सुबन्तयोः परस्परान्वयोऽङ्गीक्रियते, समानविभक्तिकपदोपस्थाप्यत्वात् नीलो घट इत्यादौ तथान्वयदर्शनादित्यत आह—**अन्यथेति** ॥ क्रियान्वयं विना परस्परान्वयाङ्गीकारे इत्यर्थः। 'पञ्चदशान्याज्यानि' इत्यत्रापि समानविभक्तिकपदनिर्देशात् परस्परान्वयापत्त्या चित्राज्याधिकरणविरोधापत्तिरित्यर्थः। नीलो घट इत्यादौ क्रियासमभिव्याहाराभावात् परस्परान्वयेऽपि यस्योभयमित्यदौ क्रियासमभिव्याहारेण परस्परान्वयासम्भवादिति भावः। ननु भिन्नपदस्थले तथा नियमेऽपि समानपदस्थले शब्दान्तराधिकरणन्यायेन प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः 'ग्रहं संमार्ष्टि' इत्यादौ वचनार्थैकत्वस्य प्रातिपदिकार्थग्रह एवान्वयो युक्तः, अन्यथा 'परिपूर्णं पदं पदान्तरेणान्वेति' इति व्युत्पत्तिविरोधेन भावार्थाधिकरणविरोधापत्तेरित्यत आह—**एकवचनाद्युपात्तेति** ॥ **समानाभिधानेति** ॥ प्रकृत्यर्थापेक्षयापि समानाभिधानश्रुत्या प्रत्यासन्नतरविभक्त्यर्थकारकत्वस्यान्तरङ्गत्वेन तत्रैवान्वयो युक्तः, अन्यथा पश्वेकत्वाधिकरणविरोधापत्तेरित्यर्थः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिस्तु समानाभिधानश्रुत्या अन्वयायोग्यार्थविषयेति भावः। नन्वेवं 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ एकपदो-

---

१. स न व्युत्पन्न इति पाठान्तरम्।

प्रातिपदिकार्थान्वयो नैव व्युत्पन्नः । एवं 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ एकपदात् यत्रानेकार्थप्रतीत्युत्तरं लक्षणया प्रातिपदिकादेव साहित्यप्रतीतिस्तत्रापि साहित्यस्य प्रत्ययार्थ एवान्वयः, न प्रातिपदिकार्थ इति कौस्तुभे स्पष्टम् । अतश्च न तादृशस्थले विशिष्टोद्देशसम्भवः ॥

अथ विशिष्टोद्देशासम्भवेऽपि उभयोरपि प्रातिपदिकवचनार्थयोः प्रत्ययार्थे कर्मत्वादावन्वयेन तद्द्वारा भावनान्वयोपपत्तेः सम्मार्गस्य पार्ष्ठिकोद्देश्यद्वयसम्बन्धे बाधकाभावः । न चोद्देश्यानेकत्वे वाक्यभेदः ; भावनायामनेककारकसम्बन्धवदनेकोद्देश्यसम्बन्धे बाधकाभावात् । न च तस्यामेकोद्देश्यतावच्छेदककत्वनियमः ।

---

पादानप्रयुक्तसाहित्यस्य प्रकृत्यर्थविशेषणत्वेन साहित्यविशिष्टफलानामुद्देश्यत्वात् विशिष्टोद्देशप्रयुक्तवाक्यभेदः स्यादित्यत आह—**एवं सर्वेभ्य इति** ॥ तत्रापि सर्वपदेन पुत्रत्वपशुत्वादिना सर्वपदप्रतीत्युत्तरम् एकपदोपादानकृतसाहित्यलक्षणायामपि प्रधानान्वयस्याभ्यर्हितत्वेन कारकान्वयेन भावनान्वयस्यैव व्युत्पन्नत्वेन प्रकृत्यर्थान्वयाभावात् न विशिष्टोद्देश इति भावः । न च विशिष्टोद्देशाभावेऽपि सर्वशब्देन पुत्रत्वपशुत्वाद्यवच्छिन्नस्यैवो[ द्देशाद्दु] द्देश्यानेकत्वप्रयुक्तवाक्यभेदो भवत्येवेति वाच्यम् ; सर्वपदेन प्रवृत्तिप्रयोजकासमान[कामना ?]विषयस्य लक्षितत्वेन तत्त्वस्यैवैकस्योद्देश्यतावच्छेदकत्वात् । न च तथापि विषयभेदेन विषयताया भिन्नत्वात् उक्तविषयतानामुद्देश्यतावच्छेदकत्वेऽप्युक्तदोषस्तदवस्थ इति वाच्यम् ; ज्ञानभेदेनैव विषयताभेदात् प्रकृते सर्वपदजन्यज्ञानस्यैकत्वेन उद्देश्यतावच्छेदकभेदाभावात् । विषयभेदेन विषयताभेदेऽपि प्रवृत्तिप्रयोजककामनाविषयतात्वेनोद्देश्यतावच्छेदकत्वेनावच्छेदकतावच्छेदकैक्येनावच्छेदकैक्यसंभवेनोद्देश्यतैक्यसंभवात्, विविदिषापुत्राद्यनेकोद्देशसत्त्वेऽपि विषयतैक्यस्योक्तरूपेणैवोपपादयितुं शक्यत्वात् । एतेन पुत्रत्वादीनां कौस्तुभे उद्देश्यतावच्छेदकत्वोक्तिः परास्ता । पापक्षयस्य पुत्रादेश्चोद्देश्यत्वकृतदोषश्चतुर्थे परिहरिष्यते । नन्वेकत्वस्य प्रकृत्यर्थान्वयाभावेन विशिष्टोद्देशाभावेऽपि कर्मत्वान्वयद्वारा भावनान्वयोत्तरं पार्ष्ठिकबोधे संमार्गस्योद्देश्यद्वयसंबन्धोऽस्त्विति शङ्कते—**अथेति** ॥ उद्देश्यानेकत्वकृतवाक्यभेदं परिहरति—**भावनायामिति** ॥ यथा अनेककारकान्वयेऽपि भावनायां न वाक्यभेदः, एवमनेकोद्देश्यान्वयेऽपि न वाक्यभेद इति वक्तुं शक्यत्वादित्यर्थः । ननु भावनाया एकोद्देश्यतावच्छेदककत्वनियमात् नैकभावनाया ग्रहैकत्वग्रहत्वरूपानेकोद्देश्यतावच्छेदकसंभव इति शङ्कते—**न चेति** ॥ **सर्वेभ्य इति** ॥ तत्र पुत्रत्वपशुत्वाद्यनेकोद्देश्यतावच्छेदक-

'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ पुत्रत्वपशुत्वादेरनेकस्यापि तस्य दर्शनात् । विधेस्तु अनेकोद्देश्यकत्वे नैव काचित्क्षतिः । न चैकत्वावच्छिन्नस्य विनियोगाभावादसंस्कार्यता । पशुत्वेन विनियुक्तस्यापि लोहितादेः संस्कार्यत्ववत् बहुत्वावच्छेदेन विनियुक्तस्यापि ग्रहस्यैकत्वावच्छेदेन संस्कार्यत्वोपपत्तेः । न चैवमपि द्वयोरुद्देश्ययोरेकप्रधानक्रियया वशीकाराभावात् कथं परस्परनियम इति वाच्यम् । वैकृताङ्गवद्गुणानुरोधेनापि पदश्रुत्यैव वा प्रधानयोरप्याकाङ्क्षां प्रकल्प्य तदुपपत्तेः । इष्यते च यत्र भिन्नवाक्यस्थलेऽपि 'आग्नेयं चतुर्धा करोति पुरोडाशं चतुर्धा करोति' इत्यादौ गुणानुरोधेन प्रधानयोरभेदान्वयस्तत्रैकवाक्यस्थले सुतरां शाब्दबोधे मुख्यविशेष्यभूतया क्रियया वशीकारः । एकत्वाविवक्षापेक्षया च वशीकारकल्पनायां न कोऽपि दोषः । अत एकत्वादेरपि स्वातन्त्र्येणोद्देश्य-

---

दर्शनेन निरुक्तनियमो नास्तीत्यर्थः । ननु 'व्रीहिभिर्यजेत' इत्यनेन व्रीहित्वेन विनियुक्तस्य तेनैव रूपेण 'व्रीहीन् प्रोक्षति' इत्यत्र संस्कार्यत्वदर्शनेन प्रकृते 'ग्रहैर्जुहोति' इति वाक्येन बहुत्वेन विनियुक्तत्वात् एकत्वरूपेण संस्कार्यत्वं न संभवतीति शङ्कां परिहरति—**पशुत्वेनेति** ॥ यथा 'पशुना यजेत' इति वाक्येन पशुत्वेन विनियुक्तस्यापि लोहितत्वेन लोहितं निरसनसंस्कार्यत्वेन दृष्टं तद्वदुपपत्तेरित्यर्थः । नन्वरुणावाक्ये आरुण्यैकहायनीविशिष्टविधानेन तयोः क्रियां प्रति गुणभूतत्वात् परस्परनियमसंभवेऽपि प्रकृते क्रियां प्रत्युद्देश्ययोः ग्रहत्वविशिष्टै-कत्वविशिष्टयोः क्रियां प्रति प्राधान्येन क्रियया वशीकरणासंभवात् 'प्रतिप्रधानं गुणावृत्ति' न्यायेन वाक्यसमाप्तेरावश्यकतया वाक्यभेदो दुरुद्धर इति शङ्कते—**न चेति** ॥ **वैकृताङ्गवदिति** ॥ यथा आमनहोमादीनां वैकृताङ्गानां विकृतिप्रधाना-पेक्षया गुणत्वेऽपि प्रधानानामाकांक्षां परिकल्प्य विकृतिसंबन्धः, तथा प्रकृतेऽप्युद्देश्य-वशीकारोपपत्तेरित्यर्थः । अत्र विशेषोऽप्यस्तीत्याह—**पदश्रुत्येति** ॥ ग्रहत्वैकत्वयोरेकपदो-पस्थित्येत्यर्थः । ननु वैकृताङ्गानां प्रधानाकांक्षाकल्पकत्वेऽप्यङ्गानां प्रधानसंकोचकत्वं कुत्रापि न दृष्टमित्यत आह—**इष्यते चेति** ॥ चतुर्धाधिकरणे 'पुरोडाशं चतुर्धा करोति' इति सर्वपुरोडाशचतुर्धाकरणबोधकवाक्यस्य 'आग्नेयं चतुर्धा करोति' इति वाक्यविहिताग्नेयचतुर्धाकरणविषयतया संकोचप्रतिपादनेन भिन्नवाक्यस्थले चतुर्धाकरण-रूपाङ्गानुसारेण प्रधानीभूतपुरोडाशसंकोचाङ्गीकारेण एकवाक्यस्थले तद्वशीकरणस्य कैमुतिकन्यायसिद्धत्वादित्यर्थः । भावनाया वशीकारशक्त्युपपादनाय—**मुख्यविशेष्य-भूतयेति** ॥ ननु भावनाया वशीकारसामर्थ्यं कुत्रापि न दृष्टमित्यत आह—**एकत्वेति** ॥

तावच्छेदकत्वोपपत्तिरिति चेत्—भावनायाः करोतिपर्यायत्वेनैककर्मकत्वावसाया-दुद्देश्यानेकत्वे तद्भङ्गनिबन्धनवाक्यभेदापत्तेः । एककर्मकत्वं च एकबोध-विषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वम् । अत्र च 'सर्वेभ्यो दर्शपूर्ण-मासौ' इत्यादौ सत्यपि पुत्रत्वपशुत्वादीनां कर्मत्वपर्याप्त्यधिकरणतावच्छेदक-धर्माणां भेदे एकेनैव सर्वपदेन युगपद्बोधान्नैककर्मत्वहानिरिति आद्यं विषये-त्यन्तम् । पर्याप्तिपदकृत्यं तु कौस्तुभे द्रष्टव्यम् । अतश्च फलद्वये संस्कार्यद्वये

---

एकवचनोपात्तैकत्वाविवक्षापेक्षया वशीकारकल्पनाया एव ज्यायस्त्वादित्यर्थः । तथाच अन्यत्र तथा दृष्टत्वाभावेऽपि प्रकृते तथा कल्प्यत इत्यर्थः । शङ्कितार्थमुप-संहरति—अत इति ॥ करोतिपर्यायत्वेनेति ॥ करोत्यर्थत्वादित्यर्थः । यद्वा भावनाया इत्यस्याख्यातस्येत्यर्थः । यथाश्रुते भावनायाः शब्दार्थत्वेन करोतिधातुपर्यायत्वा-सङ्गतेः ॥ उद्देश्येति ॥ करोतेरेककर्मत्वेन तत्पर्यायाख्यातस्याप्येककर्मकत्वस्यावश्यकत्वेन अनेकोद्देश्याङ्गीकारे तद्भङ्गापत्तेः नोद्देश्यानेकत्वसंभव इत्यर्थः । ननूद्देश्यानेकत्वेऽप्येक-कर्मकत्वमस्त्येव, कर्मद्वयसत्त्वेऽपि 'शते पञ्चाशत्' इति न्यायेन एककर्मणोऽपि सत्त्वात् इत्यत एकमेव कर्म यस्येति व्युत्पत्त्या अनेककर्मशून्यत्वमेव पर्यवसानगत्यैककर्मशब्दार्थ इत्यभिप्रायेण तल्लक्षणमाह—एककर्मकत्वं चेति ॥ एकबोधेति । एकबोधविषयीभूतो यः कर्मत्वपर्याप्त्यधिकरणतावच्छेदको धर्मः तद्वत्त्वमित्यर्थः । घटं करोतीत्यादौ कर्म-त्वपर्याप्त्यधिकरणतावच्छेदकघटत्वस्य स्वावच्छिन्नकर्मतानिरूपकत्वसम्बन्धेन क्रियायां सत्त्वाल्लक्षणसमन्वयः । कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वमात्रोक्तौ गां दोग्धि पय इति द्विकर्मकस्थलेऽपि तत्सत्त्वादतिव्याप्तिः । अतः एकबोधविषयेति । तस्य चैकबोध-विषयनिरुक्तधर्मद्वयशून्यत्वमर्थः । तथा च तत्र गोत्वपयस्त्वयोः कर्मत्वपर्याप्त्यवच्छेदकत्वे तादृशधर्मद्वयशून्यत्वाभावान्नातिव्याप्तिः । एकबोधविषयेत्यस्य प्रयोजनमाह—अत्र चेत्यादि ॥ युगपदिति ॥ अत्र पूर्ववत् विषयतावच्छेदकत्वेन पुत्रत्वादीनामनुगमो द्रष्टव्यः ॥ पर्याप्तिपदकृत्यमिति ॥ 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यादौ द्वन्द्वावगतसाहित्यस्योद्देश्यतावच्छेदकत्वेन तस्यैव कर्मत्वपर्याप्त्यधिकरणतावच्छेदकत्वेन लक्षणसत्त्वार्थं पर्याप्तिपदमित्यर्थः । पर्याप्तिपदादाने कर्मत्वाधिकरणतावच्छेदकयोः यजमानत्वाध्वर्युत्वयोः भिन्नयोः सत्त्वेन उक्तद्वितीयधर्मशून्यत्वाभावात् एककर्मत्वं न स्यात् । पर्याप्तिपददाने तु द्वन्द्वावगतसाहित्यानुसारेणाखण्डोपाधिरूपकर्मत्वस्यैकत्वेन तत्पर्याप्त्यवच्छेदकस्याप्येकत्वाल्लक्षणसमन्वय इति भावः । अत्र पर्याप्त्यवच्छेदकत्वेन धर्माणां निवेशेनैवोपपत्तौ अधिकरणतानिवेशो व्यर्थ इति बोध्यम् । प्रकृते

फलसंस्कार्यद्वये वा तावद्वाक्यभेदापत्तिः स्पष्टा । निमित्तद्वयस्थलेऽपि यावज्जीवाधिकरणन्यायेन निमित्तद्वयस्य फलद्वयाक्षेपकत्वाद्वाक्यभेदापत्तिर्द्रष्टव्या । यथा च निमित्तद्वयेन नैकस्यैव फलस्याक्षेपस्तथा कौस्तुभे स्पष्टम् । अत एव निमित्तफलस्थले निमित्तसंस्कार्यस्थले वा एककर्मकत्वभङ्गाभावान्न वाक्यभेदः । न वा कालदेशाद्युद्देश्यानेकत्वे सः । यथात्र फलादिसाहित्यस्य नैकबोधविषयता तथा कौस्तुभे स्पष्टम् । अतश्च तत्साहित्यविवक्षायां वाक्यभेदो दुष्परिहर एवेत्यन्यत्र विस्तरः ॥

ननु तथापि नैकत्वादीनामविवक्षा, सम्मार्गभावनायां गुणत्वेन

---

एकत्वविवक्षायां वाक्यभेदमुपपादयति—**अतश्चेति** ॥ **फलद्वये,** फलद्वयस्योद्देश्यत्वस्थले, [**संस्कार्यद्वये**]संस्कार्यद्वयोद्देश्यत्वस्थले । एवमग्रेऽपि । फलसंस्कार्यद्वयस्थले च वाक्यभेदप्रसक्तिः ; उद्देश्यतावच्छेदकभेदादिति भावः । तथा च प्रकृते एकत्वविवक्षायां संस्कार्यद्वयसत्त्वाद्वाक्यभेदापत्त्या नैकत्वं विवक्षितुं शक्यमित्याशयः ॥ **निमित्तद्वयेति** ॥ निमित्तद्वयस्थले नैमित्तिकाकरणप्रयुक्तप्रत्यवायपरिहारोद्देशेन नैमित्तिकस्य विधानात् उद्देश्यानेकत्वकृतो वाक्यभेदो द्रष्टव्य इत्यर्थः । ननु निमित्तद्वयेनैकस्यैव प्रत्यवायपरिहारस्याक्षेपसम्भवात् नोद्देश्यानेकत्वमित्यत आह—**यथा चेति** ॥ विजातीयप्रत्यवायपरिहारस्यैवाक्षेपात् तस्यानुगमकरूपाभावेनोद्देश्यतावच्छेदकस्यावर्जनीयत्वादिति भावः ॥ **अत एवेति** ॥ **निमित्तफलस्थले** जातेष्ट्यादौ, **निमित्तसंस्कार्यस्थले** वा पुनस्संस्कारादौ, भिन्नभिन्नवाक्याभ्यामेव तत्तत्कर्मविधानात् नैकस्या भावनाया द्विकर्मकत्वमित्यर्थः ॥ **कालेति** ॥ 'पौर्णमास्यां पौर्णमास्या यजेत' 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादौ नैकस्या भावनाया द्विकर्मकत्वमिति तत्रापि न वाक्यभेद इत्यर्थः । नन्वत्र फलसाहित्यविवक्षया एकबोधविषयेत्यादिनिमित्तैककर्मकत्वभङ्गो [न] भवत्येवेत्यत आह—**यथात्रेति** ॥ तत्र साहित्यस्याविवक्षितत्वेन प्रत्येकबोधविषयत्वेनैकबोधविषयत्वाभावादित्यर्थः । उपसंहरति—**अतश्चेति** ॥ एकत्वविवक्षायामेककर्मकत्वभङ्गापत्तेर्वाक्यभेदो भवत्येवेति नैकत्वं विवक्षितमित्यर्थः । ननु पूर्वोक्तव्यवस्थानां विषयप्रदर्शनाभावान्न्यूनतेत्यत आह—**अन्यत्र विस्तर इति** ॥ विषयाणां तत्र तत्राधिकरणेषु स्पष्टत्वात् वार्तिकादौ प्रपञ्चितत्वाच्च ग्रन्थगौरवभयान्नेह प्रपञ्चितमित्यर्थः । नन्वेकत्वस्य संमार्गं प्रत्युद्देश्यतावच्छेदकतया विवक्षाया असम्भवेऽपि गुणत्वेनान्वयोपपत्तेः नाविवक्षेत्याशङ्कते—**नन्विति** ॥ **गुणत्वेनेति** ॥ करणत्वेनेत्यर्थः ॥ **करणत्वलक्षणेति** ॥

विवक्षोपपत्तेः । न चैवमेकत्वांशे द्वितीयया करणत्वलक्षणात् ग्रहांशे च प्राधान्याभिधानाद्वैरूप्यापत्तिः युगपद्वृत्तिद्वयविरोधापत्तिश्चेति वाच्यम् । ईप्सितानीप्सितसाधारणकर्मत्वमात्रे द्वितीयायाः शक्तत्वेन प्रमाणान्तराद्विशेषावगमेऽपि ऐकरूप्येण उभयोरप्यन्वयोपपत्तेः । न चैवमपि सम्मार्गाङ्गभूतस्यैकत्वस्य तदनङ्गभूतग्रहद्वारकत्वासम्भवः । अङ्गत्वाद्यभावेऽपि सम्बन्धितामात्रेण 'अगन्म' इति मन्त्रे स्वर्गस्येव ग्रहस्यापि द्वारत्वोपपत्तेः । अतश्च विवक्षितमेकत्वमिति चेत्—गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणत्वलक्षणाङ्गीकारस्य युगपद्वृत्तिद्वयविरोधवैरूप्यादेश्चान्याय्यत्वात् । तद्वरमनुवादके तस्मिन्नत्र पाशाधिकरणन्यायेन

---

द्वितीयायाः 'कर्तुरीप्सिततमं कर्म' इति सूत्रेण द्वितीयायाः कर्मत्वे शक्त्यवधारणादिति भावः । **ग्रहांशे चेति** ॥ **प्राधान्याभिधानात्** साध्यत्वाभिधानात् । एकस्या द्वितीयाया विरुद्धार्थद्वयाभिधानाद्**वैरूप्यापत्तिः**——शक्यलक्ष्यतावच्छेदकभिन्नधर्मावच्छिन्नार्थबोधकत्वापत्तिः ॥ **युगपदिति** ॥ एकस्य पदस्य वृत्तिद्वयेनार्थद्वयबोधकत्वापत्तिरित्यर्थः ॥ **ईप्सितेति** ॥ 'कर्तुरीप्सिततमं कर्म' 'तथायुक्तं चानीप्सितम्' इति सूत्राभ्यां ईप्सितानीप्सितसाधारण्येन साध्यत्वमात्रस्य द्वितीयार्थत्वस्य द्वितीये साधितत्वेन एकत्वस्यानीप्सितकर्मत्वेनान्वयोपपत्तेरित्यर्थः । ननु द्वयोरपि साध्यत्वेनान्वये विनिगमनाविरहात् द्वयोरपीप्सितत्वापत्तिरित्यत आह——**प्रमाणान्तरादिति** ॥ प्रवर्तनासम्बन्धबलादित्यर्थः । प्रवर्तना हि इष्टभाव्यकभावनाविषयिणी । इष्टत्वं चापूर्वं प्रति ग्रहाणामेवेति ईप्सितत्वं ग्रहाणामेव, एकत्वस्य तु ग्रहपरिच्छेदद्वारा करणत्वेऽपि तत्त्वाप्रतीतेरनीप्सितकर्मत्वोपपत्तिरिति भावः । ननु 'अरुणया क्रीणाति' इत्यादौ करणत्वेनान्वितैकहायनीद्वारा आरुण्यस्य करणत्वदर्शनात् करणीभूतैकत्वस्यापि करणद्वारेणान्वयस्य व्युत्पन्नत्वादनङ्गभूतग्रहद्वारा अन्वयो न युक्त इति शङ्कते——**न चेति** ॥ **अङ्गत्वाद्यभावेऽपीति** ॥ करणस्य करणद्वारेणैवान्वय इति न व्युत्पत्तिसम्भवः । क्रियासम्बन्धिद्वारेणान्वय इत्येव व्युत्पत्तिः । अन्यथा 'अगन्म' इति मन्त्रस्य स्वर्गप्रकाशनद्वारा दर्शाद्यङ्गत्वानापत्तेः स्वर्गस्य दर्शाङ्गत्वाभावात् । अतः सम्बन्धितामात्रेण द्वारत्वं वक्तव्यम्, तद्वदेव प्रकृतेऽपि ग्रहस्य संमार्गसंबन्धितामात्रेण एकत्वद्वारत्वोपपत्तिरित्यर्थः ॥ **गुणभूतेति** ॥ द्वितीयायाः कारकत्ववाचित्वेन क्रियान्वयित्वात् प्राधान्येन एकवचनस्य एकत्ववाचित्वेनान्यपरिच्छेदकत्वेन च गुणीभूतत्वात् तदन्वयार्थं लक्षणाया अयुक्तत्वादित्यर्थः ॥ **अनुवादक इति** ॥ एकवचनस्य सर्वपदार्थसाधारणैकत्वेनोपपत्तेः तस्यैव बहुत्वलक्षकत्वं युक्तमित्यर्थः ॥ **पाशाधिकरणेति** ॥

लक्षणामात्रम् । न चेप्सितानीप्सितसाधारणकर्मत्वमात्राभिधानान्नोक्तदोषप्रसङ्गः । तथात्वे निरुक्तैककर्मकत्वभङ्गप्रसङ्गेन वाक्यभेदापत्तेः । अतश्च गुणत्वसिद्ध्यर्थं लक्षणाश्रयणे पूर्वोक्तदोषापत्तेरेकवचनं बहुत्वलक्षणार्थं सत्साधुत्वार्थमनुवादोऽविवक्षितम् । यथा चैवं सति 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादौ अष्टवर्षत्वादेर्विवक्षा तथा कौस्तुभ एवोपपादितम् ॥ ७ ॥

---

अग्नीषोमीयपशौ श्रुतस्य 'अदितिः पाशान्' इति मन्त्रस्य प्रकृतौ पाशबहुत्वाभावेनासमवेतार्थत्वेन बहुपाशके उत्कर्षप्राप्तौ बहुवचनस्यैकत्वलक्षकत्वमङ्गीकृतम्, तद्वत् प्रकृतेऽपि लक्षणोपपत्तिरित्यर्थः । नन्वीप्सितानीप्सितसाधारणकर्मत्वमात्रेणान्वयो युज्यत इत्युक्तमित्याशङ्कां परिहर्तुमाह—**न चेत्यादिना** । **तथात्वे**—तथान्वयेऽपि । **एककर्मकत्वेति** ॥ उक्तरीत्यैककर्मकत्वभङ्गापत्तेः सोऽपि पक्षो न युक्त इत्यर्थः । गुणत्वसिद्ध्यर्थं द्वितीयायाः करणत्वलक्षणाङ्गीकारस्यावश्यकतया युगपद्वृत्तिद्वयविरोधादिदोषापत्त्या बहुत्वलक्षकमेवैकवचनमित्यर्थः । तस्य वैयर्थ्याशङ्कां परिहरति—**साधुत्वार्थमिति** ॥ नन्वेवम् 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादौ अष्टवर्षादीनामविवक्षा स्यादित्यत आह—**यथा चैवं सतीति** ॥ अष्टवर्षवाक्ये उद्देश्यत्वेऽपि 'तमध्यापयीत' इति वाक्ये उपादेयत्वेन विवक्षितत्वमिति कौस्तुभे उक्तमित्यर्थः । अत्र वदन्ति । यदुक्तं भावनायाः करोतिपर्यायत्वमिति, तदयुक्तम् । भावनापदस्य भावयतिपर्यायत्वस्य भावार्थाधिकरणे स्थापितत्वात् । यदपि करोत्यर्थस्यैककर्मत्वमिति, तदपि चिन्त्यम् । करोतिशब्दस्यैव सकर्मकत्वव्यवहारेणार्थिकस्य एककर्मकत्वव्यवहारस्य सकर्मकत्वाकर्मकत्वव्यवहारवत् तान्त्रिकसिद्धत्वाभावात् । अत एव फलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वम्, फलसमानाधिकरणव्यापारवाचित्वमकर्मकत्वमिति शब्दस्यैव सकर्मकत्वं कौस्तुभे स्वयमेवोक्तम् । न च शब्दवदर्थस्यापि सकर्मकत्वमङ्गीक्रियतामिति वाच्यम्; तथा सति यत्नस्य सकर्मकत्वाङ्गीकारे यततेरपि यत्नार्थकतया सकर्मकत्वाद्यापत्तेः । नापि द्वितीयायाः करणत्वलक्षणायां [युगपद्वृत्तिद्वयविरोध इति वाच्यं] युगपद्वृत्तिद्वयविरोधो न दोष इति नैयायिकैरुक्तत्वात् । मीमांसकमतेऽपि गवादिशब्दानां जातौ शक्तेर्व्यक्तौ लक्षणायाश्च स्वीकारेण तस्यादोषत्वात् । अत्रापि पाशाधिकरणन्यायेन एकवचनस्य बहुत्वलक्षणाङ्गीकारेण वृत्तिद्वयाङ्गीकारस्येष्टत्वाच्च । अतो नैतादृशकल्पनया एकत्वाविवक्षा सिध्यतीति । अत्र ब्रूमः—'ग्रहं संमार्ष्टि' इत्यत्र संमार्गकरणकभावनायाः भाव्यापेक्षायां 'ग्रहैर्जुहोति' इति वाक्येन ग्रहाणामपूर्वसाधनत्वेनावगतानां भाव्यत्वेनान्वये जाते

(८)—संस्काराद्वा गुणानामव्यवस्था स्यात् ॥ १६ ॥ व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥ १७ ॥

एकत्ववत् ग्रहत्वस्याप्यविवक्षा, लिङ्गादेव सम्मार्गस्य सोमावसेकनिर्हरण-प्रयोजनत्वावगमेन सोमपात्रमात्रस्य संस्कार्यत्वावगतेः ; उभयोरपि ग्रहचमसयो-

---

भावनायाः भाव्याकाङ्क्षायाः शान्तत्वेन पुनराकाङ्क्षाविरहात् नैकत्वावच्छिन्नस्य भाव्यतया अन्वयसम्भवः । न च ग्रहस्य परिच्छेदकाकाङ्क्षया तदन्वयसम्भवः । एकत्वस्य वस्तु-मात्रसाधारण्येनाव्यावर्तकत्वात् । न च सजातीयद्वितीयरहितत्वरूपमेकत्वमत्र वचनार्थ इति वक्तुं शक्यम् । 'ग्रहैर्जुहोति' इति वाक्ये बहुत्वस्योपादेयगतत्वेन विवक्षितत्वेन सजातीयद्वितीयराहित्यबोधासंभवात् । अतः पूर्वपक्षिणा श्रूयमाणसंख्याया विवक्षार्थं सम्मार्गेण ग्रहं भावयेदिति बोधानन्तरं पुनर्भाव्याकाङ्क्षामुत्थाप्य एकत्वविशिष्टस्य भाव्य-त्वमङ्गीकर्तव्यम् । तथा च सति तस्य प्रयोजनाभावः । न चैकमेव ग्रहं संमृज्यादिति परिसंख्या संभवति, ग्रहान्तरे संमार्गस्याप्राप्तत्वात् । न चानेनैव ग्रहोद्देशेन संमार्गं विधाय पुनः परिसंख्या संभवति, विरम्यव्यापारापत्तेः ; ग्रहत्वविशिष्टस्य संमार्गे सोमावसेकनिर्हरणं दृष्टप्रयोजनं लभ्यते । एकत्वविशिष्टसंमार्गे तु न किंचित् दृष्टमस्ती-त्यदृष्टं प्रयोजनं कल्पनीयमित्यदृष्टकल्पनागौरवात् अव्यावर्तकत्वाच्च नैकत्वं विवक्षित-मिति सिद्धान्त इति कृतं विस्तरेण ॥

सूत्रार्थस्तु—**एकत्व**समभिव्याहृतं संमार्गादिकम् **एकस्यैव** स्यात् **श्रुति-संयोगादिति** ॥ ७ ॥

**संस्काराद्वा गुणानामव्यवस्था स्यात्** ॥ एकत्वस्याविवक्षितत्ववत् ग्रहत्वस्याप्यविवक्षा स्यादित्युत्थितेः सङ्गतिः । ग्रहत्वमविवक्षितं विवक्षितं वेति संशयः । ननु संमार्ष्टि इत्येतावन्मात्रविधौ प्रयाजादिवदारादुपकारकत्वापत्त्या ग्रहोद्देशेनैव संमार्गो विधेयः, तथा च कथं चमससाधारण्यमित्यतः पूर्वपक्षमुपपादयति—**लिङ्गादेवेति** ॥ सामर्थ्यादेवेत्यर्थः । तथा च संमार्गस्य सोमावसेकनिर्हरणरूपदृष्टप्रयोजनानुसारेण सोमपात्राणामित्यवगमेनार्थात् सोमपात्राणामुद्देश्यत्वप्रतीतेः चमसानामपि संमार्गो भवती-त्यर्थः । ननु ग्रहशब्देन ग्रहाभ्यासापूर्वसाधनत्वलक्षणात् कथं चमसेषु संमार्ग इत्यत आह—**उभयोरपीति** ॥ ज्योतिष्टोमापूर्वस्य फलवत्त्वेन तदपूर्वसाधनत्वस्यैव

रेकज्योतिष्टोमापूर्वसाधनत्वेन यवेष्विव चमसेष्वपि सम्मार्गापत्तेश्चेति प्राप्ते—

ग्रहत्वविवक्षायां वाक्यभेदाद्यभावात् सत्यपि ज्योतिष्टोमैक्ये तत्तदभ्यासापूर्वाणां भेदात् 'पयसा मैत्रावरुणं श्रीणाति' इतिवत् ग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेर्न चमसेषु सम्मार्गः ॥ ८ ॥

## (९)—आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्राव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशारत्नित्वं वाजपेयोद्देशेन षष्ठीश्रुत्या विधीयते, न

---

लक्षणीयत्वेन तस्य चमससाधारण्यात् भवति चमसेष्वपि संमार्ग इत्यर्थः। अन्यथा व्रीहिजन्यापूर्वसाधनत्वलक्षणया यवेष्ववघाताद्यनापत्तिरित्यर्थः। एकत्वविवक्षायां वाक्यभेदापत्तेरविवक्षणेऽपि ग्रहत्वविवक्षायां तदभावात् विवक्षितमेव ग्रहत्वम्। न चाकांक्षाभावान्न विवक्षा इत्युक्तमिति वाच्यम्; संमार्ष्टि इत्यस्य कर्माकांक्षासत्त्वेन श्रुतग्रहं परित्यज्यार्थिकसोमपात्रस्य लक्षणया ग्रहणायोगात् न चमसेषु संमार्गः। अभ्यासापूर्वाणामपि परमापूर्वद्वारा फलवत्त्वेन प्रयोजकत्वोपपत्तेः। अन्यथा 'पयसा मैत्रावरुणं श्रीणाति' 'सक्तुभिर्मन्थिनम्' इत्यादावपि ज्योतिष्टोमापूर्वसाधनलक्षणया अतिप्रसङ्गापत्तेरित्यभिप्रायेण सिद्धान्तमाह—**ग्रहत्वविवक्षायामित्यादि** ॥

सूत्रार्थस्तु—**गुणानाम्**—संमार्गादीनाम्। **अव्यवस्था** चमसादिसाधारण्यात् तेषां संस्कारत्वेनापूर्वसाधननिवेशित्वेन चमसानामपि तत्साधनत्वाविशेषादिति ॥ ८ ॥

**आनर्थक्यात्तदङ्गेषु** ॥ संस्कारविनियोगविशेषनिरूपणानन्तरं गुणविनियोगविशेषनिरूपणात् सङ्गतिः। सप्तदशारत्नित्वं किं वाजपेयसाधनोर्ध्वपात्रद्वारेण वाजपेयाङ्गम्, उत यूपद्वारेण पश्वङ्गमिति संशयः ॥ **अव्यवहितत्वादिति** ॥ ननु 'आनन्तर्यमचोदना' इति न्यायेन अव्यवहितत्वमकिंचित्करमत आह—**प्रधानत्वादिति** ॥ अङ्गानां प्रधानोद्देशेन विधानेन प्रधानान्वयस्याभ्यर्हितत्वादित्यर्थः ॥ **प्रकरणानुग्रहादिति** ॥ वाजपेयकथम्भावाकांक्षयागृहीतत्वेन तेनैवान्वयस्य युक्तत्वादित्यर्थः ॥ **षष्ठीश्रुत्येति** ॥ षष्ठ्या वाजपेयसम्बन्धावगमादित्यर्थः। यूपोद्देशेन विधाने बाधकमप्याह—**न यूपोद्देशेनेति** ॥ **अतिप्रसङ्गापत्तेरिति** ॥ अग्नीषोमीययूपादावपि सप्तदशारत्नित्वापत्तेरित्यर्थः।

यूपोद्देशेन, अतिप्रसङ्गापत्तेः । वाजपेयेन विशेषणे विशिष्टोद्देशाच्च । अतः सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयोर्ध्वपात्रद्वारेण निविशते । यूपपदं सादृश्याद्गौणमिति प्राप्ते—

यूपपदस्य गौणत्वे प्रमाणाभावात् यूपपदेन स्वकार्यं लक्षयित्वा तदुद्देशेन सप्तदशारत्निर्विधीयते । यद्यपि च द्रव्यमरत्निपरिमाणं चातिदेशतः सम्भवत्प्राप्तिकं तथापि तदनुवादेन सङ्ख्याविधाने एकप्रसरताभङ्गापत्तेः ततः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टद्रव्यमेव सङ्ख्याविधिफलकम् 'लोहितोष्णीषाः' इत्यादि-

---

ननु वाजपेयसम्बन्धियूपोद्देशेन विधानान्नातिप्रसङ्ग इत्यत आह—**विशिष्टोद्देशाच्चेति** ॥ वाक्यभेदापत्तेरिति भावः । ननु वाजपेयोद्देशेन सप्तदशारत्नित्वं न विधातुं शक्यम्, वाजपेयस्य सोमयागरूपतया तत्रारत्निपरिमाणासंभवात् इत्यतस्तदुपपत्तिमाह—**अत इति** ॥ वाजपेयवदेव वाजपेयापूर्वसाधनीभूतद्रव्यो[द्रव्याणामुद्देश्यत्वसमर्पणात्तदु]द्देशेन विधानेनोर्ध्वपात्राणां तदपूर्वसाधनतया तत्रैव पर्यवस्यतीत्यर्थः । ननु वाजपेयपदस्योद्देश्यपरत्वे यूपपदमनर्थकं स्यादित्यत आह—**यूपपदमिति** ॥ उर्ध्वत्वसादृश्यात् यूपपदमूर्ध्वपात्रेषु गौणमित्यर्थः । अनुवादस्य प्रयोजनम् उर्ध्वपात्रेषु निवेशाच्चमसादिव्यावृत्तिरिति भावः । अत्रोर्ध्वत्वसादृस्यवत् खादिरत्वसादृश्यस्यापि संभवादूर्ध्वत्वखादिरत्वाभ्यां यूपसादृश्यमादाय षोडशिपात्रे निवेश इति वार्तिककृतः । खादिरत्वस्य यूपे वैकल्पिकत्वेन नियतोपस्थित्यभावात् उर्ध्वत्वमात्रस्य नियतत्वेन तत्सादृश्यमादायोर्ध्वपात्रमात्रे निवेश इत्यन्ये ॥ **यूपपदस्येति** ॥ यूपोद्देशेन सप्तदशारत्नित्वविधिसंभवेन यूपपदेन तद्गतापूर्वसाधनत्वलक्षणया सप्तदशारत्नित्वविधिसंभवात् न यूपपदस्य गौणत्वमित्यर्थः । ननु सप्तदशारत्निपदस्य बुहुव्रीहित्वेनान्यपदार्थवाचितया अन्यपदार्थद्रव्यस्य चोदकादेव प्राप्तत्वेन परिमाणस्याप्यतिदेशप्राप्ततया न विधिसंभव इत्याशङ्कां परिहरति—**यद्यपीत्यादिना** ॥ ननु द्रव्यस्यातिदेशप्राप्तत्वेऽपि समासार्थद्रव्योद्देशेन सप्तदशसंख्या विधीयतामिति शङ्कां परिहरति—**तदनुवादेनेति** ॥ द्रव्योद्देशेन संख्याविधाने 'वषट्कर्तुः प्रथमभक्षः' इत्यादिवदेकप्रसरताभङ्गापत्तेः न तद्विधिसंभव इत्यर्थः ॥ ततः **पूर्वप्रवृत्त्येति** ॥ चोदकापेक्षया प्रत्यक्षवचनस्य झटिति प्रवृत्तेरित्यर्थः । पूर्वप्रवृत्तेः फलमाह—**संख्याविधिफलकमिति** ॥ **लोहितेति** ॥ 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र सोष्णीषा इत्यनेन उष्णीषाणां प्राप्ततया लौहित्यविधि[फलकविधि]वत् संख्याविधिफलको विधिरित्यर्थः । नन्वेवं वाजपेयपदानन्वय इत्यत आह—**यूपकार्येति** ॥ यूपकार्यपशुनियोजनादेः सप्तदशारत्नित्वं

वद्विधीयते । यूपकार्यस्वरूपे चानर्थक्यात् प्रकरणाद्वाजपेयापूर्वसाधनत्वलक्षणया वाजपेयापूर्वसम्बन्धियूपलाभात् 'वाजपेयस्य' इत्यनुवादः । षष्ठी च परम्परा-सम्बन्धेऽप्युपपन्ना नप्तरि देवदत्तस्यायमितिवत् । व्यवहितत्वादि च गौणत्वा-पेक्षया न दोषः ॥ ९ ॥

(१०)—कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः ॥ १९ ॥
साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥

दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतम् 'अभिक्रामञ्जुहोति' इति । तत्र अभिक्रमणस्यामूर्तत्वाज्जुहोत्युपात्ते प्रयाजहोमे अन्वयानुपपत्तेरारुण्यवच्चेह कर्तृरूपस्य द्रव्यस्यानुपात्तत्वात् तद्द्वाराप्यन्वयानुपपत्तेः ततो विच्छिन्नस्य प्राकरणिकसर्व-

---

विनापि संभवेनानर्थक्यप्राप्तौ अपूर्वसाधनत्वलक्षणायाः आवश्यकत्वे फलवद्वाजपेया-पूर्वसाधनत्वलक्षणार्थं वाजपेयपदमनुवाद इत्यर्थः । ननु वाजपेयस्य यूपाभावात् कथं वाजपेयसम्बन्धित्वं यूपस्येत्यत आह—**षष्ठी चेति** ॥ देवदत्तस्य नप्तेत्यादौ नप्तरि साक्षाद्देवदत्तसंबन्धाभावेऽपि परम्परासम्बन्धमाश्रित्य यथा षष्ठ्युपपत्तिः, तथा अत्राप्युपप-त्तिरित्यर्थः । वस्तुतस्तु नप्तृत्वस्य स्वजन्यपुत्रजन्यपुरुषत्वरूपत्वेन नप्तृशब्देनैव बोधनात् नात्र षष्ठीबलात् परम्परासम्बन्धबोध इत्यभिप्रायेण देवदत्तस्यायमित्युक्तमिति द्रष्टव्यम् ॥

सूत्रार्थस्तु—सप्तदशारत्नित्वादिकं प्रधाने वाजपेये **आनर्थक्येनायोग्यत्वात् तदङ्गेषु** निविशत इति ॥ ९ ॥

**कर्तृगुणे तु कर्मासमवायात् वाक्यभेदः स्यात्** ॥ अभिक्रमणक्रियायाः साक्षाद्धोमार्थत्वासम्भवेन पूर्वन्यायेन कर्त्रंशाङ्गावतारे सिद्धे तद्विशेषविचारात् सङ्गतिः । 'अभिक्रामञ्जुहोति' इत्यत्र भाष्यकारेण जुहोतेः संनिहितप्रयाजविषयत्वं सिद्धं कृत्वा किमभिक्रमणं तेनैकवाक्यं सत् तत्कर्त्रा सम्बध्यते, किं वा ततो विच्छिन्नं कृत्स्नप्रकरण[होम]-कर्त्रेति विचारितम् । तत्र पूर्वपक्षमाह—**अभिक्रमणस्येति** ॥ नन्वमूर्तत्वेन क्रियाङ्गत्वा-संभवेऽपि कर्तुराहवनीयसमीपदेशप्रापणेन कर्तृसंस्कारद्वारा आरुण्यवत् क्रियाङ्गत्वं सम्भवतीत्यत आह—**आरुण्यवदिति** ॥ **अनुपात्तत्वादिति** ॥ एकहायन्याः स्ववाक्यो-पात्तत्वात् तद्द्वारा क्रियाङ्गत्वं युक्तम् । प्रकृते तु कर्तृवाचकपदाभावेन कर्तुरनुपात्तत्वेन तद्द्वारापि न क्रियाङ्गत्वमित्यर्थः ॥ **प्राकरणिकेति** ॥ ननु प्रकरणे वा कथमस्य निवेशः,

होमाङ्गत्वं तदीयकर्तुराहवनीयप्रत्यासत्तिरूपदृष्टकार्यद्वारेति प्राप्ते—

अनुपात्तस्याप्याख्यातगम्यस्य सद्भावात् तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेवेति भाष्यकारेण सिद्धान्तितम् ॥

तत्तु णमुलन्तस्यास्य पूर्वकालतादिसम्बन्धेन जुहोत्यनन्वये नैराकाङ्क्ष्याभावाज्जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणाभावात् अरुणाधिकरणेन गतप्रायत्वाच्च वार्तिककारेणान्यथा व्याख्यातम् ॥

सत्यपि वाक्यीयहोमसम्बन्धे सङ्कोचे प्रमाणाभावात् 'वेद्यां हवींषि' इतिवत्

---

अमूर्तत्वादिति चेन्न ; न हि प्रकरणेन क्रियाकारकभावो बोध्यते । किं तु अङ्गाङ्गिभावः । स चामूर्तस्यापि संभवतीति भावः ॥ **सर्वहोमेति** ॥ तथा च वाक्येन कर्तुरुपस्थित्यभावेऽपि सर्वप्रयोगान्वयिकर्तुः प्रयोगविधिनोपस्थितत्वात् तस्याहवनीयसमीपदेशप्राप्तिरूपदृष्टकार्यद्वारा सर्वहोमाङ्गत्वोपपत्तेः अभिक्रमणं सर्वहोमाङ्गमित्यर्थः ॥ **अनुपात्तस्यापीति** ॥ आख्यातेन शक्त्या अनुपस्थितस्यापीत्यर्थः ॥ **आख्यातगम्यस्येति** ॥ आख्यातलक्ष्यस्येत्यर्थः । तथा च आख्यातैकवचनोक्तैकत्वान्वयानुरोधेन क्रियायाः कर्त्राश्रितत्वानुरोधेन च कर्तरि निरूढलक्षणाया आवश्यकत्वादिति भावः । ततश्च स्ववाक्योपात्तप्रयाजकर्तृसंस्कारद्वारा प्रयाजकर्तर्येव निवेश इति भाष्यकारीयसिद्धान्त इत्यर्थः । वार्तिककारमतमाह—**णमुलन्तस्येति** ॥ **पूर्वकालतादीति** ॥ 'धातुसंबन्धे प्रत्ययाः' इत्यधिकृत्य क्त्वार्थे णमुलो विधानेन क्रिययैव संबन्धनियमः । ततश्च प्रकरणेऽपि क्रिययैव संबन्धो वाच्य इति श्रुतजुहोतिनैवान्वयो वाच्यः । न च कारकस्यैव क्रियान्वयनियमः, मातुः स्मरति इत्यादौ शेषत्वेन विवक्षितस्यापि मात्रादेः क्रियान्वयदर्शनात् । अभिक्रमणस्यापि समानकर्तृकतया प्राकरणिकहोममात्रेऽन्वय इत्यर्थः । ननूपस्थितत्वात् प्रयाजहोममात्रपरत्वं जुहोतेरित्यत आह—**प्रयाजेति** ॥ प्रकरणाद्दर्शपूर्णमासप्रधानहोमानामप्युपस्थितत्वाविशेषात् प्राकरणिकसर्वहोमपरत्वमेव जुहोतेः स्यादित्यर्थः ॥ **अरुणाधिकरणेनेति** ॥ अमूर्तस्याभिक्रमणस्य आरुण्यस्य द्रव्यपरिच्छेदद्वारा क्रयान्वयवत् कर्तृसंस्कारद्वारा प्रयाजकर्तर्यन्वयोपपत्तेः तेनैव न्यायेन गतार्थत्वादित्यर्थः । आरुण्यस्य स्ववाक्योपात्तैकहायनीद्वारा क्रयान्वयसंभवेऽप्याभिक्रमणस्य स्ववाक्ये कर्तुरश्रवणात् न प्रयाजकर्तर्यन्वयः संभवतीत्यतः **प्रायत्वादि**त्युक्तम् । व्याख्या[त]मेवाह—**सत्यपीत्यादि** । **वाक्यीयेति** ॥ 'अभिक्रामञ्जुहोति'

प्राकरणिकसर्वहोमाङ्गत्वम् । वाचनिकाङ्गसन्दंशरूपावान्तराधिकारस्य वाक्यसङ्कोचकत्वानुपपत्तेः । यदि हि तादृशसन्दंशमध्ये अभिक्रामति इत्येव श्रूयेत ततोऽवान्तरप्रकरणेन स्यादपि प्रयाजाङ्गत्वम् । वस्तुतस्तु—नाङ्गेषु इतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणम्, फलाभावात् । अन्यथा प्रयाजाभिक्रमणादीनामप्यनूयाजाद्यङ्गत्वापत्तेः । वाचनिकाङ्गसम्बन्धसिद्ध्यर्थं च कल्पिताया आकाङ्क्षायाः तन्मात्रग्राहकत्वेनाभिक्रमणग्राहकत्वानुपपत्तेरिति प्राप्ते—

---

इत्यभिक्रमणहोमयोः एकवाक्योपात्तत्वेऽपीत्यर्थः ॥ **सङ्कोच इति** ॥ प्रयाजहोममात्रपरत्वे जुहोतेः प्रमाणाभावादित्यर्थः ॥ **वेद्यां हवींषीति** ॥ यथा 'वेद्यां हवींष्यासादयति' इति हविरासादनोद्देशेन विधीयमानाया वेद्याः प्रकरणात् प्रधानभावनान्वये तदीयाङ्गप्रधानहविरासादनार्थत्वम्, यथा वा 'बर्हिर्लुनाति' इति लवनादीनां प्रकरणात् बर्हिर्द्वारा अङ्गप्रधानार्थत्वं तद्वदित्यर्थः । ननु जुहोतेः सर्वहोमसाधारण्येऽपि अभिक्रमणस्य प्रयाजोद्देशेन विधीयमानवाचनिकाङ्गसन्दंशरूपावान्तरप्रकरणेन प्रयाजमात्रविषयतया संकोचः स्यादित्यत आह—**वाचनिकेति** ॥ तथा च तस्य प्रकरणरूपत्वेन वाक्यापेक्षया दुर्बलत्वादित्यर्थः । ननु सन्दंशस्य वाचनिकाङ्गमध्यपाठरूपत्वेन न दौर्बल्यमित्यत आह—**यदि हीति** ॥ सन्दंशमध्ये अभिक्रामति इत्येतावन्मात्रश्रवणे तन्मात्रपरत्वं भवेत्, न त्वेतदस्ति । जुहोतिश्रवणेन सर्वहोमार्थत्वस्यैव प्रतीतेरित्यर्थः । नन्ववान्तरप्रकरणस्य स्वरूपत एव बलवत्त्वाङ्गीकारेण बलवत्त्वमङ्गीक्रियत इत्यत आह—**वस्तुतस्त्विति ॥ फलाभावादिति** ॥ फलश्रवणे हि कथं फलं भावयेदिति इतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं सिध्येत्, न त्वेतदस्ति, तस्मान्नावान्तरप्रकरणमस्ति, येन तद्बलेन प्रयाजमात्राङ्गत्वमभिक्रमणस्य स्यादित्यर्थः । ननु फलाभावेऽपि क्रतूपकारकत्वमात्रेणावान्तरप्रकरणमङ्गीक्रियत इत्यत आह—**अन्यथेति । प्रयाजाभिक्रमणादीनामिति** ॥ यदि हि फलसंबन्धं विना क्रतूपकारकत्वमात्रेणावान्तरप्रकरणमङ्गीक्रियेत तदा अनूयाजादीनामपि क्रतूपकारकत्वाविशेषात् अवान्तरप्रकरणकल्पनया प्रयाजादीनां तदङ्गत्वं स्यात्, अतो नावान्तरप्रकरणमङ्गीकार्यमित्यर्थः । ननु वाचनिकाङ्गसम्बन्धसिद्ध्यर्थं प्रयाजानामाकाङ्क्षाकल्पनस्यावश्यकतया तत्सन्दंशेनाभिक्रमणस्य तदङ्गत्वमित्यत आह—**वाचनिकेति** ॥ तथा च वाचनिकाङ्गसम्बन्धसिद्ध्यर्थं कल्पिताकाङ्क्षायास्तन्मात्राङ्गत्वबोधकतया अभिक्रमणस्य वचनाभावेन तदङ्गत्वग्राहकत्वानुपपत्तेरित्यर्थः । ननु 'अभिक्रामञ्जुहोति' इत्यत्र होमानुवादेनाभिक्रमणविधानात् अनुवादस्य सति सम्भवे सन्निहितगामित्वात् प्रयाजानां सन्निहितत्वात् तदनुवादेन विधीयमानमभि-

भावनास्वाभव्येन अङ्गभावनास्वपि क्रतूपकारभाव्यकासु इतिकर्तव्यताकाङ्क्षोपपत्तेरङ्गानामप्यस्त्येव सा । सा परं प्रधानगतफलवत्त्वेन प्रतिबध्यते सन्निध्याम्नातविषये । अतो न परस्पराङ्गत्वप्रसङ्गः । तदा तन्निवृत्तिरतिदेशेन अर्थापत्तिलभ्यस्वसम्पादनेन साधारणैर्वा आचमनादिभिः । यत्र तु वाचनिकाङ्गसन्दंशस्तत्राद्येनाकाङ्क्षोज्जीवनम् ; अन्तिमेन च तन्नाशः । न तु मण्यादाविव वाचनिकाङ्गानां प्रत्येकमुत्तेजकता । तावदभावकूटप्रवेशे गौरवात् ।

---

क्रमणं तदङ्गमेव स्यात्, न तु सर्वहोमाङ्गमिति [चेन्न] सन्निधिकृतविशेषाङ्गीकारे उत्तमप्रयाजस्यैव सन्निहिततरत्वेन तदङ्गत्वस्यैवापत्तेः न समिदाद्यर्थत्वं स्यात् । अतो बुद्धिविपरिवृत्तिरेवानुवादस्यापेक्षिता । सा च जुहोतिना सर्वहोमानामविशिष्टेति सर्वहोमार्थत्वमेवाभिक्रमणस्येति भावः । वार्तिककारसिद्धान्तमाह—**भावनास्वाभाव्येनेति** ॥ भावनासामान्यस्यांशत्रयाकाङ्क्षायाः स्वभावसिद्धत्वादित्यर्थः । ननु प्रयाजभावनायाः फलवत्त्वाभावात् नाङ्गाकाङ्क्षेत्यत आह—**क्रतूपकारेति** ॥ क्रतूपकारात्मकफलसत्त्वेनेति-कर्तव्यताकाङ्क्षासत्त्वादित्यर्थः ॥ **सेति** ॥ अङ्गाकाङ्क्षेत्यर्थः । ननु तर्हि परस्पराङ्गत्वापत्तिरत आह—**सा परमिति** ॥ **प्रधानगतफलवत्त्वेनेति** ॥ प्रधानस्य फलवत्त्वज्ञानेन तदुपकारमादायैवाङ्गानां फलवत्त्वात् तदङ्गैरेवाङ्गानां पृथगाकाङ्क्षाप्रतिबद्ध्यत इति न पृथगाकाङ्क्षोत्पद्यत इति न परस्पराङ्गत्वापत्तिरित्यर्थः । ननु पृथगङ्गापेक्षाभावे भावनास्वाभाव्यभङ्गापत्तिरत आह—**तन्निवृत्तिरिति** ॥ कथमनेनोपकारः कर्तव्य इत्याकाङ्क्षानिवृत्तिरित्यर्थः ॥ **अतिदेशेनेति** ॥ यत्रातिदेशेनाङ्गानामङ्गप्राप्तिः तत्राति-देशेनाङ्गाकाङ्क्षानिवृत्तिरित्यर्थः । यत्र दर्वीहोमादावतिदेशाभावः तत्साधारण्यायाह—**अर्थापत्तीति** ॥ अनुत्पन्नस्योपकारकत्वासम्भवेन उपकारकत्वान्यथानुपपत्त्या स्वोत्पत्तिराक्षिप्यत इति स्वरूपसम्पादनेनैवाङ्गाकाङ्क्षानिवृत्तिरित्यर्थः । [**आचमनादिभिरिति**] सर्वसाधारणाचमनयज्ञोपवीतादिभिश्च निवृत्तिरित्यर्थः । ननु तर्हि कथमभिक्रमणस्याङ्गत्वम्, उक्तरीत्या अङ्गाकाङ्क्षाशान्तेरित्यत आह—**यत्र त्विति** ॥ **आद्येनेति** ॥ प्रयाजानुवादेन विधीयमानाद्याङ्गेनाकाङ्क्षा जायते तादृशेनैवान्त्येन निवर्तत इत्यर्थः । ननु वाचनिकाङ्गानां प्रधानफलवत्त्वज्ञानप्रतिबन्धकतायामुत्तेजकत्वकल्पनयैवोपपत्तौ किमित्या-काङ्क्षान्तरं कल्प्यत इत्यत आह—**न त्विति** ॥ मण्यादिप्रतिबन्धकतायामुत्ते-जकाभावकूटनिवेशवदत्रापि अङ्गाभावकूटस्य निवेशनीयतया अतिगौरवापत्तेः, तदपेक्षया आकाङ्क्षाकल्पनस्यैव लघुत्वादित्यर्थः । ननु 'धर्मिकल्पनातो वरं धर्मकल्पनम्' इति

---

१. आक्षेपलभ्य इति पाठान्तरम् ।

तद्वदिह व्यभिचाराभावाच्च। अतो वाचनिकसन्दंशे श्रुतानामवान्तरप्रकरणेन बलवताङ्गाङ्गत्वमेव। प्रकृते तु होमानुवादेन विहितेऽभिक्रमणे होमस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकतया वाचनिकाङ्गसन्दंशरूपावान्तराधिकार एव तत्त्वेनाश्रीयते। न तु प्रधानाधिकारः अङ्गप्रधानाधिकारो वा

---

न्यायेन उत्तेजकत्वकल्पनमेव लघ्वित्यत आह—**तद्वदिति**॥ मण्यादिस्थलवदित्यर्थः। दाहं प्रति मण्यभावस्य कारणत्वे उत्तेजकस्थले मण्यभावरूपकारणाभावात् व्यभिचारप्राप्तौ तद्वारणाय विशेषणाभावप्रयुक्तविशिष्टाभावसम्पत्त्यर्थमुत्तेजककल्पनमावश्यकम्, प्रकृते तु क्रतूपकारलक्षणफलसत्त्वेनाङ्गानां न प्रधानगतफलसत्त्वज्ञानप्रतीक्षणेन प्रतिबन्धकसंपत्तिरिति व्यभिचाराभावान्नोत्तेजकत्वकल्पनं युक्तमित्यर्थः॥ **वाचनिकेति**॥ अङ्गानुवादेन विधीयमानाङ्गसंदंशस्थले प्रथमाङ्गेनाकाङ्क्षोत्पत्तौ अन्तिमाङ्गेन तन्निवृत्त्या मध्यपठितानां अङ्गाङ्गत्वमेवेत्यर्थः। अभिक्रमणस्य प्रयाजाङ्गत्वमुपपादयति—**प्रकृते त्विति**॥ होमानुवादेनाभिक्रमणविधौ होमस्वरूपे आनर्थक्येन अपूर्वसाधनत्वलक्षणायां संदंशरूपतात्पर्यग्राहकबलेन प्रयाजापूर्वसाधनलक्षणया प्रयाजार्थत्वमभिक्रमणस्य सिध्यतीत्यर्थः॥ **प्रधानाधिकार इति**॥ प्रधानोद्देशेन वाङ्गप्रधानसाधारण्येन वा वेद्यामिव न विधीयत इत्यर्थः। प्रकृते संदंशमुपपाद्याभिक्रमणस्य प्रयाजाङ्गत्वमुपपादयति—**अस्ति चात्रेति**॥ **समानयत इति**॥ 'षोडशान्याज्यानि गृह्णाति' इति षोडशसंख्याकाज्यग्रहणं विहितम्। तत्र 'चतुर्जुह्वां गृह्णाति' इति जुह्वां चतुर्गृहीतम् 'अष्टावुपभृति गृह्णाति' इति उपभृत्यष्टग्रहणं 'चतुर्ध्रुवायाम्' इति ध्रुवायां चतुर्गृहीतम् इति षोडशसंख्यासम्पत्तिः। तत्र जौहवचतुर्गृहीतस्य 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति वाक्येन जौहवस्याद्यप्रयाजत्रये विनियोगः। 'यदुपभृति प्रयाजानूयाजेभ्यस्तत्' इति वाक्येन औपभृतस्य प्रयाजानूयाजोद्देशेन विनियोगाच्चतुर्थपञ्चमप्रयाजार्थत्वमनूयाजत्रयार्थत्वं च; ध्रौवस्य 'सर्वस्मै वा' इति वाक्येन द्रव्यसाकाङ्क्षसर्वयज्ञार्थत्वमिति स्थितिः। तत्र तृतीयप्रयाजानन्तरं चतुर्थप्रयाजार्थमौपभृताज्यस्यार्धं चतुर्थपञ्चमप्रयाजार्थं जुह्वां समानेतव्यम्। तत्र वचनम् 'अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतम्' इति। इडोऽतिहाय इट्संज्ञकं प्रयाजं कृत्वा बर्हिःप्रति बर्हिःसंज्ञकचतुर्थप्रभृति तदर्थमित्यर्थः। जुह्वामौपभृतार्धं समानयते इत्युपक्रमे प्रयाजोद्देशेन समानयनविधानात् उपक्रमे प्रयाजा अनुक्रान्ता इत्यर्थः। तदनन्तरम् 'अभिक्रामञ्जुहोति' इति अभिक्रमणं विहितम्। अन्ते 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रवणात् जुह्वां समानयनमारभ्य

'वेद्याम्' इतिवत् । अस्ति चात्र 'समानयते जुह्वामौपभृतम्' इत्याद्युपक्रम्य मध्येऽभिक्रमणं विधाय अन्ते 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रवणात् सः । अतोऽभिक्रमणं प्रयाजहोमाङ्गमेव । न च प्रयाजेषु होमाभावः । प्रक्षेपाङ्गकस्यैव त्यागस्य वृद्धव्यवहारेण यजिपदार्थत्वावसायात् आक्षेपेण श्रूयमाणयजिमात्रे होमप्राप्त्युपपत्तेः ॥ १० ॥

## (११)—सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥

दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरनुब्रूयात्' इत्यनेन सामिधेनीर्विधाय

---

प्रयाजशेषाभिघारणपर्यन्तं प्रयाजावान्तरप्रकरणानुवृत्तेस्तन्मध्यपतिताभिक्रमणस्य प्रयाजाङ्गत्वं युक्तमिति वार्तिककाराशय इत्यर्थः । सः संदंश इत्यर्थः । नन्वभिक्रमणस्य होमोद्देशेन विधानात् प्रयाजानां यजतिचोदितत्वेन यागरूपत्वेन होमरूपत्वाभावात् कथं तदङ्गत्वमभिक्रमणस्येति शङ्कते—**न चेति** ॥ **प्रक्षेपाङ्गकस्यैवेति** ॥ यजतेर्यागमात्रे शक्तत्वेऽपि वृद्धव्यवहारेण प्रक्षेपाङ्गकस्यैव त्यागस्य यजत्यर्थत्वेन अङ्गभूतप्रक्षेपाङ्गत्वोपपत्तिरित्यर्थः ॥

सूत्रार्थस्तु—अभिक्रमणे होमरूपकर्मसमवायानर्हत्वात् **कर्तृगुणे** सति **वाक्यभेदः स्यात्**, जुहोतिविच्छेदः स्यादिति भाष्यकारपक्षे । आचार्यपक्षे तु **कर्तृगुणे**—अभिक्रमणे अङ्गानामितिकर्तव्यताकाङ्क्षाविरहेण प्रयाजकर्मासमवायात् **वाक्यभेदः** प्रयाजवाक्यानन्वयित्वं स्यादिति ॥ १० ॥

**सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात्** ॥ अवान्तरप्रकरणेनाभिक्रमणस्य प्रयाजार्थत्ववदिहापि उपवीतस्य सामिधेन्यङ्गत्वं स्यादित्युत्थितेः सङ्गतिः । उपवीतं सामिधेन्यङ्गम्, उत दर्शपूर्णमासाङ्गमिति संशयः ॥ **सामिधेनीर्विधायेति** ॥ ननु तैत्तिरीयशाखायां हिंकरोतीति सामिधेनीगुणानामेवाम्नानात् सामिधेनीर्विधायेत्यसङ्गतम् । न च सामिधेनीर्विधायेत्यस्य सामिधेनीगुणजातमुपक्रम्येत्यर्थ इति वाच्यम् ; तथा सति यत्रैव सामिधेनीविधिः तत्रैव तासां प्रकरणस्य वक्तुमुचितत्वेन प्रकृते तदभावप्रसङ्गात् । अत एव पार्थसारथिः—"कर्मणश्च विधिर्यत्र तत्र प्रकरणं

---

१. तै. सं. २-५-१०

तासां वाचनिका गुणा विहिताः। ततो निविदो नाम मन्त्राः 'देवेद्धो मन्विद्धः'[1] इत्यादयः। ततः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'[2] इत्यादयः काम्याः सामिधेनीकल्पाः। ततः उपवीतम् 'उपव्ययते देवलक्ष्ममेव तत्कुरुते'[3] इति। ततः पुनरपि सामिधेनीगुणाः 'अन्तरानूच्यं सदेवत्वाय'[3] इत्यादयः। तत्रोपवीतं सामिधेन्यङ्गम्; तदवान्तरप्रकरणात्। न च तदवान्तरप्रकरणस्य काम्यकल्पैर्निविन्मन्त्रैर्वा विच्छेदः। गोदोहनादीनां दर्शपूर्णमासप्रकरणाविच्छेदकत्ववत् काम्यानामपि तद्विच्छेदकत्वानुपपत्तेः। पूषानुमन्त्रणमन्त्रवन्निविन्मन्त्रस्यापि तदनुपपत्तेश्च। वस्तुतस्तु—लिङ्गादग्निसमिद्धत्वरूपसामिधेनीफलप्रकाशकानामप्यवान्तरप्रकाणात् सामिधेन्यङ्गत्वोपपत्तेर्न विच्छेदकत्वशङ्का। इष्यत एव हि 'अगन्म'[4] इति मन्त्रस्य यागजन्यफलप्रकाशकत्वेन यागाङ्गत्वमिति प्राप्ते—

---

भवेत्। न तु [यत्र] गुणार्थेन श्रवणं तत्र विद्यते॥" इत्याहेति चेन्न; शाखान्तराभिप्रायेण तथोक्तेर्न दोष इति भावः। यद्यप्यभिक्रमणस्य णमुल्प्रत्ययात् क्रियान्तरार्थत्ववदिह श्रुतिप्रसक्त्यभावात् श्रौतविनियोगविचारप्रस्तावेऽस्य विचारस्य सङ्गतिर्नास्ति। तथाप्यवान्तरप्रकरणप्रसङ्गात् तदनुवृत्त्यननुवृत्तिविचार इति द्रष्टव्यम्॥ **वाचनिका इति**॥ 'त्रिः प्रथमामन्वाह' इत्यादिभिरित्यर्थः॥ **ततो निविदो नाम मन्त्रा इति**॥ विहिता इति शेषः॥ **सामिधेनीकल्पा इति**॥ कामाय संख्याविशेषविशिष्टसामिधेनीप्रयोगा इत्यर्थः। ततः उपव्ययते इत्यनेनोपवीतं विहितम्॥ **अन्तरानूच्यमिति**॥ क्रौञ्चमन्द्रोभयमध्यमस्वेरणेत्यर्थः॥ **सामिधेन्यङ्गमिति**॥ पूर्ववत् सामिधेन्यवान्तरप्रकरणाद्दित्यर्थः। ननु निविद्भिर्व्यवधानात् न प्रकरणानुवृत्तिः। न च 'अगन्म सुवः' इति मन्त्रस्य दर्शपूर्णमासफलप्रकाशनेन तदङ्गत्ववत् निविदामपि देवेद्ध इति निष्ठाप्रत्ययेन इध्मप्रक्षेपबलात् अग्निनिष्पत्तिप्रकाशनलिङ्गेन इध्मप्रक्षेपार्थसामिधेन्यङ्गत्वात् न व्यवधायकत्वमिति वाच्यम्; एवमपि 'घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणाम्' इत्यादिनिविदां सामिधेनीफलप्रकाशनगन्धाभावेन तासां सामिधेन्यङ्गत्वासम्भवादिति शङ्कते—**न चेति**॥ **गोदोहनादीनामिति**॥ गोदोहनस्य फलाङ्गत्वेन दर्शपूर्णमासाङ्गत्वाभावेऽपि यथा न प्रकरणविच्छेदकत्वं तथा प्रकृते निविदा[काम्याना?]मनङ्गत्वेऽपि प्रकरणविच्छेदकत्वं नास्तीति वक्तुं शक्यत्वादित्यर्थः। निविन्मन्त्रेण व्यवधानं परिहरति—**पूषानुमन्त्रणेति**॥ दर्शपूर्णमासप्रकरणे पठितानां

---

१. तै. ब्रा. ३-५-३
२. तै. सं. २-५-१०
३. तै. सं. २-५-११
४. तै. सं. १-६-६

निविद्भिर्व्यवधानान्नोपवीतस्य सामिधेन्यङ्गता । न च पूषानुमन्त्रण-मन्त्रन्यायः । यत्र ह्युत्तरकालं बहूनि वाचनिकाङ्गानि तत्रैकस्य पूषानुमन्त्रणमन्त्रादेः परप्रकरणस्थत्वकल्पना । यत्र तु विच्छेदकानि बहूनि उत्तरकालं च वाचनिकाङ्गं स्वल्पं तत्र वाचनिकाङ्गस्यैवानारभ्याधीतन्यायेनाङ्गत्वोपपत्तेर्न प्रकरणानुवृत्ति-कल्पना । अन्यथा विश्वजिदादेरपि दर्शाङ्गत्वापत्तेः । प्रकृते च निविन्मन्त्राणां बहुत्वात् वाचनिकोत्तराङ्गानां स्वल्पत्वेन न प्रकरणानुवृत्तिकल्पना । वस्तुतस्तु— न 'अन्तरानूच्यम्' इत्यादीनां सामिधेनीमात्रोद्देशेन विधानम् ; प्रकरणाभावात् ।

---

'पूष्णोऽहं देवयज्यया'[1] इत्यादीनां दर्शाद्यनङ्गत्वेऽपि प्रकरणविच्छेदकत्वादर्शनादित्यर्थः ॥ **वस्तुत इति** ॥ निविन्मन्त्राणामग्निसमिन्धनरूपसामिधेनीफलप्रकाशकत्वेन 'अगन्म' इति मन्त्रस्य दर्शाद्यङ्गत्ववत् निविदामपि सामिधेन्यङ्गत्वात् न प्रकरणविच्छेदकत्वं, तदेकवाक्यता-पन्नानां रथीरध्वराणामित्यादीनामपि तथात्वोपपत्तेरित्यर्थः ॥ **निविद्भिर्व्यवधानादिति** ॥ तथा च निविद्भिः सामिधेन्यनङ्गभूतैः सामिधेन्यङ्गत्वकल्पकाकाङ्क्षाया विच्छिन्नत्वेन संदंशाभावान्नोपवीतं सामिधेनीमात्राङ्गमित्यर्थः । पूषानुमन्त्रणन्यायेन प्रकरणाविच्छेदकत्वं निविदां निरस्यति—**न चेति** ॥ यत्र बहूनामङ्गानामुत्तरत्र विधानं तत्र परप्रकरण-स्थत्वमेकस्य कल्पयित्वा प्रकरणानुवृत्तिरङ्गीकार्या । प्रकृते तु दर्शपूर्णमासाङ्गानामुत्तरत्र अल्प-त्वात् निविन्मन्त्राणां बहुत्वात् तेषामेव पूषानुमन्त्रणमन्त्रन्यायासम्भवेन प्रकरणविच्छेदकत्व-मित्यर्थः । उत्तरकालिकवाचनिकाङ्गस्यावान्तरप्रकरणानुवृत्तिबोधकत्वं निरस्यति—**यत्र त्विति** ॥ अन्तरानूच्यमिति व्यवहितवाचनिकाङ्गस्याल्पत्वात्तस्यैव पर्णतान्यायेनोत्कर्षः । ततश्च तदपि न प्रकरणानुवृत्तौ प्रमाणमित्यर्थः । ननूत्तरत्राल्पाङ्गाम्नानेऽपि प्रकरणानुवृत्तिरङ्गीक्रियताम्, अल्पस्यापि पूर्वोपस्थितिसापेक्षत्वेनानुवृत्तिसम्भवे प्रकरण-विच्छेदे प्रमाणाभावात्[2] इत्यत आह—**अन्यथेति** ॥ **विश्वजिदादेरिति** ॥ दर्शपूर्ण-मासप्रकरणे 'विश्वजिता यजेत' इति श्रवणेन दर्शाद्यङ्गसंदष्टत्वापत्त्या तस्यापि दर्शाङ्गत्वापत्तेरित्यर्थः ॥ **बहुत्वादिति** ॥ तथा चावान्तरप्रकरणविच्छेदकानां निविन्मन्त्राणां बहुत्वात् उत्तराङ्गस्याल्पत्वाच्च प्रकरणविच्छेदकत्वमेवेत्यर्थः । ननु उत्तरत्र 'अन्तरानूच्यं सदेवत्वाय' इत्यनेन सामिधेन्यनुवादेन स्वरविशेषविधानेन सामिधेन्यनुवृत्तेरावश्यकत्वात् प्रकरणानुवृत्तिरावश्यकीत्यत आह—**वस्तुतस्त्विति** ॥ **नान्तरेति** ॥ यदि हि सामिधेन्युद्दे-शेनैव स्वरविशेषविधिः स्यात् तदा संभाव्येतापि प्रकरणानुवृत्तिः । न त्वेतदस्ति ॥ **प्रकरणा-**

---

१. तै. सं. २-५-११ २. प्रमाणाभावात् इति पाठान्तरम्

अपि तु अनुवचनसामान्योद्देशेन । अतश्च सामिधेनीनां विशिष्योपस्थित्यभावात् न प्रकरणानुवृत्तिः । यत्तु अन्ते 'देवा वै सामिधेनीरनूच्य' इत्यादि सङ्कीर्तनं तदाधारार्थवादत्वादसाधकम् । अत एवान्ते वाचनिकाङ्गाभावादेव न विविदां सामिधेन्यङ्गत्वशङ्का । सन्निधिमात्रेण तदङ्गत्वशङ्का तु परस्पराङ्गत्वापत्तेः प्रकरणेन बाधाच्चायुक्ता । न चैवमाश्रयाभावात्काम्येषु गुणफलसम्बन्धानुपपत्तिः । तत्रानु-

---

भावादिति ॥ आकाङ्क्षाभावादित्यर्थः ॥ अनुवचनसामान्योद्देशेति ॥ अनूच्यम् इत्यनेन अनुवचनसामान्यस्यैवोद्देशात् सर्वानुवाक्यासाधारण्येनोपस्थितेः न सामिधेन्यनुवचनमात्रो-पस्थितिः । ततश्च न सामिधेन्युपस्थितिरित्यर्थः । ननु 'देवा वै सामिधेनीरनूच्य' इत्यन्ते वचनात् तस्य सामिधेनीमात्रविषयत्वात् प्रकरणानुवृत्तिरावश्यकीत्यत आह— यत्त्विति ॥ आधारार्थवादत्वादिति ॥ तथा च सामिधेनीकीर्तनस्य परार्थत्वात् न तद्बलादपि सामिधेनीप्रकरणानुवृत्तिरित्यर्थः । ननु सामिधेनीनामवान्तरप्रकरणाभावेऽपि सामिधेनीनामुपस्थितिकृतसन्निधिसत्त्वात् सन्निधिप्रमाणेन सामिधेन्यङ्गत्वं स्यादित्या-शङ्कते—सन्निधिमात्रेणेति ॥ परस्परेति ॥ विनिगमनाविरहेण सामिधेनीनामेवो-पवीताङ्गत्वं स्यादित्यर्थः । ननु सामिधेनीनां 'पञ्चदश सामिधेनीरनुब्रूयात्' 'त्रिः प्रथमामन्वाह' इत्यादिभिः बहुकृत्वः उपस्थितत्वात् तदङ्गत्वमेवोपवीतस्य युक्तम् । न तु सामिधेनीनामुपवीताङ्गत्वम् ; उपवीतस्य तथा अनुपस्थितेरित्यत आह—प्रकरणे-नेति ॥ दर्शपूर्णमासप्रकरणपठितानां सर्वेषामङ्गानां फलवद्दर्शपूर्णमासाङ्गत्वेनैव फलाकांक्षा-शान्तेर्न सामिधेन्यङ्गत्वमिति भावः । नन्वेवं प्रकरणानुवृत्त्यभावे काम्यसामिधेनी-संख्यानामाश्रयाभावात् फलोद्देशेन विधानानुपपत्तिः । 'अग्निहोत्रं जुहोति' इति विहिताग्निहोत्रस्य प्रकरणसत्त्वेनैव फलोद्देशेन विधीयमानस्य दध्नः आश्रयस्य लाभेनैव गुणफलस्य विधिदर्शनादित्याशङ्क्य समाधत्ते—न चेति ॥ अनुवचनान्तरस्येति ॥ यदि प्रकृतसामिधेनीराश्रित्य फलाय गुणविधिः स्यात्, तदा आश्रयलाभाय प्रकरणा-नुवृत्तिः[आवश्यकी], न त्वेवमङ्गीक्रियते, किं त्वनुवचनान्तराण्येव फलोद्देशेन विधीयन्त इति न तदर्थमपि प्रकरणानुवृत्तिरित्यर्थः । नन्वनुवचनान्तरविधाने तत्र 'त्रिः प्रथमामन्वाह' इति धर्मप्राप्तिर्न स्यात्, तस्य वचनस्य नित्यानुवचनधर्मबोधकत्वे काम्यानुवचनपरत्वाभावादित्यत आह—तस्य चेति ॥ अनुवचनान्तरस्येत्यर्थः । श्रुतिलिङ्गाद्युपदेशप्रमाणाभावेऽपि नित्यानुवचनप्रकृतिकत्वेन चोदकादेव धर्मप्राप्तिः

---

१. तै. सं. २-५-११.

वचनान्तरस्यैव फलोद्देशेन विहितत्वात् तस्य च सङ्ख्यायुक्तानुवचनत्वसामान्यात् पञ्चदशसङ्ख्याकनित्यानुवचनप्रकृतिकत्वावगतेस्तदीयधर्माणां त्रिरभ्यासादीनां तदीय-ऋचांच प्राप्तेर्नाधर्मकत्वम् । न च ऋचामनुवचनं प्रति प्राधान्यात्कथमतिदेशः । प्रकृतौ[1] त्रिरभ्यासयुक्तपाठादेव तावत्सङ्ख्याकऋचामर्थान्नानुवचनस्य प्राप्त्युपपत्तेः । 'पञ्चदश[2] सामिधेनीरनुब्रूयात्' इति वचनवैयर्थ्यापत्तेरगत्या सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य मन्त्रविशिष्टानुवचनस्यैव विधेयत्वेन तदङ्गभूतानामृचां प्राप्त्युपपत्तेः । गुणत्वमपि च ऋचां नानुवचनफलप्रकाशकतयैव । अपि त्वनुवचनजनकतया, लाघवात् । अतश्च न द्वारलोपाद्बाध ऊहो वा । अनुशब्देन च दर्शपूर्णमासाङ्गभूतपूर्वपदार्थानन्तर्यस्योक्तत्वात्तस्य च परप्रयुक्तत्वेन बहिःक्रतुप्रयोगेऽनुष्ठातुमशक्तेः क्रतुमध्यप्रयोगसिद्धिः । वैकृतानुवचनेनैव च प्रसङ्गात्

---

संभवतीत्यर्थः । सादृश्यमुपपादयति—**संख्यायुक्तेति** ॥ **तदीयऋचां चेति** ॥ काम्यानुवचनेषु स्वतन्त्रऋचामनाम्नानादित्यर्थः । ननु प्रकृतौ क्लृप्तोपकाराणामङ्गानामेव विकृतावतिदेशात् अनुवचनापेक्षया प्रधानभूतानामृचां कथमतिदेशः, अन्यथा आग्नेयादीनामप्यतिदेशापत्तेरित्याशंक्य समाधत्ते—**न चेति** ॥ **प्रकृताविति** ॥ दर्शपूर्णमासप्रकरणे त्रिरभ्यस्तानां पञ्चदशर्चां ? पठितत्वेन पाठादेव तावत्संख्याकानामृचां प्राप्तत्वेन 'पञ्चदश सामिधेनीरनुब्रूयात्' इति वचनस्य न किंचित्प्रयोजनमस्तीति सक्तुवत् द्वितीयायास्तृतीयार्थलक्षणया ऋग्विशिष्टानुवचनान्तराण्येव सर्वत्र विकृतौ प्रवर्तन्ते, तत्र पञ्चदश ऋचो नियता इति ज्ञापनार्थत्वेन सार्थक्यं वचनस्येति ऋचामनुवचनाङ्गत्वात् काम्येष्वतिदेशोपपत्तिरित्यर्थः । ननु ऋचामनुवचनफलप्रकाशकतया अनुवचनाङ्गत्वस्य वक्तव्यतया काम्यफलाप्रकाशकत्वेन कथं काम्यत्वं काम्यानुवचनाङ्गत्वं ? स्यादित्यत आह—**गुणत्वमपीति** ॥ तथाच ऋचां करणत्वेनानुवचनस्य जनकतयैवाङ्गत्वोपपत्तेरनुवचनफलाप्रकाशकत्वेऽपि विकृतावनुवचन[फल]प्रकाशन रूपद्वारलोपप्रयुक्तयोः ऊहबाधयोर्न प्रसक्तिरित्यर्थः । नन्वनुवचनान्तरविधाने क्रतुप्रकरणग्राह्यत्वाभावेन बहिःक्रत्वनुष्ठानं स्यादित्यत आह—**अनुशब्देनेति** ॥ अनुशब्देनानन्तर्यप्रतीत्या पूर्वानुष्ठीयमाननिगदानन्तर्यप्रतीत्या बहिः प्रयोगे तदनुपपत्तेः क्रतुमध्ये प्रयोगसिद्धिरित्यर्थः । ननु 'एकविंशतिमनुब्रूयात्' इति वचनविहितानुवचनस्य सामिधेनीकरणकानुवचनान्तरत्वे तस्य प्राकृतकार्यकरत्वाभावेन चोदकप्राप्तपञ्चदशसामिधेन्य-

---

१. प्रकृत इति पाठान्तरम् । २. तै. सं. २-५-१०.

प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम् । अतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः । न च तर्हि तदङ्गत्वमेवोपवीतस्य किं न स्यात् । तेषां विकृतित्वेन प्राकृताङ्गनिराकाङ्क्षाणां प्रकरणाभावाद्वाचनिकाङ्गसन्दंशाभावाच्च । अतो महाप्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारकतया तत्कर्तृभिः सर्वप्रयोगारम्भे कार्यमिति सिद्धम् ॥ ११ ॥

## (१२)—गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात् ॥

आधाने पवमानेष्टितः प्रदेशान्तरे 'वारणो यज्ञावचरो वैकङ्कतो यज्ञावचरः' इति श्रुतम् । तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षादयज्ञरूपाधाने

---

नुष्ठानं पृथक्कर्तव्यं स्यादित्यत आह—**वैकृतानुवचनेनैवेति** ॥ **प्रसङ्गादिति** ॥ तथा च काम्येन नित्यसिद्धेर्वक्ष्यमाणतया फलार्थोपात्तानुवचनान्तरेणैव प्राकृतानुवचनकार्यसिद्ध्यङ्गीकारात् पशुकामप्रयोगे चमसस्येव नित्यानुवचननिवृत्तिरित्यर्थः । ननु विकृतावान्तरप्रकरणं स्यादित्यत आह—**अत इति** ॥ विकृतौ प्राकृताङ्गविधिसंदष्टत्वाभावादित्यर्थः । ननु तर्हि काम्याङ्गत्वमुपवीतस्यास्त्वित्याशंक्य समाधत्ते—**न चेत्यादिना** ॥ **तदङ्गत्वम्**—काम्याङ्गत्वम् । परिहरति—**तेषामिति** ॥ काम्यानां विकृतित्वेन प्राकृताङ्गैर्निराकाङ्क्षत्वेन अङ्गाकांक्षाभावादित्यर्थः । ननु निविदङ्गत्वं स्यादिति चेन्न ; तासां प्रकरणाभावादभितः कीर्तनाभावात् संनिधेरपि काम्यैर्व्यवधानादिति भावः । अधिकरणार्थमुपसंहरति—**अत इति** ॥

सूत्रार्थस्तु—अवान्तरप्रकरणानुवृत्तिसंदेहे निविद्भिर्व्यवधानादुपव्ययते इत्यस्य सामिधेनीवाक्येनैकवाक्यत्वाभावः स्यादिति ॥ ११ ॥

**गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्** ॥ **आधान इति** ॥ अभिक्रमणोपवीतयोरानर्थक्यतदङ्गन्यायेन क्रत्वन्वयसिद्धिमुपजीव्य तद्विशेषे विचारिते सम्प्रत्यानर्थक्यतदङ्गन्यायापवादः क्रियत इति सङ्गतिः । पात्राणि पवमानेष्ट्यङ्गानि, उत यज्ञमात्राङ्गानीति संशयः ॥ **पवमानेष्टित इति** ॥ पवमानेष्टिविधानप्रदेशादित्यर्थः ॥ **प्रदेशान्तर इति** ॥ एतेन पात्राणामिष्टिसन्निधावाम्नाने सत्यनुवादस्य सति संभवे सन्निहितगामित्वात् तदङ्गत्वापत्त्या सिद्धान्तासिद्धिः स्यादिति सूचितम् ॥ **यज्ञावचर इति** ॥ यज्ञानुष्ठानहेतुरित्यर्थः । अवचार्यते अनुष्ठीयते अनेनेति व्युत्पत्तेः ॥ **अयज्ञरूप इति** ॥ संस्कृतदेशविशेषे अग्निनिधानरूपस्याधानस्य यज्ञरूपत्वाभावेन यज्ञोद्देशेन

निवेशासम्भवात् आनर्थक्यतदङ्गन्यायेन पवमानेष्टिरूपे यज्ञ एव निवेश इति प्राप्ते—

भाष्यकारेण तावदेवं सिद्धान्तितम् । आधानप्रकरणे पठितेन 'यदाहवनीये जुहोति'[1] इति वाक्येन पवमानहविषामग्न्यङ्गत्वावगतेराधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासम्भवात् स्वरूपेण च पवमानेष्टीनामसन्निहितत्वाद्वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्वं सर्वयज्ञाङ्गत्वं वेति ॥

वार्तिककारस्तु—न तावदनारभ्यवाक्येन पवमानहविषामग्न्यङ्गत्वम् । तेन सर्वहोमानुवादेनाहवनीयविधानात् पवमानेष्टीनामेव विशिष्योपस्थित्यभावे सप्तम्या प्राधान्यलक्षणायां प्रमाणाभावात् । नापि पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना । तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्तेः । अस्तु वा आधानप्रकरणे तत् ।

---

विधीयमानपात्राणां तदङ्गत्वासंभवादित्यर्थः ॥ **आनर्थक्येति** ॥ आधाने आनर्थक्यादाधानाङ्गभूतपवमानेष्टिषु यज्ञरूपेषु निवेश इत्यर्थः ॥ **भाष्यकारेणेति** ॥ यदि पवमानहवींषि आधानाङ्गं स्युः तदा आनर्थक्यतदङ्गन्यायः स्यात् । न त्वेतदस्ति । आधानप्रकरणे हि श्रूयते 'यदाहवनीये जुहोति' इति । तत्र च सप्तमी प्राधान्यं लक्षयति तप्ते पयसीतिवत् । ततश्चाहवनीयार्थानि पवमानहवींषि नाधानाङ्गत्वं गच्छेयुः, सत्येवं[न] त्वानर्थक्यतदङ्गन्यायः । किं तु सर्वप्रकृतियज्ञाङ्गत्वमेव भजेयुः अनारभ्यवाक्यसमानार्थत्वाय सर्वहोमार्था वा भवेयुरिति भाष्यकाराशय इत्यर्थः । पवमानेष्ट्यङ्गत्वं निराकरोति—**स्वरूपेण चेति** ॥ प्रदेशान्तर इति पूर्वमेवोक्तत्वादित्यर्थः ॥ **वार्तिककारस्त्विति** ॥ पवमानहविषामयगन्यङ्गत्वम् अनारभ्याधीतवाक्येन वा पवमानेष्टिप्रकरणस्थवाक्येन वेति विकल्प्य नाद्य इत्याह—**न तावदिति** ॥ जुहोतिना होमत्वावच्छिन्नस्यैवोपस्थितत्वेन पवमानेष्टिमात्रविषयत्वे प्रमाणाभावेन तेन वाक्येन पवमानेष्ट्यङ्गत्वासिद्धेरित्यर्थः ॥ **सप्तम्या प्राधान्यलक्षणायामिति** ॥ 'तप्ते पयसि' इत्यत्र तु स्ववाक्योपस्थितपयःसंस्कार्यत्वात् प्राधान्यलक्षणायामपि प्रकृते पवमानेष्टीनां विशिष्योपस्थित्यभावेन लक्षणा न युक्तेत्यर्थः । यद्यपि पवमानहविषामपि यजिनोपस्थितिरस्ति, तथापि तेषां प्राकृतेत्थंभावेन निराकाङ्क्षत्वेन निराकाङ्क्षत्वात् न पात्राणां तदङ्गत्वमिति भावः । द्वितीयं निराकरोति—**नापीति** ॥ वाक्यान्तरस्य प्रत्यक्षपठितत्वाभावेन कल्पनीयतया कल्पनां विनैव पात्राणां सर्वयज्ञार्थत्वसंभवात् न

---

१. तै. सं. १-६-५

तथापि तेनाधानाङ्गभूतहोमानामेवाहवनीयाधिकरणकत्वसिद्धिरेव न त्वग्न्यङ्गत्वसिद्धिः; सप्तम्या लाक्षणिकत्वापत्तेः । अत एव तत्रत्यमाहवनीयपदमाधानजन्योत्पत्त्यपूर्वविशिष्टाग्निलक्षकमेव । परमापूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमसत्त्वात् । न चैवं पवमानेष्टिहविश्श्रपणादौ गार्हपत्यादिप्रापकाभावः । तत्र मुख्यगार्हपत्याद्यधिकरणत्वबाधेऽपि सति सम्भवे प्रकृतिदृष्टगौणगार्हपत्यादिबाधे प्रमाणाभावात् । अतश्च सत्यपि वचनान्तरे पवमानेष्टीनामग्न्यङ्गत्वे प्रमाणाभावादाधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थतैव सूपपादनीया । सर्वत्र स्वोद्देश्यस्यापूर्वव्यभिचारे अपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशः । यथा 'व्रीहीन्' इत्यादौ ।

---

कल्पनागौरवं युक्तमित्यर्थः । भाष्यकारोक्तमनुसृत्याप्याह—**अस्तु वेति** ॥ **तत्**—'यदाहवनीये जुहोति' इति वाक्यम् ॥ **आधानाङ्गभूतेति** ॥ सर्वौषधिहोमादीनामित्यर्थः । तथा च सप्तम्या अधिकरणत्वबोधनात् आधानाङ्गभूताहवनीये कर्तव्य इति यथाश्रुतार्थेनैवोपपत्तौ द्वितीयार्थलक्षकत्वं स्वीकृत्य पवमानेष्ट्यङ्गकत्वमग्नीनां न युक्तमित्यर्थः । **अत एव** आधानाङ्गहोमपरत्वाज्जुहोतेः ॥ **आधानजन्येति** ॥ आधानाङ्गहोमानामाहवनीयसाध्यत्वात् पवमानेष्ट्यनन्तरमेव मुख्याहवनीयसिद्धेः ततः पूर्वं मुख्याहवनीयाभावात् आधानमात्रजन्योत्पत्त्यपूर्वविशिष्टाग्नावाहवनीयाङ्गहोमाः कार्या इति वाक्यार्थ इत्यर्थः । नन्वेवमाधानाङ्गभूतहोमानामाहवनीयाधिकरणत्वाङ्गीकारे पवमानेष्ट्यङ्गहविःश्रपणस्य 'गार्हपत्ये हवींषि श्रपयति' इति वाक्यविहितस्याग्निर्न स्यात् । चोदकेन पवमानहविस्संस्कृतगार्हपत्यस्यैव प्राप्तत्वेन पवमानहविर्वेळायां तादृशाग्नेः प्राप्त्यसंभवादित्यत आह—**न चेत्यादि** ॥ **गौणगार्हपत्येति** ॥ परमापूर्वविशिष्टाग्न्यभावेऽप्याधानजन्योत्पत्त्यपूर्वविशिष्टाग्नेरेव गौणगार्हपत्यस्याधिकरणत्वसंभवादित्यर्थः । 'अग्निहोत्रहवण्या हवींषि निर्वपति' इतिवदिति भावः ॥ **अतश्चेति** ॥ **वचनान्तरे**—पवमानेष्टिप्रकरणस्थे 'यदाहवनीये जुहोति' इति वचनान्तरे ॥ **प्रमाणाभावादिति** ॥ तद्वचनस्याधानाङ्गहोमाङ्गत्वपरताया उक्तत्वादित्यर्थः । नन्वाधानाङ्गत्वे कथं सर्वयज्ञार्थत्वसिद्धिरित्यत आह—**आधानाङ्गत्वेऽपीति** ॥ तदेवोपपादयति—**सर्वत्रेति** ॥ 'व्रीहीन् प्रोक्षति' इत्यादौ प्रोक्षणादेर्व्रीह्याद्युद्देशेन विधाने व्रीहीणां लोकप्रसिद्धानां प्रोक्षणानर्थक्यात् अपूर्वसाधनलक्षणा आवश्यकीति प्रकरणस्थेन 'व्रीहिभिर्यजेत' इति वाक्येनापूर्वसाधनत्वावगमात् अपूर्वसाधनव्रीह्युद्देशेन प्रोक्षणादिविधानान्नानर्थक्यमिति शास्त्रमर्यादा । प्रकृते च यज्ञशब्देनैवापूर्वाव्यभिचारप्रतीत्या तदर्थं प्रकरणानुप्रवेशस्यानावश्यकत्वात्, यज्ञशब्देन च यज्ञत्वेन सर्वयज्ञप्रतीतेः सर्वयज्ञार्थत्वमेव युक्त-

अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः । प्रकृते तु यज्ञपदेनैवाव्यभिचरितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानसम्बन्धस्यैवाप्रसक्तौ क्व तदङ्गावतारः । एवं सत्यपि यदि पवमानेष्टिसंनिधौ पात्राणि श्रूयेरन् तदा अनुवादस्य सति सम्भवे सन्निहितगामित्वात् 'व्रीहिभिर्यजेत' इत्यादिवद्भवेत् प्रकृतमात्रविषयत्वम् । न त्वेतदस्ति । पवमानेष्टीनां प्रदेशान्तरस्थत्वात् । अतो वारणादीनां सर्वयज्ञार्थत्वमेव ॥

प्रयोजनं पवमानेष्ट्यनन्तरं पात्राणां नाशे दर्शाद्यर्थमनियतानामुत्पत्तिः । सिद्धान्ते वारणादीनामेवेति ॥ १२ ॥

## (१३)—मिथश्चानर्थसम्बन्धः ॥ २३ ॥

आज्यभागक्रमे श्रुतानां वार्त्रघ्नीवृधन्वतीमन्त्राणां लिङ्गक्रमौ बाधित्वा 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्'[1] इति वाक्याभ्यां प्रधानाङ्गत्वम् । इष्यते च लिङ्गस्यापि मन्त्रगतस्य वाक्येनापि ब्राह्मणगतेन बाधः 'यद्यप्यन्यदेवत्यः' इत्यादिनेति प्राप्ते—

अबाधेनोपपत्तौ बाधायोगात् न प्रधानाङ्गत्वम् । न हि सोमदेवत्यस्य मन्त्रस्य लिङ्गाविरोधः सम्भवति । सोमस्य देवतात्वाभावात् ; अमावास्यायामधिष्ठानत्वस्याप्यसम्भवाच्च । वस्तुतस्तु—वाक्यस्यापि व्यवस्थामात्रकरणे लाघवान्न प्रधानाङ्गताबोधकत्वम् । व्यवस्था च पौर्णमास्यां यौ आज्यभागौ तत्र वार्त्रघ्नी

---

मित्यर्थः ॥ प्रधानसम्बन्धस्यैवेति ॥ आधानसम्बन्धस्यैवेत्यर्थः । तथा च नात्र आनर्थक्यतदङ्गन्यायेनाधानाङ्गहोमाङ्गत्वप्रसक्तिरिति भावः । ननु प्रकरणापेक्षाभावेऽपि संनिधानादाधानाङ्गत्वं स्यादिति शङ्कां निराकरोति—**एवं सत्यपीति** ॥ उपसंहरति—**अत इति** ॥ **प्रयोजनमिति** ॥ पूर्वपक्षे पवमानेष्ट्यनन्तरं वारणादिपात्राणां नाशापहारादौ तेषां पवमानेष्टिमात्राङ्गत्वात् दर्शाद्यङ्गत्वाभावेन दर्शाद्यर्थमनियतयत्किंचिद्वृक्षप्रकृतिकपात्राणामुत्पत्तिः । सिद्धान्ते तु वारणादीनां सर्वयज्ञार्थत्वेन वारणादीनामेव संपादनमित्यर्थः । ननु वार्तिककारपक्षेऽधिकरणान्तरत्वाभावात् सूत्रं व्यर्थं स्यादिति चेन्न ; तन्मते पूर्वाधिकरण एव शङ्कोत्तरत्वेन व्याख्यानेन (अत्र ग्रन्थपातः । मातृकायामपि एतत्पादान्तसूत्रपञ्चकव्याख्याग्रन्थपातदर्शनादत्र न लिखितः)

---

१. तै. सं २-५-२.

इत्यादिरूपेण कालकृता पौर्णमासीसंज्ञकप्रधानाङ्गभूताज्यभागयोर्वार्त्रघ्नी इत्येवं कर्मकृता वेत्यादिविशेषः कौस्तुभे द्रष्टव्यः ॥ १३ ॥

(१४)—आनन्तर्यमचोदना ॥ २४ ॥ वाक्यानां च समाप्तत्वात् ॥ २५ ॥

दर्शपूर्णमासयोः 'हस्ताववनेनिक्ते' 'उलपराजीस्तृणाति' इति, तथा ज्योतिष्टोमे 'मुष्टीकरोति वाचं यच्छति' 'दीक्षितमावेदयति' इति श्रुतम् । तत्र हस्तावनेजनं हस्तसंस्कारार्थम् ; मुष्टीकरणवाग्यमौ च मनःप्रणिधानार्थौ । अत स्तत्त्रयमपि तावत्करिष्यमाणकर्मार्थमित्यसंदिग्धम् । तत्र करिष्यमाणकर्म आनन्तर्यादेकवाक्यत्वाद्वा उलपराजिस्तरणदीक्षितावेदनरूपमेवेति प्राप्ते—

आनन्तर्यस्यावर्जनीयत्वादङ्गताग्राहकत्वानुपपत्तेः ग्राहकत्वेऽपि वा प्रकरणेन बाधात् 'पश्य मृगो धावति' इतिवत् आकाङ्क्षाविरहेण चाख्यातद्वयस्य यच्छब्दाद्युपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारकस्यास्य प्रकरणादङ्ग-प्रधानसाधारणस्वोत्तरपदार्थाङ्गत्वं हस्तावनेजने । मुष्टीकरणवाग्यमयोस्तु अङ्गुलि-वाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम् ॥ १४ ॥

(१५)—शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथः तेषामसम्बन्धात् ॥ १६ ॥ व्यवस्था वार्थस्य श्रुतिसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥

दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' इत्यत्र नाग्निदेवताकहविष्ट्वमुद्देश्य-तावच्छेदकम् ; विशिष्टोद्देशे वाक्यभेदापत्तेः । अपि तु तद्धितोपात्तं हविष्ट्वमेव । कथंचिद्वाग्निसम्बन्धिहविष्ट्वं तथा । अस्ति चाग्निसम्बन्धोऽग्नीषोमीयादावपि । अथवा 'पुरोडाशं चतुर्धा करोति' इत्यनेनोपसंहारादग्निसम्बन्धिपुरोडाशस्यैव तत् ; न त्वाज्यस्यापीति । अस्तु वा देवतात्वस्यापि कथञ्चिद्विवक्षा, तथापि द्विदेवत्येऽ-प्यग्नेरस्त्येव देवतात्वम् । द्वन्द्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसम्बन्धात् । अतः सर्वेषां चतुर्धाकरणमिति प्राप्ते—

१. तै. ब्रा. ३-२-१०.　　२. तै. सं ५-२-१.

प्रचुरप्रयोगात्तद्धितस्य देवतात्व एव शक्तस्य सम्बन्धमात्रलक्षकत्वानुपपत्तेर्न तावदग्निसम्बन्धित्वस्य विवक्षा । न च देवतात्वं द्विदेवत्ये प्रत्येकवृत्ति ; इतरेतरयोगरूपचार्थविहितद्वन्द्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव व्यासज्यवृत्त्यखण्डोपाधिरूपदेवतात्वाङ्गीकारात् । अत एव द्वन्द्वान्त इत्यादिप्रवादस्तु यत्रोद्देश्यत्वेन साहित्याविवक्षा तत्रेति ध्येयम् । अतः केवलादग्निपदादुत्पन्नस्तद्धितः नान्यसापेक्षस्य देवतात्वमभिवदितुं क्षमः । सामर्थ्यविघातापत्तेः । यत्त्वग्निदेवताकत्वमविवक्षितमिति, तन्न । तथात्वे न तावत् प्रकृतद्रव्यत्वमात्रमपूर्वसाधनत्वलक्षकम् ; तस्य देवतातद्धितेनानुक्तेः । नापि हविष्ट्वम् ; तत्परत्वस्य देवतावाचित्वप्रतीतिं विनानुपपत्तेः । न हि हविषि वाच्ये देवतातद्धित एवेति स्मृत्या नियम्यते ; तद्वाचित्वेऽपि सम्बन्धसामान्ये तद्धितस्य सत्त्वात् । अतः प्रथमावगतस्य देवतात्वस्यैवोद्देश्यतावच्छेदकत्वम् । तस्य त्वनुयोगिप्रतियोगिसापेक्षत्वात् हविरार्तिन्यायेन 'अर्धमन्तर्वेदि' इतिवत् अग्निदेवताकहविष्ट्वस्यैव लक्षणयोद्देश्यताच्छेदकत्वसिद्धिः । तेन च 'पुरोडाशं चतुर्धा करोति' इति सामान्यवचनस्योपसंहारः । तस्मादाग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम् ॥ १५ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयस्याध्यायस्य प्रथमः पादः

---

अथ तृतीयाध्यायस्य द्वितीयः पादः

**(१)—अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १ ॥ संस्कारकत्वादचोदिते न स्यात् ॥ २ ॥**

एवं श्रुत्युपयोगिविचारे वृत्ते अधुना लिङ्गोपयोगिविचारः प्रस्तूयते । तत्र

---

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात् तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ श्रुति[लिङ्ग]विनियोगरूपार्थभेदात् पादभेदः । लिङ्गस्य श्रुतिकल्पकतया विनियोजकत्वेन लिङ्गविनियोगस्य श्रुतिविनियोगोपजीवित्वात् प्रबलश्रुतिविनियोगविचारानन्तरं दुर्बललिङ्गविनियोगविचारस्यावश्यं प्राप्तत्वाच्चेत्याह—श्रुत्युपयोगीति ॥ श्रुतिसंबन्धीत्यर्थः ।

लिङ्गं नाम अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्ववाचकपदकल्पनानुकूला कल्प्य-पदपदार्थनिष्ठा योग्यता। यथा 'स्रुवेणावद्यति' इत्यत्र स्रुवनिष्ठा द्रवद्रव्यपद-कल्पनानुकूला। एवं मन्त्रेषु स्वार्थवृत्त्युद्देश्यतावाचिपदकल्पनानुकूला स्ववृत्तिकारक-त्ववाचिपदकल्पनानुकूला च योग्यता लिङ्गम्। सा च पदरूपश्रुतिकल्प-कत्वात्तद्द्वारा तदर्थविनियोगे प्रमाणम्। तत्र वस्तुसामर्थ्यरूपस्य लिङ्गस्य विशेष-विचारासम्भवान्मन्त्रसामर्थ्यरूपस्य किं शक्य एवार्थे विनियोजकत्वम्, उत

---

एवमुत्तरत्रापि। प्राधान्येनेति विचारयोरपि शेषः। तेनाभिक्रमणादेः प्रकरणादिना अङ्गत्वस्य विचारितत्वेऽपि तस्य प्राधान्याभावान्न दोषः। एवमैन्द्र्यादौ श्रुतिविनियोगविचारेऽपि द्रष्टव्यम्॥ **लिङ्गं नामेति**॥ लिङ्गं सामर्थ्यम्। तच्च अर्थगतं शब्दगतं च। तदुभयसाधारणमिदं लक्षणम्॥ **अङ्गत्वघटकीभूतेति**॥ परोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वमङ्गत्वमिति लक्षणस्य 'शेषः परार्थत्वात्' इति सूत्रेणोक्तत्वेन तद्घटकत्वात् कृत्युद्देश्यत्वकृतिकारकत्वयोः लिङ्गस्थले तदन्यतरवाचकशब्दाभावेन तत्कल्पनानुकूल-शब्दार्थान्यतरानिष्ठयोग्यतैव लिङ्गमित्यर्थः। तत्रार्थनिष्ठं लिङ्गमुदाहरति—**स्रुवेणेति**॥ स्रुवस्य द्रवद्रव्यावदाने योग्यत्वेन 'स्रुवेण द्रवद्रव्यमवद्यति' इति वाक्यार्थपर्यवसानार्थं द्रवद्रव्यपदाध्याहारस्यावश्यकत्वेन तदनुकूलयोग्यतायाः स्रुवनिष्ठत्वाल्लिङ्गलक्षणोपपत्तिः। द्वितीयाया उद्देश्यतावाचित्वादित्यर्थः। शब्दगतं लिङ्गमुदाहरति--**एवमिति**॥ 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य बर्हिर्लवनप्रकाशनसामर्थ्यसत्त्वेनानेन मन्त्रेण बर्हिः प्रकाशयेदिति वाक्यार्थप्रतीतिपर्यवसानार्थमनेन मन्त्रेणेति करणत्वप्रतिपादकतृतीयान्त-पदस्य बर्हिरिति उद्देश्यतावाचकद्वितीयान्तपदस्य च कल्पनेनोभयत्र लिङ्गविनियोग इत्यर्थः॥ **सा चेति**॥ योग्यता चेत्यर्थः। तस्य विनियोजकत्वमुपपादयति—**पद[रूप]श्रुतिकल्पकत्वादिति**॥ द्वितीयातृतीयाद्यन्तपदकल्पकत्वेन श्रुतिरेव विनियोजिकेति श्रुतिद्वारा विनियोजकत्वमित्यर्थः॥ **वस्तुसामर्थ्यरूपस्येति**॥ स्रुवस्वधित्याद्यर्थ-गतलिङ्गस्येत्यर्थः॥ **विचारासम्भवादिति**॥ तत्र गौणमुख्यादिभेदाभावेन विचारा-प्रवृत्तेरित्यर्थः॥ **मन्त्रसामर्थ्यरूपस्येति**॥ नन्वत्र लिङ्गस्य विनियोजकत्वं न विचार्यते, किं तु तद्विशेषः। स चानुपपन्नः, लिङ्गस्य विनियोजकत्वस्यैवासिद्धत्वेन तद्विशेषविचारानुपपत्तेरिति चेन्न; अर्थप्रकाशनेन मन्त्राणामुपयोगस्य मन्त्राधिकरण-सिद्धत्वात् अर्थप्रकाशकत्वविशेषस्येदानीं क्रियमाणत्वेनानुपपत्त्यभावादिति भावः।

जघन्यवृत्तिप्रतिपाद्येऽपीति संदेहे क्रतुप्रकरणाम्नातमन्त्रस्य 'बर्हिर्देवसदनं दामि' इत्यादेर्मुख्य इव जघन्येऽप्युलपराज्यादौ स्मारकाकाङ्क्षादिरूपसामग्र्यविशेषात्तत्साधारण्येनैव विनियोगः । "यष्टीः प्रवेशय" इत्यादिवदाकाङ्क्षादिरूपतात्पर्यग्राहकसत्त्वे मुख्यार्थबाधस्याकिञ्चित्करत्वादिति प्राप्ते—

शक्यसम्बन्धग्रहसापेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वात् प्रथमप्रतीतमुख्यविनियोगेन चरितार्थस्य मन्त्रादेर्जघन्यार्थविनियोजकत्वानुपपत्तेः । अत एव तत्स्मारकाकाङ्क्षाया ध्यानाद्युपायान्तरेणैव निवृत्तिः । अत एव यत्र प्रकरणे मुख्या-

---

जघन्यवृत्तीत्यनेन गौणीलक्षणयोर्ग्रहणम् ॥ **क्रतुप्रकरणेति** ॥ 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य दर्शपूर्णमासप्रकरणसमाम्नानेन प्रयोजनाकांक्षासत्त्वेन वेदिस्तरणार्थबर्हिष इव उलपराज्यादिबर्हिषोऽपि परिस्तरणाद्यर्थस्य स्मारकाकांक्षासत्त्वेन बर्हिश्शब्दार्थत्वस्य साम्याच्च मन्त्रस्योभयत्र विनियोग इत्यर्थः । मुख्यार्थबाधस्यायुक्तत्वादित्यत आह—**यष्टीरित्यादि** ॥ तात्पर्यग्राहकप्रमाणानुरोधेन तत्र मुख्यार्थबाधेन यष्टिधरे लक्षणाङ्गीकारेण तद्वदिहापि उभयाकांक्षारूपतात्पर्यग्राहकानुरोधेन गौणार्थे विनियोगाङ्गीकारेणोभयत्र विनियोगसम्भवादित्यर्थः । वस्तुतस्तु नात्र मुख्यबाधः, बर्हिश्शब्दस्य बर्हिराज्याधिकरणन्यायेन जातिगौणमुख्ययोः साधारण्येनोभयत्र विनियोगसम्भवादिति द्रष्टव्यम् ॥ **शक्यसम्बन्धेति** ॥ मन्त्रैरर्थप्रतीत्या हि शब्दार्थे मन्त्राणां विनियोगो वाच्यः । तत्र मन्त्रश्रवणेन शक्यार्थस्यैव प्रथमं प्रतीयमानत्वेन तत्रैव विनियोगो युक्तः, गौणार्थस्य शब्दात्प्रतीतावपि शक्यबोधोत्तरं तात्पर्यानुपपत्त्यादिना गौणार्थप्रतीत्या तत्प्रतीतेर्विलम्बितत्वेन न गौणार्थविनियोजकत्वमित्यर्थः । ननु गौणप्रतीतेर्विनियोजकत्वाभावेऽपि मन्त्राणां प्रयोजनाकांक्षया गौणे विनियोगोऽस्त्वित्यत आह—**प्रथमप्रतीतेति** ॥ मुख्यार्थविनियोगेन प्रयोजनाकांक्षाया निवृत्तत्वात् नाकांक्षावशेनापि मन्त्राणां गौणार्थे विनियोग इत्यर्थः । ननु मन्त्राकांक्षाभावेऽपि गौणार्थस्य स्मारकाकांक्षासत्त्वादन्यतराकांक्षयैव विनियोगोऽस्त्वित्यत आह—**अत एवेति** ॥ मुख्यार्थे मन्त्रस्य विनियुक्तत्वादेवेत्यर्थः ॥ **ध्यानादीति** ॥ आदिना उपद्रष्टृवचनादिपरिग्रहः । ततश्च गौणार्थस्मारकाकांक्षाया अन्यथापि निवृत्तिसिद्धेर्न मन्त्रापेक्षेत्यर्थः । ननु मुख्यार्थस्य प्रकरणे विनियोगाभावात् 'अगन्म' इत्यादीनां वैयर्थ्यं स्यादित्यत आह—**अत एवेति** ॥ तत्र मन्त्राम्नानबलादेव जपोपस्थानादौ विनियोगकल्पनेन तदुच्चारणस्यादृष्टार्थत्वकल्पनात्तत्रापि न गौणार्थे विनियोग इत्यर्थः । नन्वेवं पूषानुमन्त्रणादी-

र्थोपयोगो न क्लृप्तः तत्र मन्त्राम्नानबलादेव तत्कल्पना। यत्र तु विरोधिगुणान्तरावरोधः प्रकरणे तत्र सामान्यसम्बन्धबोधकप्रमाणसत्त्वे उत्कर्षः, यथा दर्शपूर्णमासप्रकरणाम्नातपूषानुमन्त्रणमन्त्रादेः; यागानुमन्त्रणसमाख्याया एव सामान्यसम्बन्धबोधकत्वात्। उत्कर्षस्याप्यसम्भवे प्रकरण एव जघन्यार्थे विनियोगः। यथा मनोतादौ। अप्रयुक्तलक्षणादिना तस्याप्यसम्भवे तदर्थाभिधानस्यैवादृष्टार्थत्वम्। यथा जपादौ॥ १॥

**(२)—वचनात्त्वयथार्थमैन्द्री स्यात्॥३॥ गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात्॥ ४॥**

---

नामपि दर्शपूर्णमासप्रकरणाम्नानात् गौणार्थे विनियोगः स्यादित्यत आह—**यत्र त्विति**॥ अग्न्याद्यवरुद्धत्वेन प्रकृतौ निवेशासंभवेन न प्रकृतौ निवेश इत्यर्थः। ननु तन्मन्त्राणां वैयर्थ्यमेव स्यादित्यत आह—**सामान्यसम्बन्धेति**॥ यागानुमन्त्रणसमाख्यया यागानुमन्त्रणे विनियोगावश्यकतया प्रकृतावुत्पत्तिशिष्टाग्न्याद्यवरोधेन तत्र निवेशासम्भवेऽपि पूषदेवत्यकर्मण्युत्कर्ष इत्यर्थः। नन्वेवं मनोतामन्त्रस्य अग्नीषोमीयपशावसमवेतार्थत्वादुत्कर्षः स्यादित्यत आह—**उत्कर्षस्याप्यसम्भव इति**॥ सामान्यसम्बन्धबोधकप्रमाणाभावेनोत्कर्षासम्भव इत्यर्थः॥ **जघन्यार्थ इति**॥ लक्षणादिना अग्नीषोमादिप्रकाशन एव विनियोग इत्यर्थः॥ **अप्रयुक्तलक्षणेति**॥ तदर्थप्रयोगाभावस्थल इत्यर्थः॥ **जपादाविति**॥ अदृष्टार्थं प्रयोगः, न तु गौणार्थ इत्यर्थः। अत्र मुख्यत्वमूहसाधनेषु परिगणितमाचार्यैः—"मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिः। प्रयुक्ताः प्राकृता मन्त्रा गताः कार्यातिदेशतः॥ विकारेष्वनिषिद्धोहकार्यापन्नेषु पञ्चधा। अर्थान्तरेषु पूर्वार्थद्वारेणोहं व्रजन्ति हि॥' इति॥

सूत्रार्थस्तु—यतः कारणात् **अर्थाभिधानसंयोगात्**—अर्थाभिधानलक्षणद्वारसंयोगात् **मन्त्रेषु** [**शेषभावः**] क्रतुशेषत्वम् [**स्यात्**] **तस्मादुत्पत्तिसम्बन्ध** औत्पत्तिकेन मुख्यार्थेनैव संयोगः स्यात्॥ तेनार्थेन **नित्यसंयोगादिति**॥ १॥

**वचनात्त्वयथार्थमैन्द्री स्यात्**॥ आपवादिकीं सङ्गतिमभिप्रेत्याह—**यत्र त्विति**॥ अत्र प्राचीनैः 'निवेशन' इति मन्त्रस्योदाहृतत्वेऽपि शाखाभेदेन 'कदाचन' इत्यस्यापि ऐन्द्रीत्वेन विनियोगात् न विरोधः। किमनेन मुख्यस्य इन्द्रस्य

यत्र तु गौणार्थे तात्पर्यग्राहकं वचनं विद्यते। यथा अग्नौ "कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादौ। तत्र गौण एव गार्हपत्ये विनियोगः। अथ ऐन्द्र्येत्युपक्रमस्थतद्धितश्रुत्या मुख्यसामर्थ्योज्जीवनात् जघन्यद्वितीयाया एव तदनुरोधेन प्रतियोगित्वे लक्षणा गार्हपत्यसमीपे स्थित्वेति। गुणभूतप्रातिपदिक एव वा यज्ञसाधनत्वसादृश्याद्गौण्या गृहपतिमत्त्वयोगेन वा इन्द्रप्रकाशकत्वम्। अस्तु वा रूढत्वादग्नेरेव धातुवाच्यसमीपस्थितिं प्रति कर्मत्वम्, न तु मन्त्रसाध्याभिधानं प्रति; तस्याशाब्दत्वात्। न च 'उपान्मन्त्रकरणे' इति स्मृत्या आत्मनेपदविधानेन धातोर्मन्त्रकरणार्थकत्वावगतेस्तस्याभिधानलक्षकत्वावगतिः; आत्मनेपदबलेन समीपस्थिते-

---

प्रकाशनं कर्तव्यम्, उत गौणस्य गार्हपत्यस्येति संशये सिद्धान्तेनोपक्रमते—**गौण एवेति**॥ **तद्धितश्रुत्येति**॥ 'सूक्तहविषोः' इति नियमेनेन्द्रप्रकाशिकाया ऋच ऐन्द्रीपदेन बोधनेन इन्द्रस्य मुख्यार्थत्वादुपक्रमस्थत्वेन तद्धितस्यार्थान्तरकल्पनानुपपत्तेरित्यर्थः॥ **जघन्येति**॥ चरमश्रुताया इत्यर्थः॥ **प्रतियोगित्व इति**॥ गार्हपत्यसमीपे स्थित्वेत्यर्थकरणेन सामीप्यप्रतियोगित्वात् गार्हपत्यस्येत्यर्थः। प्रत्ययार्थप्राधान्यमभिप्रेत्याह—**गुणभूतेति**॥ गृहपतिवदिन्द्रस्यापि यज्ञसाधनत्वात् इन्द्र एव गार्हपत्यशब्देनाभिधीयत इत्यर्थः। तथा सति गृहपतिपदेनैवोपपत्तौ तद्धितवैयर्थ्यापत्तेराह—**गृहपतिमत्त्वेति**॥ तथा च गार्हपत्यशब्देन योगवृत्त्येन्द्र एव प्रकाश्य इत्यर्थः। ननु गार्हपत्यशब्दस्याग्नौ रूढत्वात् तस्यैव ग्रहणं युक्तम्, न तु योगेनेन्द्रस्य। अन्यथा रथकाराधिकरणविरोधापत्तिरित्यत आह—**अस्तु वेति**॥ **समीपस्थितिं प्रतीति**॥ ननु समीपस्थितेरकर्मकत्वात् कथं गार्हपत्यस्य कर्मत्वमुच्यत इति चेन्न; गार्हपत्यमुपेत्य समीपे स्थित्वा अभिदधीत इत्येवं प्राप्त्यङ्गकं समीपस्थानमिहोपस्थानशब्दार्थः। न समीपस्थानमात्रम्, तेन समीपस्थानस्याकर्मकत्वेऽपि तदङ्गभूतायाः प्राप्तेः सकर्मकत्वात् तदपेक्षया गार्हपत्यस्य कर्मत्वात् विशेषणत्वोपपत्तिः। यथा वलाहकाद्विद्योतते विद्युत् इत्यत्र निःसरणाङ्गके विद्योतने द्युतेर्वृत्त्या द्योतनाङ्गभूतनिःसरणे अपादानत्वाद्वलाहकस्य विशेषणत्वं तद्वदिति भावः॥ **अशाब्दत्वादिति**॥ स्थितेरेव धातुवाच्यत्वेन मन्त्रकरणकाभिधानस्य शब्दादप्रतीतेरित्यर्थः॥ मन्त्रकरणकाभिधानस्य शाब्दत्वमेवाङ्गीकार्यमित्याशङ्कते—**न चेति**॥ 'उपान्मन्त्रकरणे' इत्यात्मनेपदविधानात् उपस्थानस्य मन्त्रकरणकाभिधानरूपत्वेनात्मनेपदावगतं यत् समीपस्थानस्य मन्त्रकरणकत्वनि[कत्वं तन्नि ?]र्वाहायाभिधानमनुमीयत इत्यर्थः॥ **समीपस्थितेरिति**॥

रभिधानप्रयोजनकत्वावगतेः मन्त्रस्य स्वसाध्याभिधानाङ्गत्वसम्बन्धेन समीपस्थितिविशेषणत्वोपपत्तेरभिधानलक्षणायां प्रमाणाभावात्। अतश्च शक्यार्थ एव समीपस्थितौ गार्हपत्यस्य कर्मत्वम्; इन्द्रस्य त्वार्थिकेऽभिधाने इति न विरोधः। यथा चास्य धातोः सकर्मकत्वं तथा कौस्तुभ एव प्रपञ्चितम्। अतः कथं मन्त्रस्य गौणेऽर्थे विनियोग इति चेत्—

न; ऐन्द्र्येति तद्धितेन एकपदेन विशेष्यतया प्रतिपाद्यमानस्य मन्त्रस्य चयनानुपयोगीन्द्राङ्गत्वबोधानुपपत्तेः। अतस्तस्य शक्यबोधकालीनेन्द्रप्रकाशकत्वानुवादत्वेनाप्युपपत्तेर्न द्वितीयादौ तद्बलेन लक्षणाश्रयणं रूढित्यागो वा। न च समीपस्थितिं प्रत्यग्नेः कर्मत्वम्। तथात्वे तस्या अभिधानं प्रत्यप्यङ्गत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेः आत्मनेपदविरोधेन धातुनैव स्वशक्यार्थविशिष्टाभिधानलक्षणावश्यम्भावाद्विशेष्यभूताभिधान एव मन्त्रस्य करणत्वप्रतीतेः

---

समीपस्थितेरभिधानार्थत्वेनाभिधानप्रयोजनकत्वं प्रतीयत इति स्वसाध्याभिधानाङ्गत्वसम्बन्धेन समीपस्थितिविशेषणत्वसम्भवेनाभिधानलक्षणायां प्रमाणाभाव इत्यर्थः। नन्वेवं गार्हपत्यस्येन्द्रस्य च कर्मत्वमित्यनेकोद्देश्यकत्वापत्तिरित्यत आह—**अतश्चेति** ॥ शक्यार्थे समीपस्थितावेव गार्हपत्यस्य कर्मत्वम्, इन्द्रस्यार्थिकाभिधानक्रियाकर्मत्वान्न दोष इति भावः ॥ **कौस्तुभ इति** ॥ पूर्वोक्तरीत्येति भावः। सिद्धान्तमाह—**ऐन्द्र्येति** ॥ **तद्धितेनेति** ॥ सूक्तार्थतद्धितान्तपदस्येन्द्रप्रकाशकमन्त्रपरतया तस्येन्द्रप्रकाशन एव तात्पर्याङ्गीकारे चयनानङ्गप्रकाशनेन चयनाङ्गत्वानुपपत्तेः क्रियां तत्संबन्धिनं वा प्रकाशयत एवाङ्गत्वात् गौण्या गार्हपत्यप्रकाशकत्वमेवेत्यर्थः। तद्धितस्योपपत्तिमाह—**शक्यबोधेति** ॥ शक्यसम्बन्धरूपलक्षणया गार्हपत्यप्रकाशने कर्तव्ये शक्यप्रतीतेरावश्यकत्वेन तमादायानुवादोपपत्तिरित्यर्थः ॥ **द्वितीयेति** ॥ द्वितीयायाः सप्तम्यर्थलक्षणा पूर्वोक्ता न युक्तेत्यर्थ. ॥ **रूढित्याग इति** ॥ रूढ्यर्थस्यान्वयसम्भवे योगाङ्गीकारस्यायुक्तत्वादित्यर्थः ॥ **वाक्यभेद इति** ॥ गार्हपत्यस्य समीपस्थितिं प्रति कर्मत्वे अभिधानं प्रत्यपि कर्मत्वेन कर्मद्वयप्रतीत्या वाक्यभेदापत्तिरित्यर्थः। न चोभयत्राग्नेरेव कर्मत्वेन तस्यैकत्वान्नोद्देश्यानेकत्वमिति वाच्यम्; अग्नेरेकत्वेऽपि गार्हपत्यमुपेत्येति गार्हत्यमभिदध्यादिति द्विरावृत्त्या वाक्यभेदस्यापरिहार्यत्वादिति भावः। समीपस्थितिं प्रत्यङ्गत्वमुक्तं निरस्यति—**अत्मनेपदेति** ॥ तिष्ठतेः परस्मैपदित्वेनात्मनेपदस्य साधुत्वार्थं मन्त्रकरणकाभिधानलक्षणावश्यकतया इन्द्रप्रकाशकं[ केन मन्त्रेण?]ब्रूयादित्यर्थपर्यवसानादित्यर्थः ॥ **विशेष्य-**

गार्हपत्यस्य च चयनसंस्कार्यस्य कर्मत्वप्रतीतेः अर्थाच्च सामीप्यप्रतियोगित्वेन तस्यैव ग्रहणोपपत्तेः तात्पर्यग्राहकब्राह्मणानुरोधेन मन्त्रस्यैव गौण्या वृत्त्या गार्हपत्ये विनियोग इति सिद्धम् ॥ २ ॥

**(३)—तथाह्वानमपीति चेत् ॥ ५ ॥ न कालविधिश्चोदितत्वात् ॥ ६ ॥ गुणाभावात् ॥ ७ ॥ इतश्च तथा लिङ्गात् ॥ ८ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥**

दर्शपूर्णमासयोः "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति" इति श्रुतम् । तत्र नायं

---

**भूतेति** ॥ लाक्षणिकार्थविशेष्येत्यर्थः । तथा च अभिधान एव मन्त्रस्य करणत्वोपपत्तावार्थिककर्मत्वं नाङ्गीकार्यमिति भावः । ननु सामीप्यप्रतियोगित्वेन गार्हपत्यान्वयस्य वक्तव्यतया 'मन्त्रेण गार्हपत्यमभिदध्यात्, गार्हपत्यसमीपे तिष्ठेत्' ति वाक्यभेद इत्यत आह—**गार्हपत्यस्येति** ॥ चयनसंस्कार्यतयोपस्थितस्यैवार्थात् सामीप्यप्रतियोगितया प्रतीत्युपपत्तेर्न तदर्थविधिकल्पनमित्यर्थः । ननु तथापि गौणार्थग्रहणे किं प्रमाणमित्यत आह—**ब्राह्मणेति** ॥ 'ऐन्द्र्या गार्हपत्यम्' इति वचानानुसारेणेत्यर्थः ॥

सूत्रार्थस्तु—**वचनबलादैन्द्री अयथार्था स्यादिति** ॥ अत्र न्यायसुधाकृतः—'इन्द्रो न तस्थौ' इति नकारस्योपमानार्थतया अग्निप्राधान्यमेवास्य मन्त्रस्य युक्तम्, न त्विन्द्रप्राधान्यमित्याहुः । अत्र केचित्—अग्निप्राधान्ये एतत्सूत्रविरोधः स्पष्टः । तथा 'गुणाद्वाप्यभिधानं स्यात्' इति उत्तरसूत्रविरोधश्च । भाष्यवार्तिकविरोधश्च । नकारस्य लोकवेदप्रसिद्धनिषेधार्थकत्वसम्भवे तत्परित्यागेन 'उपमार्थीय उपरिष्टादुपचार' इति निरुक्तमवलम्ब्य उपमार्थस्वीकारायोगादित्याहुः । अन्ये तु निरुक्तस्य वेदार्थनिर्णयार्थमेव ऋषिप्रणीततया निरुक्तानुसारेणैव वेदार्थस्य वेदभाष्यादौ वर्णनेन उपमानार्थत्वे विरोधाभावात् लोकवेदप्रसिद्धेश्च नकारस्योभयार्थत्वमङ्गीकृत्योपपत्तिसम्भवात् सूत्रभाष्यादेश्च 'कदाचन स्तरीरसि' इत्यैन्द्रीमादायोपपत्तेश्च न दोषः । अत एव तत्रत्य एव मन्त्रो मूलकृतोदाहृतः । भाष्यादौ तदुदाहरणस्योपलक्षणत्वान्न तद्विरोधोऽपीत्याहुः ॥ २ ॥

**तथाह्वानमपीति चेत्** ॥ प्रसङ्गसङ्गतिमभिप्रेत्याह—**दर्शेति** ॥ किमयं मन्त्रो गौणेऽवघाते प्रयोक्तव्यः, किं वा मुख्ये हविष्कृदाह्वान इति संशयः । तस्य आह्वानस्य

---

१. तै. ब्रा. ३-२-५.

मन्त्र आह्वानाङ्गम्, तस्य "पत्न्येव हविष्कृदुपोत्तिष्ठति सा देवानभिद्रुत्यावहन्ति" इति वचनानुसारेणाभावात्। अत इतिकरणेनावघाताङ्गमेव। अतश्चास्मिन् वाक्ये त्रिरभ्यासपुंस्त्वमन्त्रविशिष्टावघातविधिरेव। पत्नीवाक्ये च गुणादेव कर्मान्तरविधिः। तयोश्चावघातयोः "व्रीहीनवहन्ति" इत्यनेन संस्कार्यसम्बन्धेऽपि दृष्टार्थत्वाद्विकल्पः। पत्नीकर्तृकावघाते च "अव रक्षो दिवः" इति मन्त्रः। अतश्चानेन वाक्येनावघाते गौण एवायं मन्त्रो विनियुज्यते। गौणत्वोपपादनं कौस्तुभे द्रष्टव्यम्। आह्वयतिश्च "तदाचष्टे" इत्येवं शक्यार्थबोधकालीनाह्वानप्रकाशनानुवाद इति प्राप्ते—

---

अभावादित्यग्रेणान्वयः ॥ पत्न्येवेति ॥ स्वयमेव पत्नी देवतास्मरणपूर्वकमवहन्ति इति वाक्यार्थपर्यवसानेनाह्वानस्याभावादित्यर्थः। इत्यनेन मन्त्रेणावघ्नन्निति विनियोगादवघात एव मन्त्र इत्यर्थः। ननु 'व्रीहीनवहन्ति' इति वाक्यप्राप्तावघातोद्देशेन त्रिरभ्यासपुंस्त्वमन्त्राणां विधौ विधेयानेकत्वकृतो वाक्यभेदः स्यादित्यत आह— अस्मिन् वाक्य इति ॥ विशिष्टावघातविधिरिति ॥ तथा चानेकगुणविशिष्टावघातस्यैव विधानेन वाक्यान्तरप्राप्तावघातानुवादेन विधानाभावान्न वाक्यभेद इत्यर्थः। नन्वेवमस्मिन् वाक्ये पुंस्त्वविधौ पत्नीकर्तृकावघातबोधकं वाक्यं व्यर्थं स्यादित्यत आह—पत्नीवाक्ये चेति ॥ गुणादेवेति ॥ पत्नीरूपगुणादेवेत्यर्थः। आध्वर्यवावघाते अध्वर्य्ववरोधेन तत्र पत्नीविधानासम्भवेन गुणन्यायेनावघातभेद इत्यर्थः। नन्वेवं पत्नीवाक्येनावघातान्तरविधौ द्वयोरवघातयोरेकवैतुष्यार्थत्वात् 'एकार्थास्तु विकल्पेरन्' इति न्यायेन विकल्पापत्तिरित्यत इष्टापत्तिमाह—तयोश्चेति ॥ संस्कार्यसम्बन्ध इति ॥ अयमभिप्रायः—'व्रीहीनवहन्ति' इत्यत्र नावघातविधिः, किं तु आध्वर्यववाक्यपत्नीवाक्यप्राप्तावघातद्वयस्य व्रीह्युद्देशेन विनियोगविधिः। एकोद्देशेनावघातद्वयविधानाद्विकल्प इति। नन्ववघाते 'अव रक्षो दिव' इति मन्त्रस्य विहितत्वेनोभयत्रावघातमन्त्रः स्यादित्यत आह—पत्नीकर्तृकावघाते चेति ॥ [पत्नीकर्तृकावघाते]ऽयं मन्त्रो विधीयत इति नोभयत्र मन्त्रप्राप्तिरित्यर्थः। न च नित्यवदाम्नातस्य 'अव रक्षो दिव' इति मन्त्रस्य पाक्षिकत्वकल्पनं दोष इति वाच्यम्; तस्य मन्त्रस्य पत्नीकर्तृकावघाते विनियोगानुसारेण पाक्षिकत्वस्यावर्जनीयत्वात् नित्यवदाम्नातस्यापि 'व्रीहीणां मेध' इति मन्त्रस्य यवप्रयोगे निवृत्तत्वेन पाक्षिकत्वदर्शनादिति भावः ॥ अनेन वाक्येनेति ॥ 'हविष्कृदेहि' इति वाक्येनेत्यर्थः। नन्ववहननोद्देशेन मन्त्रविधौ अवहननस्याचेतनत्वात्

---

१. अभावप्रतीतेः इतिपाठान्तरम्।

मुख्य एवाह्वाने विनियोगसम्भवे मन्त्रस्य आह्वयतिपदस्य च गौणत्वकल्पनायां प्रमाणाभावात् । मान्त्रवर्णिकविनियोगविधिकल्पनया "सख्यासम्" इत्यादिना ग्रहणादेरिवाह्वानस्यापि नियमेन प्राप्तत्वात् । "पत्न्येव" इत्यस्य तु नायमर्थः यत्स्वयमेवोत्तिष्ठति न त्वाह्वयतीति ; अपि तु पत्न्येव नान्येति । अतो नेदमपि तदभावबोधकम् । अतश्चाह्वाने मन्त्रस्य लिङ्गादेव प्राप्तत्वादाह्वानस्य च सहायार्थत्वेनावघातकाल एव प्राप्तेः 'अवघ्नन्' इत्यस्याप्यनुवादत्वात्केवलं त्रिरभ्यासमात्रं विधीयत इति न गौणेऽवघाते विनियोगः ॥ ३ ॥

---

तदाह्वानम् एहीतिशब्देनानुपपन्नमित्यत आह—**आह्वयतिरपीति** ॥ यो वस्तुगत्या आह्वयति सोऽप्येहीति शब्दमुच्चारयति, अयमप्यध्वर्युरवघातमन्त्रं प्रयुञ्जानस्तद्गतमेहीति शब्दमुच्चारयतीति तत्साम्यादनुवाद इत्यर्थः । न चैवं पूर्वपक्षेऽपि ब्राह्मणवाक्यलक्षणादोषस्तुल्य इति वाच्यम् ; ब्राह्मणवाक्यगतस्याप्याह्वयतेः मन्त्रगतएहीतिपदप्रयोगमात्रलभ्यस्य विधेयत्वाभावेन विध्यन्वितपदे लक्षणाया अभावात् । कंसं घातयति इत्यादिवदिति तात्पर्यार्थः ॥ **मुख्य एवाह्वान इति** ॥ आह्वयतेराह्वाने मुख्यत्वेन तत्रैवान्वयेन हविष्कृदेहि इत्याह्वयतीति वाक्यार्थसम्भवे गौणार्थविनियोगस्यायुक्तत्वादित्यर्थः ॥ **मान्त्रवर्णिकेति** ॥ सोमभक्षणे 'अश्विनोस्त्वा बाहुभ्यां सख्यासम्' इति मन्त्रवर्णेन सोमपात्रग्रहणं कुर्यादिति विधिकल्पने यथा ग्रहणस्य नियमेन प्राप्तिः तथा हविष्कृदेहीति मन्त्रेणाह्वानं कुर्यादिति मान्त्रवर्णिकविधिना आह्वानस्य नियमेन प्राप्तत्वादित्यर्थः । पत्नीवाक्येन अवघातविधिं निरस्यति—**पत्न्येवेत्यस्येति** ॥ एवकारस्य पत्न्येवावहन्ति इत्यन्वयेनाह्वाननिषेधपरत्वाभावादित्यर्थः । ततश्च एतद्वाक्यस्य नावघातविधायकत्वमित्यर्थः ॥ **लिङ्गादेवेति** ॥ आह्वानलिङ्गादित्यर्थः । ननु अवघ्नन् इत्यस्यानन्वय इत्यत आह—**आह्वानस्येति** ॥ आह्वानस्य सहायार्थत्वेन दृष्टप्रयोजनसंभवेन सहायापेक्षायाश्चावघातकाल एव प्राप्तत्वादर्थप्राप्तानुवाद इत्यर्थः । न चानुवादस्य प्रयोजनाभाव इति वाच्यम् ; अवघातकाले मन्त्रोच्चारणार्थत्वात्, 'लक्षणहेत्वोः क्रियायाः' इति क्रियान्तरलक्षकक्रियाकर्तरि विहितशतृप्रत्ययेन क्रियान्तरलक्षणार्थत्वावगमेनान्योपसर्जनतया स्वार्थसमर्पके अवघ्नन् इति पद एव लक्षणया अवघातकालीनमन्त्रोच्चारणप्राप्त्यर्थत्वात् नानुवादवैयर्थ्यमिति भावः । उपसंहरति—**अत इति** ॥ **त्रिरभ्यासमात्रमिति** ॥ मात्रचा आह्वानादिविधिव्यवच्छेदः ॥

सूत्रार्थस्तु—**आह्वानम्**—आह्वानार्थकमन्त्रोऽपि ऐन्द्रीवदयथार्थः स्यादिति ॥ ३ ॥

## (४)—तथोत्थानविसर्जने ॥ १० ॥

सोमे 'उत्तिष्ठन्नन्वाहाग्नीदग्नीन् विहर' तथा 'व्रतं कृणुतेति वाचं विसृजति,' दर्शपूर्णमासयोः 'प्रणीताः प्रणेष्यन् वाचं यच्छति तां सह विष्कृता विसृजति' इति श्रुतम् । तत्रापि पूर्ववदेव मन्त्राणां मुख्येऽर्थे विनियोगः, न तु गौणयोरुत्थानवाग्विसर्गयोः ; प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनाप्युपपत्तौ गौणत्वतात्पर्यग्राहकत्वाभावात् । न च लक्षणा । शतृप्रत्ययस्य कालिकसम्बन्धेन उपलक्षणार्थत्वमङ्गीकृत्य श्रुत्यैवान्वयोपपत्तेः । अतश्चोत्थानकाले विहरणमन्त्रः पठनीय इति कालविधिरेवायम् । 'व्रतं कृणुत' इत्यत्र इतिकरणस्यापि मन्त्रस्व-

---

तथोत्थानविसर्जने ॥ पूर्ववदिति ॥ किं मन्त्रयोर्यथाक्रमं गौण उत्थाने वाग्विसर्गे च विनियोगः, किं वा मुख्ये अग्निविहरणबर्हिस्तरणपुरोडाशाभिघारणप्रैषे व्रतकरणप्रेषणे च विनियोगः, उत्थानवाग्विसर्गाभ्यां तु मन्त्रयोः कालार्थः संयोग इति संशयः । तत्रोत्थानवाग्विसर्गयोर्मन्त्रस्य वचनेन विनियोगात् 'वचनात्त्वयथार्थमैन्द्री' इत्यनेन न्यायेन गौणेऽर्थे विनियोगः । एवं च बहिष्पवमानदेशगतेनाध्वर्युणा उत्थानं विना अग्नीन्धनाग्निविहरणादेः कर्तुमशक्यत्वादग्नीन्धनादिसाधनत्वेन गौण्या वृत्त्या उत्थानमेवाग्नीच्छब्देन 'अग्नीन् विहर' इत्यादिना वा अभिधीयते । तथा कृञ् हिंसायामिति धातोः कृणुतशब्दं निष्पाद्य भक्षस्यापि हिंसारूपत्वाश्रयणेन व्रतं पयोयवाग्वादिकं कृणुत भक्षयत इत्येवं विसर्जनकर्मीभूतवागेवानेन मन्त्रेण कर्तृत्वोपचारादभिधीयते ; ताल्वाद्यधिष्ठानभेदाच्च बहुवचनोपपत्तिरिति पूर्वपक्षस्य स्पष्टत्वात् तमुपेक्ष्य सिद्धान्तमेवाह—मन्त्राणामिति ॥ ननु ब्राह्मणेन गौणेऽर्थे तात्पर्यग्रहात् गौणे विनियोगः स्यादित्यत आह—प्रबलस्यापीति ॥ मन्त्रस्य लिङ्गादिप्राप्तानुवादत्वेन तदपेक्षया प्रत्यक्षवचनस्य प्रबलस्यापीत्यर्थः ॥ कालविधायित्वेनेति ॥ शतृप्रत्ययस्य लडादेशतया लडर्थकालविधित्वसंभवादित्यर्थः ॥ कालिकसम्बन्धेनेति ॥ शतृप्रत्ययार्थकालोपलक्षणत्वेन श्रौतार्थस्यैवान्वयेन लक्षणाया अभावादित्यर्थः । वाक्यार्थमाह—अतश्चेति । नन्वत्र शतृप्रत्ययेन कालाभिधानाल्लक्षणाया अभावेऽपि व्रतं कृणुत इत्यत्र कालवाचिपदाभावात् गौणेऽर्थे विनियोगः स्यादित्यत आह—व्रतं कृणुत इत्यत्रेति ॥ इतिकरणस्येति ॥ इतिशब्दस्येत्यर्थः । ततश्च तत्रेतिशब्देन

---

१. तै. सं ६-३-१

२. तै. सं ६-२-४.

रूपमात्रपरत्वात् कालिकसम्बन्धस्यैव संसर्गविधया भानोपपत्तेर्न लक्षणा । हविष्कृद्वाक्ये तृतीयायास्तु वाग्यमापेक्षितावधिसमर्पकत्वेन तदेकवाक्यतोपपत्तौ वाक्यभेदे प्रमाणाभावात् इत्थंभूतलक्षणार्थतामङ्गीकृत्य कालविधिपरत्वम् । अतश्च तद्वाक्ययोः पाठक्रमावगततत्तन्मन्त्रपाठकाले वाग्विसर्गः कर्तव्य इति सोऽपि तत्र कालविधिरेव ॥ ४ ॥

**(५)—सूक्तवाके च कालविधिः परार्थत्वात् ॥ ११ ॥ उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ स देवतार्थस्तत्संयोगात् ॥ १३ ॥ प्रतिपत्तिरिति चेत् ॥ १४ ॥ स्विष्टकृद्वदुभयसंस्कारः स्यात् ॥ १५ ॥**

दर्शपूर्णमासयोः 'सूक्तवाकेन प्रस्तरं प्रहरति' इति श्रुतम् । तत्र सूक्तवाकपदवाच्यस्य मन्त्रस्य इष्टदेवताप्रकाशनेन कृतार्थत्वात्प्रहरणस्य चोपयुक्तप्रस्तरप्रतिपत्तित्वेन कृतार्थत्वात् 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत'

---

मन्त्रबोधनेन मन्त्रस्वरूपस्य कालिकसम्बन्धेन वाग्विसर्गेऽन्वयसंभवात् न तत्रापि लक्षणेत्यर्थः । ननु 'हविष्कृता वाचं विसृजति' इत्यत्रेतिशब्दाभावाल्लक्षणा स्यादित्यत आह—**हविष्कृद्वाक्य इति** ॥ **वाग्यमेति** ॥ 'प्रणीताः प्रणेष्यन् वाचं यच्छति' इति विहितवाग्यमस्योत्तरावध्यपेक्षासत्त्वेन उत्तरकालोपलक्षणत्वेनान्वयसंभवेन तत्रापि कालार्थ एव संयोग इत्यर्थः । ननु तृतीयायाः करणत्वाद्यर्थकत्वात् कथं तृतीयान्तार्थस्योपलक्षणत्वमित्यत आह—**इत्थंभूतेति** ॥ 'इत्थंभूतलक्षणे' इत्यनुशासनेन जटाभिस्तापस इत्यादिप्रयोगदर्शनेन हविष्कृतः कालोपलक्षणत्वोपपत्तेरित्यर्थः ॥ सूत्रं स्पष्टम् ॥ ४ ॥

**सूक्तवाके च कालविधिः परार्थत्वात्** ॥ पूर्ववदिहापि कालार्थः संयोग इति प्रत्यवस्थानात् सङ्गतिः । किं प्रस्तरप्रहरणस्य सूक्तवाकस्य च कालार्थः संयोगः, किं वा अङ्गाङ्गिभाव इति संशयः ॥ **इष्टेति** ॥ आग्नेयादियागैरिष्टाग्न्यादिदेवताभिधानेनेत्यर्थः ॥ **प्रहरणस्येति** ॥ हविरासादनोपयुक्तप्रस्तरप्रतिपत्त्यर्थत्वेनेत्यर्थः । तथा चोभयोः कृतार्थत्वादाकाङ्क्षाभावेन नाङ्गाङ्गिभाव इत्यर्थः ॥ **दर्शेति** ॥ यथा दर्शपूर्णमासयोः सोमस्य च स्वतन्त्रफलार्थतया नाङ्गाङ्गिभावस्तद्वदिहापि कालार्थ एव संयोग इत्यर्थः । ननु तृतीयया करणत्वबोधनात् अङ्गत्वं दुर्वारमित्यत आह—

इतिवत् कालार्थः सम्बन्धः । तृतीया चेत्थंभूतलक्षणत्वपरा सती सूक्तवाकस्य कालिकसम्बधेन प्रहरणोपलक्षणत्वेनान्वयं बोधयन्ती नानुपपन्ना । न चैवं लक्षणा ; तस्याप्यानुशासनिकत्वेन शक्यत्वात् । अतश्चानूयाजोत्तरं सूक्तवाकपाठात् तत्कालविशिष्टं प्रस्तरोद्देशेन प्रहरणमेव विधीयते । न तु सूक्तवाकस्य प्रहरणाङ्गत्वमिति प्राप्ते—

प्रचुरप्रयोगाल्लाघवाच्च करणत्व एव तृतीयायाः शक्तिः ; न तु इत्थंभूतलक्षणे ;

---

**तृतीया चेति** ॥ **इत्थंभूतलक्षणेति** ॥ 'इत्थंभूतलक्षणे' इति सूत्रेण किंचित्प्रकारविशिष्टस्य यत् ज्ञापकं तत्र तृतीयाविधानादिहापि प्राह्रियमाणत्वावस्थां प्राप्तस्य प्रस्तरस्य ज्ञापकः सूक्तवाक इत्यर्थाश्रयणात् तृतीयोपपत्तिः । प्राह्रियमाणावस्थप्रस्तरज्ञापकत्वं च सूक्तवाकप्रयोगकाले प्रस्तरप्रहरणे सति भवति नान्यथेति 'सूक्तवाककाले प्रस्तरं प्रहरेत्' इत्येवं कालार्थसंयोग एवायं विधिः पर्यवसित इति भावः । ननु कारकविभक्तेर्बलीयस्त्वात् करणतृतीयैवेयमित्यत आह—**न चैवमिति** ॥ करणतृतीयाया इत्थंभूतलक्षणतृतीयायाश्च अनुशासनसाम्यात् न लक्षणेत्यर्थः । पूर्वपक्षमुपसंहरति—**अतश्चेति** ॥ अनूयाजोत्तरं सूक्तवाकस्य वेदे पाठात् पाठप्राप्तकालविशिष्टसूक्तवाककालप्रहरणमेव प्रस्तरोद्देशेन विधीयत इति कालार्थ एव संयोग इत्यर्थः ॥ **प्रचुरप्रयोगादिति** ॥ 'व्रीहिभिर्यजेत' 'दध्ना जुहोति' इत्यादिवैदिक, 'काष्ठैः पचति' इत्यादिलौकिकप्रयोगबाहुल्यादित्यर्थः । 'कर्तृकरणयोस्तृतीया' इति सूत्रेण करणत्व एव तृतीयायाः शक्तिरित्यर्थः ॥ **लाघवाच्चेति** ॥ कारकविभक्तित्वे लाघवादित्यर्थः । अत एव 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति सर्वत्र सिद्धान्तोऽपि सङ्गच्छत इति भावः । बलीयस्त्वमेवाह पार्थसारथिः—'सर्वो हि सम्बन्धः क्रियागर्भ एव, तेन सूक्तवाकप्रस्तरप्रहरणयोर्लक्षणक्रियागर्भोऽयं सम्बन्धः, न चेह लक्षणक्रियोपात्ता, अनुपात्तां तामपेक्ष्यायं सम्बन्धः प्रत्येतव्य इति विप्रकृष्यते' इति । अस्यायमर्थः—क्रियागर्भः क्रियाघटितः, क्रियाप्रयुक्त इति यावत् । यथा राजपुरुषयोः सम्बन्धः एकस्यां दानक्रियायामुभयोर्दातृप्रतिग्रहीतृभावायत्तया दानक्रियया प्रयुज्यते, तद्वत् सर्वोऽपि सम्बन्धः क्रियाप्रयुक्तः । उक्तं च वार्तिकेन 'क्रियागर्भसम्बन्धादृते संबन्धि न क्वचिद्' इति । ततश्च यद्यत्र तृतीया इत्थंभूतलक्षणे स्यात् तदा तृतीयया सूक्तवाकस्य प्रस्तरप्रहरणस्य च लक्ष्यलक्षकभावः प्रत्येतव्यः । स च लक्षणक्रियाप्रयुक्तः, लक्षणक्रियां विना लक्ष्यलक्षणभावासम्भवात् । लक्षणक्रिया नाम ज्ञान-

तस्यानुशासनिकत्वेऽपि लाक्षणिकत्वेनाप्युपपत्तेः । अतश्च श्रुत्या प्रहरणाङ्गत्वस्याप्यवगतेः प्रहरतिर्मान्त्रवर्णिकदेवताकल्पनया आश्रयिकर्मरूपहोमलक्षको न विरुध्यते । अत एव 'सूक्तवाक एव याज्या' इति यागलिङ्गमपि सङ्गच्छते । यद्यपि च नास्य मन्त्रत्वादिवदभियुक्तप्रसिद्धिविषयत्वाख्यं याज्यात्वं सम्भवति ; एवकारोपबद्धत्वेनैतल्लिङ्गस्य याज्यात्वासाधकत्वात् । तथाऽपि यागसाधनत्वमात्रेण याज्यात्वव्यपदेशात् यागलिङ्गत्वम् । अतश्च श्रुत्या मन्त्रस्य प्रहरणाङ्गत्वेऽपि मुख्यसामर्थ्यस्य नात्र बाधः, प्रहरणेऽपि तदुपपत्तेः ॥ ५ ॥

---

क्रिया । न चात्र वाक्ये ज्ञानात्मिका क्रियोपात्ता । तथा च ज्ञानात्मिकां लक्षणक्रियां कथंचिदध्याहारादिना हृदयमागमय्य ज्ञाप्यज्ञापकभावात्मको लक्ष्यलक्षणभावः प्रत्येतव्य इति तत्प्रतीतिः विलम्बेन जायते । कारकभावेन सम्बन्धस्तु शब्दोपात्तक्रियया साक्षादेव संभवतीति क्रियान्तरानपेक्षत्वात् क्रियाकारकसम्बन्धः शीघ्रं प्रतीयते । एवं च प्रतीतिशैघ्र्यमान्द्यकृतबलाबलानुसारेण लाघवात् कारकविभक्तिरेवेयमिति । नन्वनुशासनसाम्यात् उभयत्र शक्तिरस्त्वित्यत आह—**तस्यानुशासनिकत्वेऽपीति** ॥ **लाक्षणिकत्वेनेति** ॥ उक्तप्रयोगलाघवाद्यनुसारेण करणत्वे शक्तिसिद्धौ 'कर्तृकर्मणोः कृति' इत्यनुशासनसत्त्वेऽपि कृद्योगे षष्ठ्याः कर्तृत्वादौ लक्षणावत् इत्थंभूत [लक्षणे]लक्षणया प्रयोगोपपत्तिरित्यर्थः । ननु मन्त्रस्य प्रहरणाङ्गत्वे मन्त्रप्रतिपाद्यदेवतानां प्रहरणसम्बन्धानुपपत्तिरित्यत आह—**अतश्चेति** ॥ मान्त्रवर्णिकदेवतासम्बन्धस्य होमं विना अनुपपत्तेः प्रहरतिना होम एवाभिधीयत इत्यर्थः ॥ **आश्रयिकर्मेति** ॥ द्रव्यस्य प्रक्षेपेण देवतायाश्च प्रक्षेपेण[प्रकाशनेन ?] चोभयसङ्कररूप इत्यर्थः । प्रहरतेर्होमलक्षकत्वे लिङ्गमप्यस्तीत्याह—**अत एवेति** ॥ यागरूपत्वादेवेत्यर्थः ॥ **सूक्तवाक एवेति** ॥ प्रहरणस्य यागरूपत्वाभावे याज्यासम्बन्धानुपपत्तेरित्यर्थः । ननु याज्यात्वस्य मन्त्रत्वादिवदभियुक्तानां याज्यात्वप्रकारकप्रसिद्धिविषयत्वरूपत्वात् सूक्तवाके तादृशप्रसिद्ध्यभावात् न याज्यात्वम् । येयजामहवषट्काराभावादपि तथेत्याशङ्कां परिहरति—**यद्यपीत्यादिना** ॥ **एवकारेति** ॥ एवकारस्य याज्यात्वविधिप्रतिबन्धकत्वादित्यर्थः ॥ **तथापीति** ॥ मुख्ययाज्यात्वाभावेऽपि याज्यात्वस्तुतिमात्रेण यागसाधनत्वालम्बनेन होमलक्षणासम्भवादित्यर्थः । अतश्च श्रुत्या प्रहरणाङ्गत्वात् मुख्य एवार्थे अङ्गत्वसंभवात् न कालार्थसंयोग इत्यर्थः ॥ प्रयोजनं पूर्वपक्षे प्रहरणस्य होमरूपत्वाभावात् उद्देशत्यागाभावः, सिद्धान्ते तत्सद्भाव इति । **सूक्तवाके**—'सूक्तवाकेन प्रस्तरं प्रहरति' इति वाक्य इत्यर्थः ॥ ५ ॥

(६)—कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १६ ॥ यथार्थं शेषभूतसंस्कारात् ॥ १७ ॥ वचनादिति चेत् ॥ १८ ॥ प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १९ ॥

श्रुत्या लिङ्गोपष्टब्धया प्रहरणाङ्गत्वावगमात् न लिङ्गमात्रेण सूक्तवाकस्य इष्टदेवतास्मरणार्थत्वम् । अत्र[1] विरोधोऽपि ; अध्येतृप्रसिद्ध्या समस्तानुवाके सूक्तवाकशब्दस्य रूढत्वेनावयवशो विभज्यविनियोगेऽवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः । न चासौ सुष्ठूक्तं वक्तीति व्युत्पत्त्या इष्टदेवतावाचिपदसमुदाये यौगिकः । पारायणादौ[2] कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसम्पत्तिप्रसङ्गेन समस्तानुवाके रूढेरवश्यम्भावात् । अस्तु वेष्टदेवताप्रकाशनमानुषङ्गिकं फलम् ; प्रहरणमेव तु श्रुतिविनियोगात् सर्वानुवाकप्रयोजकमिति दर्शे पौर्णमासे च सर्वः प्रयोक्तव्य इति प्राप्ते—

---

कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ कालार्थसंयोगे विभज्य विनियोगस्याप्राप्तेरङ्गाङ्गित्वमुपजीव्यास्य विचारस्य प्रवृत्तेरुपजीव्योपजीवकभावः सङ्गतिः । कृत्स्नसूक्तवाकः पौर्णमास्याममावास्यायां च प्रयोक्तव्यः, उत इष्टदेवतानुरोधेन विभज्य प्रयोक्तव्य इति संशयः ॥ लिङ्गोपष्टब्धयेति ॥ 'सूक्तवाक एव याज्या' इति लिङ्गोपष्टब्धयेत्यर्थः ॥ न लिङ्गमात्रेणेति ॥ लिङ्गमात्रेण विनियोगे विभज्य विनियोगस्यावर्जनीयत्वात् तन्निरासः । कृत्स्नसूक्तवाकस्योभयत्र विनियोग एव श्रुत्युपपत्त्या विभज्य विनियोगे श्रुतिविरोध इत्याह—विरोधोऽपीति ॥ लिङ्गविरोधोऽपीत्यर्थः । सूक्तवाकशब्दस्याध्येतृप्रसिद्ध्या कृत्स्नमन्त्र एव रूढिकल्पनेन विभज्य विनियोगे अवयवलक्षणापत्त्या श्रुतिविरोधापत्तेरित्यर्थः । नन्ववयवव्युत्पत्त्या सूक्तवाकशब्दस्याग्नेयादियागोद्देश्यदेवतावाचिपद[समुदाय]मन्त्रपरत्वप्रतीतेर्विभज्य विनियोगसंभवात् न रूढ्या कृत्स्नसूक्त[वाक]विनियोग इति शङ्कते—न चेति ॥ पारायणादाविति ॥ सूक्तवाकपारायणं कुर्वित्यादौ कतिपयदेवतावाचिपदप्रयोगेऽपि वाक्यार्थसंपत्त्यापत्तेः कृत्स्नानुवाकस्यैव सूक्तवाकशब्दार्थत्वमित्यर्थः । नन्ववयवार्थासंभवस्थले एव रूढिकल्पना, प्रकृते चावयवार्थयोगेनोपपत्तौ न रूढिकल्पना । अन्यथा प्रोक्षणीशब्दस्यापि रूढत्वापत्तेरित्यस्वरसादाह—अस्तु वेति ॥ आनुषङ्गिकमिति ॥ कृत्स्नसूक्तवाकस्य प्रहरणे

---

१. न चात्राविरोधोऽपि इति पाठान्तरम् । २. पारायणाध्ययनादौ इति पाठान्तरम् ।

प्रबलयापि श्रुत्या लिङ्गस्य बाधे प्रहरतिलक्ष्यहोमान्तर्गतदेवतोद्देशस्यारादुपकारकत्वापत्तेः दृष्टविधया सन्निपत्योपकारकत्वलाभार्थं श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थत्वं मन्त्रस्यानुमन्यते । अत एव श्रुतिबलीयस्त्वात् प्रहरणप्रयुक्तः सूक्तवाकः प्रहरणाभावेऽननुष्ठीयमानोऽपि विभज्यविनियोगांशे इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वमनुमन्यते । न चैवं सूक्तवाकशब्दस्यावयवलक्षणार्थत्वापत्तिः ; सूक्तवाकपदस्य सुष्ठूक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढत्वात् । तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा तत्र तावानेव सूक्तवाकः । अतश्च सूक्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गाबाधः । न चाध्ययनादौ योगबाधाद्रूढिमात्रकल्पना । तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपूर्णमासिकदेवतापदसमुदाययुक्त एव मन्त्रे निरूढलक्षणाङ्गी-

---

विनियोगेऽपि आनुषङ्गिकेष्टदेवताप्रकाशनसंभवान्न तावन्मात्रेण विभज्य विनियोग इत्यर्थः ॥ **प्रबलयेति** ॥ तथा च श्रुत्या कृत्स्नस्य मन्त्रस्योभयत्र विनियोगेऽमावास्यायाम् अग्नीषोमदेवतायाः पौर्णमास्याम् इन्द्रमहेन्द्रयोरभावेन तत्प्रयोगस्यादृष्टार्थतापत्त्या 'सूक्तवाकेन प्रस्तरं प्रहरति' इति विधिरेव स्वलाघवार्थं लैङ्गिकविनियोगमनुमन्यत इति लिङ्गेनेष्टदेवताप्रकाशनार्थत्वावगतेर्विभज्य विनियोग इत्यर्थः । ननु प्रहरणप्रयुक्तत्वे प्रस्तरप्रहरणाभावेऽननुष्ठानाल्लिङ्गस्य उपयोगो न स्यादिति लिङ्गबाध एव स्यादित्यत आह— **अत एवेति** ॥ **विभज्यविनियोगांश इति** ॥ विभज्यविनियोगस्य लिङ्गप्रयोज्यत्वेन तदंशे विधिव्यापाराभावेन स्वलाघवार्थं विभज्यविनियोजकलिङ्गानुसारेण प्रवर्तत इत्यर्थः । नन्वेवं विभज्य विनियोगे सूक्तवाकशब्दस्यावयवलक्षकत्वं स्यादिति शङ्कायां समाधत्ते—**सूक्तवाकपदस्येति** ॥ **सुष्ठूक्तमिति** ॥ आज्यभागादिषु निर्दिष्टमग्न्यादिकमित्यर्थः । अग्न्यादिपदानामपि सूक्तवाकपदवाच्यत्वं स्यादित्यत आह—**मन्त्रविशेष इति** ॥ **योगरूढत्वादिति** ॥ तथा च रूढ्या तत्परिहार इत्यर्थः । न च 'अग्निरिदं हविः' इत्यनेन अग्न्यादीनां प्रस्तरद्रव्यदेवतात्वप्रतीतेः नाज्यभागादिदेवतानिर्देशेनाग्न्यादिसंस्कारार्थत्वमिति [वाच्यम्,] अजुषतेति भूतकालनिर्देशेन पूर्वकालनिर्दिष्टाग्न्यादिपरत्वसंभवात् । वार्त्तिके तु 'इदं हविः' इति 'यदनेन' इति च इदंशब्दस्य संनिहितपरत्वात् प्रस्तरपरत्वमेव । अजुषतेति भूतनिर्देशस्तु प्रतीत्यर्थत्वेनोपपन्न इति सूक्तवाके द्रव्यदेवतासम्बन्धप्रतीतिरुपपादिता ॥ **प्रातिपदिकश्रुतीति** ॥ सूक्तवाकशब्देनेष्टदेवतावाचकमन्त्रप्रतिपादनेनेत्यर्थः । नन्ववयवव्युत्पत्त्यङ्गीकारे सूक्तवाकं पठेत्यादौ रूढ्यर्थमात्रावगतेः केवलरूढिरेवेत्याशङ्कां निरस्यति—**न चाध्ययनादाविति** ॥ **निरूढलक्ष-**

कारात् । अश्वकर्णादौ शक्यसम्बन्धप्रतीत्यभावात् क्लृप्तावयवशक्तिबाधेनाप्यतिरिक्तशक्तिकल्पनमिति विशेषः ॥

प्रयोजनं विभज्य विनियोगः ॥ ६ ॥

(७)—लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ २० ॥

काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवत्याः काम्येष्टयः समाम्नाताः ; तेनैव क्रमेण मन्त्रकाण्डे तत्तलिङ्गा एव काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्याता याज्यानुवाक्यामन्त्राः समाम्नाताः । ते लिङ्गादिन्द्राग्न्यादिदेवत्यकर्ममात्राङ्गम्, न तु दुर्बलक्रमसमाख्यानुरोधेन काम्येष्टिमात्राङ्गम् । न च सामान्यसम्बन्धबोधकप्रमाणाभावे लिङ्गमात्रेण विनियोगायोगः, मन्त्रगतप्रयोजनाकाङ्क्षासहकृतलिङ्गेन सामान्यसम्बन्धबोधकप्रमाणाभावेऽपि इन्द्राग्न्यादिदेवताप्रकाशने मन्त्रविनियोगोपपत्तेः । न चेन्द्राग्निस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणार्थं क्रमाद्यपेक्षेति वाच्यम् ;

---

णेति ॥ दार्शपूर्णमासिकदेवताप्रतिपादकपदसमुदाये लक्षणया प्रयोगोपपत्तिरित्यर्थः । अन्यथा वैकृतप्रयोगे तदीयदेवताप्रतिपादनं न स्यादिति भावः । नन्वेवमश्वकर्णादावपि रूढिकल्पनं न स्यादित्यत आह—**अश्वकर्णादाविति** ॥ तत्रावयवयोगासंभवाच्छक्यसम्बन्धाप्रसिद्धया लक्षणाया अप्यसंभवेन रूढिकल्पनमित्यर्थः । सूत्रे **कृत्स्नोपदेशात्** कृत्स्नस्यैव निगदस्य सूक्तवाकशब्देन निर्देशादित्यर्थः ॥ ६ ॥

**लिङ्गक्रमसमाख्यानात् काम्ययुक्तं समाम्नानम्** ॥ प्रसङ्ग एव सङ्गतिः । काम्ययाज्यानुवाक्याकाण्डसमाख्याता इन्द्राग्न्यादिप्रकाशका मन्त्राः किमिन्द्राग्न्यादिदेवत्यसकलकर्माङ्गम्, उत काम्येष्टिमात्राङ्गमिति संशये पूर्वपक्षमाह—**लिङ्गादिति** ॥ इन्द्राग्न्यादिप्रकाशनसामर्थ्येन यत्र यत्र इन्द्राग्न्यादयो देवतात्वेन विधिबोधितास्तत्र सर्वत्रैव विनियोक्तव्याः, न तु दुर्बलक्रमसमाख्याभ्यां काम्येष्टिमात्राङ्गमित्यर्थः । ननु सामान्यसम्बन्धबोधकप्रमाणाभावेनान्यत्र विहितेन्द्राग्न्यादिबोधकत्वं न संभवति । अन्यथा इन्द्राग्न्यादीनां पुराणादिप्रसिद्धानां सत्त्वेन तत्रापि विनियोगापत्तेरिति शङ्कते—**न चेति** ॥ **मन्त्रगतेति** ॥ स्वाध्यायविधिना अधीतस्वाध्यायस्य सर्वस्य प्रयोजनवदर्थज्ञानपर्यवसायित्वबोधनेन जपादिमन्त्राणां दृष्टार्थालाभेनादृष्टार्थत्वेऽपि 'दृष्टे संभवति' इति न्यायेन इन्द्राग्न्यादिप्रकाशकमन्त्राणां प्रयोजनाकाङ्क्षानुरोधेन तत्सहकृतलिङ्गेन सर्वक्रतुसम्बन्धिदेवताप्रकाशनेन दृष्टप्रयोजनसंभवेन तेनैव प्रयोजनेन निराकाङ्क्षत्वात्

इन्द्राग्न्यादिदेवतानां जुहूवत्क्रत्वव्यभिचारित्वेन लक्षणोपपत्तेः । व्यभिचारित्वेऽपि वा लौकिकस्याग्न्यादेर्वैयर्थ्यादेव निवारणोपपत्तौ परिशेषादेवापूर्वीयत्वोपस्थितेः । अतो लिङ्गमात्रेण क्रमसमाख्ययोर्बाधात् सर्वार्थत्वमिति प्राप्ते—

आकाङ्क्षाभावे योग्यतारूपस्य लिङ्गस्य विनियोजकत्वानुपपत्तेर्मन्त्रगत-प्रयोजनाकाङ्क्षायाश्च सर्वमन्त्राणां वाचस्तोमे विनियोगेन निराकाङ्क्षतया अभावान्न लिङ्गमात्रात् सर्वार्थत्वोपपत्तिः । अतश्च वाक्यप्रकरणक्रमादिना सामान्य-सम्बन्धबोधकप्रमाणेन तत्तदाकाङ्क्षोत्थापनात्तत्तत्क्रतुसम्बन्धेऽवगते द्वारविशेष एव

---

न पुराणादिप्रसिद्धेन्द्राग्न्यादिप्रकाशकत्वमित्यर्थः । ननु देवतास्वरूपप्रकाशनस्यानर्थक्य-परिहारार्थमपूर्वीयदेवताप्रकाशनस्य प्रयोजनत्वस्य वक्तव्यतया अपूर्वीयत्वप्रतीतेः क्रम-समाख्याभ्यां वक्तव्यतया न सर्वार्थत्वमित्याशंक्य निराचष्टे—**न चेत्यादिना** ॥ **जुहूवदिति** ॥ यथा यूपाहवनीयजुह्वादिशब्दा न लोकप्रसिद्धाः क्रतुमात्रप्रसिद्धाः, तद्वदेव इन्द्राग्न्यादयोऽपीति तत्प्रकाशनेऽप्यानर्थक्याभावेन नापूर्वीयत्वप्रतीत्यर्थं क्रमाद्यपेक्षेत्यर्थः । नन्विन्द्राग्न्यादीनां न जुह्वादिवत् क्रत्वव्यभिचारः, पुराणादिप्रसिद्धत्वात् तत्प्रकाशनस्य प्रयोजनाभावेन अपूर्वीयत्वलक्षणा आवश्यकीत्यत आह—**व्यभिचारित्वेऽपि वेति** ॥ **अग्न्यादेर्वैयर्थ्यादेवेति** ॥ मन्त्रेण लौकिकाग्निप्रकाशनस्येत्यर्थः । तथा च स्वाध्याय-विधिबलेन प्रयोजनवदर्थप्रकाशनस्यैव मन्त्राम्नानप्रयोजनत्वेन क्रतुसम्बन्ध्यग्न्यादि-प्रकाशनमेव परिशेषात् सिध्यतीति क्रमसमाख्याबाधेन लिङ्गात् सर्वार्थत्वमित्यर्थः ॥ **आकाङ्क्षाभाव इति** ॥ योग्यतारूपलिङ्गस्य विनियोजकत्वमाकाङ्क्षाधीनम्, आकाङ्क्षाभावे लिङ्गस्य योग्यतारूपस्य परस्पराङ्गाङ्गिभावबोधकत्वासंभवादित्यर्थः । नन्वध्ययनविधिना प्रयोजनाकाङ्क्षा जायत एवेति योग्यताया विनियोजकत्वं संभवत्येवेत्यत आह—**मन्त्रगतेति** ॥ **वाचस्तोमेति** । सर्वेषां यजुषां सर्वेषां साम्नां सर्वर्चां च वाचस्तोमे विनि-योगेन तत्रोच्चारणद्वारा अदृष्टार्थत्वेन प्रयोजनसत्त्वात् प्रयोजनाकाङ्क्षायाः शान्तत्वादित्यर्थः । आकाङ्क्षारूपसहकार्यभावान्न केवललिङ्गेनेन्द्राग्निदेवताककर्ममात्रार्थत्वमित्याह—**न लिङ्ग-मात्रादिति** ॥ ननु काम्येषु वा कथं निवेशः, वाचस्तोमे विनियोगेन निराकाङ्क्षत्वस्य तुल्यत्वादित्यत आह—**अतश्च वाक्येति** ॥ वाक्येन प्रकरणेन क्रमेण समाख्यया च काम्येषु सम्बन्धबोधने सति सम्बन्धनिर्वाहार्थं मन्त्राणामुत्थाप्य[काङ्क्षया]काम्यसम्बन्धि-देवताप्रकाशनं लिङ्गेन प्रकल्प्य तद्द्वारा काम्यसम्बन्धबोधनेन द्वारविशेषसम्बन्धबोधनस्यैव लिङ्गव्यापारात्तत्रैव मन्त्राणां विनिगोग इत्यर्थः । न च वाचस्तोमीयवाक्येन प्रकरणादे-

लिङ्गादवगम्यते। न च वाचस्तोमीयवाक्येन प्रकरणादिबाधः; मन्त्रविशेषविषयाणां तेषां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजनाकाङ्क्षावेळायामनुपस्थितेन तेन वाक्येन बाधायोगात्। न चैवं प्रबलेन विनियुक्तस्यापि दुर्बलेन विनियोगे उत्कृष्टस्यापि पूषानुमन्त्रणमन्त्रस्य प्रकरणेन गौणेऽर्थे विनियोगापत्तिः। प्रमाणद्वयस्याप्येकविषयत्वात् मन्त्रप्रयोजनाकाङ्क्षावेळायां प्रबलप्रमाणस्योपस्थितत्वाच्च बाधकत्वोपपत्तेः। अतश्च प्रकृते बाधायोगात् क्रमसमाख्यानुरोधात् काम्येष्टिविषयत्वमेव मन्त्राणाम्। न चान्यत्राकाङ्क्षोत्थापकं किञ्चिदस्ति; अव्यभिचरितक्रतुसम्बन्धादेराकाङ्क्षोत्थापकत्वे प्रमाणाभावात्। वस्तुतस्तु—नात्राव्यभिचारोऽपि; जुह्वादीनां हि न तत्त्वेनान्यत्र कारणतेति तस्या युक्तः क्रतुना अव्यभिचरितः सम्बन्धः। देवतारूपस्याग्न्यादिशब्दस्य तु आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं प्रतीव स्वार्थप्रतिपादनं प्रत्यपि कारणत्वान्नाव्यभिचरितः क्रतुसम्बन्ध इति वैषम्यम्। अतश्च व्यभिचारात्

---

बाधात् वाचस्तोम एव सामान्यसम्बन्धबोधनेन काम्येषु सामान्यसम्बन्धानवगमात् कथं तत्र निवेश इति शङ्कते—**न चेति** ॥ **मन्त्रविशेषेति** ॥ ब्राह्मणादिविनियुक्तमन्त्रातिरिक्तमन्त्रविषयाणामित्यर्थः। तेषामेव वाचस्तोमे विनियोगादिति भावः। शेषस्य निधानमिति सामान्यसूत्रेण तथा प्रतीतेरिति यावत् ॥ **मन्त्रपाठकालेति** ॥ तत्तन्मन्त्रपाठकाले हि तन्मन्त्राणां प्रयोजनाकाङ्क्षोत्पद्यते। तत्काले च न वाचस्तोमविनियोजकवाक्यमुपस्थितमिति तेन प्रयोजनाकाङ्क्षाकालानुपस्थितेन क्रमप्रकरणादिबाधासंभावादित्यर्थः। ननु प्रबलेन वाक्येन विनियुक्तस्यापि लिङ्गेन[क्रमादिना?]विनियोगाङ्गीकारे पूषानुमन्त्रणमन्त्रस्य लिङ्गेनोत्कृष्टस्यापि दुर्बलेन प्रकरणेन विनियोगसंभवात् तत्रापि प्रकरणबाधो न स्यादिति शङ्कते—**न चेति** ॥ **प्रमाणद्वयस्यापीति** ॥ लिङ्गस्य प्रकरणस्य चेत्यर्थः ॥ **एकविषयत्वादिति** ॥ पूषानुमन्त्रणमन्त्रविषयत्वादित्यर्थः ॥ **मन्त्रप्रयोजनेति** ॥ मन्त्रपाठकाल एव प्रयोजनाकाङ्क्षायाः सत्त्वेन तत्काल एव प्रबलप्रमाणेन लिङ्गेनोत्कर्षसिद्धौ पुनरकाङ्क्षामुत्थाप्य प्रकरणेन विनियोगस्यासंभवादित्यर्थः। ननु तथाप्याकाङ्क्षामूलकत्वे विनियोगस्य काम्यातिरिक्तेऽप्याकाङ्क्षोत्थाप्यतामिति शङ्कते—**न चेति** ॥ **किंचिदस्तीति** ॥ क्रमसमाख्यादीनामभावादित्यर्थः। नन्वव्यभिचरितक्रतुसम्बध एवाकाङ्क्षोत्थापक इत्याशंक्य निराचष्टे—**अव्यभिचरितेति** ॥ निराकाङ्क्षस्थले तत्कल्पनायोगादित्यर्थः। अव्यभिचरितक्रतुसम्बन्धमभ्युपेत्याकाङ्क्षोत्थापकत्वं नास्तीत्युक्तम्। अव्यभिचरितक्रतुसम्बन्धोऽपि नास्तीत्याह—**वस्तुतस्त्विति** ॥ **जुह्वादीनामिति** ॥ **तत्त्वेन**—जुहूत्वादिना। अग्न्यादिशब्दस्य देवतात्वपक्षे आनुपूर्वीविशेषविशिष्टवर्णरूपस्यार्थस्य [देवतात्वेन

अव्यभिचारेऽपि वा आकाङ्क्षोत्थापकत्वानुपपत्तेर्नान्यत्र विनियोगः । अत एव स्वारसिकी आकाङ्क्षा यत्र तु न निवर्तते यथा अर्थज्ञाने उपनिषज्जन्यात्मज्ञाने वा तत्राकङ्क्षोत्थापनप्रयोजनाभावात् सामान्यसम्बन्धबोधकप्रमाणं विनापि भवत्येव लिङ्गमात्राद्विनियोगः । प्रकृते तु स्वारसिकाकाङ्क्षानिवृत्तेराकाङ्क्षोत्थापकसामान्यसम्बन्धबोधकप्रमाणापेक्षेति वैषम्यम् । न चैवं प्रबलक्रममात्रेणैव तदुपपत्तेः समाख्यावैयर्थ्यम् । यत्र सात्तदश्यवदग्निदेवत्यकर्मक्रमे आग्नेयमन्त्रद्वयाम्नानं तत्र प्रथमातिक्रमे कारणाभावात् क्रमाविरोधाच्च सामिधेनीषु निवेशे प्राप्ते समाख्यया याज्यानुवाक्याकार्ये निवेशः । सामिधेनीषु त्वन्यासामागमः । न चैव क्रमोपन्यासवैयर्थ्यम् ; यत्रान्यदेवत्यपूर्वेष्टियाज्याम्नानानन्तरमुत्तरेष्टियाज्यातः पूर्वमाग्नेय्यः ऋचः पठिताः तत्र तत्तल्लिङ्गकमन्त्रेण याज्याकार्ये निवेशासम्भवात् समाख्याबाधेऽपि क्रममात्रेणोत्तरेष्टिसामिधेनीकार्ये निवेशः ; तत्सामिधेनीस्थानपठितत्वात् । अतः सिद्धं

---

अर्थस्य] देवतात्व[पक्षे]ऽपि तादृशशब्दविशिष्टस्यार्थस्य देवतात्वेन तादृशानुपूर्वीविशिष्टत्वेनैव पदार्थोपस्थितिं प्रति शाब्दबोधं प्रति च जनकत्वेन तादृशदेवतायाः क्रत्वव्यभिचाराभावादित्यर्थः ॥ **यत्र त्विति** ॥ अर्थज्ञानस्यानुष्ठानं प्रत्यवश्यं कारणत्वावश्यकतया तद्विना अनुष्ठानासंभवात् सामान्यसम्बन्धबोधकप्रमाणं विनापि सामर्थ्यमात्रेणानुष्ठानाङ्गत्वमित्यर्थः ॥ **उपनिषदिति** ॥ तत्राप्युपनिषज्जन्यात्मज्ञाने लोकान्तरोपभोग्यस्वर्गादिसाधने ज्योतिष्टोमादौ प्रवृत्त्यसंभवेन तस्यापि सामान्यसम्बन्धबोधकप्रमाणं विना लिङ्गादेव विनियोग इत्यर्थः । अत एवोत्तरमीमांसायाम् 'एक आत्मनः शरीरे भावात्' इत्यधिकरणे देहातिरिक्तात्मा साधितः । तदभिप्रायेणैव चोदनापादे वार्त्तिकादौ आत्मवादे देहेन्द्रियादिव्यतिरिक्तः[आत्मा]साधित इति द्रष्टव्यम् ॥ **प्रकृते त्विति** ॥ अर्थः पूर्वमुक्तः । ननु सामान्यसम्बन्धस्य क्रमेण प्रबलेनैव सिद्धिसभवात् समाख्यावैयर्थ्यमिति शङ्कते—**न चेति** ॥ **सात्तदश्यवदिति** ॥ यथा मित्रविन्दादिप्रकरणे सात्तदश्यविधिरेकः अनारभ्यविधिरेकः तद्वदित्यर्थः ॥ **क्रमाविरोधादिति** ॥ सामिधेन्यङ्गत्वेऽपि दार्शपूर्णमासिकक्रमोपपत्तेरित्यर्थः । ननु विनिगमनाविरह इत्यत आह—**प्रथमातिक्रम इति** ॥ सामिधेनीनां प्रथमत उपस्थितत्वेन पश्चाद्भाविप्रधानाङ्ग[त्वापेक्षयातदङ्ग]त्वस्यैव विनिगमकत्वादित्यर्थः । तत्र प्रधानाङ्गत्वसिद्ध्यर्थं समाख्यापेक्षणात् समाख्याया याज्यानुवाक्यात्वेन प्रधानाङ्गत्वसिद्ध्यर्थत्वात् न समाख्यावैयर्थ्यमित्यर्थः । ननु सामिधेनीनां संख्यासंपत्तिर्न स्यादित्यत आह—**सामिधेनीष्विति** ॥ **अन्यासामिति** ॥ समाख्यारहितानाम् आग्नेयीनामाग्नेयाना[मन्यासा ?]मागम इत्यर्थः । तर्हि समाख्ययैवोपपत्तौ क्रमवैयर्थ्यमिति शङ्कते—**न चेति** ॥ **यत्रान्यदेवत्यपूर्वेष्टीति** ॥ तत्र पूर्वेष्टेः

काम्येष्टिष्वेव विनियोग इति ॥ ७ ॥

**(८)—अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥२१॥ तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २२ ॥ अनर्थकश्चोपदेशः स्यादसम्बन्धात् फलवता न ह्युपस्थानं फलवत् ॥ २३ ॥ सर्वेषां चोपदिष्टत्वात् ॥ २४ ॥**

ज्योतिष्टोमे "अग्नेय्याग्नीध्रमुपतिष्ठते" इत्यत्र प्रकृताप्रकृतसाधारण्येन ऋङ्मात्रमाग्नीध्रोपस्थानाङ्गम्, उत प्रकृता एव याः स्तोत्रादावपि विनियुक्तास्ता एवेति चिन्तायाम्—आग्नेयीपदस्याविशेषेण सर्वपरत्वात् प्रकरणस्य तत्सङ्कोचकत्वानुपपत्तेः अग्निदेवत्यऋङ्मात्रस्यैव विशिष्टविध्युत्तरकालीनविशेषणविधिना

---

स्वक्रमाम्नातमन्त्रेण निराकाङ्क्षतयानन्तरेष्टेश्चान्यदेवत्यत्वेन तत्राग्नेयादीनां निवेशासंभवेन समाख्याया आग्नेयीनामेव याज्यात्वेन निवेशः स्यात्, तदर्थं क्रमादरः । समाख्यायाश्च बाधः, आग्नेयीनां चोत्तरेष्टिक्रमेणोत्तरेष्टिसामिधेनीषु निवेश इत्यर्थः ॥

सूत्रार्थस्तु—तत्तदिष्टिलिङ्गानुसारिक्रमात् समाख्यानाच्च काम्येष्ट्यङ्गत्वसिद्ध्यर्थम् इन्द्राग्न्यादिकाण्डाम्नानम् इति ॥ इदं च शाखान्तराभिप्रायं द्रष्टव्यम् । तैत्तिरीयशाखायाम् 'उभावामिन्द्राग्नी' इत्याम्नानात् ॥ ७ ॥

**अधिकारे तु मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥** लिङ्गस्य सामान्यसम्बन्धापेक्षत्वे प्रतिपादिते तत्प्रसङ्गाच्छ्रुतेरपि सति सम्भवे सामान्यसम्बन्धमन्यतः सिद्धमपेक्ष्य विशेषमात्रपरत्वमिति प्रतिपाद्यत इति प्रसङ्गसङ्गतिः । अत एव पादसङ्गतिरपीति बोध्यम् । एतेन लिङ्गविचारप्रस्तावे श्रुतिविचारो न युक्त इति शङ्का निरस्ता ॥ **आग्नेयीपदस्येति** ॥ आग्नेयीपदस्याग्निप्रतिपादकऋक्परत्वेन प्रकृतमात्रग्रहणे अविशेषप्रतीतानामप्रकृतानां परित्यागेन श्रुतिसङ्कोचापत्तेरित्यर्थः ॥ **विशिष्टविध्युत्तरेति** ॥ प्रथमत आग्नेयीविशिष्टाग्नीध्रोपस्थाने विहिते विशेषणविधिं विना विशिष्टविध्यसंभवेन आग्नेय्या आग्नीध्रोपस्थानं कुर्यादिति विशेषणविधिकल्पनस्यावश्यकतया विशेषणविधिविषयत्वं प्रकृताप्रकृतसाधारणाग्नेयीमात्रस्येत्यर्थः । नन्वेवं 'व्रीहीनवहन्ति' इत्यादावपि प्रकृताप्रकृतसाधारणव्रीहिग्रहणं स्यात्, तत्रापि

आग्नीध्रोपस्थानाङ्गत्वेन विधानम् । न ह्यत्राग्नेयी उद्देश्या ; येनानर्थक्यभिया व्रीहिवत् प्रकरणेन सङ्कोच्येत । तृतीयया उपादेयत्वावगमात् । यत्र चोपस्थानस्वरूपे आनर्थक्याशङ्का तत्र प्रकरणानुप्रवेशेऽपि नाग्नेयीपदस्य प्रकृतपरत्वापत्तिः । न चाग्नेयीपदस्य यौगिकत्वात् तद्धितान्तत्वाद्वा सन्निहितपरत्वम् ; यौगिकानामवयवार्थविशिष्टव्यक्तिमात्रवाचित्वेन सन्निहितवाचित्वे प्रमाणाभावात् । तद्धितस्य तद्वाचित्वेऽपि प्रकृतानामृचामेकप्रकरणस्थत्वेऽपि प्रदेशान्तरस्थत्वेन सन्निहितत्वाभावात् । अस्तु वा प्रकरणसन्निहितस्यैव तद्धितेन ग्रहणम्, तथापि यत्र न ताद्धितश्रवणं यथा ब्रह्मौदनप्राशनादौ "चतुरो ब्राह्मणान् भोजयेत्" इत्यादौ

---

व्रीहिपदस्य व्रीहिमात्रपरत्वादित्यत आह—**न ह्यत्रेति** । तत्र व्रीहीणामुद्देश्यत्वेन व्रीहिमात्रग्रहणे लौकिकव्रीहीणामपि प्रोक्षणापत्त्या तत्रानर्थक्येनापूर्वसाधनत्वलक्षणाया आवश्यकत्वेन प्रकृतानामपूर्वसाधनत्वस्य क्लृप्तत्वेन तेषामेव ग्रहणेन श्रुतिजनितविशेषप्रत्ययस्य बाधात् श्रुतिसंकोचोऽगत्या स्वीकृतः । प्रकृते त्वाग्नेयीनामुपादेयत्वेन सर्वाग्नेयीग्रहणेऽप्यानर्थक्याभावात् न प्रकृतमात्रग्रहणमित्यर्थः । ननु प्रकरणानुप्रवेशाभावे आग्नीध्रोपस्थानमप्यप्रकृतं गृह्येतेत्यत आह—**यत्र चेति** ॥ अप्रकृतोपस्थानग्रहणे तस्यानर्थक्येन तद्विषये प्रकृतविषयत्वेन सङ्कोचोऽगत्या स्वीकार्यः, न त्वाग्नेयीविषये श्रुतिसङ्कोच इत्यर्थः । नन्वाग्नेयीपदस्याग्निसम्बधिऋक्परत्वेन सर्वासामनुपस्थितत्वात् प्रकृतानामुपस्थितत्वात् तासामेव ग्रहणम्, सूक्तार्थकताद्धितग्रहणेऽप्यग्निदेवत्यऋग्ग्रहणेनोपस्थितग्रहणमेव युक्तमिति शङ्कते—**न चेति** ॥ **अवयवार्थेति** ॥ सम्बन्धसामान्याभिप्रायेण यौगिकत्वेन यौगिकस्याग्नेयीपदस्याप्रकृतसाधारण्येनाग्निसम्बन्धित्वाविशेषात् सूक्तार्थकतद्धितान्तत्वेऽपि सर्वासामग्निदेवत्यत्वाविशेषेण ग्रहणोपपत्तेरित्यर्थः । तद्धितस्य संनिहितपरत्वमभ्युपेत्याह—**तद्धितस्येति** ॥ 'सास्य देवता' इति सर्वनामार्थे तद्धितविधानेन सर्वनाम्नां सन्निहितपरत्वादिति भावः । यद्युपस्थानविधिसंनिधावाग्नेय्यः पठिताः स्युः तदा सन्निहिता भवेयुः । इह तु प्रदेशान्तरपठिता ऋचो नोपस्थानविधिसंनिहिता इति तन्मात्रपरत्वं न युक्तमित्यर्थः । ननु संनिहितपाठाभावेऽपि ज्योतिष्टोमप्रकरणपाठकृतविशेषोऽस्त्येवेत्यत आह—**अस्तु वेति** ॥ **यत्रेति** ॥ यत्र प्रकरणकृतसंनिधिग्रहणप्रयोजकताद्धितो नास्ति तत्राविशेषात् प्रकृताप्रकृतसर्वग्रहणमित्यर्थः । तदुदाहरति—**चतुर इति** ॥ आधाने 'चतुरो ब्राह्मणान् भोजयेत्' इति विधिना ब्राह्मणचतुष्टयभोजनस्य विहितत्वेन तत्र ब्रह्मादिऋत्विक्चतुष्टयग्रहणे प्रमाणाभावेनाप्रकृतानामपि ग्रहणं सम्भवतीत्यर्थः । लाघवात्प्रकृतानामेव ग्रहणमिति शङ्कते—

तत्र प्रकृतर्क्त्विग्ग्रहणे प्रमाणाभावः । न च प्रकृतानामपूर्वार्थत्वस्य क्लृप्तत्वात् केवलं द्वाररूपाग्नीध्रोपस्थानसम्बन्धकरणलाघवादप्रकृतानामुभयकरणे गौरवापत्तेः प्रकृतनियम इति वाच्यम् ; प्रकृतग्रहणेऽपि उपस्थानस्वरूपस्य द्वारत्वे तत्कार्यापन्ने ऊहाद्यनापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । न हि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तरकल्पनया अपूर्वार्थत्वबोधः, तथात्वे व्रीहीणां स्वरूपेण द्वारत्वापत्तौ यवानां तदनापत्तेः । अतो लाघवादपूर्वसाधनीभूतस्तोत्रत्वेनैवोद्देश्यता । तावता चापूर्वसाधनीभूतोपस्थानार्थत्वस्यालाभादस्त्येव प्रकृतग्रहणेऽपि तद्विधावपूर्वसाधनलक्षणा । अपि च स्तोत्रापूर्वसाधनत्वक्लृप्तावपि नोपस्थानजन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम् । अतः सर्वासामेव ग्रहणम् ; अप्रकृतानामेव वा कार्यसाकाङ्क्षत्वादिति प्राप्ते—

अप्रकृतग्रहणे तासामपूर्वसाधनीभूतोपस्थानार्थत्वान्यथानुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत् कल्पनीयत्वापत्तेः प्रकृतानां च कार्यान्तरसम्बन्धबोधकविधावेवापूर्वार्थत्वस्य क्लृप्तत्वात् लाघवोपजीविना प्रकृतनियमः । सम्भवति

---

न चेति ॥ प्रकृतग्रहणेऽप्यस्त्येव लक्षणेत्याह—प्रकृतग्रहणेऽपीति ॥ आग्नीध्रोपस्थानोद्देशेनाग्नेयीविधावाग्नीध्रोपस्थानस्वरूपस्योद्देश्यत्वे आनर्थक्यापत्त्या तत्परिहारायापूर्वसाधनीभूतोपस्थानस्य द्वारत्वलाभार्थं लक्षणायाः सिद्धान्तेऽप्यावश्यकत्वेन लाघवाभावादित्यर्थः । [अपि चेति]स्तोत्रापूर्वसाधनत्वस्योद्देश्यतावच्छेदकत्वेऽपि स्तोत्रजन्यज्योतिष्टोमापूर्वसाधनत्वस्यानुपस्थितत्वान्न लाघवमित्यर्थः । ननु प्रकृतानां स्तोत्रनिर्वर्तनकार्यसत्त्वेन प्रयोजनाकाङ्क्षाभावान्न तासां ग्रहणमिति शङ्कायामाह—अप्रकृतानामेवेति ॥ आग्नेयीशब्दोपस्थितानामप्रकृतानां प्रयोजनाकाङ्क्षासत्त्वेन तासामेव ग्रहणं युक्तमित्यर्थः ॥ अप्रकृतेति ॥ अपूर्वसाधनीभूतोपस्थानोद्देशेनाप्रकृतविधाने तासामपूर्वार्थत्वं विना अपूर्वसाधनोपस्थानार्थत्वासम्भवेन तासामपूर्वार्थत्वमपि कल्पनीयमिति गौरवम् । यथा 'व्रीहीनवहन्ति' इत्यनेनावघातस्यापूर्वार्थत्ववत् [-त्वं, ?] व्रीहीणामपूर्वसाधनत्वस्य 'व्रीहिभिर्यजेत' इति शास्त्रेण प्रमितस्यैव ग्रहणात् ; तद्वत् प्रकृतेऽपि वक्तव्यतया गौरवमित्यर्थः । प्रकृतग्रहणे लाघवमाह—प्रकृतानां चेति ॥ तासां स्तोत्रादावपूर्वसाधनत्वस्य क्लृप्तत्वेन तदुपजीवनेनोपस्थानोद्देशेन विधौ लाघवमित्यर्थः । ननु प्रकृतानां वाङ्नियमन्यायेन स्तोत्रापूर्वसाधनत्वेऽपि ज्योतिष्टोमापूर्वसाधनत्वं न सिद्धमिति तत्कल्पनाप्रयुक्तगौरवमस्त्येवेति शङ्कां निरस्यति—सम्भवति चेति ॥ कार्यान्तरद्वारेति ॥ उपस्थानादि-

च प्रकृतानामप्याग्नेयीनां वाङ्लिङ्गमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसम्बन्धासम्भवेऽपि कार्यान्तरद्वारा सः । आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तदपूर्वसम्बन्धावगमः । अयमेव च ब्रह्मौदनप्राशने ऋत्विक्त्वनियामकन्यायः । न चैवम् "आत्रेयाय हिरण्यं ददाति" इत्यत्रापि तन्नियमापत्तिः । ऋत्विक्त्ववदात्रेयत्वस्य नियमेनाप्राप्तेः । अत एव च "अग्निमुपनिधाय स्तुवीत" इत्यादावाक्षेपणीयस्तोत्रापूर्वसम्बन्धस्याहवनीयादावप्राप्तत्वान्न तन्नियमः ; अपि तु विना वचनमायतनबहिर्भावायोगाल्लौकिकस्यैवेति वक्ष्यते । अतः सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम् ॥ ८ ॥

**(९)—लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य ॥ २५ ॥**
**तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥ २६ ॥**

---

द्वारेत्यर्थः । ननु स्तोत्रादौ प्रकृतानां विनियोगेन प्रयोजनाकाङ्क्षाभावान्नोपस्थाने विनियोग इत्युक्तमित्यत आह—**स्तोत्रादाविति** ॥ निराकाङ्क्षत्वेऽपि ज्योतिष्टोमप्रकरणे प्रदेशान्तरे पुनः पठितत्वेन तत्सार्थक्यार्थं ज्योतिष्टोमापूर्वसम्बन्धस्यावश्यं वाच्यत्वादित्यर्थः । उक्तन्यायं ब्रह्मौदनप्राशनेऽतिदिशति—**अयमेवेति** ॥ ननु 'आत्रेयाय हिरण्यं ददाति' इत्यत्रापि प्रकृतात्रेयस्यैव ग्रहणं स्यादिति शङ्कां निराकरोति—**न चैवमिति** ॥ **नियमेनाप्राप्तेरिति** ॥ प्रदेशान्तरे आग्नेय्याः पुनः पाठवदात्रेयस्य नियमेन प्राप्त्यभावेनाप्रकृतग्रहणोपपत्तिरित्यर्थः । ननु 'अग्निमुपनिधाय स्तुवीत' इत्यत्रापि प्रकृतापूर्वसाधनीभूताहवनीयादेर्ग्रहणापत्त्या लौकिकाग्निनिधानसिद्धान्तविरोधः स्यादित्याशङ्क्य समाधत्ते—**अत एवेति** ॥ 'अग्निमुपनिधाय स्तुवीत' इत्यादौ आहवनीयादेः स्तोत्रापूर्वसम्बन्धस्याक्लृप्तत्वादाहवनीयादेर्देशविशेषनिबद्धत्वेनान्यत्र नयने प्रायश्चित्तविधानेन चान्यत्र नयनासम्भवेन लौकिकाग्नेरेवोपनिधानमिति न सिद्धान्तविरोध इत्यर्थः । मन्त्रान्तरस्य[मन्त्राणां पृथक् ?]उच्चारणेन विनियोगे न कोऽपि दोष इति वैषम्यमिति भावः ॥

सूत्रार्थस्तु—**अधिकारे** प्रकरणे यो **मन्त्रविधिः सः अतदाख्येषु** चकारात् प्रकरणाख्यातेषु च स्यादाग्नेयीशब्देन सामान्येन **शिष्टत्वात्** इति ॥ ८ ॥

**लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य** ॥ आदिना 'उपहूतो भक्षयामि' इत्यन्त इति शेषः ॥ **अंश इति** ॥ वसुमद्गणस्येत्यादि भक्षयाम्यन्त इत्यर्थः ॥

सोमे—"भक्षेहि मा विश" इत्यादिर्भक्षानुवाक इत्येवं समाख्यातो मन्त्रः श्रुतः । तत्र यस्तावदस्यांशो भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते । ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोगः ; अथवा भक्षणमन्त्रैकवाक्यतया भक्षण एवेति चिन्तायाम्—ग्रहणादेरविहितत्वेनापूर्वं प्रत्यङ्गत्ववजनकत्वस्याप्यभावात् ग्रहणस्यार्थाद्भक्षसाधकत्वेन पक्षप्राप्तावपि "बाहुभ्यां सघ्यासम्" इत्यनेनोक्तस्य बाहुद्वयकरणकस्य ग्रहणस्य कथमप्यप्राप्तेः अवेक्षणस्य च भक्षाजनकत्वेनैवाप्राप्तेः सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभावितया भक्षाजनकत्वेन तेषामपूर्वप्रयोजकत्वस्याप्यभावात् ग्रहणाद्यर्थत्वे आनर्थक्या-

---

**ग्रहणेत्यादि** ॥ 'एहि वसो' इत्यारभ्य 'सघ्यासम्' इत्यन्तः सोमग्रहणप्रतिपादकः, 'नृचक्षसम्' इत्यादिः 'अवख्येषम्' इत्यन्तोऽवेक्षणप्रतिपादकः, सन्नोतेर्हिंसार्थत्वेऽपि प्रकृते ग्रहणार्थत्वस्य चक्षिङादेशस्य ख्याञोऽवेक्षणार्थत्वस्य च वार्तिके प्रतिपादनात् । 'हिन्वम' इत्यादिः 'अवाङ्नाभिमतिगा' इत्यन्तः सम्यग्जरणप्रतिपादकः । हे हारितवर्ण सोम मे गात्राणि हिन्व प्रीणय मे गणान् पुत्रपौत्रादीन् मा वितीतृषः सोमपानविषयकतृष्णारहितान् मा कुरु, शिवः सन् मे सप्त ऋषीन् चक्षुःश्रोत्रादीन् उपतिष्ठस्व व्याप्नुहि, मे नाभिमवाङ् मातिगाः नाभेरधस्तान्नातिगाः, इति प्रीणननाभ्यधोगमननिषेधाभ्यां सम्यग्जरणावगमादिति भावः ॥ अत्र 'भक्षे हीति भक्षमाह्रियमाणं प्रतीक्ष्य अश्विनोस्त्वा बाहुभ्यां सघ्यासं[इति]प्रतिगृह्य' इत्यापस्तम्बसूत्रे सन्निधावाह्रियमाणभक्षप्रतीक्षणे विनियोगेऽपि प्रतीक्षणैकान्तिकलिङ्गाभावात् भक्षशब्दानुसारेण समाख्यानुसारेण च भक्ष एव विनियोगो युक्त इति न प्रतीक्षणार्थकः कश्चिदंश इत्युक्तमिति द्रष्टव्यम् ॥ **ग्रहणादेरिति** ॥ अविहितत्वे कृतिकारकत्वेन विहितत्वरूपाङ्गत्वासंभवादित्यर्थः ॥ **जनकत्वस्यापीति** ॥ ग्रहणादेरपूर्वजनकत्वे प्रमाणाभावादित्यर्थः । ननु ग्रहणं विना भक्षासंभवात् अर्थापत्त्या अपूर्वसाधनत्वं सिध्यतीत्यत आह—**अर्थादिति** ॥ **बाहुभ्यामिति** ॥ ग्रहणमात्रस्यार्थप्राप्तत्वेऽपि बाहुद्वयकरणकग्रहणविशेषस्याविहितत्वेनापूर्वजनकत्वे मानाभावादित्यर्थः ॥ **अवेक्षणस्येति** ॥ अनवेक्षितस्य भक्षणसम्भवादित्यर्थः ॥ **सम्यग्जरणस्येति** ॥ तस्य भक्षोत्तरकालत्वेन भक्षजन्यतया तज्जनकत्वायोगादित्यर्थः ॥ **तदनुकूलव्यापारस्येति** ॥ आसनविशेषव्यापारस्येत्यर्थः । तथा च तस्य जनकत्वे भक्षद्वारापूर्वसाधनत्वं भवेत् ; तस्यैव[अजनकत्वे]सुतरां तद्द्वारा नापूर्वसाधनत्वसम्भव इत्यर्थः । पूर्वपक्षमुपसंहरति—**भक्षमन्त्रैकवाक्यतयेति** ॥ गृहीत्वावेक्ष्य सम्यग्जरणाय भक्षयामीत्येकवाक्यतयेत्यर्थः ।

पत्तेर्भक्षमन्त्रैकवाक्यतया भक्षार्थत्वमेवैषाम् । एवं च समाख्याप्युपपन्ना भवतीति प्राप्ते—

ग्रहणादिप्रत्यक्षविध्यभावेऽपि समाख्यासहकृतावान्तरप्रकरणेन भक्षसम्बन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्तेस्तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ न स्वतो निराकाङ्क्षयोर्द्वयोराख्यातपदयोः कथञ्चिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनं शक्त्यैव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशकत्वकल्पनमुपपत्तिमत् । न चैवमपि सम्यग्जरणस्य कृत्यसाध्यत्वान्न विधिसंभवः । सम्यग्जरणानुकूलव्यापारस्यासनविशेषस्यैवानुष्ठेयस्य विधेयत्वात् । वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणं प्रतिपत्तिरिति तस्य भक्षोपयोगिता ॥ ९ ॥

---

तथा च सर्वस्य भक्षविशेणत्वेन भक्षसमाख्याप्युपपद्यत इति सर्वस्यानुवाकस्य भक्षाङ्गत्वमित्यर्थः ॥ **ग्रहणादीति** ॥ ग्रहणादीनां प्रत्यक्षविध्यभावेऽप्यवान्तरप्रकरणेन मन्त्राणां भक्षाङ्गत्वावगमेन लिङ्गेन मन्त्रविधिं कल्पयित्वा अनेन मन्त्रेण ग्रहणादिप्रकाशनं कुर्यादित्यर्थपर्यवसानेन ग्रहणादिष्वेव विनियोग इत्यर्थः ॥ **आख्यात[पद]योरिति** ॥ बाहुभ्यां सध्यासं भक्षयामि इत्याख्यातयोरित्यर्थः । ननु शक्त्यैव ग्रहणादीनां भक्षविशेषणत्वात् न गौण्या भक्षप्रकाशकत्वमित्यत आह—**शक्त्यैवेति** ॥ तथा सति ग्रहणादिप्रकाशनेन ग्रहण एव विनियोगादित्यर्थः । ननु ग्रहणादीनां कृतिसाध्यत्वाद्विधिसंभवेऽपि सम्यग्जरणस्य कृत्यसाध्यत्वात् विध्यसंभव इत्यत आह—**सम्यग्जरणस्येति** ॥ **आसनेति** ॥ 'भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत्' इति वैद्यशास्त्रानुसारेण जरणानुकूलव्यापारस्य आसनविशेषस्य कृतिसाध्यत्वेन तद्विशिष्टजरणस्यापि कृतिसाध्यत्वव्यवहारोपपत्त्या विधिसंभवादित्यर्थः । ननु भक्षणस्यैव प्रतिपत्तित्वेन सम्यग्जरणपर्यन्तभक्षणस्य प्रतिपत्तित्वाभावात् कथं सम्यग्जरणस्य भक्षाङ्गत्वमित्यत आह—**वमनविरेकेति** ॥ 'सोमेन्द्रं चरुं निर्वपेत् यः सोमं वमिति' इत्यादिना वमनादौ प्रायश्चित्तविधानेन सम्यग्जरणपर्यन्तभक्षणस्य शास्त्रार्थत्वेन तस्यैव प्रतिपत्तित्वेन भक्षोपयोगित्वादिति भावः । इदमुपलक्षणम्—'मामेवाङ्नाभिमातिगा' इति मन्त्रलिङ्गादपि सम्यग्जरणपर्यन्तभक्षस्य प्रतिपत्तित्वं द्रष्टव्यम् । सूत्रे लिङ्गशब्दो ग्रहणादिविशिष्टभक्षपरः ॥ ९ ॥

(१०)—गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २७ ॥

तस्मिन्नेवानुवाके 'मन्द्राभिभूतिः' इत्यादिः 'तृप्यतु' इत्यन्तः तृप्तौ विनियोक्तव्यो ग्रहणादाविवेति प्राप्ते—

ग्रहणादिवदनुष्ठेयत्वाभावात्तृप्तेरप्रकाश्यत्वम् । न च सम्यग्जरणवत् तृप्त्यनुकूलव्यापाररूपभक्षणबाहुळ्याक्षेपकत्वम् ; "अल्पं भक्षयति" इति वचनविरोधेन तत्कल्पनानुपपत्तेः । अत एव तृप्तेर्भक्षणेनाजननान्न तस्याः स्वर्गवज्जन्यत्वमात्रेण प्रकाश्यत्वोपपत्तिः । अतश्च लिङ्गविनियोगासम्भवात्सत्यप्याख्यातद्वयस्य स्वतो निराकाङ्क्षत्वे इतिकरणाध्याहारेण तृप्यत्वित्येतदर्थं भक्षयामीत्येवं भक्षमन्त्रैकवाक्यतां प्रकल्प्य स्वार्थविशिष्टभक्षणप्रकाशकत्वमेवाङ्गीकर्तव्यम् । स्वार्थश्च श्रुत्या तृप्तिरेव ; तत्प्रकाशनांशे चादृष्टार्थत्वम् । अथवा लक्षणया भक्षणस्तुतिः । सर्वथा न लिङ्गाद्विनियोगः ॥ १० ॥

---

गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात् तयोरेकार्थसंयोगात् ॥ आपवादिकीं संगतिमभिप्रेत्याह—तस्मिन्नेवानुवाक इति ॥ ग्रहणादौ प्रत्यक्षविध्यभावेऽपि तत्र मन्त्रविनियोगादिहापि तृप्तौ मन्त्रविनियोग इति पूर्वपक्ष इत्यर्थः ॥ ग्रहणादिवदिति ॥ ग्रहणस्यानुष्ठेयत्वेन विधेयत्वाद्युक्तमङ्गत्वमिति तत्र विनियोगो युक्तः । तृप्तेस्त्वनुष्ठेयत्वाभावात् न विधेयत्वमिति न तत्प्रकाशनेन किंचित्प्रयोजनमित्यर्थः । ननु तृप्तेर्मन्त्रप्रतिपाद्यतया तस्या अनुष्ठेयत्वाभावेऽपि सम्यग्जरणस्याविधेयत्वेऽपि तदनुकूलासनविशेषस्यानुष्ठेयत्वमात्रेण तस्य विधेयत्ववत् तृप्त्यनुकूलबहुभक्षणस्यानुष्ठानसम्भवेन विशिष्टस्य कृतिसाध्यत्वसम्भवेन मन्त्रप्रकाश्यत्वमास्तामित्याशङ्क्य समाधत्ते—न चेति ॥ भवेदेवं यदि शास्त्रान्तरविरोधो न स्यात्, इह तु अल्पं भक्षयतीति विधिना अल्पभक्षणविधानेन तद्विरोधेन बहुभक्षणस्य कल्पयितुमशक्यत्वादित्यर्थः । ननु स्वर्गादेर्यागाङ्गत्वाभावेऽपि यागजन्यत्वमात्रेण अग्नमेत्यादिमन्त्रप्रकाश्यत्ववत् तृप्तेर्भक्षणजन्यत्वमात्रेण प्रकाश्यत्वं स्यादित्यत आह—अत एवेति ॥ तृप्तेर्भक्षणजन्यत्वाभावादेवेत्यर्थः ॥ आख्यातद्वयेति ॥ तृप्यतु इत्येकमाख्यातं भक्षयामीत्येकमिति तयोः स्वतो निराकाङ्क्षयोरपि इतिशब्दाध्याहारेण तृप्यत्विति भक्षयामीत्येकवाक्यतया तृप्तिविशिष्टभक्षणमेव प्रकाश्यमित्यर्थः । तस्मान्न लिङ्गेन तृप्तौ विनियोग इति पर्यवसितार्थः । तृप्तिप्रकाशनं

(११)—लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २८ ॥ यथादैवतं च तत्प्रकृतित्वं हि दर्शयति ॥ २९ ॥

भक्षमन्त्रः किं इन्द्रदेवत्याभ्यास एवाङ्गं तद्भिन्नाभ्यासेष्वमन्त्रकं भक्षणम्, उत तेषु ऊहेन, उत अनूहेन वेति चिन्तायाम्—प्रकरणात् भक्षमन्त्रस्य सर्वप्रदानार्थत्वावगमेऽपि 'इन्द्रपीतस्य' इति लिङ्गेन इन्द्रदेवत्यप्रदानमात्राङ्गत्वम् । न चेन्द्रेण यस्मिन् सवने पीत इति बहुव्रीहिस्वीकारेण सर्वसोमसम्बन्धिसवनविशेषणत्वाङ्गीकारात् लिङ्गाविरोध इति वाच्यम्; पदद्वयलक्षणापादकलक्षणाननुगत-

---

चाद्दष्टार्थं प्राशस्त्यलक्षणया स्तुतिपरं वेत्यर्थः ॥

सूत्रार्थस्तु—**गुणाभिधानात्** तृप्तिरूपगुणाभिधानात् । तृप्तिरूपगुणकथनेन प्राशस्त्यप्रतिपादनादित्यर्थः । **मन्द्रादिः** भक्षयाम्यन्तः **एकमन्त्रः** स्यात्, **तयोः मन्त्रयोः एकार्थसंयोगात्** भक्षणरूपैकार्थप्रतिपादकत्वात् इति । प्रयोजनं पूर्वपक्षे भक्षणानन्तरभावित्वात् तृप्तेर्भक्षणानन्तरं मन्त्रः, सिद्धान्ते भक्षणात्प्रागेवेति ॥ १० ॥

**लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम्** ॥ मन्त्राणां सामर्थ्यानुसारेण विनियोगे निरूपिते भक्षणमन्त्रस्य किम् ऐन्द्रप्रदानशेषभक्षण एव सामर्थ्यम्, उत अनैन्द्रप्रदानशेषभक्षणेऽपि इत्येवं सामर्थ्यविषयविचारेण यथासामर्थ्यं विनियोगस्थिरीकरणात् सङ्गतिः ॥ **लिङ्गेनेति** ॥ इन्द्रेण पीत इति व्युत्पत्त्या इन्द्रदेवत्याभ्यासाङ्गत्वम्, प्रकरणापेक्षया लिङ्गस्य प्रबलत्वादित्यर्थः । ननु लिङ्गविरोधे सत्येवं स्यात्, इह लिङ्गविरोध एव नास्ति, इन्द्रपीतशब्दस्य बहुव्रीहित्वेन इन्द्रेण पीतः सोमो यस्मिन् सवन इति व्युत्पत्त्या ऐन्द्रप्रदानसम्बन्धिसवनसम्बन्धिसोमपरत्वेन सर्वेषामभ्यासानां तथात्वादिन्द्रपीतशब्दार्थविरोधाभावेन सर्वत्र मन्त्रप्रवृत्तिर्युक्तेति शङ्कते—**न चेति** ॥ **पदद्वयेति** ॥ अनेकमन्यपदार्थे इति सूत्रानुसारेण बहुव्रीहेरन्यपदार्थप्रधानत्वेन अन्यपदार्थप्रतीत्यर्थं पदद्वयलक्षणाया वक्तव्यत्वेन गौरवात्तदपेक्षयोत्तरपदार्थप्रधानतत्पुरुषस्य पूर्वपदमात्रस्य लक्षणापादकत्वेन लाघवादित्यर्थः । ननु बहुव्रीहावन्यपदार्थशक्तेरेव वार्तिकेऽरुणाधिकरणे साधितत्वेन तत्पुरुषापेक्षया बहुव्रीहेरेव लघुत्वमित्यत आह—**लक्षणाननुगतेति** ॥ सूत्राननुशिष्टेत्यर्थः । तथा च व्यधिकरणबहुव्रीहेः शास्त्राननुशिष्टत्वेन शास्त्रसंमतस्तत्पुरुष एव स्वीकार्य इत्यर्थः । नन्विन्द्रेण पीत इति तत्पुरुषो न सम्भवति, यजमानसम्बन्धिसोमस्येन्द्रेण प्रतिग्राहं विना

व्यधिकरणबहुव्रीह्यपेक्षया पूर्वपद एव सम्बन्धिलक्षणापादकस्य लक्षणानुगतस्य इन्द्रेण पीतः स्वीकृत इत्येवं तत्पुरुषस्यैव लघुभूतत्वात् । विद्यते च देवतायाः प्रतिग्रहाभावेऽपि "देवस्वं न गृह्णीयात्" इत्यादिवचनबलेन सम्बन्धविशेषरूपः स्वीकारः । न च स्थूलपृषतीपदवत् स्वरादेव बहुव्रीहित्वनिर्णयः ; तद्वदिह समासस्य लक्षणानुगतत्वाभावेन स्वरस्यैव बाध्यत्वात् । यथा च तत्पुरुषपक्षेऽपि स्वराविरोधस्तथा कौस्तुभ एवोपपादितम् । अतश्च लिङ्गादिन्द्रदेवत्यप्रदान एव मन्त्रस्याङ्गत्वावगमात् अनैन्द्राणां च कर्मण एकत्वेन प्रकृतिविकारभावासम्भवादूहानुपपत्तेः 'व्रीहीणां मेध' इतिवदनैन्द्राणाममन्त्रकं भक्षणमित्याद्यः पक्षः ॥

द्वितीयस्तु—सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः । 'इन्द्राय त्वा वसुमते' इत्यादिमानग्रहणमन्त्राणां च लिङ्गादैन्द्रमात्र-

---

पानासम्भवात् इन्द्रोद्देशेन त्यक्तत्वेऽपि देवताया विग्रहानङ्गीकारेण प्रतिग्रहाभावादित्यत आह—**प्रतिग्रहाभावेऽपीति** ॥ न ह्यत्र मुख्यं पानं मन्त्रेण प्रतिपाद्यते, किन्तु त्यागोद्देश्यत्वरूपसम्बन्धमात्रम्, "देवस्वं नाददीत" इत्यादिस्मृतिव्यवहारदर्शनेन देवादीनां स्वीकारस्यावश्यमङ्गीकार्यत्वाच्च । ततश्चेन्द्रपीतशब्दस्येन्द्रोद्देश्यकत्यागकर्मीभूतस्येन्द्रेण स्वीकृतस्येति वार्थसंभवात् न तत्पुरुषानुपपत्तिरिति भावः । ननु स्थूलपृषतीपदवत् इन्द्रपीतशब्दस्यान्तोदात्तत्वेन बहुव्रीहित्वनिश्चय इति शङ्कते—**न चेति** ॥ **तद्वदिति** ॥ स्थूलपृषतीशब्दे बहुव्रीहेः शास्त्रसंमतत्वेन तत्र स्वरेण निर्णयसंभवेऽपि प्रकृते व्यधिकरणबहुव्रीहेः शास्त्रासंमतत्वेन तदनङ्गीकारेण स्वरं बाधित्वा तत्पुरुष एव स्वीकार्य इत्यर्थः । ननु तथापीन्द्रयागाभ्यासस्य प्रकृतित्वेनानैन्द्राणां च विकृतित्वेनातिदेशेन मन्त्रप्राप्त्या निर्वापादिमन्त्राणां विकृतावूहवदिहाप्यूहेन मन्त्रसम्भवादनैन्द्राणामपि समन्त्रकमेव भक्षणमित्यत आह—**कर्मण एकत्वेनेति** ॥ कर्मभेदे हि प्रकृतिविकृतिभावः, प्रकृते सोमयागस्य सर्वस्यैव प्रकृतित्वेनानैन्द्राणामपि प्रकृतित्वाद्व्रीहीणां मेधेति मन्त्रस्य यवप्रयोगेष्ववृत्ति[त्व]वत् प्रकृतेऽप्यनैन्द्राणाममन्त्रकं भक्षणमित्यर्थः । कर्मण एकत्वेन प्रकृतिविकारभावासम्भव इत्युक्तं निरस्यति—**सत्यपीति** ॥ सोमयागत्वेनैकत्वेऽपि प्रदानानां भिन्नत्वेनैन्द्रयागाभ्यासस्य प्रकृतित्वमितराभ्यासानां विकृतित्व[मिति]सम्भवात् ऊहेन मन्त्रप्राप्तिः सम्भवतीत्यर्थः । विनिगमनाविरहं निरस्यति—**इन्द्राय त्वेत्यादि** ॥ अयं च ग्रहणमन्त्रः ; इन्द्राय त्वा वृत्रघ्न इत्यादयो मानमन्त्राः, तथा च मानग्रहणाभिषवादीनामैन्द्रप्रदानविषयत्वेन

विषयत्वात्तदनुरोधेन च तत्प्रकाश्ययोर्मानग्रहणयोस्तत्संस्कार्यस्य सोमस्य तत्संस्काराणां चाभिषवादीनां तन्मिश्राणां चाङ्गान्तराणामैन्द्रमात्रविषयत्वप्रतीतेः इतरेषामधर्मकाणां युक्तोऽतिदेशः । भवति चाङ्गवशेनापि प्रधानसङ्कोचः ; अग्न्याद्यनुरोधेन क्रतूनामाहिताग्निविषयत्वात् । अतश्च प्रकृतावपूर्वीयदेवताप्रकाशकस्य भक्षमन्त्रस्य कार्यमुखेन विकृतावागतस्य भवत्येव यथादेवतमूह इति ॥ ११ ॥

एवं स्थिते अन्तरा चिन्ता

(१२)——पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ ३० ॥ अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३१ ॥ अग्रहणाद्वानपायः स्यात् ॥ ३२ ॥

सवनमुखीयेषु चमसेषु ऐन्द्रेषु सर्वेषु हुतेषु ये होतृकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेष्वेव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते । तत्र पूर्वप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयो न वेति चिन्तायाम्—

---

तत्रैव धर्मभूयस्त्वात् 'भूयस्त्वेनोभयश्रुति' इति न्यायेन यागाभ्यासविधिः, इतरेषां धर्माकाङ्क्षयातिदेशेन धर्मप्राप्तेरिह [प्रकृतिविकृतिभाव]सिद्धिरित्यर्थः । नन्वङ्गानुरोधेन प्रधानसोमयागधर्माणां संकोचो न युक्त इत्यत आह—**भवति चेति** ॥ **अग्न्याद्यनुरोधेनेति** ॥ आदिना विद्यापरिग्रहः । तथा च प्रधानक्रतुविधीनामङ्गभूताग्निविद्यानुरोधेन त्रैवर्णिकविषयत्वेन संकोचवत् प्रकृतेऽपि मानग्रहणाद्यनुरोधेनैन्द्रप्रदानविषयत्वं धर्माणां सम्भवतीति प्रकृतिविकृतिभावेनोहो युक्त इत्यर्थः । सूत्रे **समानविधानेष्विति** प्रकृतिविकृतिभावनिराकरणार्थम् ॥ ११ ॥

**एवं स्थितेऽन्तरा चिन्तेति** ॥ ऊहनिरासेनाधिकरणे समाप्ते पश्चादूहविशेषचिन्ताया अनवकाशादन्तराचिन्तेति भावः ॥ **सवनमुखीयेष्विति** ॥ सवनसम्बन्धिचमसगणमध्ये प्रथमं हूयमानाः सवनमुखीयाः । ते प्रथममिन्द्राय हूयन्ते । तत्र ये मैत्रावरुणब्राह्मणाच्छंसिनेष्टृपोत्राग्नीध्राख्यानां होतृकाणां चमसास्तेषु सकृदिन्द्राय हुतेष्वभक्षितेष्वेव पुनरपि द्रोणकलशात् सोममभ्युन्नीय मित्रावरुणादिभ्यो हुत्वा तदनन्तरं तेषु चमसेषु सोमो भक्ष्यत इत्यर्थः । अत्र ब्राह्मणाच्छंसिचमसो नोदाहरणम् । तत्र पुनरभ्युन्नीतस्यापि सोमस्य 'इन्द्र त्वा वृषभम्' इति याज्यानुसारेणेन्द्रस्यैव देवतात्वेन

उन्नयनकाले न देवतान्तरोद्देशः येनोन्नीतस्यैव तत्सम्बन्धात् पूर्वशेषस्य पूर्वदेवता-सम्बन्धो नापेयात् । प्रदानकाले तु संसृष्टस्यैव देवतान्तरसम्बन्धात् पूर्वदेवता-सम्बन्धापनयप्रतीतेर्नोपलक्षणमिति प्राप्ते —

उन्नयनकाले देवतासङ्कल्पाभावेऽपि सामर्थ्यादेवोन्नयनस्य करिष्यमाण-कर्मार्थत्वप्रतीतेः पूर्वशेषस्य संसृष्टत्वेऽप्येतदर्थत्वे प्रमाणाभावादनपनीतसम्बन्धा-पूर्वदेवताप्युपलक्षणीया ॥ १२ ॥

(१३)—पात्नीवते तु पूर्ववत् ॥ ३३ ॥ ग्रहणाद्वापनीतं स्यात् ॥ ३४ ॥

द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थाल्यामागत्य ततोऽप्याग्र-यणस्थालीमागच्छन्ति । पात्नीवतश्चाग्रयणाद्गृह्यते ; तस्मिन् भक्ष्यमाणे द्विदेवत्या अप्युपलक्षणीयाः ; पूर्ववदाग्रयणस्यैव पत्नीवद्देवतासम्बन्धादिति प्राप्ते —

---

पक्षद्वयेऽपि इन्द्रपीतस्येत्येव प्रयोज्यत्वादिति द्रष्टव्यम् ॥ **उन्नयनकाल इति** ॥ यद्युन्नयनकाले देवतान्तरसङ्कल्पः स्यात् तदोन्नीतस्यैव देवतान्तरसम्बन्धः स्यात् । तदभावेन पात्रस्थस्य सर्वस्यैव देवतान्तरसम्बन्धात्तत्र पूर्वदेवताया नोपलक्षणमित्यर्थः ॥ **सामर्थ्यादेवेति** ॥ पूर्वशेषस्यापि देवतान्तरसम्बन्धाङ्गीकारे पुनरुन्नयनवैयर्थ्यापत्त्या पुनरुन्नीतमेव द्रव्यं देवतान्तरसम्बन्धीति निश्चीयत इत्यर्थः । ननु तथापि पूर्वशेषस्यापि संसृष्टत्वेन देवतान्तरसम्बन्धस्यावर्जनीयतया पूर्वदेवता पूर्वप्रदानेनैव चरितार्थेति भक्षणकाले तस्या उपस्थित्यभावात् नोपलक्षणमित्यत आह—**संसृष्टत्वेऽपीति** ॥ न हि संसृष्टत्व-मात्रेण पूर्वशेषस्य देवतान्तरसम्बन्धो युक्तः । उन्नीतद्रव्य[क]कर्मणः प्रधानत्वेन तत्र पूर्वशेषस्य करणत्वे शेषद्रव्यकत्वेन प्रतिपत्तिरूपत्वापत्तेः । ततश्च पूर्वशेषसंसर्गस्य पुनरुन्नीतद्रव्यसंस्कारकत्वमात्राङ्गीकारेण तत्संस्कृतस्य पुनरुन्नीतस्यैव देवतान्तरसम्ब-न्धात् पूर्वदेवतासम्बन्धानपायात् साप्युपलक्षणीयेत्यर्थः । सूत्रं स्पष्टम् ॥ १२ ॥

**पात्नीवते तु पूर्ववत्** ॥ **द्विदेवत्यानामिति** ॥ इदमुपलक्षणम् । 'आदित्य-ग्रहसंपाताच्चतुर्थीम्' इति वचनेनादित्यग्रहसम्पातस्यापि आग्रयणसंसृष्टतया आदित्यग्रह-देवताया द्विदेवत्यग्रह[देवता]तुल्ययोगक्षेमत्वेन तस्या अप्यत्र विषयत्वसंभवादिति द्रष्टव्यम् ॥ **पूर्ववदिति** ॥ पूर्वं यथा पूर्वदेवतासंबन्धानपायात् उपलक्षणत्वं तथात्राप्याग्रयणस्यैव

"पात्नीवतमाग्रयणाद्गृह्णाति" इत्यपादानत्वश्रवणात्तस्मादपेतस्य पात्नीवतत्वम्। न त्वाग्रयणस्यैव ; आग्रयणवच्चानाग्रयणमपि संसृष्टत्वात् तस्मादपेतमिति द्विदेवत्यस्यापि देवतान्तरसम्बन्धापनयात् भूतपूर्वगत्या च प्रकृतावनुपलक्षणान्नोपलक्षणीयाः ॥ १३ ॥

(१४)—त्वष्टारं तूपलक्षयेत् पानात् ॥ ३५ ॥ अतुल्यत्वात्तु नैवं स्यात् ॥ ३६ ॥

पात्नीवत एव "अग्ना३ इ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिब" इति मन्त्रात्त्वष्टुरपि देवतात्वम्। अतः सोऽप्यग्निवदुपलक्षणीय इति प्राप्ते—

युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यसाकाङ्क्षस्य सामानाधिकरण्येन विशेष्यग्राहकत्वम् ; त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते। न चासौ पानक्रियान्वयाव्यभिचारी ; "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादौ

---

पात्नीवतत्वश्रवणादाग्रयणे द्विदेवत्यादिशेषस्य सद्भावादनपनीतसम्बन्धाः पूर्वदेवा उपलक्षणीया इति पूर्वः पक्ष इत्यर्थः। यद्याग्रयणस्यैव पात्नीवतत्वं स्यात् तदोपलक्षणं भवेत्, न त्वेवमस्ति, 'पात्नीवतमाग्रयणाद्गृह्णाति' इत्याग्रयणस्यापादानत्वश्रवणेनाग्रयणपात्रांशमात्रस्यापादानत्वेन पूर्वदेवतासम्बन्धानुवृत्त्यभावान्नोपलक्षणमिति सिद्धान्तमाह—**पात्नीवतमाग्रयणादिति** ॥ शेषं स्पष्टम् ॥ १३ ॥

**त्वष्टारं तूपलक्षयेत्पानात्** ॥ पूर्वत्रेन्द्रवाय्वादीनां देवतात्वाभावादनुपलक्षणत्वेऽप्यत्र त्वष्टुर्देवतात्वादुपलक्षणत्वमिति प्रत्यवस्थानात् सङ्गतिः ॥ **मन्त्रादिति** ॥ ततश्च मान्त्रवर्णिकं त्वष्टुर्देवतात्वमिति भावः ॥ **सहभावमात्रमिति** ॥ न च सजूःशब्दः 'जुषीप्रीतिसेवनयोः' इति धात्वनुसारात् समानप्रीतिवचनः, न सहार्थक इति वाच्यम् ; तथात्वेऽपि त्वष्ट्रा समानप्रीतिः सन् पिबेति वाक्यार्थे त्वष्टुरपि प्रीत्यवगमात् प्रीतेश्च पानं विनानुपपत्त्या त्वष्टुरपि पानं प्राप्तम्, अपि तु सहभावस्य क्रियासम्बन्धव्यभिचारित्वेनात्र केवलसहभाव एव न पानमिति भावः ॥ [**सहैवेति**] ॥ विद्यमानतावचनोऽत्र सहशब्दः। दशसु पुत्रेषु विद्यमानेष्वित्यर्थः। ननूक्तरीत्या पानसम्भवात् किमिति क्रियासम्बन्धस्त्यज्यते, देवदत्तेन यज्ञदत्तो भुङ्क्त इति

व्यभिचारात् । सत्यपि पाने देवतात्वस्याप्रामाणिकत्वाच्च । अतः 'पात्नीवतम्' इति निरपेक्षतद्धितेन पत्नीवतोऽग्नेरेव देवतात्वमिति स एवोपलक्षणीयः न त्वष्टा ॥ १४ ॥

## (१५)—त्रिंशच्च परार्थत्वात् ॥ ३७ ॥

तस्मिन्नेव याज्यामन्त्रे "एभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इत्यत्र त्रयस्त्रिंशतो देवतानां पत्नीवच्छब्दसामानाधिकरण्यादग्निवद्विशेष्यत्वोपपत्तेर्मदश्रवणाच्च पानोपपत्तेर्दैवतात्वावगमात्तेषामप्युपलक्षणं मन्यते । अग्नेर्मादयितृत्वश्रवणात्तेऽग्निदत्तेन

---

प्रयोगदर्शनादित्यत आह—**सत्यपि पान इति** ॥ देवतायाश्चैतन्यानङ्गीकारपक्षे पानमप्रसिद्धम्, तदङ्गीकारपक्षेऽपि पातृत्वस्य देवतात्वासाधकत्वात् न देवतात्वमित्यर्थः । ननु पानाभावेऽपि पानस्य देवतासम्बन्धोपलक्षकत्वमङ्गीकृत्य देवतात्वं कल्प्यतामित्यत आह—**निरपेक्षेति** ॥ 'समर्थानां प्रथमाद्वा' इति सूत्रेण तद्धितस्य सामर्थ्यापेक्षत्वात् त्वष्टृसहितपत्नीवतो देवतात्वे सामर्थ्यविघातात् तद्धितानुपपत्त्या केवलपत्नीवत एव देवतात्वात् स एवोपलक्षणीयो न त्वष्टेत्यर्थः ॥ सूत्रं स्पष्टम् ॥ १४ ॥

**त्रिंशच्च परार्थत्वात्** ॥ पूर्वातिदेशात्सङ्गतिः ॥ **तस्मिन्नेवेति** ॥ पात्नीवत एवेत्यर्थः ॥ **एभिरग्न इति** ॥ अस्यार्थः—हे अग्ने एभिस्त्रयस्त्रिंशता देवैः समानरथं यथा तथा आनाविशन्दत्वात् ? नानारथं वा यथा तथा अर्वाङ् आयाहि आगत्य च त्रिंशतं त्रींश्च पत्नीवतो देवाननुष्वधं सोमरूपान्नमनु आवह वीययत्ते ? मादयस्व चेति मन्त्रवर्णात् अग्नेर्मादयितृत्वावगमेन त्रयस्त्रिंशतो मदप्रतीतेः मदस्य च पानजन्यत्वेन पानावश्यम्भावात् पानस्य चोद्देश्यत्वं विनासम्भवेन देवतात्वावगमात् त्रयस्त्रिंशता सहाग्नेरुपलक्षणमिति पूर्वः पक्ष इत्यर्थः । केचित्—अग्नेर्मादयितृत्वश्रवणेन त्रयस्त्रिंशतएव तृप्त्यवगमात् नाग्नेर्दैवतात्वमिति त्रयस्त्रिंशत्पीतस्येत्येवोपलक्षणत्वं नाग्नेरित्याहुः । मूले त्वनेन याज्यामन्त्रेण त्रयस्त्रिंशतो देवतात्वेऽपि 'अग्ना ई पत्नीवा' इति आध्वर्यवमन्त्रेण देवतात्वेनाग्नेस्त्रयस्त्रिंशश्च पूर्वपक्षे देवतात्वादुपलक्षणत्वमुक्तमिति पूर्वः पक्षः कृत इति ध्येयम् ॥ **अग्नेर्मादयितृत्वश्रवणादिति** ॥ यजमान[याज्यया ?] मादयितृत्वावगमादेवाग्निदत्तेन त्रयस्त्रिंशतो यजमानकर्तृकयागोद्देश्यत्वं नास्तीति स्पष्टं

कामं माद्यन्तु, यजमानस्त्वग्नय एव ददातीत्यवगमात्तस्यैव देवतात्वं न त्रयस्त्रिंशताम् । अत एव 'पात्नीवतम्' इति तद्धितोऽप्यसति बहुवचनग्राहकप्रमाणे एकवचनेनैव विगृहीतो भवतीत्यपि लाघवम् । अतो नोपलक्षणीयास्ते ॥ १५ ॥

## (१६)—वषट्कारश्च कर्तृवत् ॥ ३८ ॥

अनुवषट्कारयागदेवताया अग्नेर्देवतात्वस्य निस्सन्दिग्धत्वादुपलक्षणत्वं मन्यन्ते । प्रकृतौ त्वसौ विद्यमानापि नोपलक्षिता ; अनुवषट्कारयागस्य

---

प्रतीयमानत्वेनाग्नेरव देवतात्वात् स एवोपलक्षणीय इत्यर्थः ॥ **अत एव**—अग्नेरेव देवतात्वादेव ॥ **तद्धितेति** ॥ पात्नीवतमिति तद्धितस्य पत्नीवन्तो देवता अस्येति व्युत्पत्तेः वक्तव्यतया एकवचनान्तेन विग्रहसम्भवे तस्यानुचितत्वात् पत्नीवानस्य देवतेति व्युत्पत्त्या अग्नेरेकस्यैव देवतात्वात् स एवोपलक्षणीय इत्यर्थः । नन्वयं विचारो व्यर्थः । पूर्वपक्षसिद्धान्तयोः प्रयोजनभेदाभावात् पत्नीवत्पीतस्येत्युभयत्रैव प्रयोज्यत्वात् । अत्र न्यायसुधाकृतः—अग्नित्रयस्त्रिंशद्देवपीतस्येत्येवं पूर्वपक्षे । सिद्धान्ते तु अग्निपीतस्येत्येवमित्याहुः । अन्ये तु [ननु नेदं युक्तम्] पूर्वपक्षे अग्नेस्त्रयस्त्रिंशद्देवानां च देवतात्वेऽपि तद्रूपविशिष्टपत्नीवत्त्वेन देवतात्वाभावात् विधिवाक्यश्रुतपत्नीवत्त्वमात्रेणैव देवतात्वात् । न च पत्नीवच्छब्दस्य विशेषणतया विशेष्यसापेक्षत्वात् अग्न्यादेश्च मन्त्रवर्णेन विशेष्यत्वावगमात् अग्नित्वविशिष्टपत्नीवत्त्वेनैव देवतात्वं न पत्नीवत्त्वमात्रेणेति वाच्यम् । यौगिकानामर्थविशिष्टव्यक्तिविशेषवचनत्वेन निराकाङ्क्षतया अन्यापेक्षाविरहादिति चेन्न ; पूर्वपक्षे पत्नीवद्भ्य इदं न ममेति त्यागः, सिद्धान्ते पत्नीवते इदं न ममेति त्याग इति भेदात् [इति] ॥

सूत्रार्थस्तु—त्वष्टृवत् त्रयस्त्रिंशदपि देवाः नोपलक्षणीयाः, मन्त्रे तन्निर्देशस्य इत्थमयमग्निः प्रशस्तः यः स्वकीयेन हविषा अन्यानपि तर्पयतीत्यग्निस्तुत्यर्थतया **परार्थत्वेन** ततस्तेषां देवतात्वाप्राप्तेरिति ॥ १५ ॥

**वषट्कारश्च कर्तृवत्** ॥ पूर्ववैषम्येण प्रत्यवस्थानात् सङ्गतिः । अनुवषट्कारदेवता किमुपलक्षणीया न वेति संशयः ॥ **निस्सन्दिग्धत्वादिति** ॥ 'सोमस्याग्ने वीहीत्यत्यनुयजति' इत्यनेन विहितस्यानुवषट्कारयागस्य देवतापेक्षायां मान्त्रवर्णिकाग्नेर्देवतात्वावश्यम्भावादिति भावः ॥ **प्रकृताविति** ॥ अनुवषट्कारयागो हि

---

१. एवं च इति पाठान्तरम् ।

सोमयागात्कर्मान्तररूपस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य कृत्स्नविधानत्वेनातिदेशाकल्पकत्वात् उपदेशेन कथंचिद्भक्षणप्राप्तावपि "व्रीहीणां मेध" इत्यादिवदैन्द्रमन्त्रस्य प्राप्त्यनुपपत्तेश्च । अतश्च विकृतावपि प्रधानदेवतैव तत्कार्यापन्नोपलक्षणीया नानुवषट्कारदेवता ॥ १६ ॥

## (१७)—छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ ३९ ॥

एवमूहं विचार्याधुना आद्यपूर्वक्षवादी पुनस्तं दूषयति । न ह्यूहः, कर्मण एकत्वात् अभ्यासानामपि फलचमसवदसमानविधानत्वे प्रमाणाभावाच्च । न हि

---

ऐन्द्रवायवादिग्रहयागाभ्यासादिवत् न सोमयागाभ्यासरूपः, सोमेन यजेतेति वाक्यात् वाक्यान्तरविहितत्वात् कर्मान्तरत्वेन तदभ्यासासम्भवात् । किन्तु सोमयागाङ्गभूतः, स च तत्प्रधानेष्वावर्तनीयः । इह तु प्रकृतिभूतैन्द्रप्रदानाङ्गभूतानुवषट्कारदेवता न विषयः । प्रकृतावूहाभावात् ; किं तु विकृतिभूतानैन्द्रप्रदानाङ्गानुवषट्कारदेवता, तस्याश्चोपलक्षणत्वं न सम्भवति ; प्रकृतावङ्गदेवताया अनुपलक्षणत्वात् वैकृताङ्गदेवतायाः प्राकृतप्रधानदेवताकार्यापन्नत्वाभावाच्चेत्यर्थः । अत्र केचित्—अग्नेरनुवषट्कारे देवतात्वेनोपलक्षणत्वयोग्यतामात्रेण पूर्वपक्षो मन्द इति प्रकारान्तरेण विचारः कर्तव्यः । स यथा—अनुवषट्कारयागः किमर्थकर्म, उत गुणकर्म इति सन्दिह्यार्थकर्मत्वात् प्राकृतकार्यापत्तिरिति पूर्वपक्षे गुणकर्मत्वेन प्राकृतकार्यापत्त्यभाव इति सिद्धान्त इत्याहुः । तच्चिन्त्यम्, अर्थकर्मत्वेऽप्यङ्गत्वाविशेषेण तद्देवतायाः प्रधानदेवताकार्यापत्त्यसंभवात् । न चार्थकर्मत्वपक्षे प्रधानयागनिर्वृत्तिलक्षणकार्यापत्त्यभावेऽपि प्रधानदेवतावदनुवषट्कारदेवताया अप्यनुवषट्कारयागे गुणत्वेन तन्निर्वर्तकत्वमस्तीति तन्मात्रेण कार्यापत्तिः सम्भवति; प्रतिपत्तित्वे तु प्रतिपाद्यस्य प्राधान्येन प्रधानदेवतावैलक्षण्यान्न कार्यापत्तिरिति वाच्यम् । प्रतिपाद्यस्य प्रधानत्वेऽपि वस्तुतो निर्वर्तकत्वमस्तीति तन्मात्रेण तत्रापि कार्यापत्तिसम्भवात् । वक्ष्यते च नवमेऽभ्युदयेष्टौ दधिशृतयोरार्थिकप्रणीताकार्यापत्तिमात्रेण प्रणीताधर्माणामूहेन प्राप्तिः । अतो नोक्तविचारो युक्तः ॥

सूत्रार्थस्तु—**अनुवषट्कार**देवता नोपलक्षणीया होत्रध्वर्य्वादिकर्तृवदिति ॥ १६ ॥

**छन्दःप्रतिषेधस्तु सर्वगामित्वात्** ॥ **आद्यपूर्वपक्षवादीति** ॥ ऐन्द्रप्रदान एव मन्त्रः, अनैन्द्राणाममन्त्रकं भक्षणमिति पूर्वपक्षवादीत्यर्थः ॥ **एकत्वादिति** ॥ सोमेन यजेतेत्येकविधिविहितत्वादिति भावः ॥ **अभ्यासानामपीति** ॥ तेनैव विधिना

मानग्रहणमन्त्रानुरोधेन तदुद्देश्यानां सङ्कोचो युक्तः । अग्निविद्ययोस्तु स्वस्वविधिप्रयुक्तत्वेन क्रतुविधिप्रयुक्तत्वाभावाद्युक्तः परप्रयुक्ताग्निविद्योपजीवकतया क्रत्वधिकारसङ्कोचः । अतो मानग्रहणमन्त्रावेव काममैन्द्रमात्रप्रदानविषयौ भवेतां न तु मानाद्यपि । वस्तुतस्तु—'वसुमत' इत्यनेन देवतान्तरस्याप्यभिधानात्तयोरपि सर्वार्थत्वमेव । अतो भक्षमन्त्रस्यैव ऐन्द्रप्रदानमात्रविषयत्वात् अनैन्द्राणाममन्त्रकं भक्षणम् ॥ १७ ॥

## (१८)—ऐन्द्राग्ने तु लिङ्गभावात् स्यात् ॥ ४० ॥ एकस्मिन् वा देवतान्तराद्विभागवत् ॥ ४१ ॥

एवं स्थिते पुनश्चिन्ता—ऐन्द्राग्नेऽप्यभ्यासे "इन्द्रपीतस्य" इत्येवं समन्त्रकं भक्षणम् । त्यागस्य व्यासज्यवृत्तित्वेऽपि पानस्य पीतपदलक्षितस्वीकारस्य वा प्रत्येकवृत्तित्वेन डित्थमातृवदेकेन व्यपदेष्टुं शक्यत्वात् । त्यागस्य हुताहुतसमुदाय-

---

विहितत्वादिति भावः ॥ **फलचमसवदिति** ॥ तस्य प्रधानस्थानापत्त्या धर्मप्राप्तावपि प्रकृते स्थानापत्त्यभावादित्यर्थः । मानग्रहणमन्त्रानुसारेणैन्द्रप्रदानविषयत्व मन्त्राणा- [मानग्रहणादीना ?]मुक्तं निरस्यति—**न हीति** ॥ मन्त्रानुरोधेन प्रधानसंकोचायोगादित्यर्थः । अग्निविद्यावैषम्यमाह—**अग्निविद्ययोस्त्विति** ॥ तयोः स्वतन्त्रविधिप्रयुक्तत्वेन तदुपजीवनेन क्रतुविधीनामधिकारसंकोचस्य युक्तत्वादित्यर्थः । अतः प्रधानानुसारेण मानग्रहणमन्त्रयोरैन्द्रप्रदानविषयत्वेऽपि नानैन्द्रप्रदानेषु मन्त्रप्रसक्तिरित्यर्थः ॥ **वस्तुतस्त्विति** ॥ मानग्रहणमन्त्रे वसुमत्पदेन सर्वदेवताभिधानात् मानग्रहणयोरपि सर्वार्थत्वात् नैन्द्रमात्रविषयत्वमित्यर्थः ॥

सूत्रार्थस्तु—सोमस्य सर्वप्रधानगामित्वात् अनूहः । [यत्तु] षोडशिनि अनुष्टुप्छंदस इति भक्षमन्त्रं सन्नमतीति । तदपि न, यतः षोडशिनस्तृतीयसवनस्थत्वेन जगतीच्छंदस इति प्राप्ते तत्प्रतिषेधोऽनुष्टुप्छंदस इति न क्विदमूहे लिङ्गमिति ॥ १७.॥

**ऐन्द्राग्ने तु लिङ्गभावात्स्यात्** ॥ **एवं स्थित इति** ॥ चतुर्था[करणा]धिकरणेन गतार्थत्वं परिहर्तुमाह—**त्यागस्य व्यासज्यवृत्तित्वेपीऽति** ॥ त्यागस्य पूर्वोक्तरीत्या संकल्परूपस्य विषयतासम्बन्धेनेन्द्राग्न्युभयवृत्तित्वादित्यर्थः । पानस्य स्वीकारस्य वा प्रत्येकवृत्तितया प्रत्येकमेव देवतात्वं डित्थमातृवदित्यर्थः । ननु पीतपदेन त्यक्तलक्षणया त्यागस्य व्यासज्यवृत्तित्वान्न प्रत्येकदेवतात्वमित्यत आह—**त्यागस्येति** ॥ हुताहुत-

विषयत्वेन भक्ष्यमाणाहुतावयवमात्रविषयत्वाभावात् न पीतपदेन त्यक्तत्वलक्षणा। अतश्चतुर्धाकरणाधिकरणविषयत्वाभावात्तस्यापि समन्त्रकं भक्षणमिति प्राप्ते—

सत्यं पीतपदेन स्वीकारलक्षणा। पानस्य नवमे निषेत्स्यमानत्वात् त्यागस्य त्वदुक्तरीत्या लक्षयितुमशक्यत्वाच्च। स्वीकारस्य तु देवस्वादिपदावलम्बनतया कल्प्यमानस्य हुतावशिष्ट एव कल्पनीयत्वाद्युक्ता लक्षणा। तथापि तस्य लाघवेन व्यासज्यवृत्तिन एव कल्पनात् प्रत्येकवृत्तित्वे प्रमाणाभावात् चतुर्धाकरणाधिकरणविषयत्वोपपत्तेर्न तस्य समन्त्रकं भक्षणम् ॥ १८ ॥

**(१९)—छन्दश्च देवतावत् ॥ ४२ ॥ सर्वेषु वाभावादेकच्छन्दसः ॥ ४३ ॥**

तत्रैव मन्त्रे "गायत्रछन्दसः" इति श्रुतम्। तच्चेदं सोमविशेषणमेवास्मिन् पूर्वपक्षे। अतश्च केवलमेव यत्रैन्द्रप्रदाने गायत्रीछन्दो यथा बृहस्पति-

---

समुदायविषयत्यागस्य अहुतांशमात्रविषयत्वाभावेन पीतपदे त्यक्तत्वलक्षणायां प्रमाणाभावेन पानस्वीकारयोरेव पीतशब्दार्थतया तस्य प्रत्येकवृत्तित्वेन प्रत्येकोपलक्षणमित्यर्थः ॥ **नवम इति** ॥ 'देवता वा प्रयोजयेत्' इत्यधिकरण इति शेषः ॥ **देवस्वादिपदेति** ॥ देवस्वादिव्यवहारानुसारेणाहार्यस्य हुतावशिष्टेऽपि कल्पनीयत्वेन हुतावशिष्टे कल्पनम्, हुतावशिष्टस्य पीतत्वाभावात् न पानस्योपलक्षणमिति त्यक्तत्वलक्षणा, यद्यपि लक्षणा तथापि व्यासज्यवृत्तित्वे लाघवान्न प्रत्येकवृत्तित्वम्। प्रत्येकवृत्तित्वेऽनेकवृत्तिकल्पनापत्तेः, तत्र विषयतासम्बन्धकल्पनेन गौरवाच्च चतुर्धाकरणन्यायेन न समन्त्रकं भक्षणमित्यर्थः ॥

सूत्रार्थस्तु—**ऐन्द्राग्नेऽपि लिङ्गसद्भावान्मन्त्रः स्यादिति** ॥ १८ ॥

**छन्दश्च देवतावत्** ॥ आतिदेशिकी संङ्गतिः ॥ **अस्मिन् पूर्वपक्ष इति** ॥ सोमविशेषणत्वपूर्वपक्ष इत्यर्थः। गायत्रं छन्दो यस्येति बहुव्रीहिणा सोमविशेषणत्वादित्यर्थः ॥ **बृहस्पतिसवादाविति** ॥ तत्र गायत्रमेतदहर्भवतीति वचनेन सर्वस्तोत्रशस्त्रेषु गायत्रच्छन्दस एव विधानेन तत्रैन्द्रप्रदानेषु मन्त्रनिवेशेनानैन्द्राणाममन्त्रकं भक्षणमिति पूषानुमन्त्रणमन्त्रवदुत्कर्ष इत्यर्थः। ननु लिङ्गविनियोगस्य सामान्यसम्बन्धबोधकसापेक्षत्वेन तत्र तदभावात् कथं बृहस्पतिसवे उत्कर्ष इति

सवादौ "गायत्रमेतदहर्भवति" इति श्रुतः तत्रैवास्योत्कर्षः, न तु ज्योतिष्टोमे निवेशः ; केवलगायत्रीछन्दस्कप्रदानाभावात् । न च सामान्यसम्बन्धबोधकप्रमाणाभावः ; इन्द्रदेवत्यत्वप्रातस्सवनादीनामन्यत्र लोके अभावेन पारिशेष्यादेव बृहस्पतिसवोपस्थितिसम्भवादिति प्राप्ते—

बृहस्पतिसवेऽपि सवनमुखीये ऋगन्तरस्य पठितत्वात् "गायत्रमेतत्" इत्यादेश्च भूम्नापि व्याख्यानोपपत्तेः प्रकृतौ विकृतौ वा केवलगायत्रछन्दस्कत्वाभावान्नित्यसापेक्षत्वेन समासोपपत्तेः प्रकृतावेव निवेशः । वस्तुतस्तु—गायत्र्याः प्रत्येकमेव साधनत्वात् सत्यपि ऋगन्तरे न समासभङ्गशङ्कापि ॥ १९ ॥

(२०)—सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि ॥ ४४ ॥

स्थितादुत्तरम्—नेन्द्रपीतपदे तत्पुरुषः ; अपि तु बहुव्रीहिरेव । तत्पुरुषेऽपि पूर्वपदे सम्बन्धिलक्षणा पीतपदे च स्वीकृतावयवलक्षणा । यद्यपि चेयं

---

शङ्कते—**न चेति** ॥ **इन्द्रदेवत्यत्वेति** ॥ प्रातःसवनसम्बन्धीन्द्रदेवत्यत्वस्य केवलगायत्रच्छन्दस्कस्यान्यत्राप्रसिद्ध्या परिशेषादेव तत्र निवेशोपपत्तेरित्यर्थः ॥ **सवनमुखीय इति** ॥ तत्रापि छन्दोऽन्तरसत्त्वेन केवलगायत्रच्छन्दस्कप्रदानाप्रसिद्ध्या अगत्या भूम्ना प्रयोगमङ्गीकृत्य मन्त्रो विनियोज्यः । तत्र च सापेक्षत्वेऽपि नित्यसापेक्षत्वेन समासस्याप्युपपत्तिरित्यर्थः । समासानुपपत्तिं प्रकारान्तरेण परिहरति—**वस्तुतस्त्विति** ॥ **प्रत्येकमेवेति** ॥ तत्र ऋगन्तरसत्त्वेऽपि गायत्र्या स्वावान्तरकार्यं प्रति निरपेक्षस्यैव साधनत्वात् समासोपपत्तिरित्यर्थः ॥

सूत्रार्थस्तु—देवतावत् छन्दोऽप्यन्यसाहित्येन स्यादिति ॥ १९ ॥

**सर्वेषां चैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि** ॥ **स्थितादुत्तरमिति** ॥ अधिकरणस्य बह्वन्तराविचारान्तरितत्वात् सिद्धान्तस्य सुखप्रतिपत्त्यर्थं सिद्धान्तसूत्रोदाहरणमिति द्रष्टव्यम् ॥ **नेन्द्रपीतपद इति** ॥ तत्पुरुषे पूर्वपदे लक्षणापत्तेरिति भावः ॥ **बहुव्रीहिरेवेति** ॥ बहुव्रीहेरन्यपदार्थे शक्तेर्व्युत्पादितत्वेन लाघवादिति भावः ॥ **पीतपदे चेति** ॥ स्वीकृतावयवलक्षणाया उभयवादिसिद्धत्वादित्यर्थः ॥

सिद्धान्तिनोऽपि तुल्या, तथाप्यवयवस्वीकारस्यावयविस्वीकारसापेक्षत्वेन विलम्बोपस्थितिकत्वान्न तुल्यत्वम् । अतश्च पीतपदे अर्शआद्यच्प्रत्ययं मत्वर्थीयं कृत्वा पाधातुना चावयविगतमेव तत्सम्बन्धिस्वीकारं लक्षयित्वा इन्द्रः पीतः स्वीकारकर्ता यस्मिन् सवने इति व्युत्पत्त्या समानाधिकरणबहुव्रीहिरङ्गीक्रियते । प्रकरणविशेषाच्च निर्णयः । अतः सर्वस्यैव सोमस्योक्तविधप्रातस्सवनादिसम्बन्धित्वादनैन्द्राणामपि समन्त्रकमेवाविकारेण भक्षणम् । यदि तु पीतपदस्य पूर्वनिपातापत्तिमाशङ्केत तदास्तु इन्द्रे पीतं पानमस्मिन्निति सप्तमीबहुव्रीहिः । यदि तु निष्ठान्तत्वेन पूर्वनिपातापत्तिरवशिष्टेति विभाव्यते तदा पीतपदस्याकृतिगणत्वेन आहिताग्न्यादिगणान्तःपातमङ्गीकृत्य "वाहिताग्न्यादिषु" इति सूत्रेणेन्द्रशब्दस्य पूर्वनिपातः । अथवा अस्तु अयं तत्पुरुष एव, तदापि तु लक्षणया सोमसम्बन्धिसवनपरत्वम् । न च तस्यां प्रमाणाभावः ; तैत्तिरीयशाखायां

---

**अवयवस्वीकारस्येति** ॥ अवयविस्वीकारं विना असम्भवादाक्षेपसापेक्षत्वेन विलम्बितत्वात् तत्पुरुषस्य दुर्बलत्वमित्यर्थः । ननु व्यधिकरणबहुव्रीहेः शास्त्राननुमततया तदङ्गीकारो न युक्त इत्यत आह—**पीतपद इति** ॥ **अर्शआद्यच्प्रत्ययं मत्वर्थीयमिति** ॥ पीतपदेन पीतवानित्यर्थसंपत्त्या इन्द्रः पीतवान् पानवान् यस्मिन् सवन इति सवनविशेषणत्वेन समानाधिकरणबहुव्रीहेरेवाङ्गीकारादित्यर्थः । ननु सर्वसवनेषु इन्द्रवत्त्वसत्त्वात् सवनान्तरेऽतिप्रसङ्ग इत्यत आह—**प्रकरणविशेषादिति** ॥ प्रातःसवनप्रकरणपठितत्वेन प्रातःसवनोपस्थितिसम्भवादित्यर्थः । ततश्च फलितमनैन्द्राणामपि समन्त्रकं भक्षणमुपपादयति—**अत इति** ॥ ननु बहुव्रीहौ विशेषणस्योपसर्जनत्वेन पूर्वनिपातनियमात् कथमयं बहुव्रीहिरिति शङ्कते—**यदि त्विति** ॥ पीतं पानमिति नपुंसके भावे क्तप्रत्ययाङ्गीकारेण पीतपदस्य पानपरत्वसम्भवादित्यर्थः । नन्वत्रापि निष्ठान्तत्वात् पूर्वनिपातापत्तिरस्त्येवेति शङ्कां समाधत्ते—**पीतपदस्येति** ॥ 'वाहिताग्न्यादिषु' इति सूत्रेण अग्न्याहितः इत्यादिवदिन्द्रपीत इति पीतपदस्य परनिपातोपपत्तेरित्यर्थः ॥ एवं भाष्यवार्तिकरीत्या बहुव्रीह्याश्रयणेन सिद्धान्तमुपपाद्य तत्पुरुषपक्षेऽपि सिद्धान्तोपपत्तिमाह—**अथवेति** ॥ इन्द्रपीतपदे तत्पुरुषेऽपीन्द्रपीतशब्दस्येन्द्रपीतसोमसम्बन्धिसवनपरत्वसम्भवेन तादृशसवनसम्बन्धित्वेन सर्वसोमानां समन्त्रकभक्षणस्योहं विनाप्युपपादयितुं शक्यत्वादित्यर्थः । सवनलक्षणायां तात्पर्यग्राहकप्रमाणमाह—**तैत्तिरीयशाखायामित्यादि** ॥ सवनभेदेन

प्रातस्सवनादिभेदेन इन्द्रपीतनराशंसपीतपितृपीतपदानां त्रिवारं पाठस्यैव प्रमाणत्वात् । सोममात्रपरत्वे हि तत्तत्प्रदानेषु लिङ्गादेवेन्द्रपीतादिपदानां सकृत्पठितानामेव पाठोपपत्तौ तत्र योग्यतयैव प्रातस्सवनादिपदानां विभागेन विशेषणत्वोपपत्तिः । अतस्तेषां प्रातस्सवनादिभेदेन त्रिवारं पाठ एव वैयर्थ्यभिया सवनपरत्वलक्षणातात्पर्यग्राहकः । अतश्चेन्द्रपीतादिविशेषणत्रययुक्तस्य तत्तत्सवनस्य सम्बन्धिनं सोममन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वत्रैकमन्त्र्यम् । विभागोऽपि च तैत्तिरीयशाखाम्नातक्रमेणैव बोध्यः । कल्पसूत्रकारास्तु ऊहमेवामनन्ति ॥ २० ॥

इति भाट्टदीपिकायां तृतीयस्याध्यायस्य
द्वितीयः पादः

---

## अथ तृतीयः पादः

### (१)—श्रुतेर्जाताधिकारः स्यात् ॥ वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ त्रयीविद्याख्या च तद्विदि ॥ ४ ॥

---

त्रिवारं पाठ एव सवनलक्षणातात्पर्यग्राहकः, अन्यथा सकृत्पाठेनैव योग्यतारूपलिङ्गवशादेव विनियोगोपपत्त्या त्रिवारं पाठवैयर्थ्यापत्तेरित्यर्थः ॥

सूत्रार्थस्तु—**सर्वेषाम्** ऐन्द्रानैन्द्राणाम् **ऐकमन्त्र्यम्** अविकृतमन्त्रवत्त्वम्, **हि** यस्मात् **पानस्य भाक्तत्वेन** इन्द्रपीतशब्दः **सवनाधिकारः** सवनविशेषणमिति । **ऐतिशायनग्रहणं** पूजार्थम् ॥ २० ॥

इति श्रीमत्कावेरीतीरविराजमानचोलदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायनसूत्रहोशनिकर्णाटकजातीयश्रीवाञ्छेश्वरयज्वनः कृतिषु भाट्टदीपिकाव्याख्याने
भाट्टचिन्तामणौ तृतीयस्याध्यायस्य
द्वितीयः पादः

---

## अथ तृतीयस्याध्यायस्य तृतीयः पादः

**श्रुतेर्जाताधिकारः स्यात्** ॥ वाक्यप्रमाणस्य श्रुतिलिङ्गसापेक्षत्वादानन्तर्य-

**व्यतिक्रमे यथाश्रुतीति चेत् ॥ ५ ॥ न सर्वस्मिन्निवेशात् ॥ ६ ॥ संयोगान्न प्रकरणेन बाध्यते ॥ ७ ॥ धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥ ८ ॥**

एवं लिङ्गविनियोगे निरूपिते इह वाक्यादिविनियोगो निरूप्यते। तत्र वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकतान्यतरपदार्थकल्पनानुकूलः श्रुतपदसन्निधिः। अस्ति चेदं "धेनुर्दक्षिणा"[1] "उच्चैर् ऋचा क्रियते" "प्रयाजशेषेण" इत्यादौ। अत्र च कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकसंसर्गविधया लक्षणादिसाधारण्येन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितम्। तेन 'धेनुर्दक्षिणा' इत्यादौ संसर्गविधया भासमानकरणताके नाव्याप्तिः। वस्तुतस्तु सुबन्तयोः परस्परान्वयस्याव्युत्पन्नत्वादवश्यकल्प्यभावनान्वयानुरोधेन धेनुरिति प्रथमया करणत्वलक्षणा; दक्षिणापदेन तत्कार्यवृत्तिकर्मत्वलक्षणा। कल्पनापदेन लक्षणा[2]जन्यबोध एवाभिप्रेतः। 'उच्चैः' इत्यादौ लुप्तविभक्त्यर्थस्य करणत्वस्य प्रातिपदिकेनैव लक्षणान्नाव्याप्तिः। अथवा 'उच्चैः' इत्यादौ करणत्वस्य संसर्गविधयैव

---

मभिप्रेत्याह—**एवं लिङ्गविनियोग इति** ॥ वाक्यलक्षणमाह—**वाक्यं नामेति** ॥ अङ्गत्वघटकीभूतौ यौ परोद्देश्यत्वकृतिकारकत्वान्यतरपदार्थौ तत्कल्पनानुकूलश्रुतपदसमभिव्याहार इत्यर्थः। लक्ष्ये लक्षणं योजयति—**अस्ति चेदमिति** ॥ धेनुर्दक्षिणा इत्यादौ करणलक्षणायाः दक्षिणापदसन्निधिलभ्यत्वादिति भावः ॥ **कल्पनाशब्देनेति** ॥ शक्तिजन्यबोधो हि क्लृप्त इत्युच्यते, तद्भिन्नश्च बोधः संसर्गविधया करणत्वादिविषयकः, प्रकारतया करणत्वादिविषयको लाक्षणिक इति स सर्वोऽपि कल्पनापदेन ग्राह्य इत्यर्थः। तस्य सर्वस्यापि श्रुतपदसन्निधिमूलकत्वादिति भावः ॥ **तेनेति** ॥ शक्तिजन्यबोधातिरिक्तबोधविवक्षणेनेत्यर्थः। ननु पदसन्निधिनान्वयानुपपत्तिप्रतिसन्धानेन तात्पर्यानुपपत्तिप्रतिसन्धानेन वा लक्षणाया एव युक्तत्वाल्लक्षणाजन्यबोध एव ग्राह्यः, न संसर्गविधया बोधोऽपि, तस्य योग्यताबललभ्यत्वेन पदसन्निधिलभ्यत्वा[भावा]दित्यत आह—**वस्तुतस्त्विति** ॥ **लक्षणाजन्यबोध एवेति** ॥ धेनुर्दक्षिणेति वाक्ये प्रथमायाः करणत्वलक्षणाङ्गीकारात् दक्षिणाशब्देनानतिनिष्ठकर्मत्वलक्षणयानत्युद्देशेन धेनुत्वस्त्रीत्वविशिष्टकरणकारकविधानेन कल्पनाशब्देन लक्षणाजन्यबोधस्यैव ग्रहणम्। उच्चैर्ऋचा

---

१. तै. सं. १-८-१.     २. लक्षणाजन्योपस्थितिरेव इति पाठान्तरम्।

भानोपपत्तेः कल्पनापदेनोभयं विवक्षितम् । 'प्रयाजशेषेण' इत्यादौ तृतीयया कर्मत्वस्य धातुना करणत्वस्य लक्षणात् कल्पना स्फुटैव । श्रुतपदसन्निधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम् । श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनाच्छ्रुतिकल्पकत्वोपपत्तिः । अतश्च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वा अङ्गत्वे प्रमाणम् । तदिह ज्योतिष्टोमे श्रुतेन "उच्चैर् ऋचा क्रियते" इत्यादिना वाक्येन विधीयमानस्योच्चैस्त्वादेरुद्देश्य-समर्पकेण ऋगादिपदेन किम् ऋगादीनां मन्त्राणामेवोद्देश्यत्वं प्रतिपाद्यते उत "त्रयो वेदा अजायन्त" इत्याद्युपक्रमस्थार्थवादवशेन लक्षणया ऋग्वेदादिविहित-कर्माङ्गभूतमन्त्रस्येति चिन्तायाम्—उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपरार्थ-वादस्थत्वेन प्रधानभूतविध्युद्देशस्थऋगादिपदे निस्सन्दिग्धे अङ्गगुणविरोधन्यायेन

---

क्रियते इत्यत्र लुप्ततृतीयया प्रातिपदिकेन वा करणत्वलक्षणान्नाव्याप्तिरित्यर्थः । ननु उच्चैरित्यादौ अनन्यलभ्यः शब्दार्थ इति न्यायेन संसर्गविधयोपस्थितिसंभवे लक्षणा-कल्पनमनुचितमित्यत आह—**अथवेति** ॥ तथा च लक्षणाजन्यबोध इव संसर्ग-विधया करणत्वादिबोधोऽपि कल्पनापदेन ग्राह्य इत्यर्थः ॥ **प्रयाजशेषेणेति** ॥ द्वितीयार्थे तृतीयाया लक्षणाङ्गीकारेण द्वितीयया सप्तम्यर्थस्य च लक्षणया बोधादित्यर्थः ॥ **धातुनेति** ॥ अभिघारणस्य करणत्वादित्यर्थः । वाक्यप्रमाण-लक्षणमुक्त्वा तस्य लिङ्गकल्पनद्वारा श्रुतिकल्पकत्वमुपपादयति—**योग्यताज्ञानं विनेति** ॥ घटपटादिशब्दानां सहोच्चारणमात्रेणाङ्गत्वासंभवेन योग्यतारूपायाः शक्तेः कार्यानुकूलाया अनुमानमित्यर्थः । योग्यतारूपलिङ्गकल्पनानन्तरं श्रुतिकल्पनमुपपादयति —**श्रुतस्येति** ॥ ननु वेति[वेदे ?] विद्यमानपदस्यैव कर्मत्वादिलक्षकत्वेन तत्पदकल्पना-भावात् श्रुतिकल्पकत्वं लिङ्गस्य कथमित्याशङ्कां परिहरति—**श्रुतपदस्येति** ॥ श्रुतपदस्य विभक्त्यन्तरवत्त्वेन धेनुर्दक्षिणा इत्यादिना प्रथमान्तधेन्वादिपदं करण-तात्पर्यकमिति कल्पनेन तात्पर्यविशिष्टरूपेण लिङ्गं कल्पयित्वेत्यर्थः ॥ **अतश्चेति** ॥ परस्परसमभिव्याहारेण योग्यतारूपलिङ्गमनुमाय तेन लिङ्गेन विनियोजकतृतीयाद्यर्थ-विशिष्टतात्पर्यविशिष्टत्वेन श्रुतपदज्ञानात् श्रुतिकल्पनमिति द्रष्टव्यमित्यर्थः ॥ **उपक्रमस्थस्यापीति** ॥ अनेनासंजातविरोधित्वाद्वेदपदस्य तत्र लक्षणा न युक्तेति शङ्का न कार्येति सूचितम् ॥ **गुणभूतेति** ॥ विध्यपेक्षितप्राशस्त्यपरत्वेनार्थवादस्य गुणभूतत्वादित्यर्थः ॥ **अन्यपरेति** ॥ प्राशस्त्यलक्षकत्वेनार्थवादस्य स्वशक्यार्थ-

लक्षणातात्पर्यग्राहकत्वायोगाद्वेदपद एव तदेकदेशऋगादिलक्षणा । वस्तुतस्तु वेदशब्दस्यावयवेऽपि न लक्षणा, वेदत्वस्य प्रत्येकवृत्तित्वात् । इतरथा, शूद्रस्यैकवाक्यश्रवणे दोषानापत्तेरिति प्राप्ते—

उपक्रमे वेदपदश्रवणेनैतावदवगम्यते नूनमत्र वेदस्य स्तूयमानत्वादुद्देश्यत्वं विधेयत्वं वा तस्यावश्यं वाक्ये विवक्षितमिति । तत्र च विधेयस्योच्चैस्त्वादेर्लाभात्परिशेषादेव तस्योद्देश्यत्वावगतेः । वस्तुतस्तु—ऋगादिपदमनुवाद एव सदुद्देश्यपरम् । अतश्चासञ्जातविरोधिन उपक्रमस्थस्य वेदपदस्यैव तात्पर्यग्राहकस्य सत्त्वात् ऋगादिपदे तत्प्रचुरत्वेन ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा ।

---

परत्वाभावादित्यर्थः ॥ **प्रधानभूतेति** ॥ विध्युद्देशस्यार्थवादापेक्षया प्रधानत्वादित्यर्थः ॥ **अङ्गगुणेति** ॥ 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वादशाधिकरणे अङ्गप्रधानयोर्विरोधे सति प्रधानानुग्रहस्य साधयिष्यमाणत्वेन विध्युद्देशगतऋक्पदस्य तात्पर्यग्राहकत्वमङ्गीकृत्यार्थवादस्थवेदपदानुरोधेन ऋगादिपदस्य मन्त्रमात्रपरस्य वेदलक्षणाया अयुक्तत्वादित्यर्थः ॥ **वेदपद एवेति** ॥ अर्थवादस्थवेदपदस्यैव वेदैकदेशऋगादिमन्त्रलक्षणेत्यर्थः । लक्षणापि नास्तीत्याह—**वस्तुतस्त्विति** । एकवाक्योच्चारणेऽपि वेदमधीते इत्यादिप्रयोगदर्शनात् एकदेशस्यापि वेदत्वेन ऋगादिपदानां मन्त्रविशेषे शक्तिः, वेदशब्दस्यापि ऋगादिमन्त्रपरत्वात् उपक्रमोपसंहारयोर्विरोधाभावात् ऋक्त्वादिकमेवोच्चैस्त्वादिविधेरुद्देश्यतावच्छेदकमित्यर्थः । ऋगादिपदानां वेदपरत्वाभावे [ऋग्वेदादिपदानाम् ऋगादिपरत्वाभावे ?] दोषमाह— **इतरथेति** ॥ शूद्रस्य वेदाक्षरश्रवणे त्रपुजतुभ्यां श्रोत्रप्रपूरणस्य उच्चारणे जिह्वाच्छेदस्य धारणे देहच्छेदस्य प्रायश्चित्तस्य धर्मशास्त्रविहितस्यैकमन्त्रोच्चारणे प्रवृत्त्यनापत्तेरित्यर्थः ॥ **उपक्रम इति** ॥ अर्थवादे प्रथमप्रतीतवेदस्तुतिदर्शनेन वेदस्योद्देश्यत्वविधेयत्वान्यतरदवश्यं वाच्यम्, अन्यथा तत्स्तुतिवैयर्थ्यापत्तेः । ततश्च विधेयस्योच्चैस्त्वादेः स्पष्टं प्रतीयमानत्वेन वेदस्योद्देश्यत्वनिश्चयात् तदनुसारेण विधिवाक्यस्थऋगादिपदानां वेदलक्षणा युक्तेत्यर्थः ॥ **असंजातविरोधिन इति** ॥ वेदशब्दश्रवणजन्यवेदोपस्थितिकाले विरोधिस्फूर्त्यभावादित्यर्थः ॥ **तात्पर्यग्राहकस्येति** ॥ उपक्रमस्थवेदशब्दघटितार्थवादस्य तात्पर्यग्राहकत्वेन तात्पर्यानुपपत्त्या विधिवाक्यस्थऋगादिपदस्य ऋगादिप्रचुरवेदपरत्वं निश्चीयत इति तदुद्देशेनैवोच्चैस्त्वादिकं विधीयत इत्यर्थः । प्रकरणपाठप्राप्तमर्थमनुसृत्योक्तविधिफलितमाह—**ऋग्वेदेति** ॥ ऋग्वेदोद्देशेनोच्चैस्त्वादिविधाने तद्वेदाध्ययनस्यैवोच्चैस्त्वापत्त्या तस्य क्रत्वनुपयोगित्वेन ऋग्वेदविहितकर्माङ्गमन्त्रोद्देशेनैव स्वरो विधीयते

न चोपक्रमावगतस्यापि अपच्छेदाधिकरणन्यायेन परेण बाधः ; तस्येह विधेस्तुति-[1] सापेक्षत्वेन अर्थवादैकवाक्यताया आवश्यकत्वात् पूर्वविरोधे परस्यानुत्पन्नत्वा-देवाप्रवृत्तेः। न च वेदत्वस्य ऋगादिष्वपि पर्याप्तत्वादुपक्रमाविरोधः ; वेदत्वस्य मन्त्रब्राह्मणसमुदायात्मके ग्रन्थविशेष एव पर्याप्तत्वेन अवयवपर्याप्तत्वाभावात् । इतरथा एकवाक्याध्ययनेनाप्यध्ययनविध्यर्थसम्पत्त्यापत्तेः। शूद्रस्यैकपदश्रवणनिषेध-स्तु वार्ताकावयवादिनिषेधवन्नानुपपन्नः[2]। यथा चैतादृशविषये निषेधस्य विध्यपेक्षया वैलक्षण्यं तथा कौस्तुभे द्रष्टव्यम् । तस्मादुपक्रमानुसारेण ऋग्वेदविहितकर्माङ्गभूत-

---

इति क्रतूपयोग इति भावः । ननु षष्ठे 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यधिकरणे परेण पूर्वस्योपक्रमस्थस्यापि बाधाङ्गीकारेण तन्न्यायेनोपसंहारप्राबल्यं किं न स्यादिति शङ्कते—**न चेति** ॥ **तस्येहेति** ॥ अप्रवृत्तेरित्यग्रेणान्वयः ॥ **स्तुतीति** ॥ उपसंहारस्थस्यापि विधेः प्राशस्त्यापेक्षत्वेन 'विधिना त्वेकवाक्यत्वात्' इति न्यायेनार्थवाद-त्वेनार्थवत्त्वेन विध्येकवाक्यताया अवश्यमङ्गीकार्यत्वेनैकवाक्यस्थले तन्न्यायाप्रवृत्ते-रित्यर्थः । अपच्छेदस्थले परप्राबल्यमुपपादयति—**पूर्वेति** ॥ न विरोधस्थले पूर्वेण विरोधे परस्योत्पत्तिरेव प्रतिबध्यते, न चानुत्पत्तिः परस्य सम्भवति, परस्यापि शास्त्रत्वेनाप्रवृत्तावप्रामाण्योपपत्तेः । अतः पूर्वोपमर्देनैव प्रवृत्तिरिति परेण पूर्वबाध इत्यर्थः । ननु वेदत्वस्य सर्वब्राह्मणमन्त्रेष्वपि सत्त्वेन व्यापकतया ऋक्त्वादीनां व्याप्यधर्मतया विरोधाभावान्नोपक्रमप्राबल्यमिति शङ्कते—**न चेति** ॥ **वेदत्वस्येति** ॥ समुदायपर्याप्तस्य वेदत्वस्य एकदेशवृत्तित्वाभावेन ऋक्त्वादीनामेकदेशमात्रवृत्तित्वेन विरोधावश्यकत्वादित्यर्थः। वेदत्वस्यैकदेशपर्याप्तत्वे दोषमाह—**इतरथेति** ॥ एकदेशपर्याप्तत्व इत्यर्थः ॥ **एकवाक्येति** ॥ गायत्र्युपदेशमात्रेणापि स्वाध्यायोऽध्येतव्य इति विधि-विहिताध्ययनस्य सिद्धया 'वेदानधीत्य वेदौ वा' इत्यादिशास्त्रार्थसिद्धयापत्तेरित्यर्थः । नन्वेवं शूद्रस्यैकाक्षरश्रवणे प्रायश्चित्तं न स्यादित्युक्तमत आह—**शूद्रस्येति** ॥ **वार्ताकेति** ॥ वार्ताकं न भक्षयेदिति निषेधेऽपि वार्ताकावयवस्यापि यथा निषेधः, शूद्रस्पृष्टं वस्त्रं स्पृष्ट्वा स्नायादिति शास्त्रस्य वस्त्रावयवस्पर्शेऽपि यथा [वा] प्रवृत्तिः तथा प्रकृतेऽपि वेदावयवश्रवणनिषेधप्रवृत्तेर्युक्तत्वादित्यर्थः ॥ **एतादृशविषय इति** ॥ निषेधविषय इत्यर्थः ॥ **विध्यपेक्षयेति** ॥ विधेः पश्वादिविषयत्वेन तदवयवेन यागे पशुयागजन्य-फलसिद्धौ प्रमाणाभावेनावयविविषयत्वमेव । निषेधस्थले प्रत्यवायस्यावयवजन्यत्वस्यापि

---

१. तस्य हि विधेयस्तुति- इति पाठान्तरम् । २. वृन्ताक इति पाठान्तरम् ।

मन्त्राङ्गत्वमेवोच्चैस्त्वादीनाम् । एवं च वेदत्वस्य प्रकरणस्थवाक्यमात्रेष्वपर्याप्तत्वात् प्रकरणेन वाक्यस्य स्वविषये उपसंहारानुपपत्तेर्वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेन वाक्येन स्वरविधानावगतेः प्रकरणबाधेऽपि न क्षतिः ॥ १ ॥

## (२)---गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥

याजुर्वेदिके आधाने सामवेदपठितानि वारवन्तीयादीनि सामान्यङ्गत्वेन श्रुतानि । तेषु सामवेदिकः स्वरः स्ववेदनिबन्धनत्वाच्छीघ्रमुपस्थितः ; न तु प्रधाननिबन्धनो याजुर्वेदिकः ; प्रधानैकवाक्यतापेक्षितत्वेन विलम्बोपस्थितिकत्वादिति प्राप्ते—

साङ्गस्यैवाधानस्य यजुर्वेदेन विधानात् अङ्गेषु विलम्बोपस्थितिरप्ययं प्रधानाश्रितत्वाद्बलीयान् अतस्तेषु याजुर्वेदिक एव स्वर उपांशुत्वमिति भाष्यकारः ॥

---

सम्भवेनावयवे प्रवृत्तिरित्यादिकं कौस्तुभे द्रष्टव्यमित्यर्थः । अधिकरणार्थमुपसंहरति---तस्मादिति ॥ वेदत्वावच्छिन्नेति ॥ ऋग्वेदत्वाद्यवच्छिन्नविहितकर्माङ्गमन्त्रोद्देशेनेत्यर्थः । तथा च वाक्येन प्रकरणबाध इत्यर्थः । नन्वेवं अक्ताधिकरणविरोधः ; तत्रोपसंहारस्थघृतपदेनाञ्जनसाधननिर्णयेनोपसंहारप्राबल्यादिति चेन्न । तत्रोपक्रमस्थेन अक्ता इति पदेनाञ्जनसाधनद्रवद्रव्यस्याक्षिप्तत्वेन द्रवद्रव्यविशेषाप्रतीत्या विशेषप्रतीत्यर्थमुपसंहारप्रतीक्षणावश्यकत्वेन उपसंहारस्य प्राबल्यावश्यकत्वात् । इह तु वेदपदस्योपक्रमस्थस्य निःसन्दिग्धतयोपसंहारानपेक्षत्वात् । अश्वप्रतिग्रहेष्ट्यधिकरणेनागतार्थत्वं तत्रैव वक्ष्यामः ॥

सूत्रार्थस्तु---श्रुतेरुपक्रमे वेदश्रुतेरुच्चैस्त्वादिकं जाताधिकारो वेदधर्मः स्यादिति । प्रयोजनं पूर्वपक्षे प्रकरणपठितऋगादिमन्त्राणामुच्चैस्त्वम् । सिद्धान्ते ऋग्वेदविहितकर्माङ्गयजुर्मन्त्राणामप्युच्चैस्त्वादिकमिति बोध्यम् ॥ १ ॥

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ स्वरविचारप्रसङ्गात् सङ्गतिः ॥ याजुर्वेदिक इति ॥ 'वसन्ते ब्राह्मणोऽग्निमादधीत' इति विधेर्याजुर्वेदिकत्वादिति भावः । अत्र प्रधानवेदनिबन्धनस्वरो वारवन्तीयस्य, उत स्ववेदनिबन्धनस्वर इति संशयः । तत्र पूर्वपक्षमाह—सामवेदिक इति ॥ स्ववेदनिबन्धनस्वरस्य स्वाध्यायविधिसिद्धत्वेन शीघ्रोपस्थितिकत्वेन प्रधानविध्येकवाक्यतालभ्य-

वार्तिककारस्तु—प्रयोगविध्याश्रितस्य स्वरस्य प्रधाने श्रुतस्याप्यङ्गे कल्प्यत्वेन दौर्बल्यमेव । इतरथा ज्योतिष्टोमाङ्गभूतहौत्रादेरप्यध्वर्युकर्तृकत्वापत्तेः । वारवन्तीयस्यापि यजुर्वेदे "वारवन्तीयं गायति" इति विनियोगविधेराम्नानाच्च । अत एवं चिन्तनीयम् । यत्र वेदान्तरे उत्पत्तिः वेदान्तरे च विनियोगः तत्र वारवन्तीयादौ कः स्वरः इति चिन्तायाम्, उत्पत्तेः पूर्वभावित्वात् असञ्जातविरोधित्वेन तन्निबन्धन एव स्वरो वलीयान् । अतश्च ऋचा ऋग्वेदेन क्रियते उत्पाद्यत इति श्रुत्यर्थ इति प्राप्ते—

आम्नानमात्रेण मन्त्रस्य प्रयोजनानवगमेन प्रयोज्यत्वानवगतेः स्वरानपेक्षत्वाद्विनियोगोत्तरकालमेव स्वरसम्बन्धात् क्रियत इत्यस्य प्रयुज्यत इत्यर्थावगतेः प्रयोगस्य च विनियोगाधीनत्वेन विनियोगस्यैवाव्यवहितपूर्वं पुरस्स्फूर्तिकत्वात् तद्विधिनिबन्धन एव स्वरोऽसति बाधकेऽनुष्ठेय इत्याह ॥ २ ॥

---

प्रधानवेदस्वरापेक्षया बलवत्त्वादित्यर्थः ॥ **साङ्गस्येति** ॥ आधानविधिना हि साङ्गमाधानं विधीयते । ततश्च वारवन्तीयस्यापि प्रधानविधिविहितत्वेन तस्य स्वरस्य प्रधानाश्रितत्वेन प्राबल्यम् । स्ववेदस्वरस्तु पाठमात्रोपयोगीति न प्रयोज्य इत्यर्थः । **वार्तिककारस्त्विति** ॥ प्रयोगविधिप्रयुक्तस्वरस्य प्रधानमात्रविषयत्वेनाङ्गेषु कल्प्यत्वेन दौर्बल्यमित्यर्थः ॥ **इतरथेति** ॥ प्रधानसम्बन्धिन एवाङ्गे स्वीकार इत्यर्थः ॥ **ज्योतिष्टोमेति** ॥ ज्योतिष्टोमस्य साङ्गस्याध्वर्युकर्तृकत्वेन तदङ्गहौत्रस्याप्यध्वर्युकर्तृकत्वं स्यादित्यर्थः । ननु वारवन्तीयस्य सामवेद एव विधानान्न प्रधानस्वरप्रसक्तिरित्यत आह—**वारवन्तीयस्यापीति** ॥ तस्यापि यजुर्वेदेऽपि वारवन्तीयं गायतीति विधाने याजुर्वेदिकत्वेनोपांशुत्वस्यावर्जनीयत्वेन विचारवैयर्थ्यादित्यर्थः ॥ **अत इति** ॥ यस्य गुणस्य वेदान्तरे उत्पत्तिः वेदान्तरे विनियोगः तत्रोत्पत्तिवेदनिबन्धनस्वरस्य शीघ्रोपस्थितत्वात् स एव प्रवर्तेत इति पूर्वपक्षमाह—**उत्पत्तेः पूर्वभावित्वादिति** ॥ ऋचा क्रियत इत्यस्य उत्पद्यत इत्यर्थान्न तद्विरोध इति भावः । उत्पत्तिमात्रेण विनियोगाप्रतीतेः प्रयोजनाकाङ्क्षाशान्त्यभावात् विनियोगेनैव तदाकाङ्क्षाशान्तेस्तत्काले तस्यैवोपस्थितत्वेन तस्यैव ग्रहणमित्यर्थः ॥

सूत्रार्थस्तु—**गुणमुख्यव्यतिक्रमे** अङ्गप्रधानविधेः **तदर्थत्वात्** प्रधानार्थत्वात् अङ्गानां **मुख्येन** प्रधानेन[**वेदसंयोगः**] वेदोक्तधर्मसम्बन्ध इति ॥ २ ॥

## (३)----भूयस्त्वेनोभयश्रुति ॥ १० ॥

यत्रैकमेव कर्मानेकेषु वेदेषु श्रुतं तत्र क्वोत्पत्तिः, क्व च तदनुवादेन गुणार्थं श्रवणमिति जिज्ञासायां यत्राङ्गबाहुल्यं तत्रोत्पत्तिः सेवकबाहुल्येन राजावस्थाननिर्णयवत् । वस्तुतस्तु—कर्मस्वरूपपरिचायकद्रव्यदेवतादिसाकल्यस्यैव निर्णायकत्वम् । तत्रापि द्वैविध्ये बहिरङ्गत्वेऽप्यव्यभिचाराद्देवताया एव, न तु द्रव्यस्येत्याद्यूह्यम् । अतश्चैवंविधनिश्चायकसत्त्वे तत्रैवोत्पत्तिः, अन्यत्र तदनुवादेनाविरोधिगुणान्तरविधानम् । विरोधिनि तु गुणाद्भेद एव । एवं यत्र कस्यचिदपि नियामकस्याभावस्तत्राप्यभ्यासाद्भेदः । न ह्यत्र शाखान्तरन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्मैकत्वम् ; तद्वदिहाध्येतृभेदाभावात् । अतो नियामकबलेन यत्रैवोत्पत्तिस्तद्भेदनिबन्धन एव स्वर इति सिद्धम् ॥ ३ ॥

---

भूयस्त्वेनोभयश्रुति ॥ उत्पत्तिवेदनिबन्धनस्वरप्रसङ्गात् उत्पत्तिविधिविचार इति सङ्गतिः ॥ यत्रेति ॥ उत्पत्तेः स्वरूपनिर्णायकत्वेनोत्पन्नस्यैव फलादिसम्बन्धेन प्राधान्यादङ्गभूयस्त्वे प्रधानोत्पत्तिर्निश्चीयत इत्यर्थः । बहुतराश्वरथसेवकबाहुल्यदर्शनेन राजनिर्णयवदित्यर्थः । अङ्गेषु विशेषमाह—वस्तुतस्त्विति ॥ द्रव्यदेवतेति ॥ कर्मस्वरूपस्य द्रव्यदेवताघटितत्वादिति भावः ॥ तत्रापीति ॥ द्रव्यदेवतयोरपीत्यर्थः । एकत्र द्रव्यस्यान्यत्र देवतायाश्च श्रवणे यत्र देवताम्नानं तत्रैव कर्मविधिः । देवतायाः क्रत्वव्यभिचारित्वात्, द्रव्यस्य लोकसिद्धत्वेन क्रतुव्यभिचारित्वादिति भावः । नन्वेकत्र कर्मविधावन्यत्राम्नानं व्यर्थं स्यादत आह—तदिति ॥ तदनुवादेन गुणविधानमित्यर्थः । नन्वेवं वाजिनवाक्येऽपि केवलगुणविधानं स्यादित्यत आह—अविरोधीति ॥ उत्पत्तिशिष्टगुणसत्त्वे गुणान्तरविधानासंभवादित्यर्थः । ननु गुणस्यापि विधानाभावे तद्वाक्यं पुनर्व्यर्थं स्यादित्यत आह—गुणादिति ॥ गुणात्कर्मभेदाङ्गीकारेण तद्वाक्यस्यापि सार्थक्यमित्यर्थः । गुणान्तराभावे वाक्यद्वयस्य सार्थक्यमाह—अभ्यासादिति ॥ अनन्यपरपुनःश्रवणेनाभ्यासात् कर्मभेद इत्यर्थः । ततश्च द्वयोरपि सार्थक्यमिति भावः । ननु शाखान्तरन्यायेन कर्मैकत्वं किं न स्यादित्यत आह—न ह्यत्रेति ॥ शाखान्तराधिकरणे हि तत्तच्छाखाध्यायिनं प्रति तत्तद्विधेः सार्थक्यमुक्तम्, प्रकृते त्वध्येतृभेदाभावान्न तन्न्यायेन कर्मैकत्वमित्यर्थः । अत उत्पत्तिरूपनियामकबलेन तद्भेदनिबन्धनस्वर एव प्रवर्तत इत्यर्थः ॥

## (४)—असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वात् ॥ ११ ॥

एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते । ननु किमिदं प्रकरणं नाम ? न तावत्सन्निधिमात्रम्, गोदोहनादेरपि दर्शाङ्गत्वापत्तेः । अथ साकाङ्क्षत्वमात्रम् ; विकृतेरपि प्राकृताङ्गविषये तदापत्तेः । नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वम्, उपहोमादावपि तदापत्तेः । अथोभयाकाङ्क्षत्वविशिष्टं तत् । सिद्धरूपाणां मन्त्रादीनामपि तदापत्तेः । प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च । अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयाजानाकाङ्क्षत्वेऽपि

---

सूत्रार्थस्तु—उभयत्र श्रूयमाणं कर्म भूयस्त्वेन अङ्गभूयस्त्वेन निर्णेतव्यमित्यर्थ ॥३॥

**असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वात्** ॥ एवमित्यनेन लिङ्गकल्पकत्वेन वाक्यस्य प्रामाण्यवत् प्रकरणस्य वाक्यकल्पकत्वेन प्रामाण्यात् प्रसङ्गसङ्गतिरिति भावः । श्रुतिलिङ्गवाक्यानां प्रसिद्धत्वेन तत्साधनाप्रसक्तेः प्रमाणं तेषु न दर्शितम् । प्रकरणस्य शास्त्रैकसिद्धत्वात् तत्स्वरूपसाधनमावश्यकमिति तस्य लक्षणस्वरूपप्रामाण्यनिरूपणं कर्तव्यमिति तन्निरूपणार्थं पृच्छति—**ननु किमिदमिति** ॥ **दर्शाङ्गत्वापत्तेरिति** ॥ गोदोहनस्य दर्शादिसन्निधिसत्त्वादित्यर्थः ॥ **साकाङ्क्षत्वमात्रमिति** ॥ दर्शादेश्चमसादिना निराकाङ्क्षत्वान्नातिव्याप्तिरिति भावः ॥ **विकृतेरपीति** ॥ विकृतियागस्याङ्गाकाङ्क्षासत्त्वेन प्रकरणेनैव धर्मप्राप्तिसंभवेनातिदेशानापत्तेरित्यर्थः ॥ **सन्निधिपठितत्वमिति** ॥ तथा च प्राकृताङ्गानां विकृतिसन्निधिपठितत्वाभावात् नातिदेशानुपपत्तिरिति भावः ॥ **उपहोमादावपीति** ॥ उपहोमानामन्यतराकाङ्क्षासत्त्वेन साकाङ्क्षत्वे सति सन्निधिपठितत्वसत्त्वेन प्रकरणविनियोज्यत्वापत्तेरित्यर्थः ॥ **उभयाकाङ्क्षत्वविशिष्टमिति** ॥ उपहोमानामन्यतराकाङ्क्षया विनियोगान्नातिव्याप्तिरित्यर्थः ॥ **सिद्धरूपाणामिति** ॥ मन्त्राणां लिङ्गविनियोज्यत्वेन उभयाकाङ्क्षाविशिष्टसन्निधिपाठसत्त्वेन प्रकरणविनियोज्यत्वापत्तेरित्यर्थः । प्रयाजादीनाम् उभयाकाङ्क्षाविरहेण प्रकरणविनियोज्यत्वानापत्तेरित्यर्थः । न च दर्शादेरितिकर्तव्यता[काङ्क्षा] सत्त्वादुभयाकाङ्क्षास्तीति वाच्यम् । न हि प्रयाजादिकं विना दर्शपूर्णमासानुष्ठानं न संभवति, तदसाध्यत्वाद्दर्शादेरिति भावः । ननु तथापि प्रधानानामितिकर्तव्यताकाङ्क्षासत्त्वादितिकर्तव्यतात्वेनाङ्गाकाङ्क्षया प्रयाजादीनामङ्गत्वमस्त्विति शङ्कते **अथेति** ॥

इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्; किमिदं इतिकर्तव्यतात्वं नाम? न तावत्फले अपूर्वे वा सहकारित्वम्, प्राधान्यापत्तेः। प्रयाजादिवदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च। नापि करणजनकत्वम्, प्रयाजादिषु बाधादिति चेन्न; सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात्। अत्रासन्निहितज्योतिष्टोमाङ्गत्वस्य प्रयाजादौ वारणायाद्यं विशेषणम्। अनूयाजाद्यङ्गत्ववारणाय फलवत इति द्वितीयम्। प्रोक्षणादेः श्रुत्यादित्रयविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम्।

---

**इतिकर्तव्यतात्वं नामेति** ॥ तस्यैव दुर्वचत्वान्न तदाकाङ्क्षया प्रयाजादीनामङ्गत्वसिद्धिरित्यर्थः ॥ **प्राधान्यापत्तेरिति** ॥ स्वर्गापूर्वान्यतरजनकत्वस्यैव प्राधान्यरूपत्वेन प्रयाजादीनामपि तदापत्तिरित्यर्थः। फलजनकस्येतिकर्तव्यतात्वाङ्गीकारे प्रधानस्यापि तथात्वात् विकृतावतिदेशापत्तिरित्यर्थः ॥ **प्रयाजादिष्विति** ॥ तेषामाग्नेयादिजनकत्वाभावादित्यर्थः। सिद्धान्तमाह--**सन्निहितस्येति** ॥ दर्शादेरित्यर्थः ॥ **फलवत इति**। स्वर्गकामवाक्येन दर्शादेः फलसम्बन्धबोधनादित्यर्थः ॥ **अनवगतेति**। प्रयाजादीनां श्रुत्यादिप्रमाणत्रयेणाङ्गत्वानवगमादित्यर्थः ॥ **इतिकर्तव्यतात्वेनेति** ॥ करणानुग्राहकत्वेनेत्यर्थः ॥ **अपेक्षणस्येति** ॥ आकाङ्क्षाया इत्यर्थः। तथा च सन्निहितफलवन्निष्ठानवगताङ्गताक[पदार्थ]विषयकस्वानुग्राहकत्वप्रकारकजिज्ञासा प्रकरणमिति पर्यवसितार्थः। सन्निहितपदव्यावर्त्यमाह—**असन्निहितेति** ॥ प्रयाजादीनां दर्शपूर्णमासप्रकरणपठितत्वेन ज्योतिष्टोमासन्निहितत्वेनाङ्गत्वापत्तिवारणाय सन्निहितपदमित्यर्थः। फलवत इत्यस्य तदाह—**अनूयाजेति** ॥ अनूयाजानां प्रयाजवत् दर्शादिप्रकरणपठितत्वेन प्रयाजानूयाजादीनां परस्पराङ्गत्ववारणाय फलवत इति। तथा च तेषां फलसम्बन्धाश्रवणेन फलवत्त्वाभावान्न परस्पराङ्गत्वमित्यर्थः। न च तेषां क्रतूपकारात्मकफलवत्त्वेन न व्यावृत्तिरिति वाच्यम्; तत्फलस्योभयसाधारण्येन विनिगमनाविरहेणोभयोरपि परस्पराङ्गत्वात्। किं च क्रतूपकारस्य प्रकरणेनाङ्गत्वसिद्ध्युत्तरकालीनत्वेन स्वातन्त्र्येण फलसम्बन्धबोधकवाक्याधीनफलवत्त्वस्य विवक्षितत्वेन प्रयाजादेस्तदभावादिति भावः ॥ **प्रोक्षणादेरिति** ॥ 'व्रीहीन् प्रोक्षति' इति द्वितीयाश्रुत्या प्रोक्षणस्य विनियुक्तत्वेन प्रकरणविषयत्वाभावेन तद्वारणाय अनवगताङ्गताकपदार्थविषय इति विशेषणमित्यर्थः। तेषां श्रुत्यादिनाङ्गताबोधनेनानवगताङ्गताकत्वाभावात् नातिप्रसङ्ग इत्यर्थः ॥ **लिङ्गाविनियुक्तेति** ॥ नमःप्रवक्त्रे इत्यादिमन्त्राणां प्रधानेनानपेक्षितत्वात् प्रकरणविनियोज्यत्वं न स्यादत इतिकर्तव्यतात्वेनेत्युक्तम् (?)। तथा च

सिद्धरूपस्य लिङ्गाविनियुक्तमन्त्रादेः प्रकरणाविषयत्वसिद्ध्यर्थम् इतिकर्तव्यतात्वेनेति चतुर्थम् । करणानुग्राहकत्वञ्च इतिकर्तव्यतात्वम् । सर्वत्र ह्यशक्तस्य करणत्वायोगाच्छक्तिः करणनिष्ठा समस्तीति निर्विवादम् । सा च कारणतावच्छेदिका कारणतारूपा वेत्यन्यदेतत् । तस्याश्च जन्यवृत्तित्वेन जन्यत्वमेवेत्युत्सर्गः । सामग्र्यलाभे परमनादितेत्यविवादः । तदत्र तत्सामग्र्यपेक्षैवेतिकर्तव्यतापेक्षा । तया च सन्निहितप्रयाजादेरङ्गत्वबोधः प्रयाजादेस्तत्सामग्रीत्वात् । सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामग्रीत्वासम्भवात् तया अग्रहणम् । अत्र च प्रधानगतेतिकर्तव्यताकाङ्क्षायाः प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायास्तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशत्वरूपपारिभाषिकपदसन्निध्याख्यवाक्य-

---

तेषामपि प्रधानानुग्राहकत्वेन अनुग्राहकाकाङ्क्षासत्त्वात् प्रकरणविनियोज्यत्वोपपत्तिरित्यर्थः (?) ॥ करणानुग्राहकत्वमिति ॥ करणनिष्ठफलानुकूलशक्तिरूपयोग्यताजनकत्वमित्यर्थः । तदुपपादयति—सर्वत्रेति ॥ तत्र च शक्तिविशिष्टत्वेन प्रधानस्य फलं प्रति कारणत्वपक्षे शक्तेः कारणतावच्छेदकत्वं, तस्या एव [वा]कारणरूपत्वम्, अवच्छेदकविषयतान्तरकल्पनापत्तेरित्यादिविचारस्य न प्रकृतोपयोग इत्यर्थः ॥ तस्याश्चेति ॥ प्रयाजादिभिः प्रधाननिष्ठशक्तिजननेन प्रधानानां प्रवृत्तिजन्यत्वेनानित्यतया तन्निष्ठशक्तेरप्यनित्यत्वमित्यर्थः ॥ सामग्र्यलाभ इति ॥ ईश्वरस्य जगत्कारणतया तन्निष्ठशक्तेर्जनकसामग्र्यप्रसिद्ध्या नित्यत्वमित्यर्थः । न च प्रधानयागादिगतशक्तेरेवात्र निरूपणीयतयेश्वरादिनित्यपदार्थनिष्ठशक्तिकथनं प्रकृतानुपयुक्तमिति वाच्यम् । तन्निरूपणस्यापि फलोत्पत्त्यनुग्राहकनिरूपणत्वेन प्रकृतोपयोगादिति भावः ॥ तत्साग्रमयपेक्षेति ॥ प्रधानगतशक्तिजनकसामग्र्यपेक्षेत्यर्थः । ननु सिद्धरूपस्य व्रीह्यादेः सर्वदा सत्त्वेन सर्वदा शक्त्युत्पत्त्यापत्तिरित्यत आह—सिद्धरूपस्येति ॥ व्यापारावेशं विनेति ॥ निर्वापादिक्रियां विनेत्यर्थः ॥ तत्सामग्रीत्वासम्भवादिति ॥ सर्वदा सत्त्वेन योग्यताजननापत्तेरिति भावः । तदुक्तं वार्त्तिके—'नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' इति । आकाङ्क्षया प्रकरणस्य विनियोजकत्वमुपपादयति—अत्रेत्यादिना ॥ तत्तद्वाक्यस्येति ॥ दर्शपूर्णमासवाक्यस्य प्रयाजादिवाक्यस्य चेत्यर्थः ॥ महावाक्यैकदेशत्वरूपेति ॥ 'वाक्ययोरेकवाक्यत्वं पुनः संहत्य जायते' इति वार्त्तिकोक्तेरिति भावः ॥ पारिभाषिकेति ॥ पदसन्निधेरेव वाक्यप्रमाणत्वेनोक्तत्वेनास्य वाक्यसन्निधिरूपत्वेन मुख्यवाक्यत्वाभावात्

कल्पनया निरुक्तपदानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूल-योग्यतारूपलिङ्गकल्पनया च समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्तव्यतात्ववाचिपदरूपश्रुतिकल्पनया च इतिकर्तव्यतात्वरूप-कृतिकारकत्वे प्रामाण्यम्। संभवति हि प्रयाजादीनामप्युक्तशक्तिजनकत्वेन भावनायामन्वयः। तस्मात्सिद्धं प्रकरण नाम चतुर्थं प्रमाणम्॥

यत्त्वत्र पार्थसारथिना अननुगृहीतस्यापि कर्मादेः संयोगविभागारम्भक-त्वदर्शनान्नेदं प्रकरणम्। अपि तु व्यापारसामान्यस्याख्यातार्थत्वमङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्तव्यतापेक्षा। तयैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्युक्तम्। तन्न। तथात्वे निरुक्तप्रकरणस्य तदघटिताङ्गत्वबोधक-

---

पारिभाषिकेत्युक्तम्। सन्निधिमात्रवाक्यतात्पर्ये वाक्यत्वव्यवहार इत्यर्थः॥ **स्वार्थोप-स्थितिद्वारेति**॥ **तन्निष्ठेति**॥ वाक्यनिष्ठेत्यर्थः॥ **अश्रुतपदान्तरकल्पनानुकूलेति**॥ प्रयाजादिभिरुपकुर्यादिति पदकल्पनानुकूलयोग्यताजननेन योग्यतारूपलिङ्गानुमापकत्व-मित्यर्थः। तदेव दर्शयति—**समिध इति**॥ **इत्थमिति**॥ समिदादिप्रयाजाद्यनु-ष्ठानसहिताग्नेयादिभिः स्वर्गकामो यजेत इति श्रुतिकल्पनेनेत्यर्थः॥ **इतिकर्तव्यतेति**॥ इतिकर्तव्यतात्वस्य कृतिकारकत्वपर्यवसितत्वादित्यर्थः। प्रयाजादीनां प्रधानयागनिष्ठ-शक्तिजनकत्वमस्तीत्याह—**सम्भवति हीति**॥ तथा च करणानुग्राहकत्वरूपेतिकर्तव्यता-त्वस्य परं प्रकरणेन ज्ञातुं शक्यत्वात् प्रकरणाख्यं प्रमाणं सिद्धमित्यर्थः। मतान्तरं दूषयितुमुपन्यस्यति—**यत्त्वत्रेति**॥ सर्वस्य कारणस्यानुग्राहकापेक्षत्वात् अनुग्राहकापेक्षैवेति-कर्तव्यताकाङ्क्षेति न युक्तम्, अननुग्राहकस्यापि कर्मणः संयोगविभागारम्भकत्वदर्शनात्, 'संयोगविभागयोरनपेक्षकारणं कर्म' इति वैशेषिकसूत्रात्। अनपेक्षकारणत्वं च स्वानन्तरोत्पन्नभावानपेक्षत्वं। अन्यथा कर्मणोऽपि संयोगादिजनने पूर्वसंयोगनाशस्यो-त्तरदेशस्यापेक्षणादसंभवापत्तेः। अतः[न]कारणमात्रस्यानुग्राहकापेक्षेति नानुग्राहकाकाङ्क्षा इतिकर्तव्यताकाङ्क्षा इति पार्थसारथिनोक्तमित्यर्थः॥ **अपित्विति**॥ आख्यातस्य व्यापारसामान्यवाचित्वेन भावनात्वात् सामान्यस्य विशेषापेक्षैवेतिकर्तव्यताकाङ्क्षा, सैव च प्रकरणमित्युच्यते। तेन प्रयाजादीनां प्रकरणादङ्गत्वमुक्तमित्यर्थः॥ **तदघटितेति**॥ प्रकरणाघटितेत्यर्थः। अङ्गत्वस्य प्रकरणघटितत्वे हि प्रकरणेनाङ्गत्वं बोध्यत इति वक्तुं युज्यते, घटितज्ञाने घटकज्ञानस्य कारणत्वात्। तदघटितत्वे तु न प्रकरणमङ्गत्वं बोधयतीति न प्रकरणमङ्गत्वबोधकं वक्तुं युक्तमित्यर्थः। **फलसम्बन्धापत्तेश्चेति**॥

त्वानुपपत्तेः । प्रयाजादेर्भावनात्वे तस्यैव फलसम्बन्धापत्तेश्च । अस्मन्मते तु यत्नस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किञ्चैवं प्रधानस्य स्वतो निराकाङ्क्षस्यान्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गत्वापत्तिः, विकृतौ च भावनाया विशेषापेक्षायामक्लृप्तोपकारैरपि सन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिरित्यादि कौस्तुभे विस्तरः ॥ ४ ॥

## (५)—क्रमश्च देशसामान्यात् ॥ १२ ॥

स्थानं चाङ्गत्वे पञ्चमं प्रमाणम् । तच्चेतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिः । इतिकर्तव्यतात्वेनायोग्यत्वं द्वेधा, क्वचिदाकाङ्क्षाविरहात्, यथा विकृतेरुपहोमादिविषये । क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात् । क्वचिद्व्यापारात्मकत्वात्, यथा जपादिमन्त्रादौ । अत्र चैकवाक्यो-

---

भावनायाः भाव्यसम्बन्धात् प्रयाजादेर्भावनारूपस्य फलसम्बन्धापत्तिरित्यर्थः ॥ **यत्नस्यैवेति** ॥ यत्नस्य यागजनकत्वेन कृतार्थत्वात् फलाकाङ्क्षाभावेन न फलसम्बन्ध इति वैषम्यमित्यर्थः । वस्तुतस्तु यत्नस्य यत्नत्वेन भावनात्वाभावेऽप्यन्योत्पादानुकूलव्यापारसामान्यस्य तन्मते भावनात्वाङ्गीकारेण तेन रूपेण भावनात्वात् नोक्तानुपपत्तिः । कृतित्वेन भावनात्वं तु[न युक्तम् ;]भूधातुनिष्पन्नस्य भावनाशब्दस्य भवनानुकूलव्यापारवाचित्वस्य भावार्थाधिकरण एवोक्तत्वेन कृतित्वेन भावनात्वस्यानुचितत्वादिति द्रष्टव्यम् । [**किञ्चेति**]प्रधानस्य स्वतो निराकाङ्क्षस्यान्यतराकाङ्क्षया अङ्गत्वं स्यादिति न प्रकरणेनाङ्गत्वं स्यादित्यर्थः । भावनागतविशेषाकाङ्क्षारूपप्रकरणस्य प्रधानाकाङ्क्षारूपत्वभावादिति भावः ॥ **विकृतौ चेति** ॥ विकृतिभावनाया विशेषाकाङ्क्षायामपि सन्निहितोपहोमैरेव तन्निवृत्त्यातिदेश एव न स्यादित्यर्थः ॥

सूत्रार्थस्तु—**असंयुक्तं** श्रुत्यादित्रयेणासंयुक्तं **प्रकरणादङ्गं** भवेत् । **इतिकर्तव्यतार्थत्वात्** इतिकर्तव्यतापेक्षत्वादिति ॥ ४ ॥

**क्रमश्च देशसामान्यात्** ॥ क्रमः स्थानमिति पर्याय इति सूचयितुं **स्थान**मित्युक्तम् । तल्लक्षणमाह—**तच्चेति** ॥ इतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिः । इतिकर्तव्यतात्वेनायोग्यत्वं द्विविधम् । आकाङ्क्षाविरहप्रयुक्तं सिद्धरूपं चेति । आद्यमुदाहरति—**विकृतेरिति** ॥ द्वितीयमुदाहरति—**जपेति** ॥ वाक्यार्थाप्रवेशे 'व्रीहिभिर्यजेत' इत्यादै व्रीहियागयोः सन्निधिसत्त्वात् स्थानविनियोज्यत्वापत्तिः, अतो—**वाक्यार्थेति** ॥

पात्तव्रीहियागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थेत्युक्तम्। प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम्। तच्च सादेश्यापरपर्यायं द्विविधम्, पाठसादेश्यम्, अनुष्ठानसादेश्यं च। आद्यं द्विविधम्, यथाक्रमपाठः, सन्निधिपाठश्चेति। त्रयमपीदं द्विविधम्, उभयाकाङ्क्षया अन्यतराङ्क्षया चेति। अत्रोभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा चेतिकर्तव्यताकाङ्क्षाभिन्ना द्रष्टव्या। तत्र पाठक्रमात्काम्ययाज्यानुवाक्यामन्त्राणां काम्येष्ट्यङ्गत्वम्। सन्निधेस्तु सान्नाय्यपात्र-शुन्धनविधिसन्निधौ समाम्नातस्य "शुन्धध्वम्" इति मन्त्रस्य तदङ्गत्वम्। अनुष्ठानसादेश्यस्य तु पशुधर्माणां दैक्षपश्वङ्गत्वम्। यद्यपि चैषां लिङ्गादि-प्रमाणान्तरेणैव विनियोगात्क्रमादीनां च क्वचिदपूर्वसाधनत्वलक्षणातात्पर्यग्राह-कत्वमात्रत्वान्नाङ्गत्वे प्रामाण्यम्। तथापि षड्विधस्यापि कमस्यासङ्कीर्णोदाहरणानि कौस्तुभोक्तरीत्योहनीयानि। अत्र षड्विधेऽपि क्रमे आरादुपकारकस्थले तावदिति-

---

तयोः पदार्थत्वान्न दोष इति भावः॥ **आद्यमिति**॥ प्रयाजप्रधानवाक्यार्थयोः सन्निधिसत्त्वात् स्थानविनियोज्यत्ववारणायायोग्यसम्बन्धयोरिति विशेषणमित्यर्थः। प्रयाजप्रधानयोरितिकर्तव्य-तात्वेनायोग्यसम्बन्धत्वाभावान्न दोष इत्यर्थः। [तच्चेति] तदेव स्थानं सादेश्यमित्युच्यत इत्यर्थः। सादेश्यमपि पाठसादेश्यमनुष्ठानसादेश्यमिति द्विविधम्। पाठसादेश्यमपि द्विविधम्। यथाक्रमपाठः सन्निधिपाठश्चेति। त्रयमपीदं स्थानमुभयाकाङ्क्षया अन्यतराकाङ्क्षयेति षड्विधमित्यर्थः॥ **इतिकर्तव्यताकाङ्क्षाभिन्नेति**॥ तेषामुदाहरणानि तत्र तत्राधिकरणेषु स्पष्टानीति कानिचिदुदाहरति—**तत्र पाठक्रमेति**॥ **काम्ये-ष्ट्यङ्गत्वमिति**॥ लिङ्गक्रमाधिकरणोक्तमित्यर्थः। सन्निधिपाठस्योदाहरणमाह—**सन्निधेस्त्विति**॥ **शुन्धनं** शुद्धिः, **तदङ्गत्वं** सान्नाय्यपात्रशुद्ध्यर्थत्वम्॥ **अनुष्ठानेति**॥ अनुष्ठानसादेश्यात् पशुधर्माणामग्नीषोमीयपश्वङ्गत्वं 'तुल्यः सर्वेषाम्' इत्य-धिकरणे वक्ष्यत इत्यर्थः। ननु षड्विधक्रमस्यापि लिङ्गादिप्रमाणविनियुक्तविषयत्वेन नाङ्गत्वबोधकत्वमिति नाङ्गत्वबोधे प्रामाण्यमिति शङ्कते—**यद्यपीति**॥ **अपूर्वसाधनत्वेति**॥ क्रमसत्त्वे यत्क्रमे यस्य पाठः तस्य तदपूर्वसाधनत्वं विना क्रमस्य वैयर्थ्यापत्तेरित्यर्थः॥ **तथापीति**॥ लिङ्गाद्यविनियुक्तस्थले क्रमस्यैव विनियोजकत्वादङ्गत्वप्रामाण्योपपत्ति-रित्यर्थः॥ **असंकीर्णेति**॥ प्रमाणान्तरासंकीर्णोदाहरणानि वार्तिकन्यायसुधाद्युक्तानि

---

१. तै. सं. १. १. ३.

कर्तव्यताकाङ्क्षायाः कल्पनीयत्वात् प्रकरणकल्पकत्वम् । मन्त्रादिरूपसन्निपत्योपकारकस्थलेऽपि मन्त्रादेः स्वरूपेण यागाजनकत्वेऽपि तन्नियमादृष्टोपहितस्य तज्जनकत्वात्करणनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यतात्मकप्ररणकल्पना आवश्यक्येव । अत एव तदपेक्षया तस्य दौर्बल्यम् । षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य । तत्रापि पाठक्रमादनुष्ठानसादेश्यस्य; विधिसन्निधानस्य पुरःस्फूर्तिकत्वात् । तयोस्तु मध्ये सन्निधानस्य प्राबल्यम् । एकग्रन्थस्थत्वादित्यादि कौस्तुभे द्रष्टव्यम् ॥ ५ ॥

## ६----आख्या चैवं तदर्थत्वात् ॥ १३ ॥

ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते । साप्यङ्गत्वे प्रमाणम् । यथा हि—सर्वत्र क्लृप्तावयवशक्तिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नं चेति । तत्राद्यम् "निर्मन्थ्येनेष्टकाः पचन्ति" "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इत्यादौ निर्मन्थ्यादिपदम् । तत्र वाक्येनैव मन्थनादीनां पाकाद्यङ्गत्वान्न सामाख्यानिको विनियोगः । द्वितीयं तु

---

कौस्तुभे द्रष्टव्यानीत्यर्थः । **षड्विध इति** । आरादुपकारकस्थले प्रधानाकाङ्क्षाया अभावेन प्रधानाकाङ्क्षायाः कल्प्यत्वात् प्रकरणकल्पकत्वमित्यर्थः ॥ **सन्निपत्त्येति** ॥ मन्त्राणां करणत्वेन विनियुक्तानां याज्यादीनां यागं प्रत्येव जनकत्व[ ]सत्त्वेऽपि नियमादृष्टविशिष्टरूपेण यागजनकत्वाभावात् [-जनकत्वात् ?] मन्त्रनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यतात्मकप्रकरणकल्पनमावश्यकमित्यर्थः ॥ **अत एव**—प्रकरणकल्पनद्वारा प्रमाणत्वादेव । षष्ठयन्तानां प्राबल्य[दौर्बल्य ?]मित्यनेनान्वयः ॥

सूत्रार्थस्तु—**क्रमश्च देशसामान्यात्**—अनुष्ठानदेशसामान्यात् प्रकरणकल्पनद्वारा अङ्गत्वे प्रमाणं स्यादिति ॥ ५ ॥

**आख्या चैवं तदर्थत्वात्** ॥ **ऋग्वेदादिविहितेति** ॥ ज्योतिष्टोमादीनाम् ऋग्वेदादिविहितानां हौत्राध्वर्यवसमाख्यासत्त्वादित्यर्थः ॥ **आद्यमिति** ॥ प्रकृतविधिवाक्यार्थान्वितार्थकमित्यर्थः । वाक्येन निर्मन्थ्याग्नेः पाकाङ्गत्वे बोधिते अग्निविशेषणस्य मथनस्यापि विशेषणविधिकल्पनया वाक्येनैव पाकाङ्गत्वान्न समाख्ययाङ्गत्वमित्यर्थः । तस्येष्टकापाकविध्यन्वितार्थकत्वादिति भावः ॥ **द्वितीयं त्विति** ॥ 'आध्वर्यवमधीते'

"आध्वर्यवमधीते" "प्रैतु होतुश्चमसः" इत्यादौ । तत्र विशेष्यस्य काण्डस्यैव प्रकृतविधौ अन्वये जाते विशेषणस्याध्वर्युकर्तृकत्वादेः सिद्धवन्निर्देशान्यथानुपपत्त्या विनियोगः कल्प्यत इति तत्र समाख्यया विनियोगः । अत्र समाख्यया अवयवार्थयोः सम्बन्धे संसर्गमर्यादया बुद्धे न तन्निर्देशान्यथानुपपत्त्या स्वतन्त्रविधिकल्पना, गौरवापत्तेः । किन्तु अन्वाधानादिवाक्यस्य "अध्वर्युं वृणीते" इति वाक्यस्य चैकवाक्यतासम्पादकपदमात्रम् "यमध्वर्युं वृणीते, सोऽग्नीनन्वादधाति" इति । तद्द्वयोर्विध्योः कथञ्चिदस्त्येकबुद्धिस्थतेत्येवंविधस्थानकल्पनापूर्वकमध्वर्योरितिकर्तव्यतात्वबोधकाकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्महावाक्यैकदेशत्वाख्यपदसन्निधिरूपं वाक्यं प्रकल्प्यते । तेन चाध्वर्युमात्रनिष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासम्पादकपदरूपश्रुतिकल्पनाद्युक्तं तस्याः षष्ठप्रमाणत्वम् ॥ ६ ॥

## (७)—श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥

---

इत्यादौ कार्यस्यैव विशेष्यतयाध्ययनविधावन्वयोत्तरं तद्विशेषणाध्वर्युकर्तृकत्वस्य सिद्धवन्निर्देशान्यथानुपपत्त्या विधिकल्पनमिति कल्पितविधिना विनियोगादङ्गत्वमित्यर्थः । समाख्यायाः स्थानादिकल्पनद्वाराङ्गत्वप्रामाण्यमुपपादयति—**अत्रेति** ॥ समाख्यया विधिकल्पनं निराकरोति—**न तन्निर्देशेति** ॥ अवयवार्थयोः सम्बन्धमर्यादया भानोपपत्तेर्विधिकल्पनस्य प्रयोजनाभावात् गौरवाच्चेत्यर्थः ॥ **अन्वाधानादीति** ॥ 'आहवनीयमन्वादधाति' इति वाक्यस्य 'अध्वर्युं वृणीते' इति वाक्यस्य चैकवाक्यताबोधकपदं समाख्यया कल्प्यत इत्यर्थः । तत्प्रकारमाह—**यमध्वर्युमिति** ॥ तेन कल्पितपदेन अन्वाधानाध्वर्युवरणविधी एकबुद्धिविषयाविति स्थानकल्पनद्वारा अध्वर्योः कर्तृताबोधकाकाङ्क्षात्मकप्रकरणकल्पनद्वारा तद्विध्योर्महावाक्य[एकदेश]त्वाख्यपदसन्निधिरूपवाक्यैकल्पनेन अध्वर्युनिष्ठयोग्यतारूपलिङ्गकल्पनेन श्रुतिकल्पनाद्युक्तं समाख्यायाः षष्ठप्रमाणत्वमिति । स्पष्टो मूलार्थः ॥

सूत्रार्थस्तु—**आख्या च [एवं]** विनियोजिका, **तदर्थत्वात्**—विनियोगार्थत्वात् समाख्याया इति ॥ ६ ॥

**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥**

तदेवं षट्प्रमाणेषु निरूपितेष्वधुना विरोधे बलाबलं निरूप्यते। विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे यथैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्चन्द्राङ्गत्वे। अथ वा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये यथा गार्हपत्ये श्रुत्या ऐन्द्रीमन्त्रः लिङ्गादाग्नेयः। अयं च शेषद्वयविनियोगो द्वारैक्ये सत्येव बलाबलप्रयोजकः, न तु तद्भेदेऽपि, वाक्यप्रकरणाभ्यां वैमृधप्रयाजादीना-मेकशेष्यर्थत्वेऽपि तदभावात्। यत्र त्वेकस्य शेषस्यैकस्मिन्नेव शेषिणि प्रमाणद्वयं तत्र वैषम्ये प्रबलस्यैव प्रयोजनार्थं विनियोजकत्वम्। साम्ये तु एकस्य विनियोजकत्वम्, इतरस्य पुनः श्रुतित्वेन प्रयोजनान्तरकल्पनम्। नियामकाभावे द्वयोरभ्युदयशिरस्कत्वकल्पनं कर्मान्तरबोधकत्वं वा। एवं यत्र "अरुणया[1] क्रीणाति" इत्यादौ आरुण्यस्यापूर्वसाधानीभूतक्रयार्थत्वे प्रमाणत्रयं तत्रापि श्रुतेरेव विनियोजकत्वम्, न त्वन्यस्य; वाक्यस्योद्देश्यसमर्पकत्वमात्रत्वात्। अत एव न "ऐन्द्र्या[2]" इत्यत्र श्रुतेः लिङ्गवाक्यविरोधः। वाक्यस्योद्देश्यमात्रसमर्पकत्वेन

---

प्रासङ्गिकीं सङ्गतिं सूचयन्नाह—**तदेवमिति**॥ विरोधस्थलमुपपादयति—**विरोध-श्चेति**॥ तदुदाहरति—**यथेति**॥ 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति श्रुत्या गार्हपत्या-ङ्गत्वं लिङ्गादिन्द्राङ्गत्वमित्यर्थः। प्रकारान्तरेणापि विरोधमाह—**अथ वेति**॥ **एकस्मिन्निति**॥ अग्नौ श्रुत्या ऐन्द्रीमन्त्रस्य लिङ्गादाग्नेयस्य च प्राप्तत्वादित्यर्थः॥ **अयमिति**॥ एकस्मिन् शेषिणि शेषद्वयविनियोगो द्वारैक्ये सत्येव बलाबल-प्रयोजकः, द्वारभेदे समुच्चयस्यैव सिद्ध्या बलाबलाप्रसक्तेरित्यर्थः। तदुदाहरति—**वाक्य-प्रकरणाभ्यामिति**॥ एकस्मिन् यागे वैमृधस्य वाक्येन प्रयाजादीनां प्रकरणेन विनियोगेऽपि द्वारैक्याभावात् समुच्चय एव प्रयाजवैमृधयोरिति न तत्र बलाबलप्रसक्तिरित्यर्थः। एकस्य शेषस्य एकस्मिन् शेषिणि प्रमाणद्वयसत्त्वे प्रमाणयोः प्रबलदुर्बलभावे प्रबलप्रमाणमेव विनियोजकम्, दुर्बलस्य प्रयोजनान्तरकल्पनं, श्रुति-त्वेनानर्थक्यायोगादित्यर्थः। प्रमाणद्वयसाम्ये तु प्रमाणद्वयप्राप्तमपीति ज्ञानस्याभ्युदय-कारित्वमित्यर्थः। अभ्युदये एक[-यकारि?]त्वस्यात्यन्तागतिकविषयत्वादाह—**कर्मान्तरेति**॥ अभ्यासात् कर्मान्तरमित्यर्थः॥ **प्रमाणत्रयमिति**॥ श्रुतिवाक्यप्रकरणरूपप्रमाण-त्रयमित्यर्थः। श्रुतेरेव प्रधानत्वविनियोजकत्वमित्यर्थः। ननु वाक्यप्रकरणयो-र्वैयर्थ्यमित्यत आह—**वाक्यस्येति**॥ वाक्येनोद्देश्यसमर्पणमात्रं क्रियते, प्रकरणं

---

१. तै. सं. ६-१-६. २. तै. सं. ५-५-७.

श्रुतिसहकारित्वेऽपि कृतिकारकत्वबोधकत्वरूपविनियोजकत्वाभावात् । प्रकरणं त्वपूर्वसाधनत्वलक्षणातात्पर्यग्राहकमात्रम्, न तु तदपि विनियोजकम्, गौरवात् । अत एव विनियोजकप्रमाणबलाबलवत्तात्पर्यग्राहकप्रमाणबलाबलमपि निरूप्यमेव । तदिह श्रुत्योर्विरोधे ऐन्द्रीमन्त्रस्य तृतीयया गार्हपत्याङ्गत्वमेव, न तु तद्धितश्रुत्या इन्द्राङ्गत्वम् । तस्य सूक्ततद्धितत्वेन प्राधान्येन कृतिकारकत्ववाचित्वाभावात् । अतश्च तस्य मुख्यश्रुतित्वाभावाद्दुर्बलत्वम् । एवं च तस्यैव मन्त्रस्य लिङ्गादिन्द्राङ्गत्वमिति श्रुतिलिङ्गविरोधेऽप्येतदेवोदाहरणम् । अत्र हि सर्वत्र उत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्यस्य तत्तन्निरूपणावसरे स्थापितत्वादुत्तरोत्तरस्य श्रुतिकल्पनं यावदवगतस्यैव पूर्वपूर्वेण शेषशेषिणोर्निराकाङ्क्षत्वापादनेन बाधः । न चाङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्राद्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः । तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षत्वात् । अतः

---

त्वपूर्वसाधनत्वलक्षणातात्पर्यग्राहकमिति न तयोर्वैयर्थ्यमित्यर्थः । तत्र हेतुमाह— **कृतिकारकत्वबोधकत्वरूपेति** ॥ वाक्यादिना कृतिकारकत्वाबोधनान्न विनियोजकत्वमित्यर्थः । ननु तत्र वाक्यप्रकरणयोस्तात्पर्यग्राहकमात्रत्वे तद्बलाबलविचारोऽसङ्गतः स्यात् इत्यत आह—**अत एवेति** ॥ तात्पर्यग्राहकत्वाङ्गीकारादेवेत्यर्थः । **श्रुत्योर्विरोध इति** ॥ तृतीयातद्धितश्रुत्योर्विरोध इत्यर्थः । तत्र हेतुमाह—**सूक्ततद्धितत्वेनेति** ॥ सूक्ततद्धितस्येन्द्रदेवताप्रकाशकमन्त्रपरत्वेन कारकत्ववाचित्वाभावेन दौर्बल्यादित्यर्थः । तृतीयायास्तु करणार्थकत्वेन कारकत्ववाचित्वादित्याशयः । श्रुतिलिङ्गयोर्विरोधेऽप्येतदेवोदाहरणमित्याह—**एवं चेति** ॥ ननु श्रुत्यादिपूर्वप्रमाणेन परबाधो न युक्तः, पूर्वप्रमाणविषयाभावाग्राहकत्वे तदभाववत्ताज्ञानविधया वह्नावौष्ण्यप्रत्यक्षेण शैत्यानुमानस्येव बाधायोगात् तदभावव्याप्यावगाहित्वाभावाच्च इत्यत आह—**निराकाङ्क्षत्वापादनेनेति** ॥ तथा चाकाङ्क्षाबलादेव विनियोगस्य वक्तव्यतया पूर्वप्रमाणेन विनियोगादाकाङ्क्षाशान्तौ कल्पनामूलोच्छेदात् दुर्बलप्रमाणाप्रवृत्तिरेव बाध इत्यर्थः । ननु तथापि श्रुतिविनियोगेन मन्त्रस्य निराकाङ्क्षत्वेऽपि विकृत्याकाङ्क्षया प्रकृत्यङ्गत्वेन निराकाङ्क्षप्राकृताङ्गग्रहणवत् इन्द्रस्य स्मारकाकाङ्क्षया लिङ्गेन मन्त्रविनियोगसंभवान्न बाधो युक्त इति शङ्कते—**न चेति** ॥ **विकृतिवदिति** ॥ विकृतेरङ्गसम्बन्धं विना इतिकर्तव्यताकाङ्क्षाशान्त्यभावात् तदनुष्ठानायान्यतराकाङ्क्षयाऽपि प्राकृताङ्गग्रहणेऽपि

श्रुत्या गार्हपत्याङ्गत्वमेव । न च श्रुतेः करणत्वमात्राभिधायकत्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वान्नायं श्रुतिलिङ्गविरोध इति वाच्यम्; तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया 'यद्यप्यन्यदेवत्यः पशुः' इतिवत्प्रबलत्वोपपत्तेः । वस्तुतस्तु यथा न केवलया श्रुत्या विरोधः नैवं वाक्येनापि तस्यापि गार्हपत्यसमीप इत्येवमुपपत्तेः । अतश्चोभयविरोधसत्त्वेऽपि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम् । लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाधः । लिङ्गवाक्ययोस्तु "स्योनं ते" इति सदनकरणप्रकाशकस्य पूर्वार्धस्य

---

इन्द्रस्य ध्यानाद्युपायान्तरेणापि स्मृतिसंभवेन गौरवापादकश्रुतिकल्पनेन लिङ्गस्य विनियोजकत्वासंभवादित्यर्थः । ननु नायं श्रुतिलिङ्गविरोधः, तृतीयायाः करणत्ववाचित्वेन इन्द्राङ्गत्वेऽपि करणत्वोपपत्तेः, अतः गार्हपत्यप्रकाशनकरणत्वस्यैव विरोधो वाच्यः, स च वाक्याधीन इति श्रुतिवाक्यविरोध एवायं न तु श्रुतिलिङ्गविरोध इति शङ्कते--**न चेति** ॥ **ब्राह्मणेति** ॥ मन्त्रलिङ्गापेक्षया ब्राह्मणस्य वचनत्वेन प्राबल्येन तेन लिङ्गस्य बाधोपपत्तेः, अन्यथा 'यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या' इत्यत्रापि ब्राह्मणवचनेन लिङ्गबाधो न स्यादित्यर्थः ॥ **वस्तुतस्त्विति** ॥ यथा श्रुतिमात्रस्य न विरोधः । एवं केवलवाक्यस्यापि न विरोधः, गार्हपत्यसमीपस्थितिमादाय वाक्योपपत्तेः । तेन श्रुतियुक्तवाक्यस्यैव विरोध इति वक्तव्यम् । ततश्च श्रुतेः प्रबलत्वेन वाक्यस्य दुर्बलत्वेन प्रधानेन व्यपदेशा भवन्तीति न्यायेन राजा गच्छतीत्यादिलोकव्यवहारानुसारेणोभयविरोधेऽपि श्रुतिविरोधोदाहरणत्वोपपत्तेरित्यर्थः ॥ **लिङ्गयोः** ॥ गौणमुख्यलिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणलिङ्गस्य बाधः । यथा पूषानुमन्त्रणमन्त्रस्य पूषप्रकाशनसामर्थ्येन प्राकरणिकाग्निप्रकाशनलिङ्गस्य गौणस्य बाध इति भावः ॥ **सदनकरणप्रकाशकस्येति** ॥ दर्शपूर्णमासयोर्हविरुद्वासनानन्तरमयं मन्त्रः पठितः 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमानः' इति । अयमर्थः । ते तुभ्यम्, स्योनं सुखहेतुम्, सदनं स्थानम्, कल्पयामि निर्दिशामि, तच्च स्थानं घृतस्य धारया, सुशेवं सुखेन शेतुं योग्यम्, कल्पयामि, तस्मिन् सदने हे व्रीहीणां मेध सारभूत, पुरोडाशेति सम्बुध्यन्तस्यार्थाल्लाभः, सुमनस्यमानः प्रीयमाणः सन्, तस्मिन् स्थाने प्रतितिष्ठेति । तत्र पूर्वार्धस्य

---

१. तै. सं. ३-७-६.

'तस्मिन् सीद' इत्युत्तरार्धेन सादनप्रकाशकेन 'तस्मिन्' इति विभागे साकाङ्क्षेणैकवाक्यत्वात्सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव 'तस्मिन्' इति पदसन्निधिरूपेण वाक्येन विनियोगे प्रारिप्सिते ततः पूर्वमेव[2] प्रवृत्तेन लिङ्गेन तत्तदाख्यातस्य मुख्यविशेष्यकत्वेन स्वार्थबोधकस्य परोपसर्जनत्वकल्पने प्रमाणाभावात्तच्छब्दस्य च "सा वैश्वदेवी' इतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात्प्रत्येकमेव विनियोग इति । वाक्ययोर्विरोधे उपांशुत्वस्य "त्सरा वा एषा यज्ञस्य' इति वाक्येन यज्ञपदैकवाक्यत्वात् यज्ञभागधर्मत्वम् "तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" इत्यनेन सन्निहितयत्किञ्चित्पदैकवाक्यतया अवगतपदार्थधर्मत्वेन बाध्यते । वाक्यप्रकरणयोः विरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः ॥

---

सदनकरणस्य उत्तरार्धेन सादनस्य प्रकाशनेन तस्मिन्नित्यनेन पूर्वोपस्थितपरामर्शनात् द्वयोरेकवाक्यत्वप्रतीतेः कृत्स्नस्य मन्त्रस्य सदने सादने वा उभयत्र वाक्येन विनियोगः प्रतीयते । लिङ्गेन तु विभज्य विनियोगः प्रतीयत इति लिङ्गवाक्यविरोध इत्यर्थः ॥ **विभागे साकाङ्क्षेणेति** ॥ विभागे साकाङ्क्षस्यैकवाक्यतारूपत्वादिति भावः ॥ **ततः पूर्वमेवेति** ॥ वाक्येन विनियोगात्पूर्वमेवेत्यर्थः । वाक्यस्य लिङ्गकल्पनाद्वारा विनियोजकत्वेन लिङ्गकल्पनात्पूर्वमेव लिङ्गेन झडिति श्रुतिकल्पनेन विनियोगादित्यर्थः । ननु सदनकरणविशिष्टसादनस्य वाक्येन प्रतीयमानस्य एकार्थस्य त्यागापत्तिरित्यत आह—**तत्तदाख्यातस्येति** ॥ आख्यातानां मुख्यविशेष्यभावनाप्रतिपादकत्वस्वाभाव्येन पूर्वार्धप्रतिपाद्यसदनकरणभावनाया विशेषणत्वाङ्गीकारेणोपसर्जनत्वस्यायुक्तत्वादित्यर्थः । नन्वेवं तच्छब्दस्य स्ववाक्योपस्थितार्थपरामर्शकत्वानुपपत्तिरित्यत आह—**तच्छब्दस्येति** ॥ 'सा वैश्वदेव्यामिक्षा' इत्यादौ तच्छब्दस्य 'तप्ते पयसि दध्यानयति' इति वाक्यान्तरोपात्तपयःपरामर्शित्वदर्शनेन तन्न्यायेनेहापि वाक्यान्तरोपात्तसदनपरामर्शित्वोपपत्तेर्नैकवाक्यत्वमावश्यकमिति लिङ्गेन विभज्य विनियोगात् लिङ्गेन वाक्यबाध इत्यर्थः ॥ **वाक्ययोरिति** ॥ ज्योतिष्टोमे 'यत्किंचित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इति श्रूयते ॥ **यत्किंचिदिति** ॥ यद्यदित्यर्थः । अत्र यत्तच्छब्दाभ्यामेकवाक्यत्वात् भागधर्मत्वमुपांशुत्वस्य प्रतीयमानम्, तेनोपांश्विति सन्निहिततच्छब्दार्थपदार्थधर्मत्वेन बाध्यत इत्यर्थः ॥ **वाक्यप्रकरणयोर्विरोधे च वैमृधस्येति** ॥ 'संस्थाप्य

---

१. तै. सं. ३-७-६.　　२. पूर्वप्रवृत्तेन इति पाठान्तरम् ।

यत्तु—अग्नीषोमादिपदैकवाक्यतापन्नानाम् "इदं हविः" इत्यादिपदानाममावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यत इत्युदाहरणमुक्तं मूले, तत् श्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वप्रसक्त्यभावेऽप्यधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकस्य प्रसक्तत्वात्तद्बाधाभिप्रायेण द्रष्टव्यम् । प्रकरणयोर्विरोधे महाप्रकरणमवान्तरप्रकरणेन । प्रकरणक्रमयोर्विरोधे "अक्षैर्दीव्यति" इत्यादिविदेवनादीनां सन्निधानादभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणाद्राजसूयाङ्गत्वम् । न चाभिषेचनीयस्यापि फलवत्त्वेन प्रकरणाशङ्का । तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य तदभावात् । न च विकृतावपि यत्

---

पौर्णमासीं वैमृधमनुनिर्वपति' इति वाक्येन दर्शपूर्णमासप्रकरणपठितेन पौर्णमास्यङ्गत्वावगमात् प्रकरणावगतं दर्शाङ्गत्वं बाध्यत इत्यर्थः । भाष्योक्तोदाहरणं सङ्गमयति—यत्त्विति ॥ सूक्तवाकपठितानाम् इदं हविरित्यादीनाम् अग्नीषोमीयपदैकवाक्यतया वाक्यात् तत्प्रकाशनार्थत्वं, अमावास्याङ्गदेवताप्रकाशनार्थत्वं प्रकरणात्, वाक्येन प्रकरणबाधात् नामावास्यादेवताप्रकाशनार्थत्वमिति वाक्यप्रकरणोदाहरणं भाष्योक्तम् । तदभिप्रायमाह—तदिति ॥ सिद्धरूपस्य मन्त्रस्य प्रकरणविनियोज्यत्वाभावेऽप्यधिकाराख्यप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकस्यावश्यापेक्षितत्वेनाधिकाराख्यप्रकरणविनियोज्यत्वतात्पर्येण भाष्योक्तिर्द्रष्टव्येत्यर्थः ॥ **अवान्तरप्रकरणेनेति** ॥ बाध्यत इति शेषः । अत एवाभिक्रमणादीनां प्रयाजाङ्गत्वम्, न तु दर्शाङ्गत्वमिति भावः ॥ **प्रकरणक्रमयोर्विरोधे** ॥ राजसूये अभिषेचनीयसोमयागसन्निधौ 'अक्षैर्दीव्यति' इत्यादिविधिविहितानां विदेवनादीनां सन्निधानात् नाभिषेचनीयसोमयागाङ्गत्वम्, किन्तु प्रकरणात् राजसूयाङ्गत्वमिति प्रकरणेन क्रमबाध इत्यर्थः । ननु 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति फलवाक्ये राजसूयपदेन सर्वयागानां फलसम्बन्धबोधनेन अभिषेचनीयस्यापि सोमयागरूपत्वेन फलसम्बन्धात् प्रकरणाद्विदेवनादीनां तदङ्गत्वात् न क्रमेण तदङ्गत्वमिति शङ्कते—**न चेति** ॥ **विकृतित्वेनेति** ॥ अभिषेचनीयस्य ज्योतिष्टोमविकृतित्वेन प्राकृतैः क्लृप्तोपकारैरेवाङ्गाकाङ्क्षाशान्त्या इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणाभावादित्यर्थः । अभिषेचनीयस्यापि प्रकरणमस्तीति शङ्कते—न

---

१. तै. ब्रा. ३-७-१०.

प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते, यथा पृषत्तादि; तस्यापि विकृतिगताङ्गाकाङ्क्षायामनिवृत्तायामेव विधेयत्वात्तत्संदष्टस्य तत्पूर्वभावित्वे सति प्रधानोत्तरभाविनः अपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेर्विदेवनादीनां चाभिषेचनीयोत्तरमुक्तविधाभिषेकपूर्वभावित्वेन पाठात्प्रकरणग्रहणोपपत्तिरिति वाच्यम्; प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गस्योपहोमवत् विकृत्याकाङ्क्षायां निवृत्तायामेव विधानात्। यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथा औदुम्बरत्वशरादेस्तस्यैवानिवृत्ताकाङ्क्षायां विधानं, तत्संदष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम्। अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावान्न तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः। वस्तुतस्तु—अभिषेकस्यापि स्वतन्त्रोत्पन्नस्य प्रकरणाद्राजसूयाङ्गत्वावगतेः "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते"

---

चेति ॥ प्राकृताङ्गानुवादेनेति ॥ प्राकृताज्यानुवादेन पशौ 'पृषदाज्येनानूयाजान् यजति' इति वचनेन विहितायाः पृषत्तायाः प्रकरणग्राह्यत्वोक्तेः तन्न्यायेनाभिषेचनीयस्यापि [विदेवनादेरपि ?] प्रकरणग्राह्यत्वं भवतीत्यर्थः। पृषत्तादेः प्रकरणग्राह्यत्वमुपपादयन् अभिषेचनीयसन्निधिपठितविदेवनादीनामपि तदुपपादयति—तत्संदष्टस्येति ॥ अङ्गाकाङ्क्षानुवृत्तौ विधीयमानाङ्गसंदष्टस्येत्यर्थः। विदेवनादीनां तदुपपादयति—विदेवनादीनां चेति ॥ उक्तविधेति ॥ अभिषेचनीयसोमयागपूर्वभावित्वात् [-यागोत्तरं?] अभिषेकपूर्वभावित्वेन पाठेनाभिषेचनीयाङ्गाकाङ्क्षायां [अ] निवृत्तायामेव विधानेन प्रकरणग्राह्यत्वोपपत्तिरित्यर्थः ॥ प्राकृताङ्गानुवादेनेति ॥ प्राकृताङ्गानुवादेन विधीयमानस्यापि वैकृताङ्गस्याङ्गाकाङ्क्षायां निवृत्तायामेव विधानेनाङ्गाकाङ्क्षानुवृत्तौ विधीयमानत्वानङ्गीकारात्, उपहोमादीनां विकृतेः पुनरङ्गाकाङ्क्षा[कल्पनया]प्यन्यतराकाङ्क्षयैव विनियोगादित्यर्थः। अनिवृत्ताकाङ्क्षायां विधीयमानमङ्गमुदाहरति—प्राकृताङ्गकार्यापन्नतयेति ॥ 'औदुम्बरो यूपो भवति' 'शरमयं बर्हिर्भवति' इत्यादौ औदुम्बरत्वादेः बैल्वपालाशादिकार्यापन्नत्वादित्यर्थः ॥ तत्संदष्टस्येति ॥ स्थानापन्नाङ्गसंदष्टस्येत्यर्थः। तत्पूर्वं प्रधानोत्तरं विधीयमानवैकृताङ्गस्येत्यर्थः। अभिषेचनीये तद्वैषम्यमुपपादयति—अभिषेचनीयस्य त्विति (?) ॥ तस्य सोमयागत्वेन फलसम्बन्धेन प्राधान्यात् प्राकृतकार्यापत्तिर्नास्तीति न विदेवनादीनां प्रकरणादभिषेचनीयाङ्गत्वमित्यर्थः(?)। युक्त्यन्तरेणापि प्रकरणस्य स्थानात् बलीयस्त्वमाह—वस्तुतस्त्विति ॥ अभिषेकस्य राजसूयप्रकरणे पठितत्वेन राजसूयाङ्गत्वमाह—माहेन्द्रस्यस्तोत्रं प्रत्यभिषिच्यत इति ॥ प्रतिशब्दयोगेना-

इत्यत्र प्रतिशब्दयोगेन कालार्थसंयोग इति वक्ष्यते । अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव सन्निधानादभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः । न च राजसूयस्यापि प्रत्येकं विकृतित्वात्प्रकरणाभावः ; पवित्रादारभ्य क्षत्रस्य धृतिं यावद्राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गाम्नानात्तत्सन्दष्टविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः । एवं प्रकरणस्य क्रमान्तैरपि उदाहरणान्यूह्यानि । एवं क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्यैन्द्राग्नद्वयाङ्गत्वे अनियमेन प्रसक्ते यथाक्रमं पाठादाद्यस्याद्याङ्गत्वम् । क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य 'शुन्धध्वम्' इति मन्त्रादेस्सन्निधानात्सान्नाय्याङ्गत्वम् । न च महाधिकारेण सन्निधिबाधः । तस्यापि वाचनिकाङ्गसंदष्टत्वेन बलवत्त्वात् । न चैवं तस्य प्रकरणत्वापत्तिः । मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन च प्रकरणाविषयत्वात् । सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व

---

भिषेकमाहेन्द्रस्तोत्रयोः कालार्थसंयोगावगमेन विदेवनाद्यभिषेकान्तस्य सन्निधिना अभिषेचनीयसोमयागाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधात् राजसूयाङ्गत्वमित्यर्थः । ननु राजसूयस्येष्टिपशुसोमयागात्मकत्वेन प्रत्येकं विकृतित्वात् प्रकरणमेव नास्तीति शङ्कते—**न चेति** ॥ **पवित्रादिति** ॥ पवित्रादिसोमयागादीनां प्रत्येकं पवित्रत्वादिना प्रकरणाभावेऽपि राजसूयत्वेन फलसम्बन्धेन राजसूयत्वेनाङ्गाकाङ्क्षासत्त्वेन प्रकरणसम्भवादित्यर्थः ॥ **क्रमयोर्विरोध इति** ॥ सन्निधानपाठक्रमयोर्विरोध इत्यर्थः । याज्याद्वयस्य ऐन्द्राग्नद्वयाङ्गत्वे पाठक्रमादाद्यस्याद्याङ्गत्वम्, द्वितीयस्य द्वितीयाङ्गत्वमिति सन्निधानात् पाठक्रमो बलीयानित्यर्थः । **क्रमसमाख्ययोर्विरोधे पौरोडाशिकेति** ॥ पौरोडाशिकसमाख्यया दर्शपूर्णमासाङ्गत्वे 'शुन्धध्वम्' इति मन्त्रस्य प्राप्ते समाख्याबाधेन सन्निधानात् सान्नय्यपात्रप्रोक्षणे विनियोग इत्यर्थः । प्रकरणेन दर्शपूर्णमासाङ्गत्वमाशंक्य निराचष्टे—**न चेति** ॥ **तस्येति** ॥ सान्नाय्याङ्गसंदष्टत्वेनावान्तरप्रकरणरूपत्वेन महाप्रकरणापेक्षया बलवत्त्वादित्यर्थः । मन्त्रस्य सिद्धरूपत्वेन प्रकरणग्राह्यत्वाभावादपि न प्रकरणप्रसक्तिरित्याह—**न चेत्यादिना** ॥ **सन्निधानस्येति** ॥ समाख्याया यथा अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वं तथा संनिधानस्यापीति तत्रैव बलाबलविचारः कार्यः, तत्रोदाहरणं गवेषणीयमित्यर्थः । समाख्ययोर्विरोधे याजमानमिति विशेषसमाख्यया आध्वर्यवमिति सामान्यसामाख्याबाधात् यजमानेनैव तत्तत्कर्माणि कार्याणि इत्याह—

---

१. तै. सं १-१-३.

एव बलाबलम्, न तु विनियोगे । तत्र तूदाहरणान्तरं मृग्यम् । एवं समाख्ययोर्विरोधे आध्वर्यवमिति सामान्यसमाख्याया याजमानमिति विशेषसमाख्यया बाधः । एवं द्व्यन्तीरतत्र्यन्तरितादिप्रमाणस्य पूर्वैः सह विरोधे शेषानेकत्वे चोदाहरणानि कौस्तुभे द्रष्टव्यानि ॥

स चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः । तत्त्वं च अङ्गताबोधकलिङ्गादिकल्प्यप्रमाणप्रतिबन्धकत्वम् । पूर्वपूर्वप्रमाणेन ह्यङ्गत्वेऽवधारिते निराकाङ्क्षत्वादुत्तरोत्तरतः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाधः । एवं गृहमेधीये

---

**समाख्ययोरिति** ॥ **एवमिति** ॥ द्व्यन्तरितादिस्थलेष्वपि पूर्वप्राबल्यं द्रष्टव्यमित्यर्थः ॥ सूत्रार्थस्तु—**अर्थविप्रकर्षात्** विनियोगविप्रकर्षात् इति । शेषं स्पष्टम् ॥

अत्र वार्तिके—बाधो द्विविधः । अप्राप्तबाधः प्राप्तबाधश्चेति[यदुक्तम्] । तदनुपपन्नम्, अप्राप्तस्य बाधे अप्रसक्तप्रतिषेधापत्तेः । नापि प्राप्तस्य बाधः सम्भवति, तत्र प्राप्तिः शास्त्रेण वा लोकेन वा ; नाद्यः, शास्त्रप्राप्तस्य बाधे शास्त्रस्याप्रामाण्यापत्तेः । न द्वितीयः, शरकुशास्तरणस्य लोकतः प्राप्त्यभावादित्यतोऽप्राप्तबाधस्वरूपं तल्लक्षणं च क्रमेणाह—**स चायमित्यादिना** ॥ **तत्त्वं चेति** ॥ अप्राप्तबाधत्वं चेत्यर्थः ॥ **अङ्गताबोधकेति** ॥ अङ्गताबोधकं यल्लिङ्गादि तेन कल्प्यं[यत्]श्रुत्यादि प्रमाणं तत्प्रतिबन्धकत्वमित्यर्थः । तदेवोपपादयति—**पूर्वेति** ॥ अयमर्थः—योग्यतायाः शक्तिरूपत्वेन लिङ्गरूपतया तया लिङ्गयनुमाने कर्तव्ये मूलश्रुत्यनुमितिं प्रति लिङ्गस्य कारणत्वेन लिङ्गकल्प्यश्रुतिविरुद्धप्रत्यक्षश्रुतेः प्रतिबन्धकत्वं वक्तव्यम् । प्रतिबन्धकत्वं च कार्यानुकूलधर्मविघटकत्वम् । प्रकृते चानुमितिरूपकार्यानुकूलो धर्मः शक्तिरूपलिङ्गमेव । तथा च प्रत्यक्षश्रुतेः कल्प्यश्रुत्यनुमितिरूपकार्यानुकूलशक्तिनाशकत्वात् नानुमित्युत्पत्तिरिति प्रतिबन्धकत्वनिर्वाहः । कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति पक्षे लिङ्गकल्प्यश्रुतिविरुद्धाङ्गताबोधकश्रुत्यभावविशिष्टलिङ्गस्य श्रुत्यनुमापकत्वेन विरुद्धश्रुतिसत्त्वे तदभावविशिष्टलिङ्गरूपहेत्वभावात् न श्रुत्यनुमानमित्यप्राप्तबाधोऽयमिति ॥ **गृहमेधीय इति** ॥ गृहमेधीये हि 'आज्यभागौ यजती'ति श्रूयते । अत्राज्यभागातिरिक्तानां प्राकृताङ्गानां बाधोऽप्यप्राप्तबाध इत्यर्थः । अयमभिप्रायः—गृहमेधीयस्य विकृतित्वेन अङ्गाकाङ्क्षायां दर्शपूर्णमासधर्मातिदेशेनाङ्गप्राप्तिर्वक्तव्या, चोदनालिङ्गात् । तत्र प्रकृतिक्लृप्तोपकारकाज्यभागेन निराकाङ्क्षत्वात् चोदककल्पनमेव नास्तीति अति-

"आज्यभागौ यजति"[1] इत्यादावपि । अन्यत्र तु सामान्यविशेषनित्य-नैमित्तिकभावादौ प्राप्तबाधः । तत्त्वं च क्लृप्तस्य बोधकस्य विशेषविषयताप्रति-बन्धकत्वम् । सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमादिविषयतामात्रं प्रतिबध्यते, न तु सामान्यशास्त्रमपि । तस्य क्लृप्तत्वेनाकल्पनीयत्वात् । होमान्तरेष्वप्याहवनीयाभावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च । अत एव येन सामान्यशास्त्रमेव पूर्वमालोचितं तस्य विशेषादर्शनजनितभ्रम एव विशेषविषयताविषयको विशेषशास्त्रेण बाध्यते । एवं यत्रापि 'न तौ पशौ करोति' इत्यादौ शास्त्रप्राप्तस्य निषेधस्तत्रापि प्रापकशास्त्रस्य यद्यपि प्राप्ति-सापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकम्, तथापि तत्र विकल्पाङ्गीकारादभावपक्षे विशेषविषयत्वप्रतिबन्धान्नोक्तलक्षणाव्याप्तिः । यथा च तत्र रागप्राप्तनिषेधवद्भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पस्तथा कौस्तुभे द्रष्टव्यम् । वक्ष्यते चात्रापि दशमे । अतः सिद्धं बाधस्य द्वैविध्यम् ॥ ७ ॥

---

देशकल्पनाप्रतिबन्धकत्वमाज्यभागविधेरिति तत्राप्यप्राप्तबाध इत्यर्थः । प्राप्तबाधमुदा-हरति—**अन्यत्र त्विति** ॥ पदे जुहोतीति विशेषविधिना हि आहवनीये जुहोतीति सामान्यशास्त्रस्य बाधः । तत्रोक्तरीत्या न सामान्यशास्त्रकल्पनास्ति । सामान्यशास्त्रस्य क्लृप्तत्वेन विशेषशास्त्रस्य तदनुमितिप्रतिबन्धकत्वासम्भवात्, सामान्यशास्त्रस्य सर्वहोमेष्वाहवनीयविधायकस्य पदहोमविषयत्वं प्रतिबध्यते । तत्र प्रतिबन्धकत्वं च सामान्यशास्त्रजन्यपदहोमविशेष्यकाहवनीयाधिकरणकत्वज्ञाने अप्रामाण्य-ज्ञानोत्पादनेन अप्रामाण्यज्ञानानास्कन्दितविधिविषयत्वज्ञानस्यैव प्रवृत्तिजनकत्वात् ततश्च सामान्यशास्त्रजन्यज्ञानस्य प्रवृत्तिजनकत्वाभावात् प्राप्तबाध इति । ननु विशेष-शास्त्रेण सामान्यशास्त्रस्यैवाप्रामाण्यकल्पनेन बाधोपपत्तौ किमिति विशेषविषयताबाध-कल्पनेत्याशंक्य समाधत्ते—**होमान्तरेष्विति** ॥ तथात्वे सामान्यशास्त्रस्य मिथ्यात्वे कुत्रापि होमे आहवनीयप्राप्तिर्न स्यादित्यर्थः ॥ **अत एवेति** ॥ सामान्यशास्त्रस्य बाधाभावादेवेत्यर्थः । विशेषशास्त्रादर्शनकालीनपदविषयभ्रान्तिर्विशेषदर्शनेन बाध्यत इति प्राप्तबाध इत्यर्थः । नन्वेवं 'न तौ पशौ करोति' इत्यत्र निषेधस्य प्राप्तिसापेक्षत्वे विधेरुपजी-व्यत्वेन शास्त्रत्वेन बाधायोगात् पशावाज्यभागविधेरप्रामाण्यापादनेन प्राप्तबाध एव स्यादिति विकल्पसिद्धान्तविरोधः स्यादित्यत आह—**यत्रापीति** ॥ इष्टापत्त्या परिहरति

---

१. तै. सं २-६-२.

**(८)—अहीनो वा प्रकरणाद्गौणः ॥ १५ ॥ असंयोगात्तु मुख्यस्य तस्मादपकृष्यते ॥ १६**

एवं विरोधे बलाबलं निरूप्य अधुना विरोध एव क्वास्ति क्व नास्तीति चिन्तार्थमुत्तरः प्रपञ्चो यावदध्यायसमाप्ति ॥

ज्योतिष्टोमे उपसदो विधाय "तिस्र[1] एव साह्नस्योपसदो द्वादशाहीनस्य" इति श्रुतम् । तत्र द्वादशत्वं किं द्वादशाहे निविशते प्रकरण एव वेति चिन्तायां त्रित्वस्य तावदुपसदनुवादेन विहितस्य वाङ्नियमन्यायेन स्वापूर्वसाधनीभूतोपसदर्थत्वादुपसदां च प्रकरणात् ज्योतिष्टोममात्राङ्गत्वावगतेः साह्नपदं अह्ना समाप्यमानत्वात्तदनुवादमात्रम्, न तूद्देश्यविशेषणम्, वाक्यभेदात् वैयर्थ्याच्च । अतश्च तद्वदेव द्वादशत्वमपि तदनुवादेन विधीयमानमुपसदर्थमेव । न च तस्याहीनोद्देशेन विधिः । उपसदुपसर्जनत्वेन श्रुतस्य तस्याहीन-

---

—तथापीति ॥ रागप्राप्तेति ॥ 'न कलञ्जं भक्षयेत्' इतिवदित्यर्थः ॥ ७ ॥

**अहीनो वा प्रकरणाद्गौणः** ॥ प्रासङ्गिकीं सङ्गतिं सूचयन्नध्यायादौ प्रतिज्ञातं विचारं यावदध्यायसमाप्ति सङ्गमयति—**एवमिति** ॥ तत्र प्रथमं प्रकरणस्य श्रुत्यादिभिः सह विरोधाविरोधचिन्ता क्रियते—**त्रित्वस्येति** ॥ 'यावत्या वाचा कामयते तावत्या दीक्षणीयायामनुब्रूयात्' इत्यत्र दीक्षणीयापूर्वसाधनोद्देशेन वाङ्नियमविधिवत् प्रकृतेऽप्युपसदपूर्वसाधनोद्देशेन त्रित्वविधानेन प्रकरणावगतक्रत्वङ्गभावोपसदुद्देशेन विधानात् ज्योतिष्टोमाङ्गत्वमित्यर्थः । ननु साह्नोपसदुद्देशेन विधानात् कथमुपसदङ्गत्वमित्यत आह—**साह्नपदमिति** ॥ अनुवादमात्रमिति मात्रशब्दव्यावर्त्यमाह—**न त्विति** ॥ सान्ह्वविशिष्टोपसदुद्देशेन विधाने विशिष्टोद्देशापत्तेरित्यर्थः ॥ **वैयर्थ्याच्चेति** ॥ अपूर्वसाधनोपसदुद्देशेन विधानेनैवानर्थक्यपरिहारोपपत्तेस्तद्विशेषणप्रयोजनाभावादित्यर्थः ॥ **तदनुवादेन**—उपसदनुवादेन ॥ **उपसदर्थमेवेति** ॥ त्रित्ववत् द्वादशत्वमपि तदर्थमेव । ततश्च ज्योतिष्टोम एव द्वादशत्वनिवेश इति भावः ॥ ननूपसदां त्रित्वपरिच्छिन्नानां परिच्छेदकाकाङ्क्षाभावात् अहीनोद्देशेन द्वादशत्वविधिरिति शङ्कते—**न चेति** ॥ **उपसदुपसर्जनत्वेनेति** ॥ द्वादशपदस्य संख्येयवाचित्वेन उपसद्विशेषणत्वावश्यम्भावेन

---

१. तै. स. ६-२-५.

सम्बन्धानुपपत्तेः, तस्यावृत्त्या द्वादशत्वापत्तेश्च । द्वादशाहप्रकरणपठितवाक्यान्तरेण तत्र तस्य प्राप्तत्वाच्च । अतोऽस्यापि त्रित्वेन विकल्पः । अहीनपदं च न हीयत इति व्युत्पत्त्या नञ्समासमङ्गीकृत्य ज्योतिष्टोमानुवादकम् । सर्वे ह्यन्ये क्रतवो विकृतित्वादेनमपेक्षमाणा न जहति ॥

अथ नायं नञ्समासः, तथात्वे तस्य तत्पुरुषत्वात् "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति स्मृत्या "प्रकृत्या पूर्वपदम्" इत्यनुवृत्तिसहितया अव्ययाख्यस्य नञ्पूर्वपदस्योदात्ताख्यप्रकृतिस्वरत्वविधानादाद्युदात्तत्वापत्तेः । अपि तु मध्योदात्तत्वात् "अह्नः खः क्रतौ" इति स्मृत्या "तस्य समूहः" इत्यनुवृत्तिसहितया अहश्शब्दस्य क्रतुसमूहवाचिखप्रत्ययान्तत्वविधानात्तस्य च "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" इति स्मृत्या ईनादेशविधानादयं शब्दः खप्रत्ययान्तः । तथात्वे हि "आद्युदात्तश्च" इति सूत्रात्प्रत्ययादेरीकारस्योदात्तस्वरसिद्धिः । न च ईकारस्येनादेशावयवत्वात्कथं प्रत्ययावयव-

---

तस्याहीनोद्देशेन विधानासंभवादित्यर्थः ॥ **तस्यावृत्त्येति** ॥ अहीनोद्देशेन द्वादशत्वविधावहीनस्यैवावृत्त्या द्वादशत्वापत्तेर्न द्वादशोपसत्प्राप्तिः स्यादित्यर्थः ॥ ननु द्वादशपदेन सन्निहितत्वात् द्वादशोपसद एवाहीनोद्देशेन विधीयन्त इति शङ्कां निरस्यति— **द्वादशाहप्रकरणेति** ॥ **अत इति** ॥ उपसदुद्देशेन विधानादित्यर्थः । नन्वहीनपदमनन्वितार्थकं स्यादित्यत आह—**अहीनपदमिति** ॥ ज्योतिष्टोम एवावयवयोगेन प्रतिपाद्यत इति ज्योतिष्टोमे द्वयोर्विधानात् विकल्पोपपत्तिरित्यर्थः । इमं पूर्वपक्षं सिद्धान्तरीत्या दूषयित्वा प्रकारान्तरेण पूर्वपक्षमुपपादयति—**अथेति** ॥ **नायमिति** ॥ **तथात्व इति** ॥ तत्पुरुषसमासाङ्गीकार इत्यर्थः । आद्युदात्तत्वापत्तेरित्यग्रेणान्वयः । 'तत्पुरुषेतुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इति सूत्रेण 'प्रकृत्या पूर्वपदं' इत्यनुवृत्तिबलेन नञोऽव्ययत्वेन पूर्वपदप्रकृतिस्वरप्राप्ताद्युदात्तसंपत्तेरित्यर्थः ॥ **मध्योदात्तत्वादिति** ॥ अहीनशब्दमध्यगतेकारस्येत्यर्थः । तथैव स्वाध्यायपाठस्य वैदिकसम्प्रदायसिद्धत्वादिति भावः । तस्य समूह इत्यर्थे 'अह्नः खः क्रतौ' इति सूत्रविहितक्रतुसमूहार्थकखप्रत्ययान्त एवाहीनशब्द इति वक्तव्यमित्यर्थः ॥ **तस्य चेति** ॥ खप्रत्ययस्येत्यर्थः । आयनेयीनीयिय इत्यनेनेनादेश इति । अहन्शब्दात् खप्रत्यये तस्येनादेशे कृतेऽहीनशब्दनिष्पत्तेराद्युदात्तश्चेति प्रत्ययादेशेकारस्योदात्तत्वेनाहीनशब्दस्य मध्योदात्तत्वसिद्धिरित्यर्थः । नन्वीकारस्यादेशावयवत्वेन प्रत्ययावयवत्वा-

त्वमिति वाच्यम्, "आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्" इति स्मृत्या प्रत्ययस्वरासिद्ध्यर्थम् ईनादेशस्यापि प्रत्ययोपदेशकालकत्वरूपोपदेशिवद्भावस्य विहितत्वात्। अतो नायं नञ्समास इति चेत्—तथापि प्रकरणानुरोधादहीन-शब्दस्य बहुदिवसकत्वसादृश्येन गौणतयैवोपपत्तेः। वस्तुतस्तु—अहस्साध्यक्रतु-समूहत्वस्य शक्यतावच्छेदकस्य ज्योतिष्टोमेऽप्यभ्याससमूहात्मके सत्त्वादहीन-शब्दस्य मुख्यवृत्त्यैवानुवादत्वोपपत्तिरिति प्राप्ते—

अस्तां तावदहीनपदम्। एवकार एव तावत्त्रित्वातिरिक्तसङ्ख्यायाः साधनत्वा-भावमनुवदन् न द्वादशत्वेन विकल्पं सहते। किञ्चैवं प्रकरणादेव त्रित्वद्वादश-त्वयोर्ज्योतिष्टोमसम्बन्धोपपत्तेः साह्नाहीनशब्दयोर्द्वयोरपि वैयर्थ्यप्रसङ्गः। अस्मन्मते तु एकेनाह्ना समाप्यमानत्वेन स्वल्पस्य कर्मणः स्वल्पैव सङ्ख्योचितेति औचित्येन स्तुतिपरतया साह्नशब्दस्य न वैयर्थ्यम्। किञ्च द्वयोः[1] सङ्ख्ययोरेकार्थत्वेन विधौ

---

भावात् कथं प्रत्ययस्वर इति शङ्कते—**न चेति॥ आयन्नादिष्विति॥** अनेना-नुशासनेनोपदेशिवद्भावविधानेनेनादेशस्य प्रत्ययोपदेशकालिकत्वरूपव्यपदेशिवद्भावस्या-वश्यकत्वेन प्रत्ययावयवत्वोपपत्त्या मध्योदात्तत्वसिद्धेरनिवार्यत्वात्। तस्मात् नञ्समासा-सम्भवात् कथमयं पूर्वपक्ष इत्यर्थः। प्रकारान्तरेण पूर्वपक्षमुपपादयति—**प्रकरणा-नुरोधादिति॥** अस्य वाक्यस्य ज्योतिष्टोमप्रकरणस्थत्वेन ज्योतिष्टोम एव बहुदिन-साध्यत्वसादृश्येन गौणवृत्त्या खप्रत्ययान्ताहीनशब्देनोच्यते। तथा च द्वादशोपसद इत्यनेन ज्योतिष्टोम एव द्वादशोपसत्त्वं विधीयत इति त्रित्वद्वादशत्वयोर्विकल्प इति पूर्वपक्ष इत्यर्थः। मुख्यवृत्त्यैव ज्योतिष्टोमोपस्थितिसम्भवात् गौणीवृत्तिरपि नास्तीत्याह—**वस्तुतस्त्विति॥** 'तस्य समूह' इति सूत्रे तच्छब्दस्य क्रतुपरत्वेन क्रतुसमूहरूपार्थे खप्रत्ययविधिपर्यवसानेन क्रतुशब्देनसोमयागाभिधानेन ज्योतिष्टोमेऽपि ग्रहचमसयागानां बहुत्वाच्छक्त्यैव बहुदिनसाध्यसोमयागत्वसत्त्वेन शक्त्यैव ज्योतिष्टोमोपस्थितिसंभवान्न गौणीवृत्तिरित्यर्थः॥ **आस्तां तावदिति॥** अहीनपदेन सोमग्रहणमास्तामित्यर्थः। तथा च नाहीनपदबलेन सिद्धान्तः क्रियते प्रकारान्तरेणेत्यर्थः। तदेवाह—**एवकार एवेति॥** 'तिस्र एव साह्नस्योपसद' इति विशेषणसङ्गतैवकारेणान्य-योगव्यवच्छेदबोधनेन द्वादशत्वादिव्यावृत्तेर्न द्वादशत्वस्य ज्योतिष्टोमे निवेश इत्यर्थः। किं चोभयोस्त्रित्वद्वादशत्वयोर्ज्योतिष्टोमाङ्गत्वोपपत्तेः साह्नाहीनपदवैयर्थ्यम्। सिद्धान्ते तु

---

१. किञ्च द्वयोः इतीदं क्वचित्पुस्तके नास्ति।

शब्दभेदो न युज्यते । अतोऽहीनपदं साह्नादर्थान्तरपरमित्यप्यविवादम् । युक्तं चैतत् । "तस्य समूहः" इत्यनुवृत्तिसहितया "अह्नः खः क्रतौ" इति स्मृत्या वैदिकप्रयोगाच्च अहस्समूहसाध्यक्रतुविशेषत्वस्यैव सत्रादिव्यावृत्तस्य यजतिचोदनाचोदितसुत्यासमुदायात्मकत्वस्यैव योगरूढ्या अहीनपदशक्यतावच्छेदकत्वप्रतीतेर्न द्वादशत्वस्य ज्योतिष्टोमे निवेशसम्भवः । अतश्चाहीनसम्बन्ध्युपसदुद्देशेन द्वादशत्वविधिः । षष्ठीस्थले च परस्परसम्बन्धस्य प्राचीनमते व्युत्पन्नत्वान्न विशिष्टोद्देशे वाक्यभेदः । वस्तुतस्तु—अहीनोद्देशेनातिदेशप्राप्तेः पूर्वप्रवृत्त्या द्वादशोपसत्त्वमेवानेन वाक्येन द्वादशत्वप्राप्तिफलकं "तां चतुर्भिः" इतिवद्विधीयते । द्वादशाहप्रकरणस्थवाक्यान्तरं तु शाखान्तरपरतया वा सत्रमात्रपरतया वा न विरुध्यत इति भाष्यकाराभिप्रायः । वस्तुतस्तु—द्वादशाहप्रकरणस्थवाक्यस्य सत्राहीनोभयसाधारणत्वादेवाहीनेऽपि द्वादशत्वप्राप्त्युपपत्तेरेकवाक्यता-

---

कर्मभेदेन निवेशात् द्वयोः सार्थक्यं, स्तुतिसंभवादित्यर्थः ॥ **द्वयोरिति** ॥ एकार्थत्वेन द्वयोर्विधौ 'व्रीहिभिर्यजेत' 'यवैर्वा यजेत' इतिवत् शब्दभेदेन साह्नस्याहीनस्येति निर्देशो न स्यात् । अतः साह्नाहीनशब्दौ विभिन्नार्थकावेवेत्यर्थः ॥ **युक्तमिति** ॥ 'अह्नः खः क्रतौ' इत्यनेन समूहार्थविहितखप्रत्ययेन क्रतुसमूहे खप्रत्ययविधानेनाहर्गणसाध्यसुत्याकत्वस्याहीनपदशक्यतावच्छेदकतया सत्रव्यावृत्तस्य तस्य योगरूढिलभ्यस्य ज्योतिष्टोमे अभावात् न तत्र द्वादशत्वनिवेश इत्यर्थः । ग्रहचमसादियागाभ्यासानां क्रतुत्वव्यवहारस्य प्रत्येकमभावात् तत्समुदायस्यैव ज्योतिष्टोमत्वेन फलसम्बन्धात् ज्योतिष्टोमेनेत्यनेनैकत्वबोधनात् नाहर्गणसाध्यसुत्याकत्वं ज्योतिष्टोमस्य । किं चाहर्गणसाध्यत्वस्य सुत्यास्वेव निवेशाद्दीक्षणीयादीनां सुत्यात्वाभावेन नाहर्गणसाध्यसुत्यारूपाहीनत्वमिति भावः ॥ **अतश्च अहीनसम्बन्ध्युपसदुद्देशेन द्वादशत्वविधिरिति** ॥ ननु विशिष्टोद्देशे वाक्यभेद इति शङ्कां परिहरति— **षष्ठीस्थल इति** ॥ विधिं विना परस्परान्वयसम्भवेन वाक्यभेदाप्रसक्तेरित्यर्थः । षष्ठीस्थले परस्परान्वयानङ्गीकारपक्षेऽप्याह—**वस्तुतस्त्विति** ॥ अतिदेशेनोपसत्प्राप्तावपि अतिदेशात्पूर्वप्रवृत्त्या द्वादशत्वविशिष्टोपसदामेवाहीनोद्देशेन विधिः । पूर्वप्रवृत्तिफलं च तां चतुर्भिरितिवत् द्वादशत्वप्राप्तिरित्यर्थः । द्वादशाहप्रकरणस्थवाक्यं तु सत्रपरम्, नाहीनपरमित्यर्थः । द्वादशाहप्रकरणस्थवाक्यस्य सत्रमात्रपरत्वं निराकृत्य प्रकृतवाक्यस्यार्थवादत्वमाह—**वस्तुतस्त्विति** ॥ सत्राहीनयोः प्रत्येकं धर्मविध्यभावेन

लाभाय प्रकरणपाठार्थवत्त्वाय चौचित्येन त्रित्वविधेरेवायमर्थवादः। महतः कर्मणो महती सङ्ख्योचिता, न तु प्रकृते इति च स्तुतिः। अतो वाक्येन प्रकरणं बाधित्वा द्वादशत्वस्याहीनसम्बन्धावगतेः न तेन ज्योतिष्टोमे द्वादशत्वम्। मूले तु षष्ठ्या भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधोपन्यास इति द्रष्टव्यम्॥ ८॥

**(९)---द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य॥ १७॥ पक्षेणार्थकृतस्येति चेत्॥ १८॥ न प्रकृतेरेकसंयोगात्॥ १९॥**

ज्योतिष्टोम एव "[1]उपास्मै गायता नरः" इति नित्यां प्रतिपदं विधाय "युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः" इति श्रुतम्। तत्राद्यवाक्ये "द्वयोर्यजमानयोः" इति यदि सप्तमी तदा सा निमित्तत्वपरा। यद्यपि च पृथग्विभक्तिश्रवणम्; तथापि हविरार्त्यधिकरणन्यायेन पाक्षिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यव-

---

एकेनैव धर्मविधिनोभयोर्धर्मप्राप्तेरुक्तवाक्यस्य सत्रमात्रपरत्वाङ्गीकारेणाहीने द्वादशत्वप्राप्त्यर्थमिदं वचनमिति सार्थक्यं न सम्भवतीत्यर्थः। नन्वेवं ज्योतिष्टोमप्रकरणस्थवाक्यस्य वैयर्थ्यं स्यादित्यत आह---**एकवाक्यतालाभायेति**॥ त्रित्वविध्येकवाक्यतालाभायेत्यर्थः। एकवाक्यत्वमेवाह---**औचित्येनेति**॥ ननु वाक्येन प्रकरणबाधे श्रुतिप्रकरणविरोधोदाहरणं भाष्यकारीयं विरुध्येतेत्यत आह---**मूले त्विति**॥ षष्ठ्या भाक्तश्रुतित्वतात्पर्येण तदुपपत्तिरित्यर्थः॥

सूत्रार्थस्तु---**अहीन**शब्दो ज्योतिष्टोमे **गौण** इति॥ ८॥

**द्वित्वबहुत्वयुक्तं वा चोदनात्तस्य**॥ द्वादशाहीनस्येत्यत्र श्रुतेः प्रकरणबाधकत्वेऽपि द्वयोर्यजमानयोरित्यादौ न श्रुतेः प्रकरणबाधकतेत्यधिकाशङ्कयोत्थानात् सङ्गतिः॥ **प्रतिपदमिति**॥ स्तोत्रसाधनीभूतामाद्यामृचमित्यर्थः। करिष्यमाणविचारसौकर्याय वाक्यार्थमाह---**तत्रेति**॥ **आद्यवाक्य इति**॥ द्वयोर्यजमानयोरिति वाक्य इत्यर्थः। सप्तमीपक्षे निमितत्त्वमर्थः। विभक्तिद्वयश्रवणेन निमित्तद्वयं स्यादिति शङ्कां निराकरोति---**यद्यपीत्यादि**॥ **हविरार्त्यधिकरणन्यायेनेति**॥ तत्रार्तिसामान्यस्य

---

१. तै. ब्रा. १-५-९.

सानात् प्रधानभूतनिमित्तत्वानुरोधेन मिळितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोर्निमित्तत्वं प्रतिपाद्यते । यदि तु षष्ठी तदा अधिकारित्वाख्यसम्बन्धानुवादिका सती स्ववैयर्थ्यपरिहारार्थं पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवात् द्वित्वयजमानत्वयोरेकं व्यासज्यवृत्ति निमित्तत्वं प्रतिपादयति । विशेषणविशेष्यभावेऽपि विनिगमनाविरहात् । एवम् "बहुभ्यो यजमानेभ्यः" इति तादर्थ्यचतुर्थ्याप्यधिकारित्वसम्बन्धानुवादिकया उक्तविधनिमित्तत्वे लक्षणा । अतश्च नान्यतराविवक्षाप्रसङ्गः । निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विजातीयत्वान्नानेकोद्देश्यता । प्रकरणाद्वा प्रतिपत्सम्बन्धलाभ इति पक्षद्वयेऽप्यविवादम् ॥

तदिहेमौ मन्त्रौ ज्योतिष्टोम एव निविशेते उत द्विबहुयजमानके कुलायाहीनादाविति चिन्तायां प्रकरणाविरोधात्प्रकृत एव निवेशः । न च तत्र निमित्ताभावः । अख्यातेन "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिना

---

हविःसामान्यस्य च नित्यत्वेन निमित्तत्वासम्भवेन निमित्तत्वप्रतीतिपर्यवसानाय हविर्विशेषणत्वविवक्षया हविरार्तेर्निमित्तत्ववत् प्रकृतेऽपि द्वित्वावच्छिन्नस्य यजमानत्वावच्छिन्नस्य च नित्यत्वेन निमित्तत्वासम्भवेन मिळितयोः द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोरेकं निमित्तत्वं पर्यवस्यतीत्यर्थः ॥ **प्रधानभूतेति** ॥ निमित्तत्वस्यानुष्ठापकत्वरूपप्रयोजकत्वसत्त्वेन प्राधान्यादिति भावः । षष्ठीपक्षेऽपि निमित्तत्वमुपपादयति—**यदि तु षष्ठीति** ॥ **अधिकारित्वाख्येति** ॥ षष्ठ्याः सम्बन्धसामान्यपरत्वादित्यर्थः ॥ **वैयर्थ्येति** ॥ एकस्या एव षष्ठ्याः निमित्तपरत्वे पदान्तरवैयर्थ्यापत्तेरित्यर्थः ॥ **पदद्वयेऽपीति** ॥ द्विशब्दयजमानशब्दाभ्यां वाक्यलक्षणयैकमेव निमित्तत्वं प्रतिपाद्यते, विशेषणविशेष्यभावे विनिगमनाविरहेण लाघवेनैकनिमित्तत्वप्रतीत्यैव पर्यवसानसम्भवादित्यर्थः । एवं 'बहुभ्य' इति तादर्थ्यचतुर्थ्या अधिकारित्वसम्बन्धानुवादेन निमित्तत्वे विनिगमनाविरहेण पदद्वयलक्षणाङ्गीकारान्नान्यतरवैयर्थ्यमित्यर्थः । निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेनानेकोद्देश्यप्रसक्तावपि विजातीयानेकोद्देश्यकत्वात् न वाक्यभेद इति पर्यवसितार्थः । **प्रकरणाद्वा** स्तोत्रावान्तरप्रकरणादित्यर्थः ॥ **कुलायेति** ॥ 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति वाक्यविहितयाग इत्यर्थः ॥ **प्रकरणाविरोधादिति** ॥ ज्योतिष्टोमप्रकरणस्थत्वेनास्य वाक्यस्य तत्रैव निवेशो वाक्यप्रकरणयोरविरोधसंभवादित्यर्थः । ननु 'वसन्ते वसन्ते ज्योतिषा यजेते'ति वाक्ये आख्यातोपात्तस्य कर्त्रेकत्वस्य विवक्षितत्वेन कथं प्रकरणे

उपादेयकर्तृविशेषणत्वेनोक्तस्यैकत्वस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य वक्ष्यमाणत्वाद्यद्येको न शक्नुयात्तदा द्विबहुयजमानकत्वप्राप्तेः प्रतिपद्विधानसम्भवात्। अथवा—यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि सम्भवादाद्यवाक्ये तावत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः। द्वितीयवाक्येऽपि पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेः व्यत्ययानुशासनेन पुल्लिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः। नित्या तु प्रतिपत् पत्न्येकत्व इति प्राप्ते—

नित्यत्वेऽपि ज्योतिष्टोमस्य नैकत्वे यथाशक्तिन्यायविषयता, उत्पत्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्यान्तरङ्गत्वेनाशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेनास्यैवानुग्राह्यत्वात्। किञ्च, यत् कृतिसाध्यत्वेनानुष्ठेयतया प्रसक्तं तत्रैव यथाशक्त्युपबन्धः; न त्वननुष्ठेये कालादौ। अतश्च

---

निवेश इत्याशंक्य समाधत्ते—**नित्यत्वेनेति**॥ ज्योतिष्टोमस्य नित्यत्वेन नित्ये यथाशक्त्यनुष्ठानस्य षष्ठे वक्ष्यमाणत्वेन एकस्यानुष्ठानाशक्तौ द्वाभ्यां बहुभिश्च कर्तुं शक्यत्वेन द्विबहुयजमानकत्वसम्भवादित्यर्थः। यथाशक्तिप्रयोगस्यागतिकविषयत्वादाह—**अथवेति**॥ यजमानशब्दस्य यागकर्तृवाचित्वेन पत्न्या अपि यागकर्तृत्वेन स्त्रीलिङ्गोपपत्तेश्च पत्नीद्वित्वे अयं मन्त्र इत्यर्थः। द्वितीयवाक्ये व्यत्ययेन पुल्लिङ्गनिर्देशेन स्त्रीकर्तृकत्वमादायोपपत्तेरपि प्रकृतावेव निवेश इत्याह—**द्वितीयवाक्य इति**॥ पाशमन्त्रे प्रकृत्यर्थानुसारेण वचनाविवक्षावत् प्रकृतेऽपि प्रकरणानुसारेण लिङ्गाविवक्षया बहुपत्नीकप्रकृतौ निवेश इत्यर्थः। एकवचनस्योपपत्तिमाह—**नित्या त्विति**॥ 'उपास्मै गायता नर' इति प्रतिपदित्यर्थः। यथाशक्तिन्यायेन सोमयागस्यानेककर्तृत्वमुक्तं निरस्यति—**नित्यत्वेऽपीति**॥ उत्पत्तिप्रयोगविनियोगविधिव्याख्यातोपात्तैकत्वस्य समानाभिधानश्रुत्या भावनान्वितस्यान्तरङ्गत्वेन तत्परित्यागायोगेन तस्य यथाशक्तिन्यायेन परित्यागासम्भवेन न प्रकृतौ द्विबहुयजमानकत्वसम्भव इत्यर्थः। क्व तर्हि यथाशक्तिन्याय इत्यत आह—**दक्षिणेति**॥ द्वादशशतदक्षिणादानाशक्तौ एकविंशतिसप्तत्रिगवादिदानेनाप्यधिकारसम्भवेन तत्रैव यथाशक्तिन्याय इत्यर्थः। अशक्यत्वादपि नैकत्वस्य यथाशक्तिन्यायविषयतेत्याह—**किं चेति**॥ यत्पुरुषकृतिसाध्यं तत्रैव तन्न्यायः। एकत्वं तु न तथेति कालादिवत् न तन्न्यायविषयतेत्यर्थः।

तद्वदेवास्यापि न तन्न्यायविषयतेति न प्रकृते यागे द्वित्वबहुत्वे । न च यजमानशब्दः पत्नीपरः । पुंस्येव प्रचुरप्रयोगेण शक्त्यवगमेन लक्षणायां प्रमाणाभावात् । यजमानेभ्य इति पुल्लिङ्गस्य 'प्रास्मै' इत्यस्य मेष्यामिव निषिद्धत्वेनागतिकव्यत्ययानुशासनाङ्गीकारानुपपत्तेश्च । अतश्च वाक्येन प्रकरणबाधात् यत्र "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" "एको द्वौ बहवो वा यजेरन्" इत्याहत्यैव कुलायाहीनादिषु द्वित्वबहुत्वविधानं तत्रैवास्योत्कर्षः । न चात्र तत्क्रतूपस्थापकाभावः । प्रतिपत्सम्बन्धेनैव सामान्यतः क्रतुसम्बन्धेऽवगते निमित्तबलेन तद्विशेषोपस्थितौ बाधकाभावात् ॥ ९ ॥

**(१०)—जाघनी चैकदेशत्वात् ॥ २० ॥ चोदना वापूर्वत्वात् ॥ २१ ॥ एकदेश इति चेत् ॥ २२ ॥ न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २३ ॥**

---

पत्न्यभिप्रायेण द्वित्वादिकं निराकरोति—**न चेति** । यजमानशब्दस्य पुरुष एव शक्त्यङ्गीकारेण लक्षणया पत्न्यभिधाने प्रमाणाभावादित्यर्थः । तद्द्वितीयवाक्ये पत्नीपरत्वं यजमानशब्दस्य निरस्यति—**यजमानेभ्य इति** ॥ पुंस्त्वस्य पत्न्यामप्रयोग इत्याह—**पुल्लिङ्गस्येति** ॥ 'प्रास्मा अग्निं भरत' इत्यग्निगुप्रैषस्य मेष्यामप्रवृत्तिवत् यजमानेभ्य इति पुल्लिङ्गस्य पत्न्यामप्रवृत्तेर्न तदभिप्रायेण प्रकृतौ निवेश इत्यर्थः । सुप्तिङुपग्रह इत्यादि व्यत्ययानुशासनाङ्गीकारस्यागतिकविषयतया प्रकृते तदङ्गीकारानुपपत्तेर्न प्रकृतौ निवेश इत्यर्थः । तस्माद्यत्र वचनेनैव द्विबहुयजमानकत्वं विहितं तत्रोत्कर्ष इत्युपसंहरति—**अतश्चेति** ॥ **न चेति** ॥ तत्क्रतूपस्थापकाभावात् तत्र कथं निवेश इत्यर्थः । प्रतिपदोऽव्यभिचरितक्रतुसम्बन्धेन प्रकृतौ निवेशासम्भवे विकृतावुत्कर्षस्य युक्तत्वादित्यर्थः ॥

सूत्रार्थस्तु—द्वित्वबहुत्वयुक्तं प्रतिपद्विधानमुत्कृष्यते, तस्य द्वित्वस्य बहुत्वस्य च प्रकृतावचोदनादिति ॥ ९ ॥

**जाघनी चैकदेशत्वात्** ॥ द्वित्वबहुत्ववत् जाघन्या अप्युत्कर्ष इति

---

१. तै. ब्रा. ३-६-६

दर्शपूर्णमासयोः पत्नीसंयाजावान्तरप्रकरणे "जाघन्या पत्नीः संयाजयन्ति" इति श्रुतम्। तत्र किमनेन वाक्येन अग्नीषोमीयपश्वनुनिष्पन्नजघन्युद्देशेन पत्नीसंयाजा विधीयन्ते ; ततश्चैतस्य विधानस्य प्रकरणादुत्कर्षः, उत पत्नीसंयाजोद्देशेन जाघनी द्रव्यत्वेन विधीयत इति चिन्तायां जाघनीशब्दस्योत्तरार्धादिशब्दवदेकदेशद्रव्यवाचित्वेन जाघन्याः परप्रयुक्तत्वावगमात् प्रयोजनवत्त्वावगमेन प्रयाजशेषवत् उद्देश्यत्वावगतेः तृतीयाया द्वितीयार्थलक्षणामङ्गीकृत्य पत्नीसंयाजा एव तदुद्देशेन विधीयन्ते। एवं द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम्, इतरथा तृतीयविधिप्रकारापत्तेः। एवं च वाक्येन प्रकरणबाधात् पत्नीसयाजानां पश्वङ्गत्वमात्रप्रसक्तावपि "आज्येन पत्नीः संयाजयन्ति" इति वचनस्य निर्विषयत्वापत्तेः प्रकरणबाधायोगत्, तेन चारादुपकारकतया दर्शपूर्णमासाङ्गत्वावगमेऽप्यनेन वचनेन संनिपत्योपकारकतयाग्नीषोमीयपशुयागाङ्गतया विधिर्नानुपपन्नः। न च जाघन्याः परप्रयुक्तपश्वनुनिष्पन्नत्वस्य लोकेऽपि सम्भवादव्यभिचरितक्रतुसम्बन्धा-

प्रत्यवस्थानात् सङ्गतिः॥ अग्नीषोमीयेति॥ तथा च प्रतिपत्तिः पत्नीसंयाजा उत अर्थकर्मैव जाघनीद्रव्यकाः पत्नीसंयाजा इति संशयः फलितः॥ उत्तरार्धादिशब्दवदिति॥ 'उत्तरार्धात्स्विष्टकृतं यजति' इत्यत्रोत्तरार्धशब्दस्य ससम्बन्धिकत्वेन पूर्वकृताग्नेयादिपुरोडाशसम्बन्ध्युत्तरार्धप्रतीत्या स्विष्टकृद्यागस्तत्संस्कारार्थः, एवमिहापि अग्नीषोमीययागप्रयुक्तपश्वनुनिष्पन्नत्वात् जाघन्याः संस्कार्यत्वावगमात् जाघनीसंस्कारार्थाः पत्नीसंयाजाः। ततश्च यत्र जाघनी पशुयागानुनिष्पन्ना तत्रोत्कर्ष इत्यर्थः॥ द्वितीयेति॥ अन्योद्देशेन धात्वर्थविधानादित्यर्थः। तृतीयेति॥ धात्वर्थोद्देशेनान्यकरणकभावनाविधानादित्यर्थः। नन्वेवं प्रकरणबाधेन अग्नीषोमीयाङ्गत्वाङ्गीकारे 'आज्येन पत्नीः संयाजयन्ति' इति वचनस्य निर्विषयत्वापत्तिः। पत्नीसंयाजानां जाघनीसंस्कारकत्वेनाज्यद्रव्यस्य एकपत्नीसंयाजस्यैवाप्रसिद्धेरित्यत आह— एवं चेति॥ आरादुपकारकतयेति॥ तथा च नात्यन्तं बाधः, आज्येनेति वाक्येनारादुपकारकतया दर्शाद्यङ्गत्वेन पत्नीसंयाजविधानेन तद्वचनस्य निर्विषयत्वाभावात्। किन्तु जाघनावाक्ये प्रकरणबाधेन अग्नीषोमीयाङ्गतया प्रतिपत्तित्वेन जाघनीविधिरित्यर्थः। ननु प्रकरणबाधे कथमग्नीषोमीययागस्य सम्बन्धः, तत्र प्रमाणाभावात्। न चाव्यभिचरितक्रतुसम्बन्धात् यागीयत्वोपस्थितिरिति वाच्यम्; लोकेऽपि भक्षणादिप्रयुक्तपश्वनुनिष्पन्न-

१. तै. सं. २-६-१०

भावेन कथं यागीयत्वोपस्थितिः । अग्नीषोमीयप्रकरणे श्रुतेन "जाघन्या पत्नीः संयाजयन्ति" इति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूतजाघन्युद्देशेन पत्नीसंयाजविधायकेन यागसम्बन्धोपस्थितौ "अंशुं गृह्णाति"[1] इतिवदनारभ्याधीतेऽप्यस्मिन् क्रतुसम्बन्धावगमोपपत्तेः ॥

यत्तु—कैश्चिदतिदेशादेव पत्नीसंयाजानां पशुयागसम्बन्धावगमात् प्राकरणिकवाक्यं तद्धर्मककर्मान्तरविधायकं पूर्वपक्ष इत्युक्तम्—तत् अतिदेशेन पत्नीसंयाजानामारादुपकारकत्वविधया पशुयागसम्बन्धावगमेऽपि तात्पर्यग्राहकाभावे अनारभ्याधीतवाक्ये जाघन्यास्तदीयत्वोपस्थितौ प्रमाणाभावात् अतिदेशेन सन्निधाने प्रकरणान्तरासम्भवेन कर्मान्तरत्वानुपपत्तेश्चोपेक्षितम् ॥ तस्माद्वाक्येन प्रकरणं बाधित्वा इदं विधानमग्नीषोमीये उत्कृष्यत इति प्राप्ते—

जाघनीशब्दस्य पश्ववयववाचित्वेऽपि उत्तराधादिशब्दवत् ससम्बन्धिकत्वा-

---

जाघनीसद्भावेनाव्यभिचरितक्रतुसम्बन्धाभावादिति शङ्कते—न चेति ॥ अग्नीषोमीयेति ॥ तथा चाग्नीषोमीयप्रकरणे 'जाघन्या पत्नीः संयाजयन्ती'ति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूतजाघन्युद्देशेन पत्नीसंयाजविधानेन तत्समानार्थकस्याप्यस्य वाक्यस्यानारभ्यन्यायेनापूर्वसाधनत्वस्य अंश्वदाभ्यन्यायेनोपस्थितिसम्भवादित्यर्थः । प्रकारान्तरेण कैश्चिदुक्तं पूर्वपक्षं दूषयितुमुपन्यस्यति—यत्त्विति ॥ अतिदेशादिति ॥ अग्नीषोमीयपशोर्दर्शविकृतित्वेन पत्नीसंयाजातिदेशात् प्राप्तिसत्त्वादित्यर्थः ॥ प्राकरणिकवाक्यमिति ॥ अग्नीषोमीयप्रकरणश्रुतमित्यर्थः ॥ तद्धर्मकेति ॥ दार्शपूर्णमासिकपत्नीसंयाजधर्मककर्मान्तरविधायकमित्यर्थः ॥ तदिति ॥ उपेक्षितमित्यग्रेणान्वयः ॥ आरादुपकारकत्वविधयेति ॥ दर्शे आज्यद्रव्यकपत्नीसंयाजानामारादुपकारकत्वात् पशावपि तथैव प्राप्तेरित्यर्थः ॥ अनारभ्येति ॥ 'जाघन्या पत्नीः संयाजयन्ती'ति वाक्यस्थजाघन्याः पशुयागीयपरत्वे प्रमाणाभावादित्यर्थः ॥ अतिदेशेनेति ॥ कर्मान्तरत्वेति ॥ प्रकरणान्तरात् कर्मान्तरत्वस्य सन्निध्यभाव एव प्रवृत्तेरतिदेशेन संनिधिसत्त्वे तदप्रवृत्तिरित्यर्थः । पूर्वपक्षमुपसंहरति—तस्मादिति ॥ जाघनीशब्दस्येति ॥ शृङ्गादिशब्दवत् पश्ववयववाची जाघनीशब्दः, न तूत्तराधादिशब्दवत् ससम्बन्धिकः । ततश्च लोकसिद्धजाघनीमादायैव व्रीह्यादिवत् पत्नीसंयाजसम्भवेन नोत्कर्ष इत्यर्थः ॥

---

१. तै. सं. ३-३-४

भावात् लोकसिद्धहट्टस्थजाघन्या एवाज्यवत्पत्नीसंयाजोद्देशेन विधिसम्भवे तृतीयाया लक्षणाङ्गीकरणे प्रमाणाभावः । अतिदेशात्प्राप्तानां पत्नीसंयाजानामारादुपकारकत्वबाधेन पशुप्रकरणस्थवाक्येनैव सन्निपत्योपकारकत्वलाभे दर्शपूर्णमासप्रकरणस्थवाक्यवैयर्थ्यापत्तिश्च । अतः पत्नीसंयाजोद्देशेनैव जाघनीविधिः । न च प्राप्तकर्मानुवादेन पत्नीनामपि विधाने देवतात्वेन प्राप्त्युद्भावनेऽपि च विशिष्टोद्देशे वाक्यभेदापत्तिरिति वाच्यम्; अवान्तरप्रकरणादेव कर्मविशेषोद्देशसम्भवेनावाक्यभेदात् । अतो नास्य प्रकरणादुत्कर्षः । अग्नीषोमीयप्रकरणस्थवाक्यं तु विकल्पेन प्राप्ताया नियमार्थमिति वक्ष्यते । न चैवं तत्र हट्टस्थजाघन्या एव नियमसम्भवेन पश्वनुनिष्पन्नाया ग्रहणे प्रमाणाभावः । प्रतिपत्त्यन्तराभावेनोपस्थितायास्तस्यास्त्यागे प्रमाणाभावादिति तत्रैव वक्ष्यमाणत्वात् ॥ १० ॥

---

**हट्टस्थेति** ॥ आपणस्थेत्यर्थः ॥ **आज्यवदिति** ॥ आज्येन पत्नीः संयाजयन्तीति विधिना आज्यवत् जाघनीवाक्येन जाघन्या अपि विकल्पेन विधिसम्भवात् न प्रकरणबाधेनोत्कर्ष इत्यर्थः ॥ **तृतीयाया इति** ॥ जाघन्येति तृतीयया कर्मत्वलक्षणया प्रतिपत्तित्वाङ्गीकारस्यायुक्तत्वादित्यर्थः । प्रयाजशेषेणेत्यादौ शेषपदानुरोधेन प्रतिपत्त्यपेक्षणेन लक्षणाङ्गीकरणमिति वैषम्यमिति भावः । ननु सामवायिकत्वलाभार्थमुत्कर्षोऽस्त्विति शङ्कां परिहरति—**अतिदेशादिति** ॥ दर्शादावारादुपकारकत्वेन तथैव पशौ प्राप्तानां पत्नीसंयाजानां पशुप्रकरणस्थवाक्येन सन्निपत्त्योपकारकत्वेन विधिसंभवे दर्शप्रकरणपठितवाक्यस्य वैयर्थ्यापत्तेरित्यर्थः । ननु प्राप्तकर्मानुवादेन जाघन्याः पत्नीनामपि विधाने वाक्यभेदः । न च पत्नीनां देवतात्वेन प्राप्तत्वान्न विधेयत्वमिति वाच्यम्; तथापि पत्नीविशिष्टयागोद्देशेन विधानेन विशिष्टोद्देशस्यापरिहार्यत्वादित्याशङ्क्य समाधत्ते—**न चेत्यादिना** ॥ **अवान्तरेति** ॥ यागमात्रोद्देशेन पत्नीविशिष्टयागानुवादेन वा विधानाभावेनादोषादित्यर्थः ॥ **अग्नीषोमीयेति** ॥ प्रकृतौ जाघन्याज्ययोर्विकल्पेन विहितयोः तथैवाग्नीषोमीयातिदेशेन प्राप्तौ पशुप्रकरणस्थवाक्यस्य नियमविधित्वस्य वक्ष्यमाणत्वादित्यर्थः । ननु पशावपि हट्टस्थजाघन्या एव प्रकृतिवत् ग्रहणं स्यादिति शङ्कते—**न चेति** ॥ पशौ जाघन्याः प्रतिपत्त्यन्तराविधानेन तस्याः प्रतिपत्त्यपेक्षायामनुनिष्पन्नाया एव तस्या ग्रहणसम्भवाद्दर्शादावनुनिष्पन्नजाघन्याभावेन लोकसिद्धग्रहणमित्यर्थः ॥

सूत्रार्थस्तु—जाघनी च उत्कृष्येत **एकदेशत्वादिति** ॥ १० ॥

(११)—संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २४ ॥ उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५ ॥ कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥ २६ ॥ क्रतुतो वार्थवादानुपपत्तेः स्यात् ॥ २७ ॥ संस्थासु कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥ उक्थ्यादिषु वार्थस्य विद्यमानत्वात् ॥ २९ ॥ अविशेषात् स्तुतिर्व्यर्थेति चेत् ॥ ३० ॥ स्यादनित्यत्वात् ॥ ३१ ॥

ज्योतिष्टोमे अधिषवणफलके प्रकृत्य "न[१] सन्तृणत्ति" इत्यनेनासन्तर्दनं विधाय "अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै" इत्यनेन सन्तर्दनं विहितम्। सन्तर्दनं नाम द्वयोः फलकयोः संश्लेषप्रदेशतनूकरणेनैकोपर्यपरस्य संश्लेषः। तदेवं सन्तर्दनं प्रकरण एव निविशते, उत अग्निष्टोमादन्यत्रोत्कृष्यत इति चिन्तायां—प्रकरणानुग्रहादनुत्कर्षः। न च वाक्यविरोधः। ज्योतिष्टोमस्यापीष्ट्याद्यपेक्षया दीर्घत्वात्सोमद्रव्यकत्वाच्च दीर्घसोमत्वोपपत्तेः। अतश्च व्रीहियवादिवत् सन्तर्दनासन्तर्दनयो-

सन्तर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ प्रकरणस्य श्रुत्या सह विरोधाविरोधौ विचार्य प्रकरणस्य वाक्येन सह विरोधाविरोधौ विचार्यत इत्यवसरसङ्गतिः। जाघनीवत् संतर्दनमपि प्रकृतावेव निविशत इत्युत्थानात् अवान्तरसङ्गतिः॥ अधिषवणेति ॥ 'हनू वा एते यज्ञस्य यदधिषवणे इति' वचनप्राप्ताधिषवणफलके इत्यर्थः। अत्राधिषवणफलके नाम सोमाभिषवाधारभूते औदुम्बरफलके चर्मान्तर्हिते सार्धप्रादेशविस्तारे प्रादेशत्रयायते फलके इति यावत् ॥ न संन्तृणत्तीति ॥ प्रान्ततनूकरणेनैकोपर्यपरसंश्लेषणं न कुर्यात्, अपि तु परस्परासंश्लिष्टे कर्तव्ये इति फलितार्थः ॥ संतृद्य इति ॥ परस्परसंश्लिष्टे कुर्यादित्यर्थः ॥ प्रकरणानुग्रहादिति ॥ ज्योतिष्टोमे निवेशे प्रकरणवाक्ययोरविरोधसम्भवादित्यर्थः। ननु 'दीर्घसोमे' इति वाक्येनाधिकसोमप्रयोग एव सन्तर्दनविधानेन ज्योतिष्टोमस्य दीर्घसोमत्वाभावात् कथं तत्र निवेश इति शङ्कते—न चेति ॥ इष्ट्याद्यपेक्षयेति ॥ दीर्घसोमशब्दस्य दीर्घत्वसोमद्रव्यत्वविशिष्टयागपरत्वेन इष्ट्याद्यपेक्षया सोमस्य बहुदिनसाध्यत्वरूपदीर्घत्वसत्त्वेन

१. तै. सं. ६-२-११

विकल्पः । यस्त्वत्र सूत्रे क्रयणवदिति क्रयदृष्टान्तो विकल्पे दत्तः स द्वादशे "दशभिः क्रीणाति" इति वचनेन समुच्चयस्य वक्ष्यमाणत्वात् वचनाभावं कृत्वा बोध्यः । अस्तु वा इष्ट्यादेरिहानुपादानात् तदपेक्षया दीर्घत्वस्य च नित्यत्वेन दीर्घसोमपदवैयर्थ्यापत्तेरष्टदोषदुष्टविकल्पस्य चान्याय्यत्वात् दीर्घस्य यजमानस्य सोमो दीर्घसोम इत्येवं षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते सन्तर्दनविधानम् । यदि तु निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्यैव न्याय्यत्वात् यजमानदैर्घ्येण च फलकविदारणाप्रसक्तेस्तद्वारकत्वेन

---

सोमद्रव्यकत्वेन च दीर्घसोमशब्दोपपत्तिरित्यर्थः ॥ **विकल्प इति** ॥ सन्तर्दनासन्तर्दनयोर्द्वयोरपि वचनप्राप्तत्वात् पशावाज्यभागतदभावयोरिव विकल्प इत्यर्थः । नन्वत्र क्रयणवदिति सूत्रे क्रयदृष्टान्तोक्तिर्विकल्पे न युक्ता, क्रयसमुच्चयसिद्धान्तकरणादिति शङ्कां कृत्वाचिन्तापरत्वेन सङ्गमयति—**वचनाभावं कृत्वेति** ॥ 'दशभिः क्रीणाति' इति वाक्याभावं कृत्वेत्यर्थः । पक्षान्तरमाह— **अस्तु वेति** ॥ **इष्ट्यादेरिति** ॥ इष्ट्यादेरुपस्थितौ सत्यां तदपेक्षया दीर्घत्वं ज्ञातुं शक्यते, इह च तदनुपादानेन तदपेक्षया दीर्घत्वं न शब्दार्थ इत्यर्थः ॥ **तदपेक्षयेति** ॥ इष्ट्यपेक्षया दीर्घत्वस्य सोमद्रव्यकत्वस्य च नित्यत्वेन निमित्तत्वं न संभवतीत्यर्थः । विकल्पाङ्गीकारे दोषान्तरमाह--**अष्टदोषेति** ॥ सन्तर्दनासन्तर्दनयोर्विकल्पाङ्गीकारे दोषाष्टकापत्तेरित्यर्थः । तद्यथा—सन्तर्दनप्रयोगे असन्तर्दनशास्त्रस्य प्राप्तप्रामाण्यपरित्यागः, अप्राप्ताप्रामाण्यस्वीकारश्चेति दोषद्वयम्, तथा असन्तर्दनप्रयोगे असन्तर्दनशास्त्रस्य परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्याग इति दोषद्वयमिति चत्वारो दोषाः । तथा सन्तर्दनशास्त्रस्य प्राप्तप्रामाण्यपरित्यागः, अप्राप्ताप्रामाण्यस्वीकार इति दोषद्वयम् । पुनः सन्तर्दनप्रयोगे सन्तर्दनशास्त्रस्य परित्यक्तप्रामाण्यस्वीकारः, स्वीकृताप्रामाण्यपरित्याग इति पर्यायद्वयेन एकस्मिन् प्रमाणे चत्वारश्चत्वारो दोषा इति अष्टदोषा बोध्याः । वस्तुतस्तु चतुर्णामेव दोषाणां पुनरावृत्त्या अष्टत्वसंपत्तेश्चत्वार एव दोषाः । अन्यथा पुनरावृत्त्या दोषाधिक्यापत्तेरष्टत्वनियमेऽप्रमाणादिति द्रष्टव्यम् । प्रकारान्तरेणापि पूर्वपक्षमाह—**दीर्घस्येति** ॥ अत्युन्नतस्येत्यर्थः । तत्कर्तृकसोमयागे निमित्ते सन्तर्दनमित्यर्थः । तथा सत्यपि प्रकरणानुग्रह इति भावः ॥ **निषादेति** ॥ 'निषादस्थपतिं याजयेत्' इत्यत्र निषादानां स्थपतिरिति षष्ठीतत्पुरुषे निषादस्य निषादसम्बन्धिनि लक्षणापत्त्या निषादश्चासौ स्थपतिरिति सिद्धान्तस्य षष्ठे करिष्यमाणत्वेन तन्न्यायेन

सन्तर्दनस्तुतेरसम्भवेन धृत्या इत्यर्थवादानुपपत्तेः दीर्घश्चासौ सोमश्चेति कर्मधारय एवाङ्गीक्रियते । तदापि ज्योतिष्टोम एवोक्थ्यादिसंस्थान्तरयुक्तं प्रदानविवृद्ध्या प्रदेयसोमविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेर्वाक्यप्रकरणयोरविरोधान्निवेशः । न चैवं प्रदानविवृद्धेस्तोयादिना सम्पादनम् । सोमद्रव्यकस्य यागस्य विना वचनं द्रव्यान्तरसंसृष्टेन सोमेन करणायोगात् । न च त्रिपर्वदशमुष्टित्वरूप-सोमपरिमाणबाधः । स्थूलदीर्घपर्वसोमग्रहणेन तद्बाधाभावात् । अत एव सोमपदेन यागलक्षणायां प्रमाणाभावात् सोमदीर्घपर्वत्वमेव सन्तर्दने निमित्तमित्यपि शक्यं वक्तुम् ।

वस्तुतस्तु—त्रिपर्वदशमुष्टिपरिमितसोमग्रहणोत्तरं "अवशिष्टानंशूनुपसमूहति" इत्युपसमूहनविधानात्तत्र चार्थवादे "यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते

---

प्रकृतेऽपि दीर्घश्चासौ सोमश्चेति कर्मधारय एव युक्त इत्यर्थः ॥ **अर्थवादानुपपत्तेरिति** ॥ सन्तर्दनं सोमाधिक्ये कार्यम्, अन्यथा अधिकाभिषवेण फलकविदारणापत्तेः; अतो दीर्घसोमे संतर्दनेन दृढीकरणं संपाद्य अभिषवः कार्य इत्यर्थप्रतीत्या यजमानदैर्ध्येण फलकविदारणा-प्रसक्तेरर्थवादान्वयासम्भवात् न तत्पुरुष इत्यर्थः ॥ **कर्मधारय एवेति** ॥ ननु विवृद्धसोमक एव दीर्घसोमसम्भवात् प्रकरणबाधोऽस्त्येवेत्यत आह—**तदापीति** ॥ **ज्योतिष्टोम एवेति** ॥ चतुःसंस्थाकज्योतिष्टोमस्य फलवत्त्वेन प्रकरणसद्भावादग्निष्टोमापेक्षया अतिरात्रसंस्थाकज्योतिष्टोमस्य प्रदानवृद्ध्यनुसारेण प्रदेयवृद्धेरावश्यकतया तत्र संतर्दन-निवेशेन प्रकरणबाधो नास्तीत्यर्थः । उदकादिना प्रदेयविवृद्धिं शङ्कते—**न चैवमिति** ॥ **करणायोगादिति** ॥ 'सोमेन यजेत' इति वाक्येन सोमस्यैव यागसाधनत्वावगतेर्न द्रव्यान्तरमिश्रितस्य ग्रहणं युक्तमित्यर्थः । ननु ज्योतिष्टोमे त्रिपर्वदशमुष्टिपरिमितसोमस्यैव यागसाधनत्वविधानेन प्रदेयविवृद्धिरतिरात्रादौ न संभवतीत्याशङ्क्य समाधत्ते—**न चेत्यादिना** ॥ **स्थूलेति** ॥ स्थूलदीर्घपर्वसोमग्रहणेन प्रदेयविवृद्ध्युपपत्तेः न प्रकरणबाध इत्यर्थः ॥ **अत एवेति** ॥ कर्मधारयाङ्गीकारादेवेत्यर्थः । दीर्घसोमशब्देन सोमविवृद्धेरेव शब्दार्थत्वेन निमित्तत्वसंभवेन न बहुव्रीह्याश्रयणेनान्यपदार्थयागलक्षणया यागस्य निमित्तत्वमित्यर्थः । स्थूलदीर्घपर्वसोमग्रहणं विनापि वाक्यशेषवशादेव प्रकरणे सोमविवृद्धिरस्तीत्याह—**वस्तुतस्त्विति** ॥ **उपसमूहेति** ॥ परिमितसोमेऽधिकं प्रक्षिपति इत्यर्थः । तदर्थवादेनस्पष्टं प्रतीयत इत्याह—**यद्वै तावानेवेति** ॥ यदि दश-

यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति" इति पूर्वोक्तमाननिन्दयोत्तरादोहनवद्यावदपेक्षितपरत्वप्रतीतेः कपिञ्जलाधिकरणन्यायस्याप्यप्रवृत्त्या परिमाणाभावात्प्रदेयविवृद्धिस्सुलभैव । न चैवमपि अग्निष्टोमसंस्थाया अङ्गत्वादन्यासां काम्यानां तिसृणां संस्थानां च विकृतित्वेन स्वतः प्रकरणाभावाज्ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोध इति वाच्यम् ; काम्यसंस्थासु ग्रहणविवृद्ध्या आश्रयभूतज्योतिष्टोमाभ्यासविवृद्धेरावश्यकत्वात् सस्थानां चतसृणामपि स्वतः प्रकरणाभावे च ज्योतिष्टोमस्य सर्वत्रानुस्यूतत्वात् काम्यसंस्थाकज्योतिष्टोमप्रयोगे सन्तर्दनविधानेन प्रकरणानुग्रहोपपत्तेः । अत एवाग्निष्टोमसंस्थाकज्योतिष्टोमप्रयोगे असन्तर्दनम्, प्रदानविवृद्ध्यभावान्न विकल्पोऽपि । अत एव च दीर्घत्वस्योनुयोगिनः काम्यसंस्थाकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंस्थाकज्योतिष्टोमस्य प्रकरणादेव

---

मुष्टिपरिमित एव सोमः स्यात् तदा यजमानपर्याप्त एव स्यात्, नेतरेषां स्यात् । अतः शास्त्रविहितहोत्रध्वर्य्वादिभक्षणसिद्ध्यर्थम् अंशूनधिकानुपसमूहति इत्यर्थवादानुसारेणाधिकसोमप्रतीतेः प्रकृतावेव सोमविवृद्धिरस्तीत्यर्थः ॥ **उत्तरादोहनवदिति** ॥ सायं दोहनप्रकरणे तिसृणां गवां दोहनं विधाय 'तूष्णीमुत्तरा दोहयति' इति वचनेनापेक्षितदोहने संख्यानियमाभाववत् प्रकृतेऽप्यपेक्षिताधिकसोमग्रहणोपपत्तिरित्यर्थः । ननु कपिञ्जलाधिकरणन्यायेन त्रयाणामेवांशूनामुपसमूहनं स्यात्, नैतावता प्रदेयविवृद्धिरित्यत आह——**कपिञ्जलेति** ॥ तत्राधिकालम्भे हिंसाशास्त्रप्रवृत्तिवदिहापेक्षितांशूनामुपसमूहने बाधकाभावादुक्तवाक्यशेषवशाच्चाधिकग्रहणोपपत्तेरित्यर्थः । नन्वग्निष्टोमसंस्थाकज्योतिष्टोमस्यैव फलसम्बन्धेन उक्थ्यषोडश्यतिरात्रसंस्थानां विकृतित्वेन प्रकरणाभावादग्निष्टोमे च प्रदानविवृद्ध्यभावेन प्रदेयविवृद्ध्यभावात् कथं वाक्यप्रकरणाविरोध इति शङ्कते——**न चेति** ॥ **ज्योतिष्टोमे चेति** ॥ अग्निष्टोमे चेत्यर्थः ॥ **काम्यसंस्थासु ग्रहणेति** ॥ अयमर्थः । यद्यप्यग्निष्टोमस्य प्रकृतित्वात्तस्यैव प्रकरणं युक्तम्, तथापि तस्य नाग्निष्टोमत्वेनेतिकर्तव्यताकाङ्क्षा, फलोत्पादकतावच्छेदकरूपेणैवाकाङ्क्षायाः शास्त्रसिद्धत्वात् । प्रकृते चाग्निष्टोमस्य 'ज्योतिष्टोमेन स्वर्गकामो यजेत इति' वाक्येन ज्योतिष्टोमत्वस्यैव फलोत्पादकतावच्छेदकत्वात् । ततश्च तेन रूपेणाङ्गाकाङ्क्षानुसारेणान्तरालिकप्रकृतिविकारभावमतन्त्रीकृत्य तेन रूपेणाङ्गग्रहणस्य काम्यसंस्थास्वपि समानत्वेनास्त्येव प्रकरणाविरोध इति । तत्र सन्तर्दनासन्तर्दनयोर्व्यवस्थामाह——**अत एवेति** ॥ ज्योतिष्टोमप्रकरणविहितयोः सन्तर्दना-

लाभादतिलाघवम् । न चैवमितरसंस्थाकज्योतिष्टोमस्यापि प्रकरणेऽङ्गीक्रियमाणे "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वा अथान्येन यजते गर्तपत्यमेव तज्जीयत" इत्यत्रापि एतच्छब्देनेतरसंस्थाकज्योतिष्टोमस्य ग्रहणापत्तेः अग्निष्टोमसंस्थाकस्यैव प्रकरणाद्ग्रहणं वक्ष्यमाणं विरुध्येतेति वाच्यम्, ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात् । अग्निष्टोमसंस्थाया अङ्गत्वेनेतराङ्गवत्प्रकरणविच्छेदकत्वानुपपत्तेश्च । एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्योक्तावपि अन्यशब्देन तद्विकृतिमात्रवाचकेन संस्थानामप्युक्तत्वात्तासामपि ज्योतिष्टोमोत्तरकालविधिप्रतीतेरर्थादग्निष्टोमसंस्थाकस्यैव प्रथमकरणोपपत्तेः । अतो वाक्यप्रकरणयोरविरोधात्प्रकरण एव सन्तर्दनस्य निवेश इति प्राप्ते—

भाष्यकारेण तावदिष्टापत्त्यैव सिद्धान्तितम् । पूर्वपक्षश्चाद्यप्रकारद्वयेनैव कृतः ।

वार्तिककारेण तु विकृतिमात्रे अग्निष्टोमातिरिक्तविवृद्धसोमके[1] निवेश

---

सन्तर्दनयोः ज्योतिष्टोम एव निवेशः । तत्राग्निष्टोमे प्रदानविवृद्ध्यभावादसन्तर्दनं षोडश्यादिषु तत्सत्वात्सन्तर्दनमिति द्वयोरपि तत्रैव निवेशात् प्रकरणानुग्रह इत्यर्थः । द्वयोर्व्यवस्थितत्वान्न विकल्पदोषोऽपीत्याह—**न विकल्पोऽपीति** ॥ प्रकरणादेवोभयोर्लाभाल्लाघवमप्यस्मिन् पक्ष इत्याह—**अत एवेति** ॥ उभयोः प्रकरणाङ्गीकारादित्यर्थः । नन्वतिरात्रादिसंस्थाकज्योतिष्टोमस्यापि प्रकरणाङ्गीकारे 'एष वाव' इति वाक्येन प्रकृतज्योतिष्टोमग्रहणप्रसङ्गेन 'य एतेनानिष्ट्वा' इत्यत्रापि सर्वसंस्थाकज्योतिष्टोमग्रहणात् अग्निष्टोममात्रस्यैतच्छब्देन ग्रहणमिति पाञ्चमिकसिद्धान्तविरोध इति शङ्कते—**न चेति** ॥ **गर्तपत्यमेव तज्जीयत इति** ॥ गर्तपतनं प्राप्नोतीत्यर्थः । गर्तपत्यमेव तद्भवतीत्यपि पाठः । छन्दोगब्राह्मणे जीयत इति पाठात् ॥ **ज्योतिष्टोमत्वावच्छेदेनेति** ॥ 'ज्योतिष्टोमेन स्वर्गकाम' इति फलवाक्येन तद्रूपेण फलसम्बन्धेन तेनैव रूपेण प्रकरणसद्भावादित्यर्थः । अग्निष्टोमादिसंस्थानां यागाङ्गत्वेन स्वाङ्गस्य स्वव्यवधायकत्वाभावादित्यर्थः । एतेनेत्येतच्छब्देन ज्योतिष्टोमोपस्थितावपि अन्येन यजते इत्यत्रान्यशब्दस्य ज्योतिष्टोमविकृतिमात्रपरामर्शादितरसंस्थाकज्योतिष्टोमपरत्वमावश्यकमिति न तदधिकरणविरोध इत्यर्थः ॥ **भाष्यकारेणेति** ॥ उक्तपूर्वपक्षयोः इष्टापत्तिरिति भाष्यकारसिद्धान्त इत्यर्थः ॥ **वार्तिकेति** ॥ विवृद्धसोमकविकृतिमात्र इत्यर्थः ॥ **अग्निष्टोमातिरिक्त इति** ॥ न च पूर्वपक्षादविशेष इति वाच्यम् ; पूर्वपक्षे वाक्यप्रकरणाविरोधाय

---

१. विवृद्धस्तोमक इति पाठान्तरम् ।

इत्युक्तम्। तस्यायमाशयः। दीर्घत्वं तावद्ग्रहणविवृद्धिकृतमिति भवतोऽप्यविवादम्। विवृद्धग्रहणानि च संस्थाङ्गानि, वचनात्; न तु ज्योतिष्टोमाङ्गानि। अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसम्बन्धाभावाद्विकृतिमात्रपरत्वमिति। न चोक्तग्रहणानां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्सम्बन्धसत्त्वात्तस्य दीर्घसोमत्वोपपत्तिः। सर्वतोमुखादौ पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाकेऽपि दिगन्तरे दीर्घसोमत्वस्य सत्त्वादग्निष्टोमसंस्थाकेऽपि सन्तर्दनापत्तेः यदङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यत्प्रयुक्तविवृद्धप्रदेयकत्वमेव वा यत्र तत्र तदपूर्वसाधनीभूतफलकसंस्कारकतया सन्तर्दनविध्यवगमादुक्तविवृद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात्तदङ्गत्वेन सन्तर्दनविध्यनुपपत्तेर्वाक्येन प्रकरणं बाधित्वा उक्तविधसर्वविकृतावेव निवेशः। न तु संस्थास्वेव, तासां विकृतित्वेन प्रकरणाभावादिति। अत एव सन्तृद्यादिति धातोः सकर्मकत्वादनुषक्तद्वितीयान्तपदेन फलकस्यैव संस्कार्यत्वावगमाद्दीर्घसोमत्वस्योद्देश्यत्वतद्विशेषणत्वयोरसम्भवेन निमित्तत्वमेव। अत एव नायं बहुव्रीहिः। न वा सोमपदेन यागलक्षणया

---

ज्योतिष्टोम एव निवेशात्, सिद्धान्ते प्रकरणबाधेनाग्निष्टोमातिरिक्तातिरात्रादिषु द्विरात्रादिषु च निवेशेन विशेषसद्भावादिति द्रष्टव्यम्॥ **विवृद्धिकृतमिति**॥ सोमवृद्धिकृतमित्यर्थः॥ **ग्रहणानि**—सोमग्रहणानि, संस्थाङ्गान्येव न तु ज्योतिष्टोमादियागाङ्गानि। तथा च दीर्घसोमस्य ग्रहणविवृद्धिप्रयुक्तस्य संस्थाङ्गभूतस्य यागसम्बन्धाप्रसक्तेरग्निष्टोमातिरिक्तसर्वविकृतिमात्रे निवेश इति वार्तिककाराशय इत्यर्थः। ननु ग्रहणानां संस्थाद्वारा क्रत्वङ्गत्वाद्दीर्घसोमत्वं क्रतूनामस्तीति शङ्कते—**न चेति**॥ **सर्वतोमुखेति**॥ एवं सति सर्वतोमुखे दक्षिणादिद्वारेषु दीर्घसोमके संतर्दनावश्यकत्वेनाग्निष्टोमसंस्थाकपूर्वद्वारेऽपि सन्तर्दनापत्तेरित्यर्थः। फलितार्थमाह—**यदङ्गेति**॥ प्रकृते च संस्थाङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धसोमकत्वं यागे वर्तते इति तदपूर्वसाधनीभूतफलकसंस्कारत्वेन सन्तर्दनविधानात् तादृशदीर्घसोमत्वस्य ग्रहणविवृद्धिस्थलेषु सत्त्वादग्निष्टोमातिरिक्तविकृतिषु तादृशोद्देश्यतावच्छेदकवत्वात् वाक्येन प्रकरणं बाधित्वा सर्वविकृतिषु निवेश इत्यर्थः। लाघवादाह—**यत्प्रयुक्तेति**॥ संस्थाङ्गग्रहणप्रयुक्तेत्यर्थः। सोमविवृद्धेर्निमित्तत्वमुपपादयति—**अत एवेति**॥ संतृद्यादित्यत्र कर्माकाङ्क्षया फलकपदानुषङ्गेण फलकस्यैव संस्कार्यत्वेनोद्देश्यतया दीर्घसोमत्वस्योद्देश्यत्वाभावेन निमित्तत्वमेव सप्तम्या प्रतिपाद्यत इत्यर्थः॥ **अत एवेति**॥ दीर्घसोमस्य निमित्तत्वादित्यर्थः॥ **नायं बहुव्रीहिरिति**॥ अन्यपदार्थलक्षणापत्तेरित्यर्थः।

स्वराक्रान्तोऽपि तत्पुरुषः । अपि तु तेन लतामेवोक्त्वा कर्मधारयः । समासत्वाच्च न निमित्तेऽपि विशिष्टोद्देशे वाक्यभेदः ॥ ११ ॥

**(१२)—सङ्ख्यायुक्तं क्रतोः प्रकरणात् स्यात् ॥ ३२ ॥**
**नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३ ॥**

अनारभ्याधीतः प्रवर्ग्यः "यत्प्रवर्ग्यं प्रवृणक्ति" इति श्रुतः । तस्य च "पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति" इति ज्योतिष्टोमाङ्गत्वेन विनियोगः । अव्यभिचरितक्रतुसम्बन्धसहकृतद्विरुक्तत्वन्यायेन तदुपस्थितेः । न चोपसदङ्गत्वमेव किं न स्यादिति वाच्यम्, उपसत्पदस्य पुरस्तात्कालप्रतियोगित्वेन स्वार्थोपस्थापकस्योद्देश्यसमर्पकत्वाभावात् । उपस्थितत्वात्तद्वाचकपदान्तरकल्पनयोद्देश्य-

---

नापि दीर्घस्य सोम इति तत्पुरुषः, पूर्वमेव निरस्तत्वादित्यर्थः । अपि तु दीर्घश्चासौ सोमश्चेति कर्मधारय इत्यर्थः । क्वचित्तत्पुरुष इति पाठः । [तदाकर्मधारयस्य] तत्पुरुषत्वनिर्देशः ॥

सूत्रार्थस्तु—**सन्तर्दनं प्रकृतावेव स्यात्** । न चासन्तर्दनविरोधः, **क्रयणवद्विकल्पसम्भवेनानर्थलोपात्** प्रयोजनलोपाभावादिति ॥ ११ ॥

**संख्यायुक्तं क्रतोः प्रकरणात्स्यात्** ॥ प्रकरणस्य वाक्यविरोधाविरोधचिन्तात्मकत्वात् पेटिकासङ्गतिः । सन्तर्दनस्य वाक्यविरोधात् प्रकृतक्रत्वनन्वयेऽपि प्रवर्ग्यनिषेधस्य तदभावात् वाक्यप्रकरणाभ्यां प्रकृतक्रत्वर्थतेत्युत्थानात् अवान्तरसङ्गतिः । प्रवर्ग्य इति कर्मनाम, प्रवृज्यते तप्यते घर्मोऽस्मिन्निति व्युत्पत्तेः । नन्वनारभ्याधीतानां प्रकृतिगामित्वन्यायेन ज्योतिष्टोमाङ्गत्वस्वीकारो न युक्तः, पर्णतादिवत् दर्शपूर्णमासगामित्वसम्भवादित्यत आह—**तस्य चेति** ॥ पुरस्तादुपसदामिति वचनेनोपसत्पूर्वकालविधानेन उपसदां चाव्यभिचरितक्रतुसम्बन्धत्वेन तत्संयुक्तप्रवर्ग्यस्यानारभ्याधीतस्य ज्योतिष्टोम एव निवेशोपपत्तेरित्यर्थः । ननु वैमृधन्यायेनोपसदङ्गत्वमेव प्रवर्ग्यस्य, न ज्योतिष्टोमाङ्गत्वमिति शङ्कते—**न चेति** ॥ **उपसत्पदस्येति** ॥ पुरस्ताच्छब्दस्य प्रतियोगिसाकाङ्क्षत्वेन उपसदामेव प्रतियोगित्वेनान्वयस्य वक्तव्यत्वेनान्योपसर्जनतया श्रुतस्योद्देश्यपरत्वासंभवादित्यर्थः । ननु वैमृधवत्

---

१. तै. आ. ८-१. २. तै. आ. ८-६.

त्वाङ्गीकारे तु उपसदां फलवत्त्वज्ञानार्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वात् लाघवेन तदर्थत्वोपपत्तेः। कौषीतकिब्राह्मणे प्रकरण एव प्रवर्ग्याम्नानाच्च। तत्र च "न प्रथमयज्ञे प्रवृञ्ज्यात्" इति श्रुतम्। प्रथमयज्ञपदेन सर्वसंस्थः सर्वावस्थश्च ज्योतिष्टोमोऽभिधीयते, उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायाम्—

प्रथमयज्ञशब्दो ज्योतिष्टोमनामैव, "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" इति सामानाधिकरण्यात्, तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तसत्त्वाच्च। यद्यपि चान्यसंस्थानामन्यपदेनाभिधानात् तासु ज्योतिष्टोमोत्तरकालत्वविधानान्न सर्वसंस्थाकज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वम्। तथापि ज्योतिष्टोमत्वसामानाधिकरण्येन तावत्तदस्तीति प्रवृत्तिनिमित्ताविघातः। अतो वाक्यात्प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैवायं प्रतिषेधः। पर्युदासो वा ज्योतिष्टोमभिन्ने प्रवृणक्तीति। अन्यथा विकल्पापत्तेः। यत्तु—"अग्निष्टोमे

---

पदान्तरकल्पनयोद्देश्यत्वमुपसदामङ्गीक्रियतामित्यत आह—**पदान्तरेति** ॥ **फलवत्त्वज्ञानार्थमिति** ॥ उद्देश्यस्य फलवत्त्वज्ञानं विना अङ्गाकाङ्क्षानुपपत्तेः तदर्थं ज्योतिष्टोमोपस्थितेरावश्यकतया फलवज्ज्योतिष्टोमाङ्गोपसदङ्गत्वं वक्तव्यम्। ततश्च लाघवाज्ज्योतिष्टोमाङ्गत्वं युक्तमित्यर्थः। ज्योतिष्टोमप्रकरणपाठादपि ज्योतिष्टोमाङ्गत्वमित्याह—**कौषीतकीति** ॥ **सर्वावस्थ इति** ॥ प्रथमद्वितीयादिप्रयोगावस्थ इत्यर्थः ॥ **ज्योतिष्टोमनामेति** ॥ सामानाधिकरण्यादि हि नामत्वे हेतुः। प्रवृत्तिनिमित्तसत्त्वादपि ज्योतिष्टोमनामत्वमित्याह—**तस्य प्रथम इति** ॥ प्रथमानुष्ठेयो यज्ञः प्रथमयज्ञ इति व्युत्पत्त्या प्रथमप्रयुज्यमानत्वस्य प्रथमयज्ञशब्दप्रवृत्तिनिमित्तत्वेन तस्य ज्योतिष्टोम एव सत्त्वादित्यर्थः। ननु सर्वसंस्थाकज्योतिष्टोमस्य न प्रथमयज्ञत्वम्, अन्यसंस्थाकज्योतिष्टोमानामन्यशब्देन ग्रहणेन तेषामपि ज्योतिष्टोमोत्तरत्वस्यावश्यकत्वेनाग्निष्टोमसंस्थाकज्योतिष्टोमस्यैव प्रथमं प्रयुज्यमानत्वरूपप्रथमयज्ञत्वसम्भवेन तत्रैव निषेधप्रसक्तेर्युक्तत्वादित्याशङ्कते—**यद्यपीति** ॥ **सामानाधिकरण्येनेति** ॥ तथा च ज्योतिष्टोमत्वावच्छेदेन प्रवृत्तिनिमित्ताभावेऽपि तत्सामानाधिकरण्येन तत्सत्त्वादग्निहोत्रादिशब्दवत् नामत्वोपपत्तिरित्यर्थः ॥ **पर्युदास इति** ॥ तत्पक्षे वाक्यार्थमाह—**ज्योतिष्टोमभिन्ने इति** ॥ प्रतिषेधपक्षे दोषमाह—**अन्यथेति** ॥ **विकल्पापत्तेरिति** ॥

---

१. तै. आ. ८-६.

प्रवृणक्ति" इति वचनं तत्पर्युदस्तप्रतिप्रसवार्थम्, तदपि च "कामं तु योऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यात्" इत्यनेनोपसंह्रियते। तेनानूचानस्य श्रोत्रियस्याग्निष्टोमसंस्थाकज्योतिष्टोमे नित्यं करणम्, अन्यज्योतिष्टोमे नित्यमकरणम्, विकृतिषु च नित्यं करणमिति प्राप्ते—

प्रत्येकशक्त्यैवार्थबोधोपपत्तावतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य चाप्रवृत्तप्रवर्तनविषयवाचित्वादाद्यप्रयोगपरत्वावगतेः यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वं प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वाङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते । स चाग्निष्टोमसंस्थाकज्योतिष्टोमस्य,

---

ननु 'अग्निष्टोमे प्रवृणक्ति' इति वाक्येनाग्निष्टोमत्वावच्छेदेन प्रवर्ग्यविधानेन पर्युदासानुपपत्तिरित्यत आह—**यत्त्विति** ॥ **प्रतिप्रसवार्थमिति** ॥ 'पुरस्तादुपसदाम्' इति वाक्येन प्राप्तस्य 'न प्रथमयज्ञे' इत्यनेन पर्युदस्तस्य 'अग्निष्टोमे प्रवृणक्ति' इति वाक्येन शास्त्रप्राप्तस्यात्यन्तानिषेधायोगेन 'न तौ पशौ करोति' इतिवत् विकल्पापत्तेरित्यर्थः । प्रतिप्रसवकरणे तद्वाक्यं सार्थकमित्यर्थः । ननु प्रतिप्रसवकरणे अग्निष्टोमे नित्यं प्रवर्ग्यापत्तेः पर्युदासानर्थक्यमित्यत आह—**तदपीति** ॥ अनूचानो वेदाध्यापककुलोत्पन्नः स्वयमपि वेदाध्ययनशीलः । श्रोत्रियो वेदार्थज्ञानपूर्वकानुष्ठाता । तथा च अग्निष्टोमे प्रवृणक्तीति वाक्यमनूचानवाक्यैकवाक्यतया तत्परमित्यर्थः । फलितमाह—**तेनेति** ॥ **अन्यज्योतिष्टोम इति** ॥ अनूचानादिभिन्नकर्तृकज्योतिष्टोम इत्यर्थः ॥ **विकृतिष्विति** ॥ प्रथमयज्ञत्वाभावेन निषेधाद्यप्रवृत्तेरिति भावः ॥ **प्रत्येकशक्त्यैवेति** ॥ अवयवशक्त्यैव प्रयोगप्रतीत्योरुपपत्तौ अतिरिक्तरूढेर्योगरूढेर्वा कल्पने प्रमाणाभावादित्यर्थः । अवयवार्थमेवाह—**अप्रवृत्तप्रवर्तनेति** ॥ तद्विषयककृतिध्वंसासमानकालीनतद्विषयककृतिविषयवाचित्वादित्यर्थः । तथा च तादृशकृतिविषययज्ञस्यैव प्रथमयज्ञशब्दार्थतया यज्ञशब्दस्य लक्षणया प्रयोगपरतया प्रथमकृतिविषययज्ञे प्रतिषेधः पर्युदासो वा पर्यवस्यतीत्यर्थः । नन्वेवं द्विरात्रादिप्रथमप्रयोगस्यापि प्रथमप्रयोगत्वसम्भवात् तत्रापि निषेधापत्तिरित्यत आह—**स चेति** ॥ अग्निष्टोमप्रथमप्रयोग एव प्रथमयज्ञशब्दार्थः, पाञ्चमिकन्यायादित्यर्थः । तथा च न द्विरात्रादावुक्तदोष इति भावः । नन्वेवमतिरात्रप्रथमाहारे तस्य ज्योतिष्टोमत्वेन प्रथमं प्रयुज्यमानत्वरूपयोगसत्त्वेन यज्ञत्वेन च तत्रापि निषेधापत्तिरित्या-

पाञ्चमिकन्यायात् । "प्रथमं यजमानोऽतिरात्रेण यजेत" इति वचनादतिरात्रसंस्थाकस्य च । अत उभयत्राप्यनेन वचनेन प्रवर्ग्यस्य प्रतिषेधः पर्युदासो वा । न तु विकृत्यन्तरे । तत्रोपदेशातिदेशाभ्यां तदप्राप्तेः । न च ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वाद्विकृतावपि तद्द्वितीयादिप्रयोगापेक्षया प्रयोगवृत्तिप्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति वाच्यम्, प्राथम्यस्य निरूपकापेक्षायां द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पानात् । "एष वाव प्रथमो यज्ञो यज्ञानाम्" इति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात् । अत एव प्रथमप्रयोगविषयोऽपि ज्योतिष्टोम एव बोध्यः । तथा च प्रथमयज्ञशब्दो वाक्यशेषाद्वैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत्प्रयोगविषयज्योतिष्टोममेवाभिधत्ते । अन्यथा स्वस्वद्वितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने "आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशाः सत्रमासीरन्" इत्यादौ सत्रे यज्ञमात्रोत्तरकालतापत्तेः । अत एवोक्तद्विविधज्योतिष्टोमप्रथमप्रयोग एव प्रवर्ग्यप्रतिषेधः ॥

---

शङ्कामिष्टापत्त्या परिहरति—**प्रथमं यजमान इति** ॥ **उभयत्रापीति** ॥ अग्निष्टोमप्रथमप्रयोगेऽतिरात्रप्रथमप्रयोगे चेत्यर्थः ॥ **न त्विति** ॥ विकृत्यन्तरे षोडशिविश्वजिदादावित्यर्थः । नन्वेवं विकृतावपि द्वितीयादिप्रयोगापेक्षया प्रथमप्रयोगस्य प्राथम्यसत्त्वात् अग्निष्टोमवदेव प्रथमयज्ञत्वसत्वेन निषेधप्रवृत्तिरनिवार्येति शङ्कते—**न चेति** ॥ **प्राथम्यस्य निरूपकापेक्षायामिति** ॥ किंनिरूपितं प्राथम्यमिति निरूपकापेक्षायां द्वितीयादिप्रयोगनिरूपितं प्राथम्यं न विवक्षितम्, किं तु विकृतिमात्रनिरूपितम्, एष वा व प्रथम इति वचनेन विकृतिमात्रनिरूपितप्राथम्यस्यैव बोधितत्वात् । तथा च विकृतिषु स्वकीयद्वितीयादिप्रयोगापेक्षया स्वप्रथमप्रयोगमादाय नातिप्रसङ्ग इत्यर्थः । तथा च सर्वयज्ञापेक्षया प्रथमं प्रयुज्यमानज्योतिष्टोम एव प्रथमयज्ञशब्देन विवक्षित इति तत्रैव प्रतिषेध इति पर्यवसितार्थः ॥ **अन्यथेति** ॥ स्वस्वद्वितीयप्रयोगनिरूपितप्राथम्यस्य प्रथमपदप्रवृत्तिनिमित्तत्वे ॥ **इष्टप्रथमयज्ञा इति** ॥ तत्राधिकारनिरूपणप्रकरणे इष्टप्रथमयज्ञ इति वचनेन प्रथमयज्ञानुष्ठानोत्तरं सत्राधिकार उक्तः, द्वितीयादिप्रयोगापेक्षया प्राथम्यविवक्षायां सर्वक्रत्वपेक्षयोत्तरत्वं सत्रस्य स्यात्, न त्वेतदिष्टम्, कृतसोमयागानामेव सत्राधिकारित्वस्य तद्वचनप्रतिपाद्यत्वादित्यर्थः ॥ **उक्तद्विविधेति** ॥ अग्निष्टोमातिरात्ररूपद्विविधप्रथमयज्ञ इत्यर्थः ।

वस्तुतस्तु—नायं प्रतिषेधः ; तथात्वे "न तौ पशौ करोति" इतिवत् अतिरात्रप्रथमाहारेऽपि विकल्पापत्तेः । न च क्रियायाः स्वरूपेणोद्देश्यसम्बन्धित्वेन वा निषेध एव विकल्पो यथोक्तस्थले यत्र तु कारकनिषेधः यथा—"रात्रौ श्राद्धं न कुर्वीत" इत्यादौ तत्र निषेधस्य कारकमात्रविषयत्वेन क्रियाविषयत्वाभावात् क्रियाविषयविधिविकल्पापादकत्वानुपपत्तिः । प्रकृते च प्रथमयज्ञशब्दस्य नोद्देश्यपरत्वम्, अपि तु "मन्द्रं प्रातः सवने" इतिवदधिकरणकारकपरत्वम् । अतश्च न विकल्पापत्तिरिति केषाञ्चिदुक्तं युक्तमिति वाच्यम्, कारकस्यापि प्रयोगाधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्येन प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेरावश्यकत्वात् । अत एवाक्षेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्यैच्छिकत्वेन रागप्राप्त्या वैधत्वाभावान्न तन्निषेधस्य विकल्पापादकत्वम् । प्रकृते तु प्रथमप्रयोगाधिकरणत्वं नैच्छिकम्, प्रतिप्रधानं गुणान्वयस्य वैधत्वात् । अतस्तन्निषेधोऽपि विकल्पापादक एव । वस्तुतस्तु—प्रथमप्रयोगस्योद्देश्यत्वमेव शास्त्रदीपिकायामुक्तमिति न किञ्चिदेतत् । अतो "नानूयाजेषु" इतिवत् पर्युदास एवायमनारभ्यवाक्यशेष उक्तविधप्रथमप्रयोगभिन्ने प्रवृञ्ज्यादिति ॥

---

प्रतिषेधपक्षं निराकृत्य पर्युदासपक्षं समर्थयितुं प्रतिषेधपक्षं दूषयति—**वस्तुतस्त्विति** ॥ **विकल्पापत्तेरिति** ॥ शास्त्रप्राप्तनिषेधे हि शास्त्रस्यात्यन्तबाधापत्तेः 'न तौ पशौ करोति' इत्यत्र पशावाज्यभागयोर्विधिप्रतिषेधाभ्यां विकल्प इति दशमे वक्ष्यते, तन्न्यायेनात्रापि विकल्पापत्तेरित्यर्थः । ननु क्रियानिषेध एव विकल्पः, न तु कारकनिषेधे 'न तौ पशौ' इत्यादौ क्रियाया एव निषेधात् । 'रात्रौ श्राद्धं न कुर्यात्' इत्यादौ क्रियानिषेधाभावेन रात्रिरूपाधिकरणकारकनिषेधे विकल्पाभावात् । प्रकृते प्रथमयज्ञ इत्यस्याधिकरणपरतया कारकनिषेध एवेति न विकल्पप्रसक्तिरिति शङ्कते—**न चेति** ॥ **कारकस्यापीति** ॥ शास्त्रप्राप्तस्य निषेधायोगेन विकल्पापत्तेर्वाङ्मात्रेण-परिहर्तुमशक्यत्वादित्यर्थः । नन्वेवं रात्रिश्राद्धेऽपि कारकनिषेधस्य विकल्पापदकत्वं स्यादित्यत आह—**अत एवेति** ॥ **आक्षेपेणेति** ॥ श्राद्धस्य कालाकाङ्क्षायां अक्षेपेण यत्किञ्चित्कालप्राप्तौ रात्रिग्रहणस्य रागप्राप्तत्वेन विहितत्वाभावान्न विकल्प इत्यर्थः ॥ **प्रकृते त्विति** ॥ प्रथमप्रयोगाधिकरणत्वस्य विधिप्राप्तत्वेन तत्प्रतिषेधस्य विकल्पापादकत्वादित्यर्थः ॥ **वस्तुतस्त्विति** ॥ प्रथमप्रयोगस्योद्देश्यत्वस्य प्राचीनैरुक्तत्वात् तद्विषय [तदुद्देश्यक?] एव निषेधः । स चाग्निष्टोमस्यै[प्रवर्ग्यस्यै?]वेति तत्र विकल्पः प्राप्त एवेति न निषेधोऽयं, अपि तु पर्युदास इत्याह—**नानूयाजेष्वितिवदिति** ॥ नन्वग्निष्टोमे

ततश्च प्रापकप्रमाणाभावात्प्रथमप्रयोगे अकरणप्रसक्तौ "अग्निष्टोमे प्रवृणक्ति" इति वचनं वस्तुतोऽत्यन्ताप्राप्तप्रापकमपि प्रतिप्रसवफलकं सदग्निष्टोमसंस्थाकत्वे निमित्ते प्रथमप्रयोगेऽपि नित्यं प्रवर्ग्यविधानार्थम्। न तु विकल्पेन। विकल्पे प्रमाणाभावात्। अस्य च नान्यविषयता सामान्यविधित एव सर्वत्र प्राप्तत्वादिति प्रथमप्रयोगविषयतैव। अनेन च काममित्यनूचानवाक्यस्योपसंहारः। तेनाग्निष्टोमसंस्थाकप्रयोगे अनूचानस्य नित्यं करणम्। तथा श्रोत्रियस्यापि। अनूचानो वेदाध्यापकः। तेन क्षत्रियवैश्ययोर्निवृत्तिः। श्रोत्रियः प्रकर्षेण वेदतदर्थज्ञः। कामपदेन प्रकर्षाभिधानात्। तस्य इत्येकपदेनोभयोः कर्त्रोर्विधानाच्च न विधेयानेकत्वम्। तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणम्॥

यत्तु—वार्तिके अनूचानादेर्विकल्पोऽन्येषां तु नित्यमकरणमित्युक्तं तत् प्रौढिमात्रम्। अत एव पार्थसारथिना अनूचानादेः नित्यमेव प्रयोग इत्युक्तम्। यदि तु तदेव समर्थनीयमित्याग्रहस्तदा कामपदेन विकल्पाभिधानादग्निष्टोम-

---

प्रवृणक्तीति वाक्यं व्यर्थं स्यादित्यत आह—**अग्निष्टोम इति**॥ **नाप्राप्तप्रापकमिति**॥ प्रवर्ग्यस्य पुरस्तादुपसदामित्यनेनैव प्राप्तत्वादित्यर्थः॥ **प्रतिप्रसवेति**॥ 'न प्रथमयज्ञ' इति निषिद्धस्य प्रतिप्रसवफलकमित्यर्थः। प्रतिप्रसवस्य फलमाह—**अग्निष्टोमेति**॥ अग्निष्टोमसंस्थाकत्वे निमित्ते प्रथमप्रयोगेऽपि प्रवर्ग्यप्राप्त्यर्थमित्यर्थः॥ **प्रमाणाभावादिति**॥ विधिप्रतिषेधयोरेकविषयत्वाभावादित्यर्थः॥ **अस्य चेति**॥ अग्निष्टोमे प्रवृणक्तीति वाक्यस्येत्यर्थः॥ **नान्यवियषता**॥ नान्यप्रयोजनकत्वमित्यर्थः। **सामान्यविधित एव** पुरस्तादुपसदामित्यनेनैव प्राप्तत्वादित्यर्थः॥ **अनेन चेति**॥ अग्निष्टोमे प्रवृणक्तीति वाक्येन चेत्यर्थः। 'कामं तु योऽनूचानः स्यात्' इनेनोपसंहारः, द्वयोरेकविषयत्वमित्यर्थः। तेनानूचानश्रोत्रियाग्निष्टोमप्रयोगे नित्यं प्रवर्ग्यानुष्ठानम्॥ **प्रकर्षाभिधानादिति**॥ केवलवेदाध्ययनापेक्षया वेदार्थज्ञानस्य प्रकृष्टत्वादित्यर्थः। नन्वनूचानश्रोत्रिययोरुभयोः प्राप्तप्रवर्ग्योद्देशेन कर्तृत्वेन विधौ वाक्यभेद इत्यत आह—**तस्येत्येकपदेनेति**॥ **तदन्येषामिति**॥ अनूचानश्रोत्रियभिन्नानामित्यर्थः॥ **वार्तिक इति**॥ अनूचानश्रोत्रिययोर्विकल्पः अन्येषां नित्यमकरणं प्रौढिवाद एव, उक्तरीत्या व्यवस्थोपपत्तेस्तथा विकल्पाङ्गीकारस्यानुचितत्वादित्यर्थः। उक्तव्यवस्थायां पार्थसारथिसंमतिमाह—**अत एवेति**॥ **तदेवेति**॥ वार्तिकोक्तमेवेत्यर्थः। कामशब्दस्य लोके

---

१. तै. आ. ६-६. २. "नाप्राप्तप्रापकम्" इति व्याख्यातृसंमतः पाठः।

वाक्यस्य च तेनोपसंहारादनूचनादेर्विकल्प इत्येवं समर्थनीयम् ॥

सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाप्रयोगः । विकृतौ तु प्रथमप्रयोगेऽपि नित्यं करणमिति स्थितम् ॥ १२ ॥

## (१३)—पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥३४॥

दर्शपूर्णमासप्रकरणे "पूषा प्रपिष्टभागोऽदन्तको हि सः"[1] इति श्रुतम् । तत्र किं दर्शपूर्णमासयोरेवाङ्गत्वेन कर्मान्तरविधिः उत पूषदेवत्ययागे पेषणमात्रविधिरिति चिन्तायाम्—न तावद्भागशब्दलक्षितयागोद्देशेन पेषणविधिः, एकप्रसरताभङ्गापत्तेः । पूषपदेन विशेषणे वाक्यभेदाच्च । क्तप्रत्ययार्थद्रव्योपसर्जनस्य

---

विकल्पपरत्वदर्शनेनाग्निष्टोमे प्रवृणक्तीति वाक्योपसंहारेण विकल्पकथनमुपपन्नमित्यर्थः । अतिरात्रे विशेषमाह—**अतिरात्रप्रथमाहार इति** ॥ तत्र न प्रथमयज्ञे प्रवृञ्ज्यादिति निषेधेन प्रतिप्रसवाभावात् 'अग्निष्टोमे प्रवृणक्ति' इति वाक्यस्याग्निष्टोमविषयत्वेन अतिरात्रे तदभावात् नित्यमकरणमित्यर्थः । विकृतौ द्विरात्रादौ ॥

सूत्रार्थस्तु एकत्वसंख्यावाचिप्रथमशब्दयुक्तप्रवर्ग्यप्रतिषेधः **क्रतोरङ्गं स्यात् प्रकरणा**दिति ॥ १२ ॥

**पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ** ॥ प्रकरणाबाधेन वाक्योपपत्तेः पूर्ववदिह न वाक्येन प्रकरणबाध इत्युत्थानात् सङ्गतिः ॥ **एकप्रसरतेति** ॥ भागशब्दलक्षितयागोद्देशेन पेषणविधावेकार्थीभावलक्षणसामर्थ्याभावेन 'वषट्कर्तुः प्रथमभक्षः' इत्यादाविव समासानुपपत्तेर्न भागोद्देशेन पेषणविधिसंभव इत्यर्थः ॥ **पूषपदेनेति** ॥ भागशब्देन यागलक्षणायामपि यागसामान्योद्देशेन विध्यसंभवात् विशेषाकाङ्क्षायां विशेषपर्यवसानार्थमुपस्थितपूष्णो विशेषणत्वमङ्गीकृत्य पूषविशिष्टयागोद्देशेन विधिर्निर्वाच्यः । तथा च विशिष्टोद्देशापत्तिरित्यर्थः ॥ **क्तप्रत्ययार्थेति** ॥ पिष्टपदस्य कर्मार्थकक्तप्रत्ययान्तत्वेन पेषणकर्मीभूतद्रव्यपरत्वप्रतीतेः पेषणस्य द्रव्यविशेषणतयोपस्थितत्वेन भागशब्दार्थयागान्वयो न युक्तः । एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतया अन्वयस्य व्युत्पत्तिविरुद्धत्वात् । अन्यथा घटे जातित्वमित्यादिप्रयोगापत्तेरित्यर्थः ॥

---

१. तै. सं. २-६-८.

पेषणस्य यागान्वयानुपपत्तेश्च । अत एव न पूषपदमेव शक्यार्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम् । पूष्णोऽव्यभिचरितक्रतुसम्बन्धाभावेन क्रतूपस्थितौ प्रमाणाभावाच्च । अतो गुणात् द्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायमिति प्राप्ते—

प्रपिष्टभागपदेन तावत् भागो भजनीयं सेव्यमस्येति व्युत्पत्त्या सेवनासम्भवेऽपि सम्बन्धमात्रं देवस्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णोः प्रतीयते । तच्च यागं विना अनुपपन्नमिति यागमनुमापयतीत्येतावदुभयोरविवादम् । तत्र च विशेषणमात्रविधिसम्भवे विशिष्टविध्यादिकल्पनस्यान्याय्यत्वात् प्रमाणाभावेन नापूर्वयागान्तरानुमितिरित्यपि प्रथमतोऽवगतमेव । अतश्चानुमीयमाने यागे अनुमापकपूषसम्बन्धेन प्रसिद्धपूषदेवत्ययागत्वोपस्थितिरपि सुलभैव । अतश्च यागविशेषानुमितेरेव तात्पर्यग्राहकत्वात् पूषपदं विजातीयापूर्वसाधनीभूतपूषदेवतापरम् ; तदुद्देशेनैव च स्वजन्ययागप्रदेयचरुप्रकृतित्वसम्बन्धेन प्रपिष्टद्रव्यकत्वं प्रपिष्टभागसमासार्थो विधीयते । सम्भवति च द्रव्योद्देशेन देवताविधिवद्देवतोद्देशे-

---

अत एवेति ॥ गुणविध्यसम्भवादेवेत्यर्थः । पूषपदेन शक्त्या पूषप्रतिपादने तदुद्देशेन वा लक्षणया पूषदेवत्ययागप्रतिपादनेन तदुद्देशेन वा पेषणविधिरपि न युक्तः, अन्योपसर्जनत्वादित्यर्थः । दूषणान्तरमप्याह—पूष्ण इति ॥ पूषोद्देशेन पेषणविधौ पूष्णो लोकसिद्धत्वेन तदुद्देशेन विधिवैयर्थ्यादपूर्वसाधनत्वलक्षणा आवश्यकी, सा च प्रकरणे निवेश एव घटते, अव्यभिचरितक्रतुसम्बन्धाभावेन जुह्वादिवदपूर्वसाधनत्वप्रतीत्यभावादित्यर्थः । पूर्वपक्षमुपसंहरति—अत इति ॥ गुणः पेषणम् (?), द्रव्यं पिष्टं देवता पूषा । तथा च तादृशयागान्तरमेव दर्शाद्यङ्गत्वेन विधीयत इत्यर्थः ॥ तच्चेति ॥ प्रपिष्टपूष्णोः सम्बन्धस्य यागं विनानिर्वाहादित्यर्थः ॥ तत्र चेति ॥ वाक्यस्य विशेषणमात्रविधानेन लाघवसम्भवे विशेषणविधिकल्पनगौरवापादकविधेरयुक्तत्वादित्यर्थः ॥ प्रमाणाभावेनेति ॥ कर्मभेदकशब्दान्तरादिप्रमाणाभावेनेत्यर्थः ॥ अतश्चेति ॥ अनुमापकपूषसम्बन्धस्य प्रसिद्धपूषसम्बन्धियागेऽवगतिसम्भवेन तत्रैव पेषणविधिसम्भवात् लाघवमित्यर्थः ॥ अतश्चेति ॥ अनुमितिरूपतात्पर्यग्राहकसत्त्वेन तदनुपपत्त्या विजातीयापूर्वसाधनीभूतदेवता लक्ष्यत इत्यर्थः । ननु पूषोद्देशेन पेषणविधिरशक्य इत्यतस्तमुपपादयति—स्वजन्येति ॥ स्वजन्ययागीयदेवतात्वस्यान्यपदार्थसम्बन्धत्वात्तेन सम्बन्धेन पूषोद्देशेन प्रपिष्टद्रव्यविधिरित्यर्थः । ननु देवतोद्देशेन द्रव्यत्यागस्य यागरूपत्वेन विशिष्टस्य एकपदार्थत्वात् कथं देवतोद्देशेन द्रव्यविधिरित्यत आह—सम्भवति चेति ॥ द्रव्योद्देशेनेति ॥ 'तप्ते पयसि' इति वाक्यप्राप्तद्रव्योद्देशेन

नापि निरुक्तसम्बन्धेन द्रव्यविधिर्विशेषणमात्रविधिफलकः । यद्यपि च प्रकृतिद्रव्यस्याप्यतिदेशेन सम्भवत्प्राप्तिकता, तथापि ततः पूर्वं विधानाङ्गीकारान्नैकप्रसरताभङ्गाद्यापत्तिः । पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावान्न कर्मान्तरता । एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपदलक्षितपेषणविधिरिति प्रकारोऽपि निषादस्थपत्यधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरविधेरेव न्यय्यत्वात् "वषट्कर्तुः प्रथमभक्षः" इत्यादावतिप्रसङ्गापत्तेश्चोपेक्षितः । तत्रास्मदुक्तप्रकारस्तु भक्षस्य प्रत्यक्षविधिनैव प्राप्तत्वेन ततः पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेरसम्भवी । तदेतत्सर्वं सिद्धमेवोत्तरविवक्षया स्मार्यत इति प्राञ्चः ॥ १३ ॥

**(१४)—तत्सर्वार्थमविशेषात् ॥ ३५ ॥ चरौ वार्थोक्तं**

---

'सा वैश्वदेव्यामिक्षा' इति वाक्येन विश्वेदेवदेवतावत् देवतोद्देशेनापि द्रव्यविधिर्युक्त एवेत्यर्थः । ननूत्पत्तिवाक्यादेव चरोः प्राप्तत्वात् द्रव्यविधिर्व्यर्थ इत्यत आह—**विशेषणविधिफलक इति** ॥ द्रव्यस्य प्राप्तावपि पेषणविधिफलको विशिष्टविधिरित्यर्थः । ननु पौष्णयागस्याग्नेयप्रकृतिकत्वेनातिदेशेनैव व्रीह्यादिरूपप्रकृतिद्रव्यस्य प्राप्तत्वात् तद्विधिरेव व्यर्थः । ततश्च तद्विशेषणस्य कथं विधिः स्यादित्याशंक्य समाधत्ते—**यद्यपीति** ॥ **तथापीति** ॥ अतिदेशात्पूर्वं वचनप्रवृत्त्या तद्विधिः सम्भवतीत्यर्थः ॥ **नैकप्रसरतेति** ॥ विशिष्टविधानेनैकप्रसरताभङ्गो नास्तीत्यर्थः । **एतेन**—पेषणप्राप्तिफलकविशिष्टद्रव्यविधानेन ॥ **पूषपदेनेति** ॥ पूषपदेन तद्देवताककर्म लक्षयित्वा तदुद्देशेन पिष्टपदलक्षितपेषणविधिरिति पक्षो निरस्त इत्यर्थः ॥ **निषादेति** ॥ लक्षणादोषेण तदपेक्षया द्रव्यदेवताविशिष्टकर्मान्तरविधेरेव युक्तत्वेन पूर्वपक्षेऽस्यैवाङ्गीकार्यतापत्तेरित्यर्थः ॥ **वषट्कर्तुरिति** ॥ तत्रापि प्राप्तभक्षानुवादेन प्रथमभक्षपदलक्षितप्राथम्यविधिसम्भवेन तदधिकरणविरोधापत्तेरित्यर्थः । ननु भवत्पक्षेऽप्ययं दोष इति शङ्कां परिहरति—**अस्मदुक्तेति** ॥ चोदकस्यानुमानरूपतया ततः पूर्वं प्रत्यक्षवचनस्य प्रवृत्तिरिति युक्तम्, वषट्कर्तुरित्यादौ भक्षस्य प्रत्यक्षविधिनैव विहितत्वेन ततः पूर्वप्रवृत्त्या प्राथम्यविधिर्न सम्भवतीति वैषम्यमित्यर्थः ॥ **उत्तरविवक्षयेति** ॥ करिष्यमाणविचारसौकर्याय वस्तुस्थितिकथनमिदम्, नाधिकरणान्तरमिति पार्थसारथिप्रभृतय आहुरित्यर्थः । स्वयमधिकरणरचनात् प्राञ्च इत्युक्तम् । सूत्रं स्पष्टम् ॥ १३ ॥

**तत्सर्वार्थमविशेषात्** ॥ पूर्वसूत्रेण प्रासङ्गिकी सङ्गतिः । पूर्वतनाधिकरणेन तु यथा अग्निष्टोमप्रथमप्रयोगादुत्कृष्टस्य प्रवर्ग्यस्य तदितरसर्वप्रयोगनिवेशः तथा प्रकृतेऽप्युत्कृष्टस्य

**पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् ॥ ३६ ॥ चरावपीति चेत् ॥ ३७ ॥ न पक्तिनामत्वात् ॥ ३८ ॥**

तत् पेषणं पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यात्, उत चरावेवेति चिन्तायाम् अविशेषाददन्तकत्वहेतुवशाच्च सर्वत्रेति प्राप्ते—

पुरोडाशे तावत्पाकात्पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थम्, तदुत्तरं तु पुरोडाशपदवाच्याकृतिविनाशापत्तिः। एवं पशुहृदयादावपि। तेषामप्याकारविशेषविशिष्टमांसवाचित्वात्। न चोभयत्रावदानोत्तरकालं पेषणविधिः, अत्यन्ताप्राप्तपेषणविधौ गौरवापत्तेः। चरावतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्त्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम्। प्रकृतौ हि प्रदेयपुरोडाशसिद्धेरन्यथोपपादयितुमशक्यत्वादर्थप्राप्तमपि पेषणमध्वर्युकर्तृकत्वादिप्रयोजनसिद्ध्यर्थं सधर्मकं विहितम्। तत् चरौ प्रदेयसिद्धेस्तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नं

---

पेषणस्य पूषदेवत्यविकृतिमात्रनिवेश इत्युत्थानात् सङ्गतिः ॥ **अविशेषादिति** ॥ पूषदेवत्याविशेषादित्यर्थः ॥ **अदन्तकत्वेति** ॥ 'अदन्तको हि सः' इति वाक्यशेषेण दन्ताभावेन पूष्णः कठिनद्रव्यभक्षणासामर्थ्यात् पेषणं कार्यमित्यर्थप्रतीतेः पशुपुरोडाशादावपि पेषणं कार्यमित्यर्थः ॥ **पुरोडाश इति** ॥ 'तण्डुलान् पिनष्टि' इति वाक्येन पेषणस्य पुरोडाशनिष्पत्त्यर्थं विधानेन प्राप्तत्वादित्यर्थः। ननु पाकात्पूर्वं प्राप्तत्वेऽपि पाकानन्तरं पेषणं विधीयत इत्यत आह—**तदुत्तरमिति** ॥ पाकोत्तरमित्यर्थः ॥ **आकृतिविनाशेति** ॥ कूर्मभूतमिति वाक्यप्राप्तकूर्माकृतिपिण्डविशेषस्यैव पुरोडाशशब्दवाच्यत्वेन पेषणे कृते तदाकृतिनाशापत्तेरित्यर्थः। उक्तदोषं पशावप्यतिदिशति—**एवमिति** ॥ आकृतिविशेषविशिष्टमांसरूपस्य हृदयादेः पेषणे नाशापत्तेरित्यर्थः। ननु 'मध्यादवद्यति' 'हृदयस्याग्रे अवद्यति' इत्यादौ पुरोडाशहृदयादेराकृतिविशेषावश्यकत्वेऽपि अवदानोत्तरं पेषणं स्यादित्यत आह—**अवदानोत्तरकालमिति** ॥ तदानीं पेषणस्य दृष्टप्रयोजनाभावेनादृष्टार्थत्वकल्पने गौरवापत्तेरित्यर्थः ॥ **चराविति** ॥ अतिदेशेन पाकात्पूर्वं पेषणप्राप्तावप्यर्थलोपात् कृष्णलेष्ववघातस्येव निवृत्तौ प्राप्तायां प्रतिप्रसवकरणेन लाघवात् पिष्टचरावेव पेषणमित्यर्थः ॥ **चराविति** ॥ पौष्णचरौ चरोः प्रदेयत्वेन तत्सिद्धेः पेषणानपेक्षत्वेनान्यथानुपपत्त्यभावेन पेषणानपेक्षत्वेनार्थलोपेन निवृत्तस्य प्रतिप्रसवमात्रमर्थवादानुसारेण क्रियत इत्यर्थः। एतदनुसारेण प्रतिप्रसव-

प्रति पेषणस्याकारणत्वान्निवर्तमानं प्रतिप्रसूयते । अत एव प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः। तत्र चोत्पत्तिविनियोगाङ्गसम्बन्धादौ यथासम्भवं विधेर्व्यापाराभावाल्लाघवम् । अत एव पेषणस्य प्रदेयसिद्धिरूपप्राकृतप्रयोजनलोपेनात्र अदृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसवत्वविघातः । धर्माणां तु पेषणस्य कर्मान्तरत्वाभावेन "प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति" इति न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानामत्रैवादृष्टरूपकार्यान्तरप्रयुक्तत्वकल्पनं न दोषाय । इष्यते चायमर्थोऽग्निसंस्कारकमन्थनादेः पशुप्रकरणाम्नातस्य वचनाच्चातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणां कार्यान्तरप्रयुक्तत्वकल्पनादौ । वस्तुतस्तु—अत्र पेषणस्य न कार्यान्तरकल्पनापि, प्रदेयसिद्ध्यर्थत्वादेव । यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वम्, तथापि पिष्टकचरावपि चरुशब्दप्रयोगात्पेषण-

---

स्वरूपं तत्र लाघवं च दर्शयति—अत एवेति ॥ प्रसक्तेति ॥ प्रमाणान्तरेण प्राप्तस्यार्थलोपप्रतिषेधादिना निवृत्तस्य पुनर्विधिरेव प्रतिप्रसव इत्यर्थः । प्रकृते च चोदकप्राप्तस्य पेषणस्य चरावर्थलोपात् निवृत्तस्य पुनः पेषणविधानात् प्रतिप्रसवोपपत्तिरिति भावः । तत्र लाघवमुपपादयति—तत्रेति ॥ उत्पत्तिविध्याद्यभावात् प्रतिप्रसवविधौ लाघवमित्यर्थः । प्रकृतौ 'पिनष्टि' इत्यनेनोत्पन्नस्य पेषणस्य 'तडुलान् पिनष्टि' इति विनियुक्तस्य 'प्राणाय त्वा' इत्यादिना अङ्गसम्बन्धस्य च प्राप्तत्वेन एतद्वाक्यस्य तत्र तात्पर्याभावात् कर्तव्यतामात्रतात्पर्याल्लाघवमित्यर्थः । ननु पेषणं विनापि प्रदेयद्रव्यसिद्धेः प्राकृतप्रयोजनाभावान्निवृत्तिरेव स्यादित्यत आह—अत एवेति ॥ प्राकृतप्रयोजनाभावेऽप्यदृष्टार्थत्वाङ्गीकारान्न प्रतिप्रसवानुपपत्तिरित्यर्थः । ननु पेषणस्याप्राकृतकार्यत्वेनादृष्टार्थमनुष्ठानेऽपि तद्धर्माणामधिवापादीनां तद्धर्माणां च प्राप्तिर्न स्यादित्यत आह—धर्माणां त्विति ॥ प्रतिप्रसवविधौ कर्मभेदाभावेन प्रधानपेषणप्रवृत्तौ 'प्रधानं नीयमानं तु' इति न्यायेन धर्माणामपि प्राप्तिसम्भवात् न धर्मप्राप्तिविरोध इति सधर्मकमेव पेषणं भवतीत्यर्थः । तत्र दृष्टान्तमाह—इष्यते चेति ॥ अग्निमन्थनस्य 'अग्निं मन्थति' इति अग्नीषोमीयपशुप्रकरणे विहितस्य तन्मन्त्रादेरितिकर्तव्यतानां च पश्वङ्गत्वनिश्चयेऽपि चातुर्मास्येषु वचनेनाग्निमन्थने क्रियमाणे तद्धर्माणां प्राप्तिवदत्रापि धर्माः प्रवर्तन्त इत्यर्थः । कार्यान्तरप्रयुक्तत्वमङ्गीकृत्य धर्मप्राप्तिरुपपादिता, कार्यान्तरप्रयुक्तत्वमेव नास्तीति प्राकृतकार्यकारित्वाद्धर्मप्राप्तिमुपपादयति—वस्तुतस्त्विति ॥ ननु चरुं प्रति पेषणस्य कारणत्वाभावात् कथं

विधिबलेन च "पौष्णं चरुम्" इत्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य षिष्टकचरुविशेषपरत्वानिश्चयात् तस्य च प्रदेयस्य पेषणमन्तरेणासिद्धेर्न पेषणस्य कार्यान्तरकल्पनापि । अत एव चरुत्वं नाम अनवस्रावितान्तरूष्मपक्वतण्डुल-प्रकृतिकत्वम् । अत्र भक्तव्यावृत्त्यै अनवस्राविततेति । मण्डकव्यावृत्त्यै अन्तरिति । सूपशाकादिव्यावृत्त्यै तण्डुलेति । अत एव पिष्टकचरावपि तत्सम्भवान्न पेषणस्य विघातकत्वमिति तत्रैव पेषणम् ॥ १४ ॥

**(१५)—एकस्मिन्नेकसंयोगात् ॥ ३९ ॥ धर्मविप्रति-षेधाच्च ॥ ४० ॥ अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ॥ ४१ ॥ लिङ्गदर्शनाच्च ॥ ४२ ॥ वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्था-भावाद्धि चरावपेषणं भवति ॥ ४३ ॥ एकस्मिन् वार्थधर्मत्वा-दैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥ हेतुमात्रमदन्त-त्वम् ॥ ४५ ॥ वचनं परम् ॥ ४६ ॥**

यत्रान्यसहितः पूषा देवता यथा राजसूये "ऐन्द्रापौष्णश्चरुः" इति

---

प्राकृतकार्यकारित्वमित्याशङ्क्य समाधत्ते—**यद्यपीत्यादिना** ॥ चरोः प्रदेयत्वेन पिष्ट-चरोरपि चरुत्वाविशेषात् 'पौष्णं चरुम्' इत्यत्र चरुशब्देन पेषणविधायकवचनसह-कृतेन पिष्टचरोः प्रदेयत्वावगमेन प्रदेयसिद्ध्यर्थत्वात् न पेषणस्याप्राकृतकार्यत्वमिति तद्धर्माणां प्राप्तिर्निराबाधेत्यर्थः । एतदनुसारेण चरुलक्षणमाह—**अत एवेति** ॥ पिष्टचरोरपि चरुशब्दवाच्यत्वादेवेत्यर्थः । अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वं चरुशब्दप्रवृत्तिनिमित्तमिति तस्य पिष्टचरुसाधारणत्वात् पेषणोपपत्तिरित्यर्थः । अनवस्रा-वितेत्यादिविशेषणानां व्यावृत्तिमाह—**अत्रेति** ॥ भक्तं अन्नम्, मण्डकं लड्डुकादि-भक्ष्यविशेषः, सूपादि प्रसिद्धम् ॥

सूत्रार्थस्तु—**तत्** पेषणं **सर्वार्थं** पुरोडाशादिसाधारणम्, **अविशेषात्** पौष्णत्वा-विशेषादिति ॥ १४ ॥

**एकस्मिन्नेकसंयोगात्** ॥ प्रासङ्गिकी सङ्गतिः ॥ **ऐन्द्रापौष्णश्चरुरिति** ॥ अत्र यद्यपि 'आग्नेयं चतुर्धा करोति' इतिवत्पौष्णत्वं द्विदेवत्ये न सम्भवति, पूषोद्देशेन पेषण-

---

१. तै. सं. २-२-१.

तत्रापि पेषणम्, उत यत्र केवल एव तत्रैवेति चिन्तायाम् "अदन्तको हि सः" इत्यर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेस्तत्स्वरूपस्य चान्यसहितेऽपि सत्त्वाद्युक्तमेव पेषणम्। अत एव "सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः" इति नेमपदवाच्यार्धपिष्टत्वानुवादोऽपि सङ्गच्छते। यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत तदा अस्तु पूर्वोक्तविधया पूषप्रपिष्टसम्बन्धज्ञानजन्ययागानुमितेरेव तात्पर्यग्राहिकायाः सत्त्वात् सापि पूषपदे। परं त्वर्थवादाद्यनुरोधात्पूषाधिष्ठानकदेवताप्रयोज्यापूर्वीयत्वलक्षणाया एवाङ्गीकारात् द्विदेवत्येऽपि पेषणमर्थस्य। यथा चैवं सति पाकसम्पत्तिस्तथा यतितव्यम् अन्तरायकरणेन वा क्रमिकनिक्षेपेण वा पात्रभेदेन वेति प्राप्ते—

आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणाया आवश्यकत्वादधिष्ठानद्वारकत्व-

---

विधानस्य पूर्वं सिद्धान्तितत्वेन तस्य द्विदेवत्येऽप्यक्षतत्वाद्युक्तं पेषणमिति भावः। ननु पूषस्वरूपे आनर्थक्यात् प्रकृतापूर्वसाधनलक्षणाया आवश्यकत्वेन द्विदेवत्ये व्यासज्यवृत्त्यपूर्वत्वावश्यवाच्यतया तत्र पेषणप्रसक्तिर्नास्तीत्यत आह—**अदन्तक इति** ॥ अदन्तकत्वस्य कठिनद्रव्यसामर्थ्याभावप्रतिपादनद्वारा पिष्टचरुकरणहेतुत्वप्रतिपादनेन तदेकवाक्यत्वाय यत्र यत्र पूषा देवता तत्र सर्वत्र पिष्टचरुरिति व्याप्तिकल्पनेन द्विदेवत्येऽपि तत्सत्त्वेन पेषणावश्यकत्वादित्यर्थः ॥ **अत एवेति** ॥ द्विदेवत्येऽपि पेषणाङ्गीकारादेवेत्यर्थः ॥ **सोमापौष्णमिति** ॥ पूष्णो द्विदेवत्ये देवतात्वाभावे तत्र नेमपिष्टविधिर्व्यर्थः स्यात्। अतः प्रत्येकमेव देवतात्वादत्रापि पेषणं भवत्येवेत्यर्थः। ननु नवमाद्ये अपूर्वसाधनत्वलक्षणायाः साधयिष्यमाणत्वेन पूषस्वरूपे आनर्थक्येन अपूर्वसाधनोद्देशेन पेषणविधाने द्विदेवत्येऽपूर्वसाधनत्वस्य व्यासज्यवृत्तित्वेन केवलपूषोद्देशेन विधानाभावात् द्विदेवत्ये न पेषणं युक्तमिति शङ्कां निरस्यति—**यदीत्यादिना** ॥ **तदास्त्विति** ॥ पूषपिष्टसम्बन्धानुमितिरूपतात्पर्यग्राहकबलेन द्विदेवत्येऽपूर्वसाधनीभूतदेवतात्वाधिष्ठानत्वसमानाधिकरणपूषत्वस्योद्देश्यतावच्छेदकत्वेन द्विदेवत्येऽपि पेषणोपपत्तेरित्यर्थः, देवतात्वस्यापूर्वसाधनत्वेन तद्द्वारा अधिष्ठानस्यापूर्वसाधनत्वसम्भवादित्यर्थः। नेमपिष्टपाकोपपत्तिमाह—**यथा चेति** ॥ महति पात्रे मध्ये पात्रान्तरेण व्यवधानं कृत्वा वा क्रमेणैकश्रपणं कृत्वा अन्यस्य श्रपणं कृत्वा वा पात्रभेदेन वा यथासम्भवं श्रपणं कार्यमित्यर्थः ॥ **आनर्थक्यपरिहारायेति** ॥ इष्टदेवतात्वसमानाधिकरणपूषत्वस्योद्देश्यतावच्छेदकत्वेन देवतात्व-

---

१. तै. सं. २-६-८.

कल्पनस्य च पूष्णो देवतात्वोपस्थितिमन्तरेणानुपपत्तेः तदुपस्थितौ च तद्दारकत्व-मात्रकल्पनयैवानर्थक्यपरिहारात् द्विदेवत्ये च चतुर्धाकरणाद्यधिकरणन्यायेन केवलस्य पूष्णो देवतात्वाभावात् यत्र केवल एव पूषा तत्रैव पेषणम्। न चापूर्व-साधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूषोपरि भाने स्वरूपसम्बन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तेरविवक्षणात्तस्य च द्विदेवत्येऽपि एकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यत्वोपपत्तेः कथं न पेषणमिति वाच्यम्; व्यासज्यवृत्तिधर्मप्रकारतायामेकमात्रवृत्तिसम्बन्धस्य संसर्गत्वानुपपत्तेः। अन्यथा एको द्वित्वसमवायवान् इतिवत् "एको द्वित्ववान्" "एको द्वौ" इत्यादि-

---

प्रतीतेरावश्यकत्वेन तेनैवानर्थक्यपरिहारेण तत्समानाधिकरणपूषत्वस्य गौरवेण प्रमाणा-भावेन चायुक्तत्वादित्यर्थः। देवतात्वप्रतीत्यर्थमधिष्ठानान्तरस्य द्विदेवत्येऽपेक्षितत्वादिति भावः। नन्वपूर्वसाधनीभूतदेवतात्वस्य पेषणविध्युद्देश्यतावच्छेदकत्वेऽपि तस्य स्वरूप-सम्बन्धेन प्रकारत्वात्तस्य प्रत्येकमपि सत्त्वात् द्विदेवत्येऽपि सत्त्वेन पेषणं प्राप्नोत्येव। न च पर्याप्तिप्रकारत्वविवक्षणे न प्रत्येकं तत्सम्भव इति वाच्यम्; एको द्वित्ववानिति प्रतीत्या केवलसमवायेन प्रकारत्ववदत्रापि स्वरूपसम्बन्धेन प्रकार-त्वोपपत्तेरित्याशङ्कते—न चेति॥ व्यासज्यवृत्तीति॥ एकमात्रवृत्तिसंबन्धावच्छिन्न-व्यासज्यवृत्तिधर्मनिष्ठप्रकारताशालिशाब्दबोधं प्रति व्यासज्यवृत्तिधर्मप्रकारकोपस्थितेः प्रतिबन्धकत्वेन प्रकृते व्यासज्यवृत्तिधर्मस्य एकमात्रवृत्तिसम्बन्धावच्छिन्नप्रकारक-शाब्दबोधानुपपत्तेः। न च तादृशप्रतिबन्धकत्वकल्पने मानाभाव इति वाच्यम्; एको द्वाविति प्रतीत्यापत्तेः। न चैको द्वित्ववानिति प्रतीतिरुक्तैवेति वाच्यम्; तत्र द्वित्वसमवायस्यैव मतुबर्थस्य प्रकारत्वेन व्यासज्यवृत्तिधर्मस्य प्रकारत्वाभावात्। न चोभयादेः प्रत्येकानतिरिक्ततया प्रत्येकपर्याप्तिरस्त्येवेति वाच्यम्; व्यासज्यवृत्ति-धर्मपर्याप्त्यवच्छेदकधर्मावच्छिन्नप्रकारताया एव विवक्षितत्वादिति भावः। द्विदेवत्ये पेषणं निराकृत्य केवलपूषदेवत्ये पेषणमुपसंहरति—अत इति॥ पर्याप्तिसम्बन्धेन देवतात्वविशिष्टपूषोद्देशेन पेषणविधानेन तस्य केवलपूषदेवत्य एव सत्त्वात् तत्रैव पेषणमित्यर्थः। अदन्तकत्वहेतोर्द्विदेवत्येऽपि पेषणमित्युक्तं निराकरोति—अदन्तकत्वं

शाब्दबोधापत्तेः । अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसम्बन्धेनैव प्रकारत्वात्तस्य च पूष्णि केवले बाधात् पूषमात्रवृत्तिदेवतात्वस्यैव प्रकारत्वेन तत्रैव पेषणादि । अदन्तकत्वं त्वर्थवादमात्रत्वान्न विरुध्यते । नेमपिष्टत्वस्यापि च तत्रैव विधेयत्वाङ्गीकाराद्विशिष्टभावनाविधानेनावाक्यभेदादगमकत्वम् ॥ १५ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयस्याध्यायस्य
तृतीयः पादः

---

त्विति ॥ हेत्वधिकरणन्यायेनार्थवादत्वात् स्तुतिमात्रपरमित्यर्थः । नेमपिष्टदर्शनेनादन्तकत्वस्य हेतुत्वं निराकरोति । नेमपिष्टत्वस्यैव वचनेन विशिष्टविधानेन अनुष्ठानम्, विशिष्टभावनाविधानेन वाक्यभेदोऽपि नास्तीत्यर्थः ॥

सूत्रार्थस्तु—एकस्मिन्नेकदेवताके पेषणं स्यात् एकस्य पूष्ण एव संयोगादिति ॥ १५ ॥

श्रीकृष्णार्पणमस्तु

इति श्रीमत्कावेरीतीरविराजमानचोळदेशाग्रपूज्यविद्वत्समाजविराजमानशहजीन्द्रपुरनिवासिकामकायनविश्वामित्रगोत्रजलधिकौस्तुभश्रीमन्नृसिंहसूरिवरसून्वाश्वलायनसूत्रहोशानिकर्णाटकश्रीवाञ्छेश्वरयज्वनः कृतिषु भाट्टदीपिकाव्याख्याने भाट्टचिन्तामणौ तृतीयाध्यायस्य
तृतीयः पादः

---

निवीतान्तो भागः समाप्तः

ओम्

# ॥ भाट्टचिन्तामणिशुद्धाशुद्धप्रदर्शिनी ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १५ | जन्मऽ | जन्मा |
| ३ | १ | साधनौ | साधने |
| ,, | २५ | मेवं | मेव |
| ,, | २९ | ज्योति | ज्यौति |
| ८ | १८ | त्वोपपद | त्वोपद |
| ,, | २६ | त्याङ्ग | [त्योह] |
| ९ | ९ | ल्येतः | ल्या इतः |
| १० | १ | तदर्थज्ञानसाधनीभूतस्वाध्याय | तदर्थज्ञान |
| ,, | ११ | तेः । पू | तेः पू |
| ,, | २४ | त्रचं | [त्रशब्दं] |
| ११ | ९ | कारार्थ | कार |
| ,, | १० | धनौ | धने |
| १३ | २३ | त्व इ | त्वे इ |
| १४ | ४ | सूर्या | सुर्या |
| १६ | १३ | वाहति | वाहेति |
| १८ | २३ | त्वेद | त्वेतद |
| २२ | १४ | स्वर्गादिजननस्य | [स्वर्गादेरिव] |
| २३ | ११ | दृष्टा | तद्दृष्टा |
| ,, | १७-१८ | अदृश्यमान....मितिः | (?) |
| २४ | ९ | यवि | यवी |
| ,, | १० | भिन्न | भिन्नं |
| ,, | १५ | णाना | णानां ना |
| ,, | १६ | वारे | वा अरे |
| २५ | ८ | कत्वेन, तद् | कत्वेन, अन्यतरनिष्ठतद् |
| ,, | २८ | कत्वमि | कमि |
| २७ | २५ | अनु | अननु |

[ ] इदं चिह्नम् अस्य पाठस्य संभावितत्वं द्योतयति ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८ | १३ | स्वबोध्यवाक्य | स्वबोध्य |
| ३० | १३ | तादि | ताविति |
| ,, | २९ | विधिमात्रे | एतद्विधिमात्रा |
| ,, | ३० | क्ताव | क्तावत्र |
| ३१ | २३ | सार्थ | पार्थ |
| ,, | २८ | र्याय नि | र्यायानि |
| ३२ | ७ | विधि | विधेः |
| ३३ | १२ | तैत्तरी | तैत्तिरी |
| ३५ | ८ | त्स्वा | स्त्वा |
| ३६ | १७ | रार्थ | रार्थ |
| ३८ | ७ | तात्प्त | तात्प |
| ४० | २९ | त्वासि | त्त्वसि |
| ४१ | ११ | अर्शआदी | क्यपूण्यदादी |
| ,, | १२ | नूच्यम्,' | 'हि |
| ,, | २३ | वायि | वाय |
| ४२ | ९ | तत्तत्सि | तत्सि |
| ४३ | ८ | भावनेत्यु | (?) |
| ,, | ९ | र्ल्युटि | [र्युचि] |
| ,, | ११ | निष्ठा च व्यापारा मिलिता भावनापदवाच्या | निष्ठाश्च व्यापारा मिलिता भावनापदवाच्याः |
| ,, | १२ | लुडन्त | युजन्त |
| ,, | १४ | पिता, न | पिता न |
| ,, | २८ | मपि । या | मपि या |
| ४५ | २३ | राप्रदहे | रा प्रदहः |
| ,, | २६ | ,, | ,, |
| ४६ | १६ | धनत्वा | धकत्वा |
| ,, | १७ | भवाया | भवान्ना |
| ४८ | ३० | वान् | वाग्रान् |
| ,, | ,, | यात्''यः | याद्यः |
| ४९ | ८ | तृतीय | त्रितय (?) |
| ,, | ९ | ते' 'ऊ....तीय' | ने ऊ....तीयः' |
| ,, | २६ | ,, | ,, |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४९ | २६ | अप्सु यो | अप्सुयो |
| ५० | १५ | दम् | दमात्रम् |
| ,, | १८ | नाशी | नासी |
| ५१ | ५ | न्नकक | न्नक |
| ,, | १६ | बन्धविधि | बन्धिविधि |
| ,, | २३ | र्पस्य | र्पस्यैव |
| ,, | २५ | छिद्र | सच्छिद्र |
| ५२ | १३ | स्येति | स्य नेति |
| ,, | १५ | धर्मतात्वे | धर्मतावत्वे |
| ५३ | २२ | विधिशब्दस्य मन्त्रत्वे | [विधिमन्त्रयोः ऐकार्थ्यमैकशब्द्यात्] |
| ५४ | १४ | भावेन | भावेन [प्राशस्त्यस्य] |
| ,, | १६ | श्रृङ्गाः | श्रृङ्गा |
| ५५ | २७ | न्त्रान्तर | न्त्ररत्न |
| ५६ | १६ | तये ह्रद | तेर्ह्रद |
| ,, | २८ | ष्टस्ये | ष्टस्यै |
| ५७ | ६ | दत्ते इ | दत्ते' 'इ |
| ,, | २२ | आदाय | आधाय |
| ५८ | १० | टिड्ढा | टिड्ढा |
| ,, | १२ | गृहो | ग्रहो |
| ,, | १४ | मासध | मासाध |
| ,, | २६ | भमिति | भम्' इति |
| ५९ | ९ | चयन | वचन |
| ,, | १५ | ष्यङ् | ष्यञ् |
| ,, | २५ | सृगा | श्रृगा |
| ,, | ,, | टा इव | ट इव |
| ,, | २६ | ,, | ,, |
| ,, | ,, | ण्णिव | न्निव |
| ६१ | ९ | तुण्ठु | तुष्टु |
| ,, | १९ | गाव्य | गव्य |
| ,, | २४ | मात्रचा | [मात्रशब्देन] |
| ६३ | २६ | ताप | तात्प |
| ६४ | १ | लण | लक्षण |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | १७ | भृजो | भृञो |
| ,, | ,, | यदन्त | यङन्त |
| ,, | ,, | यदो | यङो |
| ,, | १८ | लुक् छान्दसः । अ | लुक् । छान्दसोऽ |
| ,, | २१ | सा, चा | सा, सा चा |
| ,, | २८ | गुणार्थवादपरिसंख्यार्थत्वादिति भावः— | तदर्थशास्त्रादयोऽपि गुणार्थार्थवादपरिसंख्यादिभिः परिहृता इति |
| ६५ | २२ | प्रामा | प्रमा |
| ६६ | २२ | श्रुणो | शृणो |
| ,, | २५ | षष्ठ्यन्त | षष्ठ्यन्त |
| ७० | २९ | शग | शाग |
| ७२ | १० | सन्देहः । प्रकृते | संदेहः प्रकृते |
| ७३ | ३० | मादिमूल | मादादिमूलि |
| ७४ | १४ | किन्तु ब्राह्म | ब्राह्म |
| ,, | २१ | इति ॥ एवं | इति । एवं |
| ,, | २५ | त्या नानु | त्याननु |
| ७५ | २७ | लाब | लाबलब |
| ७६ | १४ | व द | वद |
| ,, | १७ | प्रवृत्त | प्रवृत |
| ,, | २० | ,, | ,, |
| ७७ | ४ | गृही | ग्रहा |
| ,, | ३० | पपा | पपाद्य |
| ७८ | १९ | गुणज्ञाता | [गुणतया ज्ञाता] |
| ,, | २३ | युक्तः ॥ एवं— | युक्तः । एवं |
| ,, | २७ | त्वात् । | त्वात् |
| ७९ | १२ | श्रुय | श्रूय |
| ८० | ३० | दिवा | विवा |
| ८१ | ९ | नपे | नुपे |
| ,, | २१ | ब्दमु | ब्दमु |
| ८२ | ५ | द्वा य | द्वा । य |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ८२ | १२ | य्यश्वा | यश्वा |
| ,, | २६ | गेल्य | ग इल्य |
| ८३ | ५ | षत्वात् | षात् |
| ,, | १६ | स्रया | सेर्य्या |
| ,, | १७ | मूद्वा | मूद्ध्वा |
| ,, | १८ | स्रेयीं | सेयीं |
| ,, | २९ | पि न, मां | पितमां |
| ८४ | २ | यितृ | यित |
| ,, | २१ | तीकः | ती कः |
| ,, | २३ | स्रेयीव | सेयी व |
| ,, | २५ | स्रेयी | सेयी |
| ८५ | ११ | नाचा | नामाचा |
| ,, | १३ | स्रेय्या | सेय्या |
| ,, | २० | रज्जुत्रिवृ | रज्जुः त्रिवृ |
| ,, | २२ | दवीप | दविप |
| ,, | २३ | 'दवी' | 'दवि' |
| ,, | २७ | यान्तः । | यान्तः |
| ८६ | १३ | क्यमि | क्य इ |
| ,, | २० | गृही | ग्रही |
| ,, | २२ | दशम | [सप्तम] |
| ८७ | २६ | सत्ते | सते |
| ८८ | ६ | द्विषि | द्वेषि |
| ,, | १९ | ल्पंच | ल्पाश्च |
| ,, | २४ | क्यमात्र | क्यानामत्र |
| ८९ | २५ | द्धहिं | द्धाहिं |
| ९० | १२ | त्वात् । | त्वात् |
| ,, | १८ | शक्रिया | शाक्रिया |
| ९१ | १३ | कं तत् | कं |
| ,, | १६ | मूलक | मूल |
| ९२ | १८ | व्यय | व्यव |
| ९३ | ५ | गाव्या | गवा |
| ,, | ६ | मित्याह—त | म् । त |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९४ | २४ | त्रैका | त्रैवा |
| ,, | २८ | युपृ | युः पृ |
| ,, | ,, | व्या | व्य |
| ,, | २९ | जो ध | जोध |
| ९५ | १ | साधुश | तच्छ |
| ,, | ३ | तौ प्रयोगप्रत्ययौ | तौ |
| ,, | ५ | कत्वम् | कत्वं वा |
| ,, | २२ | तौम | तौ= |
| ,, | ३० | नादि य | दिर्यं |
| ९६ | २ | क्रिया व्य | क्रियाव्य |
| ,, | ५ | तेः ; त | तेः । ते ॥ |
| ,, | ६ | वा गी | गावी |
| ,, | २७ | पचन्तौ | वचन्तौ |
| ९७ | ६ | जातीय | ज्ञानीय |
| ,, | १३ | क्रिया व्य | क्रियाव्य |
| ,, | १६ | न वै | तवै |
| ,, | १७ | ,, | ,, |
| ९९ | ७ | सूत्रव्य | [व्या] |
| ,, | २५ | कृत | क्रत |
| ,, | २७ | चा लि | [चाल] |
| ,, | २८ | कृत | क्रत |
| १०२ | ५ | यातौ | यातो |
| १०४ | २७ | तर्थ | तदर्थ |
| १०७ | १ | द्वा । | द्वा तद्बोधोपपत्तेः । |
| ,, | ५ | यायोग्यत्वात् | यासंभवात् |
| १०८ | २९ | घटे | घटत्वे |
| १०९ | २२ | यस्स | यस |
| १११ | २४ | णाः । तत्पदबो | णा ये तद्बो |
| ,, | २९ | रुढे | रूढे |
| ११२ | ९ | रुढि | रूढि |
| ,, | २८ | न वेति | न चेति |
| ११५ | १३ | र्तिके | र्तिकं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११५ | १५ | पदेऽनु | पदेन |
| ,, | १६ | सोमे | समा |
| ,, | २१ | ष्ये, | ष्ये |
| ,, | ,, | ययोर्वा | ययोः, वा |
| ,, | ,, | के, | के |
| ,, | ,, | रणे | रणे, |
| ,, | २९ | योऽयं नि | यो यन्नि |
| ,, | ३० | णकत्व | णत्व |
| ११६ | २ | स्मिन्प | स्मिन्नपि प |
| ,, | २८ | दिर्धा | [दैर्धा] |
| ११७ | ११ | वलं | लं |
| ,, | ,, | वृतः | वृतं |
| ११९ | १ | ॥ ६ ॥ | ॥ ३ ॥ |
| ,, | ६ | मः । सं | मः सं |
| ,, | २० | एव । उ | एवो |
| ,, | २३ | कास | कत्वास |
| ,, | २७ | दो श | दः श |
| १२० | १५ | भ्युदया | भ्युदिया |
| ,, | १६ | त्राह । द्विरात्र | त्र हविरार्ति |
| ,, | १९ | त्वास | त्वस |
| ,, | २२ | त्वात् । प्र | त्वात्प्र |
| ,, | २३ | त्तेः । पुं | त्तेः पुं |
| १२१ | १२ | द्यस्का | द्यःका |
| ,, | १४ | णाव | णानव |
| ,, | १६ | रप्राप्तिः । | राप्राप्तिः |
| ,, | २२ | पूर्व | पूर |
| ,, | २३ | द्विती | तृती |
| ,, | २९ | वश्व | वाश्व |
| ,, | ,, | यत | यन्त |
| १२२ | १ | त्रिभ | त्रिभि |
| ,, | २१ | अरुणया | चित्रया |
| ,, | ,, | इत्येतदन्तेनै | इत्यत्रैवै |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२२ | २३ | ङ्गनि | ङ्गनि |
| ,, | २६ | त्वात् । व | त्वात् व |
| १२३ | १९ | वृत्त्यै | वृत्त्ये |
| १२४ | १८ | द्वैते | द्वे ते |
| ,, | ,, | पृष्ठापृष्ठवाच्ये बृ | पृष्ठपदवाच्ये 'बृ' |
| ,, | १९ | स्त्र्यः | स्त्र्ये |
| १२५ | १० | तृन् | त्रन् |
| ,, | २१ | केन | केण |
| , | ,, | जन्यो | जन्मा |
| १२६ | २ | क्य | क्ये |
| ,, | ४ | गात् । प्र | गात् प्र |
| ,, | ६ | णम् । | णं वा । |
| ,, | १८ | त्येरचि | ति घञि |
| ,, | २८ | र्वधा | र्वथा |
| १२८ | १४ | लाग्न्यो | लाग्ने |
| ,, | २० | ग्रहे वस्तः | गृहे वसतः |
| १२९ | १ | होमे | पदम् |
| १३० | ८ | षश्श्ये | ष श्ये |
| ,, | १९ | प्रवृति | [प्रतीति] |
| ,, | २० | वृत्स्य | वत्स्य |
| १३१ | २ | त्वात् | त्वाच्च |
| ,, | १७ | दात् । अ | दात् अ |
| ,, | २३ | तदन | तद |
| ,, | २७ | त्तरे | त्तेः । उ |
| १३२ | १ | मानवि | मावि |
| ,, | ९ | या भे....बोधका | याभे...बाधिता |
| ,, | ११ | क्लृप्तो | लुप्तो |
| ,, | २४ | आश | अश |
| १३३ | १ | चेत् ; | चेत् ॥ ६ ॥ |
| १३४ | ३ | कं क | कं करोति पाकेन क |
| १४१ | ३ | त्वे प्रा | त्वे वा प्रा |
| १४३ | १४ | रणी | रणि |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४४ | ४ | विश्वे | विश्व |
| ,, | ,, | त्वात् | त्वात् । |
| ,, | १० | तृतीयच | च |
| ,, | ,, | तानी | तानि |
| ,, | २६ | विश्वे | [विश्व] |
| १४५ | ५ | ,, | ,, |
| ,, | ११ | ,, | ,, |
| १४६ | १४ | ,, | ,, |
| १४७ | ३ | विश्वेदव | विश्वदेव |
| ,, | १८ | विश्वे | [विश्व] |
| ,, | २३ | ,, | ,, |
| ,, | २४ | प्रवृ | वृ |
| ,, | २७ | दायादीनां | दायिनां |
| १४८ | १० | संज्ञि | संज्ञ |
| ,, | २३,२५ | विश्वे | [विश्व] |
| १४९ | ७ | वद | वाद |
| १५० | २२ | लवै | लवाक्यवै |
| ,, | २६ | वाक्य | वाक्यत्व |
| १५१ | १२ | प्रवृ | [वृ] |
| ,, | २७ | द्देशा | द्देश्या |
| १५२ | ४ | श्रयः | श्रयाः |
| ,, | १३ | कसा | कस्य सा |
| ,, | १८ | नं | नम् । |
| ,, | २६ | प्राप्त | प्राप्तः |
| १५३ | ६ | गृही | ग्रही |
| ,, | ९ | तस्य | तत्र |
| ,, | १२ | षोस्कन्दायते ना | षोऽस्कन्दाय तेना |
| ,, | १३ | ध्वर्युः | ध्वर्योः |
| ,, | २८ | यो अर्थः | यः अर्थः |
| १५४ | ९ | सिह्मो देवत्तः | सिंहो देवदत्तः |
| ,, | ,, | सिह्म | सिंह |
| ,, | २२ | द्धं न | द्धं तु न |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५५ | ११ | वती | वति |
| ,, | १६ | क्तम् | क्तं युक्तम् । |
| ,, | २८ | या प्र | याः प्र |
| १५७ | १४ | मिति | मिति । |
| ,, | ,, | वक्तुं श | वक्तुमश |
| ,, | २८ | रत्व | रवत्त्व |
| १५८ | १२ | पत्तेः । | पत्तेः |
| ,, | १३ | ,, | ,, |
| ,, | १८ | 'अग्नौ | अग्नौ |
| ,, | ,, | पुर | 'पुर |
| ,, | ,, | पश्चात्प्रतीची | पश्चात् प्राची |
| ,, | १९ | षः। 'अपशवो वा | षः 'अपशवो वै |
| ,, | २० | तत्र | तत्र तत्र |
| १५९ | ६ | भाव | भावादिषढक |
| ,, | १० | या स्तुवते | यास्तुवत |
| ,, | ११ | स्तुवन्ते | रस्तुवत |
| ,, | ,, | जत | ज्यत |
| ,, | १४ | न्त्रः' इ | न्त्रः इ |
| ,, | ,, | 'लुङ् | लुक् |
| ,, | १५ | नः । 'उ | न 'उ |
| ,, | १६ | न्नः । सृ | न्नः सृ |
| ,, | १९ | रुद्धः | रुन्धे |
| १६० | २९ | पदेशक | द्देश्यक |
| १६१ | ९ | द्व्यासि | द्व्यसि |
| ,, | २५ | मात्रा | मन्त्रा |
| १६२ | १७ | इति क | इतिक |
| १६३ | ६ | दिपश्च | [दिक्षु पश्च] |
| ,, | ७ | नि पद | निपद |
| ,, | १८ | एते | इति-एते] |
| ,, | २१ | कारेण | कारान्तरेण |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १६४ | १७ | न प्र | [न तथेति भावः । ननु कांस्यभोजिन्यायेन प्रधानस्यापि विधेरप्र] |
| ,, | २५ | पस्येव | पस्यैव |
| १६५ | ११ | दृढ | द्रढ |
| ,, | २६ | राया | राकरणेन |
| ,, | २८ | साधि | सोऽधि |
| १६६ | २१ | प्रामाण्य | प्रमाण |
| ,, | २२ | च्छोल | च्चोल |
| १६७ | २२ | दिधा | देर्धा |
| ,, | २५ | दशु | दवस्त्रशु |
| १६८ | २६ | त्वात् । | त्वात् |
| १६९ | २४ | धिकक | धिक |
| १७० | ३ | पत्तिः | पत्तेः |
| ,, | २३ | नान्वय | [नान्वेति] |
| ,, | २८ | पस्यि | पास्थि |
| १७१ | १५ | त्वात् न | त्वात् |
| ,, | २४ | भवो | भवे |
| १७२ | ४ | विव्रीय | विव्रिय |
| ,, | ६ | स्याः | स्यापि |
| ,, | ९ | विव्रीय | विव्रिय |
| ,, | १६ | ,, | ,, |
| ,, | २२ | ,, | ,, |
| ,, | २४ | णपूर्वकत्वादि | णफूत्कारादि |
| ,, | ,, | विक्लृ | विक्लि |
| ,, | २७ | विव्रीय | विव्रिय |
| ,, | २९ | वात् । क | वात्क |
| १७३ | १४ | त् । तदा | त् तदा |
| ,, | १९ | पत्ति: | पत्ते |
| ,, | २५ | विक्लृ | विक्लि |
| १७५ | १ | सधर्म | स धर्म |
| ,, | ५ | धान | धा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७५ | ७ | भेद | भेदे |
| १७६ | २५ | यात् ल्युड | यात्, [युज] |
| १७७ | २ | विन्नी | विन्नि |
| ,, | ५ | विक्लृ | विक्लि |
| १७८ | २७ | षु । नञोऽन्येनापि । | षु नञः, अन्येनापि |
| ,, | २८ | दौ । आग्नेय इति | दौ आग्नेय इति । |
| १७९ | ४ | स्य च | स्य लिङ्गाद्यर्थस्य च |
| ,, | १४ | र्थेति | र्थ इति |
| ,, | २२ | भिन्नो भि | भिन्नाभि |
| ,, | ,, | न्वयः | न्वयः |
| ,, | २६ | भावा | (?) |
| १८० | १७ | कत्वा | कत्वस्वरूपत्वा |
| ,, | २० | स्य साध्यासंसृष्टत्वज्ञा | [स्य, साध्यासंसृष्टत्वाज्ञा] |
| ,, | २७ | नादिः | नं आदिः |
| १८१ | २३ | र्तय | तर्य |
| १८२ | ११ | प्रासंगिक | [प्रसंगि] |
| ,, | २७ | याथा | यथा |
| १८३ | २८ | पूर्वे त्रये | पूर्वत्रये |
| १८४ | २ | पूर्वाभावे | पूर्व एव समुदायापूर्वाभावे |
| १८७ | २९ | णाप्र | णप्र |
| १८८ | १३ | कं प्रयाजा | कं प्रति जौहवा |
| ,, | १४ | षम्ये | षम्येण |
| ,, | १५ | दिर्द्र | दि द्र |
| ,, | १९ | वृत्तेः | वृत्तेः |
| १८९ | १० | मृण्म | मृन्म |
| १९० | १६ | तें । "कर्मणि निष्ठा।" | ते इति कर्मणि निष्ठा, |
| १९१ | १३ | धायि | धान |
| १९२ | १८ | वैदिक | वेदिक |
| ,, | १९ | नो नुमः | नोनुमः |
| ,, | २० | सुस्थुषो म | तस्थुषः" 'म |
| ,, | २६ | विधिशब्दस्येति | "विधिशब्दस्य" इति |
| ,, | २८ | जावशावा | जा वशा वा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९३ | १० | नाम ग्रहणं | नामग्रहणम् |
| ,, | १६ | नृवदत् | नृवत् |
| १९४ | ५ | र्थवत्त्वमा | र्थत्वमा |
| ,, | १९ | ततश्चा | तच्चा |
| ,, | २२ | प्रतिफलं | प्रति फलं |
| १९५ | २५ | च । वि | च्च वि |
| १९६ | १९ | मात्व | मावत्त्व |
| ,, | २७ | स्यात् । अ | स्याद |
| १९७ | ११ | दस्य श्रा | दस्यश्रा |
| ,, | १८ | श्च, ए | श्च ए |
| ,, | ,, | त्वात् । ऊ | त्वादू |
| १९८ | १० | सर्जी | सर्जि |
| २०० | ८ | माथो | मार्थो |
| ,, | १५ | त्वात् इ | त्वम् इ |
| ,, | २४ | त्वात् । ऋ | त्वादृ |
| २०१ | १९ | त्रयि | त्रै |
| २०२ | २८ | त्याम | क्थाम |
| ,, | ,, | षीप | षी प |
| २०३ | ८ | त्रेधा वि | "त्रेधावि |
| २०४ | ६ | निभ | विभ |
| २०५ | ६ | ह्यासां | [तासां] |
| ,, | १८ | धीत् | धीं |
| ,, | २२ | नया पि | नयापि |
| २०६ | ७ | नुभावि | नुभवि |
| ,, | ८ | पत्तेः, आ | पत्तेरा |
| ,, | १३ | त्रस्यहे | त्रस्याहे |
| ,, | २० | कर | कार |
| २०७ | ७ | ङ्क्षा या | ङ्क्षाया |
| ,, | १८ | तु" इ | तु देवस्त्वा सविता पुनातु" इ |
| २०८ | १८ | ना वा | नेऽव |
| २०९ | २ | गछ | गच्छ |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २०९ | २४ | भरतः | भरत |
| ,, | २५ | ज्यता | ज्यन्ता |
| २१० | ५ | यस्या | यस्य |
| ,, | १५ | को धर्मः | "को धर्मः" |
| २११ | ३ | नात् । स | नात्, स |
| ,, | ८ | र्थानु | र्थाननु |
| ,, | १९ | नुरूप | नुवाद |
| २१२ | १० | स्तत्रोवत्वस्य | स्तोमवत्त्वं |
| ,, | १४ | र्थ इ | र्थबोधकत्वमि |
| २१२ | १४ | | 'लोके' इत्यादि 'इत्यर्थः' इत्यन्तं पङ्क्तिचतुष्टयं सप्तविंशपङ्क्तौ 'द्रष्टव्यम्' इत्यस्यानन्तरं पठनीयम् । |
| ,, | १७ | तानव | [ताव] |
| ,, | ,, | भावः | [शेषः] |
| ,, | ,, | भेदे | भेद |
| ,, | २३ | तद्वा | तत्तद्वा |
| ,, | २४ | वर्तीति | वति |
| २१४ | १५ | नारा | नरा |
| ,, | २२ | विधि...विधि | विधि |
| ,, | २५ | भेदः । ए | भेदः ए |
| ,, | २६ | .... | [मिति, आद्ये ।] |
| २१५ | १२ | दिति । | दिति |
| ,, | १५ | र्थम् । | र्थम्, |
| ,, | २१ | । प्र | । [समाधत्ते अगत्येति ॥] प्र |
| ,, | २४ | । उ | [अत इति ॥] उ |
| ,, | ,, | वाक्यानु | वाक्य[विहितयागा]नु |
| ,, | २९ | चति | चेति |
| २१६ | २ | कत्वानु | नानु |
| ,, | ६ | ज्ञाङ्गौ | ज्ञाङ्गे |
| ,, | ७ | तिप्र | ति; प्र |
| ,, | ११ | लिङ्गस्य | लिङ्गं च |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१६ | १२ | ज्यते त | ज्यते । अतः त |
| ,, | २२ | णत्वा | णा |
| ,, | २३ | णयामि | णामि |
| ,, | २४ | ताप्र | [ताकप्र] |
| ,, | २६ | प्रतिपा | [प्रीत्युत्पा] |
| ,, | २८ | दस्य स्तु | दस्थस्तु |
| २१७ | ४ | णे ना | णेऽपि ना |
| ,, | १० | भेंद इति | भेंदो नेति |
| ,, | १३ | मत्र | मन्त्र |
| ,, | २० | मभे | र्मभे |
| ,, | २७-२८ | विशेष्यां(श)त्व | विशेष्यांश |
| ,, | ,, | वर्णा | वण |
| २१८ | २ | श्राति | श्रुति |
| ,, | १० | शस्या | स्या |
| ,, | २३ | । "यो | । [यच्छब्दस्येति] "यो |
| २१९ | ४ | नात्। | नात् |
| ,, | ७ | ययागे | यादियागे |
| ,, | २१ | यज्ञस्य वि | यज्ञस्थवि |
| २२० | १२ | तत्स | तं स |
| २२६ | ३ | यवशाद | [येना] |
| ,, | ९ | शक्तिः | शक्तिः प्रतिबध्यते । |
| ,, | ,, | षये । | षये |
| ,, | १६ | धानसा | धानासा |
| ,, | १८ | यैन्द्र | य ऐन्द्र |
| २२७ | ९ | यमेव | यत्वमेव |
| ,, | १८ | तः काल | तःकाल |
| २२८ | १८ | स्यात् । "वै | स्यात्, वै |
| २२९ | १९ | विश्वेदेव | विश्वदेव |
| २३० | १३ | मित | मिता |
| ,, | १५ | याग्नी | याग्नेयाग्नी |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २३० | २९ | २. तै | १. तै (?) |
| २३१ | ४ | ष्ट ए | ष्टै |
| ,, | ६ | याजानामेक | याजनामैक |
| ,, | १७ | त्तेः । | त्तेः |
| २३३ | १० | पाशु | पांशु |
| ,, | १५ | वाक्ययोरिव | वाक्यान्तरावाक्ययोरिव |
| ,, | २६ | योऽग्न्यादि | योदध्यादि |
| २३४ | १७ | ऊर्ध्वोऽ | ऊर्ध्वो अ |
| ,, | १८ | राण्य | रान |
| ,, | २२ | इति | इति । |
| ,, | २३ | स्य स | स्य च स |
| ,, | २५ | तायाः | तया |
| ,, | ,, | प्रयोगान्तर्गतायाः | प्रयोगान्तर्गतानां |
| २३५ | १३ | वाक्येन | वाक्येन, |
| ,, | २४ | धीनां | धिना |
| ,, | २६ | विस्तृतः | विस्मृतः |
| २३६ | ६ | प्रकारस्य | प्रकारत्रयस्य |
| ,, | २२ | न्नाय्यतत्प्र | न्नाय्यप्र |
| २३७ | २४ | दिर्द्र | दिद्र |
| ,, | २७ | यानु | याननु |
| २३८ | १२ | नेन | ने |
| २३९ | १८ | दश | दशः |
| ,, | ,, | विंशाः | विंशः |
| ,, | ,, | वा व ज्यो | वाव तानि ज्यो |
| २४१ | २ | थंश्चेति | थं चेत्यादि |
| २४४ | २० | ग्राहिणी | ग्रहणी |
| ,, | २१ | ,, | ,, |
| ,, | २२ | तीर्जु | ती जु |
| ,, | २६ | डाश" | डाशम्" |
| २४५ | ७ | स जा | सजा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २४५ | ८ | यास्त्रयः | यास्त्रियः |
| २४६ | ८ | धत्व | ध |
| ,, | २१ | र्थः । स्व | र्थः । [श्रुतेति ।] स्व |
| ,, | २६ | मानप्र | [मानाप्र] |
| २४७ | ६ | अव | अनव |
| ,, | ८ | जन्य | जन्यशाब्दबोधस्य अग्निहोत्रवाक्यजन्य |
| ,, | १९ | पिञ्जूलैः पाव | पुञ्जीलैः पव |
| ,, | ,, | तदा | तदा न |
| २४८ | १० | रथिः । | रथिः— |
| ,, | ११ | हार | हारेति |
| ,, | १९ | शिष्टद्वित्वा | शिष्टे द्वित्वाद्य |
| ,, | २१ | दश प | दशप |
| ,, | २६ | यज्ञिञो | यञञो |
| ,, | ,, | यञां | यञो |
| २४९ | ४ | गाभे | गर्भे |
| ,, | ६ | यान | [योऽन] |
| ,, | १३ | पतिदे | पतिर्दे |
| ,, | ,, | त्वकारकस्य | [त्वाकारस्य] |
| ,, | २४ | द्रेव्यद | द्रव्यदे |
| ,, | २५ | षो यु | षोऽयु |
| ,, | २७ | गार्ग्यायण | गर्ग य य य |
| २५० | ९ | षट्पशूनां | [षण्णां पशूनां] |
| ,, | १३ | बाधो अ | बाधोऽ |
| ,, | १९ | शासत् | शात् |
| ,, | २२ | वपां | वपा |
| ,, | २३ | वल्यं | वल्या |
| २५१ | ७ | धेन | धेनैव |
| ,, | १४ | त्तील्य | त्तिरित्य |
| ,, | २० | प्रतिसंबन्धि | [प्रतिसंबन्धिभेदप्रतीतेः] |
| ,, | २१ | सिद्धि | सिद्धिः |
| ,, | २९ | वायतया | वायात् तया |
| २५२ | २० | षेति | ष इति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५२ | २० | तेरसन्ना | तेरिसिन्ना |
| ,, | २२ | कसन् | केसिन् |
| ,, | २७ | अयु | आयु |
| २५३ | ९ | पाठान्तरत्वमेव | पाठाद्यागान्तरनामत्वमेव |
| ,, | १७ | वः । अथ | वः [॥ अथेति ॥] अथ |
| २५४ | २ | तस्याभे | तस्या भे |
| ,, | ९ | सोम | सोमेति ॥ सोम |
| ,, | १५ | गुण | गण |
| ,, | १६ | पदं | पदं नाम |
| ,, | २१ | इत्यनेन | इत्यादेः |
| ,, | ,, | इत्यस्य | इत्यन्तस्य |
| २५५ | ५ | तथाहि | द्विधा हि |
| ,, | १० | वैश्व | (?) |
| ,, | १४ | किं क | किं वा क |
| ,, | २२ | चास्यैव | चास्येवेति |
| ,, | २५ | गुणानन्तर | गुणाननुरक्त |
| ,, | २६ | त्पन्न | त्पत्त्युत्पन्न |
| ,, | २८ | अमिक्षा | आमिक्षा |
| २५६ | ५ | क्षा इत्यत्रेति॥द्रव्येति | क्षेति |
| ,, | ,, | विश्वे | [विश्व] |
| ,, | ९ | देवता | विश्वदेवता |
| ,, | १५ | वाजिपदस्य तात्पर्य-ग्राहकत्वेनामिक्षा | आमिक्षा |
| ,, | १७ | अमि | आमि |
| ,, | १८ | त्वेनो . . . "द | त्वेन "द |
| ,, | २८ | न न वाजि | न वाजि |
| ,, | २९ | वाजं आमिक्षारूप | वाजिनं आमिक्षानुनिष्पन्नरूप |
| २५७ | ५ | । आमि | । वस्तुतस्तु आमि |
| ,, | १४ | वाक्यस | वाक्ये स |
| २५८ | ४ | गृही | ग्रही |
| ,, | १९,२१ | ,, | ,, |
| २५९ | ५ | दघ्ना | दध्ना |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| २५९ | १० | वाक्येति | वाक्य इति |
| ,, | १५ | त्वात् । मिथोऽपेक्ष-त्वादनु | त्वात्—मिथोऽपेक्षत्वात् । अनु |
| ,, | २२ | न्यालो | न्यानालो |
| ,, | २६ | क्यम् । तत्र | क्यम्; तत्र |
| २६० | ३ | इति | इति । |
| २६१ | २ | पत्तेः दधि...प्र | पत्तिः । प्र |
| ,, | ७ | णाह....ति | णाह प्रकृत इति |
| ,, | २३ | ति भावः | ति |
| ,, | २४ | यति—प्रकृत | यति—अत |
| ,, | २५ | दधनः | दध्नो विधिः |
| ,, | २६ | र्थः । दधि | र्थः ॥ दधिविशिष्टं चेति ॥ दधि |
| २६२ | ३ | न दधि | दधिविशिष्टं च तत् फलोद्देशेन विधीयते । न दधि |
| ,, | ,, | पि द | पि च द |
| ,, | ,, | त्वे द | त्वे आकाङ्क्षावशात् द |
| ,, | ४ | श्याच्चाग्निहोत्रहोमा | श्यादग्निहोत्रधर्मा |
| ,, | ६ | वा प्रा | वाप्रा |
| ,, | १४ | स्तत्रेति । | स्तत्रोक्तः ; |
| ,, | १५ | कर्मोद्देशे | धर्मातिदेशे |
| ,, | २० | रग्राणां | ग्रहाणाम् , |
| ,, | ,, | प्राप्तिरिति विवेकः | प्राप्तिः |
| ,, | ,, | रिति | रिति विवेकः |
| २६३ | ८ | हार्थमदृष्ट | हार्थं दृष्ट |
| ,, | १० | इति । | इति न |
| ,, | १९ | वना | वना । |
| २६४ | १५ | करणत्वेन ना | करणत्वान्वये ना |
| २६७ | ४ | रवल्ये | रेवल्य |
| ,, | ८ | न्ययेन | न्यायेन |
| ,, | २० | लब्धः एक | लब्धः |
| २६८ | २० | स्य द | स्य च |
| ,, | २२ | न्यापा | व्यापा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६८ | २४ | विवाच | विवाद |
| २६९ | ३ | माग्नि | माग्नि |
| ,, | ५ | गुणत्व | विधान |
| ,, | १८ | भपेक्ष्य | मपेक्ष्य |
| ,, | ,, | रान्तरा | रतान्तरा |
| ,, | १९ | वन्तयि | वन्तीय |
| ,, | ,, | कत्वप्रकारक | (?) |
| ,, | २१ | व्याक | व्याधिक |
| ,, | २५ | विधेरित्यर्थ | विधि |
| २७० | ९ | रेतीषु | रेवतीषु |
| ,, | १२-१९* | | |
| २७२ | २३ | स्मात् | स्यात् |
| २७३ | १० | यतः तत्फल | यत् तत्तन्निधन |
| २७४ | १५ | श इति | शेति |
| २७७ | २७ | रिति ॥ | रित्यनुषज्यते ॥ केवलेति ॥ |
| २७८ | ३ | यागे प्रो | यागे अयोगव्यावृत्त्यभावात् प्रो |
| ,, | ८ | स्तुत्या | रुच्या |
| ,, | ९ | वा नेयः । | वा न नेयः |
| ,, | ११ | आनर्थक्य | रुच्यध्याहार |
| ,, | १३ | रुच्यध्याहार | आनर्थक्य |
| ,, | २० | द्वितीयव्याख्यानस्य | व्याख्यानद्वितयस्य |
| ,, | २१ | न्तरथ | न्तर |
| २७९ | २ | दत्वात् | दात् |
| ,, | ४ | षणवद | षावच्छेदेना |

* १२—१९ अत्र 'आश्रयस्य' इत्यादि 'भावः' इत्यन्तं पङ्क्तिसप्तकं वाक्यपौर्वापर्य-विपर्ययाद्युपहतं लक्ष्यते । अत एवं पठनीयम्—

आश्रयस्य गुणकरणत्वनिर्वाहमात्रप्रयोजनकत्वेन तदनुरागमात्रस्य गुणेऽपेक्षितत्वेन तस्य न गुणाङ्गत्वापत्तिरित्यर्थः । आश्रयस्यापि भावनाप्राधान्येन तस्यामेवान्वयस्य वक्तव्यत्वादाह—**आश्रयस्येति** ॥ **गुणान्वयाव्युत्पत्तेरिति** ॥ आश्रयाश्रयिभावेन पार्ष्ठिकबोधसंभवेन प्राथमिकभावनान्वये इष्टापत्तावाह—**कर्मत्वेति** ॥ आश्रयस्य भावनायां करणत्वेनान्वये तस्यैव भावार्थाधिकरणन्यायेन फलजनकत्वापत्तिः, इतिकर्तव्यतात्वेनान्वये गुणाङ्गत्वापत्तिः; परिशेषात् कर्मत्वेनान्वये फलस्यापि कर्मत्वात् वाक्यभेदापत्तिरित्यर्थः ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७९ | १९ | समासान्वये | [सामानन्वये] |
| २८० | १७ | लं र | लर |
| ,, | २१ | बाला | बला |
| २८१ | २४ | भरतो | भरता |
| ,, | ,, | राजा सोम | राजा' 'सोम |
| ,, | ,, | धीनां रा | धीनाम्' 'रा |
| ,, | ८ | पूर्व | पूर्वं |
| २८३ | १२ | यो नृपः | ये नृपे |
| ,, | १७ | न्त इ | न्ते |
| २८४ | १ | क्रतौ | क्रतु |
| ,, | ८ | वेन | वेण |
| ,, | १८ | राज्याधिकारित्वात् | राजाधिकारिकत्वात् |
| ,, | १९ | राजपदस्येत्यर्थः | [राजपदपर्यायस्येति शेषः] |
| ,, | २० | नाभि | नानभि |
| ,, | २७ | इति | इति । |
| २८५ | १९ | वेष्टि | वेष्टौ |
| २८६ | २० | तदैव | यदैवैनं |
| ,, | २६ | धानोप | धानो- |
| २८७ | ५ | यत्वा | यस्त्वत्वा |
| ,, | १७ | वपाः | वपा |
| ,, | १९ | कुलाय | कुलायः |
| ,, | २९ | यत्वादि | यस्त्वत्वादि |
| २९० | ७, १४ | स्वर्ग | सुवर्ग |
| २९१ | २० | प्रास्था | प्रस्था |
| ,, | २१ | स्थायी | स्थाय |
| ,, | २२ | यीत्यादिवा | यीयः इत्यस्य वा |
| २९२ | १९ | कर्म | न कर्म |
| २९३ | २० | श्वेतपशुद्रव्यं | श्वेतत्वं |
| २९४ | १४ | निवेशासंभवात् । | निवेशासंभवात् । [अव्यभिचरितक्रतुसंबन्धाभावेन प्रकृतिविकृतिसाधारण-वैदिकालम्भनिर्वापयोरपि निवेशासंभवाच्च ।] इति । अत्र |
| २९५ | ४ | इत्यत्र | |

